॥ श्रीः ॥



## श्रीगणेशाय नमः ।

रघुनाथपदद्वन्द्वं सीतया चर्चितं सदा ॥
स्मराम्यहं परानन्ददायिनं लोकपावनम् ॥ १ ॥
यो विभुर्विश्वमखिलं स्वीकृत्य समदृष्टिताम् ॥
स स्वरसतु रामस्स ममास्तु शरणं हरिः॥ २ ॥
प्रणम्य मारुतिं वीरं गुरूनथ सरस्वतीम् ॥
धातुजप्रत्ययानां वै व्याख्या सन्तन्यते मया ॥ ३ ॥

- ग्रन्थमध्येऽपि मङ्गलाचरणस्यावश्यकर्त्तव्यतान्दर्शयति । मङ्गलादीनीति । जयत इत्यस्य विपदसापेक्षत्वेनासामर्थ्यं शङ्कांवारयति । उपसर्गाणां द्योतकतयेति । नियमेन स्वार्थसाकाङ्क्षेतरार्थवाचकशब्दाभिन्नार्थवाचकशब्दसापेक्षा हि सामर्थ्याभावप्रयोजिका सात्र नास्ति, उपसर्गाणां द्योतकत्वादिति भावः । तरबन्तार्थं प्रति तिङन्तार्थस्य प्राधान्येन प्रधानस्य सापेक्षत्वेऽपि वृत्तिर्भवत्येवेत्यपि बोध्यम् । ननु पूर्वार्द्धेऽपि तृतीयाध्यायस्थस्य क्विनः स्पृशोऽनुदके इत्यनेन व्युत्पादनात्तुर्य्यपञ्चमाध्यायवर्त्तिन इत्येतावन्मात्रप्रतिपादनंरुद्धमिव प्रतिभातीत्यत आह । प्राधान्येनेति । तत्रैतेषां प्रसङ्गात्कथनेऽपि नासङ्गतिरिति भावः । ननूणादिप्रत्ययानां तृतीयाध्यायगोचरत्वाभावात्प्रतिज्ञाविरोध इत्यत आह । उणादीनामिति । सत्यम् । तृतीयाध्यायगोचरत्वम् । उणादिपाठस्तु बहुलग्रहणसाध्यानां कार्य्याणां प्रदर्शनार्थमेव । अत एवात्र गोचरपदमुपात्तम् । मतु पठितमित्युक्तम् । ननु वर्त्तमानक्रियावृत्तेरित्यसङ्गतम् । वर्त्तमानत्वस्य शब्दप्रयोगाधिकरणक्षणवृत्तित्वरूपत्वात् । क्रियाया-

च पूर्वापरीभूतावयवकसमुदायरूपतयाऽवयवानां चाशुविनाशितया सादृश्यसमुदायस्य निरुक्तवर्त्तमानत्वं स्थिरसम्बन्धि नोपपद्यत इत्यत आह। वर्त्तमानकालेति। वर्त्तमानः कालो यस्याः सा चासौ क्रियेत्यर्थः। न च कालगतमपि वर्त्तमानत्वं यदि प्रारब्धापरिसमाप्तत्वघटितमेव तर्हि पूर्वोक्तानुपपत्तिस्तदवस्थैवेति वाच्यम्। यौद्धताट्टशसमुदायाधिकरणस्य जन्यकालस्य सम्भवात्। न च वर्त्तमानत्वं प्रत्ययवाच्यमेवास्त्विति वाच्यम्। लडादीनामश्रूयमाणतया तदादेशानामेव वाचकत्वस्य वाच्यत्वात्। एवं सति तेषां बहूनां काले शक्तिकल्पनापेक्षया लाघवाद्धातोरेव काले शक्तिः प्रत्ययो द्योतक इत्येव युक्तम्। ननु लडादीनां धातोर्विधानेन धातोरित्यधिकारसूत्रमिहैव वक्तुमुचितमिति चेन्न। तस्याकरणेऽपि यङ्विधिस्थधातुग्रहणस्योत्तरत्र सम्बन्धेनेष्टसिद्धिर्भविष्यतीत्यभिप्रायात्। अकारस्येति। लटश्शतृशानचावित्यत्र विशेषणार्थतया चरितार्थस्येत्यादिः। कालस्य द्योत्यताया दर्शितत्वाद्वाच्यार्थतामाह। लः कर्म्मणीत्यादि। एतेषामपि द्योत्यत्वमन्यत्र स्फुटम्। सम्प्रति तु वाच्यत्वाभिप्रायेणोक्तिरियम्। इत्थं नेति। भिवित्यत्र जश्त्वचर्त्त्वयपि बोध्यम्। नागमत्व-मिट् इति। टकारदर्शनेन तु आगमत्वशङ्का जन्यते। सा साहचर्य्यान्निरनीया टकारोच्चारणन्तु इटोऽदित्यत्रास्यैव ग्रहणं स्यादित्येवमर्थम्। तत्र हि लिङस्सीयुडितिसूत्रादनुवृत्तस्य लिङ इति विशेष्यस्य सत्त्वेन टकाराभावे वर्णग्रहणे तदन्तविधेस्सत्त्वेनेवर्णान्तस्य लिङ इत्यर्थः स्यात्। तथा चैधेमहीत्यत्रापि स्यात्। मद्दिडो इकारस्तिङ् प्रत्याहारसिद्ध्यर्थोऽत एवायं समुदायानुबन्धो नावयवस्यानुबन्धस्तेन संपप्रच्छिमह इत्यत्र सम्प्रसारणं न। क्वचित्तु समुदायानुबन्धोऽप्यवयवानुबन्धो भवति तस्यस्थमिपामितिभेदेनोपादानेन ज्ञापितस्य समुदायानुबन्धस्यावयवानुबन्धत्वं नास्तीतिविषयस्य ज्ञापकसिद्धत्वेनानीत्यत्वात्। तेनायमचित्कार्य्यसिद्धिः॥ अत एव। प्रत्यय इत्यादिसूत्रत्रयस्याप्युपरिस्थत्वेनैव। मच लडादिलकारस्येत्सञ्ज्ञा

कुतो नेति वाच्यम् । फलाभावात् । ङितीति न्यासस्तु न फलम् । णलो ङित्वाद् ज्ञापकात् । तेषामश्रवणन्तु तिबाद्यादेशैनैव सिद्ध्यति । आदेशापेक्षयेति । एवं चादेशबोधकपदस्य नियताकाङ्क्षासत्त्वेनादेशबोधकसादेशा इति शब्दस्याध्याहारेण वाक्यार्थबोधः लादेशा इत्यस्य लकारमात्रोद्देशेनविहिता इत्यर्थस्तत्फलमाह । तिबादय इति । अस्येति । सूत्रस्येति शेषः । परस्मैपदिभ्यित्यादिलिङ्गादित्यत्रादिना आत्मनेपदसञ्ज्ञां पुरुषसञ्ज्ञा न बाधते इत्यत्र लिङ्सिचावात्मनेपदेष्विति सूत्रस्य ज्ञापकत्वं सूचितम् । परस्मैपदात्मने पदसञ्ज्ञयोस्तु बाध्यबाधकभाव आकडारीयत्वाद्भवत्येव तदाह । एकसञ्ज्ञाधिकारेति । तङानावात्मनेपदम् ॥ अत्र लस्येत्यनुवृत्त्या लादेशस्यानो ग्रहणम् । तेन चानश् परस्मैपदिभ्योऽपि भवति । ननु येभ्यो धातुभ्य आत्मनेपदं भवति तन्निरूपणावसरे एवात्मनेपदविधायकसूत्रोपन्यास उचित इत्यत आह । शेषपदार्थज्ञानायेति । तेन । तिङन्तादितिव्याख्यानेन । तन्निरूपिताङ्गत्वानापत्तिरिति ॥ यस्मात्प्रत्ययविधिस्तदादेरेवाङ्गत्वात् । उपदेशेऽजनुनासिक इतिसूत्रादुपदेशपदमनुवर्तते । तथानुदात्तङित इति द्वन्द्वार्थविशेषणम् । अवयवविशेषणत्वे ... न स्यात् । एवं चानुदात्तांशे तत्स्वरूपानुवादकं न तु व्यावर्तकं ङिदंशे तु चिलुतश् कुटिपतीत्यस्य सिद्धये तद्विशेषणमातिदेशिकङित्त्वस्योभयत्र सत्त्वादेवं च यदंशे व्यावर्तकविशेषणम् भवति तद्विशेषणत्वमेवोचितमित्याशयेन मूले । उपदेशे यो ङिदिति व्याख्यातम् । केचिदिति । अत्रायं भावः जनु यस्मात्प्रत्ययेत्यत्र धातोरितिव्याख्यानस्य प्रत्यायकत्वेन केवलयङ आत्मनेपदस्याप्रसक्तिरेवेति यङन्तस्याङ्गत्वमप्यस्त्येव । तदन्तविधौ मानन्तूपदेशपदसम्बन्धेन व्याख्यानमेवेति । न च हलन्त्यमिति सूत्रव्याख्यानावसरे उपदेशपदे स्वरितत्वाभावकथनविरोध इति वाच्यम् । इत्संज्ञाविधौ सम्बन्धप्रयोजकं तन्नास्तीत्यर्थात् । मूले धातोरिति । भूवाद इति भूवादयो धातव इत्यस्य प्रत्या-

न्तस्यानुवृत्तावपि तदनुदात्तङित इतिपञ्चम्यन्तेन सामानाधिकरण्यानुरोधा-
त्पञ्चम्या विपरिणम्यत इत्याशयेन इति केचित् । वस्तुतस्त्वेतत्प्रकरणम-
नुदात्तङितस्तिप्तस्झि लस्य द्व्येकयोरितिसूत्राणामेकवाक्यतयाऽनुदात्तङि-
तो धातोर्लस्य स्थाने एकत्वे गम्ये आत्मनेपदसंज्ञकस्त इति भवतीत्येव-
मेव विधायकम् । वृद्भ्यस्स्यसनोरितिसूत्रारम्भसामर्थ्यादन्यथा लावस्था-
यामेव स्यप्रत्ययेन व्यवधानादनुदात्तङितः परत्वाभावादस्याप्राप्त्या पदद्वय-
सिद्धौ वृद्भ्य इत्यस्य वैयर्थ्यापत्तेः । एकवाक्यतायान्तु धातोरितिवि-
हितविशेषणं तस्मिन्सूत्रे स्य इति तु विषयसप्तमी बोध्या । एवं च चिनु-
तइत्यादावनुदात्तङितो विधानाभावान्नात्मनेपदप्राप्तिः । चुकुटिषतीत्या-
दिष्वपि गाङ्कुटादिभ्य इत्यनेन सनो ङित्त्वविधानेऽपि धातुत्वस्य सन्नन्त-
समुदायवृत्तितया तस्य च समुदायस्यातिदेशिकङित्त्वाभावेन न लकारस्य
ङितो विधानमिति नात्मनेपदप्राप्तिरित्युपदेश इत्यस्यैतत्सूत्रे न सम्ब-
न्धः । न चैवं यङन्तादात्मनेपदानापत्तिः यङन्तसमुदायस्य ङित्त्वविरहा-
दिति वाच्यम् । अङ्गुल्यादिवदवयवावयवस्य समुदायावयवत्वेन यङन्तस्या-
पि ङित्त्वात् । यदि च नैवं कल्पना तदापि नानुपपत्तिः गाङ्कुटादि-
भ्य इति सूत्रे ङिदितिपदं ङिद्वदित्यस्यार्थे सत्या सत्यभामेतिवद्वर्तते ।
ङिद्वदित्यत्र च सप्तम्यन्तात्षष्ठ्यन्ताच्च वतिरित्याश्रीयते न तु पञ्चम्यन्ता-
दिति सर्वेष्टसिद्धिरत एव भाष्ये चुकुटिषतीत्यत्रात्मनेपदमाशङ्क्य सिद्ध-
न्तु पूर्वस्य कार्यातिदेशादिति समाहितम् । तदुपपादनग्रन्थे च सप्तम्य-
र्थेऽपि वतिर्दृश्यते इत्युक्तम् । एवं च ङिदन्तादात्मनेपदमित्युक्तावपि
न क्षतिः । अपिशब्दात्सप्तम्यन्तात् । तेन भवतामित्यादावतो ङित इ-
त्यस्य प्रवृत्तिः अस्मिन्पक्षे आत्मनेपदशब्दादौ भाविसञ्ज्ञा ज्ञेया । एते-
न हलन्त्यमितिसूत्रे उपदेशपदे स्वरितत्वाभावप्रतिपादकेन ग्रन्थेन प्रकृत
सूत्रे उपदेशपदसम्बन्धाभिप्रायेण व्याख्यानपरग्रन्थेन विरोध इत्यपास्त-
म् । प्रकृतग्रन्थस्य मूलकाराभिप्रायवर्णनपरत्वात् । अत एवाह केचिदि-

ति। तदेवेति। एवकारेण धात्वर्थफलव्यवच्छेदः॥ तदुक्तम्। यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः॥ तत्प्रधानं फलं तेषां न लाभादि प्रयोजनमिति॥ तदर्थत्वद्योतकत्वम्। कर्तृगामितादृशफलकत्वद्योतकत्वम्। यजमानो यजते इत्यादाविति। अत्रादिना पचत इत्यादि संग्रहः। हेलाराजोक्तेरिति। एवं च पचत इत्यादौ नात्मनेपदविषये णिजापत्तिः॥ ननु प्रेरणायाश्चेतनधर्मत्वाद्भिक्षादीनामचेतनत्वाद्भिक्षा वासयतीत्यसंगतमत आह। भिक्षा वासयतीति। तत्समर्थाचरणम्। धात्वर्थफलोत्पत्तिसमर्थाचरणम्। भिक्षादिनिष्ठं तत्सुलभत्वादिरूपम्। प्रेरणाया एव णिजर्थत्वे स्वग्रन्थान्तरीयहेलाराजीयसम्मतिमप्याह। केचित्त्विदिति॥ अत एव। णिचः प्रेरणावाचकत्वादेव। अत्र केषां चिदित्यनेन सूचितामरुचिम्प्रकटयन्नाह। एवं चेति। कर्तुः। नापि तस्य। सन्निधानम्। तत्पुरोऽवस्थानादिरूपम्। ननु यद्यात्मनेपदेन सह णिचो विकल्प उच्यते तदा प्रेरणायास्सत्त्वेपि णिजभावस्य क्रीणीष्वेत्यत्रोपपत्तिर्भवति भवन्मते तु कथमत आह। क्रीणीष्वेत्यादि। न तु स तदर्थ इति॥ पुत्रस्य सन्निधानं प्रवर्तनं न धात्वर्थः किन्तु परायत्तत्वनिवृत्त्यादिमूलको व्यापार एव धात्वर्थः॥ ननु स्वामिदासौ पचेते इत्यत्र भृत्यस्य वेतनलाभोद्देश्यकप्रवृत्तिसत्त्वान्निरुक्तफलस्य कर्तृगामित्वाभावात्कथमात्मनेपदमत आह। स्वामिदासाविति। एवमन्यत्राप्युपपत्तिमाह। कमलवन इत्यादि। तिङस्त्रीणित्रीणि। मूले यथासंख्योपपत्तये पष्ठ्याविपरिणतयोः परस्मैपदात्मनेपदशब्दयोरनुवृत्त्योभयोः पदयोरितिव्याख्यातमेवं चानुवृत्तिबलादेव पुरुषसंज्ञायास्समावेशे सिद्धे सिचि वृद्धिरित्यस्य ज्ञापकत्ववर्णनासंगतिरिति तु न। प्रथमादिशब्दानां कृतद्वन्द्वानामेकशेषेणैव सामञ्जस्ये तयोः पदयोः स्वरितत्वस्य विभक्तिविपरिणामस्य च कल्पने गौरवमित्यभिप्रायेण तथाभिधानात्। अत्र। तिङ्वाच्येति वाक्ये। अनुपयोगादिति। तस्यास्समाससंज्ञादिप्रयोजकतया तत्सम्भवसेद्धाभावा-

दिति भावः। गौणत्वादिति। प्रकृतौ सादृश्यमूलकाभेदारोपेण वर्त्तमानत्वात्। त्वत्कल्प इत्यत्र त्वस्तिसामानाधिकरण्यमित्याह। त्वत्कल्प इत्यादि। नन्वेवं त्वत्कल्पेतिसमुदायस्य तिङ्वाच्यकारकवाचित्वं न तु युष्मच्छब्दस्येति कथमेतदिति शङ्कते। नन्विति। युष्मदिसाधन इति। शब्दार्थयोस्तादात्म्यादेवमुक्तम्॥ ननु निरुक्तं सामानाधिकरण्यं तान्तस्य युष्मच्छब्दस्य च सम्भवति न तु युष्मदर्थेन सहेति युष्मदर्थेन यत्रेत्यसंगतमत आह। लबोध्यार्थेति। तदर्थप्रवृत्तिनिमित्तयोस्समानाधिकरण्यन्त्वेकाधिकरणवृत्तिरूपम्॥ ननु भवच्छब्दस्यापि युष्मच्छब्दसमानार्थत्वात्तद्बोध्यार्थसमानाधिकरणयुष्मदर्थबोधकशब्दे उपपदे इत्यर्थे भवच्छब्दप्रयोगेऽपि मध्यमापत्तिरत आह। सलिङ्गस्येति। चेतनाचेतनसाधारणस्येति। भस्मोद्धूलनभद्रमस्तु भवते रुद्राक्षमाले शिव इत्यादावचेतनस्य भवति भिक्षान्देहीत्यादौ चेतनस्य प्रतीतिरिति भावः। चेतनैकविषयत्वादिति। अभिमुखीकरणस्य तत्रैव सम्भवादिति भावः। नन्वेवं युष्मच्छब्दान्नियमेन सम्बोधन एव प्रथमा स्यादत आह। युष्मदश्चेति। त्वं पचसीत्यत्र क्रियाविनियोगाभावेन विशेषणभावाद्विशिष्टाभावः। युष्मच्छब्दस्य चेतनैकविषयत्वे हरिसम्मतिमप्याह। तदुक्तमिति। प्रत्यक्त्वमहङ्कारानास्पदचेतनत्वम्। अयम्भावः। अपरत्वमहङ्कारास्पदचेतनत्वम्। ननु चैतन्ययुक्तस्य चेन्मध्यमपुरुषेणाभिधानन्तदाऽचेतनविषये शृणोत ग्रावाण इत्यादौ कथमत आह। शृणोतेति। परत्वादुत्तम एव। युष्मदस्मदोस्सहविवक्षायामेकशेषस्तत्रास्मदः शेषत्वात्तदीयप्रवृत्तिनिमित्तेन युष्मदर्थस्याप्यभिधानादुत्तमो न्याय्य एव। यत्र त्वेकशेषेण न प्रयोगस्तत्रोभयोरपि सूत्रयोः प्राप्तौ परत्वादुत्तम एवेत्यर्थः। शेषे प्रथमः॥ मूले मध्यमोत्तमयोरविषय इति। एवमभिधानेन युष्मद्भिन्नसामानाधिकरण्ये प्रथम इति लभ्यते। ननु यत्र युष्मद्यदस्मदादिशब्दयोः सह विवक्षायामेकशेषस्तत्र शेषसामानाधिकरण्य-

उत्थाम्मध्यमापत्तिरत आह । देवदत्तश्चेति । शेषे इत्यस्य न पूर्वोक्तार्थः किन्तु युष्मदादिसामानाधिकरण्याभावे इत्यर्थः एवं च नोक्तदोषः । तथाहि । यत्र देवदत्तश्च त्वं चेतिक्रमेण सह विवक्षा तत्र त्यदादीनि सर्वैर्नित्यमिति युष्मच्छब्दस्यैकशेषेण प्रयोगाद्देवदत्तपदार्थस्यापि युष्मच्छब्दप्रवृत्तिनिमित्तप्रकारिकैवोपस्थितिरिति न प्रथमः किन्तु मध्यम एवेति । उपयुक्तासमभिव्याहृतेति । उपयुक्तो नामासमभिव्याहृतो य उपयुक्ताद्न्यस्स शेष इत्यर्थः । उपयुक्तः प्रकृते पुरुषनियामकत्वेन प्रक्रान्तो युष्मच्छब्दोऽस्मच्छब्दश्च तेनासमभिव्याहृतस्तत्प्रतिपाद्यतावच्छेदकप्रकारकप्रतीतिजनको यः शब्दस्तस्मिन्प्रयुज्यमानेऽप्रयुज्यमाने वा प्रथमो भवति प्रकृते तु न तथेति भावः । ननु सहविवक्षायामेकशेषे यद्यपि पूर्वोक्तरीत्या निर्वाहस्तथापि यत्र न सहविवक्षा त्वं च देवदत्तश्चेति तत्र प्रथमः प्राप्नोतीत्यत आह । एवं चेति । निरुक्तसूत्रार्थस्याभिप्रेतत्वे चेत्यर्थः ॥ वाक्येपीति । एकशेषाभाव इत्यर्थः । युष्मच्छब्दप्रवृत्तिनिमित्तप्रतीतेस्तत्रापि सत्त्वादिति । भवथ इत्येवेति । तत्राप्युपयुक्तस्य युष्मच्छब्दस्य समभिव्याहारसत्त्वात् । न च द्वाभ्यां युष्मद्देवदत्तशब्दाभ्यां समूहालम्बनात्मिकैका यत्र प्रतीतिस्तत्र देवदत्तशब्दस्य युष्मच्छब्दप्रतिपाद्यतावच्छेदकधर्मप्रकारकोपस्थितिजनकतया न निरुक्तं शेषत्वमिति । प्रथमाप्रसक्तेपि यत्र क्रमेण तत्तद्धर्मप्रकारिकोपस्थितिस्तत्र देवदत्तशब्दस्य युष्मच्छब्दार्थतावच्छेदकधर्मप्रकारकोपस्थितिजनकत्वस्यैवेति शेषत्वात्प्रथमः प्राप्नोतीति वाच्यम् । तत्रापि शाब्दबोधस्योपस्थितिद्वयजन्यस्यैकस्य वक्तृतात्पर्यविषयत्वेन उपयुक्तपदप्रयोज्यशाब्दबोधस्य देवदत्तशब्दप्रयोज्यस्य चैकत्वाच्छाब्दबोधीयक्रियानिष्ठविषयतामादायोपयुक्तसमभिव्याहृतत्वस्य वक्तुं शक्यत्वात् । पूर्वोक्तसमभिव्याहारपदनिरुक्तायुपस्थितित्वेन निवेशमकृत्वोपयुक्तपदार्थतावच्छेदकभिन्नविषयतानिरूपितविषयतानिरूपिता या विषयता तदवच्छिन्नविषयतानि

रूपितविषयताशालिबोधाजनकस्य शेषपदेन ग्रहणात् । प्रथमा विषयता प्रवृत्तिनिमित्तनिष्ठप्रकारतारूपा द्वितीया आश्रयनिष्ठा तृतीया क्रियानिष्ठा बोध्या । न चोपयुक्तासमभिव्याहार उपयुक्तपदाव्यवधानेनाप्रयुज्यमानत्वरूप एवास्तु किमुक्तविषयताघटितनिर्वचनेनेति वाच्यम् । त्वद्धनिको महान्देवदत्तश्च ब्राह्मणगणान् भोजयथ इत्यत्र प्रथमापत्तेः । न चोपयुक्ताघटितवाक्यघटकत्वमुपयुक्तासमभिव्याहृतत्वमस्त्विति वाच्यम् । घटितत्वस्य वाक्यत्वस्य घटकत्वस्य च प्रवेशेन तदर्थस्यातिगुरुत्वात् । यदा तु देवदत्तः पचति त्वं चेतिरीत्या समुच्चयविवक्षा तत्र देवदत्तस्य शेषत्वात्प्रथमो भवति । द्वितीयस्य त्वावृत्त्या पुरुषविपरिणामेनान्वयस्तत्र वाक्यभेद एव । यत्र तु युष्मदस्मद्भ्यां भवच्छब्देन च सहविवक्षा तत्र मध्यमोत्तमावेवेत्याह । भवच्छब्देनेति । के चित्तु शेषे प्रथम इति सूत्रस्य युष्मदस्मदी यत्र समानाधिकरणे न स्तस्तत्र प्रथम इतिविवरणमित्याहुः तन्न । युष्मदस्मदन्येषु प्रतिषेध. शेषत्वादिति पूर्वपक्षासंगतेः । उपयुक्तादन्य इत्यस्यैव शेषपदार्थत्वेन प्रसिद्धत्वाच्च । भूसत्तायामित्यत्र सत्तायामित्यस्य शास्त्रान्तरप्रसिद्धसत्ताजातिपरत्वे तस्यानित्यत्वेन तदनुकूलत्व क्रिया या न सम्भवतीति धातुसञ्ज्ञानियत्तिर्न स्यादतो व्याचष्टे । सत्त्वेहेति । आत्मधारणम् । स्वस्वरूपधृत्यनुकूलो व्यापार. अनुकूलत्वं च.रोपितानारोपितसाधारणं विवक्षानिबन्धनमिति नित्यानित्यसाधारण्योपपत्तिरिति घटो भवति आत्मास्ति पर्वतास्तत्र देशे सन्तीति भवत्यर्थस्यास्तेः प्रयोगः संगच्छते। स्वस्वरूपधृतिश्च स्वरूपनिष्ठकालसम्बन्धरूपा इति फलव्यापारयोरेकनिष्ठत्वादकर्मकत्वोपपत्तिरिति। अस्तीत्युपपन्नस्यात्मधारणमाचष्टे इति निरुक्तं चेह प्रमाणम् । एधम् । मङ्गलार्थम् । अधिकारसामर्थ्यादिति । तत्प्रत्याख्यानपक्षे तु ग्राभि धातोरित्यतो धातुग्रहणसम्बन्धो योध्यस्तत्फलन्तु हरीभित्यादौ चेक्ष्छितीति गुणस्य यकयामवृत्तिः । ननु कत्वर्थे शब्भवतीत्येव कुतो मोक्षम-

ति । द्योतकत्वं चैषां कर्त्राद्यर्थमात्रतात्पर्य्यग्राहकत्वम् । पञ्चकं धात्वर्थ इतिसिद्धान्ताभिप्रायेणाह । वस्तुतस्त्विति । कारकार्थश्चेति ॥ कारकरूप आख्यातार्थश्चेत्यर्थः । अत एव । क्रियायामभेदेनान्वयादेव । सान्तेनेति ॥ लान्तशब्दजन्यस्य शाब्दबोधस्य क्रियामुख्यविशेष्यकतया विशेष्यक्रियायां चाभेदेन युष्मदर्थस्यान्वयादस्तिसामानाधिकरण्यमिति भावः । भावकर्म्मणोरिति वर्त्तत इति । अन्यथा शपि परतो यक् स्यात् । अन्यथा । कर्त्तरीत्यस्यानुपादाने । अपवादद्विप्रतिपेधेनेति । प्रकृतसूत्रे कर्त्तरीत्यस्यानुपादाने शबुत्सर्गः तस्य द्वावपवादौ यक्श्यनौ तयोर्मध्ये श्यनपेक्षया यकः पूर्वस्मात्परत्वाद्दिवादिभ्यो भावे कर्मणि वा श्यन् स्यादित्यर्थः । ननु यग्विधायकशास्त्रस्यापवादतया शब्बाधकत्वमप्युत्सर्गबाधकत्वं भविष्यतीत्यत आह । यक् त्विति । सार्वधातुकार्द्धधातुकयोः । नन्वत्र लाघवात्पिदार्द्धधातुकयोरिति सूत्रमस्तु सप्तमीबहुवचने हरिषु भानुष्वित्यत्र नातिप्रसङ्गः आर्द्धधातुकसाहचर्येण धातोर्विहिते प्रत्यये एवैतत्प्रवृत्तेः । धातोर्विहित इत्यस्य धातुसंशब्दनेन विहित इत्यर्थः एतत्फलं णू स्तुतौ धू विधूनन इत्यादिभ्यः क्विबन्तेभ्यः सप्तमीबहुवचने गुणव्यावृत्तिः । न च पिदार्धधातुकयोरिति न्यासे तवादावपि गुणो न प्राप्नोतीति सार्वधातुकमपिदिति व्यर्थमिति वाच्यम् उष इत्यादौ सम्प्रसारणार्थन्तस्यावश्यकत्वादिति चेन्न । साहचर्य्यपरिभाषाया अनित्यत्वस्य ज्ञापनार्थतया सार्वधातुकग्रहणस्यावश्यकत्वात् । एतदभिप्रायेणैव द्विरिवश्वतुरितिसूत्रे सुच इति सूत्रयितुमुचितमित्युक्तम् । अन्यथा सार्वधातुकग्रहणाभावे तत्परिभाषाया अनित्यत्वज्ञापकतया द्विस्त्रिश्चतुरिति न्यासस्यावश्यकत्वेन सुच इत्येव सूत्रयितुमुचितमित्यभिधानमसंगतं स्यात् । अत्र केचित् । सङि धातोरित्येव सूत्रमस्तु । सङीति संनः सकारमारभ्य महिङो ङकारेण प्रत्याहारः । धातोरिति तुशब्दव्यापारार्थं तेन काम्यचि न दोष इत्याहुः ॥ वस्तुतस्तु सङ्ग्राहृयो-

पादानमुभयत्र समानम्। सङ्पदस्यानुपयुक्तस्योपादाने तच्छक्तिग्रहणस्यै-
ववाक्यार्थबोधमात्रफलकत्वकल्पने ज्ञानगौरवमिति यथाश्रुतसूत्रस्यैव न्या-
य्यत्वमिति। झोन्तः। आयनेयीतिसूत्रात्प्रत्ययग्रहणमात्रमनुवर्तते न-
त्वादिग्रहणम्। तेन शयान्तै इत्यत्र शीङो झस्य लेटोडाटाविलाऽप्यि
झस्यान्तादेशसिद्धिः तत्र प्रत्ययपदं षष्ठ्यन्तमनुवर्तते षष्ठ्यर्थश्चाव-
यवत्वन्तेन वर्णमात्रस्य स्थानित्वेपि शयान्तै इत्यत्राटि कृते पिक्ककां-
रमात्रस्यान्तादेशसिद्धिः। प्रत्ययपदानुवृत्तेः फलमाह। तेनेति। झवि-
शिष्टस्य। प्रत्ययत्वपर्य्याप्त्यधिकरणस्येति शेषः। अयं चादेशो यादृश-
स्वरान्तः स्थानी तादृशस्वरान्त एव। तेन भवन्तीत्यत्रेकारान्तत्वमेवेति
नियमसिद्धिः। अतश्श्रौतस्यान्यादेशभावकल्पनायाः पुरःस्फूर्तिक-
त्वात् तस्मिन्पक्षे झोऽन्त इत्यत्र स्थान्यादेशयोरकारस्योच्चारणार्थकतया
तान्तादेशेन झकारमात्रस्य निवृत्तावपि पूर्वकालस्थितस्य स्वरस्यैव
श्रवणम्भवति। सम्प्रत्यपि तथैवेति रूपभेदो न। आनुमानिकादेशक-
ल्पनायां भाष्यमप्युपपद्यत इत्याह। अत एवेति॥ उपदेशिवद्वचनेने-
ति। आयन्नादिषूपदेशिवद्वचनं स्वरसिद्ध्यर्थमित्युक्तेः। तप्रत्ययादौ न
प्रत्ययसङ्ज्ञासंनियोगशिष्टमाद्युदात्तत्वम्। किन्त्वीनादेशे कृते एवे-
ति स्वरस्याद्युदात्तत्वेनेकारस्य तप्सिद्धिरित्यर्थः॥ प्रक्रियालाघवायेति।
अन्यथा तत्रापि झकारमात्रस्य जुमादेशे कृतेपीकारस्य निवृत्त्यर्थमि-
तश्चेतिसूत्रस्यापि प्रवृत्तिः कल्प्यं तिगौरवम्। अत एव झेरितिसमुदा-
यबोधनमपि साधु सङ्गच्छते। भवन्तीत्यत्र ङ्कितीति निषेधाभावाया-
ह। अत्र शपकारस्येति। ननु यार्णोदाङ्गमिति न्यायादेकादेशात्पूर्व-
मेव गुणोऽस्त्वित्यत आह। यार्णोदाङ्गमिति। अतो दीर्घो। सार्व-
धातुक इति किम्। अङ्गना केशय इति। अङ्गशब्दात्पामादित्वान्नः के-
शशब्दात्केशाद्व इति वप्रत्ययः। न च गृह्ण्वन्दाभ्यामारकन् इदायद्यालु-
रन्यतरस्यामित्यनयोरकारोच्चारणन्तद्धिते दीर्घाप्रवृत्तौ ज्ञापकं भविष्यतीति

वाच्यम्। आकारोच्चारणेन तद्धिते परे दीर्घाप्रवृत्तिकल्पनापेक्षया क्रमस्य सार्वधातुकपदस्य सम्बन्धकल्पन एव ज्ञापकं भविष्यतीत्याशयात्। ननु सुपि चेति सूत्रमस्मिन्सूत्रे सार्वधातुकपदानुवृत्त्यभावे नियमार्थम्भविष्यति। अधातुप्रत्यये यदि दीर्घस्तर्हि सुप्येवेति। तेनोक्तस्थले दीर्घाभावे सिद्धे तुरुस्तुशम्यमिति सूत्रात्सार्वधातुकपदानुवृत्तिर्व्यर्थेति चेन्न। सुपि चेतिसूत्राभावे यञ्चभ्यां युवभ्यामित्यादावतो दीर्घो यञीति दीर्घापत्तेः। यञादित्वमात्रस्य निमित्ततावच्छेदकतया तस्य सुप्त्वव्याप्यत्वाभावेन सुप्त्वतद्व्याप्यधर्मावच्छिन्ननिमित्तकार्य्याप्राप्त्या नलोपस्सुपीति सूत्राप्रवृत्तेः। अत आदिति सिद्धे दीर्घपदं दीर्घ एव यथा स्यादित्येवमर्थन्तेन पचामीत्यादावन्त्यस्येति प्लुतो न। यत्तु आदिति कृतेपि तपरकरणसामर्थ्यात्प्लुताभावस्सिद्ध एवेति तन्न। करिष्यामीत्यत्रोदात्तस्य स्थानतःस्वान्तरतम्यात्प्राप्तस्याप्युदात्तत्वस्य बाधापत्तेः। न च तपरकरणेनातत्कालव्यावृत्तिरेव क्रियत इति वाच्यम्। तपरस्तत्कालस्येति सूत्रस्य नियामकत्वेन तत्राण्ग्रहणानुवृत्तेरावश्यकत्वेन वाच्यम्। एवं चाकारस्यानण्त्वाच्छास्त्रेण तत्कालव्यावृत्तेः कर्त्तुमशक्यतया तपरत्वसामर्थ्यादेव सा वाच्या। एवं सति विजातीयसादेशस्य व्यावृत्तौ सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य इति परिभाषायलाद्धातुस्वरस्य शेषे तदेकवाक्यतापन्नशेषनिघातो न स्यादिति। यत्तु प्रकृतसूत्रे आआइत्याकारान्तरप्रश्लेषेण प्लुतस्य वारणं स्वरस्य च सिद्धिरित्याहुस्तन्न। आकारान्तरस्य प्रश्लेषे पदे गौरवापत्तेस्तदपेक्षया दीर्घग्रहणमेव युक्तमिति। एहि मन्ये इति वाक्यद्वयघटकक्रियायामभिन्नकालत्वस्य प्रतीत्यर्थमेहीत्याकारणम्। तत्फलमाह। परिहासेति। आकारणं कृत्वा एवमुक्तौ परिहासः स्फुटो भवतीति। इत्येतादृशविषयताशालीति। यद्विषयताशालिज्ञानानन्तरं साक्षात्तज्जिज्ञास्याकारिका ज्ञाननिष्ठविषयताशालिनी विलक्षणा प्रतीतिर्भवति तादृशविषयतानिरूपकं यद् ज्ञानं तदविषयत्वमित्यर्थः। तच्च ज्ञानमिन्द्रिय-

स्वावच्छिन्नकरणताकं ज्ञानम् । तच्च सन्निकृष्टविषयकमेवेति सन्निकर्षप्रयोज्यत्वं लब्धमिति परोक्षत्वं स्फुटमेव । वर्त्तमानध्वंसेति । शब्दप्रयोगाधिकरणकाले वर्त्तमानध्वंसेत्यर्थः । परस्मैपदानाम् । प्राचीनसम्मतं पक्षं दूषयति । णल इति । ध्वनितश्चेदमिति । तत्र हि झा आ इत्याकारप्रश्लेषेण सर्वादेशत्वसम्पादनेन परिभाषास्यमनुबन्धपदमनुबन्धत्वयोग्यपरमित्येतद्ध्वनितमित्यर्थः । अत एव काणोर्विषये नानुबन्धकृतमसारूप्यमिति प्रवर्तते । अन्यथा ककारस्य प्रत्ययत्वज्ञानोत्तरमित्संज्ञाप्रवृत्तेर्विधानकालेऽनुबन्धत्वज्ञानाभावेन विकल्पस्स्यात् । ननु ण अलिति प्रश्लेषेपि पूर्वमतो गुण इति पररूपेऽनुपपत्तिस्तदवस्थैवेत्यत आह । प्रश्लेषसामर्थ्यादिति । स्वरार्थम् । लितीत्यनेन प्रत्ययपूर्वस्योदात्तत्वार्थम् । अन्यथा । णलो लित्त्वाभावे । उभयोः । द्विरुक्तधात्ववयवयोः । उदात्तत्वं स्यादिति । णलो लित्त्वाभावे तिप्सिपोः पित्त्वेनानुदात्ततया तयोः स्थाने जायमानयोर्णलोरान्तरतम्येनानुदात्ततया धातोरितिसूत्रेणोभयोरनुदात्तत्वं स्यादित्यर्थः । स चैकदैव लक्ष्यभेदाद्द्वारद्वयन्धातोरित्यस्य प्रवृत्तौ समावेशं एवोदात्तद्वयस्य स्यादिति बोध्यम् । न चेष्टापत्तिः अनुदात्तं पदमेकवर्ज्जमितिपरिभाषैकवाक्यतया युगपदुदात्तद्वयस्य प्रयत्नं विना निष्टेरत एवाह । पर्य्यायेणेति । न च धातुत्वस्य परभागे विश्रान्तेः सिद्धान्ते स्वीकारात्कथं द्वित्वोत्तरमुभयत्र धातोरित्यस्य प्रवृत्तिरिति वाच्यम् । पर्य्यायेणेतिग्रन्थस्य द्वित्वोत्तरं पर्य्यायेणोभयोः स्यादिति न किन्तु द्वित्वात्पूर्वं परत्वाद्धातोरित्यन्तोदात्तत्वे तस्य द्विर्वचने सत्युदात्तद्वयस्य श्रवणापत्तेरित्यर्थात् । लित्त्वे तु सति शिष्टस्वारपरस्यैवोदात्तत्वमित्याशयः पर्य्यायेणेति तु द्वित्वेऽप्युभयोर्धातुत्वमिति वादिरीत्येति । भुवो वुक् । अचीत्यनुवर्त्तत इति । तेनाभूत् अभूरित्यत्र नातिप्रसङ्ग इति शेषः । न चात्र जातेपि वुगागमे वलि लोपेन निर्वाह इति वाच्यम् । अभूतामित्यादौ वुगागमस्य समुदायापेक्षत्वं यकारलोपस्य तु

तकारमात्रापेक्षत्वेनान्तरङ्गत्वमिति वलि लोपे कर्त्तव्ये वुकोऽसिद्धत्वेन वलि लोपाप्राप्तेः । किं च प्राचीनोक्तरीत्याऽभूदित्यादावपि बह्वपेक्षत्वेन बहिरङ्गत्वं वुको वक्तुं शक्यमिति तत्र हल्ङ्यादिलोपाप्राप्तिः । वलि लोपे वग्रहणप्रत्याख्यानपक्षे वलि लोपाप्राप्तेश्च । ननु शब्दान्तरस्य प्राप्त्या वुगागमोऽप्यनित्य इत्यत आह । कृताकृतेति । नन्वोः सुपीत्यत ओरित्यस्य सम्बन्धेन कृताकृतप्रसङ्गित्वमत आह । ओः सुपीति । फलाभावादिति । भाष्यकारादिसंप्रतिपन्नस्य लक्ष्यस्याभावादित्यर्थः । एतेन वुकोऽनित्यत्वसम्पादनेन गुणवृद्धिघटितलक्ष्यसिद्धिरेव फलमित्यपास्तम् । असवर्णत्वाच्चेति । नन्विदं हुश्नुवोरितिसूत्रव्याख्यानावसरे एरनेकाच इत्यतोऽसंयोगपूर्वस्येत्यनुवृत्तमोः सुपीत्यतोऽनुवृत्तस्यौरित्यस्य विशेषणं न तु प्रत्ययस्य तेनाप्नुवन्तीत्यत्र यण् नेति वक्ष्यमाणग्रन्थेन विरुद्धम् । तथा हुश्नुवोरितिसूत्रभाष्येऽपि हुश्नुग्रहणखण्डनावसरे धियन्ति पियन्तीत्यत्र प्राप्नोतीत्याशङ्क्य ओरिति वर्त्तत इत्युक्तम् । तेनैतद्विरुध्यत इति चेन्न । आप्नुवन्तीत्यस्यौरित्येतद्व्यावर्त्यत्वप्रदर्शनपरवक्ष्यमाणग्रन्थस्य यथाश्रुताभिप्रायकत्वात् । यदि तु हुश्नुवोरितिसूत्रे षष्ठीनिर्दिष्टेनोपस्थितस्यान्त्यस्येत्यस्यासंयोगपूर्वस्येति विशेषणन्तदा तत्राप्योरित्यस्य न प्रयोजनम् । भाष्यग्रन्थविरोधोऽपि न । भाष्यकृता हि एवमपि सुवन्ति रुवन्तीत्यत्र प्राप्नोति । अनेकाजिति वर्त्तते । एवमप्ययुयवन्नरुयवन्नित्यत्रापि प्राप्नोति । एतदप्यटोऽसिद्धत्वादेकाज् भवति । एवमप्यूर्णुवन्तीत्यत्रापि प्राप्नोति । असंयोगपूर्वस्येत्यनुवर्त्तते । यङ्लुगर्थन्तर्हि हुश्नुग्रहणं कर्त्तव्यम् । यङ्लुगन्तमनेकाजसंयोगपूर्वमुवर्णान्तमस्ति तदर्थमित्युक्तम् । ततोऽग्रे छन्दस्युभयथेत्यनेनार्द्धधातुकत्वमुक्त्वा एवं तर्हि सिद्धे सति यद्धुश्नुग्रहणं करोति तज्ज्ञापयत्याचार्यो भाषायामपि यङ्लुग् भवतीति । किमेतस्य ज्ञापने प्रयोजनम् । बेभिदीति चेच्छिदीतीत्येतत्सिद्धम्भवत्येवमुक्तम् । एतेन प्रयत्नकेन यङ्लुङ्निवृत्त्यर्थं हुश्नुग्रहणस्यावश्यकत्वमुक्त-

स्वावच्छिन्नकरणताकं ज्ञानम् । तच्च सन्निकृष्टविषयकमेवेति सन्निकर्षाप्रयोज्यत्वं लब्धमिति परोक्षत्वं स्फुटमेव । वर्त्तमानध्वंसेति । शब्दप्रयोगाधिकरणकाले वर्त्तमानध्वंसेत्यर्थः । परस्मैपदानाम् । प्राचीनसम्मतं पक्षं दूषयति । णल इति । ध्वनितश्चेदमिति । तत्र हि हा आ इत्याकारप्रश्लेषेण सर्वादेशत्वसम्पादनेन परिभाषास्थमनुबन्धपदमनुबन्धत्वयोग्यपरमित्येतद्ध्वनितमित्यर्थः । अत एव काणोर्विषये नानुबन्धकृतमसारूप्यमिति प्रवर्तते । अन्यथा ककारस्य प्रत्ययत्वज्ञानोत्तरमित्संज्ञाप्रवृत्तेर्विधानकालेऽनुबन्धत्वज्ञानाभावेन विकल्पस्स्यात् । ननु ण अलिति प्रश्लेषेपि पूर्वसतो गुण इति पररूपेऽनुपपत्तिस्तदवस्थैवेत्यत आह । प्रश्लेषसामर्थ्यादिति । स्वरार्थम् । लितीत्यनेन प्रत्ययपूर्वस्योदात्तत्वार्थम् । अन्यथा । णलो लित्वाभावे । उभयोः । द्विरुक्तधात्ववयवयोः । उदात्तत्वं स्यादिति । णलो लित्वाभावे तिप्सिपोः पित्त्वेनानुदात्ततया तयोः स्थाने जायमानयोर्णलोरान्तरतम्येनानुदात्ततया धातोरितिसूत्रेणोभयोरनुदात्तत्वं स्यादित्यर्थः । स चैकदैव लक्ष्यभेदाद्वारद्वयन्धातोरित्यस्य प्रवृत्तौ समावेश एवोदात्तद्वयस्य स्यादिति बोध्यम् । न चेष्टापत्तिः अनुदात्तं पदमेकवर्ज्जमितिपरिभाषैकवाक्यतया युगपदुदात्तद्वयस्य प्रयत्नं विना निष्टेरत एवाह । पर्यायेणेति । न च धातुत्वस्य परभागे विश्रान्तिः सिद्धान्ते स्वीकारात्कथं द्वित्वोत्तरमुभयत्र धातोरित्यस्य प्रवृत्तिरिति वाच्यम् । पर्यायेणेतिग्रन्थस्य द्वित्वोत्तरं पर्यायेणोभयोः स्यादिति न किन्तु द्वित्वात्पूर्वं परत्वाद्धातोरित्यन्तोदात्तत्वे तस्य द्विर्वचने सत्युदात्तद्वयस्य श्रवणापत्तेरित्यर्थात् । लित्वे तु सति शिष्टस्वात्परस्यैवोदात्तत्वमित्याशयः पर्यायेणेति तु द्वित्वेऽप्युभयोर्धातुत्वमिति वादिरीत्येति । भुवो वुक् । अचीत्यनुवर्त्तत इति । तेनाभूत् अभूरित्यत्र नातिप्रसङ्ग इति शेषः । न चात्र जातेपि युगागमे यलि लोपेन निर्वाह इति वाच्यम् । अभूतामित्यादौ युगागमस्य समुदायापेक्षत्वं यकारलोपस्य तु

मीत्वेऽस्तेर्लिटि परत्वाद् भूभावात्पूर्वं द्वित्वे कृते परस्य खण्डस्य भूभावे पूर्वस्य श्रवणं प्राप्नोतीत्युक्ताऽद्व्धातुक इत्यस्य विषयसप्तमीत्वमाश्रित्य दोषः परिहृतः। यदि पूर्वखण्डस्य समुदायस्य वाऽर्थवत्त्वं स्यात्तदा उत्तरखण्डस्यानर्थक्यात्परखण्डस्य भूभावे कृत इत्यसम्बद्धं स्यात्तेनोत्तरखण्डस्यार्थवत्त्वमध्वनितमित्यर्थः। नापि प्रत्येकमर्थवत्त्वम्। बोधावृत्त्यापत्तेः। अत्र पक्षे। द्विःप्रयोगपक्षे। द्वितीयभागावधिकसमुदायस्य तिङन्तत्वमुपपादयति। तत्रेति। तावेवेति दृष्टान्तार्थम्। सुप्ग्रहणं च पदसंज्ञासूत्रेऽस्तीति प्रसङ्गादुच्चरितत्वस्य प्रकृते उपयोगः। यथा तावेव सुप्तिङौ तथा यस्मात्तिङ्विहितः सा प्रकृतिराद्यैवेत्यर्थः। ननु यद्याद्योच्चारणविषयभूता प्रकृतिस्सैव तर्हि तस्यानर्थकत्वाभावान्नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे इत्यस्यासङ्गतिरत आह। कृते त्विति। अभ्यासस्य नैरर्थक्यव्यवहारे द्वितीयस्योच्चार्यमाणस्य ज्ञानप्रतिबन्धकमित्येवङ्कल्पनयोपपत्तिः कार्या। न चात्र सर्वथा वाचकतासम्बन्धावच्छिन्नप्रतियोगिताकोऽर्थाभावस्सम्भवति। शब्दार्थयोस्सम्बन्धस्यानित्यत्वापत्तेः। ननु यदि प्रथमं द्वित्वं तदा समुदायात् कथं लिड्धातुत्वादत आह। समुदायोपीति। अत एव। समुदायस्य क्रियावाचकत्वाभावादेव। ननूर्णुनविषतीत्यत्र द्वितीयस्यैकाचो द्वित्वे कृते प्रथमैकाचोऽपि द्वित्वं कुतो नेत्यत आह। इदम्प्रथमद्विर्वचनापवाद इति। तत्रकौण्डिन्यन्यायादिति शेषः। यत्र प्रथमस्य द्वितीयस्यैकाचस्सम्भवस्तत्रेदं शास्त्रं प्रवर्त्तते। यत्र तु नैवम्। यथा इयायेत्यादौ तत्र पूर्वेणैव द्वित्वमित्याह। अजादेर्धातोरिति। ननु लिटि परे द्विर्वचनविधानाल्लिट्परत्वस्य च धातावेव सम्भवात्प्रकृतसूत्रे धातुग्रहणं किमर्थमित्यभिप्रायेण प्रश्नो धातोरिति किम्। जजागारेति। प्रथमस्यैकाचो जागित्यस्य लिट्परत्वाभावाद्विर्वचनं न स्यादिति भावः। अनभ्यासग्रहणस्य प्रयोजनमादौ उक्तमनभ्यासस्येति किमर्थम्। कृष्णो नोनाव वृषभो यदीदम्। नोनूयतेर्नोनावेति। अत्र यङन्तस्य प्रत्यया-

न्तेनोक्तरीत्याङ्गस्येति षष्ठीनिर्देशेनोपस्थितस्यान्त्यस्यासंयोगपूर्वग्रहणस्य सम्बन्धो ध्वनितः ओरित्यस्यानुवृत्तिश्च ध्वनिता । किं च । वुको नित्यत्वमिन्धिभवतिभ्यां चेतिसूत्रे भवतिग्रहणप्रत्याख्यानावसरे इन्धेश्छन्दोविषयत्वाद्भुवो वुको नित्यत्वात्ताभ्यां लिटःकिद्वचनानर्थक्यम् । न ह्यान्तरेण छन्द इन्धेरनन्तरो लिड् लभ्यः आमा भाषायां भवितव्यम् । भुवो वुको नित्यत्वाद्भवतेरपि नित्यो वुक् कृतेपि प्राप्नोत्यकृतेपि ताभ्यां लिटः किद्वचनानर्थक्यमित्युक्तम् । एतेन भाष्यप्रघट्टकेन ओरित्यस्यास्वरितत्वं स्पष्टमेव लभ्यत इति । व्याख्यानादिति । एकाजित्यस्य विधायकत्वासम्भवमूलकाद्व्याख्यानादित्यर्थः । तथाहि नायं विधिः लिटीत्यादिसूत्रेषु विधेयानिर्देशेनात्वन्यप्रसङ्गात् । नापि शेषे इतिसूत्रवदुभयरूपता लिटीत्यादेर्नियामकत्वकल्पनापेक्षयाऽस्याधिकारत्वकल्पनया विधित्वस्योचितत्वादिति । अत एव । प्रथमविशेषणत्वादेव । यदि धातोर्विशेषणमेतद्भवेत्तदा जागर्त्तेरनेकाच्त्वाद्द्वित्वं न स्यात् । व्यपदेशिवद्भावेनेति । एकस्मिन्नारोपतानेकावस्थारूपत्वस्य च कल्पनेन सूत्रस्य प्रवृत्तिः । कर्मधारय इति । विशेषणस्याप्यादिशब्दस्य राजदन्तादित्वादनित्यत्वात्पूर्वनिपातप्रकरणस्य वा परनिपातः । स च कर्मधारयः परिनिष्ठितविभक्त्या समास इतिपक्षे पञ्चम्यन्तयोर्बोध्यः । अत एव न न्द्राः इतिसूत्रेऽचः परादित्यर्थस्योपपत्तिः । तेनेन्द्रीयियिषतीत्यत्र दकारस्य द्विर्वचनसिद्धिः । द्वे इत्यत्र द्विशब्दस्य संख्येयबोधकतयोच्चारणरूपं तत्कल्प्यम् । तत्र साधकमाह । अत्रेति । कारकषष्ठीत्वात् उच्चारणक्रियापेक्षया कर्मषष्ठीत्वस्योचितत्वादिति भावः । अत एव । द्विःप्रयोगस्वीकारादेव । यदि स्थानेद्विर्वचनं स्यात्तदा टि इत्यस्य स्थाने टिटि इत्यादेशे वस्वसादेशस्थल इव प्रकृतिप्रत्ययविभागसंमोहेन णिलोपो न स्यादिति भावः । अस्य । षाष्ठद्वित्वस्य । उत्तरखण्डस्यैवेत्येवकारेण पूर्वखण्डस्य समुदायस्य च व्यवच्छेदः तदाह । ध्वनितमिति । तत्र स्यार्द्धधातुक इत्यस्य परम-

हमीत्वेऽस्तेर्लिटि परत्वाद् भूभावात्पूर्वं द्वित्वे कृते परस्य रूपस्य भूभावे पूर्वस्य श्रवणं प्राप्नोतीत्युक्त्वाऽऽर्धधातुक इत्यस्य विषयसप्तमीत्वमाश्रित्य दोषः परिहृतः। यदि पूर्वरूपस्य समुदायस्य चार्थवत्त्वं स्यात्तदा उत्तररूपस्यानर्थक्यात्परस्य रूपस्य भूभावे कृत इत्यसम्बद्धं स्यात्तेनोत्तररूपस्यार्थवत्त्वमनुचितमित्यर्थः। नापि प्रत्येकमर्थवत्त्वम्। बोधद्वयापत्तेः। अत्र पक्षे। द्विःप्रयोगपक्षे। द्वितीयभागाद्यधिकसमुदायस्य तिङन्तत्वमुपपादयति। तत्रेति। तावेवेति दृष्टान्तार्थम्। सुप्ग्रहणं च पदसंज्ञासूत्रेऽस्तीति प्रसङ्गादुच्चरितत्वस्य प्रकृते उपयोगः। यथा तावेव सुप्तिङौ तथा यस्मात्तिङ् विहितः सा प्रकृतिरावृत्तैवेत्यर्थः। ननु यद्याद्योच्चारणविषयकृता प्रकृतिस्तस्यैव तर्हि तस्यानर्थकत्वात्तावान्नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे इत्यस्याप्रवृत्तिरत आह। कृते त्विति। अभ्यासस्य नैरर्थक्यव्यवहारे द्वितीयस्योच्चार्यमाणस्य ज्ञानस्यातिरिक्तमित्येव क्लृप्तयोपपत्तिः कार्या। न चात्र सर्वथा धात्वर्थतासम्बन्धावच्छिन्नप्रतियोगिताकोऽर्थाभावस्सम्भवति। शब्दार्थयोस्सम्बन्धस्य नित्यत्वापत्तेः। ननु यदि प्रथमं द्वित्वं तदा समुदायात् कथं लिङ्धातुत्वादत आह। समुदायोऽपीति। अत एव। समुदायस्य क्रियावाचकत्वान्नायादेव। ननु ऊर्णुनविषतीत्यत्र द्वितीयस्यैकाचो द्वित्वे कृते प्रथमैकाचोऽपि द्वित्वं कुतो नेत्यत आह। इदमप्रथमद्विर्वचनापवाद इति। तत्क्रीडिन्याप्यादिति शेषः। यत्र प्रथमस्य द्वितीयस्यैकाचस्सम्भवस्तत्रेदं शास्त्रं प्रवर्तते। यत्र तु नैवम्। यथा इयायेत्यादौ तत्र पूर्वेणैव द्वित्वमित्याह। अजादेर्धातोरिति। ननु लिटि परे द्विर्वचनविधानाल्लिट्परत्वस्य च धातावेव सम्भवात्प्रकृतसूत्रे धातुग्रहणं किमर्थमित्यभिप्रायेण प्रश्नो धातोरिति किम्। जजागारेति। प्रथमस्यैकाचो जागित्यस्य लिट्परत्वाभावाद्द्विर्वचनं न स्यादिति भावः। अनभ्यासग्रहणस्य प्रयोजनमादौ उक्तमनभ्यासस्येति किमर्थम्। ऊर्णोनोनाव ऊपजो यदीदम्। ओनूनतेर्नोनावेति। अत्र यङन्तस्य प्रत्यया-

न्तेनोक्तरीत्याऽङ्गस्येति षष्ठीनिर्देशेनोपस्थितस्यान्त्यस्यासंयोगपूर्वग्रहणस्य सम्बन्धो ध्वनितः ओरित्यस्यानुवृत्तिश्च ध्वनिता । किं च । युको नित्यत्वमिन्धिभवतिभ्यां चेतिसूत्रे भवतिग्रहणप्रत्याख्यानावसरे इन्धेश्छन्दोविषयत्वाद्भुवो वुको नित्यत्वात्ताभ्यां लिटः किद्वचनानर्थक्यम् । न ह्यन्तरेण छन्द इन्धेरनन्तरो लिड् लभ्यः आमा भाषायां भवितव्यम् । भुवो वुको नित्यत्वाद्भवतेरपि नित्यो वुक् कृतेपि प्राप्नोत्यकृतेपि ताभ्यां लिटः किद्वचनानर्थक्यमित्युक्तम् । एतेन भाष्यग्रन्थद्वयेन ओरित्यस्यास्वरितत्वं स्पष्टमेव लभ्यत इति । व्याख्यानादिति । एकाजित्यस्य विधायकत्वासम्भवमूलकाद्व्याख्यानादित्यर्थः । तथाहि नायं विधिः लिटीत्यादिसूत्रेषु विधेयानिर्देशेनानन्वयप्रसङ्गात् । नापि शेषे इतिसूत्रवदुभयरूपता लिटीत्यादेर्नियामकत्वकल्पनापेक्षयाऽस्याधिकारत्वकल्पनया विधित्वस्योचितत्वादिति । अत एव । प्रथमविशेषणत्वादेव । यदि धातोर्विशेषणमेतद्भवेत्तदा जागर्तेरनेकाच्त्वाद्द्वित्वं न स्यात् । व्यपदेशिवद्भावेनेति । एकस्मिन्नारोपितानेकावस्थारूपत्वस्य च कल्पनेन सूत्रस्य प्रवृत्तिः । कर्मधारय इति । विशेषणस्याप्यादिशब्दस्य राजदन्तादित्वादनित्यत्वात्पूर्वनिपातप्रकरणस्य वा परनिपातः । स च कर्मधारयः परिनिष्ठितविभक्त्या समास इतिपक्षे पञ्चम्यन्तयोर्बोध्यः । अत एव न न्द्रा इतिसूत्रेऽच परादित्यर्थस्योपपत्तिः । तेनेन्द्रीयियिषतीत्यत्र दकारस्य द्विर्वचनसिद्धिः । द्वे इत्यत्र द्विशब्दस्य संख्येयबोधकतयोच्चारणरूपं तत्कल्प्यम् । तत्र साधकमाह । अत्रेति । कारकषष्ठीत्वात् उच्चारणक्रियापेक्षया कर्म्मषष्ठीत्वस्योचितत्वादिति भावः । अत एव । द्विःप्रयोगस्वीकारादेव । यदि स्थानेद्विर्वचनं स्यात्तदा टि इत्यस्य स्थाने टिटि इत्यादेशे यत्तसादेश स्थल इव प्रकृतिप्रत्ययविभागसंमोहेन णिलोपो न स्यादिति भावः । अस्य । षाष्ठद्वित्वस्य । उत्तरखण्डस्यैवेत्येवकारेण पूर्वखण्डस्य समुदायस्य च व्यवच्छेदः तदाह । ध्वनितमिति । तत्र स्यार्द्धधातुक इत्यस्य परम-

य। अनुकरणसानुकार्य्यापस्यापकत्वमनुकार्यत्वं चोभयोरपि भूशब्दयोरिति भावः। नन्वस्तेर्लुग्विकरणत्वाद्दादेशस्य लुग्विकरणपरिभाषया ग्रहणं न भविष्यतीत्यत आह। तस्मार्द्धधातुकेति। लुग्विकरणत्वं च लुक्प्रतियोगिविकरणप्रकृतित्वं तच्चास्य न सम्भवतीत्यत आह। लुग्विकरणत्वाभावादिति। स्थानिवत्त्वेनैतदलभ्यमशास्त्रीयत्वात्। किं च यस्मिन्नार्द्धधातुके भूभावस्तत्प्रयोगघटकस्यास्तेर्भिन्नत्वात्तत्र विकरणेनैव प्राप्नोतीति न लुग्विकरणपरिभाषाया अवसर इति। नन्वनुकरणादपि परस्य शपः प्रकृतिवदित्यतिदेशाल्लुक् कुतो नेत्यत आह। नित्यस्य ह्यावश्यकप्रवृत्तिकत्वमनित्यस्य तु लक्ष्यानुसारिप्रवृत्तिकत्वमिति भावः। अत्रेदम्बोध्यम्। उपसर्गात्सुनोतीत्यादिनिर्द्देशाल्लोपः पिबतेरितिनिर्द्देशाच्च शितप्रत्ययस्य कर्तृवाचकत्वाभावेऽपि विकरणस्य प्रवृत्तिः कर्तृवाचकत्वाभावादेव भावकर्मणोरपि प्रवृत्तिः। यत्त्वत्र मनोरमायामुक्तम्। श्तिपः शित्त्वसामर्थ्यादकर्तृकत्वेऽपि विकरण इति। तदपरे न क्षमन्ते शित्त्वस्यार्द्धधातुकत्वव्यावर्त्तकतया चारितार्थ्यसम्भवात्। तेन सुनोतीत्यादाविडभावः सिध्यति। यदि तु व्रतयेतिनिषेधस्तर्हि व्रवीतीत्यत्र सार्वधातुकस्य हलादेः पितो ब्रुव ईडितिसूत्रेण विधीयमानो न स्यात्। किं च ध्यायतेस्सम्प्रसारणं चेत्यत्र श्नाकारस्त्वेऽशिति जायमानमात्त्वं न भवति। सम्प्रति तु स्यादिति। तस्मात्तत्र श्नाकारोच्चारणसामर्थ्यादकर्तृवाचिन्यपि श्तिपि शबादय इति। असिद्धवदत्राभात्। व्याख्यातमेतत्। भाष्योक्तरीत्येति। तत्र हि सातः सातवानित्यत्रात्वानुनासिकलोपयोः प्राप्तौ विप्रतिषेधादात्वमित्युक्ताभीयत्वेनासिद्धत्वाद्विप्रतिषेधानुपपत्तिमाशङ्क्य घुमास्थेतिसूत्रस्थं हल्ग्रहणज्ञापकम्भविष्यतीह विप्रतिषेध इत्युक्तम्। विप्रतिषेधेन व्यवस्थायामसिद्धत्वं न भवतीत्यर्थः। हल्ग्रहणं हि गोदः कम्बलदोऽल्लोपात्परत्वादीत्त्वयारणाय कृतम्। यदि परत्वेन व्यवस्थायामप्यसिद्धत्वं स्यात्तदा जातेऽपि परत्वादी-

न्त्वेऽप्यमन्त्र इति प्रतिषेधादामोऽभावेन लिट् । यङो लुक् यङन्ताद्द्वित्वे कृतेऽपि लिण्निमित्तकं द्वित्वं स्यात् । तदुत्तरमुक्तम् । अभ्यासप्रतिषेधानर्थक्यं छन्दसि वावचनात् । अवश्यं छन्दसि वा द्वे स्त इति वक्तव्यम् । किम्प्रयोजनम् । प्रयोजनमादित्यान्याचिषामहे । देवता नो दाति प्रियाणि । मधा दात्विति । छन्दसि द्विर्वचनस्य वैकल्पिकत्वेन यङन्तत्वात् कृते द्विर्वचने लिटि धातोरिति प्राप्तमपि द्विर्वचनं न भविष्यतीत्यभ्यासप्रतिषेधोऽनर्थक इति भावः । ननूत्तरार्थन्तदावश्यकम् । लौकिकेऽपि प्रयोगे तत्प्रयोजनसम्भवादित्याशयेनाह । यङन्तात्सनीति । तदाशयः । भाष्याशयः । ननु सुषुविपत इतिप्रयोगे स्तौतिण्योरिति सूत्रे दृश्यत एवेत्यत आह । स्तौतिण्योरिति । यत्त्वत्र कैयटेनोक्तम् । चङीत्यसदर्थस्तु कर्त्तव्यो यदा सन् यङन्ताण्णिचि कृते चङ् भवति । अजुगुप्सत् । अलोलुपदिति । तदा द्विर्वचनं माभूदिति । अस्यायमाशयः । यस्मिन् सूत्रेऽनभ्यासस्येत्युक्तन्तस्मिन् प्रयोजनाभावपरभाष्यमिति । तत्रेदं वक्तव्यम् । अभ्यासप्रतिषेधानर्थक्यं छन्दसि वा वचनादिति भाष्यवार्त्तिकस्वारस्यं न येषु प्रयोगेषु सार्थक्यसम्भावना तेषामनभिधानमेव । भाष्यवार्त्तिकयोरसंकोचेन व्याख्याने प्रमाणाभावात् । अत एव भाष्यकृता विशिष्य सूत्रान्तरेपि प्रयोजनं नोक्तमिति । तादृशस्यैव । आदिहलुत्वस्यैव एव । लक्ष्यानुसारात् । आट आटतुरित्यादिलक्ष्यानुसारात् । व्याप्तीति । व्यापनं व्याप्तिः । तच्च लक्षणस्यानेकलक्ष्येषु प्रवृत्तिरूपम् । अचोऽनिवृत्तये आह । शेषोक्तेरिति । अत एव । वैयधिकरण्यं नान्वयादेव । एतेन । तुकोऽन्तरङ्गत्वोपपादनेन । इत्यनयोरपीति । वैयधिकरण्येन सम्बन्धाभिप्रायेणैवाभ्यासत्रवर्णस्य व्याख्यानं मूलकालीयं संगच्छते । ननु वार्णादाङ्गमितिन्यायेन पूर्वं ह्रस्व एव भविष्यतीत्यत आह । वार्णादाङ्गमिति । आदेशस्य एवेति । ज्ञापकसाजात्यादेवमेवेति बोध्यम् । भवतेरः । भुवामिति । भूशब्दानामित्यर्थः ॥ अत एव । प्रयोगस्थभूशब्दानुकरणादे-

सद्धातुग्रहणं शब्दाधिकारमाश्रित्य स्वरूपपरं विज्ञास्यते धातोरित्येवं यो विहित इति। अत एव लूभ्याम्पूभ्यामित्यादावपि न भविष्यतीति वाच्यम्। एवमपि जुगुप्सति मीमांसत इत्यादौ सार्वधातुकस्य तिङ इट्-प्राप्तेर्दुर्वारत्वात्। अत्रेदमवधेयम्। रुदादिभ्यः सार्वधातुक इति सूत्रस्य प्रकृतसूत्रे आर्द्धधातुकपदाभावे नियमार्थत्वम्भविष्यति सार्वधातुकस्य यदि भवति तर्हि रुदादिभ्य एवेति। न च रुदादिभ्यः परस्य सार्वधातुकस्यैवेति नियमः किन्न स्यादिति वाच्यम्। रुदविदेतिक्त्वासनोः कित्त्वविधानरूपज्ञापकेन विपरीतनियमस्य वारयितुं शक्यत्वात्। यदि रुदधातोः परस्यार्द्धधातुकस्येट् स्यात्तदा क्त्व इडागमे न क्त्वासेडितिप्रतिषेधे प्राप्ते क्त्वः कित्त्वविधानं कार्यम्। विपरीतनियमे तु तत्रेट् न भविष्यतीति स्वतस्तस्य कित्त्वं सिद्धमेव। तथा सनोऽपि हलन्ताच्चेति कित्वं सिद्धमेव। एवञ्च प्रकृतसूत्रे आर्द्धधातुकग्रहणस्य न फलम्। किन्तु योगविभागार्थम्। आर्द्धधातुकस्येट्। यादानिट् स आर्द्धधातुकस्यैवेति। तेन जिघत्सुधी-मुद्दिति सूत्रेण विधीयमान इट् अङ्गाद्दङ्गाधिकारादङ्गस्य न भवति। तस्मिन्सूत्रे भाष्यकृताप्येवमेवोक्तम्। प्रकृतग्रन्थे जुगुप्सते इत्यत्रेड्व्याप्तिप्रदर्शनन्तु यथाश्रुताभिप्रायेणेति दिक्। बभूविथ। बभूविमेत्यत्र श्रुकः कितीतीण्निषेधस्य प्राप्तावपि क्रादिनियमादिट्। स्यतासी लृलुटोः। अत्र यथासङ्ख्यमुपपादयति। यद्यपीत्यादिना। ह्याद्यपवाद इति सूत्रस्य यद्यपि स्याद्यपेक्षया लादेशानाम्परत्वात्पूर्वम्प्रवृत्तौ स्यविषये शबादिप्राप्तेः सुगमत एवोपपत्तिर्भवति। न चादेशानामनित्यत्वङ् कृते स्यादौ स्यव्यधानादप्राप्तेः। स्यादेस्तु नित्यत्वमिति कथं विप्रतिषेध इति वाच्यम्। धातोर्विहितस्य लस्यैवस्थानेनादेशानामपि नित्यस्यात्। पूर्व-मादेशप्रवृत्तौ पश्चात्स्यप्रत्यययोरप्राप्तौ इति शिष्टमात्रस्योदात्तत्वेमा-देशानाविघाते प्राप्ते तासेः परस्य लसार्वधातुकस्यानुदात्तस्य विधानेन ज्ञापितमन्यत्र विकरणेभ्य इति तेनादेशस्वरस्यैव प्रलयत्वमित्यत्रोक्तम्।

त्वे तस्यासिद्धत्वादात्त्वबुद्ध्या तल्लोपेनेष्टसिद्धौ हल्ग्रहणं व्यर्थमेव स्यादिति-रीत्येत्यर्थः ॥ तस्य । अल्लोपस्य । लक्ष्यभेदात् । पूर्वमस्तेरकारस्य जातः सम्प्रातत्वाकारस्य प्राप्तिरतो लक्ष्यभेदात् । तद्धि । तपरत्वं हि । देधातुरिति सिद्धमिति । अत्र हि श्रन्थिग्रन्थिदम्भिस्वञ्जीनामिति लिटः कित्वे नानुनासिकलोपेऽपि यद्यसिद्धत्वं स्यात्तदा संयुक्तहल्मध्यस्थत्वादेत्वाभ्यासलोपौ न स्यातामसिद्धत्वाऽप्रवृत्तौ तु भवत इति भावः ॥ तदप्राप्तौ । वृद्धेरप्राप्तौ न च येन नाप्राप्तिन्यायेन वुक उवङादेशापवादत्वेन कथन्तद्विषये उवङः प्राप्तिरिति वाच्यम् । परस्परप्रवृत्तौ परस्परस्यासिद्धत्वादुवङ्निरूपितापवादत्वस्य वुकि वक्तुमशक्यत्वात् ॥ नन्वत्वमपवादत्वाद्धलादिःशेषमप्याधित्वा पूर्वञ्जातमिति पुनर्हलादिः शेषो न स्यादत आह । अभ्यासविकारेष्विति । आर्द्धधातुकस्येड्वलादेः । प्रत्याख्यातमिति । न च दीधीवेवीटामिति सूत्रस्येड्ग्रहणप्रत्याख्यानावसरे नेड्वशीतिसूत्रादिड्ग्रहणानुवृत्त्यैव सिद्धे पुनरार्द्धधातुकेति सूत्रे इड्ग्रहणमिड्डेवेति नियमार्थन्तेन भवितेत्यादाविटो गुणाभावस्य सिद्धौ दीधीतिसूत्रे इड्ग्रहणन्न कार्यमित्युक्तमिह तु एतत्सूत्रस्यसिड्ग्रहणन्न कार्यमित्युच्यत इति विरोध इति वाच्यम् । दीधीवेवीटामितिसूत्रस्येड्ग्रहणप्रत्याख्यानपरभाष्यस्य गौरवग्रस्तत्वे नैकदेश्युक्तित्वस्यान्यत्र विस्तृतत्वात् । आर्द्धधातुकस्येति किमर्थमिति । प्रकृतसूत्रस्याङ्गाधिकारीयत्वेनाङ्गस्येति सम्बध्यते । तत्राङ्गस्येति षष्ठ्या निमित्तार्थकस्यस्य स्मृतत्वादङ्गसंज्ञानिमित्तस्य वलादेरित्यर्थो भविष्यति । न च यदात्वम् यक्षता । गोभ्यामित्यादावपि प्राप्नोतीति वाच्यम् । अत इह्वासोरिति सूत्राद्धातुग्रहणमनुवर्त्य तच्च पञ्चम्या विपरिणमय्य धातोर्विहितस्य वलादेरङ्गसंज्ञानिमित्तस्येत्यर्थकरणेनादोषात् । एवञ्चार्द्धधातुकग्रहणाभावेपि वलादेरित्यस्याङ्गविशेषणत्वापत्तिरित्येषा शङ्का न भविष्यतीति भ्रः । प्रजुगुप्सत इति । अत्र सनो धातोर्विहितस्याप्राप्नोति । न च

या नास्ति तत्र भवति । यच्छब्दाद्यत्र साऽस्ति तत्रापि भवति । न च वा-
ऽसरूपविधिना ण्वुल्विषये लृडपि भविष्यतीति वाच्यम् । तुमुन्ण्वुलौ क्रि-
ति सूत्रे ण्वुल्ग्रहणं ज्ञापकं क्रियार्थायाङ् क्रियायामुपपदे तृजादयो ने-
ति । अन्यथा वासरूपसूत्रबलात् क्रियार्थायाट् क्रियायां ण्वुल्तृचाविति
सामान्यसूत्रेण ण्वुल्वत्तृजपि स्यादित्युक्तत्वेन ज्ञाप्यवचनेन लृडभाव-
प्रसङ्गात् ॥ एवमुक्त्वा स तर्हि चकारः कर्त्तव्यो न कर्त्तव्यः लृट् भवती-
तीयता सिद्धं यच्छेषग्रहणङ्करोति तस्यैतत्प्रयोजनं योगाङ्गं यथा विज्ञा-
येत सति च योगाङ्गे योगविभागः करिष्यते । लृट् । अस्मिन्सूत्रे क्रि-
यार्थायामित्याद्यनुवर्त्तते । तेन करिष्यामीति व्रजतीत्यादि सिद्धम् । त-
तः शेषे इति । शेषे लृट् भवति । करिष्यति हरिष्यतीत्यादावित्युक्तम् ।
एतेन चकाररहितः पाठ इति स्पष्टमेव लभ्यते । भाष्ये स्पष्टमिति । उ-
पपादितमेतत् । इष्टमासीच्चेति । इष्टश्चेच्छाकर्तृसम्बन्ध्यन्यसम्बन्धि वेत्य-
न्यदेतत् । तातङनेकाल्त्वात्सर्वस्य स्थाने भवतीत्युक्त्वा ङित्वेत्यस्याने-
काल्सूत्रापवादत्वेनान्त्यादेशत्वमाशङ्क्यानन्यार्थङित्त्वेष्वनङादिषु चरिता-
र्थमित्युक्तमपवादत्वाभावबीजन्तु नाभिहितमित्याशङ्कानिवारणायाह ।
तद्बलेत्यादि । अनङादिषु ङकारोच्चारणबलेत्यर्थः । अनङः सर्वादेशत्व-
ङ्ङकाराभावेऽपि सिद्धम् । अर्थान्तरेति । नायं सर्वादेशः किन्तु यस्य वि-
धीयते तदवयवस्य यस्य कस्य चिदित्येवं कल्पनेत्यर्थः । एतेन पाक्षिकी प्रा-
प्तिरुद्भावितप्राया परिभाषात्वञ्च ङित्वेत्यस्य लभ्यम् । स्वविषयाभावसंभाव-
नयेति । ङित्वेत्यस्यानन्यार्थङकारोच्चारणसामर्थ्यलब्धानुवादतया यत्र ङ-
कारस्यानन्यार्थत्वं स स्वविषय इति भावः । एतेन । पूर्वोक्तव्याख्यानेन ।
परास्तम् । उक्तक्रमेण मूलन्दूषयताम्मतम्परास्तम् । तद्वत् । ङिच्चेतिसूत्रव-
त् । अस्य । अनुदात्तौ सुप्पितावित्यस्य । अनुदात्तत्वस्यापूर्वस्य विधाना-
दस्य नानुवादत्वमिति भावः । अप्राप्तिरेवेति । तथा च परेण बाधा-
दप्राप्तिरिति न किन्त्वप्राप्तिरेवेत्यर्थः । अन्योन्याश्रयाच्च सर्वादेशत्वङ्कि-

तथापि प्रकृतसूत्रे आर्द्धधातुकपदानुवृत्त्या लावस्थायामेवास्य प्रवृत्तिः आदेशानान्तु द्वित्वकयोर्लस्य तिप्तस्झि अनुदात्तङित इत्यादीनामेकवाक्यतया धातोर्विहितस्य लस्य स्थान इत्यर्थेनोत्तरकाले प्रवृत्तिरिति स्वीक्रियते लाघवान्न तु जातानान्नियमो गौरवादित्यन्यत्र प्रपञ्चितम्तस्मिन्नपि पक्षेऽपवादत्वस्योपपत्तिमाह । अत्रेत्यादिना । तासेरिकार उच्चारणार्थः । न चैवं मन्तेत्यत्र लुटि तस्य कर्मबोधकस्य तादेशे तस्य लुटः प्रथमस्येति डादेशे टिलोपेऽनिदितामिति नलोपापत्तिरिति वाच्यम् । टिलोपस्याभीयत्वेनासिद्धत्वात् । लुटः प्रथमस्य । अत्र शब्दतः साम्याभावाद्यथासङ्ख्याप्राप्तेराह । एकार्थेति । ननु डकारोच्चारणेन डादेशस्य सर्वादेशत्वं लभ्यत इति कथंङित्त्वसामर्थ्यादित्युक्तमत आह । सर्वादेशत्वमिति । वस्तुतस्तु डा आ इत्याकारस्य प्रश्लेषेण सर्वादेशत्वे सिद्धे डकारोच्चारणं टिलोपार्थमेव । अत एव । सार्वधातुकादेरिग्विशेषणत्वादेव । ननु संयोगे गुर्वित्यस्य प्रवृत्त्या भेत्तेत्यत्र न लघूपधत्वमत आह । अत्र क्ङितः कित्त्वसामर्थ्यादिति । दीधीवेवीटाम् । व्याख्यानादिति । इदं सूत्रभाष्ये प्रत्याख्यातम् । दीधीवेव्योश्छन्दोविषयत्वात् । छन्दसि च गुणदर्शनात् । अदीधेदिति । इटश्चापि ग्रहणं शक्यमकर्तुम् कथम् ॥ नेड्वशीति सूत्रादिड्ग्रहणानुवृत्त्यैव सिद्धे आर्धधातुकेति सूत्रे इड्ग्रहणमिट् इट्वेति नियमार्थम् । अङ्गाधिकारे नियमादाङ्गस्यैव विकारस्य निवृत्तिरित्याद्युक्तलभ्यलकादित्यर्थः । तासस्त्योर्लोपः । सस्यार्द्धधातुक इत्यतः सीति वर्त्तते । भाष्यस्वरस इति । तत्र स्यादौ शेषग्रहणस्य प्रयोजनमुक्तं लृटि शेषवचनङ्क्रियायामप्रतिपदविध्यर्थमिति । अविशेषेण विधाने लृटोऽभावः स्यात् । हरिष्यामीति व्रजति । करिष्यामीति व्रजति । अयम्भावः अविशेषेण विधाने यत्र न क्रियार्था क्रिया उपपदङ्करिष्यति हरिष्यतीत्यादौ तत्रैव स्याद्यत्र तु क्रियार्था क्रिया उपपदन्तत्र न स्यात् । षवुलायाधात् । शेषे चेति क्रियमाणे यत्र क्रियार्था क्रि-

या नास्ति तत्र भवति । चशब्दाद्यत्र साऽस्ति तत्रापि भवति । न च वा-
ऽसरूपविधिना ण्वुल्विषये लृडपि भविष्यतीति वाच्यम् । तुमुन्ण्वुलावि-
ति सूत्रे ण्वुल्ग्रहणं ज्ञापकं क्रियार्थायां क्रियायामुपपदे तृजादयो ने-
ति । अन्यथा वासरूपसूत्रबलात्क्रियार्थायां क्रियायां ण्वुल्तृचाविति-
सामान्यसूत्रेण ण्वुल्वत्तृजपि स्यादित्युक्तत्वेन ज्ञाप्यवचनेन लृडभाव-
प्रसङ्गात् ॥ एवमुक्ता स तर्हि चकारः कर्त्तव्यो न कर्त्तव्यः लृट् भवती-
तीयता सिद्धं यच्चेचग्रहणङ्करोति तस्यैतत्प्रयोजनं योगाङ्गं यथा विज्ञा-
येत सति च योगाङ्गे योगविभागः करिष्यते । लृट् । अस्मिन्सूत्रे क्रि-
यार्थायामित्याद्यनुवर्त्तते । तेन करिष्यामीति व्रजतीत्यादि सिद्धम् । त-
तः शेषे इति । शेषे लृट् भवति । करिष्यति हरिष्यतीत्यादावित्युक्तम् ।
एतेन चकाररहितः पाठ इति स्पष्टमेव लभ्यते । भाष्ये स्पष्टमिति । उ-
पपादितमेतत् । इष्टप्राप्तीच्छेति । इष्टश्चेच्छाकर्तृसम्बन्ध्यन्यसम्बन्धि वेत्य-
न्यदेतत् । तातङनेकाल्त्वात्सर्वस्य स्थाने भवतीत्युक्ता ङित्त्वेत्यस्याने-
काल्सूत्रापवादत्वे नाऽन्त्यादेशत्वमाशङ्क्यानन्यार्थङित्त्वेऽप्यनङादिषु चरिता-
र्थमित्युक्तमपवादत्वाभावबीजन्तु नाभिहितमित्याशङ्कानिवारणायाह ।
तद्बलेत्यादि । अनङादिषु ङकारोच्चारणबलेत्यर्थः । अनङः सर्वादेशत्व-
ङ्ङकाराभावेऽपि सिद्धम् । अर्थान्तरेति । नायं सर्वादेशः किन्तु यस्य वि-
धीयते तदवयवस्य यस्य कस्य चिदित्येवं कल्पनेत्यर्थः । एतेन पाक्षिकी प्रा-
प्तिरुद्भावितप्राया परिभाषात्वञ्च ङित्त्वेत्यस्य लब्धम् । स्वविषयाभावसंभाव-
नयेति । ङित्त्वेत्यस्यानन्यार्थङकारोच्चारणसामर्थ्यलब्धानुवादतया यत्र ङ-
कारस्यानन्यार्थत्वं स स्वविषय इति भावः । एतेन । पूर्वोक्तव्याख्यानेन ।
परास्तम् । उक्तक्रमेण मूलन्दूषयतां मतम्परास्तम् । तद्वत् । ङित्त्वेतिसूत्रव-
त् । अस्य । अनुदात्तौ सुप्पितावित्यस्य । अनुदात्तत्वस्यापूर्वस्य विधाना-
दस्य नानुवादत्वमिति भावः । अप्राप्तिरेवेति । तथा च परेण बाधा-
दप्राप्तिरिति न किन्त्वप्राप्तिरेवेत्यर्थः । अन्योन्याश्रयान्न सर्वादेशस्वरूपक्लृप्ति-

तथापि प्रकृतसूत्रे आर्द्धधातुकपदानुवृत्त्या लावस्थायामेवास्य प्रवृत्तिः आदेशागान्तु द्विरकयोर्लस्य तिप्तवृक्कि अनुदात्तङित इत्यादीनामेकवाक्यतया धातोर्विहितस्य लस्य स्थान इत्यर्थेनोत्तरकाले प्रवृत्तिरिति स्वीक्रियते लाघवान्न तु जातानान्नियमो गौरवादित्यन्यत्र प्रपञ्चितन्तस्मिन्नपि पक्षेऽपवादत्वस्योपपत्तिमाह । अत्रेत्यादिना । तासेरिकार उच्चारणार्थः । न चैवं मन्तेत्यत्र लुटि तस्य कर्मबोधकस्य तादेशे तस्य लुटः प्रथमस्येति डादेशे टिलोपेऽनिदितामिति नलोपापत्तिरिति वाच्यम्। टिलोपस्याभीयत्वेनासिद्धत्वात् । लुटः प्रथमस्य । अत्र शब्दतः साम्याभावाद्यथासङ्ख्यामाहेराह । एकार्थेति । ननु डकारोच्चारणेन डादेशस्य सर्वादेशत्वं लभ्यत इति कथंङित्त्वसामर्थ्यादित्युक्तमत आह । सर्वादेशत्वमिति । वस्तुतस्तु डा आ इत्याकारस्य प्रश्लेषेण सर्वादेशत्वे सिद्धे डकारोच्चारणं टिलोपार्थमेव । अत एव । सार्वधातुकादेरिग्विशेषणत्वादेव । ननु संयोगे गुरुरित्यस्य प्रवृत्त्या शेर्मेत्यत्र न लघूपधत्वमत आह। अत्र क्ङोः कित्त्वसामर्थ्यादिति । दीधीवेवीटाम् । व्याख्यानादिति । इदं सूत्रम्भाष्ये प्रत्याख्यातम् । दीधीवेव्योश्छन्दोविषयत्वात् । छन्दसि च गुणदर्शनात् । अदीधेदिति । इटश्चापि ग्रहणं शक्यमकर्त्तुम् कथम् ॥ नेड्वशीति सूत्रादिड्ग्रहणानुवृत्त्यैव सिद्धे आर्धधातुकेति सूत्रे इड्ग्रहणमिड्एवेति नियमार्थम् । अङ्गाधिकारे नियमादाङ्गस्यैव विकारस्य निवृत्तिरित्याद्युक्तन्तम् लकादित्यर्थः । तासस्त्योर्लोपः । तस्मार्द्धधातुक इत्यतः सीति वर्त्तते । भाष्यस्वरस इति । तत्र स्यादौ शेषग्रहणस्य प्रयोजनमुक्तं लृटि शेषवचनङ्क्रियायाम्प्रतिपदविध्यर्थमिति । अविशेषेण विधाने लृटोऽभावः स्यात् । हरिष्यामीति व्रजति । करिष्यामीति व्रजति । अयम्भावः अविशेषेण विधाने यत्र न क्रियार्था क्रिया उपपदङ्करिष्यति हरिष्यतीत्यादौ तत्रैव स्यादत्र तु क्रियार्था क्रिया उपपदमत्र न स्यात् । स्युटावाधात् । शेषे चेति क्रियमाणे यत्र क्रियार्था क्रि-

या नास्ति तत्र भवति । यत्राप्यद्यत्र साऽस्ति तत्रापि भवति । न च वा-
ऽसरूपविधिना ण्वुल्विषये लृडपि भविष्यतीति वाच्यम् । तुमुन्ण्वुलावि-
ति सूत्रे ण्वुल्ग्रहणं ज्ञापकं क्रियार्थायां क्रियायामुपपदे तृजादयो ने-
ति । अन्यथा वासरूपसूत्रबलात्क्रियार्थायां क्रियायां ण्वुल्तृचाविति-
सामान्यसूत्रेण ण्वुल्वत्तृजपि स्यादित्युक्तत्वेन ज्ञाप्यवचनेन लृडभाव-
प्रसङ्गात् ॥ एवमुक्ता स तर्हि चकारः कर्त्तव्यो न कर्त्तव्यः लृट् भवती-
तीयता सिद्धे यच्च चग्रहणङ्करोति तस्यैतत्प्रयोजनं योगाङ्गं यथा विज्ञा-
येत इति च योगाङ्गे योगविभागः करिष्यते । लृट् । अस्मिन्सूत्रे क्रि-
यार्थायामित्याद्यनुवर्त्तते । तेन करिष्यामीति व्रजतीत्यादि सिद्धम् । स-
तः शेषे इति । शेषे लृट् भवति । करिष्यति हरिष्यतीत्यादावित्युक्तम् ।
एतेन चकाररहितः पाठ इति स्पष्टमेव लभ्यते । भाष्ये स्पष्टमिति । उ-
पपादितमेतत् । इष्टमासीच्छेति । इष्टश्चेच्छाकर्तृसम्बन्ध्यन्यसम्बन्धि वेत्य-
न्यदेतत् । तातङनेकाल्त्वात्सर्वस्य स्थाने भवतीत्युक्ता ङिच्चेत्यस्याने-
काल्सूत्रापवादत्वे नान्त्यादेशत्वमाशङ्क्यानन्यार्थं ङित्त्वेऽनङादिषु चरिता-
र्थं इत्युक्तमपवादत्वाभावबीजन्तु नाभिहितमित्याशङ्कानिवारणायाह ।
तद्वदेत्यादि । अनङादिषु ङकारोच्चारणवदेत्यर्थः । अनङः सर्वादेशत्व-
ङ्ङकाराभावेऽपि सिद्धम् । अर्थान्तरेति । नायं सर्वादेशः किन्तु यस्य वि-
धीयते तदवयवस्य यस्य कस्य चिदित्येवं कल्पनेत्यर्थः । एतेन पाक्षिकी प्रा-
प्तिरुद्भावितप्राया परिभाषात्वञ्च ङिच्चेत्यस्य लभ्यम् । स्वविषयाभावसंभाव-
नयेति । ङिच्चेत्यस्यानन्यार्थङकारोच्चारणसामर्थ्यलभ्यानुवादतया यत्र ङ-
कारस्यानन्यार्थत्वं स स्वविषय इति भावः । एतेन । पूर्वोक्तव्याख्यानेन ।
परास्तम् । उक्तक्रमेण मूलन्दूषयतामतम्परास्तम् । तद्वत् । ङिच्चेतिसूत्रव-
त् । अस्य । अनुदात्तौ सुप्पितावित्यस्य । अनुदात्तत्वस्यापूर्वस्य विधाना-
दस्य नानुवादत्वमिति भावः । अत्राप्राप्तिरेवेति । तथा च परेण बाधा-
द्प्राप्तिरिति न किन्त्वप्राप्तिरेवेत्यर्थः । अन्योन्याश्रयात्र सर्वादेशत्वङ्कि-

न्तु अन्यादेशत्वमेवेति यादिमतमाशङ्क्य खण्डयति । न चेत्यादिना । न
च तिह्योस्तादितिन्यासेऽन्यलकारसम्बन्धिनोऽपि तिशब्दस्य ग्रहणापत्तिरि-
ति वाच्यम् । हिशब्दसाहचर्येण लोट्स्थानिकस्यैव ग्रहणात् । उदात्त
एवेति । तादेशस्यापि स्वविधानात् । लोटो लङ्वत् । अत्रोपमेये ष-
ष्ठीदर्शनाल्लङ्शब्दात्षष्ठ्यन्ताद्वतिः । तेन लङि परतोऽङ्गस्य विधीयमाना-
वडाटौ न । न च यद्यल्लङः कार्यं तस्य सर्वस्य विनिगमनाविरहादतिदे-
शः स्यात्तथा सति यान्तु वान्त्वित्यत्र लङः शाकटायनस्येति जुस् जुह्व-
तु विदन्त्वित्यत्र सिजभ्यस्तेति जुस स्यादिति वाच्यम् । इत्तो ङ्विधा-
नेन सिद्धे लोटो लङ्वदित्यतिदेशेन बोधन लङ्संबन्धिकार्यविधानस्या-
तिदेशिकत्वेनानित्यत्वज्ञापनार्थमित्यदोषादिति केचित् । यत्तु विदो
लटो वेत्यतो वेत्यस्याकर्षणेनास्य व्यवस्थितविभाषात्वमिति । तन्न । व्य-
वस्थितविभाषापरिगणनविरोधात् । वस्तुतस्तु लङः शाकटायनेतिसू-
त्रे यासुडित्यतो ङिदित्यनुवर्त्य षष्ठ्या विपरिणमय्य ङिदेव यो लङ् त-
स्य ग्रहणन्न त्वतिदेशेन यो लङ् तस्य । तच्च लङ्ग्रहणम्पृथक्कृत्य ङि-
देव यो लङ् तस्यैव झेर्जुसितिव्याख्येयन्तेन सिजभ्यस्तेत्यनेनाप्युक्तस्थ-
ले नेति बोध्यम् । नित्य ङितः । ङित् उत्तमो यस्मादितिरीत्याऽतद्गु-
णसंविज्ञानबहुव्रीहौ सकारान्तधात्ववयवसकारलोपापत्तिरत आह । ष-
ष्ठीतत्पुरुष इति । ङित उत्तम इत्येवं विग्रहे जायमानः । उचित इ-
ति । तत्रैवोपयोगात् । परन्तु लोटो लङ्वदित्यतिदेशेन यथा तस्थस्थे-
त्यस्य प्रवृत्तिस्तथा नित्यंङित इत्यस्यापीत्यतिदेशप्रयोज्यप्राप्तिकस्यरू-
पधर्मकृतसादृश्यान्तस्थस्थेतिसूत्रानन्तरमस्य लेख इति शेषः । सेह्यपिच्च ।
अपिच्चातिदेशो ङित्त्वार्थं एवेति भ्रमेण प्रक्रियालाघवाय कृतां सेर्हिं ङि-
त्त्वयैवोचितमितिशङ्कान्निरस्यति । अपिद्ग्रहणादिति । एतेन । फलान्त-
रस्यापि सत्त्वेन । परत्वात्तातङिति । एवञ्च स्थानिवद्भावेन तातङो ङित्त्वे-
ऽपि न लुक् महद्गुतिन्व्ययात् । न्यायविरोधम्परिहरति । अत एवाममपो-

ति। यत्त्वत्र दण्डिनाऽन्तरङ्गानपीतिन्यायस्य प्राप्तिमाशङ्क्यान्तरङ्गामेव लुग्बाधते न तु परमपीत्युक्तम्। तन्न। अपिशब्दस्वारस्यविरोधात्। अत एवैतत्फलितार्थकथनपरः सर्वविधिभ्यो लुग्विधिर्बलवानिति प्राचाम्पाठः सङ्गच्छते। आडुत्तमस्य। यस्याऽऽगम इति। आट एव पित्त्वे तु समुदायस्य पिद्वत्त्वदेशलाभो न स्यात्। एवञ्च भवाव भवामेत्यत्र वकारमकाराकारयोरनुदात्तत्वन्न स्यात्। न चात्र यदागमा इतिन्यायेन सर्वत्र पित्त्वप्राप्तिराटः। वस्मसोरपि स्यात्। न चाट एव पित्त्वातिदेशवैयर्थ्यम्। जुहवाव। जुहवामेत्यत्राटः पित्त्वविधानसामर्थ्याद् गुणप्रवृत्तेः फलत्वस्य वक्तुं शक्यत्वात्। हेरपीति। तत्रापि सो ह इत्येव वदेत्। न च मो न इतिन्यासे मसो मकारस्यापि स्यादिति वाच्यम्। एरुरित्य त एरित्यस्यानुवृत्त्या तस्य लोड्विशेषणत्वेनैवर्णान्तस्य लोटो मस्य न इत्यर्थेनादोषात्। न चैतच्चेत्यस्य प्राप्तिशङ्कावसरे एरुरित्यस्य वैयर्थ्यं शङ्क्यम्। तस्य विषये सर्वत्र लोपप्राप्तावपि हुतुझल्यकरणेनैतयोरुत्वविषयत्वाभावे निश्चिते सत्युत्तमपवादत्वात्प्रथमपुरुषे चरितार्थम्। एवं सति लोपस्यान्यत्र प्राप्तिरिति भावात्। अनद्यतने लङ्। कालोऽपि धात्वर्थ इत्याद्ययेन मूलेऽनद्यतनभूतार्थवृत्तेरिति। बहुव्रीहिरिति। सत्पुरुषत्वे त्वति प्रसङ्गः स्यात्। तमाह। तेनेति। अन्तरङ्गत्वादिति॥ अपरनिमित्तकत्वेन तु तत्त्वम्। लकारप्रश्लेषेणेति। भयतेरिदन्यतरस्याम् लुङ् लङिति संहितापाठेनेति शेषः। इत्यप्यर्थादिति। अत्रापिना प्रसिद्धार्थपरिग्रहः। उदात्तपदे स्वरितत्वप्रतिज्ञायामप्रमाणमाह। अत एवेति। न फलभेद इति। स्वरितत्वाभावे तु विकरणान्तस्याडागमपक्षे अकरोदित्यत्राट उदात्तस्य श्रवणभयति लावस्थायामडागमे तूत्तरकालप्रवृत्तिकस्योकारस्वरस्य बलवत्त्वेनाटोऽनुदात्तत्वं स्यादिति फलभेदः स्पष्ट एव। न च लावस्थायामेव चेदट् तदाऽपिबदित्यत्राट्सहितस्य पिबादेशापत्तिरिति वाच्यम्। निर्दिश्यमानपरिभाषया समाधानात्। प-

रशब्देनेति । स आदित्युत्तरस्येतिसूत्रादुत्तरस्येत्यनुवृत्त्यैव सिद्धे तत्र परशब्दोपादानं यत्र परशब्देन कार्यविधानन्तत्रादेः कार्यमित्यर्थबोधनाय। परशब्देनेत्यस्य परत्वविशिष्टबोधकशब्देनेत्यर्थः । तेन तस्मादित्युत्तरस्येति सूत्रस्य यत्र प्रवृत्तिस्तत्रादेः परस्येत्यस्य प्रवृत्तिरिति सिद्धम् । विधिनिमन्त्रणा । मूले द्योत्येषु वाच्येषु वेति । अत्राद्यपक्षस्यैवमुपपत्तिं वर्णयन्ति । यदि विध्यादयो लिङ्वाच्यास्स्युस्तदा विशेषविहितत्वेन कर्त्राद्यर्थानाम्बाधापत्तिरिति कर्तुरनभिधानाच्चैत्रः पठेदित्यत्र चैत्रपदात्तृतीयापत्तिः । शप् च न स्यात्सार्वधातुकस्य कर्त्रर्थकत्वाभावात् । पुरुषव्यवस्था च न स्यात्। द्योत्यत्वे त्वेषां विषयभावेनाश्रयणात्प्रत्ययस्य कर्त्राद्यर्थकत्वमिति तानि कार्याणि सिद्ध्यन्ति । लः कर्मणीत्यत्र ल इति जातौ बहुवचनमिति लिङोऽप्युपग्रहात् । वाच्यत्वपक्षेऽप्येवं वदन्ति । विध्यादिभिः कर्त्राद्यर्थानान्न बाधो विरोधाभावात् । किञ्च तक्रकौण्डिन्यन्यायस्य न विषयताऽत्र तस्य विधेयविषयत्वात् पूर्ववज्जातौ बहुवचनस्य स्वीकाराच्च। किञ्च यदि विध्यादीनां विशेषविहितत्वेन कर्त्राद्यर्थबाधकता स्यात्तदा तुल्यन्यायाल्लङादिस्थलेऽपि वर्त्तमानादिष्वर्थेषु विधानेन तैरपि कर्त्राद्यर्थबाधः स्यादिति पचति चैत्रेणेत्याद्यपि स्यात् । पुरुषाव्यवस्थापि स्यात् । न च लः कर्मणीतिसूत्रारम्भसामर्थ्यान्न बाध इति वाच्यम् । पर्यायापत्तेदुर्वारत्वात् । प्रत्ययार्थत्वेनास्मिन्पक्षे विध्यादीनाम्प्राधान्यापत्तिस्तु न । प्रत्ययार्थप्राधान्यनियमस्यौत्सर्गिकत्वात् । परन्त्वाद्यपक्षो युक्तः । यत्र प्रत्ययस्य निवृत्तिः पच कुर्वित्यादौ तत्रापि प्रवर्तनाप्रतीतेः पञ्चभिर्हलैः कृषतीत्यादौ प्रवर्तनाया धात्वर्थस्यदर्शनाच्च तस्या धात्वर्थत्वस्योचितत्वात् । न चास्मिन्पक्षे निमन्त्रयेत भवन्तमित्यादौ निमन्त्रणस्य धातुनाऽभिधानान्न लिङ् स्यादिति वाच्यम् । प्रयोजकनिष्ठनिमन्त्रणादन्यस्यावश्यकर्त्तव्यत्वस्वरूपस्य निमन्त्रणस्य प्रत्ययार्थत्वेनादोषात् । ईदृशे विषयेऽर्हे कृत्यतृचश्चेति लिङ् । अ-

इत्यस्यावश्यकर्तव्यत्वमेवमेवामन्त्रणविषयेऽपि बोध्यम् । भृत्ये निकृष्ट-प्रवर्तनम् । इयमेवाज्ञा । तच्च प्रवर्तनं स्वाभिलषितार्थं पराभिलषिता-र्थं वेत्यन्यदेतत् । अप्रवृत्तस्य प्रयोज्यस्य तदज्ञातोपायप्रदर्शनेन प्रवर्त-नमपि यथा स्वर्गकामो यजेत राहूपरागे स्नायादित्यादिः । एवमज्ञा-तमार्गकथनमपि । अनेन यथा आयाहीत्यादिः । नियोगकरणम् । अत्र इयमेव प्रेरणारूपम् । कामचारानुज्ञेति । कामचारस्य प्रवृत्त्यर्थस्य पुरुषस्य प्रवर्तनं स्वाभिलषितार्थे । एवमनुज्ञाप्यामन्त्रणमेव । यथा प्रवृत्तस्यैव पुरुषस्य श्रमेण निवृत्त्युन्मुखस्य तदभिलषितार्थं निवृत्तिप्रतिबन्धेन प्रव-र्तनम् यदारब्धं तदवश्यकर्तव्यमेवेत्याद्युक्तिः । एवमादिः सर्वोऽप्युपदे-शो बोध्यः । अधीष्टं सत्कारपूर्वको व्यापारः । यथा माणवकमध्या-पयेति । शिष्यस्य वा मामध्यापयेति । एषा अभ्यर्थनापदेनाप्युच्यते । प्रार्थना तु स्वार्थिते वस्तुनि क्रियायां वा स्वापेक्षया महतः प्रवर्तनम-ञ्जलिकरणादिना प्रवर्तनमेव । सम्प्रश्नप्रार्थनयोर्विलक्षणत्वात्पृथगुक्तिः । उक्तचतुष्टयस्थले प्रवर्तनायाः सत्त्वेन प्रवर्तनायां लिङित्युक्तम् । प्रव-र्तनात्वं सर्वसाधारणबोध्यतावच्छेदकं लिङ्लोट्लेट्कृत्यानाम् । प्रव-र्तनातिरिक्तोंऽशः प्रमाणान्तरलभ्यः । न च प्रैषोऽपि विधिरेवेति प्रैषातिस-र्गप्राप्तकालेतिसूत्रे तदुपादानं व्यर्थमिति वाच्यम् । निमन्त्रणादौ कृत्याभावार्थं तस्यावश्यकत्वात् । लोड्विधानस्य प्राप्तकालार्थम् । प्रवर्तना च प्रवृत्त्यनुकूलो व्यापारः फलनाद्युपकरणोऽर्थे । स च व्यापारो लिङा-दिघटितवाक्योच्चारणरूपो लौकिकानाम् । वेदे सम्प्रदर्शयतीत्यादौ तु लिङाद्यन्यतमशब्दघटितत्वमेव वेदनिष्ठप्रवर्तकत्वमिदमेव वेदे व्यापारः स एव शाब्दी भावनेत्युच्यते । लिङ्संख्यानस्यापि त्वात्र व्यापारव्यप-देशः । यत्तु प्राहुः प्रवृत्तिजनकज्ञानीयप्रकारतावच्छेदकमिष्टसाधन-त्वादिनिष्ठप्रवर्तनापदार्थतावच्छेदकमिति इष्टसाधनत्वादिकमेव विध्य-र्थः । तन्न । इष्टसाधनत्वादेः साध्यक्रियानिष्ठस्य प्रवर्तकनिष्ठत्वाभा-

रशब्देनेति । स आदित्युत्तरस्येतिसूत्रादुत्तरस्येत्यनुवृत्त्यैव सिद्धे तत्र परशब्दोपादानं यत्र परशब्देन कार्यविधानन्तत्रादेः कार्यमित्यर्थबोधनाय। परशब्देनेत्यस्य परत्वविशिष्टबोधकशब्देनेत्यर्थः । तेन तस्मादित्युत्तरस्येति सूत्रस्य यत्र प्रवृत्तिस्तत्रादेः परस्येत्यस्य प्रवृत्तिरिति सिद्धम् । विधिनिमन्त्रणा । मूले द्योत्येषु वाच्येषु वेति । अत्राद्यपक्षस्यैवमुपपत्तिं वर्णयन्ति । यदि विध्यादयो लिङ्वाच्यास्स्युस्तदा विशेषविहितत्वेन कर्त्राद्यर्थानाम्बाधापत्तिरिति कर्तुरनभिधानाच्चैत्रः पठेदित्यत्र चैत्रपदात्तृतीयापत्तिः । शप् च न स्यात्सार्वधातुकस्य कर्त्रर्थकत्वाभावात् । पुरुषव्यवस्था च न स्यात् । द्योत्यत्वे त्वेषां विषयभावेनाश्रयणात्प्रत्ययस्य कर्त्राद्यर्थकत्वमिति तानि कार्याणि सिद्ध्यन्ति । लः कर्मणीत्यत्र ल इतिजातौ बहुवचनमिति लिङोऽप्युपग्रहात् । वाच्यत्वपक्षेऽप्येवं वदन्ति । विध्यादिभिः कर्त्राद्यर्थानान्न बाधो विरोधाभावात् । किञ्च तत्र कौण्डिन्यन्यायस्य न विषयताऽत्र तस्य विधेयविषयत्वात् पूर्ववज्जातौ बहुवचनस्य स्वीकाराच्च । किञ्च यदि विध्यादीनां विशेषविहितत्वेन कर्त्राद्यर्थबाधकता स्यात्तदा तुल्यन्यायाल्लडादिस्थलेऽपि वर्तमानाद्यर्थेषु विधानेन तैरपि कर्त्राद्यर्थबाधः स्यादिति पचति चैत्रेणेत्याद्यपि स्यात् । पुरुषाव्यवस्थापि स्यात् । न च लः कर्मणीतिसूत्रारम्भसामर्थ्यान्न बाध इति वाच्यम् । पर्यायापत्तेर्दुर्वारत्वात् । प्रत्ययार्थत्वेनास्मिन्पक्षे विध्यादीनाम्प्राधान्यापत्तिस्तु न । प्रत्ययार्थप्राधान्यनियमस्यौत्सर्गिकत्वात् । परन्त्वाद्यपक्षो युक्तः । यत्र प्रत्ययस्य निवृत्तिः पच कुर्वित्यादौ तत्रापि प्रवर्तनाप्रतीतेः पशुभिर्हलैः कृषतीत्यादौ प्रवर्तनाया धात्वर्थत्वदर्शनाच्च तस्या धात्वर्थत्वस्यौचित्यात् । न चास्मिन्पक्षे निमन्त्रयेय भवन्तमित्यादौ निमन्त्रणस्य धातुनाऽभिधानाल्लिङ् न स्यादिति वाच्यम् । प्रयोजकनिष्ठनिमन्त्रणादन्यस्याश्रयस्यवर्त्तव्यस्वरूपस्य निमन्त्रणस्य प्रत्ययार्थत्वेनादोषात् । ईदृशे विषयेऽर्हे कृत्यतृचश्चेति लिङ् । अ-

सीयुटि कृतेऽपि तस्यागमभक्ततया परस्मैपदपरत्वाविघातादिति भावः। भाष्योक्तरीत्येति। तत्र हि प्रसङ्गविशेषेणोक्तं आगमा अविद्यमानवद्भवन्तीतिवचने यदयं यासुट्परस्मैपदेषूदात्तो ङिच्चेत्याहेत्युक्तम्। तत्र कैयटः। यदि प्रत्ययाद्युदात्तत्वे कर्त्तव्ये आदित्वमागमा विहन्युस्तदा चिनुयातामित्यादौ यासुटः प्रत्ययादित्वात्सिद्धमुदात्तत्वमिति तन्न कुर्यात्। न च परस्मैपदनिमित्तकत्वादस्यादेशोत्तरम्प्रवृत्त्या पूर्वमेवान्तरङ्गत्वादाद्युदात्तत्वे प्रत्ययस्य कृते ततो यासुडस्वरकः स्याल्लोपनिघातेनानुदात्तो वेति चरितार्थमुदात्तवचनमिति कथं ज्ञापकमिति वाच्यम्। परस्मैपदेष्वित्यस्य विषयसप्तमीत्वेन लावस्थायामेव यासुटि ततो निर्दिश्यमानस्य लस्यादेशे तन्निमित्तकाद्युदात्तत्वे यासुटः सिद्धे उदात्तग्रहणं ज्ञापकमित्याशयात्। युक्तिसिद्धेनाप्यागमा अनुदात्ता इतिवचनेन यथा इटोऽनुदात्तत्वन्न भवति तथाह। अलावीदित्यादाविति। ननु यासुटो ङित्वेपि समुदायस्य ङित्वाभावात्कथञ्चिनुयादित्यादौ गुणनिषेधादीत्यत आह। अनेनेति। यत्तु श्यास परस्मैपदेष्वित्येव सूत्रमस्तु। परस्मैपदं यतो विहितन्तदादेः परस्मैपदे परे श्यासप्रत्ययो भवति। श्यासेत्यत्र सकाराकार उच्चारणार्थः। तेन सकारस्य नेत्त्वम्। अयञ्च येन नाप्राप्तिन्यायेन शपोपवादो यद्यपि भवति तथाप्यस्मिन्कृते शकारेत्संज्ञकत्वेन सार्वधातुकत्वाच्छबादिः प्रवर्त्तते। न च सार्वधातुकत्वेप्यस्य कर्त्रर्थत्वाभावेन कथं शबिति वाच्यम्। भवतेर इतिनिर्देशेन क्वचित्कर्त्रर्थकत्वाभावेऽपि शब्भवतीतिकल्पनेनादोषात्। न चापवादविषये कथमुत्सर्गप्रवृत्तिरिति वाच्यम्। सोऽचि लोपे चेत्पादपूरणमिति निर्देशेनापवादविषयेऽप्युत्सर्गस्य क्वचित्प्रवृत्तिस्वीकारात् अन्यथा त्यदाद्यत्वाप्राप्तियोग्ये विषयेऽचारिताद्यरूपस्यापवादत्वशीअस्य तदोरितिसत्वे सत्वेन सत्वे कृते त्यदाद्यत्वानापत्तिरिति मतम्। तन्न। भूधातोराशीर्लिङि श्यास प्रत्यये श्यासः सार्वधातुकत्वाच्छप्प्रवृत्तावियादेशापत्तेः। शपोऽ

येन गुर्वादिर्मामप्रवर्त्तयतीत्यादिव्यवहारानापत्तेः । अत एव हेतुमति चेतिसूत्रभाष्ये पृच्छतु माम्भवानित्यत्र णिच् कस्मान्न भवतीत्याशङ्काया द्रव्यमात्रविषयकप्रेरणायां लोट् सक्रियस्य प्रवर्त्तनायांणिजितिसमाधानस्य च सङ्गतिर्भवति । न हि णिचेष्टसाधनत्वम्बोध्यते इति कस्याप्यभ्युपगमः । अत एव वक्तृधर्मः प्रेरणेति व्यवहारो लोकानाम् । अत एव च निमन्त्रणादीनामुपादानम्प्रपञ्चार्थमिति प्राचामुक्तिरपि सङ्गता भवति । प्रवर्त्तनापदस्येष्टसाधनत्वादिबोधकत्वे निमन्त्रणादिकन्ततो भिन्नमेवेति तथाभिधानमसङ्गतमेव स्यात् । तदुक्तं हरिणा । अस्ति प्रवर्त्तनारूपमनुस्यूतञ्चतुर्ष्वपि । तत्रैव लिङ्विधातव्यः किम्भेदस्य विवक्षया । न्यायव्युत्पादनार्थंवा प्रपञ्चार्थमथापि वा । विध्यादीनामुपादानञ्चतुर्णामादितः कृतमिति । न्यायेति । व्यापकधर्मस्य व्याप्यधर्मव्यापकत्वमेवेति न्यायेत्यर्थः । कथन्तर्हिं भवान्पचेदित्यादिवाक्यश्रवणानन्तरम्प्रयोज्यः पाके प्रवर्त्तते इष्टसाधनताज्ञानस्य प्रवृत्तिकारणतया तस्य शब्देनाजननादिति चेत् पाको मदिष्टसाधनम् । मत्कर्त्तव्यत्वेनाप्तोक्तत्वादित्याद्यनुमानादिति गृहाण । विध्यादीनाम्द्योत्यतापक्षे तु प्रयोजकव्यापारोऽपि धात्वर्थस्तस्यापि परम्परया फलानुकूलत्वात् । तत्र तेषु व्यापारेषु प्रयोजकव्यापारो विपर्ययतयाविशेषणमेवेतरेषां विशेष्यत्वमेवमन्वये लिङादिसमभिव्याहारस्तात्पर्यग्राहकः । एवञ्च पचेदित्यादिशब्दादेकाश्रयिका प्रेरणाविषयभूता पाकानुकूला भावनेत्यादिक्रमेण बोधः । अधिकमन्यत्र स्पष्टम् । प्रवर्त्तना च वस्तुतो वर्त्तमानकाला धात्वर्थस्तु भविष्यत्कालिक एव भासते शब्दशक्तिस्वभावात् । यत्र तु णिच् तत्र प्रयोज्यप्रयोजकव्यापारयोः समानकालिकयोर्भानम् । यत्र तु विधौ लिङ् तत्रोत्तमपुरुषो न प्रवर्त्तते किन्तु प्रथममध्यमावेव । स्वप्रवृत्तौ स्वोच्चारणस्याप्रयोजकत्वात् । इदमेवाभिप्रेत्योत्तमपुरुषो विधिशक्तिप्रतिबन्धक इतिमीमांसकानामुक्तिः सङ्गच्छते । याडुट् पर । अपवाद इति ।

शेषविहितेन किल्वातिदेशेन ङित्वातिदेशो बाध्यत इति तस्य सिद्धिः। सलोप इति। भूयादित्यत्र सुट इव यासुटोऽपि सस्य संयोगादिलोपः। भूयास्तामित्यादौ तु यासुटः सस्यैवेति विशेषः। गकारोपि निर्दिश्यत इति। ककारात्पूर्वमिति शेषः। सिद्धसाध्यसमभिव्याहारन्यायेनेति। सिद्धसाध्यसमभिव्याहारे सिद्धं साध्यायोपयुज्यत इतिन्यायेनेत्यर्थः। दृष्टश्चायन्न्यायः। मलिनन्ते वपुः स्नाया इत्यत्र। के चिदितिकथनेन सिद्धसाध्यसमभिव्याहारन्यायेन निमित्तत्वलाभ इत्यत्र स्वस्यापरितोषं सूचयन् भाष्योक्तरीत्याह। वान्ति करुता त्विति। क्नोः कित्वेन ज्ञापकेनेति। तद्धि गृध्नुरित्यादौ गुणनिषेधार्थम्। यदि प्रकृतसूत्रे तन्निमित्तेत्यर्थो न स्यात् तदा यत्र क्ङित्प्रत्ययाव्यवधानन्तत्रैव निषेधः स्यादिति क्नोः कित्वं व्यर्थमेव स्यात्। ननु विधौ परिभाषोपतिष्ठते नानुवाद इति परिभाषया तस्मिन्निितिपरिभाषाया इहानुपस्थानम्भविष्यतीत्यत आह। अनुवाद इति। परिभाषया। तस्मिन्नितिपरिभाषया। किञ्च भाष्ये उपधालक्षणस्य गुणस्य प्रतिषेधे सनः कित्वविधायकं हलन्ताच्चेतिसूत्रमपि ज्ञापकमित्युक्तन्तत्र यद्यप्येवं शङ्का भवति। हलन्ताच्चेति न ज्ञापकम् धिप्सतीत्यत्र दम्भधात्ववयवस्य लोपसम्पादनेन दिदृक्षति सिसृक्षतीत्यत्र सृजदृशोरित्यमागमप्रतिबन्धेन च तस्य चारितार्थ्यसम्भवादिति। तथापि क्ङितीतिसूत्रस्य तावदेव चेत्प्रयोजनन्तर्हि सृजदृशोर्झल्यमकितस्सनि। इको झल् दम्भेश्चेत्येव वदेदिति हलन्ताच्चेति सामान्यसूत्रं ज्ञापकमेवेति सा नियन्तव्या। आगमविशिष्टस्य तामादेशवारणायाह। धातोर्विहितेति॥ भाष्यरीत्येति। परस्मैपदेष्वित्यस्य विषयसप्तमीत्वेनेत्यादिरीत्येत्यर्थः। दूषितसम्मतं समाधानम्भाष्याननुगुणमित्याह। मास्त्वित्यादावीति। प्रतिषेधार्थकसम्प्रत्ययार्थमित्यनेन प्रतिषेधार्थको ङिदेवाङित्तु न प्रतिषेधार्थक इति ध्वनितम्। अत एव प्रतिषेधार्थकसम्प्रत्ययार्थमित्यस्य प्रत्युदाहरणमत्रमा छन्द इति दर्शितम्। व्याख्यातञ्च कैयटेन प्रोपसृष्टम्माङ आ-

प्रवृत्तिस्वीकारेऽपि ह्रूयादित्यादौ दीर्घो न स्यात् । सार्वधातुकपरत्वात् । किञ्च छिवुप्रभृतिभ्य आशीर्लिङि श्यासप्रत्यये छिवुक्लमुचमां शितीति-क्लमुचम्वोर्दीर्घापत्तेः । यदपि ङ्यासुड्विधानेन सिद्धे ङिद्वचेतिकिमर्थमि-ति । तदपि न । जागर्यादित्यस्यासिद्ध्यापत्तेः । किदाशिषीतिकित्वातिदे-शेन सिद्धान्ते विशेषविहितेन ङित्वातिदेशो बाध्यत इतिजाग्रोऽविचीति गुणो भवति सम्प्रति तु ङित्वस्यौपदेशिकतयाऽस्यातिदेशिकेनकित्वेन बा-धाभावेन ङित्वपर्युदासाद्गुणानापत्तेः । यदपि क्यासुड्ङितिन्यासं कृत्वा किदाशिषीतिसूत्रन्त्याज्यमिति । तनुच्छम् । यचधातोर्जागृधातोश्च वि-धिलिङि वच्यात् जागृयादित्यत्र सम्प्रसारणगुणयोरापत्तेः । तस्माद्यथा-न्यासमेवरमणीयमिति । आत्मनेपदइति । सुटइत्यादिः । एतेन । वि-षयभेदप्रदर्शनेन । अत्र प्रकरण इति । एतेन सुट्यासुटोरपि समावेशः साधितः । अत एव । बाध्यबाधकभावाभावादेव । पुनः प्रवृत्त्या वेति । अवयवावयवस्यापि समुदायावयवत्वम् । अङ्गुल्यादिवत् । अत एव । प-रिच्छेदकन्यायाप्रवृत्तेरेव । सर्वस्योसौ नियतत्वभावायाह । अवर्णादित्या दि । ननु कृते पररूपे चेदियादेशस्य प्राप्तिस्तदास्य नित्यत्वम् सैव तु फ धमत आह । एकादेशस्येति । एवञ्च प्राप्तिमात्रेण नित्यत्वन्न तु रूपसिद्धि पर्यन्तमोक्षा कार्या । मूलेअन्तरङ्गत्वादिति । प्रत्ययमात्रापेक्षत्वेनान्तर-ङ्गत्वात् । इयादेशस्य त्वाङ्गत्वेन प्रकृतिप्रत्ययोभयापेक्षत्वेन बहिरङ्गत्व-मिति भावः । वार्णपरिभाषयैव सिद्धे यासित्येतत्पर्यन्तप्रयासो न यु-क्त इत्यत आह । वार्णादाङ्गमिति । एवमपि । यासितिपदच्छेदेपि । मू-ले आर्द्धधातुकसंज्ञ एवेति । लङः शाकटायनैतिसूत्रादेवकारानुकर्षः कार्यः । अन्यथाऽस्या आर्द्धधातुकसंज्ञाया अनाकङ्क्षारीत्यास्सार्वधातुकसं-ज्ञया समावेशे शपादिः स्यादिति भावः । किदाशिषि । इदङ्कित्वविधा-नमिज्यादित्यादौ सम्प्रसारणार्थम् । जागर्यादित्यत्र गुणसिद्धिरपि प्रयोज-नम् । अयथा यासुटो ङित्वातिदेशेन गुणो न स्यात् । सम्प्रति तु यि

वः प्राप्नोति इत्याद्यभिधाय अस्तु तर्हि नियमार्थम् । ननु चोक्तं सिज्लुग्ग्रहणमनर्थकं व्यमिति । नैष दोषः । तुल्यजातीयस्य नियमः । कश्च तुल्यजातीयः । यो द्वाभ्यामनन्तरः । आतः सिचश्च । द्वाभ्यामानन्तर्यञ्च सिज्लुक्येव सम्भवतीतिसिज्लुकीति लभ्यम् । यदीदं सिज्लुकि सति प्रवर्त्तते तदा प्रत्ययलक्षणेन पूर्वसूत्रेण सिद्धे नियमोयम्भवति स च यथा अभूवन्नित्यादिलक्ष्यसिद्धिर्भवति तथैव कल्पनीय इत्यभिप्रायकश्यारव्यानादित्यर्थः । उभयोर्निषेधलाभस्य प्रकारमाह । लुङादिष्विति ॥ लिङ्निमित्ते लृङ् क्रिया ॥ भविष्यति मर्यादावचन इति सूत्राद्भविष्यतीति सम्बध्यते । लिङ्निमित्तशब्देन किमिह ग्राह्यमित्याकाङ्क्षायामेतत्प्रकरणोपात्तमेव ग्राह्यन्तत्र शीघ्रोपस्थितिकत्वाद्धेतुहेतुमतोर्लिङिति तदेवादावुपात्तमादिना चोत्तरसूत्रोपात्तस्यैव पूर्वसूत्रोपात्तस्यापि ग्रहणमित्याशयेनाह । आशंसावचन इति । अनभिनिर्वृत्तिर्यस्मिन्देशे काले या क्रिययोरुत्पत्तियोग्यता तदन्यस्मिन्देशे काले या तयोरुत्पत्तिसम्भावनमिति यावत् । सम्भावनञ्चोत्कटकोटिकः संशयः । तत्राभावनिष्ठोत्कटत्वाख्यो विषयताविशेषो ग्राह्यः । प्रमाणान्तरात् । येन हेतुना हेतुभूतक्रिया भवति ज्ञायते च तदतिरिक्तेन हेतुना सम्भावितेन तस्याः क्रियाया अभावो यदा ज्योतिःशास्त्रादिकथितलक्षणज्ञानेनोपस्थितो भवति तदा तदभावानुमापकलिङ्गज्ञानमिह प्रमाणान्तरं विवक्षितम् तयोः क्रिययोर्हेतुहेतुमद्भावश्च लोकतो ज्ञातो ग्राह्यः । यथा मंगलादिग्रहकृतवृष्टिप्रतिबन्धे सम्भाविते वक्ता सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यदिति प्रयुङ्क्ते । यत्त्र्मानप्रागभावप्रतियोगिसम्भावितहेतुभूतसुवृष्टिभवनजन्यं यत्त्र्मानप्रागभावप्रतियोगिसम्भावितं सुभिक्षकर्तृकम्भवनमिति बोधः । अत्र क्रिययोर्हेतुहेतुमद्भावे तत्कर्त्रोर्हेतुहेतुमद्भावोऽर्थात्फलति । आनि लोट् । अत्र लोडिति लुप्तषष्ठीकम्पदम् । उपसर्गादसमासेऽपीत्यत उपसर्गादिति सम्बध्यते । उपसर्गपदञ्चोपसर्गावयवपरन्तच्चाभेदेन रषाभ्यामित्य-

तयोपसर्ग इत्यङ् । यद्यप्ययमाङ् तथापि टाबन्तत्र माङिति । एवञ्च यत् क्वचित्पुराणादौ मास्त्विति दृश्यते तत्त्वार्षत्वात्साधु लौकिकन्त्वसाधुरेव । व्याख्यानादिति । प्रकृतसूत्रीयभाष्यसम्मतव्याख्यानादित्यर्थः । तदेव दर्शयति । अत एवेति । तद्ग्रहणस्यैवेष्टत्वादेव । अत्र । भूसुवोरिति सूत्रे । फलदोषयोरभावेनेति । पितीत्यस्य फलम्पित्येव प्रवृत्तिरिति तच्च गुणविधायकशास्त्रस्य क्ङिच्छिन्नसार्वधातुक एव प्रवृत्त्याऽन्यथासिद्धमिति तदभावः पितीत्यस्यानुवृत्तौ दोषश्च पिच्छिन्ने प्रवृत्त्यभावापत्तिरूपो वाच्यस्स चात्र नास्त्येवेति भावः । सर्वादेशेनानपहृतत्वमिति । श्रौतो यः सर्वादेशस्तेनानपहृतत्वमित्यर्थः । अत एव । उक्तस्य विद्यमानत्वस्य विवक्षणादेव । अभूदित्यत्र श्रौतो यः सर्वादेशो लुक् तेनापहृतत्वमेवास्तीति विशिष्टाभावः । आसीदित्यत्र स्याटश्चेतिवृद्धिरूपादेशसत्त्वेपि स न श्रौतः सर्वादेश इति निरुक्तं विद्यमानत्वमस्त्येव । आनुमानिकस्य सर्वादेशत्वस्य सत्त्वेऽपि तस्य न श्रौतत्वमिति भावः । भाष्यादिति । द्विसकारको निर्देश इतिभाष्यादित्यर्थः । अत एव । द्विसकारकनिर्देशस्याभिमतत्वादेव । प्रतिषेध उक्त इति । आद्विभुवोरीट्प्रतिषेध इत्यनेन वार्त्तिकस्कृतेति शेषः । आतः । पूर्वेण सिद्धे नियमोऽयमित्याशयेनाहादन्तादेवेतीति । विपरीतनियम इति । आदन्ताद्येत सिज्लुक्येवेतिविपरीतनियम इत्यर्थः । व्याख्यानादिति । प्रकृतसूत्रभाष्ये किमिदञ्जुस्याकारग्रहणनियमार्थम् । आहोस्वित्प्रापकम् । कथञ्च नियमार्थं स्यात् । कथञ्च प्रापकम् । यदि सिज्ग्रहणमनुवर्त्तते ततो नियमार्थमथ निवृत्तन्ततः प्रापकम् । नियमपक्षस्य सिज्ग्रहणानुवृत्तौ सत्यामातः सिचश्च परस्य झेरित्यर्थे सिचः परत्वात्पूर्वेण सिद्धेऽयं योगो नियमार्थ इत्येवमुपपत्तिः कार्या । ततः नियमार्थमिति चेत्सिज्लुग्ग्रहणं कर्त्तव्यमातः सिज्लुगन्तादिति वक्तव्यम् इह माभूत अकार्षुः अहार्षुः । अस्तु तर्हि प्रापकम् प्रापकमिति चेत्प्रत्ययलक्षणप्रतिषेधो वक्तव्यः । अभूवन्निति प्रत्ययलक्षणेन जुस्भा-

स्वनिति वाच्यम् । राज्ञो अः राजाः पूज्य इत्यादौ दोषापत्तेः । अत्र द्वितीयाबहुवचनान्तराजन्शब्दस्याद्धातुप्रकृतिकड्प्रत्ययान्तेन अशब्देन समासः कृदुत्तरपदप्रकृतिस्वरोऽत्र भवति पदादिविधित्वसम्भावनया न तस्य निषेधस्य प्रवृत्तिरिति यद्यपि शङ्का भवति तथापि योग्यतानिवेशे न कोऽपि क्लेशः । एवमुत्तरखण्डे पदत्वाभावनिवेशे समासस्य राजाश्च इत्यादेर्य उत्तरखण्डः श्च इति तस्य पदत्वाभाववत्त्वनाखण्डपदत्वमेवायाति । अर्थवत्त्वन्तूत्तरखण्डे निवेशयितुमशक्यं राजीयतीत्यस्यासङ्ग्रहापत्तेरिति यथाश्रुतमेतद्वक्तुमशक्यमतः पूर्वोक्तार्थ एव कल्पनीय इति दिक् । प्रकृतसूत्रे उपदेशपदस्य प्रयोजनन्तु प्रनियकार प्रनिषसाद प्रनिरोदयतीत्यादिव्यावृत्तिः । अभियुक्तकृत इति । एतेन मूलोक्तार्थनिर्देशस्य सप्रमाणत्वं लब्धम् । एवमुपादानस्य फलमाह । पाणिनिस्त्विति । अत एव । अर्थनिर्देशरहितस्य भूशब्दस्य पाठादेव । क्वचिदर्थनिर्देशसहितः पाणिनेः पाठ इत्यत्रापि भाष्यमेव प्रमाणन्तत्सूचयति । चुटू इति सूत्र इति । एवञ्च । अर्थनिर्देशस्यासार्वत्रिकत्वे च । द्योतका इतीति । समभिव्याहृतधातुगता या तत्तदर्थनिरूपिता शक्तिस्तदुद्बोधका इत्यर्थः । अत एव । उपसर्गाणान्द्योतकत्वादेव । अनुसमभिव्याहारेण भूधातुनिष्ठा याऽनुभवानुकूलव्यापारनिरूपिता शक्तिः सा उद्बुध्यते उद्बुद्धसंस्कारविषयतावती भवति ततस्तस्मात्स्मरणम् ततोऽनुभवानुकूलव्यापारोपस्थितिस्ततः शाब्दबोधः एवं सर्वत्र द्योतकविषये बोध्यम् । अत्र फलव्यापारयोः पृथग्वाच्यत्वम् । विषयता फलतावच्छेदकसम्बन्धः फलतावच्छेदकसम्बन्धेन फलाश्रयस्यैव कर्मत्वम् । अनुभवनिष्ठव्यापारजन्यतावच्छेदकसम्बन्धश्च समवायसम्बन्धावच्छिन्नाश्रयत्वम् । व्यापारश्चात्ममनःसंयोगः व्यापारतावच्छेदकसम्बन्धोऽपि प्रकृते समवायः । एवञ्च फलतावच्छेदकसम्बन्धव्यापारतावच्छेदकसम्बन्धाभ्यां फलव्यापारयोर्वैयधिकरण्यात्मकर्मकत्वम् । यत्र तु ताभ्यां सम्बन्धाभ्यान्तयोः सामानाधिकर-

स्य विशेषणमिति उपसर्गावयवरपाभ्यामुत्तरस्यानिशब्दावयवस्य नस्याद्य- दिर्व्यवहितस्य णत्वमित्यर्थः फलितस्तत्पर्यवसितार्थमाह । उपसर्गादि- ति । प्रहिमानीत्यादाविति । आदिना प्रवपानीत्यादिसङ्ग्रहः । एवञ्चे- ति । उपसर्गात्परस्यार्थवत एवानिशब्दस्य ग्रहणसिद्धौ च । अन्तःशब्द- स्येतीति । अन्तरपरिग्रह इति सूत्रे वार्त्तिकमिदम् । नन्वनेन णत्वे कर्त- व्ये चेदुपसर्गत्वन्तदाऽन्तर्हण्यादित्यत्र हन्तेरत्पूर्वस्येत्येव सिद्धेऽन्तरदेश इ- त्यस्य वैयर्थ्यापत्तिरत आह । हन्तेरिति । अत्र । संहितैकपद इतिवच- ने । अखण्डम्पदमिति । विवक्षितमिति शेषः । अखण्डपदत्वञ्च पदसंज्ञायो- ग्यद्वितीयभागानवयवकत्वविशिष्टपदत्वम् । पदसंज्ञायोग्यद्वितीयभागनि- वेशेन राजीयतीत्यत्र नाखण्डपदत्वक्षतिः । उत्तरभागे पदसंज्ञायोग्यत्वनिवे- शात्परमाश्वेनेत्यत्र उत्तरपदत्वे चापदादिविधावित्यस्य प्रत्याख्यानरीत्या- श्वशब्दस्य भत्वेपि नाखण्डपदत्वव्यवहारः वाक्यमिह यथाकथञ्चिद- पि यः पदसमुदायः स विवक्षितो न तु परस्परान्वितार्थकत्वपर्यन्तमपि निविष्टन्तेनानर्थकस्यापि समुदायस्य सङ्ग्रहः । अकखादावपानीत्यत्र न- ञ्समासः । अयमुत्तरपदार्थप्रधान इति कखादिपान्तपदार्थस्य प्राधान्यं तस्य चोपदेशपदसापेक्षत्वेप्यसामर्थ्यं न शङ्कनीयम् । न चैवमपि कखप- दस्योपदेशपदसापेक्षत्वेनासामर्थ्यादादिपदेन पपदस्यान्तपदेन च समा- सो न स्यादिति वाच्यम् । उपदेशपदस्य कर्मघञन्ततयोपदिश्यमानो यः कखादिरारोपितस्तस्येह विवक्षितत्वात् । उपदेशावस्थायां यः ककारख- कारादिस्तद्भिन्न इति तु फलति । अत एव । निरुक्तस्यैकपदत्वस्य वि- वक्षितत्वादेव । पदत्वाभाववदुत्तरखण्डकत्वमिति । पदत्वाभाववानुत्तर- खण्डो यस्य तत्त्वमित्यर्थः । न चैवं राजाश्व इत्यादावुत्तरपदत्वे चापदा- दिविधाविति निषेधस्य प्रवृत्तौ पदत्वाभाववदुत्तरखण्डकत्वसत्त्वादेकप- दत्वलक्षणस्य समाससामान्यवृत्तिपदार्थकत्वानुपपत्तिरिति वाच्यम् । पदसंज्ञायोग्यत्वाभावस्य विवक्षितत्वात् । न चात्र नोत्तरपदस्य कार्यि-

त्यर्थः । अनृच्छ इति किम् । आनर्च्छ । ननु ऋच्छत्यृतामिति लिटि गुणविधानाज्ज्ञिङ्गादृच्छेर्लिट्याम्न भविष्यति । न च व्यवधानार्थन्तत्स्यादिति वाच्यम् । प्रकृतसूत्रेऽनृच्छइतिपदाभावे ऋच्छेर्लिटि परे आमो गुणस्य च प्राप्तौ प्रतिपदोक्तत्वादपवादत्वाच्च गुणे इजादित्वाभावादेवाम्न भविष्यतीति व्यवधानार्थताया वक्तुमशक्यत्वादिति चेन्न । अन्तरङ्गानपीतिन्यायेन लुक्प्रयोजकसमासादीनाम्प्राबल्यबोधनवदामोऽपि तेन न्यायेन बलवत्त्वं स्यात् । एवञ्च ऋच्छेर्लिटि प्रतिपदोक्तादपि गुणात्पूर्वमामि लुकि लिट्परकञोऽनुप्रयोगे व्यवधानेऽपि गुणसम्पादकतया ऋच्छेर्गुणविधानस्य चरितार्थतयाऽनृच्छइतिपर्युदासस्यावश्यकत्वमित्याशयात् । अत एवोक्तमिति सूत्रतात्पर्यमिति । अत एव सर्वविधिभ्यो लुग्विधिर्बलवानिति प्राचामुक्तिरपि सङ्गच्छते । अचः परत्वसामर्थ्यादिति । आस्कास्धातोरन्त्याचः परत्वसाधकतद्विषयकवाक्यकल्पनाम्प्रत्यये मकारोच्चारणसामर्थ्यादित्यर्थः । असञ्जातविरोधित्वन्यायेनेति । न सञ्जातो विरोधी यस्य सोऽसञ्जातविरोधी तस्य भावस्तत्त्वम् । प्रकृते च विरोधी वैयर्थ्यशङ्कोद्भव एव । यद्यत्र सवर्णदीर्घस्य बाधः कल्प्यते तदा कस्यापि व्यर्थत्वशङ्का न भवतीति तद्बाध एवोचित इति भावः । औचित्यादिति । गुणे त्वन्याय्यकल्पनेतिन्यायेन गुणबाधकल्पनस्योचितत्वात् । आमः । आम । आमतुरित्यत्र तु न लुक् । उपजीव्यविरोधाल्लाक्षणिकत्वाच्च । अयञ्च लुक् लावस्थायामेवादेशापवादत्वात् लकारस्य च कृत्वात्तदन्तादौत्सर्गिके सुपि कृतेऽपि च प्रवर्त्तते । अत एवैधाञ्चक्र इत्यादौ तिङ्ङतिङ इतिनिघातसिद्धिः । अत्र लेरिति नानुवर्त्तते । तेन विदांकुर्वन्त्वित्यत्र लोटोऽपि लुक्सिद्धिः । आमन्तादितिपञ्चम्या इति । सूत्रव्याख्यानवाक्यस्थपञ्चम्या इत्यर्थः । इति च बोध्यमिति । एतदर्थमेवेदं सूत्रम् । अनुप्रयोगस्य तु कालबाधनसङ्ख्यापुरुषविशेषस्याभिव्यक्त्यर्थं सूत्राभावेऽपि सिद्धेः । आमन्तस्य तु न तत्प्रतिपादनसामर्थ्यम् । अनभिव्यक्तार्थकत्वात् । न च धा-

यन्तत्राकर्मकत्वम्। न चैषा व्यवस्था वचनबलात्कल्प्यत इति भ्रमितव्यम्। यत्र फलतावच्छेदकसम्बन्धेन फलाधिकरणवृत्तित्वरूपफलसामानाधिकरण्यं व्यापारे तत्र परया कर्तृसंज्ञया कर्मसंज्ञाया बाधादेवाकर्मकत्वस्य सिद्धेः। इत्युक्त्या। विशेषोक्त्या। द्योतकत्वं वाचकत्वञ्चेति। प्रयोगभेदेनेत्यादिः। इदम्मञ्जूषादौ स्फुटमित्यत्र न तन्यते। अकर्मक इति। वृद्धिस्तदनुकूलो व्यापारश्च धात्वर्थः। व्यापारजन्यतावच्छेदकः फलतावच्छेदकसम्बन्धश्च स्वरूपसम्बन्धावच्छिन्नाश्रयतालक्षण एक एवेति तेन सम्बन्धेनफलस्य व्यापारसमानाधिकरणत्वादकर्मकत्वमिति। वृद्ध्यर्थकस्याकर्मकत्वे प्राचामपि सम्मतिमाह। वृद्धीति। तङ एवेति। तिबादीनामुक्तानामनुवृत्त्या षष्ठ्या विपरिणामेनात्मनेपदानामित्यस्य विशेषणादिति भावः। आनस्य। पचमानो यजमान इत्येतद्घटकानस्य। गुणानापत्तेरिति। क्ङिति चेति निषेधादिति शेषः। सार्वधातुकमपिदितिसूत्रस्यापिति गुणव्यावृत्तिरेव फलन्तच्च गुणविधायकसूत्रे पिद्ग्रहणेनैव सिद्धमितिभ्रमस्य मूलिकामाशङ्कान्निराकरोति। यत्त्विति। एकारोच्चारणमिति। एवञ्चेदमेवैकारोच्चारणन्तत्र ज्ञापकमस्तु वक्ष्यमाणन्त्वेतत्फलमिति बोध्यम्। तस्य। इषधातोः। इजादेश्च गुरुमतः। इषो गुरोरिति। अत्र यस्मिन्विधिरितिपरिभाषया तदादिविधिरिति। केचित्तन्न। विशेषणविशेष्ययोः सप्तम्यन्तत्वे एव तत्प्रवृत्तेस्तस्माद्वक्ष्यमाणान्नृच्छ इतिप्रतिषेधादेव तदादिविधिः। एषत्यंशे तदन्तविधिना गुर्वन्तादित्यर्थोपि नेत्याह। अनृच्छ इतिपर्युदासादिति। औपदेशिकगुरुमत इति। तेनेयेषेत्यादौ न दोष इत्याशयः। येयक्षोपपत्तेश्च। अस्य हि नौपदेशिकगुरुमत्ता किन्तु सुहिमित्ता। अन्योक्तप्रकृतसूत्रस्यादिग्रहणप्रयोजनं खण्डयति। आदिग्रहणादित्यादिना। व्यवधानेपि आमोऽनुप्रयुज्यमानकृञादेश्च व्यवधानेऽपि। गुणप्रवृत्त्या। ऋच्छत्यृतामितिगुणप्रवृत्त्या। तत्सामर्थ्याभावेन गुणविधानसामर्थ्याभावेन। तत्सार्थक्यादिति। प्रकृतसूत्रस्यानृच्छइतिपर्युदासस्य सार्थक्यादि-

त्यर्थः । अनृच्छ इति किम् । आनर्च्छ । ननु ऋच्छत्यृतामिति लिटि गुणविधानाल्लिङ्गाद्दच्छेर्लिस्यान्न भविष्यति । न च व्यवधानार्थन्तत्स्यादिति वाच्यम् । प्रकृतसूत्रेऽनृच्छइतिपदाभावे ऋच्छेर्लिटि परे आमो गुणस्य च प्राप्तौ प्रतिपदोक्तत्वादपवादत्वाच्च गुणे इजादित्वाभावादेवाम्न भविष्यतीति व्यवधानार्थताया वक्तुमशक्यत्वादिति चेन्न । अन्तरङ्गानपीतिन्यायेन लुक्प्रयोजकसमासादीनाम्प्राबल्यबोधनवदामोऽपि तेन न्यायेन बलवत्त्वं स्यात् । एवञ्च ऋच्छेर्लिटि प्रतिपदोक्तादपि गुणात्पूर्वमामि लुकि लिट्परकृञोऽनुप्रयोगे व्यवधानेऽपि गुणसम्पादकतया ऋच्छेर्गुणविधानस्य चरितार्थतयाऽनृच्छइतिपर्युदासस्यावश्यकत्वमित्याशयात् । अत एवोक्तमिति सूत्रतात्पर्यमिति । अत एव सर्वविधिभ्यो लुग्विधिर्बलवानिति प्राचामुक्तिरपि सङ्गच्छते । अचः परत्वसामर्थ्यादिति । आस्कास्धातोरन्त्याचः परत्वसाधकतद्विषयकवाक्यकल्प्याम्प्रत्यये मकारोच्चारणसामर्थ्यादित्यर्थः । असञ्जातविरोधित्वन्यायेनेति । न सञ्जातो विरोधी यस्य सोऽसञ्जातविरोधी तस्य भावस्तत्त्वम् । प्रकृते च विरोधी वैयर्थ्यशङ्कोदय एव । यद्यत्र सवर्णदीर्घस्य बाधः कल्प्यते तदा कस्यापि व्यर्थत्वशङ्का न भवतीति तद्बाध एवोचित इति भावः । औचित्यादिति । गुणे त्वन्याप्यकल्पनेतिन्यायेन गुणबाधकल्पनस्योचितत्वात् । आमः । आम । आमतुरित्यत्र तु न लुक् । उपजीव्यविरोधाल्लाक्षणिकत्वाच्च । अयञ्च लुक् लावस्थायामेवादेशापवादत्वात् लकारस्य च कृत्वान्नन्तादौ त्सर्गिके सुपि कृतेऽपि च प्रवर्त्तते । अत एवैधाञ्चक्र इत्यादौ तिङ्ङतिङ इतिनिघातसिद्धिः । अत्र लेरिति नानुवर्त्तते । तेन विदांकुर्वन्त्वित्यत्र लोटोऽपि लुक्सिद्धिः । आमन्तादितिपञ्चम्या इति । सूत्रव्याख्यानवाक्यस्थपञ्चम्या इत्यर्थः । इति च बोध्यमिति । एतदर्थमेवेदं सूत्रम् । अनुप्रयोगस्य तु कालसाधनसङ्ख्यापुरुषविशेषस्याभिव्यक्त्यर्थं सूत्राभावेऽपि सिद्धेः । आमन्तस्य तु न तत्प्रतिपादनसामर्थ्यम् । अनभिव्यक्तार्थकत्वात् । न च धा-

त्वन्तरानुप्रयोगनिवृत्त्यर्थं सूत्रमस्त्विति वाच्यम् । क्रियासामान्यार्थकत्वेपामनुप्रयोगस्यैव सम्भवादिति भावः । कृभ्वस्तियोग इतिसूत्रे च भ्वस्तिसाहचर्यात् क्रियासामान्यार्थकस्यैव कृञो ग्रहणं कृञ् हिंसायामिति स्वादिस्तु तथा नेति बोध्यम् । अनुप्रयोगे सति वाक्यार्थनिरपन्तिमाह । एधेत्यादि । अकर्मकाणामपि धातूनामंशद्वयाभिधायकत्वस्य सुप्रसिद्धत्वादृद्धयनुकूलव्यापारभाने न किञ्चिद्बाधकम् । एवञ्च यत्राकर्मकधातुप्रकृतिकान्तात्कृञोऽनुप्रयोगस्तत्रानुप्रयुत्यमानस्य फलसमानाधिकरणव्यापारवाचकतयाऽकर्मकत्वेन भावकर्त्रोरेव लिट् । यत्र तु ईक्षादिभ्यः सकर्मकेभ्य आम् तत्रानुप्रयुज्यमानस्यापि सकर्मकत्वेन कर्मण्यपि लिड् भवति । न च यत्र कर्मणि लिट् तत्र फलव्यापारयोरर्थत्यासस्यानुभवसिद्धतयोभयत्र फलांशस्य प्राधान्यमिति कथमभेदान्वय इति वाच्यम् । आम्समभिव्याहारे एतत्प्रकृतिधात्वर्थफलव्यापारयोर्व्यत्यासाकल्पनादिति साम्राज्यमीक्षाञ्चक्रे ईक्षाम्बभूवे इति वाक्यादेककर्तृकसाम्राज्यकर्मकदर्शनानुकूलव्यापाराभिन्नपरोक्षानद्यतनभूत उत्पत्तिसत्तान्यतरानुकूलो व्यापार इति क्रमेण बोधः । योग्यरूपान्तरापत्तिमुपपादयति । द्रव्यमित्यादि । एतेन । अनन्वितार्थत्वादितिकथनेन । प्रत्याहारेऽन्तर्भूतः पदधातुरेव तस्यैवानुप्रयोगाभावोऽस्य ग्रन्थस्य तात्पर्यम् । तस्य केवलस्य सूत्रे समः प्रयोगात्स्पृर्यस्य वा नाऽनुप्रयोग इति भावः । आम्प्रत्ययवत् । परगामिनि क्रियाफलेऽप्राप्तात्मनेपदार्थमिदं सूत्रम् । आम्प्रकृत्या तुल्यमिति यन्मूले व्याख्यातन्तद्यावप्रकारमाह । अतद्गुणेत्यादि । अत्र । आम्प्रत्ययवदितिसूत्रे । पूर्ववाक्य इति । अत्राम्ग्रहणवदित्युपादानसामर्थ्याद्वाक्यभेद इति पूर्वशब्दोपादानेन बोधितम् । अन्यथाऽनुप्रयुज्यमानात्कृञः पूर्ववदात्मनेपदमित्यर्थे एधाञ्चक्र इत्यत्र परगामिक्रियाफलेऽप्राप्तात्मनेपदविधानस्य सिद्धेरेकवाक्यतयैव विधानं स्यात् । वाक्यभेदे सति यत्प्रयोजनं सिध्यति तदाह । इन्द्राञ्चकार इत्यादि । न्यूनतापरिहारायाह । इदमुपेति । फा-

नचेोऽपीति । अत्रेदम्बोध्यम् । पूर्ववदित्यस्यानुवृत्तिङ् कृत्वा वाक्यभेदप्रदर्शनम्प्रकृतयोगस्य विभागाभावाभिप्रायेण नियमसिद्धसार्थिकस्य प्रतिषेधस्यानन्तरस्येतिन्यायेनैतद्बाधकत्वमेव स्यादित्यभिप्रायेण च । अन्यथा कृञोऽनुप्रयोगस्येत्यादौ योगः कार्यः । इदमेधाञ्चक्रे इत्यादावकर्तृगामिक्रियाफलविवक्षायामप्राप्तात्मनेपदार्थम् । तत आम्प्रत्ययवदितिद्वितीयो योगः कार्यः । नियमार्थमिदम् । कृञोऽनुप्रयोगस्येत्यनुवर्त्तते । अनुप्रयुज्यमानात्कृञोयदात्मनेपदं विहितन्तदाम्प्रकृत्या तुल्यमेव तेन इन्दाञ्चकारेत्यादौ न । योगविभागसामर्थ्याच्च म्नरितञित इत्यस्याप्ययन्नियम इत्येवं सिद्धे पूर्ववद्ग्रहणानुवृत्तिर्व्यर्था स्यादिति । स्पष्टमिदमिति । एकारोच्चारणस्य ज्ञापकत्वप्रदर्शनम् । द्विर्वचनेऽचीतियोगस्य स्थानिवद्भावविधायकत्वाभिप्रायेण व्याचष्टे । स्थान्यच इति । द्विर्वचनशब्दघटकवचनशब्दे भावल्युडभिप्रायेणाह । द्विर्वचन इति । यदि त्वधिकरणे ल्युट् क्रियते तदा लक्षणां विनापि सामानाधिकरण्योपपत्तिः । द्विर्वचननिमित्ते परे तदव्यवहितपूर्वघटकाजादेशः स्थानिवदित्यर्थे दिद्यनीयिपतीत्यादावपि स्थानिवद्भावः स्यादत आह । प्रत्यासत्त्येति । तत् । द्विर्वचननिमित्तम् । ननूर्णुनवियिपतीत्यत्र द्विर्वचननिमित्तत्वमिसेतिसमुदायस्य न त्वच इति कथं स्थानिवत्त्वमत आह । ऊर्णुनवियिषेति । तद्भावभावितेति । तस्य भावस्तद्भावः । तदीयसत्ता । तद्भावे सति भवति तच्छीलस्तद्भावभावी तस्य भावस्ताद्भवभावितेत्यर्थः । नन्वेवमपि सन्यङोरित्यस्य षष्ठीत्वात्कथमूर्णुनवियिपतीत्यस्य सिद्धिरत आह । सन्यङोरिति । अरिरिपतीत्यादौ सूत्रातिप्रसङ्गं वारयति । तत्रेत्यादि । एतेन । पूर्वोक्तलोकप्रसिद्धन्यायेन । न हि तस्य न्यायस्य लौकिकत्वमेवेत्यत आह । व्याकरणेऽपीति । नन्वषीत्यस्याभावेऽपि कथमपिजग इत्यत्र स्थानिवत्त्वप्रसक्तिर्गाङादेशस्यार्द्धधातुक इत्यस्य विषयसप्तमीत्वेन लिडुत्पत्तेः प्रागेव प्रवृत्तेरत आह । लिटीत्यादि । ननु तर्हि लिडादेशव्याप्तोऽपि निमित्तत्वादतिप्रसङ्गस्तदव-

स्य एवेत्यत आह । अत्र सूत्र इति । कृते द्विर्वचने एधाञ्चक्रे इत्यादौ यणः स्थानिवद्भावे श्रवणन्न स्यादत आह । आवृत्त्यैति । ईजाथ इति । यजधातोर्लिट् । धातोः स्वरितेत्त्वादात्मनेपदम् । वचिस्वपीति सम्प्रसारणम् । अत्र तन्निषेध इति । सम्प्रसारणनिषेध इत्यर्थः । एवं व्याख्यानेन मूलोक्तं द्विर्वचननिमित्तेऽचि योऽजादेशः प्राप्तः स नेतिव्याख्यानमेव युक्तमिति ध्वनितम् । अत एव न पदान्तसूत्रानन्तरमस्य सूत्रस्य पाठः साधु सङ्गच्छते । स्थानिवद्भावपरत्वेन व्याख्याने द्विर्वचनात्प्राक् तत्तदादेशस्य प्रवृत्तिः स्वीकार्या । पश्चात्स्थानिवद्भावेन रूपातिदेशपर्यवसायिना तन्निवृत्तिः कार्या । रूपातिदेशेऽचीत्यस्य ज्ञापकता स्वीकार्या । कृतस्य शास्त्रातिदेशस्य कार्यातिदेशस्य वा त्यागः स्वीकार्यः । प्रक्षालनाद्धीत्यस्य लोकप्रसिद्धस्य न्यायस्य विरोधश्च स्वीकार्य इति महागौरवमिति भावः । ननु लायस्यायामप्यसंयोगादिति किस्येन सम्प्रसारणं स्यादत आह । लावस्यायामित्यत्ति । अत एव । आदेशोऽसरमेवासंयोगादित्यस्य प्रवृत्तिस्वीकारादेव । अन्यासस्रयणस्येतियैयधिकरण्येन यद्वास्यातन्तत्फलमाह । चच्छृदतुरिति । इदम् । अभ्यासविकारे बाध्यबाधकभावो नास्तीति वचनम् । तत्रत्यमकिद्ग्रहणमत्र ज्ञापकम् । न चैवमपि ननृते इत्यादौ यथा हलादिःशेषेण तकारनिवृत्तावपि पुनरुरदत्वे कृते लक्ष्यभेदेन हलादिःशेषेण रेफनिवृत्तिर्भवति तथा चच्छदतुर्विच्छिदत इत्यादौ तुकोऽपि निवृत्तिः स्यादिति वाच्यम् । तुगत इत्यादिसूत्रारम्भसामर्थ्यात्अभ्याससंज्ञाप्रवृत्तिकाले साक्षात्स्थानिद्वारा वा सन्निहिततद्धलामेव तेन निवृत्तिस्वीकारेणादोषात् । अत एव । उरदत्यस्य परनिमित्तत्वसिद्धयर्थमेव । प्रत्ययालोपो भविष्यतीति । अभ्याससंज्ञाया द्वित्वोत्तरप्रवृत्त्या द्वित्वस्य च प्रत्ययसद्भाव एव प्रवृत्तेरिति भावः । अनुपपादनादिति । आद्यन्तसमासेरङ्गाधिकारे तु भाष्यप्रामाण्येनाङ्गसंज्ञायाः प्रत्ययनिमित्तकत्वादङ्गसंज्ञाद्वारोरदत्यस्य परनिमित्तत्वमिति भावः । अन्याङ्गसंज्ञाद्वारा निमित्तत्व-

मित्यस्याङ्गसंज्ञाम्प्रति प्रत्ययस्य निमित्तत्वादुरदत्त्वम्प्रतिनिमित्तत्वमित्यर्थो वाच्यः स च न युक्तः । प्रत्ययस्य साक्षान्निमित्तत्वानुपपादनादत आह । प्रत्यय इत्यस्यावृत्त्येति । ननु न लुमतेतिनिषेधात्कथमजर्घा इत्यादीत्यत आह । अजर्घा इत्यादि । पूर्वोक्तं व्याख्यानमाक्षेपपरतया व्याख्यानाभिप्रायेण वस्तुत आक्षेपाभावेपि न क्षतिरित्याह । वस्तुत इति । दिगिति । प्रत्ययपदस्यावृत्त्यभावेपि न क्षतिः । प्रत्ययबुद्धिनिमित्तकत्वेन प्रत्ययनिमित्तकत्वमासप्तमसमासेरङ्गाधिकारव्यवस्थापनपरभाष्यप्रामाण्यादित्यादि द्रष्टव्यम् । एकाच उपदेशेऽनुदात्तात् । मूले उभयान्वयीति । पूर्वान्वयफलम्बिभित्सति चिकीर्षतीत्यादि । उत्तरान्वयफलङ्कर्तुं हन्तुमित्यादि । अत्र नित्स्वरेणाद्युदात्तत्वेपि निषेधसिद्धिः । न च विहितविशेषणेन निर्वाहः । प्रत्ययोत्पत्तेः प्राग्धातुस्वरस्य दुर्वारत्वेनासम्भवापत्तेः । उपदेशपदस्योत्तरत्रान्वयस्यावश्यकत्वे एकाज्ग्रहणस्य किम्प्रयोजनमित्यस्य प्रश्नग्रन्थस्याभिप्रायम्प्रकटयितुमाह । नन्विति । तत् । एकाज्ग्रहणम् । तत्सामर्थ्येन । एकाज्ग्रहणसामर्थ्येन । उपदेशमात्र इति । अत्र मात्रपदं कात्स्न्यें । आद्युदात्तनिपातनेन । यथादेशे आद्युदात्तनिपातनेन । यङ्लुग्व्यावृत्तिरिति । यङ्लुको निषेधनिमित्तत्वव्यावृत्तिरित्यर्थः । इदमेव कथमत आह । स्मरन्तीति । ननु यदि एकाच्पदघटितत्वेन निषेधसूत्रस्य यङ्लुक्यप्रवृत्तिः फलन्तर्हि अथ इत्येवेत्युत्तरग्रन्थासङ्गतिः एकग्रहणाभावेऽस्य सूत्रस्यैकाच्पदघटितत्वाभावादत आह । तद्वदर्थकेनेति । एवञ्च श्लिपाशपेतियचने यत्रैकाज्ग्रहणमित्यस्यैकाजर्थकपदग्रहणमित्यर्थः । अन्यथा । यङ्लुकि निषेधाप्रवृत्तिरूपफलास्वीकारे । तद्वैयर्थ्यमिति । एकाजर्थकस्याचङ्गतिपदस्य वैयर्थ्यमित्यर्थः । ननु दथाद्युदात्तेति । अत्र यथावित्युपादानेनाद्युदात्तत्वनिपातनवादिमते यथादेशो हलन्त इत्यभिमानम्प्रकटीकृतम् । तत्सामर्थ्यम् । आद्युदात्तनिपातनसामर्थ्यम् । गौरवादिति । निपातनसामर्थ्येन निषेधाप्रवृत्तिय-

वपने गौरवादित्यर्थः । ननु मत्वर्थे लक्षणास्वीकारे शक्यतावच्छेदकारोपो लक्षणेति सिद्धान्तविरोध इत्यत आह । समुदाय इति । एकपदाभावेपि प्रकृतसूत्रे परिभाषाप्रवृत्तिमुपपादयति । शब्दविशेषमिति । ननु वधादेशस्य हलन्तत्वापूर्वोक्तेति कथमेकग्रहणे कृतेपि सूत्राप्रवृत्तिरत आह । हनो वधेतीति । अत एव । वधादेशस्यादन्तत्वादेव । वृद्धिर्नेति । आर्द्धधातुकीयाः सामान्येन भवन्तीत्युक्तत्वेनार्द्धधातुकस्य सिचो विवक्षायां वधादेशे ततः सिचि अतो लोप इत्यल्लोपेऽचः परस्मिन्नित्यल्लोपस्य स्थानिवत्त्वेन वृद्धिर्नेत्यर्थः । निष्फलमिति । अत एव पूर्वमभिमानादित्युक्तम् । मौलग्रन्थयोजनां कृत्वा भाष्यसम्मतरीत्यैकपदस्य प्रयोजनमाह । वस्तुत इति । आरोपितार्थबोधकत्वे । लाक्षणिकार्थबोधकत्वे । तात्पर्यग्राहकाभावेनेति । न च पचादीनामनुदात्तानाम्पाठसामर्थ्यमेव तात्पर्यग्राहकम् । पक्मुगित्यादावनुदात्तश्रवणस्य फलस्य वक्तुं शक्यत्वात् । धातोरन्तोदात्तत्वविधानन्तु गोपायतमित्यादौ चरितार्थमिति भावः । आवश्यकत्वेपीति । एवञ्चैकग्रहणसामर्थ्यादिति योक्तिः सा विहितेति भावः । कथन्तर्ह्यवधीदित्यत्रेट्सिद्धिरित्यत आह । अवच्छेदकावच्छेदेनेति । उपदेशत्वावच्छेदेनैकाचो ग्रहणादित्यर्थः । इयं रीतिः । अवच्छेदकावच्छेदेनान्वयरूपा रीतिः । न च घसिरप्युपदेश इति । एतेनोपदेशत्वावच्छेदेन हलादित्वं विशेषणं विवक्षितमिति सूचितम् । न तु स्थान्युपदेश इति । एवञ्च वधादेशस्य साक्षादुपदेशासम्भवात्तस्मिन्ननेकाच्त्वान्न निषेध इति भावः । भाष्य इति । आद्ये जघसिषेत्यत्रेट्प्रतिषेधमाशङ्क्य सिद्धन्तु हलादिग्रहणादित्युक्तम् । ततस्तदावश्यं वक्तव्यम् । अद्घसी प्रयोजयतः । अद्घसी न प्रयोजयतः । किङ्कारणम् । सामान्यनिट इत्युच्यते मेटौ घेमौ तासौ । अदिस्तर्हि प्रयोजयति । आदिष । क्रियमाणेपि वै हलादिग्रहणेऽत्र प्राप्नोति । जघसिष । एषोपि हलादिः । तस्य चाभावात्तासौ । एवं समाधाय ननु च यस्तासौ नास्मि अनिट्य-

वौ तासौ भवतीति शङ्कितम् । स्थान्युपदेशमादायाजन्तात्थलावनिडिति भावः । तत उक्तस्यैवं विधीयते थस्तासावनिडिति कथन्तर्हि थस्तासा- वस्ति अनिट् चेतीत्युक्तम् । एतेन घसेः साक्षादुपदेशसम्भवात्तस्य च ता- सावभावाच्च निषेध इति ध्वनितम् । अन्ये । ऋतो भारद्वाजस्येत्यस्य नि- यमार्थत्वमुपवर्ण्य जहर्थेत्यत्र गुणे रपरत्वे च कृतेऽनजन्तत्वान्निषेधस्या- चस्तास्वदित्यस्याप्राप्तौ ऋत इति सूत्रमुपदेशपदसम्बन्धेन विधायकम्भ- विष्यतीत्याशङ्क्योपदेशपदस्याचस्तास्वदिति सूत्रे सम्बन्धेन ऋत इत्यस्य नियमार्थत्वमुपपादितं योगविभागेन । अचस्तास्वत्थल्यनिटो नित्यमुप- देशे । ततः अत्वतः । अत्वतश्चोपदेश इति । अत्र कैयटः । आदेशोपदे- शोऽप्याश्रीयते न तु स्थान्युपदेश एवेति । अत एवाजत्यादेशस्य वीशब्द- स्य चक्षिङादेशस्य ख्यो विकल्पस्थलि भवति । विवेथ । विवयिथ आचख्यि- थ । आचख्याथेति । एतेनादेशोपदेशमादाय कार्यसिद्धिः स्पष्टमेव प्रतिपा- दिता । प्राचीनोक्तदूषणस्य सिद्धान्तमाह । परे त्विति । वधिरेवेति । ए- वञ्चैकाज्ग्रहणस्य चारितार्थ्यादेतदेकाज्ग्रहणेन ज्ञाप्यत इत्यसङ्गतम् । उत्तरसूत्रेऽपि तच्चरितार्थमित्याह । किञ्चेति । अत एव । एकाज्ग्रहणा- नुवर्तनादेव । स्तीर्णमित्यादाविति । आदिना स्तीर्त्वेत्यस्य सङ्ग्रहः । यद्यपि तद्वचनव्याख्यात्रा ज्ञाप्यत इत्यस्यैकदेशानुवृत्त्या सत्यम्बोध्यते इ- त्युक्तन्तदपि न तस्य वचनस्यैवाभावादित्याह । श्तिपा शपेतीति । यद्य- पीदं वचनम्भाष्ये न पठितम् तथापि भाष्यकृता तत्तत्त्वन्ध्वनितमित्यभि- प्रायेणाशङ्कते । न चेति । तत्र । यङ्लुकि । इडिष्ट इति । यदि यङ्लु- कि प्रतिषेध इष्टः स्यात्तदा यङ्लुकीट्प्रतिषेधो वक्तव्य इत्यपि भाष्यकृ- तोक्तं स्यादिति भावः । ननु यङ्लोपे वेभिदितेति भाष्येणैव यङ्लुकि इट्प्रवृत्तिप्रकार उक्त इत्यत आह । यङ्लोप इत्यादि भाष्यमिति । न यङ्लुग्विषयमिति । किन्तु यङ्लोपविषयमेवेति शेषः । एकाच उपदेश इति सूत्रे भाष्ये एकाज्ग्रहणस्य वधिषीष्टेत्यत्रेट्प्रतिषेधाभावरूपज्ञापी-

लपने गौरवादित्यर्थः । ननु मत्वर्थे लक्षणास्वीकारे शक्यतावच्छेदकारोपो लक्षणेति सिद्धान्तविरोध इत्यत आह । समुदाय इति । एकपदाभावेपि प्रकृतसूत्रे परिभाषाप्रवृत्तिमुपपादयति । शब्दविशेषमिति । ननु यथादेशस्य हलन्ततापूर्वोक्तेति कथमेकग्रहणे कृतेपि सूत्राप्रवृत्तिरत आह । इनो यथेतीति । अत एव । यथादेशस्यादन्तत्वादेव । वृद्धिर्नेति । आर्द्धधातुकीयाः स.मान्येन भवन्तीत्युक्तत्वेनार्द्धधातुकस्य सिचो विवक्षायां यथादेशे ततः सिचि अतो लोप इत्यल्लोपेऽचः परस्मिन्नित्यल्लोपस्य स्थानिवत्त्वेन वृद्धिर्नेत्यर्थः । निष्फलमिति । अत एव पूर्वमभिमानादित्युक्तम् । मौलग्रन्थयोजनां कृत्वा भाष्यसम्मतरीत्यैकपदस्य प्रयोजनमाह । वस्तुत इति । आरोपितार्थबोधकत्वे । लाक्षणिकार्थबोधकत्वे । तात्पर्यग्राहकाभावेनेति । न च पचादीनामनुदात्तानाम्पाठसामर्थ्यमेव तात्पर्यग्राहकम् । पक्मुगित्यादावनुदात्तश्रवणस्य फलस्य वक्तुं शक्यत्वात् । धातोरन्तोदात्तत्वविधानन्तु गोपायतमित्यादौ चरितार्थमिति भावः । आवश्यकत्वेपीति । एवञ्चैकग्रहणसामर्थ्यादिति योक्तिः सा विहितेति भावः । कथन्तर्ह्यवधीदित्यत्रेट्सिद्धिरित्यत आह । अवच्छेदकावच्छेदेनेति । उपदेशत्वावच्छेदेनैकाचो ग्रहणादित्यर्थः । इयं रीतिः । अवच्छेदकावच्छेदेनान्वयरूपा रीतिः । न च घसिरद्युपदेश इति । एतेनोपदेशत्वावच्छेदेन हलादित्वं विशेषणं विवक्षितमिति सूचितम् । न तु स्यात्न्युपदेश इति । एवञ्च यथादेशस्य साक्षादुपदेशासम्भवात्तस्मिन्ननेकाच्त्वात्र निषेध इति भावः । भाष्य इति । आद्ये जघसिथेत्यत्रेट्प्रतिषेधमाशङ्क्य सिद्धन्तु हलादिग्रहणादित्युक्तम् । ततस्तदावश्यं वक्तव्यम् । अद्यशौ प्रयोजयतः । अग्रशौ न प्रयोजयतः । किङ्कारणम् । तावानिट इत्युच्यते नेटौ चेमौ तासौ । अदिस्तर्हि प्रयोजयति । आदिथ । क्रियमाणेपि वै हलादिग्रहणेऽत्र प्राप्नोति । जघसिथ । एषोपि हलादिः । तस्य चाभावाद्यासौ । एवं समाधाय ननु च यत्तासौ नास्ति अनिट्त्य-

स्तु मूर्द्धन्योच्चारणे क्लिष्टमर्थमित्यत आह । षकारोच्चारणमिति ॥ वेविषीध्व-
मिति । विष्धातोरिदं रूपम् । इदम् । अङ्गग्रहणम् । अनित्यत्वस्य फल-
माह । तेनेति । नन्विण इतिविहितार्थान्वय्यस्त्विति वाच्यम् । लिङ्सी-
ध्वा धुक्षीध्वमित्यत्र ढत्वषत्वयोरपि सतोर्मूर्द्धन्यापत्तेः ॥ केचिदिति॥ अ-
निनस्मन्निति परिभाषा वाचनिकी । विभाषेट इत्युत्तरसूत्रेऽनर्थकस्यैव
षीध्वमः सम्भवात्प्रकृतसूत्रेऽप्यनर्थकस्य ग्रहणसम्भवः स्यादित्यङ्गादित्युक्त-
मिति सिद्धान्तोऽनेन सूचितः । यत्तु कार्मस्ताच्छील्य इति ब्राह्मोऽजाता-
विति च टिलोपनिपातनमस्या ज्ञापकमन्यथा कर्मन्ब्रह्मन्नित्यादयोर्मन्निन्नन्त-
तया तदवयवयोरन्नोरनर्थकतयाऽन्निति प्रकृतिभावाप्राप्त्या नस्तद्धित इत्ये-
व टिलोपे सिद्धे किन्निपातनेनेति ॥ तन्न । अनर्थे तयोर्ज्ञापकत्वसम्भ-
वेऽपीनाद्यंशे तस्यासम्भवात् ॥ एकदेशानुमत्या ज्ञापकत्वमित्यस्य च वा-
चनिक्याः परिभाषाया एकदेशानुमत्या इहाश्रयणमित्यत्रैव पर्यवसानम् ॥
न च तयोः सूत्रयोरनिनस्मन्निति परिभाषाज्ञापकत्वमिति न ब्रूमः कि-
न्त्वर्थवत्परिभाषाऽनित्यत्वबोधकतां वदामः । एवञ्चानिनस्मन्नित्यर्थसि-
द्धमित्यस्या वाचनिकत्वन्निराकृतमिति वाच्यम् ॥ अन्तर्बहिर्भ्याञ्च लोम्नः
स्यान्मोऽकार इतिनिर्द्देशानर्थविशिष्टरूपोपादानेऽप्युपस्थितार्थस्य विशेष-
णत्वात्स्त्रीकारेणानुपहतेऽनर्थकस्यापि ग्रहणे सिद्धे तयोः सूत्रयोश्चारिता-
र्थ्यसम्भवेन मूलशैथिल्यात् ॥ गौरवाज्ज्ञापकत्वन्न सम्भवतीत्याशयेन श-
ङ्कते । यद्यपीति ॥ एकस्यैव । भुवः ॥ फल्गुर्वचनादिति । फल्गुः पाणि-
नेर्वचनात्स्मृत इति वचनादित्यर्थः ॥ नन्वेकादेशापवादत्वकथनमसङ्गत-
मत आदेरित्यस्य हलादिःशेषात्पूर्वम्प्राप्तिस्तदानीमेकादेशाप्राप्तेरिति चे-
न्न । अभ्यासविकारे बाध्यबाधकभावाभावेऽपि पूर्वम्प्रवृत्तौ पूर्वोपस्थित-
त्वस्य नियामकत्वमन्यत्र दृष्टमिति हलादिःशेषे कृते एकादेशस्य प्रा-
प्तेरेकादेशप्राप्तियोग्यविषयेऽचारितार्थ्येनापवादत्वाक्षतेः । प्रकृते-
ऽपूर्वप्रवृत्तिक्रममाह । अभ्यासविकार इति ॥ न चात आदेरित्यस्यैकादे-

जनमभिधायाभिहितमेतदपि नास्ति प्रयोजनम् । किङ्कारणम् । वच
ट्प्रतिषेधः सन्निपात एकाच्त्वात् प्रकृतेश्चानुदात्तत्वादिति । सन्निपा
इत्यस्य प्रतिषेधप्रवृत्तिकाल इत्यर्थः । तत उभयविशेषणमुपदेशग्रहणम
रित्वत्यभिप्रायेण किम्पुनः कारणमेवं विज्ञायते उपदेशेऽनुदात्तादेकाच
श्रूयमाणादिति यङ्लोपार्थम् । यङ्लोपे मा भूदिति बेभिदिता बेभिदि
तुम् । इत्युपक्रमे उक्तम् । उपसंहारग्रन्थे च स्थाने द्विर्वचनं सन्यङोरि
त्यस्य स्थानषष्ठीत्वं स्वीकृत्य भिद्यशब्दस्य द्वितीयाजवधिकस्य स्था
भिद्भिद्य इत्यादेशे सम्प्रमुग्धत्वात्प्रकृतिप्रत्ययस्य नष्टः स भवति य
स एकाजुपदेशेऽनुदात्त इत्युक्तम् । एवमुपक्रमोपसंहारबलेनास्य यङ्लोप
विषयत्वं स्पष्टमेव लभ्यते । ततोऽग्रे द्विष्प्रयोगो द्विर्वचनमिति पक्षे दो
षोऽस्त्येवेत्यभिधायाल्लोपस्य स्थानिवद्भावाद्दूरवधानमेवेति समाधानान्त
कृतमिति । भाष्यस्थलोपपदस्य लुक्परत्वमप्यस्त्वित्यभिप्रेत्याप्याह
किञ्च तस्येति । न्यूनतापत्तिरिति । अत एकाज्ग्रहणघटितत्वान्निषेध
सूत्रस्य यङ्लुक्यप्रवृत्तिर्ध्वनिता सा च श्तिपा शपेतिपरिभाषायाञ्च एवे
ति परिभाषाभाष्यकारसम्मतेति शेषः । भाष्यन्यूनताम्परिहरति । इङ्
पच इति । अन्यथा । एकाज्ग्रहणस्य परिभाषासत्त्वबोधनद्वारा यङ्लुगि
निषेधाप्रवृत्तिबोधकत्वे । निरालम्बनतापत्तेरिति । एकाज्ग्रहणस्य क
तार्थत्वात्प्रश्नस्य निरालम्बनत्वम्परिभाषाबोधनार्थमित्यनभिधाय जाग
त्यर्थमिति विशेषाभिधानस्य च निरालम्बनत्वमित्यर्थः । परिभाषाभा
वेपि परिभाषाभाष्यप्रयोजनान्यथासिद्धिमाह । अजपां इत्यादि । छान्द
सत्वादेव । यङ्लुकश्छान्दसत्वादेव । भाषायान्त्विति । तुना भाषाया
सर्वत्र यङ्लुक्सत्त्वमिति ध्वनितम् । अभाव एवेति । भाष्ये तत्र शङ्का
समाधानयोरकरणात् । इत्याहुरिति । भाष्यानुसारिण इति शेषः । इण
वोध्वम् । इण्कोरिति वर्तमाने इण्ग्रहणम्प्रकृतसूत्रे तदसम्बन्धबोधनाय
तेन कथमांस्यरार्थं यत्र तत्र पक्षीध्वं ह्यसीध्वमित्यादौ न । ननु वोध्वमित्येवा

कृत्प्रत्यय इत्यस्य लाक्षणिकप्रकारं खण्डयति यस्त्विति ॥ घादौ परे पदाव-
यवस्येत्यर्थे यचो धावतीत्यादौ दोषस्तदवस्थ एवेति प्रत्यासत्ति-
न्यायानुसरणेनैवमपि पयोधावनमित्यादावपि प्राप्नोतीत्याशयेनोक्त
व्याख्यानेन चेति । चकाधीत्याद्यलक्ष्यपदरूपलक्ष्यदर्शनमूलकव्याख्या-
नेनेत्यर्थः ॥ तच्च तिक्लिष्टमिति । अङ्गपदस्यात्मकविशेषणविशिष्टस्य
लाक्षणिकेनेत्यर्थकत्वेनोक्तमतिक्लिष्टमिति ॥ ततः । तदपेक्षया । वचनमेव ॥
सञ्ज्ञाविवचनमेवेत्यर्थः ॥ आमेतः । लोट एकारासम्भवादाह ॥ लोडादेशे-
ति ॥ अडजादीनाम् ॥ अत्र भाष्यकृता अजादीनामटा सिद्धमित्युक्तम्
तस्यायमाशयः । आटश्चेत्यस्य स्थानेऽटश्चेति कार्यम् । आडागम-
विधानन्तु न कार्यम् । सामान्यसूत्रेणैवाटः सिद्धेः । उपसर्गादृतीत्य-
तो धाताविस्यस्यापकर्षकत्वाऽटो धात्ववयवेऽचीति व्याख्यानेनाऽप्यपोह-
सनित्यत्राड् गार्ग्यगालवयोरित्यस्यापि न वृद्धिः ॥ बहुश्रेयसी इत्यत्रास्मि-
न्पक्षे वृद्धिरेचीत्यनेन वृद्धिः । तत्राट् तु वक्तुमशक्यः । अतो गुण इति
पररूपापत्तेः ॥ न चाटो विधानसामर्थ्यान् ॥ बहुश्रेयस्यामित्यादौ
नुड्बाधनेन चरितार्थ्यात् । न चैवमप्यस्वपोऽश्मीत्यत्र वृद्धिः प्राप्नोति ।
अटः सिप्स्थानिकोकारेणैकादेशे पूर्वान्तवद्भावेनाट्त्वाद्धात्ववयवाच्पर-
त्वाच्चेति वाच्यम् । आदित्यनुवर्त्याकाररूपादटोऽचि परे वृद्धिरित्यर्थेना-
दोषात् ॥ न चाटश्चेत्यस्य ऐन्दिददित्यत्र चरितार्थतया आतीदित्यादाव-
तो गुण इति पररूपापत्तिरिति वाच्यम् । पुनर्वृद्धिविधानार्थेनाटश्चेतिच-
कारेण तस्य बाधनात् । आस्तामासन्नित्यत्र त्वस्मिन्पक्षे न दोषः । लाघ-
स्याभावमेवाडागमेऽन्तरङ्गत्वाद्वृद्धौ श्नसोरित्यस्याप्रवृत्तेः । वेदे आनडित्य-
त्र दीर्घश्रवणन्तु व्यत्ययो बहुलमित्यनेन सिद्ध्यति ॥ अत्र के चित् ॥ एवं
सति यत्पनाणेनेण्धातुनिरूपणप्रस्तावेऽतो गुण इत्युत्तरमाट इति कर्त्त-
व्यन्तेनाटीदित्यादौ न पररूपमिति शेखरग्रन्थेनास्य ग्रन्थस्य विरोधः सत्र
माट इत्युक्तौ बहुश्रेयस्यै अत्राप्यडागमोऽस्तु पररूपन्तु न भविष्यति । ना-

ह्यपवादत्वकथनादपवादविषये उत्सर्गाप्रवृत्तेः कथमेकादेश इति वाच्यम् ॥ अपवादपदस्य निरवकाशत्वेन बाधकपरत्वात् । येन नाप्राप्तिन्यायेन बाधस्तु वक्तुं न शक्यः । उत्सर्गे कृतेऽपि यत्रापवादत्वेनाभिमतस्य प्राप्तिस्तद्विषयतायास्तस्य न्यायस्य स्वीकारात् । एवञ्चात आदेरिति कृतेऽप्येकादेशो भवत्येव ॥ अपवादत्वव्यवहारस्तु यदि द्विस्स्यात्तदा हलादिः शेषे कृते पररूपं स्यात् । कृते त्वस्मिंस्तत्प्राप्तिर्नेत्येतावता । यच्चात्र दण्डिनाऽभिहितमपररूपापवाद इति ग्रन्थो नामधातुत्वेन औज्जुरिति रूपव्युत्पादनपरग्रन्थेन विरुध्यते तत्र हि कास्प्रत्ययादिति सूत्रे प्रत्ययग्रहणमपनीयानेकाज्ग्रहणं कर्तव्यमित्युक्त्वा नाम् । किन्तु द्वित्वम् । अतो गुणे । अत आदेः । औः । वृद्धिरित्युक्तमिति ॥ तन्नेदं वक्तव्यन्तस्य ग्रन्थस्य नाथशोक्तप्रक्रियाभिप्रायकत्वात् । अपवादो यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यते । तच्चारितार्थ्यञ्चानड्डुत्स्वत्र । अत्र ह्यादेरचः परस्य द्वितीयस्यैकाचोऽभावेनाजादेरित्यस्याप्रवृत्तेर्नन्द्रा इत्यस्याप्यप्रवृत्तावड्डुत्स्य द्विर्वचने हलादिः शेषेण सह युगपत् पूर्वमेव यात आदेरिति दीर्घः । अभ्यासविकारे बाध्यबाधकभावो नास्तीत्यस्य युगपत्प्रवृत्तौ न्याय्यक्रमेण वा समावेश इत्यत्र तेषां तात्पर्यम् । पररूपापवाद इति ग्रन्थस्तु तदभावे पररूपस्य तत्सत्त्वे प्राप्तिमात्रेण ज्ञेय इति ॥ अधिकमग्रे व्युत्पादयिष्यते । के चिदिति । यङ्लुको भाषायामपि प्रवृत्तिरित्यादिनः । धिच ॥ एतद्व्याख्यानावसरे मूलकृता धातोः प्रत्यय इति यद्व्याख्यातन्तल्लाभोपायमाह ॥ अत एवेति । धातोः प्रत्यय एव लोपस्येत्यादेय । अत्र भाष्यकृता चलीति वक्तव्यमित्युक्तम् । तच्च प्रत्यय एवेति प्रत्यय इत्यस्य लाभः । ननु वार्णिकेऽकदेशिना सिचो ग्रहणं कर्तव्यत्वेन सिचः सकारस्यैव लोपो भविष्यति यथा धायतीत्यत्र तु न सिप् । सिच प्रत्ययपर एवेति वहीव्याख्यार्थो लाभ इति ॥ सा रूपद्वेक्तिः चकारोपयेवेष्यत इति भाष्यविरोधादित्याह ॥ चचापीति ॥ छिद्रो-

तेषान्निरूपणावसरे ऋदन्ताश्च जागृवृङ्वृञ् इत्युक्तन्तत्र जागृप्रभृतीनां ह्रस्वऋवर्णान्तत्वात्पर्युदासेन तादृशानामेव ग्रहणम्। यौतिः। यु मिश्रणे। रौतिः रु शब्दे। रुङ् गतौ इति च। निरनुबन्धकपरिभाषालुग्विकरणपरिभाषाभ्याम्। तेन। एकाच इति कथनेन। न चैकाच एव चेदनुदात्तत्वन्तदोर्णुञ्धातोरनेकाच्त्वादनुदात्तत्वन्न स्यादित्यूर्णुत इति न सिध्यतीति वाच्यम्। ऊर्णोतेर्नुवद्भावो वाच्य इति वार्त्तिकबलेन तस्य सिद्धेः। न च नुवद्भावविधानादेकाच्त्वमेवातिदेशात्कल्प्यतामिति वाच्यम्। यथा तस्यैकाच्कल्पना तथा नुपर्युदासस्यापि प्राप्तिसत्त्वात्। ऊर्णुत ऊर्णुतवानिति तु श्र्युकः क्कितीत्यनेन सिध्यति। ऊर्णुनावेत्यत्राभावयत्। अत एवोर्णोनूयत इत्यत्र यङ्। भाष्ये त्वनुबन्धरहित इति। एवञ्च शक विभाषित इत्यस्याप्यनुदात्तत्वम्प्राप्नोति। डुपचषेति। अत्रैवकारेण पच व्यक्तीकरण इत्येतद्व्यावृत्तिः। न च तदनुबन्धकपरिभाषया तस्यैव ग्रहणं स्यादिति शङ्क्यम्। तस्याऽन्यतरानुबन्धोच्चारण एव प्रवृत्तेरत एवात्र पच् इत्यनुबन्धरहित एवोच्चारित इति। सृजिरिति। सृज विसर्ग इति। खिदिरित्यनेन खिद दैन्ये खिद्यतेः खिनत्तेः खिन्दतेश्च ग्रहणम्। विद्यतिः विद सत्तायामिति विन्द्द विद विचारणे। यद्यपि भाष्य इति। तत्र हि युधिबुधीत्येव पाठात्। माधवादिप्रामाण्यादिति। तेन बोधतेर्न ग्रहणमिति सिद्धम्। अत एव। तृप्यतिदृप्यतीतिपाठादेव। यद्यप्यनिटां स्वरूपदर्शनपरभाष्ये तृपिदृपीत्येव पठितम्। तथापि शे मुचादीनामिति सूत्रस्थभाष्यीयप्रयोगदर्शनादिह श्यना निर्देशः कृत इत्याह। शे मुचादीनामितीति। एतेन तुदादिगणपठितयोर्व्यावृत्तिः। तप् इत्यनेन तप् सन्तापे। तप ऐश्वर्ये। तप दाहे इत्यपि णिजभावपक्षे गृह्यते। भाष्ये तपीतिसामान्यत एव निर्देशात्। तिप् तिपृ क्षरणे। तिप क्षरणे। तृप प्रीणने। पट्टृ हर्षविमोचनयोः। यद्यप्यनयोरिड्विकल्पो भवति रधादिभ्यश्चेत्यनुदात्तत्वमनयोरनुदात्तस्य चर्दुपधस्यान्य-

ट इति निषेधात् । एवञ्च वक्तुमशक्य इत्युक्तसङ्गतिरिति ॥ अत्रेदमूहनीयम् । अत्राट् वक्तुमशक्य इति ग्रन्थो लाघवानुसारी । नुड्बाधनार्थमडागमस्यावश्यकत्वे तत्र आकारोच्चारणेनैव पररूपाभावे सिद्धे तदर्थन्नाट इतिवचनान्तरन्त कार्यमिति । आटीदित्यत्र पररूपाभावस्तु उस्योमाङ्क्ष्वाटः प्रतिषेध इत्येतद्वार्तिकान्यथासिद्धिकरणार्थञ्चकारस्य पुनर्वृद्धिकरणार्थत्वकथनस्यावश्यकत्वे तेनैवातो गुण इति पररूपाभावस्य सिद्धौ तदर्थं योगारम्भ एव गौरवदोषमासादयतीति ॥ आदादिको नाट इति ग्रन्थस्तु विशिष्याट्शब्दोच्चारणेन या वृद्धिस्तस्याः प्रतिबन्धकं यत्पररूपन्तन्निराकरणं यथा भवति तथा यत्नः कार्यः स च पुनर्वृद्धिविधानरूपो वा स्पष्टप्रतिपत्त्यर्थन्नाट इति वाचनारम्भरूपो वा कार्य इत्येतावन्मात्रतात्पर्यको बोध्यः ॥ एवञ्चोस्योमाङ्क्ष्वाटः प्रतिषेध इतिवार्तिकान्यथासिद्धिकारकम्पुनर्वृद्धिविधानन्तु तद्विषयकमेवेति तात्पर्यम् । अयञ्च ग्रन्थो लाघवानादरेण बोध्य इति । ननु नविभक्ताविति निषेधाद्वदादेशावयवतकारस्य कथमित्संज्ञेत्यत आह । तकार इति ॥ युगपदेवेति । पूर्वोक्ता युक्तिस्तु लक्ष्यभेदाल्लक्षणभेदाभिप्रायेणेयञ्चादेशविधायकलक्षणभेदाभावमाश्रित्य मूले एधिषीष्वमिति । अत्रेटो ध्वंघान्दसत्वतयाऽङ्गस्येणन्तत्वाभावेन मूर्द्धन्याभावः ॥ इति मते त्विति ॥ विभाषेट इत्युत्तरसूत्रे इणः परस्येटो ग्रहणेन तत्रानुवर्त्तमानमिणिति पदमन्त्यमिड्व्यतिरिक्तपरमिति स्वीकार्यमिति पूर्वसूत्रेऽपि तथैव युक्तमिति तेषामाशयः । अस्वरसस्येति ॥ भाष्यानुपलभ्यमानत्वमास्वरसत्वबीजम् । ननु भाष्यकृतोवर्णान्ता अनुदात्ता इत्युक्तमतोऽत्रोदन्तपर्युदासः कथमत आह । दीर्घ इति । इडभावनिपातनमिति । एवञ्च दीर्घोकारान्तपर्युदासे तदेव सामर्थ्यादुक्तम्भवति । ऋदन्तपर्युदासे मानन्तु वृतो वेत्यनेन ऋदन्तात्परस्येटो दीर्घविधानसत्त्वा तरीतेत्यभियुक्तोदाहरणञ्च । तथा भाष्ये ये पुनरनुदात्ता इतिप्रसङ्गकृत्वा-

पेव यथा स्याद्यदन्यत्प्राप्नोति तन्मा भूदित्युक्तम्भाष्ये तेनास्य चिण् बाधकत्वाभावात् । अनार्ष इति । क्वचिद्दृश्यते सोऽपपाठ इत्यर्थः । तत्र हेतुमाह । मृष इति । माधवादिप्रामाण्यादिति । मृषीत्येव भाष्ये पाठादिति भावः । कृप्धातुस्तु कृप् विलेखन इति भौवादिकस्तौदादिकश्च गृह्यते कृपिकर्षतीतिव्याघ्रभूतिनोक्तत्वात् । विपिधिपी जौहोत्यादिकरौधादिकौ च गृह्येते । पुष्धातुर्यद्यपि भाष्ये न पठितस्तथापि माधवादिप्रामाण्यान्निर्दिष्टः परन्तु दैवादिक एव न तु भौवादिक इत्याह । एवं विप् विप्रयोग इति । क्र्यादिषु पठितोऽपि । माधवस्तु जिप विपेति दण्डकपठितस्यापि भौवादिकस्य ग्रहणमित्याह विनिगमनाविरहात् । यततिर्भ्वादिरिति । यमनिवास इति । तत्र प्रमाणमाह । प्रसारणीति । सम्प्रसारणीत्यर्थः । विनापि प्रत्ययमिति संशब्दलोपादेयन्निर्देशः । दुह्धातुर्दुह प्रपूरण इति निर्दिष्टोऽदादौ स एव ग्राह्यो न तु तुहिर् दुहिर् उहिरर्दने इति भ्वादिः । शक्लृ इतीति । यद्यपि शकधातुस्वरूपनिरूपणं पूर्वत्र कृतमेव तथापि गणान्तरनिर्दिष्टानां केषांचिद्धातूनामिह यादृशानुपूर्व्या यदर्थनिर्देशो यस्मिन्नर्थेऽङ्कुतस्तन्निरूपणं करिष्यमाणं ज्ञात्वा शकधातोः पुनः स्मरणेन सिंहावलोकनन्यायेन पुनस्तत्र विशेष उक्तः ॥ भाष्य इति । तत्र हि शकिः कवर्गान्तानामित्येवोक्तम् । एवञ्च कान्त एक इति नव्योक्तमसङ्गतमिति भावः । विद्यतिरिति । अत्र विद्यतिर्विनदितिनिर्देशेन श्यन्नेव गृह्यते इति भ्रान्तिः स्यादिति विद्लृलाभ इति तुदादौ निर्दिष्टो न व्याख्यर्थः किन्तु विद ज्ञान इत्यदादिरिति दर्शयति ॥ इति पाठ इति । इति भाष्ये पाठ इत्यर्थः । उभयोः । तौदादिकरौधादिकयोः । अत एव । पूर्वोक्तानान्त्रयाणामेव ग्रहणस्य कर्यसम्मतत्वादेव । एतेनाश्रूयमाणविकरणः सेट्क इति दर्शितम्भवति ॥ तौदादिकस्यापीति । अपिनाऽदादिपठितसङ्ग्रहः । तद्ग्रहणमेव । तौदादिकग्रहणमेव । विज्ञापा गमहनेतिसूत्रे विधिना

तरस्यामित्यमागमार्थम् । लुप् तौदादिक एव । लुप्लृ छेदन इति । तेन दैवादिकस्य व्यावृत्तिः । व्याख्यानादिति । भाष्ये लुपिलिपीति लिपिसाहचर्येण पाठमूलकव्याख्यानादित्यर्थः । श्यादेर्दिवादेश्चेति । शप उपालम्भे । शप आक्रोशे । भाष्ये शपीत्येव पाठात् । श्यना निर्देशः । श्लिष्यतय इति निर्देशः । विभक्तविहितस्येति । विभक्तेन सूत्रेण विहितस्येत्यर्थः । अङ्बाधकत्वमुक्तमिति । स चाङ् यत्र प्राप्नोति तस्यैव ग्रहणम् । अङ् च पुषादेरेव । तत्र हेतुमाह । अनिट इत्यनुवर्तनादिति । श्लिष आलिङ्गन इत्यस्य ग्रहणम् । कैयटोक्तिरपि साधिकेत्याह । दाहार्थस्येति ॥ यच्चाप्येकाच इतिसूत्रभाष्ये श्लिषिविषिति सामान्यत एवोक्तम् । तथापि श्लिष आलिङ्गन इतिसूत्रस्यानित्यप्रामाण्येन दैवादिकस्यैवानिट्त्वङ्कल्प्यत इति भावः । भौवादिकः श्रिषु श्लिषु प्रुषु प्लुषु दाहे इत्ययन्तु न गृह्यते तस्य सानुबन्धकत्वेन सेट्कत्वात् ॥ ननु श्लिष आलिङ्गन इतिसूत्रेऽनिट इत्यनुवृत्तावेव किम्प्रमाणमिति चेदालिङ्गन इति विभक्तसूत्रस्य नियमार्थत्वोपपादनपरभाष्यमेव । तथाहि तत्र हि श्लिष आलिङ्गन इतिसूत्रस्य पुषाद्यङ्बाधकत्वमुत नियमार्थत्वमितिविचारे कैमर्थक्यान्नियमो भवतीत्यनेन पुषाद्यङ्बाधकतया चरितार्थ्यमुद्भाव्योपाश्लिषज्जतु काष्ठमित्यादावपि क्सः प्राप्नोति शल इगुपधेति सूत्रेण । एवमात्मनेपदे आलिङ्गनेऽनालिङ्गने च क्सः प्रसज्येतेत्यतिप्रसङ्गमभिधाय योगविभागात्सिद्धम् । योगविभागः करिष्यते । श्लिषः । श्लिषः क्सो भवति । पुषाद्यङ्बाधनार्थम् । ततः आलिङ्गने । आलिङ्गन एव क्स इति नियमार्थमिदन्तेनोपाश्लिषज्जतु काष्ठमित्युक्तम् । अत्र भाष्ये श्लिष इत्यत्यस्याङ्बाधकत्वकथनादस्यानिट्कादेव प्राप्तिः श्लिषसूत्रेप्यनिट इत्यनुवृत्तिः सूचितेति ॥ न च विभक्तसूत्रन्दाहार्थकधातोश्चिण् प्राप्तः उपाश्लेषि कन्या देवदत्तेनेत्यत्र तत्र तद्बाधनार्थमेवास्त्विति वाच्यम् । चिण्भावकर्मणोरिति सूत्रे चिण् ते पद इति सूत्राच्चिण्ग्रहणानुवृत्त्यैव सिद्धे पुनश्चिण्ग्रहणाद्वि-

णेव यथा स्याद्यदन्यत्प्राप्नोति तन्मा भूदित्युक्तम्भाष्ये तेनास्य चिण् बाधकत्वाभावात् । अनार्ष इति । क्वचिद्दृश्यते सोऽपपाठ इत्यर्थः । तत्र हेतुमाह । गृप इति । माधवादिप्रामाण्यादिति । गृपोऽत्येव भाष्ये पाठादिति भावः । कृप्धातुस्तु कृप् विलेखन इति भौवादिकस्तौदादिकश्च गृह्यते कृपिकर्पतीत्यिष्याप्रभृतिनोक्तत्वात् । चिपिग्रिपी गोहोत्यादिकरौधादिकौ च गृह्येते । पुप्धातुर्यद्यपि भाष्ये न पठितस्तथापि माधयादिप्रामाण्यान्निर्दिष्टः परन्तु दैवादिक एव न तु भौवादिक इत्याह । एवं विप् विप्रयोग इति । क्रयादिषु पठितोऽपि । माधवस्तु जिप विपेति दण्डकपठितस्यापि भौवादिकस्य ग्रहणमित्याह विनिगमनाविरहात् । यस्तिर्भ्वादिरिति । यमनियाम इति । तत्र प्रमाणमाह । प्रसारणीति । सम्प्रसारणीत्यर्थः । विनापि प्रत्ययमिति संशब्दलोपादेवन्निर्देशः । दुहधातुर्दुह प्रपूरण इति निर्दिष्टोऽदादौ स एव ग्राह्यो न तु तुहिर् दुहिर् उहिरर्दन इति भ्वादिः । शक्ल इतीति । यद्यपि शाकधातुस्वरूपनिरूपणं पूर्वत्र कृतमेव तथापि गणान्तरनिर्दिष्टानां केषांचिद्धातूनामिह यादृशानुपूर्व्या यदर्थनिर्देशो यस्तिवृत्तावर्थद्रुतस्तन्निरूपणं करिष्यमाणं ज्ञात्वा शकधातोः पुनः स्मरणेन सिंहावलोकनन्यायेन पुनस्तत्र विशेष उक्तः ॥ भाष्य इति । तत्र हि शकिः कवर्गान्तानामित्येवोक्तम् । एवञ्च कान्त एक इति मन्योक्तमसङ्गतमिति भावः । विद्यतिरिति । अत्र विद्यतिर्विनदितिनिर्देशेन द्वावेव गृह्येते इति भ्रान्तिः स्यादिति विद्लृलाभ इति तुदादौ निर्दिष्टो न ग्राह्यस्तर्थः किन्तु विद ज्ञान इत्यदादिरिति दर्शयति ॥ इति पाठ इति । इति भाष्ये पाठ इत्यर्थः । उभयोः । तौदादिकरौधादिकयोः । अत एव । पूर्वोक्तानान्त्रयाणामेव ग्रहणस्य सर्वसम्मतत्वादेव । एतेनाशूयगणपविकरणः सेट्क इति दर्शितम्भवति ॥ तौदादिकस्यापीति । अपिनाऽदादिपठितग्रहणः । तद्ग्रहणमेव । तौदादिकग्रहणमेव । विभाषा गमहनेतिसूत्रे विधिना

रितिखण्डनैकवाक्यतया तस्यैव ग्रहणसम्भवादिति भावः । तदर्थम् । तौदादिकार्थम् । तद्रीत्या तस्येट्सहित एव प्रयोगो यथा स्यादिति निषेधाभावाय वार्तिकमावश्यकमिति तस्यानिट्त्वेनेड्रहितप्रयोग एव साध्योऽतस्तत्र प्रतिषेधेऽपीष्टापत्तिरित्यविदेरिति वार्तिके वेत्तेरेव ग्रहणम् ॥ अत एव । विन्दतेरनिट्त्वादेव ॥ एतेन । पूर्वोक्तव्याख्यानेन ॥ नवानामिहोक्तौ व्याघ्रभूतिसम्मतेर्हेतुत्वम्मूलकृता दर्शितन्तत्र न तत्सम्मतिरेव हेतुः किन्तु साधकान्तरमप्यस्तीत्याह । तेन रक्तमित्यादिना ॥ तुदधातुर्भाष्यानुक्त इतिपक्षे प्याह । तुन्नवद्वेति । स्पर्द्धापूर्वकशब्दन इति । स्पर्द्धापूर्वकशब्दोत्पत्त्यनुकूलव्यापार इत्यर्थः । फलतावच्छेदकसम्बधश्चात्र स्वप्रयोज्यध्वन्याश्रयत्वमित्यस्य सकर्मकत्वसिद्धिरिति भावः ॥ अभ्यासावयवस्य शर्पूर्वस्य खय्मात्रस्य शेषविधाने वृश्चधातावतिप्रसङ्गः स्यादिति तद्वयावृत्त्यर्थमाह । अत्रादिरिति । तदनुवृत्त्यादिः खय् इत्यर्थः सम्पद्यस्तथा सत्यसम्भवो न हि शर्पूर्वं आदिश्च भवतीत्यत आह । तत्र शरिति ॥ द्विवचनान्तेति । संख्यावाचकस्यैवैकशब्दस्य नित्यैकवचनान्तत्वनियम इति भावः ॥ नन्वेकदेशान्वये गमकत्वाभावात्कथं वृत्तिरत आह । एकदेशेति ॥ उपस्थितो लिड्येति । लिटीत्यस्यावृत्त्योभयविशेषणत्वमित्यन्ये ॥ समासे उद्देश्यविधेयभावाप्रतीतिरियादिमताभिप्रायेणाह । विशिष्टस्यादि ॥ अत्रलिटीतिप्रकृतसूत्रस्थमावर्त्यादेशस्य विशेषणमेत्वाभ्यासलोपे निमित्तमेवेति स्वीकार्यमित्यभिप्रायेण मूले किति लिटीत्युक्तम् । तत्रादेशविशेषणस्य फलन्नेमिथ मेथे इति मूल एवोपान्तनिमित्तत्वेन तदुपादानस्य फलन्तु नोक्तमत उपक्रमे भाष्योक्तन्तत्फलमाह । लिटीति किम् पापच्यत इति ॥ प्रकृतसूत्रस्य लिण्निमित्तकत्वे लिटो हित्त्वासम्भवेन कितीत्यस्यैव सम्बन्धोऽर्पितः । लिटीत्यस्यानुवृत्त्यै तु हितीत्यपि वक्तुं शक्यमिति भावः । न च पापच्यत इत्यत्र दीर्घोऽचमेत्यभ्यासस्याविध्यत इति वाच्यम् । अभ्यासवि-

कारे बाध्यबाधकभावो नास्तीत्येत्वस्य कृतेऽपि दीर्घत्वं प्राप्तः। एतदेवोपपादयति। अभ्यास इत्यादिना। प्राप्नुत इति। अत्र प्राप्नुत इत्युपादानेन सम्भवमात्रेणैतत्प्रयोजनकं न तु तद्युक्तमिति ध्वनितम्। कथमिति चेदुच्यते। एत्वाभ्यासलोपयोः कृते दीर्घत्वे यद्यपि प्राप्तिस्तथापि यङीतिविशेषोपादानाद्विशेषविहितेन सामान्यविहितम्बाध्यत इति प्रसिद्धन्यायेन दीर्घत्वम्बाधकम्भविष्यति। ननु स न्यायः प्रकृते नास्ति लिटीत्यस्यात्राप्युपादानात्। किञ्चेत्वाभ्यासलोपविषये ह्रस्वहलादिः शेषयोरवश्यम्प्राप्तयोरेतौ यथा बाध्यसामान्यचिन्तया ह्रस्वहलादिः शेषयोर्बाधकौ तथा दीर्घत्वस्यापि बाधकौ भविष्यत इति चेन्न। अपवादत्वस्यैव तत्प्रत्यभावात्। तदुक्तम्भाष्ये। अभ्यासविकारेष्वपि ज्येष्ठमध्यमकनीयांसः प्रकारा भवन्ति। तत्र ह्रस्वहलादिः शेषावुत्सर्गौ तयोर्दीर्घत्वमपवाद एत्वञ्च। अपवादविप्रतिषेधाद्दीर्घत्वम्भविष्यतीति। अत्र भाष्येऽपवादविप्रतिषेधादित्यनेन दीर्घत्वम्प्रत्यपवादत्वन्नास्ति तदप्राप्तियोग्यविषयेऽचारिताभ्याभावादिति ध्वनितम्। यः सर्वबाध्यः स कनीयान्। यस्तु कस्य चिद्बाधकः कस्य चिद्बाध्यः स मध्यमः यस्तु सर्वबाधकस्स ज्येष्ठ इत्युच्यते प्रकृते तु सम्भव एतस्य प्रकारस्य पर्जन्यन्यायेन नेमतुरित्यादौ ह्रस्वप्राप्तेरुपपादनीयः। तथा च दीर्घत्वे कृते पुनरेत्वाभ्यासलोपौ न भविष्यतः यथा तु दीर्घत्वे कृते तयोरप्राप्तिस्तम्प्रकारमाह। किञ्चेत्यादिना। न च परत्वादित्यसङ्गतमेत्वाभ्यासलोपयोर्नित्यत्वादिति वाच्यम्। शब्दान्तरप्राप्त्याऽनित्यत्वात्। तदाशयः। भाष्याशयः। एतेन। वक्ष्यमाणदर्पणेन। भाष्यविरोधापत्तेरिति। तत्र हि कृते दीर्घे सन्यत इतीत्वम्न स्यादनया परिभाषया तु भवतीति प्रतिपादितम्। सेटीत्येतत्सामर्थ्यादिति। एतत्सूत्रारम्भसामर्थ्यादित्यर्थः। नन्वादिग्रहणम्प्रकृतसूत्रे व्यर्थम्। हलादिः शेषस्य सर्वत्र प्राप्त्या सूत्रस्यैव वैयर्थ्यापत्तेरिति तदतिरिक्तस्यैवादेशस्य ग्रहणसम्भवादिति चेन्न। देभतुरित्यत्रानुनासिकलो-

रितिखण्डनैकवाक्यतया तस्यैव ग्रहणसम्भवादिति भावः । तदर्थम् । तीदादिकार्थम् । तद्रीत्या तस्येट्सहित एव प्रयोगो यथा स्यादिति निषेधाभावाय वार्तिकमावश्यकमिति तस्यानिट्त्वेनेड्रहितप्रयोग एव साध्योऽतस्तत्र प्रतिषेधेऽपीष्टापत्तिरित्यविदेरिति वार्तिके वेत्तेरेव ग्रहणम् ॥ अत एव । विन्दतेरनिट्त्वादेव ॥ एतेन । पूर्वोक्तव्याख्यानेन ॥ नयानामिहोक्तौ व्याघ्रभूतिसम्मतेर्हेतुत्वम्मूलकृता दर्शितन्तत्र न तत्सम्मतिरेव हेतुः किन्तु साधकान्तरमप्यस्तीत्याह । तेन रक्तमित्यादिना ॥ तुदधातुर्भाष्यानुक्त इतिपक्षे व्याह । तुन्नवद्धेति । स्पर्द्धापूर्वकशब्दन इति । स्पर्द्धापूर्वकशब्दोत्पत्त्यनुकूलव्यापार इत्यर्थः । फलतावच्छेदकसम्बन्धश्चात्र स्वप्रयोज्यज्ञानाश्रयत्वमित्यस्य सकर्मकत्वसिद्धिरिति भावः ॥ *अभ्यासावयवस्य शर्पूर्वस्य खय्मात्रस्य शेषविधाने पृथग्धातावतिप्र-*सङ्गः स्यादिति तद्वारावृत्त्यर्थमाह । अत्रादिरिति । तदनुवृत्तावादिः खय् इत्यर्थः । सम्भवस्तथा सत्यसम्भवो न हि शर्पूर्व आदिश्च भवतीत्यत आह । तत्र शरिति ॥ द्विवचनान्तेति । संख्यावाचकस्यैवैकशब्दस्य नित्यैकवचनान्तत्वनियम इति भावः ॥ नन्वेकदेशान्वये गमकत्वाभावात्कथं वृत्तिरत आह । एकदेशेति ॥ उपस्थितो लिडेवेति । लिटीत्यस्यावृत्त्योभयविशेषणत्वमित्यन्ये ॥ समासे उद्देश्यविधेयभावाप्रतीतेरित्यादिमताभिप्रायेणाह । विशिष्टेत्यादि ॥ अत्रलिटीतिप्रकृतसूत्रस्थमादेशस्य विशेषणमेत्वाभ्यासलोपे निमित्तञ्चेति स्वीकार्यमित्यभिप्रायेण मूले कितिलिटीत्युक्तम् । तत्रादेशविशेषणस्य फलन्त्विष्टेः इति मूल एवोपान्त्यनिमित्तत्वेन तदुपादानस्य फलन्तु नोक्तमत उपक्रमे भाष्योक्तन्तत्फलमाह । लिटीति किम् पापच्यत इति ॥ प्रकृतसूत्रस्य लिण्निमित्तकत्वे लिटो द्वित्वासम्भवेन कितीत्यस्यैव सम्बन्धो वर्णितः । लिटीत्यस्याभावे तु ङितीत्यपि वक्तुं शक्यमिति भावः । न च पापच्यत इत्यत्र दीर्घत्वमेत्वस्याधिष्यत इति वाच्यम् । अभ्यासवि-

कारे बाध्यबाधकभावो नास्तीत्येत्वस्य कृतेऽपि दीर्घत्वे प्राप्तेः। एत-द्देवोपपादयति। अभ्यास इत्यादिना। प्राप्नुत इति। अत्र प्राप्नुत इ-त्युपादानेन सम्भवमात्रेणैतत्प्रयोजनत्वं तु तद्युक्तमिति ध्वनितम्। कथ-मिति चेदुच्यते। एत्वाभ्यासलोपयोः कृते दीर्घत्वे यद्यपि प्राप्तिस्तथापि यङीतिविशेषोपादानाद्विशेषविहितेन सामान्यविहितम्बाध्यत इति प्रसि-द्धन्यायेन दीर्घत्वम्बाधकम्भविष्यति। ननु स न्यायः प्रकृते नास्ति लि-टीत्यस्यात्राप्युपादानात्। किञ्चैत्वाभ्यासलोपविषये ह्रस्वहलादिः शेष-योरवश्यम्प्राप्तयोरेतौ यथा बाध्यसामान्यचिन्तया ह्रस्वहलादिः शेषयोर्बा-धकौ तथा दीर्घत्वस्यापि बाधकौ भविष्यत इति चेन्न। अपवादत्वस्यैव तत्प्रत्यभावात्। तदुक्तम्भाष्ये। अभ्यासविकारेष्वपि ज्येष्ठमध्यमकनीयांसः प्रकारा भवन्ति। तत्र ह्रस्वहलादिः शेषावुत्सर्गौ तयोर्दीर्घत्वमपवाद एत्वञ्च। अपवादविप्रतिषेधाद्दीर्घत्वम्भविष्यतीति। अत्र भाष्येऽपवाद-विप्रतिषेधादित्यनेन दीर्घत्वम्प्रत्यपवादत्वन्नास्ति तद्प्राप्तियोग्यविषयेऽ-पारिताथ्याभावादिति ध्वनितम्। यः सर्वबाध्यः स कनीयान्। यस्तु कस्य चिद्बाधकः कस्य चिद्बाध्यः स मध्यमः यस्तु सर्वबाधकस्स ज्येष्ठ इ-त्युच्यते प्रकृते तु सम्भव एतस्य प्रकारस्य पर्जन्यन्यायेन नेमतुरित्यादौ ह्रस्वप्राप्तेरुपपादनीयः। तथा च दीर्घत्वे कृते पुनरेत्वाभ्यासलोपौ न भविष्यतः यथा तु दीर्घत्वे कृते तयोरप्राप्तिस्तम्प्रकारमाह। किञ्चैत्या-दिना। न च परत्वादित्यसङ्गतमेत्वाभ्यासलोपयोर्नित्यत्वादिति वाच्यम्। शब्दान्तरप्राप्तेरनित्यत्वात्। तदाशयः। भाष्याशयः। एतेन। वक्ष्य-माणदर्पणेन। भाष्यविरोधापत्तेरिति। तत्र हि कृते दीर्घे सन्यत इती-त्वस्य स्यादभ्यासपरिभाषया तु भवतीति प्रतिपादितम्। सेटीत्येतत्सा-मर्थ्यादिति। एतत्सूत्रारम्भसामर्थ्यादित्यर्थः। नन्वादिग्रहणमप्रकृतसूत्रे व्यर्थम्। हलादिः शेषस्य सर्वत्र प्राप्तया सूत्रस्यैव वैयर्थ्यापत्तिरिति तद्-तिरिक्तस्यैवादेशस्य ग्रहणसम्भवादिति चेन्न। देभतुरित्यत्रानुनासिकलो-

पेऽस्य सूत्रस्याप्रवृत्त्यापत्तेः । किन्त्वनु तत्र अन्यिपन्यीति व्याकरणान्त-रीयवचनेन भवति । दकारादिविति । दकारस्य स्थान इत्यादिः । इति प्रश्न इति । न च देभतुरित्यत्रानुनासिकलोपस्याभीयत्वेनासिद्धत्वादेत्वं न स्यादिति दम्भेश्चेति वान्तिकमारब्धन्तदपि श्चेदादिग्रहणाभावे न स्यात्तदा तर्हि यष्ये मिति वाच्यम् । तस्यादिग्रहणसिद्धार्थानुवादकत्वा-त् । एवञ्चैकेत्यादि किमित्यस्यैकग्रहणविशिष्टङ्किमर्थमित्यर्थः । तत्सरुरि-त्यत्र दोषवारणाय हल्विशेषणार्थमेकग्रहणमावश्यकमित्युत्तरस्य भावः । स्पष्टार्थमिति । देभतुरित्यत्र दोषाभावस्य स्पष्टप्रतिपत्त्यर्थमित्यर्थः । चक्षि-ङादाविति । अजादिना ये धातव इरितस्तेषामप्येकमिकाररेफयोरि-त्संज्ञाश्रयणपक्षे दोषाभावसङ्ग्रहः । ननु प्रकृतसूत्रे धातुग्रहणमनर्थ-कम् । न चाभैत्सीदित्यादौ सिजन्ते दोषः । सिचः स्थाने सजिति पाठे-नादोषात् । तासिरप्यकारान्त एवोच्चारणार्थाकारान्तः पठनीयः । न च सजिति फणेऽमन्त्स्यत्रानुनासिकलोपापत्तिरिति वाच्यम् । हनः सि-जितिकित्त्वविधानद्वलोपार्थङ् क्रियमाणमत्रैव नलोप इत्यर्थम्भविष्यतीत्य-दोषात् । न च तत्सजुर्निमित्तक एव नलोपो यथा स्यात्सार्वधातुकनि-मित्तको मा भूदिति नियमार्थम्भविष्यत्यन्यथा सार्वधातुकनिमित्तस्य व्याश्रयत्वादसिद्धत्वाभावादतो लोपापत्तिरिति वाच्यम् । अनार्ङ्गीती लोपे ग्रहिरङ्गस्य नलोपस्यासिद्धत्वादेव तदप्रासेरार्द्धधातुकोपदेशेऽदन्त-त्वाभावाच । न च तासेरिकाराभावे आहन्ता इत्यादौ टिलोपे कृतेऽनि-दितामिति नलोपापत्तिरिति वाच्यम् । असिद्धवदत्राभादित्यनेन टि-लोपस्यासिद्धत्वादत आह । धातोरितीति । धातुग्रहणात्धातुसंज्ञाप्रयोज-कस्यापिग्रहिष्टे लाक्षणिकमिति भावः । न चाद्नाधिकारबाधः । लक्ष्या-नुरोधेनाङ्गपदस्याङ्गसंज्ञाप्रयुक्तियोग्यलाक्षणिकत्वात् । स्पष्टम्भाष्य इति । धातुग्रहणमाभम्यांसादुपदेशे नुमियपानमिति हि तत्रोक्तम् । शिदि शैत्य इत्यत्र शीत्यपदेन फलमात्रम्य निर्देशो न तु व्यापारस्य न च तावता क्रि-

याचकत्वलाभ इति श्नैत्यपदन्तत्समानाधिकरणभवनक्रियोपलक्षणमिद-
-त्याशयेनाह । श्नैतो भवतीति । नतिर्नमस्करणम् । मदि स्तुति । मोदो-
ऽहर्षः । मदो गर्वः । स्वप्नपदार्थमाह । स्वप्न इति । अलासम् कर्त्तं व्यार्था-
नवधानम् । न शसदद्वादि । अत्र गुणशब्दस्यादेङ्मात्रपरत्वे गुणो यो ऽ-
कार इत्यर्थापत्तावाह । शसिददीति । नन्वत्र गुणशब्दो गुणावयवपरो ऽय
स्यं वाच्योऽन्यथा तेरतुस्तेरुरित्यस्यासङ्ग्रह इति कथं शसिददिग्रहणवैय-
र्थ्यं मत आह । व्यपदेशिवद्भावेनेति । ननु शसिददिग्रहणसामर्थ्याद्व्यप-
देशिवद्भावानाश्रयणमत आह । व्याख्यानादिति । तेरतुरित्यादिलक्ष्यद-
र्शनमूलकव्याख्यानादित्यर्थः । न च शसिददिग्रहणसामर्थ्यादित्यनुपपन्न-
गुणशब्दस्य गुणमात्रपरत्वे विधिनिषेधयोर्विषयव्यवस्थाया एवासंभवः
स्यादिति वाच्यम् । तावतापि विधिनिषेधयोर्विषयविभागार्थक्ष्णशब्द-
स्य धातूपदेशेऽश्रूयमाणगुणे लक्षणाया आवश्यकत्वे गुणशब्देन भाविते
लक्षणाया उचितत्वात् । न चैवङ्गुणशब्दस्य स्थाने अग्रहणमेव कार्यम् ।
अकारस्य स्थाने यो गुणस्तदवयवस्य निषेध इत्यर्थोऽस्त्विति वाच्यम् ।
ससरिचेत्यस्य सिद्धावपि लुलविचेत्यादेरसिद्धापत्तेः । न च गुणस्य यो-
ऽकार इत्येवास्तु गुणशब्दश्च शब्दपर एवास्तु स्वशोऽध्यावयवत्वं पक्षत्वर्था
भविष्यति गुणशब्दोपादानसामर्थ्यादशब्दसंज्ञात्यस्य च वाधोऽस्त्वेते-
नैव सर्वेष्टसिद्धौ भावितपदोपादानवैयर्थ्यमिति वाच्यम् । गुणशब्दस्य
गुणशब्दभाविते लक्षणायां शसेदेरित्यत्र यथाऽवयवावयविभावः पक्षत्र-
योऽस्ति तथैव गुणस्य नेतिवाक्येऽपि भवतीति शसिददियादिष्वस्तुल्य-
रूपस्योपपत्तये मूलकृतैदमभिधानात् । गुणशब्दभावितस्यह्व साक्षात्प-
रम्परासाधारण्यमिति लुलविचेत्यादेः सङ्ग्रहः । नन्वास्वादन इत्येव
मूले प्रथमत उपात्तमित्ययमित्यनेनार्थभेदेन सकर्मकत्वाकर्मकत्वविभाग-
कथनासङ्गतिरत आह । आस्वादनमिति । शुधधातुव्यावृत्त्यर्थ इति । च-
कारोयतीत्यादिव्यावृत्त्यर्थ इत्यर्थः । उपदेश इत्यनुवृत्तेरिति । उपदेशे

यादिश्च धातुरेव न प्रातिपदिकमुद्देशश्च प्रातिपदिकानाञ्चोपदेश इत्यादेेच उपदेशेऽशितीति सूत्रे भाष्ये उक्तेः। लपतीति। न चास्य सत्त्वे षकारोच्चारणवैयर्थ्यमिति वाच्यम्। लेपतुः। लेपुरित्यत्र पत्वसम्पत्त्या चरितार्थत्वात्। षदधातोः षोपदेशत्वफलमाह। षोपदेशेति। मानं सुखमिति। इह तथार्थो धातूनामनेकार्थत्वात्। उपधायाञ्च। स्फूर्जधातोर्दीर्घोच्चारणादयन्दीर्घोऽनित्यः। तेन स्फुर्जतीत्याद्यपि भवतीति केचित्। वस्तुतस्तत्रापि ह्रस्वपाठ एवेति बोध्यम्। ष्ठिवुधातावतिप्रसङ्गमाशङ्क्याह। ष्ठिवेरिति। दन्त्याजन्तेत्यनेन लक्षणेन षोपदेशत्वनिर्णयकरणे यत्र साम्प्रतं षकारः श्रूयते षिधू शास्त्र इत्यादौ तत्र लक्षणेनापि तथात्वनिश्चयः। यत्र तु साम्प्रतं सकार एव श्रूयते साधादौ यथा तत्र पूर्वकालस्थितपाठत्त्वंशानुमानस्बोध्यम्। अषोपदेशत्वेऽपीति। सृपिसृजी तु पर्युदस्तौ। स्पशिस्पृहीत्यनयोस्तु दन्त्याजन्तसादित्वमास्ति। ननु छन्दसि दृष्टानुविधानादेव षत्वाभावे सिद्धे म रपरेति सूत्र एषामुपादानवैयर्थ्यमत आह। यद्यपीत्यादि। अष्टात्रिंशदिति। द्वसृप्न इत्यात्यम्। अनयोः। यदग्र्जेत्यनयोः। अज्ग्रहणसामर्थ्यादिति। तद्धि नाजन्तस्येत्यर्थकम्। अकारान्तानामसम्भवात्। इगन्तानां तु सिचि वृद्धिरिति प्राप्तेः। एजन्तास्तु वृद्धियोग्याः सिच्परा न सम्भवन्त्यात्वस्य प्रवृत्तेरिति सामानाधिकरण्ये नान्वयेऽज्ग्रहणवैयर्थ्यमिति भावः। नेटीति निषेधादिति। इहादौ मिथ्येताहृशानामेव सम्भव इति भावः। वृद्धिभाजः। वृद्धिस्थानिनः। येन नाव्यवधानन्यायाश्रयणेऽपतथा सत्येकवर्णव्यवधान एव स्यान्न त्वराङ्क्षीदित्यादावधिकव्यवधाने। हल्ग्रहणे तु निर्दिष्टपरिभाषयोपस्थितमव्यवहितपदं हल्त्वजात्याश्रयातिरिक्तशल्व्यवधानाभावपरमिति भावः। अत एव। वृद्धिभाजो विशेष्यत्वादेव अगादुतोः सातत्यगमनार्थकत्वेऽपि क्वचित्प्रत्यासत्तावपि वृत्तिरत एयाम्साद्द धातोरौणादिके कनि एतेऽस्क्यब्दः प्रत्यासत्त्यर्थो श्रूयते।

अत्के चेन्मधु विन्देत किमर्थम्पर्वतं व्रजेदिति यथा ॥ मूले श्रुतिर् क्षरणे ॥ यकाररहितोप्ययमित्यत्रायमित्यस्य श्रुतिरित्यर्थः । तेन मधुश्रुतमिति प्रयोगसिद्धिः । मूले सात्पदाद्योरिति । निषिषेधेत्यत्रेत्यादिः । निषेधबाधनार्थमेवोपसर्गात्सुनोतीत्यादिसूत्राणीति भ्रमवारणायाह । इदमुपेति॥ ननु ण्यन्तेनाभेर्योगात्कथं षत्वमत आह । अभिषावयतीत्यादि ॥ प्रकृत्यर्थविशेषणता । प्रकृत्यर्थगतविशेषणद्योतकता ॥ समफलत्वायेति ॥ यदि ण्यन्तसमभिव्याहारे शब्दशक्तिस्वाभाव्यादुपसर्गाणाम्प्रकृत्यर्थविशेषणत्वमेवेति नियमो न स्यात्तदा वचनारम्भपक्षे ण्यन्तसमभिव्याहारेऽभीत्याद्युपसर्गस्य प्रकृत्यर्थविशेषकत्वम्भवतु ण्यन्तविशेषणत्वम्वोभयथापि षत्वम्भविष्यति । प्रत्याख्यानपक्षे तु यदा सुनु अभीतिमिषणन्तदा षत्वन्न स्यादभिषुखिवति प्रेषणे तु स्यादिति फलभेदः स्पष्ट एवेति भावः ॥ अत्र सेधेतिनिर्द्देशः शपा दैवादिकव्यावृत्त्यर्थः । तथा च षिध गत्याम् षिधू शास्त्रे माङ्गल्ये चेत्यनयोरेव ग्रहणसिद्धिः । निरनुबन्धकपरिभाषा तु विप्रतिषिद्धञ्चानधिकरणवाचीतिनिर्द्देशान्न प्रवर्त्तते ॥ विप्रतिषिद्धमित्यत्रेड्भाव उदित्त्वाद्बोध्यः । इणूकोरित्युभयोर्निमित्तत्वेनोपादानेपि कवर्गस्योपसर्गावयवस्यासम्भवादिण एव ग्रहणम् ॥ न चोपसर्गाणां विशेष्यत्वमिण इति विशेषणमितीणन्तादुपसर्गादित्येव कुतो न व्याख्यायत इति वाच्यम् । निःषेधति दुःषेधतीत्यस्यासिद्धिप्रसङ्गात् । उपसर्गस्थान्निमित्तादिति व्याख्यानेन त्विण एव विशेष्यत्वमुपपसर्गादिति तस्याभेदेन विशेषणन्तादस्य्याहाच्छन्धमिति न्यायात् । विसर्गसकारयोर्व्यवधानेऽपि षत्वम्भवत्येव ॥ नुम्विसर्जनीयेत्यधिकारात् । निर्गतः सायक इत्यर्थविवक्षायान्निःसायक इत्येव । यत्क्रियायुक्ता इतिवचनेन सुनोत्यादीनां प्र उपसर्गत्वस्यैव ग्रहणात् ॥ उपसर्गादितिसूत्रस्थमुपसर्गादितिपदमुत्तरसूत्रेषु सम्बध्यतेऽतः सौकर्यायेहैव तानि व्याचष्टे ॥ सदिरप्र ॥ योगविभागस्य निमित्तान्तरमाह ॥ नन्वित्यादिना । अवाप्र ।

अत्र घकारोऽलङ्काराय । आलम्बनमाश्रयणम् ॥ सामीप्यमिति । अत्र निरूपकम्प्रकरणादिना कल्पनीयम् । न नञ्पूर्वेतिनिषेधे ल्यप एव निपातनादायिदूर्येत्यत्र भावार्थकः प्रत्ययः । येश्च स्वनो भोजने । भोजन इत्यस्य भोजने धात्वर्थ इत्यर्थः । विष्वणति चर्व्यम् । सशब्दम्भुङ्क्त इत्यर्थः । भोजने किम् । विस्वनति मृदङ्गो वीणा चेति ॥ परिनिविभ्यः ॥ सेवेत्यत्राकार उच्चारणार्थस्तेन षेवृ सेचन इत्यस्य सङ्ग्रहः । सुट् । आगमः । तेन परिष्करोतीत्यादौ षत्वसिद्धिः । सितशब्दः षिञ् बन्धन इत्यतः क्ते सिद्धः । एवं सयशब्दोऽपि तदाह । सितसयाविति । षिञ्प्रकृतिकाविति कथनेन षोऽन्तकर्मणीत्यस्य व्यावृत्तिः । व्याख्यानादिति । अच्प्रत्ययान्तसयशब्दसाहचर्यमूलकव्याख्यानादित्यर्थः । प्रत्ययविशिष्टयोः सितसयशब्दयोरुपादानं विसिनोतीत्यत्र षत्वाभावार्थम् ॥ नैरर्थक्यादिति । परभागसमभिव्याहारप्रतिबद्धार्थबोधजननशक्तिमत्त्वादित्यर्थः ॥ अवयवावयविभावमात्रस्य पञ्चार्थत्वस्वीकारेऽप्याह ॥ यद्वेति । 'व्याख्यानादिति । सुविनिर्दुर्भ्य इतिसूत्रीयभाष्यसम्मतव्याख्यानादित्यर्थः ॥ भाष्यग्रन्थश्चानुपदमुदाहरिष्यते ॥ अत एव । तदानुपूर्वीकस्य च ग्रहणमितिव्याख्यानादेव ॥ ननु स्थादिष्वेतिनियमात्कथमनुपस्यन्द इत्यत्राभ्यासस्य षत्वमत आह । स्थादिष्वपीति । सुपिभूतस्य द्विर्वचनादिति । एतेन भाष्यग्रन्थेन तदानुपूर्वीकस्य ग्रहणमिति स्पष्टमेव लभ्यते । दिगीतिसूत्रस्यभाष्यविरोधादिति । तत्र ह्यार्द्धधातुक इत्यस्य सप्तमीत्वात्परस्मिन्परतो भूभावेऽस्तेर्लिटि परत्वाद्द्विर्वचने द्विःप्रयोगपक्षेऽप्यस्तेर्भूरित्यनेन परस्य भूभावे कृते पूर्वस्य श्रवणम्प्राप्नोतीत्याशङ्क्यार्द्धधातुकीयाः सामान्येन भवन्ति अनवस्थितेषु प्रत्ययेषु तत्रार्द्धधातुकसामान्ये भूभावे कृते यो यतः प्राप्नोति स ततो भविष्यतीत्युक्तम् । यदि कैयटोक्तरीत्या समुदायस्य कार्यन्तदा परस्य भूभावे पूर्वस्य श्रवणम्प्राप्नोतीत्यभिधानमसङ्गतमेव स्यादिति तथा च भाष्यविरोधः स्पष्ट एव ॥ ननु षिध गत्यामिति गति-

रूपस्यार्थस्याभियुक्तोक्तत्वेन विध्धातोर्गत्यर्थकत्वनिर्णयात्सेधतेर्गताविल्यत्र गताविति व्यर्थमित्याशङ्कानिवारणायाह । विप्रतिषेधेति ॥ तथा च प्रकृतसूत्रस्थगताविव्येव धातूनामनेकार्थत्वे लिङ्गम् ॥ के चिदिति । अनन्तरस्येतिन्यायमात्रानुसारिणः ॥ सिचो यङीत्येतत्साहचर्यादिति । न च सूत्रान्तरसाहचर्यन्न नियामकमितिसाहचर्यादित्यनुपपन्नमिति वाच्यम् । साहचर्यादित्यनेन तस्मिन्सूत्रे न रपरेतिसूत्रात्रञः सम्बन्धेन सिचो यङि यद्यत्सूत्रविहितं षत्वमप्राप्नोति तन्न भवतत्यस्यस्यैवव्याख्येयम् अभिसिसिच्यत इति तत्सूत्रभाष्योदाहरणात् । अन्यथा उपसर्गादित्यनेना-भ्यासस्य या प्राप्तिस्तस्या निषेधे ष्यादेशप्रत्यययोरितिसूत्रेणोत्तरखण्डस्य षत्वन्दुर्वारमेव स्यात् । तस्यैव च नञः सेधतेरित्यत्र सम्बन्धात्पूर्वसूत्रवदस्या-पि तथैव व्याख्यायाः सूचनात् । अन्य इति । भाष्यस्वरसविदः ॥ सौत्र इति । एवन्निर्देशे ह्रस्वान्तत्वन्नणो न भवतीति फलं सिध्यति ॥ इत्यस्य निवृत्त्यर्थमिति । तत्सूत्रस्थवाग्रहणानुवृत्तौ मध्यपतितत्वादस्या-प्यनुवृत्तिः स्यात् । अधिकमत्र यद्वक्तव्यन्तत्परिभाषेन्दुशेखरे उक्तम् ॥ ह्रस्व-निषेध इति ॥ अचखाददित्यत्र । विशेषणादिति ॥ अत्र येन नाव्यवधा-नन्यायस्य चाश्रयणेनान्यत्र दोषाभावादिति शेषः । इत्यादावपि । आदिना न्यपुटीदित्यस्य सङ्ग्रहः ॥ नैर्गदनद ॥ इति वर्तत इति ॥ अट्कुप्वाङितिसूत्रस्थमड्ग्रहणं व्यवायेपीतिपदद्वयानुवर्त्तत इत्यर्थः । कुप्वादिग्रहणन्तु नानुवर्त्तते । तथा च प्रण्यगदत् । प्रण्यागददित्यादौ णत्वसिद्धिः । प्रनि क्षागददित्यत्र च न भवति ॥ गदादेर्निमित्तत्वमिति । रषाभ्यामितिपञ्चम्यन्तपदोपात्तस्य यथा निमित्तत्वन्तथा गदादिशब्दघ-टितप्रकृतिकसप्तम्यन्तशब्दोपात्तस्यापि निमित्तत्वमिति भावः । स्पष्टम्भा-ष्यकैयटयोरिति । तत्र हि नेर्गदादिघटकव्यवाय उपसङ्ख्यानङ्कर्त्तव्यम् । प्रण्यगदत् । आङ्चेति वक्तव्यम् । प्रण्यागदत् । ननु धायमट्गदादिभक्तो गदादिग्रहणेन ग्राहिष्यते । न सिध्यति । अङ्गस्याट्वित्युच्यते विकरणान्त-

अत्र चकारोऽलङ्काराय । आलम्बनमाश्रयणम् ॥ सामीप्यमिति । अत्र निरूपकम्प्रकरणादिना कल्पनीयम् । न नञ्पूर्वेतिनिषेधे ल्यत एव निपातनादाविदूर्यंत्यत्र भावार्थकः प्रत्ययः । वेञ्च स्वनो भोजने । भोजन इत्यस्य भोजने धात्वर्थ इत्यर्थः । विष्वणति चर्व्वम् । सशब्दम्भुङ्क्त इत्यर्थः । भोजने किम् । विस्वनति मृदङ्गो वीणा चेति॥ परिनिविभ्यः ॥ सेवेत्यत्राकार उच्चारणार्थस्तेन षेवृ सेचन इत्यस्य सङ्ग्रहः । सुट् । आगमः । तेन परिष्करोतीत्यादौ षत्वसिद्धिः । सितशब्दः षिञ् बन्धन इत्यतः क्ते सिद्धः । एवं सयशब्दोऽपि तदाह । सितसयाविति । षिञ्प्रकृतिकाविति कथनेन षोऽन्तकर्मणीत्यस्य व्यावृत्तिः । व्याख्यानादिति । अच्प्रत्ययान्तसयशब्दसाहचर्यमूलकव्याख्यानादित्यर्थः । प्रत्ययविशिष्टयोः सितसयशब्दयोरुपादानं विसिनोतीत्यत्र षत्वाभावार्थम् ॥ मैरर्थवयादिति । परभागसमभिव्याहारप्रतिबद्धार्थबोधजननशक्तिमत्त्वादित्यर्थः ॥ अवयवावयविभावमात्रस्य षष्ठ्यर्थत्वस्वीकारेप्याह ॥ यद्वेति । व्याख्यानादिति । सुविनिर्दुर्भ्य इतिसूत्रीयभाष्यसम्मतव्याख्यानादित्यर्थः ॥ भाष्यग्रन्थश्चानुपदमुदाहरिष्यते॥ अत एव । तदानुपूर्वीकस्य च ग्रहणमितिव्याख्यामादेव ॥ ननु स्थादिष्वीतिनियमात्कथमनुषस्यन्द इत्यत्राभ्यासस्य षत्वमत आह । स्थादिष्वितीति । सुपिभूतस्य द्विर्वचनादिति । एतेन भाष्यग्रन्थेन तदानुपूर्वीकस्य ग्रहणमिति स्पष्टमेव लभ्यते । दिगीतिसूत्रस्थभाष्यविरोधादिति । तत्र स्यार्द्धधातुक इत्यस्य सप्तमीत्वात्परस्मिन्परतो भूभावेऽस्तेर्लिटि परत्वाद्द्विर्वचने द्विःप्रयोगपक्ष एवास्तेर्भूरित्यनेन परस्य भूभावे कृते पूर्वस्य श्रवणम्प्राप्नोतीत्याशङ्कार्द्धधातुकीयाः सामान्येन भवन्ति अनवस्थितेषु प्रत्ययेषु तत्रार्द्धधातुकग्रहणान्ये भूभावे कृते यो यतः प्राप्नोति स ततो भविष्यतीत्युक्तम् । यदि कैयटोक्तरीत्या समुदायस्य कार्यन्तदा परस्य भूभावे पूर्वस्य श्रवणम्प्राप्नोतीत्यभिधानमयुक्तमेव स्यादिति तत्मते भाष्यविरोधः स्पष्ट एव ॥ ननु षिध गत्यामिति गति-

रूपसार्थस्याभियुक्तोक्तत्वेन पिध्धातोर्गत्यर्थकत्वनिर्णयात्सेधतेर्गतावित्यत्र गताविति व्यर्थमित्याशङ्कानिवारणायाह । विप्रतिषेधेति ॥ तथा च प्रकृतसूत्रस्यङ्गतावित्येव धातूनामनेकार्थत्वे लिङ्गम् ॥ के चिदिति । अनन्तरस्येतिन्यायमात्रानुसारिणः ॥ सिचो यङीत्येतत्साहचर्यादिति । न च सूत्रान्तरसाहचर्यञ्च नियामकमितिसाहचर्यादित्यनुपपन्नमिति वाच्यम् । साहचर्यादित्यनेन तस्मिन्सूत्रे न रपरेतिसूत्रान्नञः सम्बन्धेन सिचो यङि यद्यत्सूत्रविहितं षत्वम्प्राप्नोति तन्न भवतत्यस्यर्थस्यव्याख्येयम् अभिसिसिच्यत इति तत्सूत्रभाष्योदाहरणात् । अन्यथा उपसर्गादित्यनेनाभ्यासस्य या प्राप्तिस्तस्या निषेधे ष्यादेशप्रत्यययोरितिसूत्रेणोत्तरखण्डस्य षत्वन्दुर्वारमेव स्यात् । तथैव च नञः सेधतेरित्यत्र सम्बन्धात्पूर्वसूत्रवदस्यापि तथैव व्याख्यायाः सूचनात् । अन्य इति । भाष्यस्वरसविदः ॥ सौत्र इति । एवन्निर्देशे ह्रस्वान्तत्वञ्जगो न भवतीति फलं सिध्यति ॥ इत्यस्य निवृत्त्यर्थमिति । तत्सूत्रस्थवाग्रहणानुवृत्तौ मध्यपतितत्वादस्याप्यनुवृत्तिः स्यात् । अधिकमत्र यद्वक्तव्यन्तत्परिभाषेन्दुशेखरे उक्तम् ॥ ह्रस्वनिषेध इति ॥ अघरवादित्यत्र । विशेषणादिति ॥ अत्र येन नाव्यवधानन्यायस्य चाश्रयणेनान्यत्र दोषाभावादिति शेषः । इत्यादाविति । आदिना न्यपुटीदित्यस्य सङ्ग्रहः ॥ नेर्गदनद ॥ इति वर्तत इति ॥ अट्कुप्वाङ्नितिसूत्रस्यमङ्ग्रहणं व्यवायेपीतिपदञ्चानुवर्त्तत इत्यर्थः । कुप्वादिग्रहणन्तु नानुवर्त्तते । तथा च प्रण्यगदत् । प्रण्यागददित्यादौ णत्वसिद्धिः । प्रनि क्षागददित्यत्र च न भवति ॥ गदादेर्निमित्तत्वमिति । स्वाभ्यामितिपञ्चम्यन्तपदोपात्तस्य यथा निमित्तत्वन्तथा गदादिशब्दघटितप्रकृतिकसप्तम्यन्तशब्दोपात्तस्यापि निमित्तत्वमिति भावः । स्पष्टन्नाप्यकैयटयोरिति । तत्र हि नेर्गदादिग्रहणमपाय उपसङ्ख्यानङ्कर्त्तव्यम् । प्रणपगदत् । आङ्गा चेति वक्तव्यम् । प्रण्यागदत् । ननु चायमङ्गदादिभक्तो गदादिग्रहणेन ग्राहिष्यते । न सिध्यति । अङ्गस्याहिदुच्यते विकरणान्त-

ष्ठाङ्गम्। एवन्तर्ह्यड्व्यवाय इति वर्त्तते। क्व प्रकृतम्। अट्कुप्वाङ्नुम्व्यवा-येपीति। तद्धि कार्यिविशेषणन्निमित्तविशेषणेन चेत्यर्थः। तत्रापि नि-मित्तविशेषणमेवेत्युक्तम्। अत्र कैयटः। यत्र यन्निमित्तन्तत्र तस्याडा-दिभिर्व्यवधाने णत्वमित्याश्रीयत इति गदादीनामपि निमित्तत्वसद्भा-वादड्व्यवधाने णत्वं सिध्यतीत्यर्थः। एतद्भाष्यकैयटैकवाक्यतयाऽट्कु-प्वाङितिसूत्रस्यापि व्याख्याऽडादिव्यवहितरषाभ्यामुत्तरस्य नस्य णत्व-मित्येवोचिता। आडादिभिर्व्यवहितस्य नस्येति तु फलितार्थः। णादि-नामधात्विति। णकारीयतीत्यादेः। व्याख्यानादिति। नाटीतिदीर्घ-निर्देशमूलकव्याख्यानादित्यर्थः। भाष्यविरोध इति। णो न इतिसूत्र-भाष्येऽथ किमर्थं णकारमुपदिश्य नकार आदेशः क्रियते न नकार ए-वोपदिश्येत। लघ्वर्थमित्याह। अविशेषेणायं णकारमुपदिश्य तस्य न-कारमादेशमुक्त्वा तस्य लघुनोपायेन णत्वन्निर्वर्त्तयति। उपसर्गादसमासेपि णोपदेशस्येति। इतरथा हि येषान्तत्र णत्वमिष्यते तेषान्तत्र ग्रहणं कर्त्तव्यं स्यात्। के पुनर्णोपदेशा धातवः। सर्वे नादयो णोपदेशाः। नृ-तिनन्दिनर्द्दिनक्किनाटिनाथृनाधृनॄवर्जमिति प्रतिपादितम्। ये नाधादी-नां णोपदेशत्वं वदन्ति तेषां मधुर्दासपरवाक्यविरोधः स्पष्ट एव॥ इत्य-नुवृत्तावपीति॥ कुमति चेतिसूत्रपर्यन्तन्तदनुवृत्तेः कृत्यादिष्वपि तदनुव-र्त्ततेति भावः। व्याख्यानत एवेति॥ उत्तरसूत्रेपूपसर्गादित्यनुवृत्त्यैव सामञ्जस्ये पूर्वपदादित्यस्य निष्प्रयोजनस्येनासम्बन्धात्प्रकृतसूत्रेप्यसम्ब-न्ध इत्येतत्समीक्षामूलकव्याख्यानत इत्यर्थः॥ विशिष्य विधानार्थमिति। योगविभागेनासमासेऽपीति विशिष्य विधानार्थमन्यथोपसर्गाण्णोपदेश-स्येत्यस्य पूर्वपदादिति नियमेन व्यावृत्तिः स्यात्॥ एतत्। असमासेपीति विभक्तसूत्रम्॥ पूर्वपदादित्यस्य नियमार्थत्वे भवदुक्तं सम्भवदुक्तिकम्भ-वेत् तदेव तु नेत्याह। रषाभ्यामित्यादिना॥ उपस्थितत्वात्। अव्यव-हितपूर्वसूत्रोपस्थितत्वात्॥ द्वन्द्वगुरुक्रियायामितीति॥ द्वन्द्वगुरुकर्त्तृक-

क्रियायामित्यर्थः । पूर्ववदनुपपत्त्याह । तत्क्रियायामिति ॥ अनभिधानादिति ॥ जिकारीयतीत्यादिव्यावृत्त्यर्थं विशिष्य यत्नाकरणमत्र बीजम् ॥ अस्वरितत्वादिति ॥ एतच्चोपदेशेजितिसूत्रघटकोपदेशपदे स्वरितत्वाभावप्रतिपादनावसरे प्रतिपादितम् ॥ परत्वात् । किच्चात्परत्वात् ॥ एतल्लक्षणोपप्लवेति । असम्भवादिति । लक्षणोपप्लवेत्यर्थः । गुणापेक्षया पूर्वविप्रतिषेधेन किच्चस्य बलवत्त्वं यदुक्तन्तन्न युक्तमित्याशयेनाह । परे त्विति । अनवकाशत्वमेवेति । एवञ्चातुल्यबलत्वात्पूर्वविप्रतिषेधो न युक्त इति भावः । एतद्विषयलक्षण इति । एतद्विषयककिच्चविधायकलक्षणेत्यर्थः । परत्वाद्गुणस्येति । असंयोगादितिसूत्रापेक्षया परत्वादित्यर्थः । इति न्यायादिति । अस्य बलवत्त्वेनेति शेषः । अतिदेशप्राप्तेति । सार्वधातुकमपिदित्यतिदेशप्राप्तेत्यर्थः । त्वदुक्तरीत्या । दुर्बलेनातिदेशेनेत्युक्तरीत्या । बाधापत्तेरिति । एवञ्च न चेत्यादिकैयटोक्ता रीतिरसङ्गतेति भावः । मूले सुब्धाताविति । एतदुदाहरणं पण्डीयतीत्यादि । भाष्ये तु धात्वादेरिति सूत्रे उपदेशपदसम्बन्धेन तत्रत्यधातुग्रहणमेतद्वार्तिकस्थं सुब्धातुग्रहणञ्च प्रत्याख्यातम् । ष्ठिवुप्रभृतीनामपि यादित्वादेव सिद्धौ तेषामप्यत्र वार्तिके ग्रहणमनावश्यकमिति बोध्यम् । एतेन । वार्णपरिभाषाप्रदर्शनेन । एतस्याः परिभाषाया अन्तरङ्गपरिभाषाबाधकत्वादिति भावः । अन्तरङ्गत्वात् । उवङादेशापेक्षयाऽन्तरङ्गत्वात् । प्रकारान्तरेण तदुक्तं सङ्गमयति । पूर्वस्यैवेति । असवर्णग्रहणसामर्थ्यादिति । एतद्धि यत्रासवर्णपरत्वन्तत्रैव यथा स्यादित्येवमर्थम् । यद्येतत्प्रवृत्तिकालेऽचः परस्मिन्निति स्थानिवद्भावः स्यात्तदाऽसवर्णपरत्वन्दुर्लभं स्यादिति भावः । निघातः स्यादिति । णलृन्निमित्तिका ह्रस्य गुरुमत्ता यदि णलो निवृत्तिः स्यात्तदोपजीव्यविरोधः स्पष्ट एवेति भावः । अत्र । वार्णपरिभाषायाम् । इतिसूत्रमिति । एतदानुपूर्वीकधातुविशेषोपादानरहितं सूत्रमित्यर्थः । तद्वैयर्थ्यम् । तादृशसूत्रवैयर्थ्यम् । यद्येतत्परिभाषाज्ञापनावसरे भाष्ये

अभ्यासस्यासवर्णे इत्यसवर्णग्रहणङ्करोतीत्युक्तन्तस्यायमर्थः । गृह्यते यस्मिन्नाद्ग्रहणमसवर्णस्यासवर्णपदस्य ग्रहणमसवर्णग्रहणमसवर्णपदघटितं सूत्रमित्यर्थः । अत एव भाष्यकृताऽर्थ्यर्थमेतत्स्यादित्यनेन सूत्रस्य सार्थक्यमाशङ्कितम् । अन्यत्र विस्तर इति । इयर्त्तीत्यादौ चारितार्थ्येऽपि सामान्यतो लक्ष्यसंस्कारकसूत्रवैयर्थ्यमेव । ऋधात्वर्थमुरित्येव ब्रूयात् । अरेत्यत्रापत्तिरिति तु न । रवोरित्यनुवर्त्त्यार्त्तेरिवर्णस्याभ्यासावयवस्येयङित्यर्थात् । न चार्त्तेरेवात्र ग्रहणमत्र किम्मानमृवर्णान्तधातोरिति किन्न स्यादिति वाच्यम् । इणो यणित्येतत्साहचर्येण वर्णात्मकस्य धातुपाठपठितस्य ग्रहणात् । तेन ऋशब्दे व्यक्ते नातिप्रसङ्गः । नन्वेवङ्किटकटीत्यत्र प्रश्लिष्टाद्धीगतीत्यत्र प्रश्लिष्टाद्वा इकारात्मकाद्धातोर्लिटि थलि भारद्वाजनियमादिड्विकल्पे इयथिथ इयेथेत्यत्रेड्भावपक्षे पूर्वप्राप्तगुणस्य द्विर्वचनेऽचीत्यनेनाच्परत्वाभावान्निषेधाप्राप्तरा जाते गुणे द्वित्वेऽभ्यासहृस्वत्वेऽसवर्णपरत्वेन प्रकृतसूत्रस्य चारितार्थ्यमिति वाच्यम् । सम्पूर्णसूत्रस्य ज्ञापकतापरभाष्यप्रामाण्येनैतादृशे विषयेऽधस्तास्त्वत्यस्यनिटो नित्यमित्यस्य सूत्रस्याप्रवृत्तिकल्पनेन प्रयादिनियमादिडागमस्यैव प्रवृत्तिस्वीकाराद् द्विर्वचनेऽचीत्यस्य निषेधशास्त्रस्य प्रवृत्तेः । न चेयायेत्यादौ जातेऽपि सवर्णदीर्घे पूर्वान्तवद्भावेनाभ्यासत्वादियर्णत्वाद्य णल्यसवर्णे परे इयङ्विधायकत्वेन सूत्रसार्थक्यम् । अचि श्नुत्यनेन तु न सिद्धिर्दुरा वाधादिति वाच्यम् । प्रत्यासत्त्याऽसवर्णपदेनाभ्यासोत्तरस्यद्रसम्बन्ध्यसवर्णाच एव ग्रहणादित्यादिकमन्यत्र विस्तृतमित्यर्थः । नन्वनेन सूत्रेणान्तरङ्गपरिभाषाया अनित्यत्वमेव ज्ञाप्यतान्तावतैव सकलेष्टसिद्धिर्भविष्यतीतीयम्परिभाषा नारब्धव्येतिमतेनाह । मूले परत्वाद्वेति । परत्वादित्येतद्व्याचष्टे । परकालेति । न वाच्यमिति । तथा च हृस्वस्य पूर्वप्रवृत्तत्वाद्विकारकृतलक्ष्यभेदाभावेन पुनर्हृस्वो न भविष्यतीति भावः । परेश्च घेतिसूत्रस्थभाष्येति । तत्र यद्धि लक्ष्यवलोपसंयोगादिलोपगुणदीर्घप्रयामीतिवाणिं-

कव्याख्यानावसरे क्रुञ्चेत्यत्र चोः कुर्झलीति कुत्वम्प्राप्नोति सञ्चीति वचनान्न भवति । एतदपि नास्ति प्रयोजनम् निपातनादेतत्सिद्धम् । किन्निपातनम् । ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चामिति प्रतिपादितम् । यद्ययन्नकारोपधः स्यात्तदाऽनुस्वारपरसवर्णयोरसिद्धत्वान्नकार एव कुत्वविधायकशास्त्रदृष्ट्याऽस्तीति कुत्वस्य प्राप्तिरेव नास्तीत्येवमभिधानमसङ्गतं स्यादिति प्रतिपादितम् । इदमेव । स्वाभाविकह्रस्वपरिग्रहार्थमित्यत्र भाष्यसम्मतसाधकाभावान्मुखसुखार्थत्वमेव । अजेर्व्य घञपोः । अत्राघञयोरित्यस्य न प्रयोजनमिति पतिपादयितुमाह । अत्रेत्यादि । तेन । व्यवस्थितविभाषात्वस्वीकारेण । स्पष्टञ्चेम्भाष्य इति । तत्र हि वा लिटीत्यतो वा ग्रहणमनुवर्त्याजेर्वीभावो भवति वा । व्यवस्थितविभाषा चेति । तेनेह भविष्यति । प्रवेता प्रवीतुम् । प्रवीतो रथः । संवीतिः । इह न भविष्यति । समाजः । उदाजः । समजः । उदजः । समजनम् । उदजनम् । समज्या चेति । तत्रायमप्यर्थः इदमपि सिद्धम्भवति । प्राजितेति । अत्र प्रवेता प्राजितेत्युभयोपादानाद्वलादावार्द्धधातुके परे विकल्प इति लब्धम् । विव्यतुः विव्युरित्यत्रोपधायाञ्चेतिदीर्घमाशङ्क्य स्थानिवद्भावेन समाहितम् । एतदुत्तरं यणादेशस्य बहिरङ्गत्वेनाप्येतत्सुसाधमिति क्वाचित्कोऽपपाठः । त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषाया अप्रवृत्तेर्बहुषु प्रतिपादितत्वात् । प्राचीनरीत्या कार्यकालपक्षाश्रयणेन वा तस्योपपत्तिः कार्या । निषेधस्याप्ययन्नियम इति । अत्र च रिर्यतुः । रिर्युः । संविव्यतुः । संविव्युरित्यत्र स्थानिवद्भावस्यैव दीर्घवारकस्य स्वीकारपरभाष्यमेव मानम् । कसभृत् । मूले चतुर्णामित्युक्तन्नोपपद्यते वृ इत्यनेन वृङो वृञश्च ग्रोपनेनाधिपयसम्भवादत आह । कृत्वादिनेति । न तदर्थत्वम् । न नियमार्थत्वम् । प्रकृत्याश्रयः । प्रकृतिविशेषसम्बन्धी । प्रत्ययाश्रयः । गिरिकदितिप्रत्ययविशेषोपादानेनारब्धः । वृधातौ प्राप्त इति । वमादावित्यादिः । न च वलोऽस्मात्परस्य निषेधप्राप्त्या तत्र

विध्यर्थमेव ग्रहणमस्त्विति भाष्यम् । बभूथाततन्थेतिसूत्रेण थलि ववर्थेत्यत्रेड्भावनिपातनेन लोके थलस्तस्मात्परस्येडागम इष्ट एवेत्याशयात् । नन्वेकाच उपदेश इति सूत्रस्य बहुषु प्राप्तत्वान्नियम एव भविष्यतीत्यत आह । प्रत्ययाश्रयस्येति । ननु क्रादीनामष्टानां ग्रहणस्य नियमार्थतोक्ता सा नोचिता स्तुद्र्वादीनामप्यनुदात्तत्वात्तेष्वपि प्रतिषेधस्य प्राप्तेरष्टानामिति वक्तुमुचितमिति चेन्न । अष्टानामपि नियमार्थत्वे तुष्टोथ दुद्रोथेत्याद्येव लोके भवति भवन्मते तु भारद्वाजनियमादिट्प्राप्तेः सेटामप्यापत्तेः । मम तु स्त्वादिभ्यः परस्य थलो भारद्वाजनियमात्प्राप्तोऽयमिट् स्त्वादिग्रहणेन निवार्यतेऽतो नैतेभ्य इड् भवतीति व्यवस्था सिध्यति । अन्यतरप्रापित इति । विकल्पस्यापि पक्षेऽभावतात्पर्यकत्वादिति भावः । सिषेधिथेत्येकमेवेति । ऊदित्त्वप्रयुक्तस्याप्यभावांशस्य नियमेन बाधनादेकमेवेत्यर्थः । उभयोरपि निषेधयोर्नियमेन निवृत्ते साधकमाह । यदि त्वित्यादिना । इति प्रक्रमादिति । तत्रत्यस्य नेडित्यस्य प्रकृतसूत्रे सम्बन्धादिति भावः । नित्यानिट इत्यस्याभाव इति । नित्यशब्दोपादानप्रयोजनकथनमेतत् । अथस्तास्वदितिसूत्रादनिट इत्येतावन्मात्रानुवृत्तौ तासावनिट्त्वमूदित्त्वात्तस्यास्त्येवेति भावः । भाष्यासङ्गतिमुपपादयति । तत्रेत्यादिना । विकल्पः स्यात् । उपदेशेऽत्वत इतिसूत्रेणाप्यस्याभावस्य विषये भारद्वाजनियमेन पक्षे इटः सत्त्वेन विकल्पः स्यात् । तासत्य इति । नित्यानिट इत्यस्य मध्य इत्यर्थः । तदसङ्गतिः । तद्भाष्यासङ्गतिः । मम तु । विकल्पप्रापितस्याप्यभावांशस्य क्रादिनियमो बाधक इत्यादिना मम तु । विपरीतनियमं वारयति । क्रादिभ्य इति । कृते परिवृत इति । कृते ग्रन्थे परिवृतो रथ इतिसूत्रस्थे लक्ष्ये । ऋतो भारद्वाजस्येतिसूत्र इति । तत्र ऋत इतिसूत्रस्याथस्तास्वदित्येव सिद्धेऽयं योगो नियमार्थं इत्यनेन नियमफलमभिहितम् । तथोपदेशेऽत्वत इतिसूत्रादुपदेशपदस्याथस्तास्वदित्यत्र सम्बन्धे सत्युपपद्यतेऽन्यथा अदर्थत्वा-

द्वौ गुणे रपरत्वे च कृतेऽनजन्तत्वादचस्तास्वदित्यस्याप्राप्तौ ऋत इत्यप्राप्तप्रापकत्वेन विधायकमेव स्यादसति नियामकत्वे पेचिथ शेकिथेत्येतन्न सिध्येदतो नियामकत्वमावश्यकमिति भावः । एवञ्च । उपदेशपदसम्बन्धसिद्धौ च । कुर्यादिति । अग्रहणे चेट उपदेशेऽगन्तत्वविरहादस्याप्रवृत्तिः स्यात् । तासौ नित्यानिडित्यस्य यस्तासौ नित्यं सेट् तद्भिन्न इत्यर्थकत्वे जघसिथेत्यत्रोपदेशेऽत्वत इत्यस्य प्राप्तौ ऋतो भारद्वाजस्येतिनियमाद्विकल्पः स्यादतो व्याचष्टे । तासौ सत इति । न च तासौ सत्त्वं स्थानिवद्भावेन भविष्यतीति वाच्यम् । अशास्त्रीयस्य धर्मस्यातिदेशेनालाभात् । वृत्तिरिति । नेड्वशि कृतीतिप्रक्रमात्त्त्यादिग्रहणकृतनियमस्यात्राप्राप्तिरिति केचित् । अत्र वृत्तिरितिकथनेन तादृशं यन्मतन्तन्न युक्तं किन्तु नञ्चाशब्दान्यतरप्राप्तस्याभावांशस्य बाधकः क्रादिनियम इति ध्वनितमेव मतं युक्तमन्यथा वृत्तिग्रन्थविरोधोऽपि स्यात् । यथा स्यादिति । अन्यथा उपदेशेऽत्वत इतिसूत्रेऽप्यनिडित्यस्यैव सम्बन्धे च उपदेशेऽत्वाननिट्चेत्यर्थः स्यात्तथा चेड्भावस्य शास्त्रीयत्वात्स्थानिवद्भावेनास्यानिट्त्वादनेन निषेधे प्राप्ते भारद्वाजनियमेन विकल्पः स्यादिति भावः । जिघृक्षतीति । अत्र हि सनि ग्रहगुहोश्चेतिनिषेधादनिट्त्वम् । आनञ्जिथेति भाष्यमिति । एतच्च प्रागुपपादितम् । इड्भावेऽपीति । तथा च नित्यपदाभावे यस्तासावस्ति अनिट्चेत्यर्थेऽस्यात्मनेपदपरतासावनिट्त्वादस्य प्रवृत्तौ भारद्वाजनियमः स्यादिति भावः । ननु ऋदन्तात्थलो नेट् भारद्वाजमतेऽन्यमते भवत्विति स्मृत्यन्तरानुसन्धानेन विकल्पेनेड्विधायकमिदमस्त्वित्यभिप्रायेण शङ्कते । न च ऋदन्त इति । समाधत्ते । अचस्तास्वदितीति । ननु वृजस्थलि परतो निषेधविधायकमेवेदं सूत्रमस्त्वित्यत आह । वृत्रादिष्विति । छन्दसि ववर्थेतिनिपातनेनेड्भावेऽपि लोके इडिष्ट एवेति तत्रेड्भावार्थमिदं विध्यर्थमिति न शङ्कनीयम् । अन्यस्येत्यस्य ऋकारान्तभिन्नो योऽजन्तोऽस्यार्थं त्यर्थेऽजन्तस्यमस्य त्वचेड्यागमे प्र-

योजकमिति लभ्यते तच्चायुक्तमाकारान्तपादिधातोरजन्तत्वेन ततः परस्य थल इडागमेऽजन्तत्वस्य प्रयोजकतया कृते इडागमे सन्निपातपरिभाषया लोपो न स्यादिति कस्य चिद् दूषणन्तच्चायुक्तमित्याशयेन व्याचष्टे । अत्रापीति । कल्पितेऽन्यस्यापीति वाक्ये । अन्यस्येत्यस्य व्याख्या आकारान्तभिन्नस्येत्येव । उपदेशेऽजन्तत्वमुपदेशेऽकारवत्त्वञ्च तद्विशेषणं यत्र निषेधविधायकयोः पूर्वपठितसूत्रयोः प्राप्तिस्तत्रैवास्य प्रवृत्तिरितिनियमसिद्धिरिति बोधनाय । एवञ्च आकान्तभिन्नत्वस्योपदेशेऽजन्तत्वसहितस्येडागमप्रवृत्तौ प्रयोजकतया तस्य जातेऽपि लोपे न विघात इति न सन्निपातपरिभाषया आकारलोपप्रतिबन्ध इति भावः । एवञ्च पपिथेति रूपम्भारद्वाजमतेऽन्यमते तु पपाथेति । एतेन । उपदेशेऽजन्तस्येत्युक्तत्वेन । कृतेऽपि लोपे तदा यद्यपि नाजन्तत्वन्तथाप्युपदेशेऽजन्तत्वस्य न विघातस्तदाह । उपदेश इत्युक्तेरिति । क्रादिनियममप्रापितस्यैवेति । एवकारेण भारद्वाजनियममापितस्य व्यवच्छेदः । तेन येननाप्राप्तिन्यायाभावात् । एतेन । तत्पदसम्बन्धव्यानितिव्याख्यानेन । येन नाप्राप्तिन्यायेनेति । आकारान्तैश्चस्तास्वदित्यस्यैव प्राप्तेस्तस्योपदेशेऽत्वत्वस्याभावादिति नोपदेशेऽत्वत इत्यस्यावश्यकप्राप्तिः । इड् न स्यादिति । उपदेशेऽत्वत इत्यनेन निषेधादिति शेषः । ध्वनितं चेदमिति । तत्र हि जहर्थेत्यत्र गुणे रपरत्वे च कृतेऽजन्तत्वस्योपदेशेऽत्वत्वस्य चाभावेन निषेधाप्राप्तौ ऋत इति सूत्रं विधायकमेव भविष्यतीति नियमानुपपत्तिरित्याशङ्क्योपदेशपदस्य पूर्वसूत्रेऽपि सम्बन्धेन नियमार्थत्वमुपपादितन्तत्रोपदेशपदस्योभयत्र सम्बन्धोपपादनावसरे योगविभागः करिष्यते अचस्तास्वत्थल्यनिटो नित्यमुपदेशे । ततः अत्वतः अत्वतश्चोपदेशे इत्युक्तम् । अत्र द्वितीयसूत्रप्रदर्शनेन तस्यापि ऋत इति नियामकमिति ध्वनितमतस्थल्यनिटो नित्यमिति सूत्रे सम्बन्धेनेत्युक्तिरुचितैवेति भावः । सृजीकृतचेत्यादिमङ्गासमाधानाभ्यां दृश्यादिधातुविषये इड्निषेध एवेति सिद्धमत्रैवार्थे सा-

धकान्तरमाह । किन्त्वित्यादिना । नेड् वशि कृतीत्यत्रेति ॥ तत्र हि कर्त्तरि कर्मव्यतिहारे न गतिहिंसार्थेभ्य इतिवद्विप्युत्तरकाल एव प्रतिषेधप्रकरणकृतो न क्रियत इत्याशङ्क्य नैवं शक्यम् इह हि तुरीय तुद्रोथेति । अतो भारद्वाजस्येतिनियमादिट् प्रसज्येत कृसृभृवृस्तुद्रुस्रुश्रुवो लिटीत्यस्य योगः प्रतिषेधार्थो भविष्यतीत्युक्तमेतेन इत्यादिग्रहणेन यो नियमः स भारद्वाजनियमप्रापितेटो बलवानिति स्पष्टमेव लभ्यते ॥ पुरस्तात्प्रतिषेधे सति अनारभ्यापवादोयम्भवति तेन यावानिड् नाम तस्य सर्वस्य प्रतिषेधः सिद्धो भवतीति चोक्तम् ॥ वस्वेकाजादित्यत्र चेति । तत्र हि अस्य सूत्रस्य किम्प्रयोजनमिति प्रश्ने नियमार्थोयमारम्भः । वसौ एकाजाद्घसामेव । क्व मा भूत् । बिभिद्वान् । किमुच्यते नियमार्थमिति । न पुनर्विध्यर्थमपि स्यात् । प्रतिषेधोऽपि ह्यत्र प्राप्नोति । नेड्वशि कृतीति । कृत्येव ह्ययं वशादिश्च । एवन्तर्हि कृसृभृवृस्तुद्रुस्रुश्रुवो लिटीत्येतस्मान्नियमादत्रेड्भविष्यति । एवञ्च सिद्धे इडागमे वस्वेकाजिति सूत्रन्नियमार्थम्भविष्यतीति भावः । ततः प्रकृतलक्षणस्यैव प्रतिषेधस्य स प्रत्यारम्भ इत्याशङ्क्य प्रत्ययलक्षणस्यापि प्रत्यारम्भः । एकाच उपदेशेऽनुदात्तादितिप्रतिषेधप्रसक्तस्याप्राप्तेः प्रत्ययलक्षणो यः प्रतिषेधो नेड् वशीति तस्यापि प्रत्यारम्भ इति भावः । एतेन कृसृत्रितिसूत्रविषयेऽनन्तरस्येतिनियमो न प्रवर्त्तत एवेति लभ्यत इति । वृद्धिश्रुत्येति । विधेयसमर्पकवृद्धिपदश्रवणेन । तत्फलम् । इक्पदोपस्थितिफलम् । अकोषीदित्यत्र हलन्तलक्षणवृद्धेरियास्यापि बाधो भविष्यतीत्याशयेनाशङ्कते । न चेति । समाधत्ते । तत्रेति । तत्र । नेटीति सूत्रे । तद्विषये । हलन्तविषये । परत्वात् । अपवादत्वेनोरकृतत्वात् । प्रकृतसूत्रे इक्परिभाषाया अनुपस्थितौ सिचि वृद्धीतिसूत्रस्य हलन्तेऽपि प्रसक्त्या हलन्तलक्षणवृद्धेरेतदपवादत्वसम्भवादिति भावः । हलन्तलक्षणया । वृद्धेरेति शेषः ।

अस्या । सिचि वृद्धिरितिसूत्रविहितवृद्धे । अनया। सिचि वृद्धिरिति वृद्ध्या। अस्या । सिचीति वृद्धे । ननु सिचीतिवृद्धिबाधकहलन्तलक्षण वृद्धे नेटीति प्रतिषेधेन बाधे सिचीति वृद्धिस्त्रप्राप्तावसरन्यायेन न भविष्यतीतत्य आह । त्रप्रावसरेति । नास्त्येवेति । तौ सदितिनिर्दे शात् । ननु स न्यायो नान्त पादमितिपाठे आवश्यक । अन्यथा गो अग्रमिति स्थिते एष इतिसूत्रबाधकस्यैङ इतिसूत्रस्य सर्वत्र विभाषेतिसूत्रेण निषेधेऽवादेशापत्तिरत आह। नान्त पादमितीति । अट्ट अतिक्रमहिंसनयो । अत्र मूले दोपधोऽयमिति । अस्य दकारोपधत्वफलन्तु द्वित्वे कर्तव्ये न न्द्रा इतिनिषेधेनाट्टिटत् । अट्टिटिषत इत्यनाच परदकारस्यरित्यज्य द्वित्वप्रवृत्ति । पूर्वत्रासिद्धीयमद्वित्वे इतिवचनस्य द्वित्वे कर्तव्ये प्रवृत्तिर्न तु तन्निषेधे कर्त्तव्ये । न च यदि दकारस्य ष्टुत्वेन डकारे ततश्चर्त्वेन टकारेऽट्ट इति श्रवणन्तदा नकारजावनुस्वारपञ्चमौ झलि धातुषु । सकारजश्शकारश्चे षाट्टवर्गस्तवर्गज इत्यभियुक्तोक्त्या तस्यासङ्ग्रह । अस्य टवर्गस्य रषात्परत्वाभावादिति न्यूनतेति वाच्यम् । नेदं वचनमपूर्वङ्किन्तु त्रैपादिककार्यप्रवृत्तिसिद्धार्थकथनमिति प्रतऽपि तस्य प्रवृत्तौ बाधकाभावात्। अथ वा रषाट्टवर्ग इति टवर्गयोगे श्रूयमाणष्टवर्गस्तवर्गज इत्यस्याप्युपलक्षणम् । नोपधत्ववादिमतेऽपि तथैव । अस्य मते पूर्वत्रासिद्धीयमितिवचनस्य प्रवृत्त्या आटिट्टदिति भवतीति विशेष । वठि एकचर्यायाम् । एकस्यासहायस्य चया गमनन्तस्यामित्यर्थः । गमनमत्र नोभदेशसयोगफलकव्यापार एव । किन्तु स्थित्यनुकूलव्यापारोऽपि । तेनापत्यरहिताया विधवायाश्च वठेति प्रयोगसिद्धि । मुडि वरणे । वरणमत्र स्वीकार । शडि रुजाया सङ्घाते च । तालव्योष्मादिरयम् । शण्डोऽगुरुपुरोहित । पडि गतौ । पण्डो गमनयन्त्रा । धातूनामनेकार्थत्वात्पण्डा विलक्षणा बुद्धिरित्यपि भवति । याडृ आघ्राणे । अग्रादौ पठितो वर्णो न यण् किन्तु उत्प्रत्याहारान्तर्गत एव । यणादित्वे तु य-

शादिरिति मूलोक्तव्यावर्त्याप्रसिद्धिः स्यात् । शाडृ श्लाघायाम् । इदमुप-
लक्षणम् । शाल धातुरप्यत्र बोध्यः । तेन शालत इत्यस्यापि सिद्धिः ।
ह्मयन्तक्षणश्वसजागृ । अधाक्षीदिति । दह भस्मीकरणे । अयं हान्तोऽनु-
दात्त उपदेश इत्यस्मात्परस्यैकाच उपदेशे इतिप्रतिषेधान्नेट् । नन्वत्र
जागृग्रहणं व्यर्थम् । जाग्रोऽविचीतिगुणविधानाज्ज्ञापकात् । तथाहि ।
तत्र गुणविधानस्य प्रयोजनमजागरीदित्यत्र सिचि वृद्धिरिति वृद्धिम्बा-
धित्वा गुणो यथा स्यादिति । यदि गुणे कृते पुनर्वृद्धिः स्यात्तदा गुण-
धानमनर्थकं स्यात् प्रथमप्राप्तवृद्धेरेव वृद्धिघटितरूपसिद्धेः । न च जागर-
क इत्यत्र गुणोऽचोञ्णितीति वृद्धिम्बाधित्वा गुणे जातेऽप्युपधालक्षणवृ-
द्धिप्राप्तौ सा मा भूदित्येव ज्ञाप्यतान्तावतापि गुणविधानञ्चरितार्थमिति
वाच्यम् । सामान्यतो वृद्धिर्नेत्येव ज्ञाप्यं वचनमस्तु न तु लक्षणविशेष-
प्राप्तेत्यस्य तत्र प्रवेशो लाघवार्थमिति स्वीकारादिति चेन्न । प्रकृतसूत्र-
भाष्यसन्दर्भबलेन गुणविधानस्य जागरक इत्यत्रोपधावृद्ध्यप्रवृत्तिज्ञापक-
तया चरितार्थ्यसम्भवात् । अनेकशास्त्रबाधकल्पनापेक्षया ज्ञापकस्य
सजातीयापेक्षत्वमुचितमिति भाष्याशयात् । गुणस्यात इत्युपधावृद्धेश्च
कथं साजात्यमिति चेत् । उच्यते । गुणस्य जागृत्वमात्रमुद्देश्यतावच्छेदक-
न्तच्च नान्यवृत्ति एवमुपधावृद्धेरप्यत्वमुपधात्वसामानाधिकरण्यविशिष्ट-
न्तदप्यकारमात्रवृत्ति न त्विकारादौ । एवञ्च विजातीयानेकनिष्ठाधिकर-
णत्वानिरूपकधर्मावच्छिन्नोद्देश्यकविधित्वेन साजात्यमनयोरस्ति । सि-
चि निमित्ते सति वृद्धेस्त्वयन्ताह्मल्यादिकमुद्देश्यतावच्छेदकन्तच्चानेक-
साधारणमिति नान्यास्ति साजात्यम् । इदमेव गुणविधानमत्र शास्त्रे
ज्ञापकस्य सजातीयापेक्षत्वस्याप्यमित्यर्थे ज्ञापकमस्तु । भाष्यसन्दर्भश्च
किमर्थञ्जागर्तेः प्रतिषेध उच्यते । सिचि वृद्धिर्मा भूदिति । नैतदस्ति प्र-
योजनम् । जागर्तेर्गुण उच्यते वृद्धिविषये प्रतिषेधविषये च स बाधको
भविष्यति । गुणे कृते रपरत्वे च हलन्तलक्षणा वृद्धिः प्राप्नोति । नेटीति

तस्याः प्रतिषेधो भविष्यति । इयन्तर्हि अतो ल्रान्तस्येति । तामपि बाधित्वाऽतो ह्लादेर्लघोरिति विभाषा वृद्धिः प्राप्नोति न च किञ्चिदिति । न च किञ्चिदिति । तस्याः पाक्षिक्या वृद्धेरपवादभूतन्न किञ्चिद् गुणविधानमस्ति यतो गुणविधानमकर्तव्यं स्यादिति कैयटः । एतेन भाष्यप्रघट्टकेन ल्रान्तेतिसूत्रस्थजागृग्रहणस्य पाक्षिकवृद्धिनिवारकतया चारितार्थ्यमिति लभ्यते । अत एव मूलकारोऽपि कैयटोक्तस्य गुणो वृद्धिर्गुणो वृद्धिरितिमङ्ग्रहश्लोकस्यानुवादङ्करिष्यति । किञ्च जागरितन्तेन । जागरितः जागरितवानित्यत्राद्धधातुकनिमित्तकगुणस्य प्रतिषेधविषये गुणविधायकतया जागृग्रहणस्य सार्थक्यम्बोध्यम् । इकारोऽत्र ह्रस्व इति । अभ्याससंज्ञक इकारः स्वभावतो ह्रस्वो न त्वस्य कोपि विकार इत्यर्थः । एतदेवोपपादयति । द्वित्वे कृत इत्यादिना । के चिदिति । इकारप्रश्लेषस्य प्रामाणिकत्वेऽस्येदित्त्वसम्भावना कर्त्तुं शक्या तत्रैव मानाभाव इति तेषां भावः । शिक्षायामिति । ग्लहर्षा चेत्यपि बोध्यम् । अम् न स्यादिति । सृजिदृशोरितिसूत्रे किंतीत्यस्योपादानात् । अस्याद्धधातुकत्वमिति । अत एव गोपायतीत्यादौ लघूपधत्वप्रयुक्तगुणस्य सिद्धिः । तत्फलम् । आयप्रत्ययाकारस्य फलम् तेन । यस्माद्विहितइत्याद्यंशोपस्थितिस्वीकारेण । एतस्माध्येति । सनाद्यन्ता इतिसूत्रसाध्येत्यर्थः । सूत्रादीनामिति । सूत्रं करोतीत्यादिप्रयोगघटकानां सूत्रादीनामित्यर्थः । समुदायानाम् । णिजाद्यन्तानाम् । स्पष्टश्चेदमिति । आद्येऽभ्यास क्यजन्तस्य कानि साधनानि भवन्ति भावः कर्ता च अथ कर्म नास्ति कर्म ननु चायमिषिः सकर्मकः यस्यायमर्थे क्यजिष्यधीयते अभिहितं तत्कर्म अन्तर्भूतं धात्वर्थः सम्प्रत्यः कथं तहायं सकर्मको भवति अत्र मुण्डमिवाचरति माणवकमिति अस्त्यत्र विशेषः उपमानकर्म उपमेयकर्म च उपमानकर्मान्तर्भूतं उपमेयकर्मणा सकर्मको भवति मुण्डं करोति मुण्डयति माणवकमिति । अत्रापि द्वे कर्मणी सामान्यकर्म विशेषकर्म च तत्र सामान्यङ् कर्मान्तर्भूतं विशेषक-

र्मणा सकर्मको भवति । सामान्यं कर्म मुण्डादि । विशेषकर्म माणवकादिः ननु चात्र वृत्त्यैव न भवितव्यं किं कारणमसामर्थ्यात् कथमसामर्थ्यं सापेक्षमसमर्थं भवतीत्याशङ्क्य मुण्डादयो गुणवचनाः गुणवचनाश्च सापेक्षाः तत्र वचनात्सापेक्षाणां वृत्तिर्भविष्यतीति वचनात् मुण्डमिश्रेतिवचनसामर्थ्यात् एतेन क्यच्प्रत्ययस्य निरपेक्षेभ्यः पुत्रादिभ्यः प्रत्ययविधायकतया चारितार्थ्यात्पविष्ठतं पुत्रमिच्छतीत्यत्र क्यज् नेति सूचितम् । एवमुक्त्वा भगवतोक्तम् । अथ वा धातव एव मुण्डादयः । न चैव ह्यर्था आदिश्यन्ते क्रियावचनता च गम्यत इति । धातव इति । सौत्रा धातवो मुण्डादयः तेभ्यश्चुरादिवत्स्वार्थिको णिच् । न चैवेति । यद्यपि क्रियाविशेषाभिधायित्वं मुण्डादीनां नोपात्तं तथापि स्वाभाविकत्वादर्थाभिधानस्य प्रयोगादेव तदवसीयत इत्यर्थः । यथा च कण्ड्वादयो द्विविधास्तथा मुण्डादयोपीति भावः इति कैयटेनोक्तम् । अन्त्येप्युक्तं भगवता तत्र हि नमःशब्दयोगे चतुर्थीविधानात् नमस्यति देवानित्यत्र द्वितीया कथमित्याशङ्क्योपपदविभक्तेरितिसमाधाय क्यजादिषु प्रत्ययार्थनिर्देशः कर्तव्यः क्रियावचनता यथा स्यादित्याशङ्क्य साधने जायमानानां तव्यदादीनामुपपत्तये सनाद्यन्ता इति धातुसंज्ञाविधानसामर्थ्यात्सनाद्यन्तानां क्रियावचनत्वावगमो भविष्यतीति समाधाय अथ वा धातव एव क्यजादयः न चैवं भवति क्रियावचनता च गम्यते कः खलु पचादीनां क्रियावचनत्वे यत्नं करोति येनैव हेतुना पचादयः क्रियावचनाः एवमेतेऽपि एवमर्थं सर्वव्याख्यायं विषयति क चिदर्थानादिशति कश्चित्त्वुक्तम् । अत्र कैयटः । विनाप्यादेशमभिधानशक्तिस्वाभाव्याद्विशिष्टक्रियावचनत्वं सिद्धमिति । गोपायेति चेति । अत्र अप्रत्ययादित्यनेन प्रत्ययान्तादकारः प्रत्ययः स्त्रियां विधीयते इति भावः । एतच्चेति । अवबोधेस्येतत् । कामीतीति । वार्तिकस्य कामीतिपदमित्यर्थः । उपक्रमण्यारम्भादिति । तेनानेकान्यूनं प्रन्दपसिद्धिरत्र प्रयोजनमर्थेमोक्ता न त्वे-

काऽऽश्र्याश्वृत्तिः प्रयोजनत्वेनोक्ता तत्स्वारस्यादित्यर्थः । अत एव । प्रत्ययग्रहणस्यानभिप्रेतत्वादेव । अत एव । प्रत्ययग्रहणसत्त्वादेव । अकारस्य । अवगल्भेत्यत्र योऽकारोत्तरोकारस्तस्य । भूतपूर्वेति । इत्संज्ञाप्रवृत्तिप्राक्कालिकमित्यर्थः । भूतपूर्वानेकाच्त्वाङ्गीकारे विरोधमाह । आमर्थमित्यादिना । तदर्थमिति । अनुबन्धाशङ्कार्थमित्यर्थः । तस्येति । अवगल्भेत्यादिसमुदायोच्चारणस्येत्यर्थः । अनुबन्धासञ्जनप्रयोजनमात्मनेपदसिद्धिरित्याह । अवगल्भतीत्यादि । अस्य प्रामाविति शेषः । अस्मिन्नाचारेत्यादिवचने । न तेभ्यः क्विति । एवेत्यनेन । नन्वेवं न सर्वेत्यनेन सर्वप्रातिपदिकेभ्यः क्विप उत्पत्तिर्जातेति सर्वेत्यपार्थकमत आह । सर्वग्रहणमिति। न च कर्तृक्विबन्तावगल्भादिभ्यः आचारे क्विपि कृतेऽवगल्भतीत्यादि स्यादेवेति वाच्यम् । ह्रस्वनद्यापइतिसूत्रस्थभाष्यप्रामाण्येन हलन्तेभ्य आचारे क्विबभावस्यान्यत्र प्रतिपादनात् । यादिन इति । इरदन्तस्येति शेषः । आर्द्धधातुके किमिति । सार्वधातुकस्य शप उपदेशेऽकारान्तस्य गोपायेत्यस्य सत्यपि लोपे रूपे न विशेष इति प्रश्नः । अत्र यद्यपि गोपायेत्यस्य धातुस्वरेणान्तोदात्तस्य शपकारेणैकादेशे एकादेश उदात्तेनेत्यनेन उदात्तत्वे ततः परस्य तिपः पित्वादनुदात्तत्वे मध्योदात्तं गोपायतीति भवति सार्वधातुकस्य शपः उपदेशे एव पकाराकारलोपे तु सर्वानुदात्तं पदं प्रसज्यते इति स्वरे विशेषोऽस्त्येव तथापि स्वरकृतदोषस्य झटिति ज्ञातुमशक्यत्वात् यत्र रूपे विशेषस्तमाह । वृक्षस्येति । व्युत्पत्तिपक्ष इति । उपदेशे अकारान्त इत्यस्य स्वस्योपदेशे अकारान्तस्येत्यर्थः स्यादित्यभिप्रायेण व्युत्पत्तिपक्षेत्याद्यभिहितम्‌न चान्यस्य उपदेशे अकारान्तमित्यर्थे उणाद्यन्तानामव्युत्पन्नत्वमितिपक्षे च नायं दोषः स्वप्रत्ययोपदेशमादाय वृक्षशब्दांत्यलोपापत्तिस्तु न सन्निपातपरिभाषाविरोधात् इति वाच्यम्। अस्य वृक्षइत्यादिप्रथमान्तोपलक्षणत्वात् अत्र सूत्रे अनुदात्तोपदेशइति सूत्रादेकदेशे स्वरितत्वप्रतिज्ञया उपदेशपदमनुवर्त्तते तस्मिन्नपि कस्योप-

देश इत्याकाङ्क्षायामुपस्थितत्वादार्द्धधातुकपदं विभक्तिविपरिणामेनान्वेति। न चार्द्धधातुके पर इत्येवास्तु इति वाच्यम्। अय्पयादिभ्यो धातुभ्यः क्विपि यलोपे अत् पत् इत्यादौ तुकं बाधित्वा परत्वाच्छिष्टावयवाकारस्य लोपापत्तेः। बध्यादित्यस्य सिद्धिस्तु आर्द्धधातुक इतियक्षिडीत्यस्यापि विषयसप्तमीत्वात् इति बोध्यम्। घुण घूर्ण भ्रमणे। अस्य द्वितीयस्य प्रक्रियालाघवार्थं इति। ह्रस्वं पठित्वोपधायां चेतिदीर्घकरणे प्रक्रियागौरवमिति भावः। अत्र केचित् अस्माद्धातोरन्येभ्योपि दृश्यत इति वनिपि कृते विड्वनोरनुनासिकस्येत्यनेन नकारस्याकारे ह्रस्वपाठे घुरावेति दीर्घपाठे घूरावेति फलभेदस्य स्पष्टतया कथमेतत्। न च दीर्घे कर्तव्ये परनिमित्तकत्वेन बहिरङ्गस्यात्वस्यासिद्धत्वादादौ दीर्घे न फलभेद इति वाच्यम्। त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषाभावस्योपपादितत्वादिति। अत्राहुः। कार्यकालपक्षे त्रिपाद्यामन्तरङ्गपरिभाषा प्रवर्तत इतिप्राचीनसम्मतपक्षाभिप्रायेण प्रक्रियालाघवार्थं इत्यभिधानमिति। वस्तुतस्तु कार्यकालपक्षेऽप्यप्रवृत्तिरेवन्याय्येत्याशयेनाह। अन्ये त्विति। एतन्मते घुरावा ब्राह्मणीत्येव वनिबन्तस्य भवति उपधायां चेतिदीर्घस्यात्वस्य च युगपत्प्राप्तौ दीर्घविधायकस्यासिद्धत्वादाकारादेशस्यैव प्रवृत्तेः। न चास्माद्विजन्तात्सौ भ्वामादौ च नलोपे कर्तव्ये नकारादेशणत्वयोः प्राप्तौ णत्वस्यासिद्धत्वान्नलोपे कृते लघूपधलक्षणगुणापत्तिः गुणे कर्तव्ये नलोपासिद्धत्वं तु न नलोपस्सुप्स्वरेतिपरिगणनादिति वाच्यम्। अन्येभ्योपि दृश्यत इत्यत्र दृशिग्रहणादस्माद्विज् न भवतीत्याशयात्। सम्प्रदायानुरोधात्। वृत्तिसम्मतव्याख्यानानुरोधात्। तदभाव इति। ओपप्रत्ययाभावे इत्यर्थः। चारितार्थ्यमिति। अनुबन्धस्येत्यादिः। ग्रहणादिति। क्विबप्यत्राचारार्थे यो विहितस्तद्भिन्न एव हलन्तेभ्योस्योत्पत्त्यभावात्। अयनुवादोयमिति। णेरार्द्धधातुकपरत्वनिमित्तकगुणेऽयादेशे च कृते सति सम्भवे अय्शब्दस्तदनुवाद इत्यर्थः। न चैवगामादिषु परेषु

प्राप्तस्य णिलोपस्य निषेधार्थं नेत्येवाभिधीयताम् अय्विधानं किमर्थमिति शङ्कनम्। ल्यपि लघुपूर्वादित्युत्तरसूत्रार्थं तत्सत्त्वात्। अनुबन्धकार्येऽनल्विधाविति निषेधानापत्त्या ल्यपः स्थानिवद्भावेन कित्त्वादत्र गुणाप्राप्तेरिति बोध्यम्। णिश्रिद्रुस्रु। णिशब्देन णिङ् णिचोर्ग्रहणम् एकस्यैव ग्रहणे साधकाभावात्। बाधादिति। न च क्ङिति च इत इटः प्राप्तिः तितुत्रेतिनिषेधात्। केचित्तु णिश्रितसूत्रेण च्लेः स्थाने अङादेश एव विधातव्यः चङीतिसूत्रे अङीत्येव कार्यम् चित्त्वमस्य स्थानिवत्त्वेन सिद्धम् इत्याहुः। अत्राहुः। अनुबन्धकार्येऽपि क्वचिदनल्विधाविति निषेधः प्रवर्तत इति ज्ञापनार्थं चकारोच्चारणमिति। पूर्वविप्रतिषेधाश्रयणमनर्थकमितिवादिमतमाह। यदि त्विति। अत एव। एतादृशस्थले स्थानिवत्सूत्रस्य प्रवृत्तेरेव। दृष्टान्तपरभाष्यं खण्डयति। तन्नेत्यादिना। अनल्विधिस्त्वेनेति। आदेशविधायकशास्त्रे स्थानिनोऽच्पदेनैवोपादानात्। ननु वृद्धेः प्राग्यदि णिलोपस्तदाऽयीयदित्यस्य सिद्धिरल्लोपित्वान्न स्यादित्यत आह। यथान्यायमिति। अग्रिमभाष्यमिति। शब्दान्तरप्राप्तया वृद्धेरप्यनित्यत्वमुपपाद्य वृद्धौ कृतायां लोप इत्येतद्द्वयस्यापनेनानग्लोपित्वात्सिद्धेर्णिष्युपसंख्यानं न कार्यमित्यभिप्रायकम्भाष्यमित्यर्थः। एवम्। सन्यतसूत्रभाष्यवत्। भोभगोइतिसूत्रस्थभाष्यविरोधेन एकदेशित्वमुक्त्वा भाष्यान्तरविरोधादपि तामाह। किं चेति। णिलोपो न स्यादिति। स्थानेद्विर्वचनपक्षेऽजादेर्द्वितीयस्येत्येकवाक्यतया षष्ठीत्यनेन टिशब्दस्य स्थाने टिटीत्यादेशे प्रकृतिप्रत्ययविभागसम्मोहेन निर्दिश्यमानधर्मावच्छिन्नविषयकार्यस्यासम्भवाण्णिलोपो न स्यादिति भावः। गुणादीनामिति। वयङ्विधायकसूत्रस्य यणादिविधायकेभ्योऽष्टाध्याय्यां पूर्वपादेन वार्त्तिकनिर्देशेऽपि गुणस्येयङ्बाधकतयात्र वार्त्तिकोक्तक्रमव्यत्यासः। परे त्वेवम् पूर्वविप्रतिषेधानङ्गीकारे। अनेकवचनेति। गुणादीनां यत्र यत्र प्राप्तिस्तत्तद्विषयकस्य स्युटि णेर्लोपः ण्वुलि णेर्लोपः इत्येवम्प्रकारेणानेकवचनमेत्यर्थः। एवम्।

वचनानंगीकारे अनंतरस्येतिन्यायेन णिलोपशास्त्रस्य यणियङ्बाधकतया चरितार्थ्ये न गुणादिबाधकत्वं न स्यादिति भावः। औचित्यमिति। एकवचनकल्पनयैव सर्वसामंजस्यादिति भावः। णौ चङि। अत्र सप्तमीनिर्देशेन णिपरे चङि चपरे यत्पूर्वं निर्दिष्टमङ्गमित्यर्थे असंभवपरिहाराय यादृशी कल्पना कर्तव्या तामाह। णिचाङ्गस्येत्यादिना। असंभवेनेति। णिचा व्यवधानादित्यादिः। णौ चङीत्यत्र णिग्रहणं न कार्यं चङीत्येतावदस्तु असंभवस्तु लुप्तस्य णेः स्थानिवद्भावाभिप्रायेण शङ्कते। न चेति। समाधत्ते। तत्रेति। अन्तरङ्गत्वात्। पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्गत्वात्। अपवाद.। येन नाप्राप्तिन्यायात्। ह्रस्वप्राप्तिकाल इति। चङुत्पत्तिप्राक्काले वृद्धेः प्राप्तेरिति भावः। पदसंस्कारपक्षेऽप्याह। पदेति। णिजन्ते यच्चोपधाह्रस्वत्वमभिप्रेतं तत्र त्वं क्रममाह। धातुसंज्ञेत्यादिना। अस्य धातुत्वाने णिजुत्पत्तिस्थानमित्यादि पूरणीयः। एवं च णिज्स्थानस्य चङ्विषयकस्थानपूर्वकालिकतया पूर्वं वृद्ध्यायोः प्रवृत्तिः स्यादिति भावः। सामर्थ्येन। सूत्रारम्भसामर्थ्येन। तदपेक्षयेति। सामर्थ्यकल्पनापेक्षयेत्यर्थः। ननु णाविति ह्रस्वभाव्युपधाविशेषणमस्तु तावतैवाधकादृद्दित्वादौ दोषो न भविष्यतीत्यत आशङ्कायामाह। प्रत्ययस्येति। सन्वल्लघुनि। चङ्पर इत्यत्र कर्मधारयस्य व्यववारणायाह। बहुव्रीहिरिति। तत्र मानमाह। परग्रहणमिति। कर्मधारयस्याभिप्रेतत्वे चङीत्येव वदेत्। परशब्दस्य परोपादानं तु न साधकम्। बहुव्रीहिपक्षेऽपि साम्यात् अङ्गस्येत्यनुवृत्तौ चङ्परशब्दयोर्व्यविशेषणत्वमेकस्याङ्गस्येत्यस्य। द्वितीये त्वत्र पञ्चम्यौ निमित्तनिमित्तिभाव इत्याशयेनाह। अङ्गस्यानिमित्तमितीति। अत एव। अङ्गसंज्ञानिमित्तं यस्मात्परं णिरित्याख्यानादेव। न सन्वत्त्वमिति। णौ विशेषणस्याभावे चङ्परो यस्मादित्येतावन्मात्रोक्तौ णिजकृतेऽपि सन्वद्भावापत्तिरिति भावः। नन्वन्वाजसातादुपस्पातिदीपदित्यत्र सन्वद्भावापत्तिदोषः। अगाराशायेन सन्वत इत्यस्याप्रवृत्तेः। प्राद्युद्गतदिक्त्वाद्यर्थपरत्वात्तथा-

प्राप्तस्य णिलोपस्य निषेधार्थं नेत्येवाभिधीयताम् अप्विधानं किमर्थमिति शङ्क्यम्। ल्यपि लघ्वित्युत्तरसूत्रार्थं तत्सत्त्वात्। अनुबन्धकार्येऽनल्विधाविति निषेधानापत्त्या ल्यपः स्थानिवद्भावेन कित्त्वादत्र गुणाप्राप्तेरिति बोध्यम्। णिश्रिद्रुस्रु। णिशब्देन णिङ् णिचोर्ग्रहणम् एकस्यैव ग्रहणे साधकाभावात्। बाधादिति। न च क्विचि कृत इटः प्राप्तिः तितुत्रेतिनिषेधात्। केचित्तु णिश्रितसूत्रेण च्लेः स्थाने अङादेश एव विधातव्यः चङीति सूत्रे अङीत्येव कार्यम् चित्त्वमस्य स्थानिवत्त्वेन सिद्धम् इत्याहुः। अत्राहुः।अनुबन्धकार्येपि क्वचिदनल्विधाविति निषेधः प्रवर्त्तत इति ज्ञापनार्थं चकारोच्चारणमिति। पूर्वविप्रतिषेधाश्रयणमनर्थकमितियादिमतमाह। यदि त्विति। अत एव। एतादृशस्थले स्थानिवत्सूत्रस्य प्रवृत्तेरेव। दृष्टान्तपरभाष्यं खण्डयति। तन्नेत्यादिना। अनल्विधित्वेनेति। आदेशविधायकशास्त्रे स्थानिनोऽच्पदेनैवोपादानात्। ननु वृद्धेः प्राग्यदि णिलोपस्तदाऽयीवददित्यस्य सिद्धिरग्लोपित्वान्न स्यादित्यत आह। यथान्यायमिति। अग्रिमभाष्यमिति। शब्दान्तरप्राप्तया वृद्धेरप्यनित्यत्वमुपपाद्य वृद्धौ कृतायां लोप इत्येतद्ग्रन्थस्यापनेनानग्लोपित्वात्सिद्धेर्णेर्णिच्युपसंख्यानं न कार्यमित्यभिप्रायकभाष्यमित्यर्थः। एवम्। सन्वत्सूत्रभाष्यवत्। ओःपुयण्ज्यपरे इति सूत्रस्थभाष्यविरोधेन एकदेशित्वमुक्त्वा भाष्यान्तरविरोधादपि तामाह। किं चेति। णिलोपो न स्यादिति। स्थानेद्विर्वचनपक्षेऽजादेर्द्वितीयस्येत्येकवाक्यतया षष्ठीत्यनेन टिशब्दस्य स्थाने टिटीत्यादेशे प्रकृतिप्रत्ययविभागसम्मोहेन निर्दिश्यमानपर्यायच्छिन्नविषयकत्वस्यासम्भवाण्णिलोपो न स्यादिति भावः। गुणादीनामिति। इयङ्विधायकसूत्रस्य यणादिविधायकेभ्योऽप्यष्टाध्याय्यां पूर्वपाठेन वार्त्तिकनिर्देशेपि गुणस्येयङ्बाधकतयात्र वार्त्तिकोक्तक्रमव्यत्यासः। परे त्वियम् पूर्वविप्रतिषेधानङ्गीकारे। अनेकवचनेति। गुणादीनां यत्र यत्र प्राप्तिस्तत्तद्विषयकस्य ण्युटि णेर्लोपः ण्वुलि णेर्लोपः इत्येवम्प्रकारेणानेकवचनमित्यर्थः। एवम्।

वचनानंगीकारे अनंतरस्यैवेतिन्यायेन णिलोपस्यांतरस्य यणियङ्बाधकतया चारितार्थ्ये न गुणादिबाधकत्वं न स्यादिति भावः। औचत्स्यमिति। एकवचनकल्पनयैव सर्वसामंजस्यादिति भावः। णौ चङि। अत्र सप्तमीनिर्देशेन णिपरे चङि चपरे यत्पूर्वं निर्दिष्टमङ्गमित्यर्थे असंभवपरिहाराय यादृशी कल्पना कर्तव्या तामाह। णिचाङ्गस्येत्यादिना। असंभवेनेति। णिचा व्यवधानादित्यादिः। णौ चङीत्यत्र णिग्रहणं न कार्यं चङीत्येव तावदस्तु असंभवस्तु लक्ष्यस्यणान्तत्वस्याभिप्रायेण शङ्कते। न चेति। समाधत्ते। तत्रेति। अन्तरङ्गत्वात्। पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्गत्वात्। अपवादः। येन नाप्राप्तिन्यायात्। ह्रस्वप्रापिकात्र इति। चङुत्पत्तिप्राक्काले वृद्धेः प्राप्तेरिति भावः। पदसंस्कारपक्षेऽप्याह। पदेति। णिजन्तं यत्रोपधाह्रस्वत्वमभिप्रेतं तत्रत्यं क्रममाह। धातुसंज्ञेत्यादिना। अस्य धातुस्थाने णिजुत्पत्तिस्तागमित्यादिः पूरणीयः। एवं च णिज्ज्ञानस्य चङ्विषयकज्ञानपूर्वकालिकतया पूर्वं वृद्ध्यायोः प्रवृत्तिः स्यादिति भावः। सामर्थ्येन। सूत्रारम्भसामर्थ्येन। तदपेक्षयेति। सामर्थ्यकल्पनापेक्षयेत्यर्थः। ननु णाविति ह्रस्वभाव्युपधाविशेषणमस्तु तावतैवाचकाद्वदित्यादौ दोषो न भविष्यतीत्यताशङ्कायामाह। प्रत्ययस्येति। सन्वल्लघुनि। चङ्पर इत्यत्र कर्मधारयस्य भ्रमवारणायाह। बहुव्रीहिरिति। तत्र मानमाह। परग्रहणमिति। कर्मधारयस्याभिमतत्वे चङीत्येव वदेत्। परशब्दस्य परोपादानं तु न साधकम्। बहुव्रीहिपक्षेऽपि साम्यात् अङ्गस्येत्यस्यानुवृत्तौ चङ्परशब्दयोर्व्यविशेषणत्वमेकस्याङ्गस्येत्यस्य। द्वितीये त्वत्र पञ्चम्यौ निमित्तनिमित्तिभाव इत्याशयेनाह। अङ्गसंज्ञानिमित्तमितीति। अत एव। अङ्गसंज्ञानिमित्तं यच्चङ्परं णिरितिव्याख्यानादेव। न सन्वत्त्वमिति। णौ विशेष्यस्याभावे चङ् परो यस्मादित्येतावन्मात्रोक्तौ श्रिप्रभृतिष्वपि सन्वद्भावापत्तिरिति भावः। नन्वभ्यासस्यालघुत्वाज्जिघ्रिपदित्यत्र सन्वद्भावापत्तिर्दोषः। अकाराभावेन सन्यत इत्यस्याप्यप्राप्तेः। प्रादुद्रुवदित्यत्रायणपरधात्वक्षरा-

भावात् स्रवतिशृणोतीति सूत्रविहितमित्त्वमस्य तथा सति स्यादित्यपि न सन्वद्भावस्य निरस्त्वरोपि न प्रयोजनं चङ्न्यतरस्यामित्युपोक्षमोदात्तत्वस्य परत्वादिति चेन्न । णिशब्दस्य णेरभावेपि यस्माद्धातोः परस्य च्लेश्चङ् तदुपलक्षणत्वात् । अत एव प्रभृतिशब्दोपादानं सार्थकम् । एवं चास्य वाक्यस्याचकमतेत्यत्र कमेश्चङ् वक्तव्य इतिवार्तिकेन णिङभावेपि यदा चङ् तदापि स्यादित्यत्र तात्पर्यम् । न च चङ् परो यस्मात्सद्भधो लघुः ककाराकारो न च तत्परोऽभ्यासाकारः ककारेण व्यवधानादिति वाच्यम् । इष्टस्थले सर्वत्रैव व्यवधानेन येन नाव्यवधानन्यायेन सिद्धेः । यत्तु यद्यचकमतेत्यस्योपलक्षकं तदिति व्याख्यायते तदाचीकमतेत्येव स्यादिति कमेर्णिङितिसूत्रानन्तरमायादय इति सूत्रबाधनाय कमेर्लुङि चेति सूत्रं कार्यम् । कमेर्लुङि परतो णिङ् भवतीत्यर्थो भविष्यति तावतैवेष्टसिद्धेरिति तन्न । न्यासान्तरारम्भे गौरवस्य स्पष्टत्वात् । तदपेक्षयाङ्गस्येत्यस्यावृत्तया व्याख्यानस्योचितत्वात् । अत एव । चङ्परशब्दार्थस्यलघुविशेषणत्वादेव । नैव सन्वत्त्वमिति । प्रथमव्याख्यायामित्यादिः । यद्यपि चङ्परशब्दार्थस्यानुबाद्यविशेषणत्वं तथापि विधौ परिभाषेत्यस्याभावान्निर्दिष्टपरिभाषा प्रवर्तत एव । नैवदीर्घत्वमिति । प्रथम पक्ष एवेति शेषः । भवत्येवेति । नुशब्दस्य द्वित्वेऽभ्यासोत्तरखण्डस्य वृद्धावावादेशे ह्रस्वत्वेऽभ्यासस्य चङ्परणिपरलघुपरत्वसत्त्वाद्द्वयत्येव पक्षद्वयेऽपीति भावः । ननु येननाव्यवधानन्यायेन तादृशलघुपरत्वं यत्र वर्णव्यवहिताभ्यासस्य तत्र सन्वद्भावस्य चारिताथ्र्यादचिक्षमदित्यादौ संयोगव्यवधाने न स्यादत आह । अचिक्षमेत्यादि । नन्वस्मिन्पक्षेऽचकथदित्यादौ सन्वद्भावाभावायोपात्तस्यानग्लोपिग्रहणस्य वैयर्थ्यमल्लोपस्य स्थानिवद्भावेनाभ्यासस्य चङ्परणिपरलघुपरत्वाभावात् । न चाभ्यासस्य नानादिष्टादचः पूर्वत्वमिति कथमत्र स्थानिवद्भाव इति वाच्यम् । द्विः प्रयोग एव द्विर्वचनमिति यः स्थानिभूतादचः पू-

र्यत्वेन दृष्टस्तत्त्वमस्तेरवेति चेन्न । अभ्यासस्य कार्ये तदुत्तरखण्डादेशस्य तत्प्रतियन्यकीभूतं स्थानिवत्त्वमस्त्यभ्यासस्यावर्ण इतिसूत्रस्यासवर्णग्रहणज्ञापितवचनेन दोषाभावात् । अभ्यासस्याङ्गत्वाशयादाह । अवयव इति । अस्य फलमिति । अभ्यासविशेषणस्याङ्गस्येत्यस्य फलमित्यर्थः । न चैकाचो द्वे पूर्वोऽभ्यासोऽङ्गस्येत्येषां कार्यकालपक्षे एकवाक्यतयाऽङ्गसंज्ञकैकाच्धातुकर्मके ये द्वे उच्चारणे तयोः पूर्वस्य सन्वत्त्वमिति प्रकृतसूत्रार्थः स्यात् तथा चैकाच्धातुसम्बन्ध्यभ्यासस्यैव सन्वत्त्वंनानेकाच्धातुविषय इत्येव फलमस्त्विति वाच्यम् । प्रकृतसूत्रभाष्ये इह कस्मान्न भवति । अजजागरत् । लघुनि चङ्परइत्युच्यते व्यवहितश्चात्र लघु चङ्परमिति भाष्यविरोधात् । एतद्भाष्यविरोधेन यथोद्देशपक्षस्यैवाश्रयणमत्रोचितमिति । यदि कार्यकालपक्षमाश्रित्यैकवाक्यता विधिशास्त्रेण स्यात्तदाऽनेकाच्सु ह्रस्वत्वादिकमपि न स्यात् । उक्तभाष्येति । अचचकासदित्यत्र सन्वत्त्वाभावप्रतिपादनपरभाष्यविरोधादित्यर्थः । आपत्तिश्चात्र पक्षे इति । न च चङ्परणिपरत्वाङ्गमिति कथमत्र प्राप्तिरिति वाच्यम् । यस्मात्प्रविहितस्तदादित्वमुन्दिद्र इत्यस्यास्त्येवेत्याशयात् । सन्वद्भावेन सनि यद्यत्कार्यं दृष्टन्तस्य सर्वस्यातिदेश इत्यभिप्रायेणाशङ्कते । नन्विति । तस्यात्रेति । तदीयाभ्यामस्येत्यर्थः । अङ्गान्यत्वादित्यस्य द्विविधव्याख्यानेनाङ्गकर्मकद्विरुच्चारण इत्यर्थस्य भाष्यसम्मतत्वमिति स्पष्टमेवेति भावः । स्पष्टार्थमिति । ह्रस्वत्वविधानेनाभ्यासावयवस्यात्त्वमव्यभिचरितमिति भावः । अभ्यासस्य विशेष्यत्वमतो विशेषणत्वमित्यदन्ताभ्यासस्येत्यर्थं वक्ष्यमाणरूपासिद्धिरत आह । अभ्यासमव्यवन्धकारस्येति । अत एव । अत इत्यस्य विशेष्यत्वादेव । सन्पराभ्यासस्येति । सनि परे तदपेक्षया यः पूर्वोऽभ्यासोऽतस्तत्पङ्भिरव्यवहितभिन्नस्तस्येत्यर्थः । अन्यथा पिपक्षतीत्यादावुत्तरभागेन व्यवधानान्न स्यात् । सूत्रस्थार्थवन्त्वधीपिपतीत्यादौ भविष्यत्येव । तादृशाव्यवधाना-

श्रयणे प्रमाणन्तु च्चाजभासेतिसूत्रे काण्यादीनां वेत्येतद्वार्त्तिकस्यापकाणत। अचीकणदित्यादिप्रयोगदर्शनमेव। तत्पक्षे। कार्यकालपक्षे। इदञ्च। कार्यकालपक्षमाश्रित्योक्तव्याख्यानञ्च। वस्तुत इत्यादीति। आद्यपक्षस्य परिष्कारोऽयम्। नोपयुज्यत इति। सन्वद्भावविषये दीर्घस्य विधानात्। कृत्वा चिन्तान्यायेनेति। यद्यापुगागमः स्यात्तदा द्वयं स्यादित्येवमत्र चिन्ता द्रष्टव्या। न स्यादेवेत्यर्थ इति। नियमबीजन्तु प्रागुपपादितम्। कमिप्रभृतीनामिति। एतेषामग्लोपित्वेऽपि णिजिनिमित्तकाग्लोपित्वं नास्तीति भावः। अत एव। सनतेः सनोतेश्च ग्रहणादेव। सनोतेरनुनासिकलोपादात्वं विप्रतिषेधेनेतिवार्त्तिकेन जनसनेतिसूत्र एव सन्ग्रहणेन सनतेः सनोतेश्च ग्रहणमिति व्यवस्थाप्यते तत्रोभयोर्ग्रहणे सिद्धेऽर्थाधिकारानुरोधाद्वे विभाषेत्यत्रोभयोर्ग्रहणमर्थसिद्धम्। अन्ये जनादय इति। उपक्रमभाष्यमिदम्। एतेन। पूर्वोक्तरीत्योभयोर्ग्रहणस्य व्यवस्थापनेन। अकारोच्चारणेन। ह्रस्वाकारोच्चारणेन भाष्यविरोधापत्तेरिति। यदि ह्रस्वाकारविशिष्टस्य चेत्यस्य विवक्षा तदा भाष्यविरोधः स्पष्ट एव। ननु कगः परस्मैपदेष्विति सूत्रे परस्मैपदेष्वित्युपादानादत्र परस्मैपदपरस्यत्वत्रैव स्यादिति लुकि न स्यान्न लुमतेतिनिषेधादत आह। तत्कामेत्यत्रेति। तन्निरूपितेति। परस्मैपदनिरूपितेत्यर्थः। स्तु-क्रमोरनात्मनेपद। प्रथमार्थे षष्ठीति। लाघवात्पर्युदासोऽयम्। आत्मनेपदनिमित्तभिन्नो यत्र स्नुक्रमी तत्रैवेत्यर्थः। यदि तु प्रसज्यप्रतिषेध आश्रीयते आत्मनेपदनिमित्त इति भावप्रधाननिर्देशः। स्नुक्रमोरात्मनेपदनिमित्तत्वाभावे सति सत्यामसत्यां तान्यां परस्याद्वर्धातुकस्येतिव्याख्याने तु षष्ठीनिर्देशो न्याय्य एव। नन्वेवं व्याख्याने प्रक्रंसिषीष्टमिन्यादिप्रयुक्त इत्यत्रापि स्यादत आह। प्रकृत इति। प्रकृतसूत्रस्थनिमित्तपदस्य प्रयोजनमाह। स्नुक्रमोरिति। न चैवं प्रकन्तेत्यत्रापि प्रतिषेधः स्यादिति वाच्यम्। क्रमेः पतंरि चात्मनेपदविषयादितिव्यपनेन

प्रतिषेधात् । प्रचिक्रंसत इत्यत्र तु प्रतिषेधो भवत्येव । पूर्ववत्सन इति-शास्त्रप्रामाण्येन स्नुक्रमोरात्मनेपदनिमित्तत्वादेव सन्नन्तादात्मनेपदविधानात् । दुरुपपादमिति । अवयवे समवेतोऽप्यवयवी न तु ततः पर इति भावः । अन्ये त्विति । अत्राकृतिवदौजन्तु सामर्थ्यकल्पने गौरवं स्फुटमिति । अत एव । अङ्गादित्यस्यासम्बन्धादेव । युटः । दीर्घो युडिति-विहितस्य । उपसर्गस्यायताविति सूत्रेऽयतावित्युपसर्गविशेषणमिति रीत्या व्याख्यातन्तत्र कारणमाह । श्रुतत्वादिति । अत एव अस्योपसर्गविशेषणत्वादेव । इणो रूपमितिस्वीकारेण प्रत्यय इत्यस्योपपत्तावपि यदाऽयतिपरत्वमलेस्तदा प्लत्यय इत्यपि स्यादत आह । प्लत्यय इतीति । कैयट इति । अनभिधाने मानन्तु रेफस्यायताविति विशेषणमितिभाष्योक्तपक्षान्तरेणैकवाक्यत्वमिति । तस्मिन्पक्षे प्रत्यासत्त्याऽयतिस्थासि च उपसर्गस्तदवयवस्य रेफस्यायतिपरस्येत्यर्थं आश्रयणीय इति प्रतीताव्यवधाने घारिताय्योटपल्ययत इत्यत्र न स्यादित्येव दूषणन्न तु प्रत्यय इति सिध्यतीत्यप्युक्तन्देव । किञ्च भवत्सम्मतस्य लकारघटितस्य प्रामाणिकत्वे तदविघ्नरूपस्य दूषणस्य तस्मिन्पक्षे भाष्यकृतावश्यं कथनङ् कर्तव्यन्तथानुक्तत्वात्तस्मात्तदरूपस्यानभिधानमिति । असाधुरेव । गत्यर्थस्य प्राधान्येन प्रतिपादकस्यासाधुत्वमत्र बोध्यम् । यदि तु पचाद्यचि कृते तदन्तादाचारे क्विप् क्रियते तदा साधुरेव । विभ्यर्थभेद इति बोध्यम् । अभिमान इति । लिङ्निमित्तकर्माभावस्यालयकारत्वादेवङ्गारिताभ्यां प्रदर्शनमयुक्तमिति । पर इति । एवञ्च णिदुत्पत्तेः प्रागेव पीजाय इति भावः । दीपजनबुध । इदं सूत्रद्वयं कर्त्तरि प्रवर्त्तते न तु भावकर्मणोः । तत्र हि परत्वाद्भावकर्मणोरित्यस्य प्रवृत्तेः । चिण् ते पद इतिसूत्रात्त इत्यनुवर्त्तते । जनिवृध्योश्चेति ! यदि तु प्रतिपदं लक्षणभेदो नाश्रीयते तदा गमहनजनेतिसूत्रात् क्ङितीत्यनुवर्त्य विभक्तिविपरिणामेन दृशिभो लुगिति व्याख्येयम् । मृषे तद्वाप्येति । पोपदेशत्वलक्षणाकरणे स्थानिनिरियापत्र पर्यु-

दस्त इत्यन्दन्त्याजन्तसादित्वात्पोपदेश एवान्यथा भाष्यस्य न्यूनत्वाप-त्तिरिति सोपदेशत्ववादिनो भाष्यविरोध इति भावः। ममत्वेति। अत्र यस्य हल इति यशब्दस्य लोपो न तत्र यस्येति सङ्घातस्य ग्रहणात्। मूले स्नानमिति। अत्र स्नानं स्नादभिषव इत्यमरोक्तः स्नानशब्दार्थः। अतो ल्रान्तस्य। अत्रान्तशब्दः परसमीपवाची। ल्रान्तस्येत्यत्र न बहुव्रीहिः। ल्रित्यस्य सापेक्षत्वात्। किन्तु भिन्नम्पदमित्युक्तम्मूले। अत इति स्थावर्त्तते। तदन्तस्याङ्गस्येरति व्याख्यानादश्वक्षीदित्यत्र न वृद्धिः। यद्यपि व्यवहिते पदार्थेपि समीपव्यवहारो लोके दृश्यते। तथापि प्रकृतेऽव्यवहितसमीपवाचक एवान्तशब्दो भाष्यप्रामाण्यात्। सिचीत्यस्य ल्रुविशेषणत्वमङ्गीकृत्य तस्याङ्गविशेषणत्वेन सिच्परल्रान्तस्याङ्गस्यातो वृद्धिरित्यर्थेन सामञ्जस्ये प्रकृतसूत्रस्थमतग्रहणमसति बाधके प्रत्ययस्याङ्गविशेषणत्वमेवेति ज्ञापयति। किञ्चान्तपदोपादानाद्वर्णग्रहणेपि न जातिग्रहणम्। नन्विदं सूत्रमतो हलादेरितिसूत्रानन्तरम्पाठ्यम्। अत इति ततोऽनुवर्त्तनीयम्प्रकृतसूत्रस्थमत इति तु न पाठ्यमत इति प्रकृतसूत्रे पञ्चम्यन्तविभक्तिव्यत्ययकल्पनेन भविष्यत्यतोऽश्वक्षीदित्यादौ न दोषः। अनुवादेपि तस्मादितिपरिभाषायाः प्रवृत्तिर्भविष्यतीति चेन्न। कण्ठताल्वादिव्यापारस्याधिकस्य प्रकृतसूत्रेऽतइत्यस्योपादाने आधिक्येप्यतो हलादेरितिसूत्रस्यातइतिपदे एव स्वरितत्वं हलादेरित्यत्र तु नेतिकल्पनया विभक्तिव्यत्ययकल्पनया तस्मादितिपरिभाषोपस्थितिकल्पनया च मनोव्यापारगौरवस्य स्पष्टत्वात्। इदमेवाद्ग्रहणं मनोव्यापारगौरवमपि दोषावहमित्यर्थे ज्ञापकमिति दिक्। अतः किम्। अरोरीत्। न च नेटीति प्रतिषेधः। तस्यागन्तस्येति न्यायेन हलन्तलक्षणवृद्धिमात्रबाधकत्वात्। मूले सुकलमर्जेत्येत्यमिति। न च दिव औदितिसूत्र इवात्रत्ययविधावपि निरनुबन्धकपरिभाषाप्रवृत्त्या फलनिष्पत्तावितिधातोरेव ग्रहणं युक्तमिति वाच्यम्। प्रकृतसूत्रस्थचकारेण भिक-

लेत्यस्यापि ग्रहणात्। प्रचुरप्रयोगादिति । क्व चित्तु स्पष्टप्रतिपत्तये गम्यमानस्यापि नेत्रपदस्य प्रयोगोपि । सम्मीलने नयनयोर्न हि किञ्चिदस्तीत्यत्र यथा। अत्वीयमिति । अत एव धोरितकमितिस्वार्थकप्रत्ययान्तमश्वगतौ प्रयुज्यते। सनुलिटोर्जैः। सनुलिड्निमित्त इत्यस्योपपत्तिरत्र परम्परया द्वित्वस्य तन्निमित्तकतया तदुत्तरमभ्याससंज्ञाप्रवृत्तेरा संज्ञायास्तन्निमित्तकत्वेन संज्ञिनि तद्धर्मारोपेण च कार्या तदपेक्षया लाघवादाह। सनुलिट्पर इति। न च जिगीषतीत्यत्र कुत्वन्न स्यात् । अत्र हि द्वितीयाजद्यधिकरय जिस्शब्दस्य द्वित्वेन सनः कार्यित्वादिति वाच्यम्। सन्ग्रहणसामर्थ्येन न हि कार्यातिन्यायस्येहाप्रवृत्तेः। उभयोपदेशकालस्य। अकारादेशकालस्य उप्रत्ययोपदेशकालस्य च । एकत्वादिति। अत्रैकत्वं क्षणत्रयसमुदायात्मकस्य कालस्य विवक्षितम्। एतावताप्यार्द्धधातुकस्योप्रत्ययस्याधिकरणेऽकालेऽकारान्तबुद्धिसत्तासम्भवो बोध्यः। तस्य स्थानिवद्भावादिति। अल्लोपस्य स्थानिवद्भावादित्यर्थः। एतेन। प्रकृते लघूपधलक्षणगुणस्याप्रवृत्तेरिष्टत्वेन। ननूकारस्यार्द्धधातुकत्वे तदादेशस्य यणोप्यार्द्धधातुकत्वादिडागमः स्यादत आह। धिन्वन्तीत्यादाविति। एकदेशिनेतीति। स्थानिवद्भावस्यैवाप्राप्त्या तत्परिहारचिन्ताया वैयर्थ्यमिति तस्यैकदेशित्वन्द्रष्टव्यम्। साजात्यादिति । अत्र साजात्यं वर्णत्वेन ग्राह्यम्। तदन्तो यः प्रत्यय इति। धिन्वित्यत्र तदन्तत्वं व्यपदेशिवद्भावेन बोध्यम्। आप्नुहीत्यत्र लोपाभावायासंयोगपूर्वत्वमुकारविशेषणमिति न्याय्यमेव। धक्नुधितमिति । सामानाधिकरण्ये लाघवमीचित्यबीजम्। अमवीदित्यादि। अत्रातो हलादेरिति विकल्पः। लक्ष्यानुरोधादिति। तरयाजागरीदित्येवं दृश्यते तदनुरोधादित्यर्थः। न विरोध इति। अन्यथा सिच्यन्तरङ्गत्वास्तीत्यस्य णिश्रिग्रहणेन ज्ञापकेन सिद्धौ अविमव्योर्नित्यस्याभावेन विकल्पस्य दुर्वारतया विरोधः स्पष्ट एव। अव रक्षणेत्यादि। कान्तिरत्र शोभा इच्छा वा। दीप्तिस्तेजः। तृ-

मिरिच्छानाशः । स्वाम्यर्थः स्वामिधर्मः स्वामित्वरूपः । भाष व्यक्तायां वाचि । शुकादिविषये सम्यग्भाषते इत्यादिप्रयोगस्त्वारोपादतएव मृदङ्गशङ्खतूणवाः पृथङ् नदन्ति संवदीतिप्रयोगस्याप्युपपत्तिः । भास दीप्तौ । ऋकारोच्चारणमत्रात्मनेपदमात्रफलकम् । न तु नाग्लोपीत्यस्य प्रवृत्त्यर्थम् । भ्राजभासेत्यनेनोपधाह्रस्वत्वस्य विकल्पात् । अनुदन्यान्तराकरणमृकारान्तप्रकरणानुरोधात् । मूले के चित्त्विति । अत्रारुचिबीजन्तु देवासुरान् प्रबल्ह्लेतिश्रौतप्रयोगविरोधः । प्रबल्ह्लेत्यस्याहतं भापित्वेति व्याख्यातारः । उक्तश्रुतिव्याख्यानुरोधादेवाह । परिभाषणमनृतभाषणमिति । एतेन परिभाषणमनृतभाषणमितिव्याख्याने यः सनिन्द उपालम्भस्तत्र स्यात्परिभाषणमितिकोशविरोध इति कस्य चिदुक्तिर्निरस्ता । आद्यः । वेहृधातुः । अत एव । अस्य दन्त्योष्ठ्यादित्वादेव । अन्त्य इत्यस्य मूलस्यस्य बाहृधातुरित्यर्थः । अत एव बाहवः परिघोपमा इत्यस्योपपत्तिः । न चास्य धातोरात्मनेपदित्वाद्बबाह रक्तम्पुरुपास्ततो जाता इतिप्रयोगस्यानुपपत्तिरिति वाच्यम् । आर्षत्वात् । ऊह वितर्के । वितर्कोऽत्रानेकधर्मप्रकारकं ज्ञानम् । अस्य धातोरात्मनेपदित्वेनाऽनुक्तमप्यूहति पण्डितो जन इति प्रयोगः प्रामादिकः । न स्यादिति । न विद्यते इडस्मादित्यर्थे सर्वत्रेड्भावस्य एव प्रवृत्तिः स्यादिति भावः । अनिट्त्वे त्विति । नञेट्शब्दस्य समासङ्कृत्वा सामानाधिकरण्येन सम्बन्धस्वीकार इत्यर्थः । नित्यमेव स्यादिति । ण्मादेश एव नित्यं स्यादित्यर्थः । नौदित्व इतीड्विति । उपजीव्यविरोधात्सोऽत्र न भवतीत्यर्थः । किच्चमामर्थ्यादिति । अत्र ककारो गुणाभावार्थ एव यदि पूर्वङ्गुणः स्यात्तदा ककारो व्यर्थ एव स्यात् । धातुर्यिके । युजुजिमितदस्मिन्नित्यादिना पठितसूत्रपतुष्टयार्थे चतुर्थाध्यायपठितसूत्रविहिते च इत्यर्थः । उत्तरसूत्रस्येति । गुप्यादुवेतिसूत्रस्येत्यर्थः । अत एव । आत्मनेपदग्रहणापकर्षादेव । स्वरितायास्त्वेन लाघवादाह । उत्तर-

सूत्र इति । ननु क्सस्य लोपविधानं व्यर्थमजादावेवास्य प्रवृत्तया एतदभावेऽपि सवर्णदीर्घेण सिद्धेरत आह । लोपाभाव इति । शब्देनेति । शब्दकरणकेऽर्थे एवोद्घोषशब्दस्य प्रसिद्धेरिति भावः । णिक्ष चुम्बने । प्रणिक्षतीति । उपसर्गादसमासेपीति णत्वम् । वा निंसनिक्षेति तु कृतीत्यनुवर्तनात्कृत्येव । तदर्थः । असूर्क्षणशब्दार्थः । यदि तादृशः पाठः स्यात्तदाऽभावाभावस्य प्रतियोगिरूपतयाऽवज्ञापर्यायवाचकत्वानुपपत्तेरिति भावः । इच्छतीष्मात्योरेवेति । परिशेषादेतयोरेव ग्रहणमिति भावः । अत एव । विशेषणविशेष्ययोरुभयोः सप्तम्यन्तत्व एव तस्याः परिभाषायाः प्रवृत्तेरेव । ननु वलादेरित्यत्र वल्पदार्थस्योपसर्जनत्वात्कथन्तस्य तीतिविशेषणमत आह । सूत्रत्वादिति । भाष्ये स्पष्टमिति । न च विदंशे यङ्लुकि प्राप्तविभाषात्वं सम्भवति । पूर्वोत्तरसाहचर्येणास्य यङ्लुक्यप्रवृत्तेरिति बोध्यम् । घस्लृ अदने स्वातन्त्र्येण पठितस्यास्य धात्वन्तरवत्त सार्वत्रिकत्वमित्यत्र लिट्यन्यतरस्यामित्यस्य ज्ञापकता मूलकृतोक्ता भ्वादौ पाठस्य शपि परस्मैपदे प्रयोगे ज्ञापकता चोक्ता तामुपपादयितुं शङ्कते । न चेति । एतेन । अत्र पाठस्य शपि परस्मैपदे प्रयोगे ज्ञापकत्वेन । पाठस्य । तथा पाठस्य । घस्लादेशेन । लुङि घस्लादेशेन । अघात्सीदितिप्रयोगेति । अदेः स्थाने यो विहितस्तस्य यद्यप्यघसदिति सिध्यति तथापि स्वतन्त्रस्यास्याघात्सीदिति सत्त्वसद्वारणार्थमस्य लृदित्वमित्यर्थः । नन्वाशिष्यप्रयोग इति न्यूनमाशिषि यत्र लोट् तत्र शपि परस्मैपदे प्रयोगज्ञापकेनैव प्रयोगसम्भवादिति चेन्न । आशिषीत्यस्याशिषि लिङीत्यर्थात् इदम् । आशिषीतिकथनम् । प्रयोगाभावस्तेऽपति । ज्ञापकमिति शेषः । लिट्यन्यतरस्यामित्यनेनादेशविधानात्सार्वत्रिकत्वे प्रयोगाभावज्ञापकत्वकल्पनापेक्षया लिटि उपस्थितत्वात्तत्रैवाप्रयोगज्ञापकताऽस्त्वित्याशयेनाह । परे त्विति । लिटि परतः प्रयोगस्त्वादेशस्यैव न तु स्वतन्त्रस्येऽतिज्ञाप्यसिद्धेरुपपत्तिमाह । जघस्येतीति । मूलोक्तप्र—

कारङ् खण्डयति। जघस्थेत्यादिना। अत एव। स्वतन्त्रस्यास्य लिट्प्रयोगादेव । प्रत्याख्यातं भाष्य इति। यद्यसार्वत्रिकत्वमात्रं ज्ञाप्यते तदाऽनिट्कारिकापाठेन वलाद्यार्द्धधातुके प्रयोगरूपज्ञापकेन तासौ नित्यानिट्त्वमस्य सम्भाव्यते तथा च जघस्थेत्यस्य स्यात्तद्वारणाय घसेः प्रतिषेध इत्यावश्यकमिति प्रत्याख्यानासङ्गतिः स्पष्टेति भावः । अच्प्रत्यये घस्लादेशेति। तथोक्तम्भाष्ये। घस्लादेशेऽप्युपसङ्ख्यानम्। प्राश्नीति प्रघस इति। पुषादिद्युता। अत्र पुषादयो न श्यादिपठिता गृह्यन्ते । द्युतादीनाम्पुषादिपाठोत्तरम्पाठेन पुषादिपाठेनैव सामञ्जस्ये द्युतादीनाम्पृथक्पाठसामर्थ्यात् । नापि चुरादिपठिताः। णिचा व्यवधानात्। नापि क्र्याद्यन्तर्गताः। तेषु पुषादिषु लृकारपाठेनैव सामञ्जस्येऽत्र सूत्रे पुषादिग्रहणवैयर्थ्यापत्तेः। तेषु च ग्रहधातौ पठितव्यो लृकारः स्वरितः पाठस्तेनोभयपदं सिद्धमिति परिशेषादुक्तम्लृ श्यन्विकरणेति । न च श्यन्विकरणपुषादिष्वत्र पठितेषु द्युतादिषु चानुबन्धो लृकारेण निमातव्यस्तेनैवाङः सिद्धौ सूत्रे पुषादिद्युतादिग्रहणवैयर्थ्यमिति वाच्यम् । शिमिदाशिक्ष्विदाधात्वयवयाकारस्यादितश्चेतिसूत्रप्रवृत्त्यर्थमावश्यकतया स्त्रंस्यादीनामुदित्वस्यापि क्त्वायामिड्विकल्पार्थमावश्यकतया च निमानासम्भवात्। न च ञिकारस्यादौ पाठवदनयोर्मध्ये पाठोऽस्त्विति वक्तुं शक्यम्। विपरीतगौरवापत्तेः। एवं स्रन्दृधातोरुदित्त्वमपि न स्यादिति बोध्यम्। पूर्वपक्षेति। तत्र हि वृद्धिग्रहणाभावेऽपि सिध्यन्तरङ्गस्य प्रवृत्तस्य वृद्धिग्रहणस्य न प्रयोजनमितिपूर्वपक्षेत्यर्थः । द्युतिस्वाप्योः सम्प्रसारणम् । अत्र लोपोऽभ्यासस्येत्यतोऽभ्यासस्येत्यनुवर्तते । अङ्गाभ्यासयोरिति। अङ्गसंज्ञाभ्यासंज्ञयोरित्यर्थः। तत्फलमाह। दुद्योतकीषिपीति । अत्र द्युतेरङ्गसंज्ञायां सयुलुप्रत्ययो निमित्तम्परम्परयाऽभ्याससंज्ञायान्तु सनुप्रत्यय इत्येकनिमित्तकत्वाभावः स्पष्ट एव। ननु णिजन्ते द्वयोः संज्ञयोरेकनिमित्तकत्वाभावाद्दोषोऽत आह। स्वदिधृतदि-

ति । इकारान्तस्येति । इशब्दो द्युतिप्रकृतिकेकारान्तलाक्षणिक इति भावः । वृत्त्यनुसारिण इत्यनेन सूचितामरुचिं सूचयन्नाह । अत्रेति । अत्र । एकद्वन्द्वगर्भद्वन्द्वे । भाष्यानुसारिणः । वक्ष्यमाणभाष्यानुसारिणः । नामधातुरिति । घञन्तात्स्वापशब्दात्तत्करोति तदाचष्ट इतिणिजन्तो नेत्यर्थः किन्तु णिजन्तः । अत एव भाष्ये स्वापिग्रहणं व्यवहितार्थमिति प्रयोजनमुक्त्वा सुष्वापयिषतीतिसम्प्रसारणघटितं रूपमुदाहृत्य शङ्कितमिहापि प्राप्नोति स्वापकमिच्छति स्वापकीयति स्वापकीयतेः सन् । सिष्वापकीयिषतीति । सिद्धन्तु णिग्रहणात् । णिग्रहणं कर्त्तव्यम् । व्यपेतार्थमित्यनेन व्यवहितेऽपि प्रवृत्तिर्दर्शिता सा यथा स्वप्धातोर्णिजन्तस्याभ्यासस्य भवति एवमधिकव्यवधानेऽपि प्राप्नोतीति पूर्वपक्षः । णिग्रहणमित्यनेन स्वप्धातुप्रकृतिकणिजन्तस्य यथा ग्रहणं भवति तथा व्याख्येयमित्युत्तरम् । एतेन भाष्यग्रन्थेन स्वप्धातुविषये एव व्यवस्थोक्ता न तु इकारप्रश्लेषेण द्युतधातुप्रकृतिकणिजन्तस्य ग्रहणमित्युक्तन्तेन तादृशकल्पनायाम्मानाभाव इति लभ्यते । इदं सूत्रं लिट्यभ्यासस्योभयेषामिति सूत्रानन्तरम्पाठ्यम् षष्ठेऽध्याये । अस्मिन्सूत्रे सम्प्रसारणग्रहणन्न कार्यमित्यभिप्रायेण शङ्कते । न चेति । लाभानापत्तेरिति । अनुवर्त्तमानमभ्यासपदञ्चाभ्यासनिमित्तप्रत्ययान्तयोरित्यर्थसम्पादकत्वेन चरितार्थमिति भावः । अभ्यासस्येत्यनुवृत्तनर्थमिति । प्रत्ययविशेषासम्बद्धस्याभ्यासस्येत्यस्यानुवृत्तनर्थमित्यर्थः । तत्र । समये । अङ्गाधिकारे पाठाकरणमात्रे एव चेच्छङ्का तत्राह । अशोकयनिकेति । ननु सम्प्रसारणग्रहणाकरणप्रयुक्तलाघवार्थन्तत्रैव पाठः कार्य इति वदाम इति चेत् । व्ययोऽलिटीत्यर्थन्तस्सत्त्वात् । एवञ्चाङ्गाभ्यासयोरेकनिमित्तकत्वमनायासेन सिध्यति । स्थाने । अभ्यासत्वेन स्थाने । यद्यपि स्थाने विषयविधयाऽभ्यासो निदानन्तञ्च प्रत्ययो जनयतीति परम्परया प्रत्ययस्य प्रयोजकताऽस्त्येव । तथापि स्थानम्प्रत्यन्यथा सिद्धतया न कारणत्वमिति भावः । अत एव । अङ्गसंज्ञा-

स्य यत्र सम्बन्धस्तत्रैवोक्तप्रत्यासत्तिलाभो नान्यत्रेति स्वीकारादेव। प्रवत्स्येवेति। अत्रापि प्रत्यासत्त्याश्रयणे यत्वन्न स्यादिति भावः। षष्ठ्यर्थ इति। तेन लुङः स्थाने परस्मैपदमित्यर्थः सम्पद्यते। सिदेर्गुणः। प्रकृतसूत्रे ष्ठिवुक्लम्विचमस्ततोऽनुवर्तमानं शितीति पदङ्कर्मधारयप्रकृतिकसम्यन्तत्वेनाङ्गाधिकारेण प्रत्ययाक्षेपाच्चेत्संज्ञकशकारादावित्ति लभ्यम्। क्षुभ सञ्चलने। सञ्चलनम्प्रकृतिविपर्यासो मन्थनञ्च। पिष्मादेः क्षोभः। अत्र पूर्वावस्थाविपर्यासः प्रतीयते। दध्नः क्षोभे नवनीतम्भवतीत्यत्र मन्थनम्। न वृद्भ्यश्चतुर्भ्यः। स्यन्दतेरूदित्त्वाद्विकल्पेऽन्येभ्यो नित्यमिटि प्राप्ते निषेधोऽयम्। गमेरिडित्यतोनुवर्तमानम्परस्मैपदपदन्तङानयोरभावं लक्षयति। तच्च सेऽसिचीत्यतोऽनुवर्तमानस्य स इत्यस्य वृद्भ्य इतिपञ्चमीबलादत्र षष्ठ्या विपरिणतस्य विशेषणमत एव वर्त्तिपीष्टेत्यत्र साक्षाद्धातुकस्य पीष्टशब्दस्य तङानयोर्भावस्तत्परत्वाभावेपि नेट्प्रतिषेधः। साक्षाद्धातुकघटिते प्रयोगे तङानयोरभावस्य एव निषेधस्य प्रवृत्तेरङ्गीकारात्। न चैवमपि विवर्त्तिषत इत्यत्र लङुत्पत्तेः प्राक् तयोरभावस्यान्निषेधः स्यादिति वाच्यम्। तस्मैपदशब्दस्य तङानानिमित्ताभावलक्षकत्वात्। पूर्ववत्सन इत्यनेन यत्सनः प्रकृतिभूतो यो धातुस्तन्निष्ठस्यात्मनेपदनिमित्तस्यातिदेशात्। वृताद्भ्यो व्यवर्त्तिसस्य साक्षाद्धातुकस्यानेनेट्प्रतिषेधः। अत एव विवर्त्तीषितीत्यत्र तत्सिद्धिः। निमित्तत्वञ्च फलोपहितत्वरूपमत एव विवृत्सितेत्यत्र तृजन्ते निषेधस्य सिद्धिः। विवर्त्तिषत इत्यत्रेटो विवर्त्सितेत्यत्र निषेधस्य चेष्टस्यादेव भाष्ये वृतादीनामात्मनेपदेन समानपदस्थस्येड् भवतीति वक्तव्यमित्युक्तम्। न चैवं विवृत्सिषीयत इत्यत्र क्यङन्ते पीट् प्रसङ्ग स्यादिति वाच्यम्। आत्मनेपदेनैव समानपदस्थस्येड् भवतीति तदर्थादत्र तु क्यङुत्पत्तेः प्राक् सः सुप्तेनापि समानपदस्थस्यायम्। ऊदित्त्वलक्षणस्येटोऽनाङ्कृत्यमुपपादयति। सकारादीत्यादिना। अभिमान इत्यभिधाने धीशब्दः शब्दधा-

त्रे शब्दस्य प्राधान्यात्तस्माद्यन्तशब्दोपात्तमेव निमित्तं गृह्यत इत्या-द्यन्यत्र निरूपितम् । चतुर्ग्रहणाभावे कृपेरपि सङ्ग्रहापत्तिरिति शङ्कां धारयति । कृपिव्यावृत्तिस्त्विति । अत एव । वृत्तादिसमाप्तेरपीष्टत्वादेव । ननु यदि प्रतिषेधस्य पूर्वोक्तरीत्या बहिरङ्गत्वसिद्धिविधायकशास्त्रदृष्ट्या तदा प्रतिषेधवैयर्थ्यमत आह । न वृद्भ्य इतीति । ननु तासि चेतिसूत्रस्यापि स्वरतीतिसूत्रदृष्ट्या बहिरङ्गत्वम्पूर्वोक्तरीत्या स्यादिति तत्राप्यूदिल्लक्षणविकल्पापत्तिरत आह । कृपेस्त्विति । मूलोक्तरीत्या चतुर्ग्रहणसार्थक्यमुपपाद्य स्वसिद्धान्तमाह । वस्तुत इति । अत एव । उक्तरीत्या चतुर्ग्रहणवैयर्थ्यादेव । पूर्वोक्तम्बहिरङ्गत्वमभ्युपेत्य व्याख्यानम् । वस्तुतो बहिरङ्गत्वमेव नेत्याह । किञ्चेति । बहिर्भूतनिमित्तकत्वेति । अन्तरङ्गशास्त्रनिमित्तबहिर्भूतनिमित्तकस्येत्यर्थः । परत्वेन । स्वरतीतिसूत्रापेक्षया न वृद्भ्य इतिसूत्रस्य परत्वेन । अपिना पूर्वोक्तस्य निषेधाद्येति न्यायस्य समुच्चयः । स्पष्टञ्चेदमिति । वर्णैकदेशानां वर्णग्रहणेनाग्रहणेऽप्यन्तर्भूतानन्तर्भूतसाधारणजातिनिर्देशेनेष्टसिद्धिरिति भाव. । सकृदुच्चरित इति न्यायाविरोधः सम्पूर्णसूत्रावृत्तिं विना न सम्भवतीत्याशयेनाह । सूत्रमितीति । तन्वयं शप्तृकारोपधः पाठ्यः । लादेशविधायकञ्च सूत्रम पाठ्यम् । एतावतैव क्ऌप्त इत्यादिरूपं सेत्स्यति । कल्पत इत्यादि तु गुणे लपरत्वे च कृते भविष्यति । न चैवं सति कृपणः कृपा इति न स्यादिति वाच्यम् । सूत्रारम्भपक्षेऽत्र लत्वाभावस्य बाहुलकेन सिद्धिवत् तथा पाठे ऌकारस्य स्थाने बाहुलकादृकारादेशेनेष्टसिद्धेरिति चेन्न । अचीकॢपदित्यस्यासिद्ध्यापत्तेः । धातोरृदुपधत्वे तु लत्वस्यासिद्धत्वाद् गुणे प्राप्ते उरृदित्यनेन ऋकारादेशे ततो लत्वे कृते सिध्यति सम्प्रति तु ऌकारस्योरृदित्यनेन ऋकारादेशो गुणबाधके कृतेऽचीकृपदित्येव स्यात् ऋकारेण सावर्ण्याल्ऌकारोपस्थितावान्तरतम्याल्ऌकारो भविष्यतीति तु वक्तुमशक्यम् । उरृदित्यनेनेररारामपवादभूतस्य इग्यस ऋकारस्य

विधानेनाचीकृतदित्यत्र दीर्घस्यापि ऋकारस्य स्थाने जायमानस्यापूर्वत्वे-न भाव्यमानेन सवर्णानाङ् ग्रहणन्नेतिनिषेधस्यावतारात् । अनेन निषे-धेन दीर्घऋकारो यथाऽचीकृतदित्यत्र न भवति तथाऽचीक्लृपदित्यत्र लृ-कारोऽपि न भविष्यति । किञ्च लृकारोपधपाठे लत्वविधायकसूत्रस्याकर-णे चलीक्लृप्यत इत्यपि न सिद्ध्यति । ऋकारेण लृकारग्रहणाद् रीगृदुपध-स्य चेत्यनेन रीगागमे रीशब्दस्यैव श्रवणापत्तेरिति । तासि च क्लृपः । अत्राप्यनुवर्तमानं गमेरिड्ति्सूत्रात्परस्मैपदपदन्तङानयोरभावलक्षणि-कम् । तेन कृप्धातोः सन्नन्तान्नृचि विकल्पिपविता चिक्लृप्सितेति सिध्य-ति । वृतेः । सम्पूर्त्ति बोधकाद्वृत्धातोः । तत्र घटादिषु । शबेव । विक-रणान्तराप्राप्तेः परिशेषाच्छबेव । मित्त्वन्न स्यादिति । यदि चौरादिकस्या-यमनुवादस्तदाऽनुकरणस्यानुवाद्यबोधकतया चौरादिकस्योपस्थितौ तत्र घटादयो मित इतिप्राप्तमपि मित्त्वन्नान्ये मित इत्यनेन निषिध्येतेत्यर्थः । मन्यनुवादसामर्थ्यान्न बाध इत्यत आह । अनुवादसामर्थ्येनेति । यस्या-निकेति । यकारस्य प्राप्ता या हलादिः शेष इत्यनेन बोधिता निवृत्तिस्त-स्या इत्यर्थः । विकारो भावस्वरूप एव न किन्त्वभावरूपोपीत्याह । भा-घ्ये उपन्यासादिति । न गणेरीत्वमपवादत्वाद्धलादिः शेषस्याधते क्न्त्वार्थ-नयकाशत्वादित्यनेनोपन्यासादित्यर्थः । ज्ञापनेनेति । उभयेषां सम्प्रसा-रणमेव यदन्यत्प्राप्नोति सन्त्वित्यर्थकल्पनयेत्यादिः । वैयर्थ्यापत्तेरिति । स्वपिपक्षे चारिताथ्यविरहेण तस्य वैयर्थ्यापत्तिरिति भावः । न च लिट्य-भ्यासस्योभयेषामिति सूत्रान्तरं व्यर्थः । द्युतिस्वाप्योरिति पठनीयम् । लिटीति सम्प्रसारणमिति च न कार्यमिति वाच्यम् । द्युतिस्वाप्योरिति सूत्रे दत्तोत्तरत्वात् । अमज्ञातविरोधेन । यद्यनुपधात्वेऽपि दीर्घविकल्प-स्वीक्रियते तदा मित्त्वस्य वैयर्थ्यं शङ्कोद्भयेन विरोधो न मज्ञायत इति भावः । उपलक्षणमिति । तेन दृता स्त्री इति सिध्यतीति शेषः । इह ये-ऽप्तने । चस्युपोऽनुपत्त्वाकारेऽस्य न स्वयमपूर्व एव । घटादिगणेऽनुवादा-

मामपि पाठे भाष्यसम्मतिमाह । अत्र गण इत्यादिना । अत एव । अनुवादादेव । अपूर्वत्वे द्वयोरेवोपन्यासानुपपत्तिरिति भावः । तस्यापि । अर्थविशेषनियमस्यापि । एतदर्थमिति । अह्रीडीतिरूपसिद्ध्यर्थमित्यर्थः । ह्रस्वविकल्पे तु अहिडि । अहेडीति स्यादिति भावः । भाष्यसम्मतरीत्याह । परे त्विति । अत्र । घटादिषु । ध्वनितमितीति । तत्र ल्लुकालो ह्रस्वदीर्घप्लुत इतिवाक्ये ग्रहणकशास्त्रप्रवृत्तौ दीर्घप्लुतयोः पूर्वसंज्ञाप्रसङ्ग इतिशङ्कायाङ्कालग्रहणकरणरूपसमाधानोत्तरमथ वा ह्रस्वसंज्ञावचनसामर्थ्याद्दीर्घप्लुतयोः पूर्वसंज्ञा न भविष्यतीति समाहितम् । ह्रस्वसंज्ञावचनमित्यस्य ह्रस्वसंज्ञया वचनमित्यर्थस्तेन ह्रस्वविधानसामर्थ्यादिति च फलितम् । यदि ग्रहणकशास्त्रबलेन दीर्घप्लुतयोरपि ह्रस्वसंज्ञा स्यात्तदा ह्रस्वो नपुंसक इत्यादिना दीर्घस्यान्तरतम्याद्दीर्घ एव भविष्यतीति ह्रस्वसंज्ञाविधानस्य वैयर्थ्यमेव भविष्यतीति भावः । तत इदन्तर्हि प्रयोजनम् । एच इग्घ्रस्वादेश इति । यदि ह्रस्वसंज्ञाविधानन्न स्यात्तदा एच इग्घ्रस्वादेश इति वक्तुमशक्यमिति त्रिह्रस्वप्रदेशेषु इच इगिति वक्तव्यं स्यात् । ह्रस्वो नपुंसके प्रातिपदिकस्य । णौ चङ्युपधाया ह्रस्वः । ह्रस्वः । इत्येषु त्रिषु वाक्यभेदेन एचो ह्रस्व इग्रूप एव यथा स्यादित्येवमर्थतत्तत्सूत्रानन्तरमेव इगिति वक्तव्यमिति भावः । एवञ्चैरयोद्भावनसमये त्रिह्रस्वप्रदेश इत्येवोक्तम् । यदि घटादिषु हेडधातोः पाठः प्रामाणिकः स्यात्तदा ह्रिडयतीतिरूपसिद्ध्यर्थम्मितां ह्रस्व इत्यत्रापि एच इगिति वक्तव्यमिति त्रिग्रहणमसङ्गतं स्यादित्यतेन भाष्येण ध्वनितमित्यर्थः । हेडधातोर्घटादिपाठस्याभावेऽप्यशमीत्यत्र ह्रस्वसिद्ध्यर्थं दीर्घग्रहणस्यावश्यकत्वप्रदर्शने कृते न पदान्तसूत्रभाष्यग्रन्थे न्यूनत्वशङ्का भवति तान्परिहरति । ह्रियेषनादीभीत्यादिना । मूलकारोऽपिङ् स्पष्टयति । किञ्चेति । ननु धातूनामनेकार्थत्वेनार्थविशेष इतिकथनं युक्तमेवात आह । किञ्चेति । तत्र । वेष्टनातिरिक्ते । वेष्टन इत्यस्य पाठस्य पाणिनीयत्वनिश्चयेऽर्थविशेष इत्युपपद्यते

तत्रैव न मानमित्याह । किञ्च स्वधेति । सर्वत्रार्थनिर्देशस्याप
त्ये येषु कथितेष्वर्थेषु घटादीनामित्त्वम्भवति तदधिकेष्वपि प्राप्नो
तूनामनेकार्थत्वस्वीकारादत आह । अतिप्रसङ्ग इति । ज्वरादि
य पाठे कर्त्तव्य इत्युक्तन्तदप्यसङ्गतङ्गौरवाभावादित्याह । किञ्च
न्य इति । आहुः । भाष्यसिद्धार्थानुसारिण इति शेषः । नान्य
र्थानाम्भेदमाह मूले । तत्रायं विवेक इत्यादिना । वाक्यार्था
हस्तादिचेष्टया वाक्यार्थसूचनम् । यथा एहहमेतत्पपिबेत्यादिना
काशे स्पष्टमभिहितम् । पदार्थाभिनयस्तु लोके प्रसिद्ध एव । व्य
दिति।लक्ष्यदर्शनमूलकव्याख्यानादित्यर्थः। लक्ष्यविसंवादादाह।पूर्व
नन्वे घन्धातुषु दीर्घ एव पठनीयो निपातनापेक्षया लाघवादत आ
पाठ इति। अत्र। घटादिषु पाठवैयर्थ्यमिति।क्षधातोरित्यादिः
अपीति। चिण्णमुलोरितिसूत्रविहितदीर्घस्य वैकल्पिकतया तदभावे
बाधस्य । ह्रस्वत्व बाधस्य । तच्छास्त्रस्य । चिण्णमुलोरितिशास्त्रस्य ।
वृद्ध्यभावे । तत्करणम् । उदित्त्वकरणम् । ननु भौवादिकव्याख्यास
दित्त्वमस्तु एवञ्चापूर्वत्वासिद्धिरत आह । विशिष्येति । असि
मित्त्वमितिनियमसत्त्वे उदित्त्वाभावे श्वादिधर्मान्तरे पठितस्य
मित्त्वार्थोऽनुवाद इति वक्तुं शक्यन्तत्तु न तादृशनियमाभावादि
त्र घनपाठसामर्थ्यादस्य भौवादिकानुवादस्यासम्भवे तानादिका
त्वं वाच्यमेवञ्चोदित्त्वं व्यर्थमेवेति भावः । अत एव । क्रियासाम
त्यादेव । तत्र । पूर्वत्र । रूपव्यावृत्त्यर्थ इति । अर्थविशेष
नस्यातानादिकस्य भूपकत्वात् । अन्यथा । पूर्वपाठस्यातानां
भूपकत्वम किन्तु घनतीतिरूपसिद्धिफलकत्वमितिस्वीकारे ।
ति । तानादिकभिन्नस्यघनघोदित्करणसामर्थ्यादिति वक्तुं शक्ये
। तद्वैयर्थ्यमिति । पूर्वपाठवैयर्थ्यमित्यर्थः । अत्र तु । श्वादौ पूर्व
... । ... । मन यदि तानादिकमेवानपाठीयत्वद

दॄ विदारणे इतिक्र्यादेरयमनुवाद इत्युक्तम्मूले तत्र न्यूनतापूरणाया
द्दिवादेरित्यपीति । भाष्यसम्मतत्वादिति । तत्र ध्वनेरभ्योऽपि दृश्यत
ति सूत्रे दॄणातेर्ह्रस्वश्च द्वे च क्विप् चेति वक्तव्यम् । दद्दृत् । दॄणातेर्दीर्घे
इत्युक्तम् । णयन्तस्य दरयतीति निज्वे सत्युदाहृतम् । अणयन्तस्य स्वय
ह । दॄणातीत्यादि । क्र्यादेरयमनुवादइत्यस्य भयरूपेर्थे मित्त्वार्थं इत
दिः । तदुक्तम्मूले भयादन्यत्रेति । इदमेव । धात्वन्तरत्वमेव । ये
ह्रस्वान्त इति वदन्ति तन्मतम्पाणिनीयसूत्रविरुद्धम् श्रृदृप्रामितिविकल
ह्रस्वत्वं विहितम् । यद्ययं ह्रस्वान्तोऽपि स्यात्तदा धातुद्वयेन दद्रतुः द
रतुरितिरूपद्वयं सिद्धमेवेति विकल्पेन ह्रस्वत्वविधानं व्यर्थं स्यात् ।
रोधे । द्वयोः परिभाषयोर्विरोधे । अनित्यत्वादिति । लुग्विकरणपरि
षायाः साहचर्यपरिभाषामूलकत्वात्साहचर्यपरिभाषायाश्च कृत्योऽर्थग्रह
नानित्यत्वज्ञापनाल्लुग्विकरणपरिभाषाऽप्यनित्या । स्वरतिसूतिसूयती
सूत्रे सूङ इति वक्तव्ये सूतिसूयत्योः पृथङ्निर्देशस्य नास्यां ज्ञाप
त्वम् । स्वरतिसाहचर्याद्लुग्विकरणस्यैव ग्रहणे प्राप्ते पृथङ्निर्देशसा
ध्यात् । तस्माद्यस्य विभाषेतिसूत्रभाष्ये विदित इति प्रयोगे विभाषा
गहनविद्विद्यामिति विकल्पसत्त्वान्निषेधमाशङ्क्य यदुपाधेर्विभाषा तदुप
धेः प्रतिषेध इति समाहितम् । विकल्पेनेड्विधायकसूत्रे च विधिसाहचर्य
च्छविकरणस्य विभाषा लुग्विकरणस्यायमिति चोक्तन्तेनैवा ध्वन्नतेति
लक्षणप्रतिपदोक्तपरिभाषायास्तु भुवश्च महाव्याहृतेरिति सूत्रे महाव्या
तिग्रहणेनानित्यत्वञ्ज्ञाप्यते । तद्धि भूशब्दप्रकृतिकसन्तस्य भुव इत्यस्य
च्छविकल्पाभावार्थमिति । विज्ञापना भर्तृषु सिद्धिमेतीत्यस्य निभामनं
ज्ञुपज्ञानमिति माधवमते चाज्ञुपज्ञानात्पज्ञानार्थकतयोपपत्तिसम्भवात्तद
माधवान्यमत इति।ज्ञाय इति।तज् ज्ञापयत्याचार्य इति भाष्यप्रयोगसंवाद
ता।ज्ञीप्सयमान इति तु ज्ञा नियोग इति चौरादिकस्य रूपमिति बोध्यम्।

ति।जिह्वया तृपादि ज्ञापयतीत्यर्थः।लड्यति शत्रुमितीत्यत्रोन्मथनञ्जितविषे-
पानुकूलव्यापारस्तदाह । गालयतीति । अस्यैव। दैवादिकस्यैव।ध्वनशब्दे।
शब्दशब्दोऽत्र ध्वन्यात्मकशब्दस्यैव बोधकः । स्वन अवतंसने । अवतंसन-
म्भूषणन्तस्य द्रव्यत्वादवतंसनशब्दोऽत्र तदीयशब्दानुकूलव्यापारे द्रष्टव्यः।
मूले प्राप्तविभाषेयमिति । ज्वलधातोः पूर्वत्र पाठाज्जमधातोरनन्तत्वा-
त्प्राप्तविभाषेत्यर्थः । टिलोपे । घञो लोपे । कथं सङ्क्रामयतीत्यत्र घञा
सिद्धिर्न भवति नोदात्तोपदेशस्येतिनिषेधादित्यभिप्रायेण शङ्का द्रष्टव्या ।
व्यवस्थितविभाषात्वे न साधकमित्याह । भाष्ये त्विति । मूलोक्तप्रयो-
गाणान्तर्हि का गतिरिति चेत् । बाहुलकत्वाद्दीर्घ इति तेषु बोध्यम्।
यमोऽपरिवेषणे । मतियोगिबोधकपदं व्याचष्टे । परिवेषणमिति । टेरि-
त्यस्याप्राप्तावितिविन्मतोर्लुकष्टिलोपापवादत्वात्।फणेः प्रागेव वृत्कर-
णमित्यत्र साधकमाह । य इत्यादि । राजृ दीप्तौ स्वरितेत् । सुधाकर
इत्युक्तिर्बीजन्दर्शयति। अस्यैवमर्थेति । उद्धरणमित्येवैतन्मते उद्धरणमन्तर-
गतस्य मुखेन निस्सारणम्। असाधव एवेति । येमुश्च केचिद्रधिरमिति त्वा-
र्थम् । यमेरुपदेशे य दित्यात्र निषेध इति केचिद्वदन्ति स्वसिर्जितसूत्रा-
दुपदेशे इत्यस्य सम्बन्धेनोपदेशे यो यकारादिस्तस्य निषेध इति च स्वी-
कुर्वन्ति तेषाम्बहुयोगव्यवहितस्योपदेशपदस्य सम्बन्धे क्लेशः । ननु सञ्चि-
यहोरितिसूत्रदृष्टया ए त्यस्यासिद्धत्वात्कथञ्जिनिमित्तत्वं टलोपे सतीत्यनेनो-
क्तगत आह । यद्वृत्तीहिपक्ष इति । तत्र टलोप इति विषयसप्तमीति
पक्षे । तत्र कृते । क्तप्रत्यये कृते । ऊढः । कृत्यानित्यत्वायर्णस्येत्यस्य प्र-
त्युदाहरणत्वान्यथा सिद्धमिति भावः । सदनुकूलः । विशीर्णत्वानुकू-
लः । तज्जन्येति । शातनपदवाच्यो यो व्यापारस्तज्जन्यविशरणमात्रमर्थ
इति भावः । शदेः शितः। अत्र शिष्यदस्य शिद्वाविधि लक्षणायाम्मानमा-
ह। शदेरिति । अत्र वृदिति कृचिन्मूले पाठस्तदभिप्रायेण प्रतीकधा-
रणं वृदितीति । ननु पचेरित्यस्येसंज्ञायामिरशंककं तेन समुदायेने-

रित्त्वमेवं नेदित्त्वमिति तथा स्वरितत्वमपि न स्यादत आह । रुन्ध इ-त्यादाविति । इर इत्संज्ञा वक्तव्येत्यस्य प्रत्याख्यानपक्षे आह । प्रत्येक-मिति । तद्विधानादिति । न दृश इतिसूत्रेणाप्ययमर्थो ज्ञाप्यते । अन्ते-दित इति व्याख्यानाभावे दृश्धातोर्नुमागमे कृते इगुपधत्वाभावेन क्स-प्राप्तिरेव नेति तद्वैयर्थ्यं स्पष्टमेव । यादित्रग्रहणेतिमूलस्य यादना-र्थं यन्तस्य ग्रहणन्तत्रेत्यर्थः । ये विभाषा खायादिति । ये विभाषेत्यत्र ये इति विषयसप्तमी । तेन जायते स्वयमेवेत्यादावपः कर्तृ-यकीति स्वरसिद्धिः । तत्र हि स्तीर्यत इतिप्रयोगसिद्धयर्थन्तास्यनुदात्ते-दित्यत उपदेशपदं सम्बध्यते।न च यादिप्रत्ययविवक्षायामर्ध्दस्य प्रवृत्तिस्त-दा प्रत्यये परतो विधीयमानाङ्गसंज्ञा नास्तीत्यङ्गाधिकारस्य बाधः स्यादिति वाच्यम्। अङ्गत्वमस्य भविष्यतीति बुद्धिविषयेऽङ्गस्येत्यस्य लक्षणाया एता-दृशे विषये स्वीकारात्। स्पश बाधनस्पर्शनयोः। पस्पशेतिरूपमस्यैव यङ-न्तादच्प्रत्यये संज्ञापूर्वकविधेरनित्यत्वात्पृषोदरादित्वाद्वाभ्यासदीर्घाभावे साधु।सेयमुभयतःस्पाशारज्जुरित्यप्यस्यैव भिदादित्वादङ्प्रत्यये बोध्यम् । ऊदुपधाया गोहः।अत्रोपधापदस्य निष्फलत्वन्दर्शयति।उपधाया इति। वि-पयार्थमिति । यत्र गोहरूपम् सम्भाव्यते तत्रादेश इति बोधनायेत्यर्थः।अत एव। अलोन्त्यपरिभाषयाऽन्तस्य लोपादेव । ऋदुनोःस्ये। प्रतिप्रसवविधिः। तदाहैकाच इतीति। रिङ्श्य । ननु रिङादेशापेक्षया लाघवात्दृयर्णान्ता-नामिगागमविधानेपीष्टसिद्धिर्भविष्यतीत्यत आह । इगागमेनेति । दृ-स्यादङ्गात् । राल्ससेत्यस्सस्येति क्रलीक्रलीत्यतो क्रलीत्यनुवर्त्तते । अत्र सस्येतिपदं सिचो बोधकन्तदाह । अङ्गग्रहणमिति । परेति । इट इटी त्येतत् । परसाहचर्याश्रयणफलन्द्विरसमामिति । पौर्वापर्याभावादिति । एयङ्घनमङ्गादित्यस्य सर्वेप्यावश्यकमन्यागमसन्निधानेप्यागमिनः सि-प्त्ययप्रत्ययत्वमपि स्यादिति अलाविष्टामित्यादावाविडन्तस्याङ्गसंज्ञासूत्रे यदादिग्रहणादङ्गत्वाद्दोषः स्यात् । ढौकितेत्यादावयतिप्रसङ्गं वारय-

ति । कर्मव्युत्पन्न इति । ननु डोइत्युपदेशमादाय गोभ्यामित्यादौ दोषः स्यादत आह । उणादीनामिति । अत्रोपदिश्यमानस्येतिव्याख्यानादेव धातोरिति लब्धन्तदाह । तादृश्यैति । धातोरेवेति । एतेन लिटि धातोरित्यतो । धातोरिति । सम्बध्यत इति यादिमतन्निरस्तम् । प्रत्युत तदनुवृत्तौ दोषोपीत्याह । धातोरित्यनुवृत्तावियिति । भाष्ये उक्तत्वे नेति । तत्र हि धातोरिति किम्।लूञ् लविता पूञ् पविता इत्युक्तम्।ननु धातोरित्यस्यात्र सूत्रेऽसम्बन्धे विशेष्यासन्निधानात्कथन्तदन्तविधिरत आह।धातोरित्ये तदिति । उपदेशे यदेजन्तमिति । एवञ्चानेन शब्दस्वरूपमितिपदमध्याहृत्य तदन्तविधिरुपपाद्य इति ध्वनितमित्यर्थः । एवञ्चेति । धातोरित्यस्य पूर्वोक्तरीत्याऽसम्बन्धे गोभ्यामित्यादावदोषायोपदेशपदस्य धारितार्थ्यं चेत्यर्थः । चिन्त्येति । तदनित्यताज्ञापकन्तु भुवश्च महाव्याहृतेरिति सूत्रे महाव्याहृतिग्रहणमित्यवोचाम । अशितीत्यत्र बहुव्रीहेर्नञ्समास इति भ्रमं वारयति । कर्मधारयादिति।पूर्वोऽसरेति । विभावा परेः । न ल्यो लिटीति । अन्याशम्भ्यमुपपादयति । जगे इत्यादाविति । तदयययत्यादिति । एवञ्चाद्धं धातुकस्यारोपोऽत्र बोध्यः । सूदनाच्चेति । टित आत्मनेपदानामितिसूत्रस्यस्य टित एत्वे आत्मनेपदेष्वानप्रतिषेध इतियाक्तिं कस्य प्रकृतामात्मनेपदानामेत्वमितितियाद्यनुवृत्त्या प्रत्याख्यानोत्तरन्तस्मिन्नेवार्थे ज्ञापकमप्युक्तम् । आनेमुक् ज्ञापकं स्वे स्ये टित्तद्दामिशिशीरिव इत्यादिना । अत्र कैयटः । यद्यो स्यमानस्य स्यात् तदा आनयिमुगिति वल्यं स्यादित्यर्थः । टिसद्गागिति । टितः स्थाने ये तद्स्तेपामेत्यत्र स्थानस्य । अध्यै तेत्यादौ दोषाभावायाह । इगितोत्यादि । एभ्य इरेष् थासः से इत्यादौ लाघवाय इव एमेयोद्यारयेदित्यर्थः।तद्वादेशामामिति। साहृत्पादेशामामित्यर्थः । इदञ्च ज्ञापकमेकदेशयुक्तिः । शासन् चासन् सम्यक्प्यानेमुक्सिद्धये तथा निर्देशस्यावश्यकत्वादिति । अविशेष इत्यस्य इयग्रम्यापकपरिभाषया त्रिशेषरपेव ग्रहणमिति नियमो नेत्यर्थः।तात्रैवाअ-

नर्थकत्वेनैव। न दोषः। नान्याप्तिः। दाप्साहचर्यादिति। पूर्वोक्तरीत्या दाग्रहणेन लाक्षणिकस्यापि ग्रहणे सिद्धे तत्साहचर्याद्धेटो लाक्षणिकस्यापि ग्रहणमित्यर्थः। अत एव। धेटोपि ग्रहणादेव। यमरमनम। ननु यमरमधातोः सग्विधानं व्यर्थम् सिचैव सिद्धेरत आह। अनयोरिति। वृद्धेरिति। अतो हलादेरितिसूत्रविहितवृद्धेः। वान्यस्य संयोगादेः। दीङो युडचीत्यतः क्ङितीति एलिङीत्यतो लिङीति वर्त्तते। परत्वादिति। घुमास्थेतीत्वं स्थितमित्यत्र येकल्पिकमेत्वङ् ग्लाम्लाधातौ चरितार्थम्। क्ङितीत्यनुवर्त्तत इति। दीङो युडचीति सूत्रे समासेन निर्देशादुभयोरनुवृत्तिरुक्ता। अयञ्चेति। अत्र चकारो वाक्यालंकारे। पिबादेश इत्यर्थः। घ्रा गतिनिवृत्तौ। धात्वादेः षः सः। नन्वकृतव्यूहपरिभाषाया निमित्तापाये नैमित्तिकस्याप्यपाय इत्यस्यापि वा स्वसिद्धान्तविरुद्धतया धात्वादेरितिसत्वेपि पूर्वकालप्रवृत्तष्टुत्वनिष्पन्नस्य ठकारस्य स्थितिः स्यादेवेति तच्छूपणापत्तिरत आह। अत्र षोपदेशेति। एवञ्च यद्यपि धातुस्वरूपबोधनाय घ्रा इत्युपदेशस्तथापि सपादसप्ताध्यायीस्थस्य सत्वादिकार्यस्य प्रवृत्तियोग्यतासत्त्वात् पूर्वत्रासिद्धमिति वचनात् ष्टुना ष्टुरित्यस्याप्रवृत्तिरिति थस्यैव श्रवणम्भवति। षोपदेशफलं प्रतिप्रयोगे प्रतिष्ठाता प्रतिष्ठेत्यादौ षत्वस्य सिद्धिः। नन्वयन्धातुर्यदि गतिनिवृत्तिवाचकस्तदा प्रतिष्ठतीत्यादौ कथं गतिप्रतीतिरत आह। प्रतिष्ठतीत्यादाविति। ध्वनितमिति। एकस्यापि शब्दस्यान्यार्थे प्रक्रान्तस्यान्यसम्बन्धविवक्षायामन्यार्थत्वम्भवतीत्यर्थे दृष्टान्ततया तत्र श्लोकमुक्तम्। तद्यथा कश्चित्कञ्चित्पृच्छति क्व देवदत्त इति स तस्मा आचष्टे अमी वृक्षे। कतरस्मिन्। यस्तिष्ठति। वृक्षोऽधिकरणम्भूत्वा कर्त्ता सम्पद्यते इति। तत्र कैयटः। यदाऽन्ये निपतिता वृक्षा एकस्तूर्द्ध्वस्तदा विशिष्टवृक्षाधिकरणत्वेन देवदत्तः प्रतिपाद्यते। एतेनोर्ध्वदेशसंयोगोप्यर्थ इति ध्वनितमित्यर्थः। ऋतश्च संयोगादेर्गुणः। ऋयतेरित्यतो लिटीति वर्त्तते। स्वृतावर्गमिति। दीर्घान्तेऽपि प्रवृत्तेः। अथाकारविधानेन सिद्धे गुणग्रहणं

चिन्त्यप्रयोजनमिति कश्चित्तन्मतन्दूषयति। अत्रैव सिद्ध इत्यादिना। निषेधाङ्गीकारादिति। तेन तितीर्वोनित्यस्य सिद्धिः। ननु यदि गुणोत्तरं वृद्धिस्तदा जाग्र इति सूत्रेण वृद्धिविषये गुणविधानवैयर्थ्यमत आह। जाग्रो वीतीति। अत एव। ज्ञापकस्य विशेषापेक्षत्वादेव। अयम्। णकारः। ननु स्नुप्रत्ययःकिदेवास्त्वित्यत आह। स्थास्नुसिद्धय इति। किस्त्वे त्विस्वापत्तिः। पुरस्तादिति मूले। अत एव सनीवन्तेतिसूत्रे स्वृग्रहणञ्चरितार्थम्। ननु निषेधो यदि वलधांस्तदाऽस्यापि बाधकः स्यादत आह। क्रादिनियमादिति। एतस्य निषेधबाधकत्वं स्पष्टमेव। अन्यथेति।. ऋकारस्य प्रश्लेषाभाव इत्यर्थः। इडत्यर्ति। ननु गमेरिडितिसूत्रादिड्ग्रहणानुवृत्त्यैव सिद्धे प्रकृतसूत्रे इड्ग्रहणवैयर्थ्यमत आह। इड्ग्रहणं स्पष्टार्थमिति। न च विभाषा सृजीतिसूत्रे विभाषापदासम्बन्धायेड्ग्रहणमस्त्विति शङ्क्यम्। अर्त्तिव्यत्ययोर्विषये भारद्वाजनियमेन विकल्पस्य सिद्धौ पुनरत्रैतयोरुपादानसामर्थ्याद्विकल्पस्य निवृत्तेः। न च न वृद्धन इत्यतो मपग्रहणाननुवृत्त्यर्थमस्तु। ऋग्रहणसामर्थ्यात्तन्निवृत्तेरिति भावः। उभयोः। स्वादिजुहोत्यादिपठितश्रुधात्वोः। व्याख्यानादिति। अभीयादिकाभिसाहचर्यभीयादिकत्ययतिसाहचर्यमूलकव्याख्यानादित्यर्थः। श्रुयः शृ च। चिन्त्यमिति। तत्र पाठे हि स्वादिभ्य इतिसूत्रेणैव श्नुप्रत्यये सिद्धे पुनरनेन वाक्यभेदेनश्नुप्रत्ययविधानमकार्यमिति लाघवम्। यदि स्वादिभ्य इतिसूत्रेण श्नुप्रत्ययस्तदा श्तिपा शपानुबन्धेनेतिनिषेधाद्यङ्लुकि न स्यादिति के चित्तन्मतन्दूषयितुमाह। वस्तुतस्तु। पक्षान्तरे। आदेशाभावपक्षे। साहचर्येण। स्वादिभ्य इतिसूत्रसाहचर्येण अदन्दी पाठाच्चेति। तथा च तेन वचनेन निषेधादिति न वाच्यमस्य विशिष्यादादित्वबोधनेन स्वादिभ्य इत्यस्य प्राप्तेरेवाभावादिति भावः। केचित्तु गणकार्यस्यानित्यत्वबोधनायास्य स्वादावपाठ इत्याहुः। तत्प्रत्याख्याने। अपिद्धुवद्ग्रामादित्यस्य प्रत्याख्याने। ननु प्रत्याख्यानस्योत्तरकालिकत्वेन तदभिप्राये-

ण पूर्वम्पाणिनिना ह्रस्वग्रहणङ्कृतमिति कथं वक्तुं शक्यमत आह। स्पष्टार्थेयमिति । तदनित्यत्वे ति । आभीयानित्यत्वे त्यर्थः । यत्तु योयुवतीत्यत्र यङ्लुकि यणभावार्थं ह्रस्वग्रहणम्भाष्यसंवादादिति मतन्तद्दूषयति । भाष्ये यङ्लुक इति । अत एव । पूर्वभाष्यस्यैकदेशयुक्तित्वादेव । यदि सा सिद्धान्तयुक्तिः स्यात्तदा भाषायामपि यङ्लुग्भवतीत्यस्योवर्णान्तधातोरेव प्रयोग उदाहर्तव्य इत्याशयः । तत्र । उवर्णान्ते । व्याख्यानादिति । स्थानिनो ङित्कार्यलाभे सिद्धे पुनर्गाङित्यत्र ङकारोच्चारणङ् गाङ्ग्रहणेऽस्यैव ग्रहणार्थमित्येवङ्कल्पनमूलकव्याख्यानादित्यर्थः । भ्वादौ पाठपक्षेऽतिप्रसङ्गः स्यादित्यभिमानेन शङ्कते । न चेति । स्थान्येकत्वे । अङ्गवार्णकार्ययोर्न्नाङ्गात्मकमेकं कार्यं तत्र तस्याः परिभाषायाः प्रवृत्तेः । इष्यत इत्युक्त्वा वृत्तिरितिकथनेन वृत्तिप्रामाण्यादेव बाधकल्पनेति भ्रान्तिः स्यादित्येतस्यानुत्पत्तये आह । इदमुपलक्षणमिति । अयम्भावः । दयतेर्लिटि परे दिग्यादेशद्वित्वयोः प्राप्तौ येन नाप्राप्तिन्यायेन दिग्यादेशे पुनर्बाध्यस्य द्वित्वस्याप्रवृत्तिः । वासुद्विषये मीयुट इवेति। न चैवमस्तेर्भूरित्यनेनापि लिङ्विषयकेन द्वित्वबाधा स्यादिति वाच्यम्। तत्रार्द्धधातुक इत्यस्य विषयसप्तमीत्वात्। प्रकृते लिटीति परसप्तम्येव लक्ष्यानुसारादिति। स्याद्घो रिश्र।न धाधासीदित्यत्रातिप्रसङ्गः।स्यासाहचर्येण घोः परस्मैपदे परतोऽप्रवृत्तेः।लिङ्सिचावात्मनेपदेष्विति सूत्रादात्मनेपदेष्वित्यस्यानुवृत्त्या दोषाभावाच्च।तपरत्वमस्य मुखसुखार्थम् । न तु सवर्णस्याग्रहणाय । भाव्यमानत्वात्।मान्यथ । आभ्यासस्येतिछेदस्तदाह । अभ्यासविकार इति । आकारप्रश्लेषवादिमतमुपन्यस्य सिद्धान्तमाह । वस्तुत इति । यद्यपि गुपादयः सामान्यत एव सूत्रे निर्दिष्टास्तथापि सन्नन्तस्य जुगुप्साविरामप्रमादार्थानामित्यत्रार्थविशेषे प्रयोगदर्शनेन क्षेत्रियच्परक्षेत्रे चिकित्स्य इतिसौत्रप्रयोगेण विचिकित्सा तु संशय इतिकोशबलेन वृन्तशार्दिप्रामाण्येन विशेषार्थकेभ्य एव गुपादिभ्यः स्वार्थे सन् भवतीत्याशयेन

मूले गुपेरित्यादिकथनम् । मीमांसत इतिशब्दाज्जिज्ञासा न प्रतीयत इत्याशयेनाह । तत्प्रयोज्य इति । अत एव । सन्यङोरित्यस्य षष्ठीत्वादेव । अत एव । उक्त एवार्थः । न स्यादिति । इदमुपलक्षणम् प्रतीपिपतीत्याद्यपि न स्यादित्यपि बोध्यम् । कैयट इति । अत एव मूले भ्वादौ परस्मैपदिषु पठितः । एवमुक्तमिति । गुपिप्रभृतयः किद्भिन्ना इत्यादुक्तम् । धातुपाठे तथा पाठः सम्प्रति दृश्यत इत्यपि बोध्यम् । वृत्त्याद्यनुसारिमूलोक्तं व्याख्याय भाष्यानुसारिमतमाह । परे त्विति । अत एव । अननुबन्धकत्वादेव । अन्यथा । अर्थान्तरेऽपि सानुबन्धकत्वे । सनः । नित्यसनः । तस्य । अनुबन्धस्य । चुरादय इतीति । किमत्र प्रमाणमिति चेत् । गुप्तिज्मानां चुरादिषु पाठदर्शनाद् वृत्त्यादिप्रामाण्येन बहुलग्रहणाच्च तथात्वमिति । अत एवाह । एतच्च वृत्त्याद्यनुरोधेनेति । यङ्णिलोपयोरिति । णिचि सति धातोरनेकाच्त्वाद्यङोऽप्राप्तेर्यङो णेः सत्याणिलोपस्य च निपात्यता स्यादित्यर्थः । इति परास्तमिति । गोपनादिष्वर्थेषु सनोऽभावेऽप्यात्मनेपदं यथा स्यादित्येवमर्थं तथा पाठस्यावश्यकत्वादिति भावः । स्वीयकल्पनायाम्भाष्यग्रन्थाविरोधायाह । गुपादिष्विति । वेः स्कन्देरनिष्ठायाम् । दन्त्याज्जन्तसादित्वाभावाच्चायं षोपदेश इति षत्वाप्राप्तेरप्राप्तविभाषेयम् । अत्र । कृत्येवेतिनियमे । कृत्येवेतिभवदुक्तार्थे विपूर्वस्यास्य तिङन्तस्यापि प्रयोगे पर्युदासपक्षे षत्वाभावस्य प्रसक्त्य प्रतिषेधे षत्वस्य च प्राप्तेः फलभेदस्य सत्त्वादत्रापि तथा विचारस्यावश्यकता स्यादिति भावः । मतान्तरे त्विति मूले तुनाऽरुचिर्बोधिता । तद्बीजन्तु लक्ष्यानुरोधेनान्यतरपक्षानुसरणस्यैवावश्यकतया प्रसक्तोभयानुसरणवैयर्थ्यमिति । नन्वनयोर्मतयोः कस्याश्रयणमिष्टोचितमिति चेत् । अभिप्रियेणविपति । अभिषुणु इतिभाष्यप्रयोगदर्शनेनाद्यपक्ष एवेह ग्रहीतुमुचित इति गृहाण । इदमभिप्रायाद्याभ्यहिरङ्गपरितापाप्रतिमभ्युपेत्य । स्वमतमाह । इदमेवेति । मपत्र कल्पुत्येति । श्रमागसाना-

मित्यत्रासम्बन्धादित्यादिः । अचीति वर्त्तत इति । कुसस्याचीत्यतोनुवर्त्तत इत्यर्थः । एवञ्च । भाष्यप्रामाण्यादजूग्रहणसम्बन्धेन व्याख्यानस्य प्रामाणिकत्वे चेत्यर्थः । उदित्पाठो च्युत्र्येप्यतीव्यात्योर्व्यावृत्त्यर्थो वाच्यस्तयोर्व्यावृत्तिस्त्वेवमेव जातेति तथा पाठो व्यर्थ एवेति भावः । गमीत्यत्रोपधालोपशङ्कायामाह । इका निर्द्देशेऽपीति । अत एव । तादृशार्थलाक्षणिकत्वादेव । पृषोदरादित्वादनुनासिकलोपकथनमपि न सर्वत्र किन्त्वर्थविशेषविवक्षायामेवेत्याह । स चेति । सूत्रोपात्तयोरिति । उपस्थितत्वादिति शेषः । वचिस्वपियजादीनाम् । वचिरदादिषु रादिश्च । वचिस्वपियजेत्येषां त्रयाणान्द्वन्द्वोत्तरमादिशब्देन समासे आदिशब्दस्य वचिनापि सम्बन्धः स्यादत आह । आदिशब्द इति । स्वपिग्रहणादिति । वचिना सम्बन्धे स्वपेर्यज्यादित्वेनैव ग्रहणे सिद्धे स्वपेः पृथगुपादानं व्यर्थं स्यादिति भावः । न च स्वपिना सम्बन्धोऽस्तु तथा सति वचेर्ग्रहणम्भविष्यतीति वाच्यम् । त्रयाणान्द्वन्द्वस्यादिशब्देन समासेन द्वन्द्वान्ते श्रूयमाणमितिन्यायेन सहविवक्षामूलकेन सर्वत्रैव सम्बन्ध उचितो न त्वेकत्र तत्परित्यागोऽन्यत्र तत्सम्बन्धः। तथा स्वीकारे द्वन्द्वस्य वासाधुता स्यात् । ननु चुरादिपठितवच्यादिग्रहणार्थं वचिनापि सम्बन्धोऽस्त्वित्यत आह । चुरादाविति । अम्नायाच्चेति । वचधातोराधृषीयत्वात्सिजभावे किति परे सम्प्रसारणयोग्यता सत्त्वेऽपि तदन्येषां यण्घटितानामम्नायादित्यर्थः । न च वरादयस्तत्र सन्त्येवेति वाच्यम् । तेषामदन्तत्वादाधृषीयत्वाभावाच्च सम्प्रसारणयोग्यत्वाभाव इति भावः । अत एव । वीजमन्त्रानपदस्य तादृशार्थकत्वादेव । द्वयमपीति । शास्त्वनुशिष्टौ । आङः शासु इच्छायामित्येतद्द्वयमपीत्यर्थः । अभिमान इत्येतत्कथनयोजनन्दर्शयति । परे त्विति । ननु सम्प्रसारणयोग्यस्य द्वितयस्य यत्र सन्त्यन्तत्र परस्य यणः पूर्वं सम्प्रसारणेन भाव्यमित्युचायेत्यनुपपन्नमत आह । लिटीति । ग्रहिज्यावयिव्यधि । परस्मैपदिन इति । परस्मैपदयोग्यस्य । तेन यया-

देशस्य स्थानिवद्भावेन ञित्वादात्मनेपदपक्षे ऊये ऊवे इत्यत्र सम्प्रसारणसिद्धिः । अत्रेदमवधेयम्। ग्रहिज्येतिसूत्रे वयिग्रहणन्न कार्यम् । स्थानिवद्भावेनास्य वेञ्त्वाद्वचिस्वपीत्येव सिद्धेः । न च वेञ इतिनिषेधे प्राप्ते प्रतिप्रसवविधिरयमस्त्विति वाच्यम् । लिटि वयो य इतिनिषेधारम्भसामर्थ्येन वेञ इतिनिषेधस्यात्राप्रवृत्तेः । न च लिटि वय इति सूत्रं वयेर्यस्यैव सम्प्रसारणन्नेतिनियमार्थमस्त्विति वाच्यम् । एवमपि वयादेशस्य यो यकारस्तस्य नियमेन सम्प्रसारणाभावे वकारस्य परिशेषाद्वचिस्वपीत्यनेन सिद्धे ग्रहिज्येतिसूत्रे वयिग्रहणवैयर्थ्यस्य तदवस्थत्वात् । वेञ इत्यत्र कितीत्यनुवृत्तया कित्येव निषेध इति तु न वाच्यम् । अविशेषेण लिटि प्रतिषेधस्येष्टत्वात् । अत एव ववौ ववियेत्यस्य सिद्धिः । तदुक्तम्भाष्ये । अविशेषेण प्रतिषेधः । निवृत्तन्तत्र कितीति । आतश्चाविशेषेण । वेञोऽपि हि पित्सु वचनेऽभ्यासस्य सम्प्रसारणन्नेष्यत इति । वश्चास्यान्यतरस्याङ्किति । अत्रास्येत्यनेन वयिः परामृश्यते । य इति चानुवर्तते । नन्वनेन यकारे कृते सम्प्रसारणापत्तिः । वेञ इति निषेधस्तु न भविष्यति । लिटि वयो य इतिसूत्रारम्भसामर्थ्यादत आह । यकारे कृत इति। अत्र वकारेण सम्प्रसारणनिषेधस्यापि विधानमित्यपि बोध्यम् । अत्रेदमवधेयम् । भाष्यकृता प्रकृतसूत्रस्य वश्चास्येति प्रत्याख्यातम् । वश्चास्य ग्रहणं शक्यमकर्तुमिति । अन्यतरस्याङ्किति वेञ इत्येकमेवास्तु नेतिसम्प्रसारणमिति चानुवर्तनीयम् । वेञः किति सम्प्रसारणङ्किति वा न स्यात् । निषेधविकल्पे विधिविकल्पपर्यवसानमिति वेञः सम्प्रसारणस्य वचिस्वपीतिप्राप्तस्य पक्षेऽभावार्थमेतत्सूत्रमिति फलितम् । ऊयतुः । ऊयुरित्यस्य सिद्धिस्तु द्वित्वापेक्षया परत्वात्सम्प्रसारणे पूर्वरूपे च कृते सति द्वित्वे वार्णादाङ्गम्बलीय इति न्यायेन सवर्णदीर्घस्याप्रवृत्तावपि ततः सवर्णदीर्घे भविष्यति । सम्प्रसारणाभावे तु ववुरिति भविष्यति । न च वेञ इत्यस्य निषेधस्याभावे ववौ ववियेत्यत्र लिट्यभ्यासस्येतिसम्प्रसा-

रणापत्तिरिति वाच्यम्। अपि चेतिचकारेण लिटीत्यस्यानुकर्षणात्सर्वेष्टसिद्धिर्भविष्यतीति । उपदेश इति । स्थान्युपदेश इत्यर्थः । अन्त्यत्वादित्यस्यादेशस्येत्यादिः । शक्येति । अशास्त्रीयत्वादिति शेषः । उभयेषांग्रहणेनाभ्यासावयवस्य हलादिः शेष इत्यनेन प्राप्ता या निवृत्तिस्तस्या बाध इति इत्युक्तन्तन्नाभोऽक्षरमर्यादया न लभ्यत इत्यत आह । तत्सामर्थ्यादिति । अन्यथा । ह्वत्यस्तीतिसूत्रापरामर्शे । अभ्यस्तस्य च । अभ्यस्तस्य ह्वेञः सम्प्रसारणमित्यर्थे जुहूषति जोहूयत इति न सिध्यति । जिह्वाययिषतीत्यत्र सम्प्रसारणाभावायाभ्यस्तनिमित्ते परे सम्प्रसारणमित्यर्थो वक्तव्यः एवञ्च न सम्प्रसारण इतिनिषेधादभ्यासस्य न स्यादित्याशयेन शङ्कते। नन्विति । अभ्यस्तीभविष्यत इत्यत्र च्विप्रत्ययोपादानेन प्रकृतौ यस्य समुदायस्याभ्यस्तसंज्ञा भवति तद्रूपत्वारोपेणात्राभ्यस्तशब्दो निर्दिष्ट इति सूचितम्। एवञ्च यस्याभ्यस्तनिमित्तप्रत्यये कृते द्विर्वचनं सम्भाव्यते तस्याभ्यस्तनिमित्तप्रत्ययानुत्पत्तावेव सम्प्रसारणमितिणिजन्तात्सनि कृते ह्वाययतेरभ्यस्तनिमित्तप्रत्ययपरत्वं यत्र तत्र न भविष्यतीति भावः। न च प्रकृतसूत्रे निमित्तशब्दानुपादानादेतावलोऽर्थस्य कथंलाभ इति वाच्यम्। दधित्रपुसम्प्रत्यक्षो ज्वरः।आयुर्वै घृतमित्यत्रेव कार्यस्य निमित्ते कारणतादात्म्यारोपेण व्यवहारात्। न च षाष्ठद्विर्वचनस्यादेशरूपत्वेऽभ्यस्तप्रकृतित्वं ह्वः सम्भवति द्विः प्रयोगपक्षे तु कथमयं व्यवहार इति वाच्यम्। आरोपितप्रकृतिविकृतिभावस्य सुलभत्वात्। उक्ताशयानभिज्ञः शङ्कते। न चेति। जिह्वायकीयिषतीति । ह्वेञो ण्वुल् क्यच् सन्। अत्र सन्नन्तस्य यः प्रथमैकाच् तस्य द्विर्वचनप्रवृत्त्या ह्वोऽभ्यस्तनिमित्तत्वमस्त्येवेति भावः। उक्ताशयमप्रकटयति ॥ अभ्यस्तीभविष्यत इत्यादिना ॥ तत्प्रकृतिः ॥ अभ्यस्तप्रकृतिः ॥ अत एव अभ्यस्तस्य चेति सूत्रयैतादृशार्थकत्वादेव॥ स्पष्टञ्चेदम्भाष्य इति॥ प्रकृतसूत्रे भाष्ये ह्वः सम्प्रसारणमभ्यस्तस्येतिसूत्रे जुहावयिषति अभूह्वयदित्यस्य सन्चङ्परणिजन्तस्य रूपमिदुरयं योगविभाग-

स्थानिनिमित्तस्य प्रत्ययस्यैक्य इत्यर्थः ॥ न वृद्धिरिति ॥ अल्लोपस्य स्थानिवत्त्वात् ॥ अन्तोदात्त इति ॥ चित्त्वादन्तोदात्त इत्यर्थः ॥अन्तेदित इति ॥ मुमृविधौगोः पादान्तइतिसूत्रादन्तग्रहणमनुवर्त्तत इति भावः ॥ इदम् ॥ ज्ञापकत्वकथनम् ॥ माधवानुरोधेनेति ॥ अक्षरसमाम्नायेऽकारस्य प्रथमत उपदेशाच्छक्षेतिपठितव्यो युजर्थस्तेनैवात्मनेपदे सिद्धे इकारो ज्ञापनार्थं इति तेषामभावः॥ अत्र यदीकारस्य स्थानेऽकारः पठितः स्यात्तदा भवदुक्तं सङ्गच्छेत स तु न पठितः । अपि चाकारेकारयोः पाठे नमाश्ऌलाघवगौरवचर्चा ॥ प्रथमोपस्थितत्वन्तु न नियामकञ्जिजाक्षयाणामिति सूत्रे त्रयाणाङ्ग्रहणादिति सिद्धान्तिनः ॥ वस्तुतस्तु विचक्षण इतिवैदिकप्रयोगेऽन्तोदात्तत्वं व्यत्ययो बहुलमित्यनेनापि सिद्धमिकारस्तूदात्त एवेति इकारोपादानमात्मनेपदार्थमन्तेदित्त्वाभावश्च तेन सिद्धयति ॥ एवञ्च ज्ञापनार्थं इत्ययसङ्गतमेवेतिभाष्यानुक्तज्ञापकेन लक्ष्यसिद्धिर्नेत्येव युक्तम् । तात्पर्यनुदात्तेदितिस्वरस्तु ह्रिदुपदेशात्परत्वात्सिद्धः॥ इकार उच्चारणार्थं इति तत्त्वम् ॥ तेन ॥ असिद्धकाण्डे पाठेन ॥ छ एवेति ॥ वृद्धाच्छ इति छ एवेत्यर्थः॥नात्यन्ते ति॥ कृत्यच इतिसूत्रदृष्ट्या ख्शाञः शस्य यो वेत्यस्यासिद्धत्वाऽह्यादिभिन्नेन ह्याकारेण व्यवधानाण्णत्वन्नेत्यर्थः ॥ तदर्थङ्ग्रहणमिति ॥ यदा कर्त्तव्यतिहारे लङ् तदा व्यत्यचतेत्यादौ परस्मैपदपरत्वाभावादङादेशार्थङ्ग्रहणम् ॥ ख्याधातूनामिति॥ बहुवचनम्प्रयोगबाहुल्येन ॥ अत्र प्रयोगस्यख्याधातूनामितिकथनाद्यदा लौकिके प्रयोगे ख्शाञः शस्य यो वेतिपत्वन्तदाऽऽङादेश इति बोधितम् । यत्तु यक्तीति कृतकुत्वसाङ्ग्रयाद्यदा यकारादेशस्तदा भविष्यति सूत्रे तु ख्शाञोऽनुकरणमित्यरूपासीदित्यद्भुतमिति ॥ तन्न ॥ ख्शाञः क्वापि लौकिके शब्देऽदर्शनेन तदनुकरणमित्यस्य वक्तुमशक्यत्वात् ॥ किन्तु ख्यातीतिनिर्देशाद्यदा याकारस्तदेवाङ् ॥ न चैतद्दृष्ट्या मत्पक्षस्यासिद्धतया कथङ्ख्यातीत्यनेनास्य ग्रहणमिति वाच्यम् ॥ ख्याञ्प्रकृतम इत्यस्य सार्वधातुकमात्रविषयत-

या विधिसामर्थ्यं नासिद्धत्वस्याभावात् ॥ ईशः से ॥ ईडजनोर्ध्वे च ॥ अत्र यन्मूले वैचित्र्यार्थं इत्युक्तन्तत्र वैचित्र्यमाह ॥ ध्वे इत्यस्येति ॥ भाष्यविरोधादिति ॥ एवं हि भाष्ये उक्तम् ॥ किमर्थो योगविभागः ॥ न इशीडजनां स्ध्वे इत्येवोच्येत ॥ ईशो ध्वे मा भूत् ॥ इष्यते ईशिध्वे इत्यादिना त्रिष्वपि धातुषु यत्र यत्रादिप्रसङ्गस्तत्रेष्टापत्तत्या तत्परिहृत्य योगविभागे फलाभाव इति ॥ भाष्यसम्मत इति ॥ स्ध्वे इतिनिर्देशादेवङ् कल्प्यत इति भावः ॥ उभयत्रैदन्तानुकरणफलन्तु मूल एवोक्तम् ॥ भाष्यस्वरसे इति ॥ तत्र हि जक्षित्यादिषु सप्तग्रहणं वेवीत्यर्थमित्युक्त्वा न यार्थः परिगणनेन अस्त्यागणान्तमभ्यस्तसंज्ञा । इहापि तर्हि प्राप्नोति । आङः शासु ।अस्तु। अभ्यस्तकार्याणाम्परस्मैपदेषु विधानमात्मनेपदी चायम् । स्वरस्त्वभ्यस्तनिमित्तकोऽनुदात्ततः परस्यासिद्धरतीति ॥ ननु प्रशास्मह इत्यत्रेच्छारूपार्थप्रतीत्यभावान्नायन्धातुरत आह ॥ धातूनामिति ॥ नमो वाकमित्यत्र नमस्ते रुद्रमन्यव इत्यादिवचनमर्थः ॥ रूपस्यैवेति ॥ अड्ग्रहणाननुवृत्तावित्यादिः ॥ दुर्लभ इति ॥ निर्दिश्यमानस्य व्यवधानात् ॥ अव्यवहितेत्यादि ॥ रुसाहचर्यमपि बोध्यम् ॥ ननूर्णोतेरनेकाच्त्वाद्धास्विकमते आम् स्यादेवेत्यत आह ॥ ऊर्णोतेरिति ॥ आदिभूतादिति ॥ तेनेन्द्रियीयिषतीत्यस्य सिद्धिः ॥ नन्वसिद्धेऽपि जायमानकार्यस्य यत्रारोपस्तस्यैव प्रमत्तया प्रयोगेण श्रवणन्दर्यारमत आह ॥ यद्वद्धेरिति ॥ अत्रोन्तररायङ्इतिकथनेनागन्तूनामन्ते सन्निवेशस्य सुप्रसिद्धत्वाद्धिर्वचननिष्पाद्यत्वमुत्तररायङसैरति सूचितम् ॥ तद्य ॥ अद्वित्य इत्यंतत् ॥ एवञ्च द्वित्वभिन्ने पूर्वत्र कर्त्तव्ये इति सिद्धम् ॥ द्वित्वविधायकशास्त्रदृष्ट्या तु नासिद्धत्वम्॥द्वित्वसूत्र पाष्ठमाष्टमिकञ्च गृह्यते इत्युक्तमत एव षष्ठाध्याये सन्यङोरितिसूत्रे स्थानेद्वियचनमिति पक्षे वियक्षति विवक्षा इत्यत्र मनः सकारविशिष्टस्य द्विर्वचने एते प्रकृतिप्रत्ययविभागसम्भोद्रासन मशरमत्र पत्यक्ष सयादिति दोषस्य एते पत्ये द्वित्वमिति प्रक्रियया परि-

स्थानिनिमित्तस्य प्रत्ययस्यैक्य इत्यर्थः ॥ न वृद्धिरिति ॥ अल्लोपस्य स्थानि-वद्भावात् ॥ अन्तोदात्त इति ॥ चित्त्वादन्तोदात्त इत्यर्थः ॥अन्तेदित इति ॥ मुमूर्विधौगोः पादान्तइतिसूत्रादन्तग्रहणमनुवर्त्तत इति भावः ॥ इदम् ॥ ज्ञापकत्वकथनम् ॥ माधवानुरोधेनेति ॥ अक्षरसमाम्नायेऽकारस्य प्रथमत उपदेशाच्छक्लेतिपठितस्यो युजर्थस्तेनैवात्मनेपदे सिद्धे इकारो ज्ञापनार्थ इति तेषाम्भावः॥ अत्र यदीकारस्य स्थानेऽकारः पठितः स्यात्तदा भवदु-क्तं सङ्गच्छेत स तु न पठितः । अपि चाकारेकारयोः पाठे नमात्रालाघवगौरवचर्चा ॥ प्रथमोपस्थितत्वन्तु न नियामकन्त्रिजास्त्रयाणामिति सू-त्रे त्रयाणाङ्ग्रहणादिति सिद्धान्तिनः ॥ वस्तुतस्तु विचक्षण इतिवैदिक-प्रयोगेऽन्तोदात्तत्वं व्यत्ययो बहुलमित्यनेनापि सिद्धमिकारस्तूदात्त एवे-ति इकारोपादानमात्मनेपदार्थमन्तेदित्त्वाभावश्च तेन सिद्धस्ति ॥ एवञ्च ज्ञापनार्थ इत्यसङ्गतमेवेतिभाष्यानुक्तज्ञापकेन लक्ष्यसिद्धिर्न्नैवेयुक्तम् । तास्यनुदात्तेदितिस्वरस्तु ङिदुपदेशात्परत्वात्सिद्धः॥ इकार उच्चारणार्थ इ-ति तत्त्वम् ॥ तेन ॥ असिद्धकाण्डे पाठेन ॥ ख एवेति ॥ वृद्धाच्छ इति ख एवेत्यर्थः॥णत्वमत्रेति॥ कृत्यच इतिसूत्रदृष्ट्या ख्शाञः शस्य यो वेत्यस्या-सिद्धतयाऽड्व्यवधानेनाण्नस्येत्यर्थः ॥ तदर्थङ्ग्रहण-मिति ॥ यदा कर्त्तव्यतिङ्गारे तङ् तदा व्यत्ययसत्त्वादौ परस्मैपदपरत्वा-भावादङ्गादेशार्थङ्ग्रहणम् ॥ स्याधातूनामिति॥ बहुवचनम्प्रयोगबाहुल्ये-न ॥ अत्र प्रयोगस्थस्याधातूनामितिकथनाद्यदा लौकिके प्रयोगे ख्शाञः शस्य यो वेतियत्यन्तदाऽड्ढादेश इति बोधितम् । यत्तु यक्लीति एतत्कृत्य-माद्यर्थाद्यदा यकारादेशस्तदा भविष्यति सूत्रे तु ख्शाञोऽनुकरणमि-त्यक्ङ्गासीदित्यसङ्गतमिति ॥ तत्र ॥ ख्शाञः क्वापि लौकिके शब्देऽदर्श-नेन तदनुकरणमित्यस्य वक्तुमशक्यत्वात् ॥ किन्तु ख्यातीतिनिर्देशाद्यदा यकारन्तदेवाङ् ॥ न चैतद्दृष्ट्या मन्त्रमात्रसिद्धतया कथङ्गारादेयनेना-नर्थ ग्रहणमिति वाच्यम् ॥ ख्यात्प्रकरण इत्यस्य सार्वधातुकमात्रविषयत्व-

त्परत्वस्यातिदेष्टुमशक्यत्वादिति वाच्यम् । पूर्वत्वातिदेशेन तदतिदेशस्यापि वक्तुं शक्यत्वात् । पूर्वत्वस्य शास्त्रीयत्वाच्चेतरथंसमाजग्रस्तत्वेन पूर्वस्मात्परत्वं वक्तुं शक्यमिति तद्भावः । अचः परस्मिन्निति तु पूर्वमत एव । अन्यथा प्लायत इत्यस्यासिद्धिः स्यात् । लक्ष्यानुसारादिति । अभीयादितिलक्ष्यस्य सम्प्रतिपन्नस्यानुसारादित्यर्थः । अन्य इत्यनेनारुचिः सूचिता । एकदेशविकृतन्यायस्य लौकिकतया लोकदृष्टप्रकारस्य त्यागे बीजाभाव इति । उक्तेन । उभयत इत्यनेन । अस्य लौकिकत्वन्तु प्रागुपपादितमेव । एतेन तस्य न्यायस्यात्र शास्त्रेऽनाश्रयणं सूचितम् । नन्वेतन्न्यायाभावे कथमभीयादित्यस्य सिद्धिरत आह । किञ्चेति । पूर्वोक्ताशयेन शङ्कते । न चेति । तद्वद्भावेऽपीति । पूर्वपरान्तादिवद्भावेऽपीत्यर्थः । अनुपपादेनेति । अवध्यवधिमतोर्भेदे एव लोके पूर्वपरव्यवहारस्य प्रसिद्धेरिति भावः । अतिदेशेनापि न लाभ इत्याह । न हीति । तेनातिदेशेन । अन्तादिवदित्यतिदेशेन । तदारोपः । व्यपवर्गारोपः । अत एव । एतादृशे विषयेऽन्तादिवद्भावेन व्यपवर्गाभावादेव । नुम्प्रतिषेधः । नाभ्यस्तादित्यनेन नुम्प्रतिषेधः । युक्ततरप्रकारेणाभीयादित्यत्रैकादेशे कृते ह्रस्वत्वाभावं साधयति । किञ्चेति । व्याश्रयत्वादिति । उपसर्गापेक्षत्वेन व्याश्रयत्वात् । तेन । कैयटेन । इयायेत्याद्यसिद्धेरिति । अत्रापि वृद्धेः प्रत्ययापेक्षतया बहिरङ्गत्वेनान्तरङ्गैकादेशे रूपासिद्धिः यार्णपरिभाषा तु तथैव व्याश्रयत्वान्नेति तस्माद्वार्णप्रवृत्तावुभयोरङ्गसम्बन्धित्वमात्रम्प्रवृत्तौ नियामकमिति वक्तव्यन्तथास्त्वेवेति यथेयायेत्यस्य सिद्धिस्तथाभीयादित्यस्यापि भविष्यतीति भावः । स्वोक्तौ भाष्यान्तराविरोधमाह । यदपीति । तेन न्यायेन । वार्णादाङ्गमितिन्यायेन । अत एव । ह्रस्वत्वस्यैकादेशात्पूर्वम्प्रवृत्तेरेव । उपेयाजेत्यत्राभ्यासनिमित्तकस्योपेयात इत्यत्रोपसर्गादितिविहितस्याभ्यात्रेत्यत्राभ्यार्थमद्योरितिविहितस्य ह्रस्वत्वस्य प्राप्तिः । तदपवादेति । बहिरङ्गपरिभाषापवादेत्यर्थः । वार्ण-

हारः कृतः ॥ आष्टमिकद्वित्वविषये च विभाषिता विधयः पूर्वत्रासिद्ध-
मित्यधिकारस्थाः पूर्वत्रासिद्धीयमद्विर्वचन इति वचनारम्भप्रयोजनमिती-
त्यभिधाय द्रोग्धा द्रोग्धा द्रोढा द्रोढेति प्रयोजनमुक्तम् ॥ आष्टमिकञ्च
पदद्विर्वचनं वर्णद्विर्वचनञ्च गृह्यते ॥ अत एवानचि चेतिसूत्रघटकानचीति
पदे प्रसज्यप्रतिषेधमाश्रित्य वाक् वाक्क् इत्यस्य सिद्धेः प्रयोजनत्वमुक्त-
म्॥अन्यत्र॥कार्यान्तरे कर्त्तव्ये ॥भवत्येवेति॥तेन निष्पीतन्दुष्पीतमित्यादौ
जातेऽपि द्विर्वचने इदुदुपधस्येति षत्वे कर्त्तव्ये तस्यासिद्धत्वेन षत्वसि-
द्धिः । एवञ्च ॥ अनित्यत्वाच्च यणे च ॥ तस्यैव सम्भवेनेति ॥ तस्य पर-
स्मैपदित्वात् । निषेधार्थेति । विभाषापदग्रहणेनैतस्य पक्षे निषेधविधि-
त्वम् । नन्वाहस्थ इत्यत्राहस्त इत्येव प्रक्रियालाघवाय कर्त्तव्यमत आ-
ह । महाप्राणादेशप्रकरणादिति ॥ ह्रोढ इत्यादिप्रकरणादित्यर्थः ॥ उपक्
षेति । लिट् चेत्यनेनासार्द्धधातुकत्वात्॥इयायेति ॥ अत्र इशाऽस्य द्वि-
त्वे वार्णादाङ्गमितिन्यायेन सवर्णदीर्घम्बाधित्वा परस्य वृद्धौ पूर्वस्या-
भ्यासस्यासवर्णे इतीयङादेशः॥ तत्र शङ्कते ॥ न चेति॥परत्वादिति ॥ इ-
यङादेशापेक्षया परत्वादित्यर्थः ॥ आपत्तेः ॥ क्ङितीत्यस्यानुवृत्तावनि-
ष्टस्यापत्तेः ॥ दीर्घविधानसामर्थ्यादिति ॥ येन नाप्राप्तिन्यायेन दीर्घस्य
यणपवादत्वात् पुनर्यणभाव इत्यर्थः ॥ ननु यण्वत्सवर्णदीर्घस्यापि तेन
बाधोऽस्त्वित्यत आह ॥ अनन्तरस्येतीति ॥ कर्त्तव्य इति ॥ अजादीना-
मटा सिद्धमितिभाष्योक्तेः ॥ न वृद्धिरिति ॥ अस्यपो इसतीत्यत्राह् गा-
र्ग्यगालवयोरितिविहितस्याटोऽपि परे वृद्धिर्नेत्यर्थं ॥ इसतीत्यस्योपादा-
नमुक्त्वा ॥ आटोऽप्ययेष्यायुनगिति साधयति ॥ आयुनेति ॥ इणित्य-
त्र प्रत्याहारग्रहणशङ्कानुत्पानायाह ॥ प्रसिद्धत्वादिति ॥ उभयत इति-
वचनस्य युक्तिसिद्धत्वमाह ॥ पूर्वपरेति ॥ स्थानिवद्भावमिति ॥ प्रथमसूत्र-
विहितं स्थानिवत्त्वमित्यर्थः । *न धात्वादिप्रकृत्यपूर्वस्यापि न स्यात् ।*
एकादेशे धर्मद्वयलाभेऽपि तासौ नित्यमिद्दयवदभ्योपदेशोपसर्गा-

दिति । जहातीतिनिर्देशमूलकव्याख्यानादित्यर्थः । हाङो ग्रहणे हि भृञामिदितीत्त्वापत्तिः स्यात् । अत एव । आर्द्धधातुकाधिकारोक्तकार्यातिदेशस्येष्टत्वादेव । असिद्धत्वप्राप्तिमुपपादयति । लाघवस्यायामिति । अत एव । सर्वथा तत्प्रत्याख्यानस्यानभिप्रेतत्वादेव । स्वीकार्यमिति । अन्यथा फलभेदः स्यात् । इत्यनुवृत्त्या सिद्ध इति । ङित आदन्तात्परत्वं लड्येव सम्भवतीति भावः । सस्थानशब्द इति । शब्दस्य स्वप्रयोज्यार्थोपस्थितौ प्रकारतया भानेन त्वप्रत्ययान्तेन शब्द एवोच्यत इति भावः । त्वान्तस्य शब्दपरत्वे तस्य लक्ष्ये प्राप्त्यभावेऽपि लक्षणया त्वान्तस्य वाच्यार्थपरत्वमित्याशयेनाह । तेनेति । लक्षणानाश्रयणेनाह । यद्वेति । अन्यथा । स्याधातोरार्द्धधातुकेऽपि प्रयोगे । सामान्यापेक्षज्ञापकाश्रयणे न ध्याख्यापृमूर्छीति सूत्रे स्याग्रहणन्न कार्यम् । यत्त्वस्यासिद्धतया यण्वत्त्वाविरहादिति लाघवमप्यस्याङ्कल्पनायामस्तीति बोध्यम् । मूले अयमन्तीति । अत्रायमित्यनेनादादिकस्यैव तत्राप्रयोगः । यस्तु चुरादिपठित आधृषीयस्तस्य णिजभावेऽपि तत्र प्रयोगो भवत्येवेति सूचितम् । विदो लट इतिसूत्रे वेत्तेरेव ग्रहणे प्रमाणमाह । निपातनेति । निपातनादगुणत्वमितिभाष्यादुपविदजागृभ्य इतिनिर्देशाच्चायमर्थः कल्प्यते । कस्य चिन्मतमाह । कर्तृत्वेति । उच्चारणसामर्थ्यादिति । विदाङ्कुर्वन्तुशब्दे लोडुच्चारणसामर्थ्यादित्यर्थः।अत एव ॥ लोटो विवक्षितत्वादेव । अत्र लोटोऽविवक्षायामनेनैव लिट्यप्यामः सिद्धौ तस्मिन्सूत्रे विद्शब्दोपादानमनर्थकं स्यात् ॥ ननु तत्र विद्ग्रहणेनान्यस्य विद्धातोर्ग्रहणमस्त्वित्यत आह।तत्रापीति । परस्मैपदिन इति।तेन विद विचारण इत्यस्य रुधादिगणपठितस्य व्यावृत्तिः॥ ननु कृञ्ग्रहणेन कृञ् हिंसायामित्यस्य स्वादौ पठितस्य ग्रहणमिति यत्तु शक्यमिति कथङ्कृञ्ग्रहणस्य गणकार्यानित्यत्वज्ञापकत्वमत आह । तनादिसाहचर्येणेति ॥ युक्त्यन्तरमाह । क्रियेति ॥ सिद्धान्तमाह । भाष्य इति ॥ भाष्यमानत्वेन सवर्णग्राह-

परिभाषयाऽभीयादित्यस्य सिद्धिरिति यत्प्रागभिहितन्तदपि तत्सत्त्वमभिप्रेत्य । वस्तुतो भाष्यान्तरस्वारस्यादस्यानभिधानमेवेत्याह । किञ्चेति । उत्तरपदप्रकृतिस्वरः । गतिकारकोपपदादिति विहितः । तस्य तत्त्वमिति । उभयत इत्युक्तेरेकदेशयुक्तित्वमित्यर्थः । अत एव । उभयत इति वचनस्य लक्ष्यासाधकत्वादेव । ननु समीयादित्यत्राण्त्वाद्भ्रस्वत्वन्दुर्वारमत आह । मूले भौवादिकेति । इत्येतावतैवेति । किदाशिषीतिकित्त्वस्य तत्रैव विधानात् । नियमपूर्वकत्वमिति । एवञ्चास्य विशेषणस्य द्योतकोऽत्रावधिः । एवञ्च । लावस्थायामित्यस्य स्वीकारे च । इदमार्द्धधातुक इत्यस्यासम्बन्धमभिप्रेत्य । वस्तुतस्तत्सम्बन्धेऽपि न दोष इत्याशयेनाह । मूले विवक्षित इति । शब्देनेति । एतेनोपसर्गद्योत्यार्थस्योपसर्गसंज्ञकशब्दयोगात्प्राग् धात्वर्थेऽन्तर्भावो भवत्येवेति बोधितन्तेनोपास्यते हरिरित्यस्य सिद्धिः । णेरध्ययन इतिदर्शनस्यापूर्वार्थज्ञापकत्वापेक्षया भाष्यसम्मतपक्ष एव ज्ञापकत्वकल्पने लाघवमिति भावः । अत एव । उपसर्गसंज्ञकशब्दयोगस्य प्रागभावादेव । पूर्वन्धातुः साधनेनेत्यत्र बीजमाह । साध्यत्वेनेत्यादि । साधनार्थकप्रत्ययस्थले व्यवस्थामुक्त्वा भावार्थकप्रत्ययस्थले तामाह । घञ्लुडादय इति । तदर्थसम्बन्ध इति । भावार्थकप्रत्ययद्योत्यस्य सिद्धत्वस्य सम्बन्ध इत्यर्थः । भिन्नपदेति । एतेन बहिरङ्गत्वन्तत्प्रयुक्तकार्यस्य द्योतितम् । वृद्धौ । आटश्चेति वृद्धौ । कथञ्चिदिति । पदस्य विभज्यान्वाख्यानमितिपक्षमभिप्रेत्य । उक्तरीत्येति । प्रत्याख्यानपक्षे वृद्धिरन्तरङ्गत्वादाटा सहैवेतिरीत्या यणाप्रवृत्त्या नियमासम्भवादित्यर्थः । नित्यत्वाङ्गीकारादिति । यस्य लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यमिति परिभाषया नित्यत्वस्य बोधनादिति । न दोष इति । एवङ्कल्पनया यत्र पूर्वं लादेश इति तन्नायः । इत्याहुरिति । भाष्यानुक्तत्वमस्वारुचिः । व्याख्यानमत्रेति । गाङ् लिटीत्यत्र ङकारस्यात्रैव विशेषणार्थमुपादानमित्येतन्मूलकमित्यर्थः । न ङाशो व्याख्यान-

देव सिद्धावग्लोपिग्रहणमास्त्विति शङ्किते हलच्समुदायस्यात्यरराजदि-त्यादौ लोपे प्राप्नोतीत्याशङ्कायामवयवलोपेनाग्लोपित्वमित्यवयवायमाश्रि-त्यैव स्थानिवत्त्वप्राप्तिरितिशङ्कायामग्लोपिग्रहणमेवोत्तरत्र स्थानिवत्त्वा-भावे ज्ञापकमस्त्वित्युक्तं आदीधक इत्यत्र यीवर्णयोरिति न प्राप्नोतीति पूर्वपक्षे यणग्रहणसामर्थ्यात्स्थानिवत्त्वमित्युक्तम् । भाष्यस्वरस इति । तत्र हि जक्षित्यादिषु सप्तग्रहणं वेवीत्यर्थमितियाशिकस्यापरिगणनमाग-णान्तत्वादित्यनेन प्रत्याख्याने कृते आङः शास्वित्यत्रातिप्रसङ्गमाशङ्का-स्त्वित्यनेनेष्टापत्तया समाहितमिति । सूत्रस्थभाष्यस्वरसादिति । तत्र हि पसिवशी छान्दसावित्युक्तम् । अत्र कैयटः । पस सस्ति स्वप्ने इति ये न पठन्ति केवलं पस स्वप्ने वश कान्ताविति तन्मतेनैतदुक्तम् । मतान्तरं तेनोक्तम् तदाह । तत्रैवेत्यादिना । भाष्यविरोध इति । तत्र हि बहूनां समवायेऽपि निर्ग्लेयान्निर्ग्लायान्निर्म्लेयान्निर्म्लायादित्यादौ वान्यस्य सं-योगादेरित्येत्वस्य वैकल्पिकप्रवृत्तिः स्वीकृता । असाधुरेव । पसिवशी इतिपूर्वोक्तभाष्यात् । औप्टामित्यत्र सम्प्रसारणे अजादित्यादाहित्युक्तत्व लायस्यायामजादित्वाभावान्न प्राप्नोतीति वाच्यम् । भाव्यजादेरप्याड्वि-धानात् । यङ्लुकः संज्ञेति । न तु तदन्तस्य संज्ञा । तत्रोपष्टम्भकमाष्य-माह । अस्य । यङ्लुगन्तस्य ॥

## इत्यदादिविवरणम् ।

इत्यत्रेति । एयसाङ्खादानुकूलो व्यापारो हुधात्वर्थः । तत्र । येपे आ-धारे । अजादित्वाभावेनेति । स्थानितावच्छेदकत्वेनोपात्तस्य धर्मस्य यत्राश्रयस्तावच्छिन्नपर्याप्तत्वन्तत्रैव स्थानिवद्भावप्रसक्तिः । वस्तुतोऽत्र द्वि-तीयकोटिरभ्युपगमवादेन । अत एव णिलोपस्य स्थानिवद्भावसिद्धिः । अभ्यस्तस्येति । यद्यपि श्नाभ्यस्तयोरितिसूत्रेऽभ्यस्तयोरित्युपात्तम् । तथा-प्येकदेशानुवृत्तया विभक्तिविपरिणामेनैवमुक्तम् । अत एव कैशादाह मा-

हणङ्क्रिमर्थम् । इह मा भूत् । विभिद्वान् । क्रियमाणेऽप्येकाज्ग्रहणेऽत्र प्राप्नोति एषोपि ह्येकाच् । एवन्तर्हि कृते द्विर्वचने एकाच् । कथम् । एकाज्ग्रहणसामर्थ्यात् । न हि कश्चिदकृते द्विर्वचनेऽनेकाजस्ति यदर्थमेकाज्ग्रहणं क्रियते । ननु चायमस्ति जागर्त्तिः । जागृवांसो अनुग्मन् । छन्दसि वेति वक्तव्यमिति द्विर्वचनाभावः । यत्तह्र्याकारग्रहणङ्करोति न हि कश्चिदकृते द्विर्वचने आकारान्तोऽनेकाजस्ति । ननु चायमस्ति दरिद्रातिः । न दरिद्रातेरिटा भवितव्यम् । किङ्कारणमुक्तमेतत् । दरिद्रातेरार्द्धधातुके लोपः सिद्धश्च प्रत्ययविधाविति भाष्ये उक्तम् । अत्र दरिद्रातेरिट्शङ्कया आम्रेति ध्वनितमित्यर्थः । कैयटेनेति । तेन हि दरिद्रातेरनित्य आमित्यात औ णल इत्योकारे विधातव्ये औकारविधानेन ज्ञापितमित्युक्तम् । अयम्प्रयोग इति । एतेन लुङि चेत्यत्र प्रमाणमुपन्यस्तम् । तद्भावः । भाष्यकारस्य भावः । सर्वथा इदम् । अस्तिसिच इतीड्भावाय छान्दसमुदाहरणमुपन्यस्तम् । उत्तरार्थम् । दश्चेतिसूत्रेऽनुवृत्तनर्थमित्यर्थः । न च ससजुष इतिसूत्रानन्तरमस्तेरितिसूत्रङ्कार्यमनेन दस्यस बाधे सिद्धेऽनस्तेरिति न वाच्यमिति तु न शङ्कनम् । योगविभागेन पुनर्विधानसामर्थ्येन बाधकल्पनापेक्षया यथान्यासे प्रतिपत्तिलाघवात् । स्थानषष्ठीति । शब्दाधिकारात् । अत एव । छान्दसत्वादेव । ननु नित्यत्वाद्दैरेवमित्यसङ्गतम् । कृतेऽप्येत्वे भूतपूर्वगत्या लोपप्रसक्तेः । वीवर्णयोरित्यत्र वि इवर्णयोरिति छेदात् । द्विवचननिर्द्देशेन इवर्णान्तरपरिग्रहसामर्थ्याद् भूतपूर्वगतिरिहाश्रीयते । अत एव दीधीङो णिजन्तात् ण्वुलि णिलोपेऽपि कृतेऽनेनान्त्यलोप इति चेन्न । अथः परस्मिन्निति सूत्रस्थभाष्यप्रयोगविरोधात् तदाह । अथ इति । लुप्तेऽपीत्यमिति । आदीधक इत्यत्र दीधयतेण्वुलि णिलोपस्य स्थानिवत्त्वादित्वमित्यर्थः । तत्र हि णेर्णिष्युपसंख्यानमित्यनेनाचःपरस्मिन्निति स्थानिवद्भावः । यत्तु परनिष्ठांगेत्यसंबद्धमिति मम न निधायाममालदित्यत्र टिलोपस्य स्थानिवत्त्वादगुपधात्वा-

टप्रत्ययस्य श्यनः श्नोश्च ङिन्मित्त्वाभावादेव व्यावृत्तिः । विभाषा ली
तेः । यका निर्देश इति ॥ न च सार्वधातुके यगिति विहितो यक् धात
र्थफले आश्रयान्वयविवक्षायाम्भवति प्रकृते च न तद्द्योत्यार्थसद्भाव इ
कथं यगिति वाच्यम् । सौत्रत्वेन यकः साधुत्वात् ॥ यत्तु विभाषा लि
इत्येव सूत्रयतान्तावतैव सर्वेषां ग्रहणम्भविष्यति किं सर्वसङ्ग्राहकयङ्
र्निर्देशेनेति मतं तन्न युक्तमित्याशयेनाह । क्र्यादिराधृषीयश्चेति
ली श्लेषणे । ली द्रवीकरण इत्युभयत्र निरनुबन्धकपाठात् ॥ एव
निरनुबन्धकपरिभाषया तयोरेव ग्रहणापत्तिः । लीङ इतिनिर्देशे ल
स्यैव ग्रहणापत्तिरिति यका निर्देशेन निरनुबन्धकपरिभाषाया बाधात्स
पाङ्ग्रहणं सिध्यतीति भावः । अत्र परस्मैपदीत्येतस्योपादा
वस्तुस्थितिकथनाय न तु प्रकृते किञ्चिदस्य प्रयोजनम् ॥ अत्र
प्रीङ्धातोः सकर्मकत्वे । मानञ्चिन्त्यमिति । अनन्यथासिद्धस्य साधकस्य
लाभात् ॥ न च रुच्यर्थानाम्प्रीयमाण इति निर्देश एव साधक इति व
च्यम् । तेन निर्देशेन तत्र धातूनामनेकार्थतया विषयत्वावच्छिन्नप्रीत्य
कूलव्यापारस्य धात्वर्थत्वात् । तस्य निर्देशस्य दर्शनेन मूलकृता सकर्म
इत्युक्तम् । आधेयत्वावच्छिन्नप्रीत्यनुकूलव्यापारस्य धात्वर्थत्वे सर्वत्र प्र
यमाण इतिनिर्देशस्तु सौत्र इति प्रकृतग्रन्थाभिप्रायः ॥ षोऽन्तकर्मणि ॥ व
र्मशब्दोऽत्र क्रियापरः ॥ अत्र पाठे ॥ पतेतिपाठे । श्यनादीनिति । उ
त्रादिना गापोष्टगिति टकः कित्त्वस्य सङ्ग्रहः । तेन श्यनः शकारस्येत
श्यनीत्यत्र विशेषणार्थतया ज्ञापकत्वासम्भवशङ्का निरस्ता ॥ आद्युदात्ता
र्थम् । प्रकृतेराद्युदात्तार्थम् । एवञ्च दीव्यत इति पदमाद्युदात्तम्भवति
चानशीति ॥ दीव्यमान इत्यत्र ताच्छील्यादिविषये चानशीत्यर्थः । आ
द्युदात्तार्थमिति । यद्यपि तत्र चित्त्वादन्तोदात्तत्वम्भवति । तथापि तत्र
ष्टस्यापि चित्त्वप्रयुक्तस्वरस्य बाधोऽस्त्वित्याशयः । तस्यापि । अन्यत्र वि
करणेभ्य इत्यस्यापि ॥ तत्सामर्थ्यात् । नित्यसामर्थ्यात् । औचित्यादिति

र्धधातुक इति । दीर्घोच्चारणमिति । पॄ इत्यत्र दीर्घोच्चारणमुदोष्ठ्यपूर्व-स्येत्युत्त्वाय । तत् । अङ्गावयवइत्युपादानम् । शॄदॄप्रामिति । न च ऋच्छ-त्यॄतामिति प्राप्तस्य गुणस्य विकल्पेन सिद्धौ ह्रस्वविधानमनर्थकमिति वाच्यम् । वार्णादाङ्गमितियणम्बाधित्वोत्त्वापत्तेस्तदाह । ह्रस्वविधान-स्येत्यादि । स्पष्टार्थमिति । सामर्थ्यादर्थविशेषकल्पनापेक्षया सौत्रनिर्देशे-न तस्यार्थस्य कल्पने स्पष्टप्रतिपत्तिर्भवतीति भावः । कपिञ्जलाधिकरणे-ति । तत्र यथा बहुवचनेन त्रयाणामेव ग्रहणमिति प्रतिपादितन्तद्वत् । नान्यस्तस्यापि पिति । अनन्तरस्येतिन्यायेन लघूपधगुणस्यैवायम्प्रतिषेधः । नन्वत्र पितीति व्यर्थम् । अपिति ङित्त्वादेव गुणाभावस्य सिद्धेरत आ-ह । पितीत्युत्तरार्थमिति । उतो वृद्धिरित्युत्तरसूत्रार्थमित्यर्थः । व्याख्या-नादिति । प्रकृतसूत्रे ङिद्ग्रहणं गाङ्कुटादिभ्य इत्यतोऽनुवर्तते । तस्मि-न्सूत्रे च कुटादिपदेन श्रूयमाणविकरणकस्यैव ग्रहणमिति प्रकृतसूत्रेऽपि श्रूयमाणविकरणकस्य विज्धातोर्ग्रहणमित्येतन्मूलकादित्यर्थः । लोपक-येति । स्वरदीर्घेतिनियमात् । तदुत्तरम् । आदेशनिमित्तककार्योत्तरम् । अत एव । लोकेऽपि प्रयोगादेव । प्रकारान्तरमिति । लावस्थायामडाग-मेऽपि शब्दान्तरप्राप्त्या वृद्धेरनित्यत्वाद्द्वित्वेऽभ्यासकार्ये च कृते वृद्धिरि-ति बोध्यम् । दनूधन्त इति यङ्लुगन्तस्य रूपम् । अनुनासिकस्येति दीर्घ-स्तु न । बहुलग्रहणात् ॥

## इति जुहोत्यादिविवरणम् ।

निरूपितम् । झलादिग्रहणानुवृत्तेः ॥ उत्तरार्था ॥ आतो लोपेतिसूत्रे-ऽनुवृत्त्यर्था । एतेन दीङ इति पञ्चम्या अकृतार्थत्वात्तद्बलेन प्रत्ययान्तस्य पञ्चम्यन्तत्वकल्पनं युक्तमेव ॥ उपदेशोत्तरकालमिति व्याख्यानादात्वस्ये-ण्निमित्तप्रत्ययविषयेऽनुत्पन्न एव प्रत्यये प्रवृत्तिरत एवोपदायेत्यत्र ल्य-प्प्रत्ययः सिध्यति । अन्यथा शावे एत्वं स्यात् ॥ चक्षिङ्ख्यामिति । गि-

स्मत्ययस्य श्यनः श्नोश्चे ञिनमित्तत्याभावादेव व्यावृत्तिः । विभाषा लीय-
तेः । यका निर्देश इति ॥ न च सार्वधातुके यगिति विहितो यक् धात्व-
र्थफले आश्रयान्वयविवक्षायाम्भवति प्रकृते च न तद्द्योत्यार्थसद्भाव इति
कथं यगिति वाच्यम् । सौत्रत्वेन यकः साधुत्वात् ॥ यत्तु विभाषा लिय
इत्येव सूत्रयतान्तावतैव सर्वेषां ग्रहणम्भविष्यति किं सर्वसङ्ग्राहकयङ्नि-
र्देशेनेति मतं तन्न युक्तमित्याशयेनाह । क्र्यादिराधृपीयश्चेति ।
ली श्लेषणे । ली द्रवीकरण इत्युभयत्र निरनुबन्धकपाठात् ॥ एवञ्च
निरनुबन्धकपरिभाषया तयोरेव ग्रहणापत्तिः । लीङ इतिनिर्देशे त्व-
स्यैव ग्रहणापत्तिरिति यका निर्देशेन निरनुबन्धकपरिभाषाया बाधात्सर्वे-
षाङ्ग्रहणं सिध्यतीति भावः । अत्र परस्मैपदीत्येतस्योपादानं
वस्तुस्थितिकथनाय न तु प्रकृते किञ्चिदस्य प्रयोजनम् ॥ अत्र ।
प्रीङ्धातोः सकर्मकत्वे । मानश्चिन्त्यमिति । अनन्यथासिद्धस्य साधकस्या-
लाभात् ॥ न च रुच्यर्थानाम्प्रीयमाण इति निर्देश एव साधक इति वा-
च्यम् । तेन निर्देशेन तत्र धातूनामनेकार्थतया विषयत्वावच्छिन्नप्रीत्यनु-
कूलव्यापारस्य धात्वर्थत्वात् । तस्य निर्देशस्य दर्शनेन मूलकृता सकर्मक
इत्युक्तम् । आधेयत्वावच्छिन्नप्रीत्यनुकूलव्यापारस्य धात्वर्थत्वं सर्वत्र प्री-
यमाण इतिनिर्देशस्तु सौत्र इति प्रकृतग्रन्थाभिप्रायः ॥ पोऽन्तकर्मणि ॥ क-
र्मशब्दोऽत्र क्रियापरः ॥ अत्र पाठे ॥ पतेतिपाठे । श्यनादीनिति । अ-
त्रादिना गापोष्टगिति टकः किच्चस्य सङ्ग्रहः । तेन श्यनः शकारस्यैतः
श्यनीत्यत्र विशेषणार्थतया ज्ञापकत्वासम्भवशङ्का निरस्ता ॥ आद्युदात्ता-
र्थम् । प्रकृतेराद्युदात्तार्थम् । एवञ्च दीव्यत इति पदमाद्युदात्तम्भवति ।
चानशीति ॥ दीव्यमान इत्यत्र ताच्छील्यादिविषये चानशीत्यर्थः । आ-
द्युदात्तार्थमिति । यद्यपि तत्र चित्स्वादन्तोदात्तत्वम्भवति । तथापि तत्रे-
ष्टस्यापि चित्त्वप्रयुक्तस्वरस्य दाधोऽस्त्वित्याशयः । तस्यापि । अन्यत्र चि-
करणेभ्य इत्यस्यापि ॥ तत्सामर्थ्यात् । नित्त्वसामर्थ्यात् । औचिरयादिति ॥

र्धधातुक इति । दीर्घोच्चारणमिति । पॄ इत्यत्र दीर्घोच्चारणमुद्दिष्टपूर्वस्येत्युक्ताय । तत् । अङ्गावयवत्वदुपादानम् । शॄदॄप्रामिति । न च ऋच्छत्यॄतामिति प्राप्तस्य गुणस्य विकल्पेन सिद्धौ ह्रस्वविधानमनर्थकमिति वाच्यम् । वार्णादाङ्गमितिवचनाद्वित्योच्चापन्ने तदाह । ह्रस्वविधानस्येत्यादि । स्पष्टार्थमिति । सामर्थ्यादर्थविशेषकल्पनापेक्षया सौत्रनिर्देशेन तस्यार्थस्य कल्पने स्पष्टप्रतिपत्तिर्भवतीति भावः । कपिञ्जलाधिकरणेति । तत्र यथा बहुवचनेन त्रयाणामेव ग्रहणमिति प्रतिपादितन्तद्वत् । नाभ्यस्तस्याचि पिति । अनन्तरस्येतिन्यायेन लघूपधगुणस्यैवायम्प्रतिषेधः नत्वत्र पितीति व्यर्थम् । अपिति ङित्त्वादेव गुणाभावस्य सिद्धेरत आह । पितीत्युत्तरार्थमिति । उतो वृद्धिरित्युत्तरसूत्रार्थमित्यर्थः । व्याख्यानादिति । प्रकृतसूत्रे ङिद्ग्रहणं गाङ्कुटादिभ्य इत्यतोऽनुवर्तते । तस्मिन्सूत्रे च कुटादिपदेन श्रूयमाणविकरणकस्यैव ग्रहणमिति प्रकृतसूत्रेऽपि श्रूयमाणविकरणकस्य विजुधातोर्ग्रहणमित्येतन्मूलकादित्यर्थः । लोपरूपेति । स्वरदीर्घयतिनियमात् । तदुत्तरम् । आदेशनिमित्तकार्योत्तरम् । अत एव । लोकेऽपि प्रयोगादेव । प्रकारान्तरमिति । लावस्थायामडागमेऽपि शब्दान्तरप्राप्त्या वृद्धेरनित्यत्वाद्द्वित्वेऽभ्यासकार्ये च कृते वृद्धिरिति बोध्यम् । दनूधन्त इति यङ्लुगन्तस्य रूपम् । अनुनासिकस्येति दीर्घस्तु न । बहुलग्रहणात् ॥

## इति जुहोत्यादिविवरणम् ।

निरूपितम् । यलादिग्रहणानुवृत्तेः ॥ उत्तरार्थं ॥ आतो लोपेतिसूत्रेऽनुवृत्त्यर्थं । एतेन दीङ इति पञ्चम्या अकृतार्थत्वात्तद्बलेन प्रकृत्यन्तस्य षष्ठ्यन्तत्वकल्पनं युक्तमेव ॥ उपदेशोत्तरकालमितिव्याख्यानादात्वस्यैतन्निमित्तप्रत्ययविषयेऽनुत्पन्न एव प्रत्यये प्रवृत्तिरत एवोपदायेत्यत्र यप्प्रत्ययः सिध्यति । अन्यथा आये एरच् स्यात् ॥ क्षपञ्जिरत्वमिति । गि-

त्प्रत्ययस्य श्यनः श्नोश्चे त्तिनिमित्तत्वाभावादेव व्यावृत्तिः । विभाषा लीयतेः । यका निर्देश इति ॥ न च सार्वधातुके यगितिविहितो यक् धात्वर्थफले आश्रयान्वयविवक्षायाम्भवति प्रकृते च न तद्द्योत्यार्थसद्भाव इति कथं यगिति वाच्यम् । सौत्रत्वेन यकः साधुत्वात् ॥ यत्तु विभाषा लिय इत्येव सूत्रयतान्तावतैव सर्वेषां ग्रहणम्भविष्यति किं सर्वसङ्ग्राहकयङ्निर्देशेनेति मतं तन्न युक्तमित्याशयेनाह । क्र्यादिराधृपीयश्चेति । ली श्लेषणे । ली द्रवीकरण इत्युभयत्र निरनुबन्धकपाठात् ॥ एवञ्च निरनुबन्धकपरिभाषया तयोरेव ग्रहणापत्तिः । लीङ इतिनिर्देशे त्वस्यैव ग्रहणापत्तिरिति यका निर्देशेन निरनुबन्धकपरिभाषाया बाधात्सर्वेषाङ्ग्रहणं सिध्यतीति भावः । अत्र परस्मैपदीत्येतस्योपादानं वस्तुस्थितिकथनाय न तु प्रकृते किञ्चिदस्य प्रयोजनम् ॥ अत्र । प्रीङ्धातोः सकर्मकत्वे । मानश्चिन्त्यमिति । अनन्यथासिद्धस्य साधकस्यालाभात् ॥ न च रुच्यर्थानाम्प्रीयमाण इति निर्देश एव साधक इति वाच्यम् । तेन निर्देशेन तत्र धातूनामनेकार्थतया विषयत्वावच्छिन्नप्रीत्यनुकूलव्यापारस्य धात्वर्थत्वात् । तस्य निर्देशस्य दर्शनेन मूलकृता सकर्मक इत्युक्तम् । आधेयत्वावच्छिन्नप्रीत्यनुकूलव्यापारस्य धात्वर्थत्वं सर्वत्र प्रीयमाण इतिनिर्देशस्तु सौत्र इति प्रकृतग्रन्थाभिप्रायः ॥ षोऽन्तकर्मणि ॥ कर्मशब्दोऽत्र क्रियापरः ॥ अत्र पाठे ॥ पतेतिपाठे । श्यनादीनिति । अत्रादिना गापोष्टगिति टकः किच्चस्य सङ्ग्रहः । तेन श्यनः शकारस्येतः श्यनीत्यत्र विशेषणार्थतया ज्ञापकत्वासम्भवशङ्का निरस्ता ॥ आद्युदात्तार्थम् । प्रकृतेराद्युदात्तार्थम् । एवञ्च दीव्यत इति पदमाद्युदात्तम्भवति । चानशीति ॥ दीव्यमान इत्यत्र ताच्छील्यादिविषये चानशीत्यर्थः । आद्युदात्तार्थमिति । यद्यपि तत्र चित्त्वादन्तोदात्तत्वम्भवति । तथापि तत्रेष्टस्यापि चित्त्वप्रयुक्तस्वरस्य बाधोऽस्त्वित्याशयः । तस्यापि । अन्यत्र विकरणेभ्य इत्यस्यापि ॥ तत्सामर्थ्यात् । नित्त्वसामर्थ्यात् । औचित्यादिति ॥

एवं सति मध्येऽपवादाः पूर्वान्विधीन्बाधन्त इतिन्यायस्याप्यनुसरणम्भवतीति भावः ॥ धातुस्वरेणासिद्धेः । प्रकृतेरादुदात्तत्वासिद्धेः । तत्सामर्थ्याभावेन । निष्ठसामर्थ्याभावेन ॥ भट्टिप्रयोगस्य तु गतिमाह । भट्टीत्यादि ॥ पृषोदरादित्वादिति । एवञ्च तत्र यस्य विभाषेतीट्प्रतिषेधे कर्त्तव्ये पञ्चमीसमासमाश्रित्य स्थानिवद्भावो न भवति । नियम एवं युक्त इति । एवञ्च समकक्षत्वे लाघवस्य साधकत्वन्तदेव नात्रेति भावः । अत एव । क्नूदस्य पूतीभावपदार्थत्वादेव ॥ मूले कथं युध्यतीति । युध्धातोरनुदात्तेत्त्वात्परस्मैपदानुपपत्तिरिति भावः । एतद्भाष्येति ॥ व्यत्ययेन परस्मैपदप्रतिपादनपरभाष्येत्यर्थः। अनित्यमपीति। अपिना युधमिच्छतीति मूलोक्तप्रकारपरिग्रहः। इच्छार्थस्य नियमेनास्मात्प्रतीतिरित्यत्र मानाभावोऽपि बोध्यः ॥ न विरोधइति । एतन्तत्वन्तत्रैव निरूपयिष्यते।समार्थ्यर्थे तु अकर्मक एव। राधोऽकर्मकाद् वृद्धौ॥अन्तर्गणसूत्रमेतत् । अत्र य एवकारस्तस्यान्यत्र सम्बन्धे बीजमाह । एवकारादिति । अत एव । एवकारस्य भिन्नक्रमत्वादेव ॥ इति सार्थकमिति । एवकारस्य भिन्नक्रमत्वाभावे राधो वृद्धाविवेत्युक्तेऽपि वृद्धिप्रतिपादकस्याकर्मकत्वाव्यभिचारादकर्मकादिति व्यर्थं स्यादिति । अन्ये पुषादय इति ॥ न च पुषादिषु श्लिषपाठवैयर्थ्यमिति वाच्यम् । समश्लिषज्जतु काष्ठमित्यत्र प्रत्यासत्त्यर्थकत्वे तस्य चारितार्थ्यात्। वक्ष्यमाणनियमेति। आलिङ्गनइतिविभक्तसूत्रसिद्धनियम इत्यर्थः। परस्यान्नुमि ॥ कित्त्वापेक्षया परत्वान्नुमि । अकित्त्वादिति संयोगात्परत्वादिति भावः । मूलकारोक्तरीत्याह । नशा प्रापितेति ॥ नश्याशब्दान्नष्टरप्रापितेति पूर्वोक्तसिद्धान्तिमतेनाह । द्रुह्रोऽस्यैकर्मेवेति ॥ तस्य । युकः ॥ एवञ्च । दिवादिपाठस्य श्यनर्थत्वे च । पठितुं युक्तः । अन्योऽन्यथासिद्धेः ॥ अत्र । दिवादौ ॥

## इति दिवादिविवरणम् ॥

सुरासन्धानमिति समस्तपाठः । तदाह । सुरेति । अभिसुसूरिति । अभिपूर्वकात्सुनोतेः सनि सुनोतेरित्यनेन षत्वनिषेधेऽज्झनेति दीर्घरूपम्। अतश्च संयोगादेरितिसूत्रे लिङ्सिचोरितिसमुदायस्यानुवृत्तिपक्षे सिज्विषयेऽसंभवमाशङ्कते । न चेति । अत एव । पूर्वोक्तज्ञापकादेव । यथेतिनिपातनस्य नियमार्थत्वमुपपादयति । क्रादिनिषेधादेवेति । स्थानिवत्त्वात् । सर्वे सर्वपदादेशा इतिन्यायेन स्थानिवत्त्वात् । बहिरङ्गपरिभाषा त्विति । इदन्धातूपसर्गयोः कार्यस्यान्तरङ्गत्वमभ्युपेत्य तस्याः प्रवृत्तिस्वीकारेणान्तरङ्गे णत्वप्रतिषेधे कर्तव्ये बहिरङ्गस्य गुणस्यासिद्धत्वादेव सिद्धे स्थानिवद्भावस्यात्र नोपयोग इति कस्य चिच्छङ्कानिवारणायोक्तम् । पूर्वंधातुः साधनेन युज्यत इति सिद्धान्तिसम्मतेऽर्थे तु तस्याः प्राप्तिरेव नास्तीति बोध्यम् । षणिति । अस्य नेत्यत्र संबन्धः । विश्व्यचिश्न्यत्युवङ् । राधो हिंसायाम् । अत्रात इत्यवश्यमनुवर्तनीयमन्यथाऽलोऽन्त्यस्येत्यन्त्यस्य स्यात्तच्च तपरत्वबोध्यार्थस्यासत्त्वात्कथमत्र प्रवृत्तिरत आह । अत इत्यादि । अत इत्यस्य प्रकृतसूत्रे असम्बन्धेऽप्याह । श्राभ्यस्तयोरिति । भाष्यस्वरस इति । तत्र हि तासाद्यभ्यप्रतिषेधे घसेः प्रतिषेधप्रसङ्गोऽकारवत्त्वात् । सिद्धन्तु हलादिग्रहणात् । हलादिग्रहणं कर्तव्यम् । तच्चावश्यं कर्तव्यम् । अत्वशी प्रयोजयतः । अत्वशी तावन्न प्रयोजयतः । तासायनिट इत्युच्यते सेटौ चेमौ तासौ । अञ्श्रशू तर्हि प्रयोजयतः । तासौ नित्यानिट इत्युच्यते विभाषितेटावेतौ । एतस्य भाष्यस्य चल्प्रसङ्गेन प्रसक्तस्य यस्माच्चलः सम्भवस्तत्रैव प्रवृत्तिर्बोध्या तेनास्य परस्मैपदसम्बन्धित्वमपीति ध्वनितमिति कल्प्यते । आत्मनेपदित्वन्तु अनुदात्तत्वादेव सिद्धम् । दम्भु दम्भने । दम्भो नाम लोकानुरञ्जनार्थं कर्मानुष्ठानम् । व्याकरणान्तरीयवचनस्येह व्याकरणे प्रवृत्तौ मानमाह । सदेः परस्येत्यादि । दम्भ इत्यस्य सूत्रस्थत्वभ्रमं वारयति । दम्भेश्चेत्यत एवेतीति । पिदपिद्विषयकमित्यादिनो मतेऽस्यापूर्वत्वमेव या-

एवं सति मध्येऽपवादाः पूर्वान्विधीन्बाधन्त इतिन्यायस्याप्यनुसरणम्भवतीति भावः ॥ धातुस्वरेणासिद्धेः । प्रकृतेराद्युदात्तत्वासिद्धेः । तत्सामर्थ्याभावेन । नित्त्वसामर्थ्याभावेन ॥ भट्टिप्रयोगस्य तु गतिमाह । भट्टीत्यादि ॥ पृषोदरादित्वादिति । एवञ्च तत्र यस्य विभाषेतीट्प्रतिषेधे कर्त्तव्ये पञ्चमीसमासमाश्रित्य स्थानिवद्भावो न भवति । नियम एवं युक्त इति । एवञ्च समकक्षत्वे लाघवस्य साधकत्वन्तदेव नात्रेति भावः । अत एव । क्नोदस्य पूतीभावपदार्थत्वादेव ॥ मूले कथं युध्यतीति । युध्धातोरनुदात्तेत्त्वात्परस्मैपदानुपपत्तिरिति भावः । एतद्भाष्येति ॥ व्यत्ययेन परस्मैपदप्रतिपादनपरभाष्येत्यर्थः। अनित्यमपीति। अपिना युधमिच्छतीति मूलोक्तप्रकारपरिग्रहः। इच्छार्थस्य नियमेनास्मात्प्रतीतिरित्यत्र मानाभावोऽपि बोध्यः ॥ न विरोधइति । एतत्तत्त्वन्तत्रैव निरूपयिष्यते।समार्थ्यर्थे तु अकर्मक एव॥ राधोऽकर्मकाद् वृद्धौ॥अन्तर्गणसूत्रमेतत् । अत्र य एवकारस्तस्यान्यत्र सम्बन्धे बीजमाह । एवकारादिति । अत एव । एवकारस्य भिन्नक्रमत्वादेव ॥ इति सार्थकमिति । एवकारस्य भिन्नक्रमत्वाभावे राधो वृद्धावेवेत्युक्तेऽपि वृद्धिप्रतिपादकस्याकर्मकत्वाव्यभिचारादकर्मकादिति व्यर्थं स्यादिति । अन्ये पुषादय इति ॥ न च पुषादिषु श्लिषः पाठवैयर्थ्यमिति वाच्यम् । समश्लिषञ्जतु काष्ठमित्यत्र प्रत्यासत्त्यर्थकत्वे तस्य चारितार्थ्यात्। वक्ष्यमाणनियमेति। आलिङ्गनइतिविभक्तसूत्रसिद्धनियम इत्यर्थः। परत्वाल्लुमि ॥ कित्त्वापेक्षया परत्वाल्लुमि । अकित्त्वादिति संयोगात्परत्वादिति भावः । मूलकारोक्तरीत्याह । नशा मापितेति ॥ नशधातुशब्दान्यतरमापितेति पूर्वोक्तसिद्धान्तिमतेनाह । दुद्रोहिथेत्येकमेवेति ॥ तस्य । धुकः ॥ एवञ्च । दिवादिपाठस्य श्यनर्थत्वे च । पठितुं मुक्तः । अङोऽन्यथासिद्धेः ॥ अत्र । दिवादौ ॥

इति दिवादिविवरणम् ॥

न्तुदादावस्य क्ष चित्पाठस्यावश्यकत्वम् । तत्र कुटादिबहिर्भावेन तेषु वा पाठे न लाघवगौरवविचार इत्यरुचिबीजम्॥ भ्वादौपाठे तु शप्श्यनोरिति-सूत्रविषयता स्यात् ।अत एवाह । अशोकेति ॥ मृङ् प्राणत्यागे । अस्य धातो-र्ङित्वादात्मनेपदे सिद्धे म्रियतेरितिसूत्रन्नियमार्थम् । स चात्मनेपदसा-मान्यस्य न तु तङ एवेत्याशयेनाह ॥ तङित्यानस्येति॥ ननु म्रियतेरिति-सूत्रस्य विध्यर्थत्वमेवास्तु धातोर्ङित्त्वम्मास्त्वितो मूले स्वरार्थमिति ॥ मा हि मृतेत्यत्र ङितः परत्वेन लसार्वधातुकानुदात्तत्वे धातोरुदात्तत्वस्य श्र-वणम्भवति । न च सिज्लोपस्य स्वरे कर्त्तव्येऽसिद्धत्वापत्तिरिति वाच्य-म् । अस्य ङित्त्वसामर्थ्येनासिद्धत्वस्य बाधादित्याहुः ॥ रिपि गतौ ॥ रि-यति । लघूपधगुणादन्तरङ्गत्वादियङ् । तस्याः नाजानन्तर्यपरिभाषायाः । व्याख्यानादिति । अचि विभाषा । णावुपसंख्यानम् । इहापि यथा स्या-त् निगार्यते । निगाल्यते । इत्युक्त्वा णिलोपे कृतेऽच्परत्वाभावादन्यथा न स्यादित्युक्त्वाऽचः परस्मिन्निति स्थानिद्वावमाशंक्य पूर्वत्रासिद्धे न स्थानि-वदितिवचनोऽस्मरभाष्ये पठितम् । गिरतेर्लत्वे णावुक्तम् । किमुक्तम् । तस्य दोषः संयोगादिलोपलत्वणत्वेष्विति । अत्र गिरतेरितिकथनेनास्य ग्र-हणमिति स्पष्टमेवेत्येतन्मूलकव्याख्यानादित्यर्थः ॥ अत एव । धातोः का-र्यमितिपरिभाषयोपस्थितस्य विशेष्यत्वादेव । एतत्फलम् । अन्त्यात्पूर्व इत्यस्य फलम् । विशेषः । पूर्वोक्तप्रक्रियातो विशेषः ॥ इति पठ्यत इति । तस्य धातुस्वरूपप्रतिपादने तात्पर्यमिति शेष । न तु लृदित्त्वाभावे त-था सत्यङभावापत्तिः स्यात् । पिष क्षरणे । क्ष चित्त्वयमिरित्पठित. । सो-ऽपपाठ. । लिपिषिचिह्वश्चेतिनित्यमङ्विधानात् ॥

## ॥ इति तुदादिविवरणम् ॥

रुधादिभ्यः श्नम् । अस्य मित्त्वेपि प्रत्ययाधिकारपाठात्प्रत्ययत्वमप्यत एव शसेरत्वम् । शाकारोच्चारणन्तु श्नान्नलोप इत्यत्र विशेषणार्थम् । तेन

च्यम् । एवञ्च लिट्पदङ्कित्पदञ्चापूर्यङ्कार्यमित्याह । अत्रेत्यादि । अत एव । अस्य वचनस्याकिद्विषयकत्वादेव । अत्रत्यः । स्वादिषु पठितः । सेट्कः। तृप्यतिदृप्यतीति तत्र पाठात् । गणसूत्रमिति । तस्याधिकारत्वे गणे पठिता ये धातवस्तेषां छान्दसत्वमेवेति सिद्धम् ॥

## इति स्वादिविवरणम्।

दिश अतिसर्जने। अयं केवलो दाने प्रयुज्यते। उपसर्गवशेन त्वर्थान्तरेऽप्यस्य प्रयोगः।अत एव तस्मिन्निति निर्दिष्ट इति सूत्रव्याख्यानावसरे निःशब्दो नैरन्तर्यवचनः । दिशिरुच्चारणक्रिय इति व्याख्यानं सङ्गच्छते । ननु त्रसृजो रोपधयोरमन्यतरस्यामितिसूत्रे रोपधयोरितिषष्ठीनिर्देशाद्भ्रस्जेः सम्बन्धिनो रेफस्य निवृत्तिस्वीकारे बरीभृज्जरत इत्यत्र रीको रेफस्य निवृत्त्यापत्तिरत आह । वरीत्यादि । नैरर्थक्यमिति । त्रसृज इति रोपधयोरर्थविशिष्ट एव विशेषणम् । उत्करीत्येति । अनर्थकत्वरूपयोक्त्या । रम आगमत्वेऽपि यथाऽस्य प्रसङ्गेन रोपधयोर्निवृत्तिस्तथार्थमाह । रोपधयोः स्थान इति । सुवचमिति । एवञ्च पूर्वविप्रतिषेधो न स्वीकार्य इति भावः । अवधारण इति । एवञ्चायं कुटादित्वातिदेशः कृत्संज्ञकप्रत्ययपरत्व एवेति सिद्धम् । प्रश्नपेणेति । ऋच्छति ऋ ऋतामृच्छत्यृतामिति प्रश्नपेणेत्यर्थः। अत एव । ऋकारमप्रश्लेषादेव ॥ तृपतृम्फ ॥ आद्यः । तृपधातुः । अनयोः । तुदादिपठिततृपदृपधात्वोः ॥ वृण च । अयमपि धातुः प्रीणने द्रष्टव्यः ॥ अस्य तुदादौ पाठे भाष्यविरोधाशङ्कां वारयितुमुपक्रमते ॥ यच्चिति ॥ व्याख्यानादिति । यद्यपि करोतेः कुर इति स्वरूपं लाक्षणिकन्तथापि विदांकुर्वन्त्वित्यन्यतरस्यामितिलक्ष्यदर्शनमूलकव्याख्यानान्तरेण ग्रहणमिति भावः ॥ प्रामादिकमेवेति । अस्य कुटादिप्रविष्टत्वेन ततो जातस्य तुमुनो ङित्त्वाभावेन निषेधाप्रात्तेः ॥ अनिगूलक्षण-

यः सम्बन्धः समूहयेति । सुट् कात्पूर्वः । आद्यम् । सुट् कादिति । अन्त्यम् । अड्भ्यासव्यवायेऽपीत्येतत् । अनर्थकत्वेन । परभागसमभिव्याहारप्रतिबद्धार्थबोधकत्वशक्तिमत्त्वेन । एतच्च प्रागुपपादितमेव । विकरणान्तभक्ततया । अड्साड्विधानादद् समुदायभक्तः । एवञ्च वार्त्तिकरीत्या प्रत्ययनिमित्तकद्वित्वाद्युत्तरं सुटः प्रवृत्तिः । वार्त्तिकप्रत्याख्यानप्रकारमाह । भाष्यकृता त्विति । तदर्थेन । उपसर्गार्थेन । उपसर्गद्योत्यार्थान्तर्भाव-तत्प्रतिपादकता । धातोः।प्रत्ययोत्पत्तेः प्रागेव धातोः स्वीक्रियते। अत एव । धातोरुपसर्गद्योत्यार्थे वृत्तिस्वीकारादेव । ननु लावस्थायामडितिपक्षे सुट् कात्पूर्व एव यथा स्यादित्येवमर्थं कात्पूर्वग्रहणं कार्यमेवेत्यत आह । लावस्थेत्यादि । उत्तरखण्ड एवेति । एतेन प्रघट्टकेन यदि द्वित्वादितः पूर्वं सुट् तदा गुणस्य ऋतश्चेतिविहितस्य प्रवृत्तिदुरुपपादेत्युक्तम्भवति । न चेति । तद्दुर्वारमित्यत्रास्यान्वयः । आनुपूर्वीमात्रावच्छिन्नेति । न च हलादिः शेष इत्यादिशास्त्रस्य प्राक् प्रवृत्तौ न सानुपूर्व्यस्तीति वाच्यम् तस्याङ्गाधिकारे पाठेनाङ्गसंज्ञाया एव प्राक्प्रवृत्तेः।अत एव।प्रत्ययोत्पत्तिवेलायामित्यर्थाश्रयणादेव । तस्य नित्यग्रहणस्य । विधेयविशेषणत्वादिति । उक्तदितिसूत्रानन्तरस्य।ठेन । विधेयस्य ऋकारादेशस्य विशेषणत्वादित्यर्थः। अत एव । नित्यग्रहणासम्बन्धादेव । एतेन । प्रत्येकं संयोगसंज्ञापक्षे संहृपीष्टेत्यत्रेडापादनपरभाष्यप्रामाण्येन । प्रतिषेधवचनारम्भ एवेति । असुट इति तत्र तत्र वक्तव्यमिति भावः ॥

## ॥ इति तनादिविवरणम् ॥

मूले विष्टभ्नोतीति । स्तन्भेरिति षत्वम् । अवष्टभ्नोतीति ।अवाच्चालम्बनेति । विष्कभ्नोतीति । ननु वेः स्कभ्नातेर्नित्यमितिसूत्रे श्नाप्रत्ययनिर्देशाद्यदा श्नाप्रत्ययस्तदैव षत्वं न्याय्यमिति कथं श्नुप्रत्ययपक्षे षत्वमि-

यत्रानामित्यत्र न दोषः ॥ न च शः श्रवणार्थ एवास्तु । तृणह इतिनिर्देशात् । न च श्नमः प्रत्ययत्वे भनक्तीत्यत्र दीर्घोपधत्वेरिति बाध्यम् । यस्मात्प्रत्ययविधिरित्यस्य यद्रूपावच्छिन्नमुद्दिश्य प्रत्ययविधिरित्यर्थात् । स च धर्मो रुधेत्याद्यानुपूर्वीरूपस्तदाश्रयत्वन्नावयवानाम् । समुदायस्याप्यत्र नाङ्गत्वन्तत्प्रत्ययपरत्वाभावात् । शब्भ्यो न सत्यपि सम्भवे बाधनमिति न्यायेन श्नमो बाधकत्वात् । रुधादिभ्यो धातुभ्योऽन्त्यादचः परः श्नम् प्रत्ययो भवतीति वाक्यार्थो बोध्यः ॥ननु शिण्डिशब्दव्युत्पादनावसरे जश्त्वं ष्टुत्वमित्युक्तमयुक्तम् । ष्टुत्वदृष्ट्या जश्त्वस्यासिद्धत्वादत आह । अत्र प्रक्रियेति । भाष्योक्तसिद्धान्तानुसारेणाह । शिण्ढीति सानुस्वार इति । तृणह इम् । मूले एतत्सूत्रव्याख्यानावसरे तृहः श्नमि कृत इति यदुक्तन्तत्फलमाह । श्नमि कृत इत्यादिना । येन नाप्राप्तिन्यायेनेति । श्नमि कृतेऽपि तन्मध्यपतितन्यायेन श्नमृविशिष्टस्य तृहग्रहणेन ग्रहणं स्यादिति येन नाप्राप्तिन्यायस्येह सम्भवः ॥

## ॥ इति रुधादिविवरणम् ॥

तनादिभ्यस्तथासोरित्यत्र साहचर्याश्रयणेनैकवचनस्य ग्रहणे सति यत्फलं सिद्धान्तमूले उक्तमत निष्टं । अतानिष्टेति । अतो हलादेरिति या वृद्धिः । ननु क्षिणित्वस्यौतश्चेतिसूत्रे कैयटोक्तस्य का गतिरत आह । क्षिणित्यादीति । भाषायामपीत्येक इति । अस्य एयन्तग्रहणव्याख्यानावसरे मूल एवोक्तमिति शेषः । नित्यद्भरोतेः । आरम्भसामर्थ्यान्नित्यत्वे लब्धे नित्यग्रहणं स्पष्टार्थम् । सम्परिभ्याम् । तदावश्यकतेति । चकारस्यावश्यकतेत्यर्थः । के चित्त्विति । अत उत्सार्वधातुक इतिसूत्रभाष्ये सम्परिभ्याम्भूषणसमवाययोरितिपाठानुसारिण इत्यर्थः । न च भाष्यरीतिस्वीकारे यथासङ्ख्यापत्तिरिति वाच्यम् । संस्कृतमन्ना इतिनिर्देशेन तस्य हाभाश्रयणात् । समवायशब्दस्य सम्बन्धमात्रपरतया प्रकृते सुट् सुलभः । अत एवोक्तं समवा-

त्राणमेतदित्यभिप्रायेणाह । हरदत्तानुरोधेनेति । तन्मते दोषान्तरमप्याह । अगृहीष्टामित्यादाविति । न चाडागमस्य बहिरङ्गत्वेनासिद्धत्वादेकाधो विधानमस्त्वेवेति वाच्यम् । नाजानन्तर्यपरिभाषायास्तन्मते सत्त्वेन तया निषेधात् । बहिरङ्गपरिभाषायाऽनित्यत्वाच्चेति ॥

## ॥ इति क्र्यादिविवरणम् ॥

स्वार्थे विधानार्थमिति । अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति स्वार्थविधानार्थमित्यर्थः । सत्यस्य कृञ्यापुक् । सत्यशब्दस्य कृञर्थे णिचि आपुगित्यर्थः । एतेन । लक्षयतेः स्वरितत्वस्यानार्थक्येन । किन्तु न । इदित्त्वेन । तच्चरितार्थमिति । इदित्त्वञ्चरितार्थमित्यर्थः । क्षिशब्दमुच्चार्यविशिष्टेति । लक्षणप्रतिपदोक्तपरिभाषयेति भावः । भाष्यानुक्तत्वादिति । णिचः पाक्षिकत्वस्येत्यादिः । चुरादित्वापेक्षमिति । चुरादिभ्यो णिज्विकल्पक इत्यर्थे एतज्ज्ञापकमित्यर्थः । एतन्मते आधृषाद्वेतिज्ञापकसिद्धस्यासार्वत्रिकत्वबोधनाय । आधृषीयाणामेव सर्वत्र विकल्पोऽन्येषान्तु लक्ष्यानुरोधेनेति बोधनाय चेति भावः । गणयतेरनेकाच्त्वेऽप्यामोऽभावायाह । मन्तत्वादिति । अनित्यत्ववादिमतं व्याख्याय स्वयमाह । नित्यण्यन्तत्वेपीति । न बाधिकेति । आमोऽभावस्य तेनैवोपपादनादिति भावः । अत एव । सामान्यापेक्षज्ञापकाभावादेव । ऋकारान्तत्वप्रयुक्तकार्येति । ऋच्छत्यृतामितिगुणात्मककार्यं ऋतश्चेतिसूत्रविहितरुगभावात्मककार्यविशिष्टग्रहणमित्यर्थः । ननु ङित्त्वाच्छिवियकल्प इत्येव कुतो नोक्तमत आह । भिदादाविति । उक्तन्यायस्य । अवयवेऽचरितार्थस्य समुदायोपकारकत्वमितिन्यायस्येत्यर्थः । उक्तरूपेति । अदनीयवस्तुनो भोजनार्थम्भोजनपात्रे निःक्षेपरूपा इत्यर्थः । भुज्यर्थयमधातोरिति । यमोऽपरिवेषण इत्युक्तत्वादस्मिन्नर्थे तस्य निषेधस्याप्रवृत्तेः । एवञ्च तस्यार्थस्य ग्रहणे यम् चेत्यनेन चुरादिरूपन्ने णिच्विधानं व्यर्थं स्यात् । मित्त्वं स्यात् । यम् चे-

ति चेन्न । धातुनिर्द्देशे श्तिप्प्रत्यये कृते विकरणस्यावश्यकतया श्नप-वादयोः श्नुश्नाप्रत्यययोः प्रवृत्तिरवश्यं स्वीकार्या तत्रान्यतरोच्चारणं साधुत्वार्थमेव न त्वितरव्यावृत्त्यर्थमिति स्वीकारात् । दॄ विदारणे ।अयं दिवादिरपि प्रागुक्तः । दीर्यतेर्दृणातेर्वा दद्रृदिति भाष्यात् । ह्वलः । तेन । अङ्गस्येत्यस्यावृत्तया हल्विशेषणत्वेन । आवृत्तया सम्प्रसारणं विशेष्यतयाऽङ्गस्योपादानन्तु विध्यतीत्यादौ दीर्घाभावाय। क्षीष् हिंसायाम् । पित्वमस्याङर्थम् । तेन क्षिया इत्यस्य सिद्धिः । क्षिया धर्मव्यतिक्रमरूपा । धातूनामनेकार्थतया धर्मव्यतिक्रमेऽप्यस्य प्रवृत्तिः । दीर्घनिर्द्देशेतीति । जा इतिदीर्घनिर्द्देशेत्यर्थः । अत्र सामान्यतो दीर्घनिर्द्देशसामर्थ्यादित्येयोक्तन्नेनाङ्गवृत्तपरिभाषाभावो ध्वनितस्तदाह । अङ्गवृत्तेति । मतेनेदमिति । सिज्लोपस्यासिद्धत्वादितिकथनमित्यर्थः । न सिद्धेति । वतिघटितानामतिदेशानां त्रिपाद्यामपि प्रवृत्तिरिति प्रागुपपादितम् । इष आभीक्ष्ण्ये । बहुव्रीहिरिति ।इयन्प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहुव्रीहिरित्यर्थः।इडित्यनुवृत्तस्य । आर्द्धधातुकेतिसूत्रादिडित्यनुवृत्तस्य । प्रथमा तु पूर्वसूत्रे चरितार्था । विहितस्येति किम् । ग्राहिता । णिजन्तान्तृच् । न चात्राचः परस्मिन्निति स्थानिवत्त्वम् । अपूर्वविधित्वात् । पञ्चमीसमासेऽपि दीर्घविधिम्प्रति न स्थानिवदितिप्रतिषेध इत्यभिप्रायः । न पदान्तसूत्रभाष्ये वरे यलोपस्वरवर्जमिति भाष्यन्दीर्घस्याप्युपलक्षणम्। विहितविशेषणादेव जरीग्रहिता । जरीग्रहितुम् । जरीगृहितव्यमित्यत्र यङन्ते न दीर्घः । आर्द्धधातुकस्येड्वलादेरितिसूत्रादिटोऽनुवृत्तेर्नादर्धाधिकारान्तस्यैवेटोऽनेन दीर्घ इति विषवदिटो नानेन दीर्घः। तेन ग्राहिता । ग्राहिष्यत इत्यस्य सिद्धिः । यत्तु मूले एकाचो ग्रहेरितिव्याख्यानन्तत्रैकाजिति न प्रकृतत्रापि यान्ति करुताअत्रैकाज्ग्रहणद्रूत व्यामित्युक्तत्रयापि इदद्दानुरोधेनोक्तस्जाग्रहिता जाग्रहिष्यतीत्यत्र यङ्लुगन्ते दीर्घाप्रयुसिद्धैकाच इत्यस्य फलमित्यपि वक्तुं शक्यम् । परन्तु भाष्यानुक्तत्वादप्र-

भाव्यादिप्रकारकज्ञानानुकूलव्यापाररूपम् । नाम्नो वेत्यंशमिति । नामत्वमस्य नाव्युत्पन्नत्वेन । किन्तु कुशब्दपूर्वकस्यगतेरन्ये भ्योऽपीति डमत्यये कुगतीतिसमासे बोध्यम् । धात्वर्थ इत्यस्य लाभस्तु प्रातिपदिकाद्धात्वर्थे बहुलमित्यस्य व्यापारसत्त्वात् । क्यङा बाधाभावायेति । अन्यथा शब्दवैरकलहेत्यत्र शब्दशब्दस्य विशिष्योपादानात्क्यङा णिचो बाधः स्यादिति भावः । इन्त्यर्थाश्चेति विहितो णिज्वैकल्पिक इत्यत्रार्थे मानमाह । तेषान्ततत्रुण इति । एवं रुपेरपीति । रुपेश्चेत्यनेन स्वार्थेऽत्र णिज्विधानात्रुपधातोर्भ्वादौ पाठसामर्थ्यात्सिध्यिरूरुप इत्यर्थः। एतत्सामर्थ्यादिति।हन्त्यर्थाश्चेत्यस्य सामर्थ्यादित्यर्थः। यदि नियमप्रेषणादिति सार्वत्रिकं स्यात्तदा हन्तर्थेन्योऽपि धातुभ्यो नियतप्रेषणेभ्यो हेतुमत्स्वार्थे णिचि योऽर्थस्तस्य लाभे हन्त्यर्थाश्चेति स्वार्थे णिज्विधायकं वचनं व्यर्थं स्यादिति भावः। घुषिरविशब्दने । विशब्दनेऽर्थे घुषिरिति धातुश्चुरादौ द्रष्टव्यः । मूले निषेधाद्विङ्गादिति । अस्माणिचो नित्यत्वेऽस्मात्परा निष्ठा नास्तीति स प्रतिषेधो व्यर्थः स्यात्। न च भ्वादिपठितायदा निष्ठा तदा तद्वयावृत्त्यर्थमस्तु । घुषिरविशब्दने इत्युक्तत्वेन भ्वादेर्विशब्दने वृत्त्यभावात् । न च चुरादिण्यन्तात्क्विपि णिलोपे तत आचारे क्विपि निष्ठायां सम्भवोऽस्तीति वाच्यम्। हलन्तेभ्य आचारे क्विपोऽभावात्। णिलोपस्य स्थानिवत्त्वाच्च । द्वौ लुमनिति न सार्वत्रिकम् । एवमिदित्करणमपि णिचः पाक्षिकत्वे ज्ञापकं बोध्यम् । अस्य चेति। चुरादिपठितस्वदधातोः। अस्य । अर्थधातोः। एवमन्येषामपि परस्मैपदिनामिति । यथा तपधातोर्यदधातोश्च भ्वादौ पाठोऽनावश्यकः । आधृषीयत्वेन णिजभावे समीहितरूपसिद्धेः । परस्मैपदिनामित्युपादानमात्मनेपदीयः । पदधातुस्तद्वारायत्यये णिजभावेऽप्यात्मनेपदार्थमस्य भ्वादौ पाठस्यावश्यकत्वात्। अन्येषामपीतिवद्दुपचनमप्रयोगभेदेन । बोध्यः । अनावश्यकत्वेन बोध्यः । ली द्रवीकरणे । लापयति । णिचि वृद्धिः । इति भाष्यादिति । वस्तुतो

त्यनेनेत्यादिः । वेष्टनापि गृह्यत इति । एवञ्चापरिवेषणे स निषेधः वेष्टना तु परिवेषणमेवेति तस्य निषेधस्यायमविषय इति बोध्यम्। ननु घटादिपठितवचने परिवेषणशब्देन वेष्टनस्यापि ग्रहणे तस्य निषेधस्याप्रवृत्तावमन्तत्वेन सिद्धे यम चेत्यस्य वैयर्थ्यमत आह । घटादिपठितेति । तस्य । घटादिपठितवचनस्य । हेतुमण्णावेवेति । पूर्वोत्तरसाहचर्यात् । फलाभावादिति । यदि वेष्टनस्य परिवेषणशब्देन ग्रहणङ्कृत्वा निषेधाविषयत्वं सम्पाद्यते तदा वैयर्थ्यं वेष्टनरूपेऽर्थे स्वार्थे णिचः सत्त्वेन तस्य वचनस्याप्रवृत्तेरित्यर्थः । अत्र सूत्रे । चुरादिपठिते यम चेतिसूत्रे । अर्थत्रयेति । वेष्टनभोजनावेष्टनारूपार्थत्रयेत्यर्थः । नन्वत्रार्थत्रयग्रहणे परिवेषणे मित्त्वाप्यनुज्ञासूचकं यद् घटादिपठितवचनेऽपरिवेषण इति तद्वैयर्थ्यमनेन मित्त्वसिद्धेरत आह । घटादिपठित इति । ततः । स्वार्थणिजन्तात् । एकणिज्ज्ञानेन । यमयतीत्यत्रैकणिज्ज्ञानेन । प्रतिपदोक्तत्वात् । साक्षाच्चुरादित्वसिद्धणिशब्दानुवादेन विहितत्वात् । अत एव । चुरादिणिच एवात्र ग्रहणादेव । ञित्त्वं व्यर्थमिति । आत्मनेपदस्यणिचश्चत्येवसिद्धेः । ननु चिशब्देन सामान्यग्रहणार्थं ञित्त्वमस्त्वित्यत आह । सामान्येति । नास्त्यमिति । तत्रासामर्थ्यस्योक्तत्वात् । स्वादिपठितचेरपि चिस्फुरोरित्यनेनात्वमित्यभिप्रायेणाह । परे त्विति । उभयोः । हेतुमच्चिस्वादिपठितचिञ्धात्वोः । ईदृशरीत्या । चिञ्धातोश्चुरादित्वान्ततो णिजिप्रधानेन प्रतिपदोक्तत्वमितिरीत्या । णिशब्देन णिसामान्यग्रहणे लाघवमपीत्याह । उत्तरत्रेति । म्लेच्छ अव्यक्ते शब्दे । अव्यक्तायागपशब्दरूपा । गुर्द पूर्व निकेतने । गुर्दपूर्वेति द्वौ धातू । अन्ये तु गुर्दत्येक एव । पूर्वनिकेतनमित्यस्य पूर्वनिवास इत्यर्थ इत्याहुः । अकर्त्रगेतीति । परगामि क्रियाफले परस्मैपदप्रापणार्थमित्यर्थः । णिश्रयोगेनैवेति । अत एव दंशिप्रभृतिभ्य इदित्वाणिजभावपक्षे दंशतीत्यत्रात्मनेपदम् । भल आभण्डने । आभण्डनमत्रलक्षणस्वरूपमा-

भावयादिप्रकारकज्ञानानुकूलव्यापाररूपम् । नाम्नो वेत्यशमिति । नामत्वमस्य नाव्युत्पन्नत्वेन । किन्तु कुशब्दपूर्वकस्मयतेरन्येभ्योऽपीति डप्रत्यये कुगतीतिसमासे बोध्यम् । धात्वर्थं इत्यस्य लाभस्तु प्रातिपदिकाद्धात्वर्थे बहुलमित्यस्य व्यापारसत्वात् । क्यङा बाधाभावायेति । अन्यथा शब्दवैरकलहेत्यत्र शब्दशब्दस्य विशिष्योपादानात्क्यङा णिचो बाधः स्यादिति भावः । हन्त्यर्थाश्चेति विहितो णिज्वैकल्पिक इत्यत्रार्थे मानमाह । तेषान्तद्ग्रहण इति । एव कृपेरपीति । कृपेश्चेत्यनेन स्वार्थेऽत्र णिज्विधानात्कृपधातोर्भ्वादौ पाठसामर्थ्याण्णिज्विकल्प इत्यर्थः । एतत्सामर्थ्यादिति। हन्त्यर्थाश्चेत्यस्य सामर्थ्यादित्यर्थः । यदि निवृत्तप्रेषणादिति सार्वत्रिकः स्यात्तदा हन्त्यर्थेभ्योऽपि धातुभ्यो निवृत्तप्रेषणेभ्यो हेतुमत्यैव स्वार्थे णिचि योऽर्थस्तस्य लाभे हन्त्यर्थाश्चेति स्वार्थे णिज्विधायकं वचनं व्यर्थं स्यादिति भावः । घुषिरविशब्दने । विशब्दनेऽर्थे घुषिरिति धातुश्चुरादौ द्रष्टव्यः । मूले निषेधाल्लिङ्गादिति । अस्माण्णिचो नित्यत्वेऽस्मात्परा निष्ठा नास्तीति स प्रतिषेधो व्यर्थः स्यात् । न च भ्वादिपठिताद्यदा निष्ठा तदा तद्व्यावृत्त्यर्थं तदस्तु । घुषिरविशब्दने इत्युक्तत्वेन भ्वादेर्विशब्दने वृत्त्यभावात् । न च चुरादिण्यन्तात्क्विपि णिलोपे तत आचारे क्विपि निष्ठायाः सम्भवोऽस्तीति वाच्यम् । हलन्तेभ्य आचारे क्विपोऽभावात् । णिलोपस्य स्थानिवत्वाच्च । ह्री लुसमिति न सार्वत्रिकम् । एवमिदित्करणमपि णिचः पाक्षिकत्वे ज्ञापकं बोध्यम् । अस्य चेति । चुरादिपठितस्वदधातोः । अस्य । अर्थधातोः । एवमन्येषामपि परस्मैपदिनामिति । यथा तपधातोर्वदधातोश्च भ्वादौ पाठोऽनावश्यकः । आधृषीयत्वेन णिज्भावे समीहितरूपसिद्धेः । परस्मैपदिनामित्युपादानमात्मनेपदीय । पद्धातुस्तद्व्यावृत्तये णिज्भावेऽप्यात्मनेपदार्थमस्य भ्वादौ पाठस्यावश्यकत्वात् । अन्येषामपीतिबहुवचनम्प्रयोगभेदेन । बोध्य । अनावश्यकत्वेन बोध्य । ली द्रवीकरणे । लापयति । णिचि वृद्धि । इति भाष्यादिति । वस्तुतो

लाययतीत्यत्रैव लेख उचितः लेलेत्यस्य तु णिजभावे आत्वस्य वैकल्पिक-
त्वे न तदभावेऽपि सिद्धेः। अस्य पाठात् धूञ्प्रीञोरित्यस्य पाठात् एवं प्रीञ्-
धातोरस्मिन्मते प्राययतीत्येव रूपम्। मूलेकथ वाक्यप्रबन्धे कथयति स्वार्थ-
णिज्विवक्षायामल्लोपः आर्द्धधातुकस्य बुद्धिस्थत्वे लोपविधानेन लोपस्य प-
रनिमित्तकत्वम्। एतेन णिश्रन्थिग्रन्थि गणशब्दानुकरणत्वस्वीकारेण गणेरि-
तिण्यन्तानुकरण इति । गणधातोरदन्तत्वान्नेकाऽयन्निर्द्देश उपपद्यते कि-
न्तु ण्यन्तस्यैव । वृत्तौ गणेरप्यावस्येत्यत्र गणेरिति तु लुप्ताकारानुकरणा-
दिका बोध्यः । णौ चङ्पर इति । यद्यपिणाविति प्रकृतम् । तथापि च-
ङ्परइतिबहुव्रीहिणासन्वदितिसूत्रेतथाक्षिप्तमितीष्टाप्त्यै यमुक्तम्। णस्य दी-
र्घ इति । णस्य ईकारादेश इत्यर्थः । चिणस्येदिति पाठः । स्तन ग-
दीदेवशब्दे । ननु गदधातोरदन्तत्वाद्गदी इत्यनुपपन्नमत आह । इगन्ता-
दिति । लुप्ताकारान्तानुकरणादिका निर्द्देशोऽयमिति भावः । वस्तुतोय-
मकारान्त एव तदाह । प्रकरणादिति । अन्तरङ्गत्वादिति । आर्द्धधातु-
कोपदेश एव लोपविधानेनाल्लोपस्य प्रथमत एव प्रवृत्तेः । यदुक्तमप्ययो-
रिति मूले तस्योपपत्तिमाह । अयम्भाव इत्यादिना । इत्येव सिद्धेरिति ।
एतेन वर्गग्रहणाभावेपीष्टसिद्धिरुपपादिता । एतत्सूत्रारम्भसामर्थ्येन । प-
प्रयोरित्युपादानसामर्थ्येन । तदभावात् स्थानिवत्त्वाभावात् तन्निमित्त-
कादेशस्य । णिज्निमित्तकादेशस्य । एवञ्च द्वित्वे कर्त्तव्ये णिज्निमित्त
कादेशो न भवतीतिवचनव्यक्त्या निषेधस्य बलवत्त्वाद्द्विपयेऽन्तरङ्गस्या-
पि कार्यस्य पूर्वमप्रवृत्तिरिति भावः । तुताययिषतीत्यादि । एतेष्वन्यत्रे
उकारस्य श्रवणम्भवति । एकव्यवधाने प्रवृत्तिरिति । अस्य इत्येव ज्ञा-
प्यत इति शेषः । तेन । येन नाव्यवधानन्यायाश्रयणेन । तदन्यतरेति ।
द्वित्वनिमित्तप्रत्यय व्यवधायकैकप्रत्ययेत्यर्थः । अत्र णिज्ग्रहणणिसामा-
न्योपलक्षणम्। तेन आस्यशब्दाणिङ् अङ्गानिरसन इति णिङन्तत्वेऽपि
निषेधप्रवृत्त्या आसस्यदित्यत्र प्रक्रियादशायामुत्तरखण्डेऽवर्णसत्त्वेन नि-

येधसिद्धिः । तदुक्तम्भाष्ये । ओः पुयण्जिषु वचनं ज्ञापकं णौ स्थानिवद्भावस्येति ॥नन्वेवमिति । यत्र प्ररुयादशायां परिनिष्ठिते वेत्यस्य स्त्रीकारे ॥द्वितीयद्वित्वे। लशब्दस्य द्वित्वे । अत्र प्ररुयादशायामुत्तररखण्डेऽयर्णलाभस्य सत्वात् ॥ एतद्भाष्येति ॥ एतायां वृद्धौ टिलोप इत्यत्र हलिकल्योरत्वनिपातनस्य ज्ञापकत्वप्रतिपादनपरभाष्येत्यर्थः ॥ तत्पाठेन॥यथेष्टमित्यस्यपाठेनयथा कथेत्यत्राकारोच्चारणं यद्वुनभावार्थन्तयोनेत्यत्राकारोच्चारणञ्चोपधाकार्यप्रतिषेधार्थम्।दीर्घोकारस्य सत्त्वादित्यकारोच्चारणादिज्ञापितोपधिकल्प इति कश्चिदाह तन्मतन्दूषयति ॥ यत्त्विति ॥ णिज्विकल्पार्थमिति ॥ एवञ्च णिजभावेऽप्यनेकाच्त्वादस्मादाम्भवतीति तद्भावः। अपास्तम् । अन्त्याऽसेऽकारस्यश्रवणेनाकारोच्चारणस्य चारितार्थ्यात्सामर्थ्यस्यैवाभावादिति भावः ॥ फलान्तरमप्याह ॥ किञ्चेति ॥ माधवादिसम्मतरीत्या मूलोक्तं व्याख्याय भाष्यस्वारस्यसिद्धार्थमाह । परे त्विति ॥ इत्यत्रापि प्राप्नोतीति ॥ उपधायाश्चेतीत्यस्य स्थानिवद्भावःप्राप्नोतीत्यर्थः ॥ तुलाययिपतीत्यादौति । आदिना तुनाययिपतीत्यस्य सङ्ग्रहः। तुनुधातुभ्यां हेतुमति णिचि सनि रूपम् । अवर्णपरत्वसम्पादकेति । अत्रावर्णपरत्व सम्पादकेत्युपादानात्साक्षात्स्वरयावर्णसम्पादकस्याभावेऽपि तुलाययिपतीत्यादौ वृद्ध्यादेशायावादेशस्यतत्सम्पादकत्वाद्वृद्धेरप्यवर्णसम्पादकत्वस्यौध्यम्। एतेन। वक्ष्यमाणदूषणेन। सर्वथेति ॥ अत्र सर्वथेतिकथने नायर्णपरत्वसम्पादकादेशस्यानित्त्वेन तुल्यतेतिसिद्धान्तरीत्या स्थानिवद्भावाप्रवृत्तिः सूचिता । आदेशस्यावर्णपरत्वसम्पादकत्वाभावात् ॥ मूलोक्तरीत्यापि न स्थानिवद्भावप्रवृत्तिरित्याह । द्वित्वप्रवृत्तिवेलायामित्यादिना ॥ सूत्रादेरिति । अत्रादिना स्थूलसत्रयोः परिग्रहः ॥ अत्र स्थूलादेरिति यत्तु सुचितम् ॥ मध्योदात्तमिति। शपा शश्वैकादेशेऽप्येकादेश उदात्तेनोदात्त इति मध्योदात्तमित्यर्थः ॥ इति कश्चिदिति ॥ भाष्योक्तोदाहरणास्वारस्यमत्राशुचिः ॥ सूत्राम्भवारेत्यामर्थः पाठ इत्यपि कश्चि-

लाययतीत्यत्रैव लेख उचितः लेतेत्यस्य तु णिजभावे आत्वस्य वैकल्पिकत्वे न तदभावेऽपि सिद्धेः। अस्य पाठात् घूङ्प्रीञोरित्यस्यपाठात् एवं प्रीङ्धातोरस्मिन्मते माययतीत्येव रूपम्। मूलेकथ वाक्यप्रबन्धे कथयति स्वार्थणिज्विवक्षायामल्लोपः आर्द्धधातुकस्य बुद्धिस्थत्वे लोपविधानेन लोपस्य परनिमित्तकत्वम् एतेन णिच्प्रागवर्त्ति गणशब्दानुकरणत्वस्वीकारेण गणेरितिण्यन्तानुकरण इति। गणधातोरदन्तत्वान्न काऽयन्निर्द्देश उपपद्यते किन्तु यन्तस्यैव। वृत्तौ गणेरभ्यासस्येत्यत्र गणेरिति तु लुप्ताकारानुकरणादिका बोध्यः। णौ चङ्पर इति। यद्यपिणाविति नप्रकृतम्। तथापि चङ्परइतिबहुव्रीहिणासन्यदितिसूत्रेतथाक्षिप्तमितीशाप्य्यमुक्तम् णस्य दीर्घ इति। णस्य ईकारादेश इत्यर्थः। क्व चिदस्थे दिति पाठः। स्तन गदीदेवशब्दे। ननु गदधातोरदन्तत्वाद्गदी इत्यनुपपन्नमत आह। इगन्तादिति। लुप्ताकारान्तानुकरणादिका निर्द्देशोऽयमिति भावः। वस्तुतोयमकारान्त एव तदाह। प्रकरणादिति। अन्तरङ्गत्वादिति। आर्द्धधातुकोपदेश एव लोपविधानेनाल्लोपस्य प्रथमत एव प्रवृत्तेः। यदुक्तम्पयपयोरिति मूले तस्योपपत्तिमाह। अयम्भाव इत्यादिना। इत्येव सिद्धेरिति। एतेन यगग्रहणाभावेपीष्टसिद्धिरुपपादिता। एतत्सूत्रारम्भसामर्थ्येन। पप्रयोरित्युपादानसामर्थ्येन। तदभावात् स्थानिवत्त्वाभावात् तन्निमित्तकादेशस्य। णिज्निमित्तकादेशस्य। एवञ्च द्वित्वे कर्त्तव्ये णिज्निमित्तकादेशो न भवतीतिवचनव्यक्तया निषेधस्य बलवत्वात्तद्विषयेऽन्तरङ्गस्यापि कार्यस्य पूर्वमप्रवृत्तिरिति भावः। तुतावयिषतीत्यादि। एतेष्वन्यासे चकारस्य श्रवणम्भवति। एकव्यवधाने प्रवृत्तिरिति। अस्य इत्येष व्याप्यत इति शेषः। तेन। येन नाव्यवधानन्यायाश्रयणेन। तदन्यतरेति। द्वित्वनिमित्तप्रत्यय व्यवधायकैरप्रत्ययैत्यर्थः। अत्र णिज्ग्रहणणिसामान्योपलक्षणम्। तेन आस्यशब्दाणिङ् अङ्गानिरसन इति णिङ्न्त्यपेऽपि निषेधप्रवृत्तया आसस्यदित्यत्र प्रक्रियादशायामुत्तरखण्डे यणस्त्वेन नि-

न तु कार्यकालपक्ष इति वाच्यम् । अन्तर्वर्त्तिसुब्निमित्तकपदत्वस्य बहिर्भूतणिज्निमित्तकभत्वेन बाधायोगात् । न च पदत्वोत्तरम्भत्वमस्तु । संज्ञाद्वयस्याकडारीयत्वेनासमावेशात् । यदपि प्रातिपदिकाण्णिजितिपक्षेऽपि भत्वातिदेशोऽस्स्रजदित्येवमर्थं स्वीकार्य इति । तदपि न स्रग्विणमाचष्टे स्रजयतीत्यत्र कुत्वादर्शनेनैतादृशे विषयेऽन्तर्वर्त्तिसुप्निमित्तकपदत्वस्यापि बहिरङ्गणिज्निमित्तकभत्वेन भाष्यप्रामाण्येन बाधस्य कल्पनादिति दिक् । प्रातिपदिकादेवेति । अन्यथा सुप इत्येव वदेत् । इष्ठवदित्यनेनेष्ठन्निमित्तककार्यस्यैवातिदेशो न त्विष्टनो यत्कार्यन्तस्याप्यतिदेश इत्याह । तत्रेत्यादिना । अत एव । इष्ठन्निमित्तककार्यस्यैवातिदेशादेव । पाश्चमिकः कन्निति । युवाल्पयोः कनन्यतरस्यामितिसूत्रविहितः कन्नित्यर्थः । एतेन पाश्चमिकज्यादाद्यादेशनिरासः । अत एव । पाश्चमिककन्मात्रातिदेशस्येष्टत्वादेव । के चिन्मुख्याः । मन्वते । भारद्वाजीयवार्त्तिकन्तु न परिगणनङ्किन्तूदाहरणनिदर्शनपरमिति च सम्प्रतिपद्यन्ते इत्यपि बोध्यम् । अमुमेवार्थमाह यद्यपीत्यादिना । तस्या अपि । भसंज्ञाया अपि । ऐडविडयतीति । इडविडोऽपत्यं स्त्री इडविड् । जनपदशब्दादित्यञ् । तस्यातश्चेति स्त्रियां लुक् । तत आख्यातार्थे णिच् । पुंवद्भावेनाजन्तत्वमिति टिलोपेऽप्यञ एव निवृत्तिः । नन्विष्ठवदित्यतिदेशेन णिचस्तद्धितत्वातिदेशे तस्मिल्लित्यादिवृद्धिरपि स्यादित्यत आह । इष्ठनि दृष्टेति । तद्धितत्वन्तु नातिदिश्यते । उपमेये सप्तमीदर्शनादित्युक्तत्वादिति भावः । भारद्वाजीयवार्त्तिकस्यपरिगणनपरमितियादिनोऽपि टिलोपपदत्टिलोपनिमित्तभसंज्ञाया अप्युपलक्षणम् । स्रजयतीतिभाष्योदाहरणादित्यपि दिगित्यनेन सूचितम् । एनीमाचष्टे एतयतीत्येतत्पुंवद्भावोदाहरणमोपन्यस्तम् । टिलोपेन ङीपि निवृत्ते तत्सन्नियोगशिष्टनस्यापि निवृत्तिसिद्धेः । एवन्दारदयतीत्यपि पुंवद्भावोदाहरणन्द्रष्टव्यम् । अत एव । यद्वी यस्यां टिलोप इतिपक्षस्वीकारादेव । ननु लोपस्य नि-

त् ॥ गणसूत्रमिति ॥ चुराद्यन्तर्गणसूत्रमित्यर्थः ॥ अत एव ॥ प्रातिपदिकपदोपादानादेव ॥ अत एव । प्रातिपदिकपदोपादानं यत्र तत्र सुबन्तादित्यर्थलाभादेव ॥ तदन्तार्थकादिति ॥ द्वितीयान्तार्थककर्मसमर्पकादित्यर्थः ॥ अत एव । सुबन्तादुत्पत्तेरभावादेव । पचयतीत्यत्र पचाद्यजन्ता णिच् । न च कुत्वे कर्तव्ये स्थानिवद्भावाट्टिलोपस्य भविष्यतीति वाच्यम् । कुत्वे न स्थानिवदितिनिषेधात् । वार्त्तिकादिति । तत्करोति तदाचष्ट इतिवार्त्तिकादित्यर्थः । ल्युमामित्यादीनामिति । टिड्ढाणञितिसूत्रे तरप्ल्युनामिति हि के चित्पठन्ति । के चित्तु सुबन्ताण्णिजुत्पत्तावपि नातपरराजतपचतीत्यत्र कुत्वस्य प्राप्तिः । इष्ठवदित्यतिदिष्टेन भत्वेन पदत्वस्य बाधात् । यथोद्देशपक्षाश्रयणेन पूर्वकालजातभत्वेन णिचो लोपेऽपि पदत्वबाधस्य वक्तुं शक्यत्वात् । प्रातिपदिकाण्णिजितिपक्षेऽपि भत्वातिदेशोऽवश्यमङ्गीकार्यः । अन्यथा स्रग्विणमाख्यदसृजदित्यत्र कुत्वापत्तिरिति । तन्न । सुबन्तादित्यस्य सुप इत्यस्याप्रकृतत्वेन तस्य पक्षस्य पूर्वमेवासम्भवस्योपपादितत्वात् । न च तत्करोतीत्यत्र तदिति तेनातिक्रामतीत्यत्र तेनेति विभिन्नविभक्तिनिर्देशात्स पक्षः स्वीक्रियत इति वाच्यम् । तत्तेनेतिविभिन्नविभक्तिनिर्देशस्य क्वचित्कर्मसमर्पकात्क्वचित्करणसमर्पकात्प्रातिपदिकाण्णिज्यथा स्यादित्येवमर्थत्वस्य स्वीकारात् । प्रातिपदिकपदस्य लक्षणायां साधकाभावाच्च । इष्ठवदित्यतिदिष्टभत्वेन पदत्वस्य बाध इत्यपि न । कार्यकालपक्षे णिचो लोपेन तन्निमित्तकस्य भत्वस्य वक्तुमशक्यत्वात् । प्रत्ययलोप इतिसूत्रस्य नियमार्थत्वमेव भाष्यकृता सिद्धान्तितमिति स्थानिवद्भाव एव प्रकृते वाच्यः स च न सम्भवति । यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तिस्तन्निमित्तातिरिक्तसर्वनिमित्तकत्वमतिदेशस्येत्यस्य सर्वसम्मतत्वादन्यथा सर्वस्मिन्नित्यत्रापि सुप्त्वातिदेशेन यजादित्वाभावेऽपि दीर्घापत्तिः स्यात् । एवञ्चातिदिष्टभत्वस्याप्यजादिनिमित्तकतयाऽनल्विधाविति निषेधात् । न चात्र यथोद्देशपक्ष एवाश्रीयते

लोपीतिसूत्रभाष्यस्थाममालदित्यस्य टिलोपस्य स्थानिवत्त्वादनुपधात्वात्प्राप्तिरेव नास्तीत्याशङ्कायां भाष्यीयाया अभिप्रायमुक्त्वा ननु प्रतिषिध्यते स्थानिवत्त्वं चङ्परनिर्ह्रासेनेत्याशङ्कोक्तन्तदस्ति। यदर्थः स. प्रतिषेधस्तस्य णेर्णिच्युपसङ्ख्यानमित्यनेन साधित्वान्न वक्तव्य इति प्रतिपादितम्। चकारस्यानुक्तसमुच्चयार्थत्वे साधकमाह मूले तथा च वार्त्तिकमित्यादिना। आख्यानशब्दे कर्मणि ल्युट्। वार्त्तिकार्थमाह। आख्यानवाचकेति। अत एव। वार्त्तिकस्योक्तार्थत्वादेव। अन्यथा यादृशाङ्कारकमित्यर्थास्वीकारे॥ यदुक्तम्प्रकृतिप्रत्यापत्तिरित्यस्य कृतो या प्रकृतिस्तस्याविकारपरित्यागेन स्वरूपेणावस्थानमिति व्याख्यानन्तन्न युक्तमित्यभिप्रायेणाह। परे त्विति॥ प्रकृतिपदयोः॥ वार्त्तिकस्थप्रकृतिपदयोः। आख्यानपदे कर्मणि ल्युटो बाहुलकत्वकारणे न यद्यदाख्येयं तत्सर्वं गृह्यते न तु प्रसिद्धमेव। अत एव काश्याः प्रस्थितो द्वियोजने सूर्योद्गमनं संभावयते सूर्यमुद्गमयतीत्यपि भवति॥ किञ्च यदाख्येयन्तद्दर्शनसमानकालिकमेव कथनं यत्र तत्रैवास्य प्रवृत्तिरिष्यते। यदा त्वरण्ये मृगरमणन्दृष्ट्वा ततो ग्रामे आगत्य मृगरमणमाचष्टे तत्र वाक्यमेव भवति न तु णिच्॥ कंसवधादिशब्दानामाख्यानवाचककृत्प्रदेशे ग्रहणङ्कृद्ग्रहणपरिभाषया बोध्यम्॥ न च प्रकृतिवच्च कारकमित्यनेन कृति सति कारके यद्विभक्त्यन्तन्तस्यातिवृत्तिरपूर्वा तत्प्रकृतिवाच्यार्थकारकवाचिका विभक्तिर्विधीयते तदा राजानमागमयतीत्यत्र प्रत्ययलक्षणेन पदत्वान्नलोपः स्यादिति वाच्यम्। उत्तरकालजातविभक्तिनिमित्तकभत्वेन पदत्वस्य बाधात्॥ न द्वन्द्वो व्याख्यानादिति॥ द्वन्द्वस्याभिप्रेतत्वे द्विवचनेनैव निर्दिशेत्। किञ्च तेनातिक्रामतीत्यतस्तेनेत्यनुवृत्त्यैव सिद्धे कर्तृकरणादित्युपादानवैयर्थ्यञ्च स्यादित्येतन्मूलकव्याख्यानादित्यर्थः। कर्तुर्व्यापार्यमितीति कर्तृवृत्तिव्यापारप्रयोज्यव्यापाराश्रय इत्यर्थः। कर्तृग्रहणाद्यद्यत्कर्तृव्यापार्यन्तत्सर्वङ्गृह्यते न तु करणत्वेन लोकप्रसिद्धमेवे-

त्वत्वेन परत्वादित्यसङ्गतमत आह । लोपस्येति । तस्यापि टिलोपस्येति। अपिनाऽकृतायां वृद्धौ टिलोपसंग्रहः । अत एव । वृद्धेर्लोपो बलीयानितिपक्षस्वीकारादेव । प्रत्याहारग्रहणञ्चरितार्थमिति । तद्धि यत्रैको लोपप्राप्तिस्तत्र वृद्धेः पूर्वं यदि लोपः स्यात्तदा चरितार्थम्भवेत् वृद्धौ सत्यां लोपे त्वनग्लोप इत्यग्लोपित्वमकारलोपेनैव सम्पादनीयमित्यलोपनोव्यावृत्तये नालोपीत्येव वदेदिति भावः । ननु स्वामिनमाख्यदस्वत्वात्मद्दोदुहमाख्यदजुगोहदित्यत्र वृद्धेः प्राप्त्यभावात्प्रत्याहाराश्रयणञ्चरितार्थमत आह । इदुदुपधेन्य इति द्वयोः पक्षयोर्युक्तमपक्षमाह । साम्प्रतिकमेवेति । तत्त्वेति । एकदेशयुक्तित्वमित्यर्थः । तदेतदुपपादयति । लोपस्येति । एकस्या वृद्धेः कृताकृतप्रसङ्गित्वस्य वक्तुमशक्यतया नित्यत्वाशङ्काया एवासङ्गत्या प्रकारान्तरेण तस्या अनित्यत्वोपपादनमयुक्तमिति सा एकदेशयुक्तिरिति भावः । अत एव । वृद्धेर्लोपस्य बलवत्त्वादेव । अवीवददिति । णिजन्ताच्चिच् लुङ् चङ् । णिलोपे । प्रथमणिचो लोपे । कैयटस्यापि द्वितीयः पक्षः सम्मत इत्याह । एतदेवेति । द्वितीयपक्षस्यैव युक्तत्वेऽप्यचकलदित्यस्य सिद्धिमाह । किञ्चेति । नियमार्थत्वेनेति । हलप्रतिपादकाद्यदि णिच् तदा हलकलयोरेवेतिनियमार्थत्वेनेत्यर्थः । उपसंख्यानेन सिद्धेरिति । अत एव णौ चङीतिसूत्रभाष्ये णेर्णिचीतिवचनस्यावीवददित्यत्र प्रयोजनमुक्त्वा णिलोपे कृते व्यवधानाभावशङ्कायां स्थानिवद्भावेन व्यवधानमुक्त्वा चङ्परनिर्ह्रासे स्थानिवत्त्वनिषेधमुक्त्वा यदर्थमयं प्रतिषेधस्तस्य ह्रस्वत्वस्य नाग्लोपीतिनिषेधः स्यादिति शङ्कायां वृद्धेर्लोपस्य प्रत्याहारग्रहणेन बलवत्त्वेनोपपादनङ्कृत्याऽवीवददित्यस्य णेर्णिचीतिवचनेनैव सिद्धिमुपसंहारे उक्त्वा तस्मादुपसङ्ख्यानमङ्गस्य त्यमित्यनेन । अन्येषामित्यति । भासस्य इः भासेः । याससय उः यासोः । भासयमास्यत् अबीभसत् यासामास्यदयीयसदित्यादीनामित्यर्थः । तत्साध्यानाम् । चङ्परनिर्ह्रासेतिवचनसाध्यानाम् । कैयटे स्पष्टमिति । तेन हि भा-

ल्लोपीतिसूत्रभाष्यस्थाननमालदित्यस्य टिलोपस्य स्थानिवत्त्वादनुपधात्वात्प्राप्तिरेव नास्तीत्याशङ्काया भाष्यीयाया अभिप्रायमुक्त्वा ननु प्रतिषिध्यते स्थानिवत्त्वं चङ्परनिर्ह्रासिनेत्याशङ्कोक्तञ्चैतदस्ति। यदर्थः स प्रतिषेधस्तस्य णेर्णिच्युपसङ्ख्यानमित्यनेन साधितत्वान्न वक्तव्य इति प्रतिपादितम्। चकारस्यानुक्तसमुच्चयार्थत्वे साधकमाह मूले तथा च वार्त्तिकमित्यादिना। आख्यानशब्दे कर्मणि ल्युट्। वार्त्तिकार्थमाह। आख्यानवाचकेति। अत एव। वार्त्तिकस्योक्तार्थत्वादेव। अन्यथा यादृशाङ्कारकमित्यर्थास्वीकारे॥ यदुक्तम्प्रकृतिप्रत्यापत्तिरित्यस्य कृतो या प्रकृतिस्तस्याविकारपरित्यागेन स्वरूपेणावस्थानिति व्याख्यानन्तन्न युक्तमित्यभिप्रायेणाह। परे त्विति॥ प्रकृतिपदयोः॥ वार्त्तिकस्थप्रकृतिपदयोः। आख्यानपदे कर्मणिल्युटो बाहुलकत्वकारणे न यद्यदाख्येयं तत्सर्वङ्गृह्यते न तु प्रसिद्धमेव। अत एव काश्याः प्रस्थितो द्वियोजने सूर्योद्गमनं संभावयते सूर्यमुद्गमयतीत्यपि भवति॥ किञ्च यदाख्येयन्तद्दर्शनसमानकालिकमेव कथनं यत्र तत्रैवास्य प्रवृत्तिरिष्यते। यदा त्वरण्ये मृगरमणन्दृष्ट्वा ततो ग्रामे आगत्य मृगरमणमाचष्टे तत्र वाक्यमेव भवति न तु णिच्॥ कंसवधादिशब्दानामाख्यानवाचकत्वपदेन ग्रहणञ्च लक्षणप्रतिपदोक्तपरिभाषया बोध्यम्॥ न च प्रकृतिवच्च कारकमित्यनेन कृतिसति कारकं षड्विभक्त्यन्तस्थानिवृत्तिरपूर्वा तत्प्रकृतिवाच्यार्थकारकवाचिनि विभक्तिर्विधीयते तदा राजानमागमयतीत्यत्र प्रत्ययलक्षणेन पदत्वान्नलोपः स्यादिति वाच्यम्। उत्तरकालजातविभक्तिनिमित्तकारकेण पदत्वस्य बाधात्॥ न द्वन्द्वो व्याख्यानादिति॥ द्वन्द्वस्याभिमेतत्वे द्विवचनेनैव निर्दिशेत्। किञ्च तेनातिक्रामतीत्यत्रलोनेत्यनुवृत्त्यैव सिद्धे कर्तृकरणादिष्वुपादानवैयर्थ्यं च स्यादित्येतत्कारकस्याव्याख्यानादित्यर्थः। कर्तुर्व्यापारं जितीति कर्तृकर्मव्यापारप्रयोज्यव्यापाराश्रय इत्यर्थः। कर्तृग्रहणाद्यथाकर्तृव्यापारंस्तदनर्थङ्गृह्यते न तु करणत्वेन लोकप्रसिद्धमेवे-

ति भावः। चित्र चित्रकरणे। अत्र चित्रेति लुप्तपञ्चम्यन्तम् ॥ अदन्तत्वं घटीत्यादिनिर्द्देशस्य का गतिरत आह। घटीत्यादीति । सौत्र इति। एवञ्च घटेति वक्तव्ये इकारनिर्द्देशोऽस्येदित्वमपीत्येतद्बोधनायेति बोध्यम्॥सर्वत्र। कथादिधातुषु।सङ्ग्राम युद्धे युद्धे वर्त्तमानं सङ्ग्रामेतिप्रातिपदिकं धात्वर्थे णिचंलभत इत्यर्थः॥प्र ातिपदिकपदानुवृत्त्या प्रातिपदिकमिति लभ्यम्॥ अस्य सूत्रत्वादिति।एवञ्च युद्ध इत्यस्य णिजर्थबोधकत्वे तदुपादानवैयर्थ्यापत्तिरिति भाव।तत्वञ्च।अनुदात्तत्वञ्च। चिन्त्यमिति। नन्वसंग्रामयत शूरइतिभाष्यप्रयोग एव मानमभविष्यतित्यतो भाष्यतात्पर्यमाह। भृशादिसूत्र इत्यादिना। भूवादिसूत्र इति । तत्र भाष्ये आदिग्रहणस्य यदि पाठो भूमभृतीनाङ्क्रियते तदा ते पठित्वा ते धातव इति पठनीयमादिग्रहणं सूत्रे न कार्यं यदि तु न स्वादयः पठ्यते तदापठितोऽप्यादिशब्दोऽसंवद्धार्थक इति शङ्कोत्तरम्भगवतो क्रमेवन्तर्हि सिद्धे यदादिग्रहणङ्करोति तज्ज्ञापयत्याचार्यो ऽस्तिच पाठो' बाह्यश्च सूत्रादिति |किमेतस्य ज्ञापने प्रयोजनम् पठेन धातुसंज्ञेत्येतदुपपन्नं भवतीति ॥ तत्र पाठेनेतिप्रतीकमुपादाय कैयटेन तथोक्तमिति तेन वहुलमेतन्निदर्शनमितिभाष्यविरुद्धमिति कल्प्यत इति भावः॥ दूषितप्रायमिति यदि दिचुरादिभ्यो णिजिश्कल्पेन स्यात्तदा आधृषाद्वेत्यस्य वैयर्थ्यापत्तिरित्येवं व्याख्यानन्न युक्तमिति भावः ॥ णिङ्ङ्गान्निरसने॥ निरसनमत्र प्रक्षेप. ॥ गणसूत्र इति एतेन एतदन्तेषु इष्ठवदित्यस्यासम्बन्धो ध्वनित. । अन्यथा णिङि टिलोपो न स्यात्। पूर्वसूत्रविहितेभ्यो णिच्यपि स न स्यात्॥ खिदुशब्द इति॥ उपात्त इति शेष' ॥

## ॥ इति चुरादिविवरणम् ॥

अन्यथा। हेतुशब्दस्य कारणमात्रपरत्वे॥ कर्तर्य्येति॥ स्वनिष्ठाधिकरणतानिरूपिताधेयत्वमत्र षष्ठ्यर्थं. । द्योत्यत्वे स्थिति। तस्मिन्पक्षे प्रेषणाध्येष-

णादीनान्धातुवाच्यत्वमेव वक्तव्यन्तथा सति तेषां विशेषणत्वं विशेष्यत्वं वा कल्प्यमुभयथाऽपि न युक्तमिति भावः ॥ ओःपुयण्ज्यपरे ॥ न तु यस्ये-तीति । पञ्चम्यर्थे बहुव्रीहिर्न तु षष्ठ्यर्थ इत्यर्थः । इत्व इति । प्रकृतसूत्रे-ण कृत इतिशेषः ॥ ननु प्रकृतसूत्रे ओरिति व्यर्थम् । तथाहि अवर्णपर-पवर्गादिपरकाभ्यासावयवाकारस्यपिपक्षति यियक्षतीत्यादावित्वप्रवृत्ति-रप्येव । तादृशश्चेकारो नास्त्येव । उकारस्य चेत्वमिष्टमेव ॥ तादृशयो-ऋकारलृकारयोरपि सम्भवो नास्ति । धेञ् रै पै वै धातुभ्यो यत्र सन्-त्रापि प्रथमत आत्वप्रवृत्त्याऽभ्यासेऽकारस्यैव सत्वमिति नेत्वव्यावृत्तिः-फलमिति परिशेषादुकारस्यैव भविष्यतीति चेन्न । पापचिषते यायचिषत इत्यादौ यङन्तात्सनि यङ्निमित्ताभ्यासावयवाकारस्यान्तरङ्गत्वाद्दीर्घोऽकि-त इति दीर्घे कृतेऽप्यनेनेकारः स्यादिति तद्व्यावृत्त्यर्थत्वात् । न चैतदपि सनि परे सन्निमित्ताभ्यासावयवस्यैवेति प्रत्यासत्तिकल्पनेन वारयितुं श-क्यमिति वाच्यम् । एवन्तर्हि द्विर्वचननिमित्ताङ्गाभ्यासावयवस्य द्विर्वचननि-मित्तनिमित्तकृदन्तपर्यन्तन्निमित्तकाभ्यासस्यैव भवतीति प्रत्यासत्तिलभ्य ए-वार्थे तस्य प्रकृतसूत्रस्थस्यौरितिपदस्य ज्ञापकत्वमस्त्विति कल्पनसम्भवात्। तत्फलन्तु जङ्गम्यादिभ्यो यङन्तेभ्यः सनि जङ्गमिषत इत्यादौ सन्यत इ-तीत्वाभाव इति दिक् ॥ पुयण्ज्यीति किम् । तुतावयिषति जुहावयिष-ति ॥ अपर इति किम् । बुभूषति । रुरूषति ॥ श्रवतिशृणोति ॥ ओः पु-यण् ज्यीत्यतोऽनुवर्त्तनानेऽपर इतिपदेऽन्यपदार्थजिज्ञासामाह । धात्वक्ष-रमेवेति ॥ धात्वरस्य पूर्वसूत्रोपस्थितत्वाद्यण्रूपम् । येन नाव्यवधानन्या-येनैकवर्णव्यवधानेऽप्यस्य प्रवृत्तिरित्याह । एकहलिति ॥ अत एव । पूर्वसू-त्रस्याव्यवधानेऽवीभवदित्यादौ चारितार्थ्येन व्यवधाने प्रवृत्त्यभावादेव। भाष्यसम्मत इति ॥ एतच्च प्रागुपपादितम् ॥ अशीवददित्यादावपीति ॥ हे-तुमण्णिजन्ताद्धेतुमण्णिच् सन्ये । इत्यपीति । अपिना मूलोक्ताग्लोपित्वस्य म-ङ्ग्रहः ॥ एतेन । वर्णग्रहणातिरिक्तेऽप्याकृतिनिर्देशनेन । भाष्यानङ्गत्या-

पत्ये ति ॥ तत्र स्यार्द्धधातुकइत्यस्य परसप्तमीत्वपक्षे भव्यम्प्रयमार्य्ये-यमित्यत्र यति कृतेऽनिष्टे प्रत्यये आदेशाः स्युरिति दोषस्यसान्याश्रयत्वा द्विशेषस्यानाश्रय इत्यादिनाऽऽर्द्ध धातुकत्वजातौ भव्यमित्यादावस्तेर्भूरित्या देशे कृते यो यतः प्राप्नोति स ततो भविष्यतीति समाधाने जातिवादिनैक-देशिना कृते सामान्येन पौर्वापर्याभावाज्जग्ध्यादीनामनुपपत्तिरितिदूषण-गभिधायार्थसिद्धिरेवैषा यत्सामान्येन पौर्वापर्यन्नास्तीत्यसति पौर्वापर्ये विषयसप्तमी विज्ञास्यत इत्युक्तम् ॥ तदुक्तरीत्या जात्या पौर्वापर्यमभ्यु-पेत्याप्याह । किञ्चे ति । अत एव । णावच्लोप इतिपदस्य भवदुक्तव्या-ख्याने विकल्पेन दूषणसम्भवादेव ॥ इत्याहुः । भाष्यतत्त्वविदः ॥ अ-न्तरङ्गत्वाद् वृध्यादेरिति । अन्तरत्वादप्राप्तस्य वृद्ध्यादेरित्यर्थः ॥ तत्फलम् । उपसर्गनिमित्तादितिव्याख्यानफलमित्यर्थः ॥ अन्यथा । उपधाह्रस्वत्वस्य प्रागप्रवृत्तिस्वीकारे ॥ मूले उब्जआर्जवे ॥ उपदे-शे । धातूपदेशे ॥ दकारोच्चारणसामर्थ्यादिति । तद्धि न न्द्राइति-निषेधप्रवृत्त्यर्थमेव यदि निपातनेन बकारोऽन्त्यङ्गो द्वित्वभाक् स्यात्तदा दकारोच्चारणं व्यर्थं स्यात् ॥ नन्विदम्भुजन्युब्जमितिसूत्रव्याख्यानकालि-कग्रन्थविरुद्धम् ॥ तथाहि । तत्र हिपाणयुपतापयोः किम् । भोगः स-मुद्गग इति । अत्र समुद्गग इत्यत्र दकारस्य श्रवणं यथा स्यादित्येवमर्थ-न्दकारोच्चारणस्य चारितार्थ्याद्दकारोच्चारणसामर्थ्यादितिसामर्थ्योक्त्यसङ्ग-तेरिति चेन्न ॥ इको गुणवृद्धीतिसूत्रे यथा इग्ग्रहणमात्रन्ध्यक्षरव्यञ्जननि-वृत्त्यर्थमित्यनेन व्यञ्जननिवृत्त्यर्थत्वे कथिते तृतीयप्रयोजननिराकरण।वसरे गमेरप्ययमङ्गो वक्तव्यः अभ्युद्गः समुद्ग इति यथासादित्यु क्तम्भाष्ये । यदि कृत्यविषयेष्वुब्जेः प्रयोगः स्यात्तदाऽस्माद् घञि अभ्युद्गः समुद्गइति प्र-योगयोः सिद्धौ गमेरपीति भाष्यासङ्गतिरिति अविरविकन्यायेनास्यकृ-त्यविषये कृत्यविषयेगमूधातुप्रकृतिकहानास्य प्रयोग इत्यत्रभाष्यतात्पर्य-त्तया पाणयुपतापयोः किम् अभ्युद्गः समुद्ग इतिप्रत्युदाहरणमपि तन्नाद्येश्यावप

तथाऽकुत्वविषये।सोऽजधातोः कुत्वविषये गम्धातुप्रकृतिकङान्तस्य प्रयोग इत्यत्रैव तात्पर्यं कल्प्यते इत्याशयात्॥परे तु दकारोच्चारणलाभ्युद्गः समुद्गइत्यत्र दकारश्रवणार्थं तयोरुपधायास्तकारस्य धकारस्य वोच्चारणेन सिद्धिसम्भवादिति दकारोच्चारणलब्धा इतिनिषेधप्रवृत्त्यर्थमेवेत्याशय इति न पूर्वापरविरोध इत्याहुः। अदिद्रियदिति। अत्र दकारस्य संयोगादित्वेऽप्यादिभूतादचः परत्वाभावान्निषेधो नेति भावः। इतिपक्ष इति। मयतेरिदन्यतरस्याम् लुङ्लङ्लृङ्क्ष्वडुदात्त इति द्विलकारकनिर्देशपक्षे। परत्वादपीति। शब्दान्तरप्राप्त्या द्वयोरप्यनित्यत्वमिति भावः। अधिकारसूत्रत्वेन। एकाचो द्वे इतिवदधिकारसूत्रत्वेन। एतेन द्वित्वविधायकसूत्रे धातोरित्यस्य सत्त्वात्तदेकवाक्यतासम्भवो ध्वनितः। एवञ्च यडीतिसूत्रेऽप्युपस्थितौ तत्प्रदेशे धातुसंज्ञाकालिकादादेरचः पराः संयोगादयो नदरा द्विर्न भवन्तीति वाक्यार्थः। प्रसज्यप्रतिषेधपक्षे पर्युदासन्यायेन तु धातुसंज्ञाप्रवृत्तिकालिकादादिभूतादचः परे ये संयोगादयो नदरास्तद्भिन्ना द्वे भवन्तीत्यर्थान्निषेधाप्राप्तिरिति भावः। किञ्च विधिशास्त्रैकवाक्यतया निषेधस्यान्तर्भूतचङ्निमित्तकत्वे नैतद्दृष्ट्या यद्विभूर्यलकारनिमित्तकस्याटोऽसिद्धत्वेन निषेधाभाव इत्यपि बोध्यम्। नाभान्तर्यपरिभाषा त्वनित्या नास्त्येव वेति बोध्यम्। अलाक्षणिकत्वादिति। एतेन णे इत्यस्य व्यावृत्तिरसूचिता। अर्तिह्रीत्यस्य इति। युगागमविधायके णिचलेरेव ग्रहणमिति हि प्रतिपादितम्। वचनम्। पातेर्णाविति वचनम्। पातेर्णाविति वचने णावित्यस्य निमित्तस्योपादानेन प्रत्ययादर्शनस्योक्तिसम्भवाभावान्न लुक्शब्दस्य संज्ञाभूतस्य ग्रहणमित्यपि बोध्यम्। व्याख्यानादिति। सूत्रेऽन्यतरस्याङ्ग्रहणकरणमूलकव्याख्यानादित्यर्थः। यदि निरनुबन्धकत्वात् क्र्यादेर्लीधातोरादादिकस्य लाधातोः प्रतिपदोक्तस्यैव ग्रहणमभिप्रेतमभविष्यत्तदा धातुभेदेन रूपद्वयसिद्धौ प्रकृतसूत्रेऽन्यतरस्याङ्ग्रहणं नाकरिष्यदिति भावः। आत्मनेपदविषयेति।

लियः समानतेत्यनेन तत्रात्मनेपदविधानादिति भावः । इदमेव । मतान्तरमेव । इहापि द्वयोर्ग्रहणं व्याख्यानादिति । अन्यतरस्याङ्ग्रहणेन लीधातुविषये व्यवस्थापकन्यायाप्रवृत्तिज्ञापनमूलकव्याख्यानादित्यर्थः । कारणपरहेतुशब्देन षष्ठीसमासे हेतुपादानमनर्थकमित्याह । हेतुसम्बन्धीति । एतत् । इकारप्रश्लेषेण दोषवारणम् । भीस्मीप्रकृतिकेति । प्रत्यासत्तश तथा कल्प्यत इति भावः । णाविति चेति । आर्द्धधातुक इत्यस्य विषयसप्तमीत्वं प्राग् व्यवस्थापितमिति तत्सामानाधिकरण्याण्णावित्यपि विषयसप्तमीति भावः । ओः पुयण्जीतिसूत्रस्थवर्गादिग्रहणज्ञापितवचनसेद्धाप्रवृत्तत्वा णौ कृतस्य शाङादेशस्य न स्थानिवत्त्वमित्याह । तत्रादेशस्येत्यादिना । सिध्यतेरपार । अपारलौकिकोऽर्थः प्रकृते धात्वर्थफलरूपो विवक्षितः । परलोकः प्रयोजनमस्य पारलौकिकम् । अन्नं साधयतीत्यत्र धात्वर्थफलन्निष्पत्तिरूपन्तत्र परम्परया यद्यपि ब्राह्मणेभ्यो दानादिना पारलौकिकम्भवति । तथापि साक्षाद्यत्पारलौकिकन्तदेव फलमपारलौकिकेत्यत्र प्रतियोगित्वेन विवक्षितमित्येतत्सूचनाय ऐहलौकिक इति वक्तव्येऽपारलौकिक इत्युपात्तम् । प्रजने वीयतेः । विशेषाभ्यादिति । आत्वभावाभावयोर्विशेषाभावादित्यर्थः । विशेषसम्भावनानिरासायाह । वयीस्वपीत्यादीति । पक्षयोरिति । तत्र हि काम्यचः ककारस्य फलाभावादित्संज्ञाभावे उक्ते इदन्तर्हि प्रयोजनमुपपदकाम्यतीत्यत्र सम्प्रसारणं यथा स्यादितिपूर्वपक्षिणोक्ते यजादिभिरत्र किं विशेषयिष्यामः यजादिभ्यो विहिते कितीति समाधायायापि कथञ्चिदित्कार्यं स्यादियमपि न दोषः सुप आत्मनः क्यच् काम्यचेतिककारस्य प्रश्लेषेण काम्यचः ककारस्यानादित्वं साधितम् । अथापीति । यजादिभिः *किन्न विशेष्यते कार्यित्वेन* यजादयो निर्दिश्यन्त इति कैयटः । एतेभयोः पक्षयोः फलैक्यम्बोधितम् । यदि सम्प्रसारणयोग्येभ्यो यजन्तेभ्यः क्विपस्तदा णिलोपे क्वौ विधिप्रतीति स्थानिवद्भावनिषेधे विहितवि-

शेषणाभावपक्षे । सम्प्रसारणस्य विहितविशेषणपक्षे सम्प्रसारणाभावस्य प्राप्तिरिति फलभेदः स्यादिति तादृशेभ्यः क्विबभावः कल्प्य इति भावः । एतेन । पूर्वोक्तव्याख्यानेन । व्याः । व्यौ इत्यादिरूपाणीति । आत्वपक्षे णौ युगागमेऽपि णिजन्तात्क्विपि णिलोपे वल्निमित्तकयकारलोपे व्या इत्यादिरूपम् । वलि लोपे णिलोपस्य स्थानिवत्त्वन्तु न । क्वौ लुप्तमिति निषेधात् । आत्वाभावपक्षे तु णिचूपरत्वेऽपि युगागमो न । शाच्छासेति-सूत्रे आत इत्यस्यार्तिह्रीतिसूत्रादनुवर्त्तनात् । अत एवाजूहवदजुहाव-दित्यत्र युगागमाभावः । एवञ्चाचोञ् णितीति वृद्धौ व्यैरित्यादिरूपमिति बोध्यम् । ननु णिजन्ताद्विचि सत्यात्वपक्षे युगागमे वलि लोपे णिलोपस्य स्थानिवत्त्वेन यान्तमात्वाभावे तु व्यैरितिविशेषोऽस्त्येवेत्यत आह । विच इति । वा चित्तविरागे । चित्तम्मनः । तस्य विरागोऽप्रीतिः । स्वीययोग्यार्थग्रहणानुकूलव्यापाराभावरूपा । तस्य । क्षयादेः । अनेन । आखेट इतिव्याख्यानेन । मृगरमणमितिसमुदाय आखेटकपरः मृगपदार्थो न विवक्षितः । आखेटश्च ग्रहणानुकूलव्यापारविशेषः । अन्ये त्विति । एतन्मते मृगरमण इत्यत्र मृगपदार्थो विवक्षित एव । यत्र रञ्जधातुर्मृगनिष्ठग्रहणाद्यनुकूलव्यापारवाचकस्तत्रैवास्य प्रवृत्तिः । चिस्फुरोर्णौ । अत्र चिशब्देन चुरादिस्वादिपठितयोर्ग्रहणम् । भिन्ने तु विशेषः । ननु प्रतिपदोक्तपरिभाषया चुरादिणिच एव णाविल्यनेन ग्रहणमिति मते चिनोतेश्चापयतीत्यनुपपन्नमत आह । इदञ्चुरादीति । ननु कृतात्वस्य द्वित्वेऽभ्यासेऽकारश्रवणापत्तिरत आह । आत्वस्येति । ननूभौ साभ्यासस्येत्यत्र साभ्यासस्येति कार्यिणो नकारस्य विशेषणं स्यादगुणानाञ्च परार्थत्वादितिन्यायादुभावितिच न नकारस्य विशेषणम्भविष्यति । साभ्यासस्येत्यनेनैवाभ्यासावयवनकारस्य नियमे लाभे सत्युभाविति व्यर्थं स्यादिति सामर्थ्यादुभावितिविधेयस्य णस्य विशेषणं स्यात्तथा चाभ्यासस्योत्तरखण्डनकारस्य च ज्ञप्तो लोपमयोरमन्यतरस्यामित्यत्रैव स्थानषष्ठीनिर्दे-

ज्ञानिवृत्तरापत्तिरत आह । साभ्यासस्येति । गुण. कृतात्मसंस्कार इतिन्यायेन प्रकृते गुणानाञ्चेत्यस्य बाध इति भावः । व्याख्यानादिति । लक्ष्यानुसारिव्याख्यानादित्यर्थः । इदञ्च प्रकृतसूत्रभाष्ये साभ्यासस्य द्वयोरिष्टमित्यनेन स्पष्टम् । अत एव । उक्तार्थस्यैवाभिप्रेतत्वादेव । अत एव । अभ्यासश्रवणस्येष्टत्वादेव । अभ्यासेनेति । विना तद्योगमित्युक्तत्वेन सहार्थे तृतीया । तदनुवादकम् अनित्तेरितिसूत्रसिद्धार्थानुवादकम् । अत एव । उभावित्यस्य विधेयविशेषणत्वादेव । अत्पूर्वस्येतिवदिति । तस्य यथा स्थानिविशेषणत्वेन षष्ठ्यन्ततया निर्द्देशः कृतस्तद्वदित्यर्थः । अन्यथा । उभौग्रहणाभावे । सन्नन्तः सन्नतश्चेत्येवोपात्तञ्च तु लिट्पदमपि तदभिप्रायमाह । ईर्ष्यतेराम इति । आद्यव्याख्याने । तृतीयव्यञ्जनस्येतिव्याख्याने ॥

## इति हेतुमण्ण्यन्तविवरणम् ।

धातोः कर्मणः समानकर्त्तृकात् । अत्र केचित् । प्रकृतसूत्र एवात्मन इत्युपादेयम् । तदेवोत्तरसूत्रेऽप्युपकरिष्यति । आत्मन इति प्रकृतसूत्रे धातोरित्यस्य विशेषणम् । षष्ठ्यर्थश्चात्र कर्त्तृत्वमिति समानकर्त्तृकादित्यस्य लाभो भविष्यति । तदेवेच्छायामित्यस्य च विशेषणम् । प्रकृतेऽपि षष्ठ्यर्थः कर्त्तृत्वमेवेत्युभयोरर्थयोर्लाभे समानकर्त्तृकादिति व्यर्थमित्याहुः । अत्रेदं वक्तव्यम् । आत्मन इत्यत्राकृतस्य स्वरितत्वस्य कल्पनयोत्तरत्र सम्बन्धस्य प्रत्याख्यातत्वा चैकात्मबोधकत्वकल्पनायाश्च गौरवमिति स्पष्टमेव । किञ्चैकस्यात्मन इत्यस्य परम्परया धातुपदस्योभयविशेषणत्वमिच्छायामित्येतद्विशेषणत्वन्तु साक्षादित्येतत्कल्पने समानस्वभावविरोधः । किञ्च गरुडवदित्यात्मन इतिपदस्योभयविशेषणत्वं शरुदुवरित इसिन्यायविरुद्धम् । आत्मनश्चोभयविशेषणत्वे तु मनोव्यापारगौरवमधिकं स्पष्टमेवेति । अत एव । मन आर्द्धधातुकत्वादेव । तर्हि गुणाभावार्थम् । यद्यस्माद्-

धातुकत्वस्य सत्त्वादत्र गुणस्य प्राप्तिरेव नास्तीति किद्वविधानवैयर्थ्यं स्पष्टमेवेति भावः। कर्मण इत्यस्याभावेऽपि यथा कर्मण इत्यस्य लाभस्तम्प्रकारमाह। प्रत्ययवाच्य इति। प्रत्यासन्ना। शीघ्रोपस्थितिकत्वेन। धातोरितिपदस्यार्थविशिष्टतत्तद्धातूपस्थापकतया विशेषणतयाऽर्थस्यापि तस्यामुपस्थितौ विषयत्वादिति भावः। दुर्भगेत्युत्तरमिति। कर्मण इत्यस्याभावे समानकर्तृकाद्धातोरित्यनेन यस्य यस्य समानकर्तृकत्वं तस्य सर्वस्योपस्थितौ करणभूतार्थवाचकादपि यतिकञ्चित्कर्मिकायामिच्छायामपि स्यादिति भावः। रुदविदमुष। रुद्साहचर्याद्विदेरेव ग्रहणमिति शङ्कां वारयितुमाह। लक्ष्यानुरोधादिति। अन्यथा। उगलुकर्षाभावे। कित्वाभावेन। इको झलितिसूत्रप्रवृत्तेः प्राप्तिकित्त्वाभावेन। एकाजित्येवेति। एकाच उपदेश इत्यत एकाज्ग्रहणमनुवर्तत इत्यर्थः। ननु परत्वेन षत्वकत्वयोरिति। अत्र लक्ष्ये षत्वकत्वयोः प्रवृत्तिर्भवतीत्येतावतैव षत्वकत्वयोरित्युक्तन्त्वेव क्रमः कत्वात्पूर्वं षत्वाप्राप्तेः किन्तु कत्वे षत्वे च परत्वात् कृते इति विवक्षितम्। षत्वस्येति। कत्वस्याप्युपलक्षणमिदम्। अपवादत्वादिति। कृतेऽपि तेनेडागमोऽस्य प्राप्ते। एतेन प्रतिपदोक्तत्वेन किरश्च पञ्चभ्य इति कृतेपीट् सनि वेत्यनेन पुनरिट् स्यादित्यपास्तम्। इको झल्। नन्विदं सूत्रं व्यर्थम्। एतद्धि गुणाभावार्थम्। स च येन नाप्राप्तिन्यायेनाज्झनगमामिति दीर्घविधानेन सिद्धः। न च गुणे कृते दीर्घो गुणस्वरूप एव भविष्यतीति फलाभावात्सदा दीर्घाप्राप्तेः कथं येन नाप्राप्तिन्याय इति वाच्यम्। पर्जन्यवल्लक्षणन्यायेन तदापि प्राप्तेः। न च गुणाभाव इव चिकीर्षतीत्यत्रेत्वाभावोऽपि स्यादिति वाच्यम्। दीर्घस्येत्त्वनिमित्ततया तद्बाधायोगात्। यो दीर्घश्रवणान्तरत्रापि गुणाभावरूपो दीर्घस्योपकारो भविष्यतीति तत्रापि पर्जन्यन्यायेन दीर्घः स्यादेव। मिञ्धातोः सनि दीर्घे मीग्रहणेन तस्य ग्रहणं यथा स्यादित्येवमर्थन्दीर्घत्वस्य चारितार्थ्यान्न गुणबाधकत्वमित्यपि न। तत्र दीर्घाभावेऽपि गुणविषये आत्वे-

कृते माग्रहणेन तद्ग्रहणसिद्धेः । न च कुटादिपठिताभ्यां गुधुभ्यां सनि गुणाभावस्य ङित्वेन सिद्धेर्जुगूपतीत्यत्र दीर्घस्य चरितार्थत्वात्कथङ्गुणबाधकत्वमिति वाच्यम् । उहनीत्यत्र सिद्धेऽज्ग्रहणस्य गुणाभावप्रवृत्ती ज्ञापकत्वसम्भवात् । न च वक्ष्यमाणरीत्याऽज्झनगमामिति सूत्रेऽजादेशगमेरित्यर्थलाभोऽज्ग्रहणसत्त्वे भवति । सम्प्रति तु कथमिति वाच्यम् । सनीत्यस्यावृत्त्या सन्निमित्तकगमेरित्यर्थेन तल्लाभसम्भवादिति चेत । इ॰ रान्ताद्येत्युत्तरार्थत्वात् । न च तत्रैव पठनीयं योगविभागो व्यर्थ इति वाच्यम् । दीर्घविधानस्य विषये बाध्यसामान्यचिन्ता भवताऽवश्य वाच्याऽन्यथापुरस्तादपवादन्यायेन दीर्घस्य णिलोपबाधकत्वमेव स्यात् । एवं सति यथा गुणस्यायं बाधकस्तथा णिलोपस्यापि बाधक स्यादिति क्विचविधानमर्थवदित्यभिप्रायात् । णिलोपोदाहरणं ज्ञीप्सतीति । अत्र हि णेर्गुणदीर्घलोपा प्राप्तास्तत्र विशेषाभावादनवकाशत्वेन दीर्घत्वमुभयोर्गुणलोपयोर्बाधकं स्यात् । येन नाप्राप्तिन्यायेन गुणस्यैव बाधकन्दीर्घत्वमिति तु न शङ्क्यंबाध्यस्य भेदेनापेक्षायां स न्यायो न तु सामान्यचिन्तायाम् । षष्ठ्या विपरिणम्यत इति । अन्तपदार्थान्वयीत्यादिः । अज्झनगमा सनि । अत्र गमशब्दो नामादेशगमपर । जिगमिषत इत्यत्र दीर्घापत्तेरत उक्तमजादेशगमेरिति । एतादृशार्थलाभस्त्वत्रैवाज्ग्रहणेन भवति । एतद्धि अजन्तानामित्यर्थलाभायोपात्तम् । एतद्भावेऽप्यत्र श्तिपरिभाषयोपस्थितस्याच इत्यस्याङ्गविशेषणतयाऽजन्तानामित्यस्य लाभः स्यादेव । न चाचश्च इतिपरिभाषयोपस्थितमच इतिपदं हनगम्विशेष्यबोधकमेव भविष्यतीति वाच्यम् । हनगमामितिबहुवचनानिर्देशस्यैव सति वैयर्थ्यापत्तेः । एवञ्चाजितिपदं पठनं गमविशेषणमिति । तादृशार्थलाभस्य सनीतिपदस्यावृत्तिकल्पने तु न बहुवचनसामर्थ्यं कल्पयमाक्षेश इत्यवधेयम् । तत्र । गमेरिङ्डितिसूत्रे । सर्वोपि । स्थानाज्झ आदेशरूपश्च । स्थाम्यामादिति । सनि चेतिसूत्रभाष्यमूलकत्वाम्यामादित्यर्थ । स्थानम्यस्य ग्रहणन्तु प्रतिप॰

द्योक्तत्वात्स्यादयमेव । तथाऽदेशस्यापि ग्रहणम् । तत्र भाष्ये इणवदिक इत्येव । अधिजिगमिषति । अधिजिगमिषत इत्युक्तम् । अत्रेडागमदर्शने-नादेशस्यापि ग्रहणम् । ररो ल्युप । व्याख्यानादिति । दिधुतिषते । दि-द्योतिषत इत्यादीड्घटितप्रयोगदर्शन मूलकशास्त्रमादित्यर्थः । सामान्या-पेक्षेतीति । इदम्प्राधामनुरोधेन । भाष्यरीत्याह । धी चष्टीति । सामान्या-पेक्षज्ञापकत्वाभावेप्येषिपिषतीत्यस्य सिद्धिमाह । किञ्चेत्यादिना । नैरर्थ-क्यादिति । एतच्च सनः समात्रस्य द्वित्वमितिमतेन । तदा तस्यानर्थकत-याऽप्रत्ययत्वेनार्धधातुकत्वाभावादिति भावः । यदि तु धात्ववयवप्रका-रसहितद्विर्वचनन्तदोहरएवहस्य इत्यसनैरर्थक्ये न सन्ग्रहणेनाग्रहणा-दिडागमस्सम्यत इतीत्यस्य धानावप्तिरिति रूपासिद्धरिति बोध्यम् आ-प्ज्ञप् । इह ज्ञपीत्यनेन चुरादिण्यन्तस्य ग्रहणे णिच ईकारादेशे ईप्सती-तिरूपासिद्धिरत आह । अयादिभिरिति । अनन्त्य इति । आटपसाहच-र्यात्तदपिधातोरप्यनन्त्यस्यैवत्वमिति भावः । यदि पूर्वेति । अत्र यदीत्यु-पादानाद्वृद्धिशब्दसाहचर्यात्दीर्घशब्दोच्चारणेन विहितदीर्घस्यैव ग्रहणे स्य-मनन्त्यस्येति न वाच्यमिति ध्वनितम् । इदञ्च व्याख्यानं ज्ञपीतिणिजन्ता-नुकरणमितिमतेन।यदि तु पान्तानुकरणमेव ज्ञपीति त्विका निर्देशस्तद। णिचोऽप्राप्तिरेवेति बोध्यम् अत्र लोपो । अत्रेत्येतद्बोध्याकाङ्क्षाशान्त्यर्थं-कमाह । ममिमीत्यादौति।लोपस्याविकारत्वादिति । लोपागमवर्णविका-रज्ञो हि सम्यग्वेदान् परिपालयिष्यतीत्यत्र भाष्ये लोपपदोपादानेऽपि विका-रपदोपादानात् । नानर्थक इति परिभाषाप्रत्याख्यान पक्ष आह । पद्यास-मीति । ईरसंतोरपत्र शास्त्रप्रवृत्तिक्रममाह । पूर्वत्रासिद्धीयमिति । एतेना-त्र पस्फेन सिद्धादिद्वितीयस्येत्यनेन प्सशब्दस्य द्वित्वमितियुक्तन्तादिरस-म् । मन्याप्ज्ञपीत्यत्र प्रतिपदोक्तस्याचुरादिपठितस्यैव ग्रहणस्याव्यमत आह । ह्रस्वविहितेति । गुणस्य बाप इति । रपद्योपाविति यमादित्या-दिः । आद्यद्वायाममर्षानेन मन्निति भ्रमणारणायाह । आगङ्काविषयार्थेति।

व्याख्यानादिति। गामादाग्रहणेष्वविशेष इति परिभाषया माग्रहणेन सर्वेषाङ्ग्रहणे सिद्धे तत्साहचर्यान्मीशब्दांशेऽपि न्यायप्रवृत्तिः । न चैवं दिवादिपदितमीङ्धातोरपि ग्रहणापत्तिरिति मिनातिमिनोत्योरित्यनुपपन्नमिति वाच्यम् । इको झलितिसूत्रभाष्ये मीग्रहणेन कृतदीर्घमिनोतेर्ग्रहणेनोभयोर्ग्रहणस्यैव प्रतिपादितत्वात् । द्वयोरिति । शक्लृ इक्वौ शकविभाषित इत्यनयोः। किन्वात्। हलन्ताच्चेति किन्वात्। वचनम् । मुचोऽकर्मकस्येति वचनम् । इदमुपलक्षणम् । अभ्यासलोपार्थमित्यपि बोध्यम् । आख्यानादितिवचनपठितप्रकृतिप्रत्यापत्तिरितिवचनस्य ज्ञापकत्वमितिभ्रमवारणायाह । युग्ययोगमिति । एतच्च आख्यानादिति वचनस्यप्रकृतिप्रत्यापत्तिरित्यस्य परे तु मतोक्तरीत्या ज्ञापकत्वासम्भव इतिमतेन । तत्परिभाषाभावः। निमित्तापायपरिभाषाभाव. । सिद्धे सतीतिन्यायेन स्तौतिण्योरित्यस्य नियमार्थत्वे लब्धे एवकारोव्यर्थ इत्यत आह । एवकार इति ।मुमूषु इहेति । सन्नन्तादिट् । अयादेशे यलोपः । पेत्युच्यमाने यत्र कृतपत्वस्य सनोऽकारान्तस्य श्रवणन्तत्रापि नियमः स्यादित्यत्र न स्यात् । षणीत्युक्ते तु इड्विशिष्टस्यार्थवत्त्वान्न षण्ण्देन ग्रहणम् । शपा सहैकादेशेतु विकरणानामनर्थकतया सिशिष्टस्यार्थवत्त्वमस्त्येव । परिषिषिषतीत्यत्र स्तौतिण्योरितिनियमेन व्यावृत्तिशङ्कायामाह । स्तौतिण्योरिवीति। प्रतीषिषतीत्यत्र द्वितीयषकारे मन्त्वबुद्धया तन्निरूपिताङ्गत्वस्य पीत्यत्र सम्भवेनाऽऽननगमाशिति दीर्घः प्राप्नोभीत्यत आह । अभ्यासान्तस्येति । आप्योक्तरीत्येति । तावेव सुतिहो यौ ततः परौ सैव च प्रकृतिराद्या समुदायपदत्वमेतेनेति यथोक्तन्त्नरीत्याप्रथमपिशब्दे सर्वे सर्वपदादेशा इतिन्यायेन स्थानिवन्नबुद्धो तत्परत्वस्य तदन्तस्य द्वितीयसनि च न सन्बुद्धिरागन्तुकानामनि सन्निवेश इति न्यायादिति द्वितीयसः प्रत्ययपदेनाङ्गसंज्ञासूत्रस्थेन न ग्रहणमिति भाव. । अप्रत्ययतर्यति। न पादिशमन्ययोरिति पत्वमप्यु-गरगणरत्वप-

यस्य न सनादिति वाच्यम् । पूर्वत्रासिद्धीयमद्विर्वचन इतिवचनेन कृतपत्वस्य द्वित्वमित्यभ्युपगमात् । ननु यदि नेषीत्यास्याङ्गत्वन्तदा सनयत इतीत्वमपि न स्यादत आह । श्रुतिपापीति । अङ्गावयवेति । न चाभ्यासान्तस्य नाङ्गत्वमिति प्रागुक्तमिति कथं सनि परे यदङ्गन्तदवयवत्वमिति वाच्यम् । सनि सति यत्किञ्चिन्निरूपिताङ्गादवयवस्य ग्रहणात् । न च यंर्यमीतियङन्तात्सनि यंयमिषत इत्यत्रेत्वापत्तिः सन्निमित्ताभ्यासस्याङ्गावयवस्य ग्रहणात् । अङ्गत्वञ्च सन्निरूपितमन्यनिरूपितं वेत्यन्यदेतत् । एवमपि प्रतीपिपतीत्यत्र षण्परत्वात्स्तौतिण्योरितिनियमेन षत्वमत्र न स्यात्पूर्वत्रासिद्धीयमद्वित्व इत्यनित्यस्यात्वादप्रवृत्तिरितिपक्ष इत्याशयेन कस्य चिच्छङ्कामाह । धातूपेति । षण्परत्वमिति । इदं वस्तुस्थितिकथनम्न त्वस्येदानीमुपयोगः । न षण्परत्वमिति । एवञ्च तद्विषये शङ्कैव नेति भावः।द्विःप्रयोगपक्षे सन्त्यबुद्धिवत्प्रत्ययावयवत्वबुद्धिरपि सकारेऽस्तीति भावः । प्रत्ययत्वन्तु न सकारे गृह्यते प्रत्ययावयवत्वन्तु गृह्यते इति तु विरुद्धमाभातीति नायम्प्रकारः साधुः किन्तु कृतपत्वस्य द्विर्वचनमित्येव युक्तमिति वक्तव्ये तथानभिधानं स्वरूपव्याक्रियैयं पराक्रियेति न्यायेन । भयमत्ययान्तादिति । शैशिकादित्यत्राध्यात्मादित्याठञ् । अत्र शैषिकाच्छैषिको नेतिवार्त्तेऽपि सरूप इत्यस्य सम्बन्धो योऽप्यस्तत्फलमाह । शब्दमेवेत्येवेति । अत्र शालीयेयाध्ययमेवेति मूलपाठः । अत्र । शैषिकादिति वाच्ये । अत एव । शैषिकादित्युपादानेन निषेधादेव । अत्र प्रातिपदिकत्वेन त्यान्तम्याप्युपस्थितिरस्तीति भावः । सत्यभिधान इति । घटस्यत्वमित्यादिप्रयोगाभिधाने । अर्थान्तरे । कुत्साद्यर्थे । तेन । शब्दरोऽर्थतो वेतिकथनेन । षष्ठीसमर्थादिति । अत्र यथासङ्ख्यं नान्वयः । तद्वापि युवता । मत्वर्थीयाम्मतुबादेः प्रतिषेधं युवता । समानपदौ । समानार्थपृष्ठौ तृतीयदाध्यार्थे विशेषमाह ।सनि स्वर्धेति॥

॥ इति सन्नन्तविवरणम् ॥

धातोरेकाचो हलादेः । द्योलकमिति । एवञ्च पुनः पुनरुत्पत्तिकत्व-रूपम्पौनःपुन्यन्धातुवाच्यन्तत्पुनःपुनःपदसमभिव्याहारे प्रतीयते । न चैकस्याः क्रियायाः पुनपुनरुत्पत्तिर्न सम्भवतीति कथमेतदिति वाच्यम्। यथाऽवयवसमूहरूपक्रियायाः प्रारब्धापरिसमाप्तत्वरूपस्य वर्त्तमानत्वस्याऽसम्भवेऽपि विवक्षितक्रियासमूहस्य विलक्षणबुद्धिविषयस्य तादृशवर्त्तमानत्वव्यवहारस्तथा सजातीयानेकसमुदायावयवकस्य समूहस्यैकबुद्धिविषयत्वे नैकत्वविवक्षया तादृशसमुदायस्य समुदायान्तरस्य सजातीयस्य पुनः-पुनरुत्पत्तिर्यत्र तादृशस्थले पापच्यत इतिप्रयोगस्तादृशसमुदायविवक्षया भवति एवञ्च द्योत्यार्थस्य विशेषणतया पुनः पुनरुत्पत्तिकैककर्तृका वर्त्त-माना पचिक्रियेत्यादिरीत्या बोधः पापच्यत इत्यादितो भवति। तस्य । द्विर्वचनविधायकवचनस्य । न तत् । न द्विर्वचनम् । यत्र तु कृत्स्ना विवक्षिता क्रिया पुनःपुनरुत्पन्नेति विवक्षा तत्र भवत्येव द्विर्वचनमित्याह । भृशार्थ इति । तथैव पौनःपुन्ये यङि द्वित्वस्य प्रसक्तिस्तु नेत्याह । पौनःपुन्ये यङि त्विति । धातोरेवेति । द्रव्यन्तु स्वभावतः सिद्धरूपमेव प्रतीयते शब्दशक्तिस्वभावादिति शेषः । भृशमीक्षते इत्यत्र हलादित्वाभावाद्यथोऽभावेऽपि भृशं शोभत इत्यर्थविवक्षायां शुभधातोः प्राप्तिशङ्कायाम्भाष्यप्रामाण्यादेव यङोऽनभिधानन्तादृशस्थल इत्याह। अनभिधानादिति । फलमिदमिति । याज्ञिकमतप्रतिपादितेभ्यो यङ्विधानम् । स्पष्टम्भाष्य इति । एवं हि तत्रोक्तम् । एकाऽच्हलादिग्रहणं किमर्थम् । जागर्त्ति भृशम् । ईक्षते भृशमिति । एकाऽच्हलादिग्रहणे चोक्तम् । तत्र तावदुक्तङ्कर्मसमानकर्तृकग्रहणानर्थक्यमिच्छाभिधाने प्रत्ययविधानादकर्मणो गम्यमानकर्तृकाद्वा अनभिधानादि इहाप्येकाऽच्हलादिग्रहणानर्थक्यङ्क्रियासमभिहारे यङ्वचनात् अनेकाचो हलादेस्त्वनभिधानमिति । तत्राप्ययमनभिधानमाश्रयितव्यम् । क्रियमाणे च्येकाऽच्हलादिग्रहणे यत्रैकाचो हलादेर्योऽपवादनेन यङर्थस्याभिधानम

भवति न भवति तत्रोत्पत्तिः । तद्यथा भृशं शोभते भृशं रोचते । यत्र चानेकाचोऽहलादेर्वोत्पद्यमानेन यङाऽर्थस्याभिधानम्भवति तत्रोत्पत्तिः । अटाट्यते अरार्यते । अशाश्यते । सोसूच्यते । मोमूत्र्यते । वार्त्तिकोक्तमूर्णोतिग्रहणन्तु न कार्यमित्याह । यथान्यासेपीति । नुवद्भावेनास्माद्यथाऽऽमो अभाव एवमायश्च भवति तथा यङपि भविष्यतीति भावः । एतेन । भाष्योदाहरणादितिकथनेन । यस्त्रतीति । न चैवं स्वरिदूठाच्चयितरीत्यस्य निर्देशस्य परिभाषायां ज्ञापकत्ववर्णनासङ्गतिः । प्रकृते यथा द्वित्वम्प्रति कार्यित्वेऽपि दीर्घम्प्रति निमित्तत्वम्भवति तथा प्रकृतेऽपि गुणम्प्रति कार्यित्वेऽपि निषेधम्प्रति निमित्तत्वादितिवाच्यम् । निषेधस्य पशुदास्वन्यायेन विध्यङ्गतया विधीयमानकार्यसत्वं स्वस्थिन एकत्वमित्यभिप्रायेण ज्ञापकत्वसम्भवात् । नित्यङ्कौटिल्ये गतौ । अवधारणार्थं इति । नित्यशब्दस्य कौटिल्य एवान्वयो न तु क्रियायाम् । धातोरेकाच इतिसूत्रे भाष्य इति । धातोरेकाच इति सूत्रं यस्मिन्प्रकरणे तत्प्रकरणस्य व्याख्यानपरे भाष्य इत्यर्थः । तेनैवं विषभाष्यस्य नित्यकौटिल्य इति सूत्र एव सत्त्वेऽपि नासङ्गतिः ॥ तद्विषयस्यैव । लुपसदेतिसूत्रविषयस्य । भृशं जपति ब्राह्मणः । भृशं समिधो दहतीत्येवोक्तम् । अतोऽपि । असाङ्गत्यादपि । अत एव । गत्यर्थेभ्यः क्रियासमभिहारे यङः साध्वादेव । एवमेव । योगद्वयोदाहरणार्थप्रदर्शकवाक्ये विशेषासंप्रत्ययादित्यत्रैवोत्तरयोरित्यस्यान्वयेनैव । यत्र । पूर्वसूत्रे ॥ तत् । नित्यग्रहणम् । तत्प्रत्याख्याने । नित्यग्रहणस्य प्रत्याख्याने । भावगर्हायामेव । भावो धात्वर्थस्तद्गर्हायामित्यर्थः । इदमपि । एवकारघटितवाक्येन व्याख्यानमपि ॥ पूर्वसूत्रस्थनित्यग्रहणस्य सम्बन्धेन हि यत्नायेवमुक्तम् । कैयटीयं व्याख्यानं दूषयति । यश्चेति । तस्य न्यायस्य । तत्रकौण्डिन्यन्यायस्य । अपरिहार्यमिति । उत्सर्गप्राप्तियोग्ये विषयेऽपरितार्थविषयत्वादित्यर्थः । तथा तु न प्रकृते । कुटिलं व्रजति वाव्रजत इत्यत्र क्रि-

धातोरेकाचो हलादेः । द्योतकमिति । एवञ्च पुनः पुनरुत्पत्तिकत्वरूपम्पौनःपुन्यन्धातुवाच्यन्तत्पुनःपुनःपदसमभिव्याहारे प्रतीयते । न चैकस्याः क्रियायाः पुनःपुनरुत्पत्तिर्न सम्भवतीति कथमेतदिति वाच्यम्। यथाऽवयवसमूहरूपक्रियायाः प्रारब्धापरिसमाप्तत्वरूपस्य वर्त्तमानत्वस्यासम्भवेऽपि विवक्षितक्रियासमूहस्य विलक्षणबुद्धिविषयस्य तादृशवर्त्तमानत्वव्यवहारस्तथा सजातीयानेकसमुदायावयवकस्य समूहस्यैकबुद्धिविषयत्वे नैकत्वविवक्षया तादृशसमुदायस्य समुदायान्तरस्य सजातीयस्य पुनःपुनरुत्पत्तिर्यत्र तादृशस्थले पापच्यत इतिप्रयोगस्तादृशसमुदायविवक्षया भवति एवञ्च द्योत्यार्थस्य विशेषणतया पुनः पुनरुत्पत्तिकैककर्तृका वर्त्तमाना पचिक्रियेत्यादिरीत्या बोधः पापच्यत इत्यादितो भवति। तस्य । द्विर्वचनविधायकवचनस्य । न तत् । न द्विर्वचनम् । यत्र तु कृत्स्ना विवक्षिता क्रिया पुनःपुनरुत्पन्नेति विवक्षा तत्र भवत्येव द्विर्वचनमित्याह । भृशार्थं इति । तथैव पौनःपुन्ये यङि द्वित्वस्य प्रसक्तिस्तु नेत्याह । पौनःपुन्ये यङि त्विति । धातोरेवेति । द्रव्यन्तु स्वभावतः सिद्धरूपमेव प्रतीयते शब्दशक्तिस्वभावादिति शेषः । भृशमीक्षते इत्यत्र हलादित्वाभावाद्यङोऽभावेऽपि भृशं शोभत इत्यर्थविवक्षायां शुभधातोः प्राप्तिशङ्कायाम्भाष्यमामाण्यादेव यङोऽनभिधानन्तादृशस्थल इत्याह। अनभिधानादिति । फलमिदमिति । याज्ञिकप्रतिपादितेभ्यो यङ्विधानम् । स्पष्टम्भाष्य इति । एवं हि तत्रोक्तम् । एकाज्झलादिग्रहणं किमर्थम् । जागर्त्ति भृशम् । ईक्षते भृशमिति । एकाज्झलादिग्रहणे चोक्तम् । तत्र तावदुक्तञ्चैर्समानकर्तृकग्रहणानर्थक्यमिच्छाभिधाने प्रत्ययविधानादकर्मणो ह्यसमानकर्तृकाद्वा अनभिधानादि इहाप्येकाज्झलादिग्रहणामर्थक्यङ्क्रियासमभिहारे यङ्वचनात् अनेकाचो हलादेश्चानभिधानमिति । तत्रावश्यमनभिधानमाश्रयितव्यम् । क्रियमाणे त्वेकाज्झलादिग्रहणे यत्रैकाचो हलादेर्योरऽप्यामेन यङार्थस्याभिधानन्न

त इत्यत्र इङ्गुणयोरापादनपरभाष्यविरोधात् । नित्यग्रहणसम्बन्धं नाप्यर्थासङ्गतिरिति तन्नादिशेषे निरूपितम् । तदाह । एतच्चेति । सिचो यङि । यद्यप्युपसर्गात्सुनोतिसुवतीतिसूत्रं सात्पदाद्योरितिनिषेधस्य बाधकन्तथापि सिचो यङीतिसूत्रं सर्वस्य बाधकम् । विनिगमनाविरहात् । श्नापा निर्द्देशस्य । फयतेरितिश्नपा निर्द्देशस्य । फलधातुर्भ्वादिरेवेति । एतेनादादौ कस्य चिन्मते कसेतिपाठेऽपि तस्य व्यावृत्तिः । अजन्ताभ्यासस्येति । दीर्घोऽकित इत्यत्र दीर्घश्रुत्योपस्थितस्याच इत्यस्याभ्यासविशेषणत्वादेतल्लाभः । अन्तरङ्गत्वात्तुकीति । दीर्घादितितुको वर्णमात्रापेक्षत्वेनान्तरङ्गत्वादित्यर्थः । अपवादत्वाद्येन नाप्राप्तिन्यायेनापवादत्वात् । तेषाम् । अभ्यासविकाराणाम् । तेषु व्यवस्थामाह । तत्रेति । अत एव । बाध्यस्य पूर्वमप्रवृत्तिरितिस्वीकारादेव । मीमांसत इत्यत्र मान्वधेतिसूत्रविधीयमानदीर्घो यद्यप्यन्तरङ्गस्तथापि पूर्वमप्रवर्तते लक्ष्यानुसारात् । हन्तेर्हिंसायाङ् घ्नीभावो वाच्यः । यद्यप्यत्र ह्नीत्वं वास्तु । अभ्यासाच्चेतिकुत्वे नेष्टसिद्धिर्भविष्यति । तथापि प्रक्रियालाघवाय घ्नीभाव एव कृतः । घ्नीभावस्य द्वित्वोत्तरप्रवृत्तौ दोषादाह । अत्रेति । यङ्लुकि नेति । न लुमेतिनिषेधात् । अन्योक्तिङ् खण्डयति । एवञ्चेति । अत एव । प्रत्याख्यानस्यानभिप्रेतत्वादेव । अत एव । रुग्रिकौ चेतिसूत्रे ऋदुपधस्येत्यस्य सम्बन्धादेव । तृक्षमृक्षादाविति । तृक्ष गतौ । मृक्ष सङ्घाते । आदिना स्तृक्ष गतौ । वृक्ष वरण इत्यनयोः सङ्ग्रहः । ई घ्राध्मोःह्रस्वेकारादेशेऽप्यकृत्सार्वेति दीर्घेण यद्यपि जेघ्रीयत इत्यादि सिध्यति तथाप्युत्तरार्थन्दीर्घोच्चारणमित्याह । दीर्घ इति । अन्यथा विषयसप्तमीत्याभावे ॥

## ॥ इति यङन्तविवरणम् ॥

यङोऽचि च । व्याख्यानादिति । अच्प्रत्ययपरकस्यैवोदाहरणस्य यो-

वासमभिहाराप्रतीतेरिति । अत एव । अर्थयोर्बाध्यबाधकभावाभावादेव । यदुदाहृतो भाष्य इति । अटाट्यते । अरार्यत इति यथा । प्रत्याख्यातमिति । तच्च प्रागुपपादितम् । अनुवर्तमानमिति । अत्र लोपोऽभ्यासस्येत्यतोऽनुवर्त्तमानम् । ग्र इतिनिर्दिशस्य गॄ शब्दे इतिक्र्यादिपठितस्यापि सम्भवादाह । गिरतेरेवेति । तुदादेरेवेत्यर्थः । व्याख्यानादिति अचि विभाषेतिसूत्रे यङीत्यस्यानुवृत्तिपक्षे यङ्निमित्तस्य गिरते रेफस्येति कथनमूलकव्याख्यानादित्यर्थः । अपवादत्वादिति । संयोगादिविषयेऽपवादत्वादित्यर्थः । अन्तरङ्गत्वञ्चोपसर्गद्योत्यर्थान्तर्भावेन धातोः पूर्वमेव वृत्तेः स्वीकारेण यथा पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेतिमतेऽपि टः पूर्वम्प्रवृत्तत्वा सुट् कात्पूर्व इतिसूत्रस्थं कात्पूर्वङ्ग्रहणम्प्रत्याख्यातन्तथाथात्रापि सम्शब्दद्योत्यार्थविशिष्टक्रियायोगात् पीनः पुन्यविषया यङः प्रागुपसर्गयोगेन बोध्यम् । सूत्रभाष्यध्वनितेनेति । सुट् सर्वतोऽन्तरङ्गतरको भवतीतिभाष्यध्वनितेनेत्यर्थः । अत एवैतदुत्तरम्भाष्य एव संस्कृषीष्ट ऋतश्च संयोगादेरितीट् प्राप्नोति संस्क्रियते गुणोऽर्तिसंयोगाद्योरिति गुणः प्राप्नोतीतिशङ्कायाः सुटष्टकारमकृत्वाऽसत्त्वं स्वीकृत्य संयोगादित्वाभावेन परिहारे कृते संस्करोतीत्यत्र तिङ्ङतिङ इतिनिघातो न प्राप्नोतीति दूषणेनाभक्तत्वपक्षस्य परिहारे कृते सति परिहारो न कृरः । एतद्ग्रन्थव्याख्यानावसरे कैयटेनापि सुटः परादित्वमुपपाद्येड्गुणयोः प्रतिषेधो वक्तव्य एवेत्युक्तम् । एतेन सुटः सकारेण संयोगादित्वादृतश्चेतिसूत्रेऽसुट इति वक्तव्यमङ्गुणोऽर्तीत्यत्रासुट इति वक्तव्यमितिप्रतिषेधवचनन्ध्वनितन्तथा यद्विचेत्यत्राप्यसुट इति वक्तव्यमिति भावः । यत्त्वत्र कैयटेनेहविधावेकाच उपदेशेऽनुदात्तादितिसूत्रादुपदेशपदसंबन्धेनोपदेशे संयोगादित्वाभावादिटो गुणोऽर्तीतिसूत्रे नित्यं छन्दसीतिसूत्रान्नित्यग्रहणमनुवर्त्य न गुणस्य परिहार इति समाधानान्तरन्दर्शितन्तत्तु न युक्तम् । संयोगसंज्ञासूत्रभाष्ये प्रत्येकं संयोगसंज्ञेति पक्षे संस्कृषीष्ट संस्क्रिय-

विधीनां वैकल्पिकत्वेन लोडतिरिक्ते निषेधप्रवृत्तेर्लाभादत आह । अत एव । भाष्यायाम्प्रयोगाभावादेव । लेटि उदाहृतमिति । ननु भाषायामिति शेषः । तस्य । यङ्लुगन्तस्य बोभू इत्यस्य । समुदायस्य शब्दान्तरत्वादिति भावः । नियम इति । एवञ्च प्रकृतिग्रहण इत्यस्य ज्ञाप्यवचनस्याभावेऽपि निषेधस्य प्राप्तेर्नियमोपपत्तिरिति भावः । प्रकृतिग्रहणे यङ्लुगन्तस्यापीतिवचनस्वीकारेऽपीष्टासिद्धिरित्याह । द्विःप्रयोगत्वेऽपीति । अत एव । समुदायस्य शब्दान्तरत्वादेव । रूपमसिद्धमिति । एवञ्च ढ्लोपपदघटकटशब्दे नैतत्सूत्रविधेयरेफस्य ग्रहणन्न भविष्यतीति भावः । एतत्सूत्रेति । ढ्लोपसूत्रेत्यर्थः । नन्वयं ग्रन्थो हल्ङ्याप्सूत्रस्थशब्दरत्नग्रन्थेन सह विरुध्यते तत्र हि हल्ङ्यापः सोरित्येव सूत्रयितुमुचितमिति मनोरमास्थमुपदन्तिसोरप्युपलक्षणत्तेनाऽविभा राज्यमिति सिद्धमत्रह्यविभर स इति स्थिते सकारस्य संयोगान्तलोपे रेफस्य रो रीति लोपे ढ्लोप इति दीर्घोऽन्यथा न स्यात्संयोगान्तलोपस्यासिद्धत्वादित्युक्तम् । यदि ढ्लोपसूत्रस्यपूर्वग्रहणेन पूर्वत्रासिद्धमित्यत्राग्रहणत्तदाऽविभा राज्यमित्यस्यानायासेन सिद्धिर्भवितीति चेन्न । अस्य शेखरग्रन्थस्य सामान्यापेक्षज्ञापकत्वाभिप्रायकत्वं शब्दरत्नग्रन्थस्य तु यथा नगुम इतियोगविभागेनक्वचिदसिद्धत्वाभावः कल्प्यते तथाऽजर्घा इतिभाष्योदाहरणेन प्रामाणिकप्रयोगस्थले प्रयोगदर्शनेनासिद्धत्वाभावसिद्धी सामन्यापेक्षज्ञापकत्वाश्रयणे मानाभाव इत्याशयात् । वस्तुतस्तु बहुषु स्थलेषु प्रयोगाणामप्रामाणिकत्वस्य निश्चेतु मशक्यतया सामान्यापेक्षज्ञापकत्वमेव युक्तमिति बोध्यम् । प्रत्ययलक्षणेन यङ्निमित्तस्यानिदितामितिनलोपस्य शङ्कायामाह । नलोपस्तु नेति । लुका लोपादिति । नलुमताङ्गस्येतिनिषेधादिति शेषः । अनरथासामानरापेक्षत्वानङ्गीकारे सूत्रस्यमाष्यविरुद्धमिति । तत्रयथाऽद्धुं भातुक इत्यस्य परसप्तमीत्यपक्षे बभूवेत्यत्र भूसोरित्यनेन लिटि परत्वाद्विस्ये परस्य भूभावे पूर्वस्य श्रवणप्राप्नोती-

यूय इत्यस्य भाष्येऽन्यत्र च प्रदर्शनपरकव्याख्यानादित्यर्थः । स च । वाक्यभेदेन विधीयमानो लुक् च । भाष्यस्वरस इति । तत्र हि यान्ति यियन्ति सुवन्ति अयुवन् । ऊर्णुवन्तीत्येषामसंयोगपूर्वोवर्णत्वाजादौ सार्वधातुके इत्यर्थेनानेकाज्ग्रहणेनाटोऽसिद्धत्वेन च सिद्धौ यङ्लुगर्थं भुग्रहणमित्युक्त्वा योयुवन्तीनां वृषभं रोरुवन्तीनां वृषभमित्यत्र छन्दस्युभयथेत्यनेनार्द्धधातुकत्वात्सिद्धमित्युक्त्वा एवन्तर्हि सिद्धे सति यद्भुग्ग्रहणं करोति तज्ज्ञापयत्याचार्यो भाषायामपि यङ्लुग्भवतीत्युक्तम् । ततो येभिदीति चेछिदीत्यं तत्सिद्धम्भवतीत्युक्तम् । एवं विधप्रयोगद्वयस्यैवोपादानान्न सर्वत्र भाषायाम्भवतीति कल्प्यते । प्रयोगद्वयोदाहरणमुपलक्षणमिति तु प्राञ्चः । अन्तरङ्गत्वादितीति । अत्रान्तरङ्गत्वमप्राथमिकप्राप्तिकत्वरूपम् । लुक्त्वाच्चेत्यपीति । सर्वविधिभ्यो लुको बलवत्त्वात् । न चायमिति । श्तिपा शपेतिपरिभाषासत्त्वादिप्राचीनरीत्येयमाशङ्का । तस्य सूत्रस्य । प्रत्ययलोप इतिसूत्रस्य । तन्निषेधाभावे । श्तिपाशपेतिनिषेधाभावे । तदुक्तनियमार्थमिति । अत्रैव यङ्लुगन्तादितिनियमार्थम् । अत एव । अर्थान्तरवृत्तेर्धातोरिदं रूपमित्यस्याभिप्रेतत्वादेव । उक्तरीत्या । प्रत्ययलक्षणसूत्रस्य नियमार्थत्वेन । प्रत्ययलक्षणेन । यङ्त्वस्य प्रत्ययासाधारणत्वात् । ननु भूसुवोरितिगुणनिषेधो यङ्लुकि भाषायामेतन्नियमस्वीकारे सुधातोरपि यङ्लुकि भाषायान्निषेधाप्रवृत्तिः स्यादत आह । सङ्कोचे मानाभावेनेति । सुधात्वंशे सङ्कोचे मानाभावेनेत्यर्थः । लोट्येवेति । यद्वा तादृशनियमस्वीकारे यङ्लुकि भाषायान्निषेधाप्रवृत्तिलाभेऽपि छन्दसि लडादावपि निषेधः स्यादत आह । संकोच इति ॥ नियमसंकोचे मानाभावेनेत्यर्थः । तत्र सूत्रे । भूसुवोरितिसूत्रे । सर्वत्र गुण एव लभ्यत इति । एकाच्त्वस्य तत्राभावात् । अत एव । उक्तस्य द्विविधनियमस्याभिप्रेतत्वादेव । नोद्भावितेति । तत्र गुणस्यैवेत्यादिति शेष. । ननु लोट्येवेतिनियमार्थं दभिप्रेतस्तर्हि निपातनवैयर्थ्यम् । छन्दसि सर्व-

विधीनां वैकल्पिकत्वेन लोडतिरिक्ते निषेधाप्रवृत्तेर्लाभादत आह । अत एव । भाष्यादावप्रयोगाभावादेव । लेटि उदाहृतमिति । नतु भाषायामिति शेषः । तस्य । यङ्लुगन्तस्य बोभू इत्यस्य । समुदायस्य शब्दान्तरत्वादिति भावः । नियम इति । एवञ्च प्रकृतिग्रहण इत्यस्य ज्ञाप्यवचनस्याभावेऽपि निषेधस्य प्राप्तेर्नियमोपपत्तिरिति भावः । प्रकृतिग्रहणे यङ्लुगन्तस्यापीतिवचनस्वीकारेऽपीष्टासिद्धिरित्याह । द्विःप्रयोगस्त्वेऽपीति । अत एव । समुदायस्य शब्दान्तरत्वादेव । रूपमसिद्धमिति । एवञ्च ढ्रलोपपदघटकढशब्दे नैतत्सूत्रविधेयरेफस्य ग्रहणन्न भविष्यतीति भावः । एतत्सूत्रेति । ढ्रलोपसूत्रेत्यर्थः । नन्वयं ग्रन्थो हल्ङ्याप्सूत्रस्थशब्दरत्नग्रन्थेन सह विरुध्यते तत्र हि हल्ङ्यापः सोरित्येव सूत्रयितुमुचितमिति मनोरमास्थतुमदस्तिसोरप्युपलक्षणन्तेनाऽविभा राज्यमिति सिद्धमत्र ह्यविभर स इति स्थिते सकारस्य संयोगान्तलोपे रेफस्य रो रीति लोपे ढ्रलोप इति दीर्घोऽन्यथा न स्यात्संयोगान्तलोपस्यासिद्धत्वादित्युक्तम् । यदि ढ्रलोपसूत्रस्थपूर्वग्रहणेन पूर्वत्रासिद्धमित्यत्राग्रहणन्तदाऽविभाः राज्यमित्यस्यानायासेन सिद्धिर्भवितीति चेन्न । अस्य शेखरग्रन्थस्य सामान्यापेक्षज्ञापकत्वाभिप्रायकत्वं शब्दरत्नग्रन्थस्य तु यथा नसुम इतियोगविभागेनक्वचिदसिद्धत्वाभावः कल्प्यते तथाऽजर्घा इतिभाष्योदाहरणेन प्रामाणिकप्रयोगस्थले प्रयोगदर्शनेनासिद्धत्वाभावसिद्धौ सामान्यापेक्षज्ञापकत्वाश्रयणे मानाभाव इत्याशयात् । वस्तुतस्तु बहुषु स्थलेषु प्रयोगाणामप्रामाणिकत्वस्य निश्चेतु मशक्यतया सामान्यापेक्षज्ञापकत्वमेव युक्तमिति बोध्यम् । प्रत्ययलक्षणेन यङ्निमित्तस्यानिदितामितिनलोपस्य शङ्कायामाह । नलोपस्तु नेति । लुका लोपादिति । नलुमताङ्गस्येतिनिषेधादिति शेषः । अन्यथा सामान्यापेक्षस्यानङ्गीकारे सूत्रस्थभाष्यविरुद्धमिति । तत्रयथाऽर्द्धधातुक इत्यस्य परत्वमसीत्यपक्षे बभूवेत्यत्राभूस्तेरित्यनेन लिटि परत्वाद्द्वित्वे परस्य भूभावे पूर्वस्य श्रवणम्प्राप्नोती-

त्युक्तन्तथा यङन्तत्वाद्धुन्तो द्विस्त्वोत्तरं यथादेशश्चेत्स्यात्तदा परस्यैव स्यादितिभाष्यविरुद्धमित्यर्थः । निरूपितमिति।परस्यैव धातुत्वमितिनिरूपितमित्यर्थः । तस्माद्दध्यादित्यस्य प्रामाणिकत्वे यङ्लुकि श्तिपा शपेतिनिषेधानित्यत्वस्य सामान्यापेक्षज्ञापकेन पूर्वोक्तस्य ज्ञापकसिद्धस्य सर्वत्रेतिपरिभाषाया अप्रवृत्तिस्वीकारेणैकाज्ग्रहणघटितस्य तद्विषयकस्य यङन्तद्विर्वचनविधायकवचनस्याप्रवृत्तिरितिप्राचीनरीत्या निर्वाहः कार्यः । यङ्लुकश्छान्दसत्वे तु न कापि क्षतिः । एतेन । इतिमत इत्युपादानेन। वहिरङ्गत्वेनेति ।अपरनिमित्तकस्य तपरसूत्रस्यान्तरङ्गत्वेन तद्दृष्ट्या गुणस्य वहिरङ्गत्वादिति भावः । ननु तपरत्वेन चञ्चूर्यत इत्यत्र गुणाभावयत्योपूर्यत इत्यत्र गुणो यङ्लुकोरिति गुणोऽप्यभ्यासस्य न स्यादतआह । उदोष्ठ्य इति ।भाष्येति। तथा च भाष्यप्रामाण्यान्न तत्र तपरत्वेन व्यावृत्तिरिति भावः । अकित इत्यस्य न किदकित्तस्येत्यर्थे ह्याकः कित्यादीर्घनिषेधः स्यात्तथा तु न बहुव्रीहिसमासाश्रयणादित्याह । नविद्यत इत्यादिना । तत्सामर्थ्यात् । तादृशसमासाश्रयणसामर्थ्यात् । तद्ग्रहणस्य । इत्यच्छब्देन तद्ग्रहणस्य । इदम्भाष्येति । यङो वेतिसूत्रविहितस्येडागमस्याभावेऽव्ययीत् इत्याकारकस्य रूपस्याभिधानं माधवानुरोधेनेत्यर्थः । यङो लुका लुप्तत्वादिति । अत्र लुकेत्युपादानादन्तरङ्गानपीतिन्यायप्रवृत्तिः सूचिता । लुगुत्तरमपि नेत्याह । लुप्तत्वादिति।ननूरदत्वस्याप्यन्याधनिमित्तप्रत्ययनिमित्तकतया तस्येह लुकाऽपहारान्न लुमतेतिनिषेधादप्रवृत्तिरापत्तिरत आह । उरदत्वमिति । निरूपितमिति । उरदत्वस्य साक्षात्प्रत्ययनिमित्तकत्वाभावेऽप्यभ्यासस्य य ऋवर्णस्तस्यान्त्यमित्येवाद्वित्वम्परन्द्वित्वनिमित्तप्रत्ययनिमित्तकन्तथ प्रत्ययेऽथाङ्गसंज्ञायाश्च लुमतेतिनिषेधाप्रवृत्तेः ।उरदत्वमङ्गस्याद्धारा परनिमित्तकत्वमाश्रित्य स्यानियङ्गायोऽयं परस्मिन्निमित्तेन प्रवर्तते यत्रचेति भाष्योदाहरणादिति भावः । चाचर्तीति । अभ्यासविकारे चाभ्यवायभावानाश्रयेन पूर्वं ह-

रत्वस्य तत उरदत्वस्य प्रवृत्तिस्ततो हलादिः शेषदीर्घयोरिति क्रम इ-
त्याशयेन शङ्क्यते । न च चार्त्तीत्यत्रेति । तपरत्ववैयर्थ्येनेति । अभ्यासह्र-
स्वत्वेन सर्वस्य ऋत्त्वादिति भावः। नित्यत्वेन। रीगागमापेक्षया नित्य-
त्वेन । तदभावात् । ऋत्त्वस्याभावात् । इत्युपक्रम्येति । रीग्विधाय-
कसूत्रभाष्ये तपरकरणे किम्प्रयोजनम् चाकर्त्ति चाकर्ति इत्युपक्रम्येत्य-
र्थः । पचतीत्यत्र यो नयेदिति । एतन्ते एवंविधशब्दस्य परिनिष्ठितत्वे-
नोपपादयेदित्यर्थः । अन्यत्र । लङतिरिक्ते । आरतीति । ऋधातोर्यङ्लु-
गन्ताल्लटि ऋरदादेशे रुगागमस्योत्तरखण्डादेशस्य यणि रो रीति लो-
पे ढ्रलोप इति दीर्घः । यणः स्थानिवत्त्वमिति । अचः परस्मिन्नित्यने-
न स्थानिवत्त्वमित्यर्थः । तदनवयवधात्ववयवादेशस्येति । अभ्यासानव-
यवधात्ववयवादेशस्येत्यर्थः । अत्र तदनवयवधात्ववयवेति समुदाय उत्तर-
खण्डपरः । धातुत्वस्योत्तरखण्डे विश्रान्तेः सिद्धान्तिततया धात्ववयव-
स्याभ्यासानवयवत्वविशेषणस्याव्यावर्त्तकतया यथाश्रुतशब्देनैव निवेशस्या
पुष्टार्थत्वापत्तिरन्यथा स्यात् । तथा सत्युत्तरखण्डादेशस्येत्येववक्तव्ये एव
युक्तिर्वैचित्र्याय । तत्प्रतिबन्धकम् । अभ्यासकार्यप्रतिबन्धकम् । अभ्यास-
स्यासवर्णे इत्यसवर्णग्रहणेनेत्यस्यासवर्णेति पदं गृह्यते परस्मिन्नित्यर्थेना-
भ्यासस्यासवर्णे इतिसम्पूर्णसूत्रेणेत्यर्थः । एतद्धीयायेत्यादावभ्यासस्येयङु-
वङौ स्यातामित्यर्थमारभ्यते । यद्युत्तरखण्डादेशस्य स्थानिवत्त्व स्याश-
दा सवर्णपरत्वमेवायातीति सूत्रवैयर्थ्यं स्पष्टमेव । अत्र तत्प्रतिबन्धकमि-
त्युपादानादरिरिषिषादित्यस्य सिद्धिः ॥ ऋधातोरेव यङ्लुगन्ताल्लिङि ति-
बादेशे यासुटि रिङादेशेऽपि तस्य स्थानिवद्भावेनाच्त्वादभ्यासावयव-
स्य रिगागमस्येयङादेशः ॥ न चास्मिन्कृतेऽपि यलि परतो लोपः स्या-
दिति वाच्यम् । रिङादेशस्य बहिरङ्गत्वेनासिद्धत्वात्स्थानिवद्भावाच्च ॥
अत्रेदमवधेयम् । यदि रिङादेशान्तरङ्गत्वात्पूर्वमेवेयङादेशस्तर्हि प्रतिबन्ध-
केतिविशेषणवैयर्थ्यं न ॥ किन्त्वतत्प्रतिबन्धकेत्यस्य निवेशोऽचकार्यादित्य-

त्युक्तन्तथा यङन्तस्याद्धन्तं द्वित्वोत्तरं यथादेशश्चेत्स्यात्तदा परस्यैव स्यादिति भाष्यविरुद्धमित्यर्थः । निरूपितमिति। परस्यैव धातुत्वमिति निरूपितमित्यर्थः । तस्माद्ध्यादित्यस्य प्रामाणिकत्वे यङ्लुकि श्तिपा शपेतिनिषेधानित्यत्वस्य सामान्यापेक्षज्ञापकेन पूर्वोक्तस्य ज्ञापकसिद्धस्य सर्वत्रेतिपरिभाषाया अप्रवृत्तिस्वीकारेणैकाज्ग्रहणघटितस्य तद्विषयकस्य यङन्तद्विर्वचनविधायकवचनस्याप्रवृत्तिरिति प्राचीनरीत्या निर्वाहः कार्यः । यङ्लुकश्छान्दसत्वे तु न कापि क्षतिः । एतेन । इतिमत इत्युपादानेन । बहिरङ्गत्वेनेति । अपरनिमित्तकस्य तपरसूत्रस्यान्तरङ्गत्वेन तद्दृष्ट्या गुणस्य बहिरङ्गत्वादिति भावः । ननु तपरत्वेन चर्कूर्यंत इत्यत्र गुणाभावयत्पोपूर्यंत इत्यत्र गुणो यङ्लुकोरिति गुणोऽप्यभ्यासस्य न स्यादत आह । उदोष्ठ्य इति । भाष्येति। तथा च भाष्यप्रामाण्यान्न तत्र तपरत्वेन व्यावृत्तिरिति भावः । अकित इत्यस्य न किदकित्तयोरित्यर्थे ह्याकः कित्वाद्दीर्घनिषेधः स्यात्तथा तु न बहुव्रीहिसमासाश्रयणादित्याह । नविद्यत इत्यादिना । तत्सामर्थ्यात् । तादृशसमासाश्रयणसामर्थ्यात् । तद्ग्रहणस्य । अस्यच्छब्देन तद्ग्रहणस्य । इदम्बाधवेति । षष्ठो येतिसूत्रविहितस्येडागमस्याभावेऽयर्यंत् इत्याकारकस्य रूपस्याभिधानं माधवानुरोधेनेत्यर्थः । यङो लुका लुप्तत्वादिति । अत्र लुकेत्युपादानादन्तरङ्गानपीतिन्यायप्रवृत्तिः सूचिता । लुगुत्तरमपि नेत्याह । लुप्तत्वादिति । ननूरदत्वस्याभ्यासनिमित्तप्रत्ययनिमित्तकतया तस्येह लुकापहारान्न लुमतेतिनिषेधादप्रवृत्त्यापत्तिरत आह । उरदत्वमिति । निरूपितमिति । उरदत्वम् साक्षात्प्रत्ययनिमित्तकद्वित्वविषयाभ्यासस्य च अयणंस्तत्याप्यमित्येवानुत्पन्नरन्द्वित्वनिमित्तप्रत्ययनिमित्तकत्वाच भवत्येवाङ्गसंज्ञायाञ्च लुमतेतिनिषेधाप्रवृत्तेः । उरदत्वमङ्गसंज्ञाद्वारा परनिमित्तकत्वमाश्रित्य स्थानिवद्भावोऽपि परनिमित्तकेन प्रयते मर्मर्येति भाष्योदाहरणादिति भावः । चाचर्तीति । अभ्यासविकारे बाध्यबाधकभावाभावेन पूर्वं इ-

स्पष्ट एव । असम्बद्धं स्यादिति ॥ तथा व्याख्याने भवितेत्यादाविटो गुणः स्यादेवेति तदसम्बद्धमित्यर्थः ॥ एवम् ॥ गुणवृद्धिनिषेधविधायकत्वे ॥ भाष्योक्तरीत्येति ॥ तत्र यथा नन्दनदधि कारकदधि इत्यत्र समासात्प्राग्विभक्तिस्तस्या लुकि अङ्गत्वाभावात्कथं युवोरनाकावित्यस्य प्रवृत्तिरितिशङ्कायाम्न चेह परन्निमित्तमाश्रीयते अस्मिन्परतो युवोरनाकौ भवत इति किन्तर्हि अङ्गस्य युवोरनाकौ भवतः ॥ अङ्गसंज्ञा भवति प्रत्ययलक्षणेनेत्युक्तम् ॥ तृज्वद्भावस्येति ॥ तत्र यथा पञ्चक्रोष्टु कुलमित्यत्र तृज्वद्भावो न प्राप्नोतीतिशङ्कायाम्भाष्ये न चापरन्निमित्तमाश्रीयते किन्तर्ह्यङ्गस्य क्रोष्टुस्तृज्वदिति ॥ अङ्गसंज्ञा भवति प्रत्ययलक्षणेनेति प्रतिपादितम् ॥ अस्यापि ॥ अभ्यासलोपस्यापि ॥ तदभावे ॥ धात्वितिपदाभावे ॥ तोतोर्त्तीति ॥ तुर्वीधातोरिदं रूपम् ॥ भाष्यात्त्वेषामिति ॥ तत्र हि क्ङिति चेतिसूत्रे तन्निमित्तग्रहणं कर्त्तव्यङ्किम्प्रयोजनमुपधारोरवीत्यर्थमित्युक्तम् ॥ तत्र रोरवीत्यर्थेन नार्थः ॥ छान्दसमेतत् ॥ दृष्टानुविधिश्छन्दसि भवतीत्यभिधानाय वा पूर्वस्मिन्योगे यदार्द्धधातुकग्रहणन्तदनवकाशन्तस्यानवकाशत्वाद्गुणो भविष्यतीत्युक्तम् ॥ आर्द्धधातुकग्रहणस्यापि न धातुलोपइतिसूत्रेरोरवीतीत्यस्य सिद्धिः प्रयोजनमुक्तम् ॥ यदि तेन निषेधाभावेऽप्यनेन निषेधः स्यात्तर्हि तत्रार्द्धधातुकग्रहणस्य वैयर्थ्यापत्तिरिति भावः ॥ अभाव एवेति ॥ यदि तोतोर्त्तीत्यादीनामभिधानं स्यात्तदा पूर्वस्मिन्योगे यदार्द्धधातुकग्रहणन्तदनवकाशमित्यनवकाशत्वोक्तिर्व्यर्था स्यादिति ॥ प्राविधानस्येति ॥ भाविपरपरत्वेन ह्यागमप्रत्ययस्य तद्यत्रास्ति तत्रैव विषयत्वव्यवहार इति भावः ॥

## ॥ इति यङ्लुगन्तविवरणम् ॥

सुप आत्मनः क्यच् ॥ अत्र युष्मद् युवन्तपरत्वस्यापह्वारकमात्मन इ-

त्र काययादीनामित्येतिह्रस्वत्वाभावपक्षे उत्तरखण्डावयवदीर्घस्य स्थानि-
वद्भावेन ह्रस्वत्वबुद्ध्या सन्वद्भावे सन्यत इतीत्वापत्तिः ॥ एतस्य स्थानि-व
द्भावस्याभ्यासकार्यप्रतिबन्धकत्वाभावाद्दतो अभ्यासकार्येत्यत्राभ्यासपदम-
भ्यासत्वाश्रयमात्रपरं वाच्यम् ॥ एवञ्चावकाणदित्यत्राभ्यासत्वाश्रयस्य स-
न्वद्भावे कर्त्तव्ये उत्तरखण्डावयवाजादेशस्य स्थानिवत्त्वनिषेधान्न सन्व-
त्वम् ॥ तत्प्रतिबन्धकेतिपरित्याजनमेव उत्तरखण्डपदमुत्तरखण्डावयवाच्-
परम् ॥ एवञ्चारिरिप्रियादित्यत्र रिङादेशापेक्षयाऽन्तरङ्गत्वादियङित्येव
स्वीकार्यमिति तत्त्वम् एवमेवारतीत्यत्रापि दीर्घे कर्त्तव्ये यणादेशस्य
स्थानिवत्त्वनिषेधः ॥ अरियूतीतीति ॥ अत्र यणादेशस्य स्थानिवत्त्वादि-
त्युपपादनन्तत्प्रतिबन्धकेत्युपादानेन । पूर्वोक्तरीत्या तस्य परित्यागे तु
स्थानिवद्भावस्य निषेधः स्यादत आह । परत्वादिनेति ॥ अत्रादिपदो
पादानेनान्तरङ्गत्वस्य परिग्रहः ॥ माधवस्तेऽरतीति ॥ एवञ्च माधवस्तु दीर्घमा-
हेतिमूलोक्तमसङ्गतमिति बोधितम् ॥ मूले भाष्ये ध्वनितमिति ॥ तत्र हि
छ्वोरिति सूत्रे क्ङिद्ग्रहणमनुवर्त्तते उताहो नेति वि । रे, एतावानेव वि-
शेषः अनुवर्त्तमाने क्ङिद्ग्रहणे ऊः पत्वं वक्तव्यमननुवर्त्तमाने तु ऊः आ-
देशे शान्तत्वादेव प्रष्टेत्यादिरूपसिद्धौ व्रश्चेतिसूत्रे छग्रहणञ्च कार्यम् ।
अत्रैतावानेवेतियदुक्ता ऊङ्भाविभ्यो यङ्लुग् नास्तीति ध्वनितमन्यथा-
दिवेर्यङ्लुगन्तस्य देदेति देदेपीत्यादावूठो भावाभावाभ्यां विशेषस्य स्पष्ट-
तया एतावानेवेत्येवकारो विरुध्येतेति ॥ तद्विषयकमिति ॥ तत्रैव वि-
चारकरणात् ॥ ज्वरत्वरेत्यूठ्भाविन इत्युक्तन्तत्र प्रसङ्गादाह । मय बन्ध-
नेति ॥ ज्वरत्वरअत्र छ्वोरितिसूत्रादूठिति एकवचनान्तमनुवर्त्तते क चि-
त्तु ज्वरत्वरेत्यूठावित्युच्यते तत्र मतभेदमाह ॥ अत्रोपधाया इत्यादिना।
आदेशिभेदेन ॥ अन्त्योपधारूपादेशिभेदेन ॥ इण्परिभाषानिषेधे स्थि-
रेति ॥ भाष्यंप्रठोपनिमितद्ध प्रयुक्ते यत्र गुणवृद्धी स्याताम् तत्रेक्पदको-
पतिष्ठत इत्यर्थकवचनेनेक्परिभाषायोभ्यनिषेधे सति परिभाषानिषेधः

सन्नियोगशिष्टत्वाङ्गीकारेण । नाना मातेति । तत्र हि सलोपसन्नियोगेनायं क्यङ् विधीयते तेन यत्र सलोपस्तत्रैव क्यङित्येकवाक्यतयेदं विधायक-मित्येकम् । अन्वाचयशिष्टः सलोप इति निष्कृष्टन्द्वितीयम् । सलोपो वा। ओजसोऽप्सरसो नित्यम्। अपर आह सलोपोऽप्सरस एवेति नाना मतमि-त्यर्थः ॥ एतत्तत्त्वमिति ॥ शत्रुपर्यायात्सपत्नशब्दाच्छार्ङ्गरवादिङीनन्ताज्ञा-पितपुंस्कात्कर्तरि क्यङ्मानिनश्चेति पुंवत्त्वे सपत्नायत इति रूपम् । वि-श्वाह निबन्धनसंस्कारविशिष्टे रूढो यः सपत्नी शब्दस्तस्मात्क्यङि भाषि-तपुंस्कत्वाभावान्न पुंवत्त्वमित्यादि तत्त्वमित्यर्थः । जातेश्चेतिसूत्रे भा-ष्ये स्पष्टमिति । इदम्प्रागुपपादितम् ॥ आचारेऽवगल्भेत्यपि सुप इति प्रक्रान्तं पञ्चम्यतोऽस्यापि सुबन्तादुत्पत्तिरिति भ्रमवारणायाह ॥ ग-ल्भानुकरणस्येति ॥अस्य ॥ क्विपः ॥ भूतपूर्वादपीतीति॥क्विपि सति प्रत्यया-न्तत्वादाम्भवति यदा त्वनेकाज्ग्रहणङ्क्रियते तदा तु तत्सन्नियोगेनाप्-प्रत्ययस्यानुदात्तत्वानुनासिकत्वप्रतिज्ञाकरणादित्संज्ञया तस्य निवृत्तौ ग-ल्भेति नानेकाजिति कथमेन्न आमित्याशङ्कावारणाय भूतपूर्वादपीत्यु-क्तम् । तत्र प्रमाणमाह । अत एवेति । तादृशार्थस्याभिप्रेतत्वादेव । अ-वजिगल्भिषत इति । अवेत्यस्य पृथक्करणादुगल्भशब्दात्मनि गल्भ् इ-त्यस्य द्वित्वम् । सुबन्तपरतयेति । नमस्त्वाख्यातार्थम्प्रति विशेषणता-स्माप्नुवन्तीत्यर्थस्यान्यत्र प्रदर्शितत्वात् । तत्प्रकृतिके । सुबन्तप्रकृतिके अप्रत्ययेऽपीत्यस्य । नमस्त्वादयस्तावदर्थम्प्रति विशेषणीभवन्तीति नामा-नीत्यर्थस्य मत्वादेव लक्षणेहाश्रिता । पुपुत्रीयिषत्यस्यैव भाष्ये उदाहर-णत्वेन प्रदर्शनात् । कर्मधारयसमासाश्रयणेन नाम्नाभिप्रायात्तोरित्यर्थे यत्राचारक्रियन्नात्मनि ततः कर्तरि क्विप् तत्रैवसमादिति भाष्योदाहरण विरोधः स्पष्ट एव । तदुक्तोदाहरणे यथेष्टमितस्तस्य प्रवृत्तिमभ्युपेत्य नामधातुविषये शास्त्राभावान्न तत्र यथेष्टं प्रयोगमिति तदभिप्राय यथेष्टमि-त्यंशोऽप्यग्निमन्थनं इत्यत्र नास्तीत्याह । आचारक्रियन्नेऽप्य इति ॥

ति विशेषणम् ॥ इच्छायामित्यनुवर्तते ॥ आत्मपदञ्च कर्तृपरम् ॥ कर्त्ता च प्रत्ययप्रकृत्या इषेर्ग्राह्यः ॥ तत्र सुबन्तविशेषणमात्मन इति किमर्थमिति पृच्छति ॥ आत्मन इति किमिति ॥ इति चेति ॥ चेन पूर्वस्य पदसंज्ञा च प्रयोगजनमिति बोधितम् ॥ तदेव स्पष्टप्रतिपत्तये आह ॥ काम्यचीत्यादि । चेन क्वचि परतोऽपि ॥ तेन राजीयतीत्यादेः सिद्धिः ॥ न च क्यचः प्रथमोपस्थितत्वात्तस्यैवेतरस्य काम्यजुपादाने बीजभाव इति वाच्यम् ॥ नः क्य इतिसूत्रस्य तदा विधायकत्वात्क्यचि पदत्वस्य सिद्धेः यद्यपि भाष्ये गोसमानाक्षरनान्तादि पठ्यते तथापि क्यजन्यप्रकृतिकादपि भवतीत्यत्र हेतुमाह ॥ गोसमानाक्षरेति ॥ अत एव ॥ तस्यैकदेशयुक्तित्वादेव ॥ वाक्शब्दस्य वच्धातोः क्विपि निष्पन्नतया क्यचि सम्प्रसारणप्राप्तेराह ॥ अत्रेति ॥ क्यविधायकसूत्रे मान्ताव्ययानामप्रतिषेध इत्येव याहि केत्तद्य यथाश्रुतमसङ्गतम्पुत्रमिच्छतीत्यत्रापि प्रतिषेधापत्तेः ॥ सूत्रन्तु द्विवचनबहुवचनान्तात्मतत्रयविधायकत्वेन चरितार्थमतः शेषपूरणेन मूले व्याख्यातम्मान्तप्रकृतिकेति ॥ अशनायोदन्यधनायाः ॥ एते समुदायाः बुभुक्षादिष्वर्थेषु निपात्यन्ते ॥ प्रकृतवर्थोऽत्र न विवक्षितः ॥ उदन्या तु पिपासा तृषितिकोशात् ॥ अशनशब्दः कर्मल्युडन्तः ॥ कालान्तरोपयोगार्थं योऽशनमिच्छति स्वाशायोदकमिच्छति ॥ दारिद्र्यपीडितः सन् यो धनमिच्छति तत्र न प्रत्ययः ॥ किन्तु धनेसत्यपि धनेच्छारूपगार्द्ध्य एव ॥ अश्वक्षीरेत्यनेन प्रकृतिविशेषोपादानेऽपि वृषस्यन्ती तु कामुकीतिकोशात्प्रकृतयर्थोऽत्रापि न विवक्षितः ॥ तथा च मानुष्यामपि वृषस्यन्तीति प्रयोगः ॥ लालसा ॥ उत्कटेच्छा ॥ विन्तरप्रयोजनमिति ॥ केचित्तु घेटप्रवृत्ययत्र काम्यजन्तात्सन्नत्र सति शिष्टमपि नित्यत्वरक्षितत्वरीयाप्यतामितेरयमर्थं विन्यमितमाहुः ॥ कष्टुः कारड् सलोपश्च ॥ अत्र चकारोन्वाचये ॥ ङेतिलुप्तषष्ठीकम्पृथक्पदम् ॥ तथ कर्तुरित्यस्य विशेषणम् ॥ सलोपो नेति ॥ कर्तृवाचकस्य सान्तत्वविरहात् ॥ तेन ॥ कष्टा

त्युक्तम्। यद्येदन्तेभ्यः सेगोप्रभृतिभ्य आचारे क्विप्स्यात् तर्हि तद्वाप्यविरोधः स्पष्ट एव। द्वितीये ओतः श्यनीत्यत्र शितीति वक्तव्यम्। किम्प्रयोजनम्। उत्तरत्र शिद्ग्रहणाभावायेत्युक्तम्। अत्र ष्ठिवुक्लम्वितिसूत्रे शिद्ग्रहणाकरणप्रयुक्तलाघवन्दर्शितन्न तु तया सत्योकारान्तादाचारक्विपि लटि शपि लोपप्राप्तिरुद्भाविता। तत्र कैयटोऽप्याह। न ह्योतः श्यनोऽन्य ओतः शिदस्तीति। तेन गोप्रभृतिभ्य आचारे क्विब्भावो ध्वनितः॥ तृतीये प्रातिपदिकानाम्प्रतिषेधो वक्तव्यः। गोभ्याम्। नौभ्याम्। स तर्हि प्रतिषेधो वक्तव्यो न वक्तव्यः॥ धातोरिति वर्त्तते॥ क्व प्रकृतम्। लिटि धातोरनभ्यासस्य। अथापि निवृत्तम्। एवमप्यदोषः। उपदेश इत्युच्यते। उद्देशश्च प्रातिपदिकानान्नोपदेश इत्युक्तम्। यद्येजन्तेभ्य आचारे क्विप्स्यात्तदा धातुग्रहणानुवृत्त्या समाधानासङ्गतिः स्फुटैव। भूद्रुगद्दौ पृथ्वीवृक्षयोर्याचकौ। वार्त्तिकोक्तमाधवरीत्येति। तत्र तेन यथा सर्वप्रातिपदिकेभ्य इतिवार्त्तिकस्य दध्यस्यति मध्वस्यति दधिस्यति। मधुस्यतीत्यर्थमर्पमितिशेषादिदन्दधि मधुशब्दविषयमेवेत्युक्तन्तथात्रापि कल्प्यत इति भावः। भाष्ये स्पष्टमिति। तत्र हि कास्प्रत्ययादितिसूत्रविहितस्यामो मकारस्येत्त्वं च। कुतो नेत्याशङ्कायामित्कार्याभावान्न भविष्यति। प्रत्ययान्तद्वयमाम् विधीयते तत्रा नास्ति विशेषः प्रत्ययपरत्वेऽन्तरादयः परत्वे येत्युक्तन्तेन हलन्तेभ्यः आचारे क्विब्भावो ध्वनितः। सजातीयापेक्षत्वादिति। तस्मिन्सूत्रे ञावित्युपादानात्तथा कल्प्यते॥ वृत्रघ्नीत्यसिद्धत्वादिति। अत्र वृत्रहन्शब्दस्य क्विबन्ततया तत्रानुनासिकस्येति दीर्घः स्यात्तथा चास्मात्पुंयोगात् स्त्रियां वृत्तौ नान्तलक्षणे ङीपि कृतेऽल्लोपो न स्यादिति। तदुक्तमिति। कास्प्रत्ययादितिसूत्र इति शेषः। तत्र हि सूत्रवार्त्तिकयोः फलैक्यायैकाज्भ्यः क्विपोऽनभिधानमुक्तम्। तदाहेति। तदभिप्रायेणाहेत्यर्थः। अत एव। अन्याश्रयशिष्टत्वाद्दीकारादेशः चरितार्थमिति। समुच्चयविवक्षायान्तु यत्र हलो लोपमुभयोटोऽन्त्यपरि-

सन एवानुत्पन्नेरिति । प्रकृते यथेष्टमित्यं शास्त्रप्रवृत्तिप्रयोजकस्य समोऽनुत्पन्नेरित्यर्थः । तदेवोपपादयति । अकारस्येति । अग्रेत्यस्य पृथक्करणेन गल्भेत्यस्मात् क्विबन्तात्सन उत्पत्तियोग्या द्वित्वार्थन्तत्र द्वित्वप्रकृते न सम्भवति । यत्र नामघटितधात्ववयवैकाच्त्वयसद्भावस्तत्र द्वित्वस्य प्रवृत्तेः स्वीकारादिति भावः । मूले इत्यादि सिद्धिरिति । आचारेऽर्थे इत्यादि सिद्धिरित्यर्थः ॥ वचनम् । आचारेऽवगल्भेतियचनम् । एषां वोध्यत इति । पूर्वयार्त्तिकेनेति शेषः । प्रत्ययान्तत्वादेवेति । अत एव भाष्ये प्रत्ययान्तादित्यास्यथा स्यादित्येवोक्तं त्वनेकाजित्युक्तम् । एकाज्भ्यो लिङ्गादिप्रातिपदिकेभ्यः । ङ्यन्द्यापइतिसूत्रभाष्यप्रामाण्येन हलन्तेभ्य आचारे क्विप्रभावे तु कादिप्रातिपदिकेभ्य इत्यर्थो वा वाच्यः । फलभेदेऽपि वयेत्तव्यदित्यस्य प्रत्याख्यानन्दृष्टं यद्यपि तथाप्यत्र तथा नास्तीत्याह । यत्र भिन्नेति । इत्यपीति । तथा तु नोक्तमतः प्रत्ययग्रहणापनयनमभिप्रेतमिति भावः । एय तदपनयनसत्राभिप्रेतत्वे । नन्वल्लोपस्यापि प्राप्तित्वात्तस्यानुक्तिः कथमत आह । अतो लोपमिति । फलेच्यायेति । यद्यादन्तेभ्य आचारे क्विप्स्तान्तदा धातुग्रहणसत्त्वे लोपः स्यादनाप इत्युक्ते तु नेति फलभेदः स्पष्ट एव । कस्य स्त्री की । तस्मादाचारक्विबन्ताद्यङ्लुकि लङ्चेकेदित्यस्य सम्भवाभिप्रायेणाह । इकाररूपेति । अवभ्य इति । शपा व्यवधानादसम्भ इत्यर्थः । इको गुणेतीति । अस्य मूत्रस्यभाष्ये त्वत्रान्वयः । यदग्रजेतीति । अस्य सूत्रमुपक्रम्येति शेष । एवञ्चेको गुणेतिसूत्रस्थभाष्यप्रमाण्यादेङ्सेभ्य आचारक्विपोऽभावः ओतः श्यनि आदेच उपदेश इतिसूत्रस्थभाष्यप्रामाण्यादोकारान्तेभ्य एति परित्यज्य सामान्यम एजन्तेभ्य इत्युक्तम् । आद्ये वृद्धिग्रहणस्य प्रयोजननिरूपणावसरे इहार्थमेव सिजर्थं वृद्धिग्रहणं कर्त्तव्यम् सिचि वृद्धिरिक एव यथा स्यादित्येतन्निरूपणावसरे कस्माभिकः प्राप्नोतीतिसिञ्यायां सन्ध्यक्षरस्य प्राप्नोतीति परेण कथिते न धे सन्ध्यक्षरमस्माभी-

अच्चेरित्यस्यानुवृत्तेः सत्त्वादेव अन्यथा। वाध्यसामान्यचिन्ताश्रयणे। अत्रेदम्बोध्यम्। इदञ्च ज्ञापकम्भृशादिपठितसुदुस्पूर्वमनस्शब्दे स्वराति रिक्तविषये। तेन चैत्रः सुमनायत इत्यादौ सुविशिष्टस्य निघातस्ततः परस्यानिघातः। अत एवास्य सिध्यर्थम्भाष्यकृता भृशादिपूपसर्गः पराङ्गवत्स्वरविधाविति वचनम्पठितम्। भृशादि पाठे। भृशादिष्वितराणीत्यनेन भृशादौ पाठे। नित्यात्मनेपदमेवेति। अत्रैव पाठेत्वनेन क्यपि वा क्यष इत्यनेन विकल्पः स्यात्। ककारस्यापीति। न चककारो नः क्ये करस्य विभाषेत्यत्र विशेषणार्थोऽस्तु। लोहितडाजून्य एव क्यप्विधानेन फलाभावात्। वा क्यप् इत्यत्रापि वा यष इत्येवास्तु। उक्तभाष्य इति॥लोहितडाज्भ्यः क्यप्वचनम्भृशादिष्वितराणीतिभाष्येत्यर्थः। कष्टाय क्रमणे। कष्टार्थप्रतिपादकप्रातिपदिकप्रकृतिकसुबन्तात्क्रमणेऽर्थे क्यङ्। स च सुप् कष्टायेत्युपादानाच्चतुर्थी। अत्र सूत्रे क्यङ्ग्रहणमनुवर्त्तते। सपङ्कम्यात्। न च लोहितादिडाजितिसूत्रे क्यप्ग्रहणमकृत्वा लोहितडाज्भ्यो त्रिचेति पठनीयम्। क्यङस्तत्राप्यनुवृत्तिः कार्या। प्रकृते मण्डूकप्लुतिर्न स्वीकार्या वा क्यष इतिसूत्रञ्च न कार्यम्। जित्वादेवोभयपदसिद्धेरिति वाच्यम्। लोहितीशब्दात्कङि क्यङ्मानिनोश्चेति पुंवद्भावापत्तेः। कर्तृगामिक्रियाफलविवक्षायाम्परस्मैपदाभावापत्तेश्चेति। अन्तरङ्गत्वात्। करोत्यर्थस्य शीघ्रोपस्थितत्वात्। वृत्तिसर्गेतिर्तायि॥ तत्रसूत्रेसर्गत्यनेनोत्साह एव प्रामाणिकैरुक्तः। न चैतत्सूत्रभाष्ये क्रमणेऽनार्जवे क्यङ् निपात्यत इत्युक्तत्तेन विरोध इति वाच्यम्। अनार्जवपदेनानृजुः सम्बन्ध उच्यते। भाष्यप्रामाण्याद्भावार्थकोऽप्युत्तरपदवृद्धिःअनार्जवे गम्ये कष्टायेति निपात्यते। क्रमणङ्गमनम्। तच्चनार्जवविषयकं विवक्षितत्त्वेन तद्विषयकोत्साहो गम्यत इत्यभिप्रायेण। मूलकारस्याभिप्रायमाह। कष्टायत इत्युक्त्येति। अन्तरङ्गत्वादिति। करोत्यर्थस्य व्यापारस्य सर्वोपकारकत्वेनान्तरङ्गत्वम्।

प्रापिकवाक्यतया स्यात्तत्रैव प्रत्ययोऽपि स्यादिति भृशग्रहणवैयर्थ्यं दुर्वार-मिति भावः । वक्ष्यमाणेति । उपसर्गसमानाकारमित्यादिरूपमित्यर्थः । अनुयन्धाद्यङ्गस्तु स्वरातो गुण इति पररूपेण द्रष्टव्यः । अन्यथा । अत्र समानाकारमिति पदाभावे । उपसर्गसंज्ञकम्पूर्वपदमित्येवोक्तौ । यत्रोपसर्ग एव पूर्वपदन्तत्राव्याप्तिं वारयति । उपसर्गस्यापीति । उपसर्गसमानाकारेत्युपादानफलन्तु तुन्दपरिमृजादिप्रातिपदिकात्क्यङ्प्रत्ययचिकीर्षायान्न तुन्दे त्यस्य पृथक्करणम् । पूर्वपदमित्युपादानेनान्दोलयिता प्रेङ्खोलयितेत्यत्र आप्र शब्दयोर्धात्ववयवयोर्न पृथक्करणम् यत्र समानावयवत्वम्पूर्वपदस्य तादृशस्यास्ति तत्रैव पृथक्कृतिर्भवति ।अत्राप्रवृत्ते ति । अन्यथा तस्य सुपसमुदायप्रकृतिकतया मनस् स् इत्यस्य यस्मात्सुप्विहितस्तदादिसुबन्तत्वविरहादसम्भवः स्यादिति भाव. । तेन । पृथक्करणेन अत एव।जातस्यप्रभावकल्पनादेव।सोपसर्गादित्यत्रोपसर्गपदमुपसर्गसमानाकारपरम् । अत एव । एकादेशरूपेणेतिव्याख्यानादेव।स्वाशब्ददित्यादौ तूपसर्गसमानाकारस्य सुशब्दादेर्यणादेशेन विकारेऽपि पृथक्कृतिर्भवत्येवेति भाव· । तस्यपृथक्करणेन धातुसंज्ञाप्रयोजके प्रत्यये कृते ततः क्यप्रत्यये च कृते पुनर्यथा समासो भवति तथोपपादयति । अयगरभेती-ति । धातुना । गम्भेतिशब्देन । सर्वत्र । यत्र पृथक्करणन्तत्रैव यत्र न धातुसंज्ञाप्रयोजकप्रत्ययविवक्षा तत्रापि । यथा अश्वगरत्यत्राश्वे त्यस्य गत्याद्यर्थैकदेशागमभावात्सुद्वारकमेव सामर्थ्यमिति । मूले आटः प्रतिषेध इति । उस्यपदान्तादोमाङोर्यतिप्राप्तस्य पररूपस्य प्रतिषेध इत्यर्थः । एतन्निर्देशसामर्थ्यात्प्रकृतेऽर्थवद्ग्रहण इति परिभाषाया. प्रतिपदोक्तपरिभाषायाश्चाप्रवृत्तिरिति बोध्यम् । विशेषपदेनतत्प्रकाशाये तु प्रकृतयाप्तिफोदाहरणविषयेऽप्याङः पृथक्कृतिः स्यादिति वचनात्वय श्वश्रन्दा-दृश्याददन्ताघ्रुटि इत्ये आङ्गागम आटः परो ज्ञापित सवर्णानाडोदेत्यस्य प्राप्तिरेव नास्तीतिराशिं कर्त्योक्तिसम्भवो न स्यादिति भावः । अत एव।

अच्चेरित्यस्यानुवृत्तेः सत्त्वादेव अन्यथा । याच्यसामान्यचिन्तानाश्रयणे । अत्रेदम्बोध्यम् । इदञ्च ज्ञापकम्भृशादिपठितसुदुस्पूर्वमनस्शब्दे स्वरातिरिक्तविषये । तेन चैत्रः सुमनायत इत्यादौ सुविशिष्टस्य निघातस्ततः परस्यानिघातः । अत एवास्य सिध्यर्थम्भाष्यकृता भृशादिपूपसर्गः पराङ्गवत्स्वरविधाविति वचनम्पठितम् । भृशादिपाठे । भृशादिष्वितराणीत्यनेन भृशादौ पाठे । नित्यात्मनेपदमेवेति । अत्रैव पाठेत्वनेन क्यषि वा क्यष इत्यनेन विकल्पः स्यात् । ककारस्यापीति । न चककारो नः क्ये करस्य विभाषेत्यत्र विशेषणार्थोऽस्तु । लोहितडाज्भ्य एव क्यष्विधानेन फलाभावात् । वा क्यष् इत्यत्रापि वा यष इत्येवास्तु । उक्तभाष्य इति॥लोहितडाज्भ्यः क्यष्वचनम्भृशादिष्वितराणीतिभाष्येत्यर्थः । कष्टाय क्रमणे । कष्टार्थप्रतिपादकप्रातिपदिकप्रकृतिकसुबन्तात्क्रमणेऽर्थे क्यङ् । स च सुप् कष्टायेत्युपादानाच्चतुर्थी । अत्र सूत्रे क्यङ्ग्रहणमनुवर्त्तते । मयङ्कृत्न्या । न च लोहितादिडाजितिसूत्रे क्यष्ग्रहणमकृत्वा लोहिताडाज्भ्यो त्रिचेति पठनीयम् । क्यङस्तत्राप्यनुवृत्तिः कार्या । प्रकृते मयङ्कृत्न्तिर्न स्वीकार्या वा क्यष इतिसूत्रञ्च न कार्यम् । जित्वादेवोभयपदसिद्धेरिति याच्यम् । लोहिनीशब्दात्कर्ङि क्यङ्मानिनोश्चेति पुंवद्भावापत्तेः । कर्तृगामिक्रियाफलविवक्षायाम्परस्मैपदाभावापत्तेश्चेति । अन्तरङ्गत्वात् । करोत्यर्थस्य शीघ्रोपस्थितत्वात् । वृत्तिसर्गतायनेष्विति ॥ तत्रसूत्रेसर्गत्यनेनोत्साह एव प्रामाणिकैरुक्तः । न चैतत्सूत्रभाष्ये क्रमणेऽनार्जवे क्यङ् निपात्यत इत्युक्तत्वेन विरोध इति याच्यम् । अनार्जवपदेनानृजुः सम्बन्ध उच्यते । भाष्यप्रामाण्याद्भाष्यार्थकोऽप्युत्तरपदवृत्तिःअनार्जवे गम्ये कष्टायेति निपात्यते । क्रमणङ्गमनम् । तच्चनार्जवविषयकं विवक्षितत्वेन तद्विषयकोत्साहो गम्यत इत्यभिप्रायेण । मूलकारस्याभिप्रायमाह । कष्टायत इत्युक्तत्वेति । अन्तरङ्गत्वादिति । करोत्यर्थस्य व्यापारस्य सर्वोपकारकत्वेनान्तरङ्गत्वम् ।

तत्त्वे । पापार्थत्वे । अस्य । पापार्था इति कथनस्य । अत एव । तदभिप्रायकत्वादेव । कण्वचिकीर्षायामित्यस्य कण्वचिकीर्षारूपेऽर्थे इत्यर्थः प्रतीयते स न युक्त इत्याह । कण्वचिकीर्षायामिति । कर्मणो रोमन्थ। अत्र यद्वृत्तं नायामिति व्याख्यातन्तत्राभिप्रकारमाह । वर्त्तीतीति॥अत एव तन्निरूपितकर्मत्वस्यापि सम्भवः। घरेत्यत्र सम्पदादित्वाद्भावे क्विप् । कैयटोक्तौ प्रमाणमाह । उक्तञ्चेति । उभयत्रान्वयाय मन्यथर्वणमिति व्याख्यातम् ।शब्दवैरकलह।करणशब्दस्य कारकविशेषबोधकतया करणे कारक इत्यर्थः प्रतीयते स तु न युक्तः । शब्दशब्दाद्यर्थस्याक्रियात्वात्तन्निरूपितकारकत्वासम्भवादत आह । व्याख्यानादिति । सुदिनदुर्दिनेत्यादिवार्त्तिकम् । अत्रत्य चकारेण भाष्योक्तानामटाऽट्टाशीकाकोटापीटासोटाप्रुष्टाप्लुष्टानाङ्ग्रहणम् । वेदनेत्यत्र विदधातोर्ज्ञानार्थकाण्णिचि युच् । प्रत्यासत्तिलभ्यार्थमाह । वेदनाकर्त्तृसम्बन्धीति । नमोवरिवश्चित्रङः क्यच् ।वरियस्शब्दोऽव्युत्पन्नप्रातिपदिकं सेवार्थकम् । यद्यप्यत्र क्रियासामान्यार्थककरणपदमनुवर्त्तते तथापि भाष्यीयव्याख्यानात्क्रियाविशेषः क्रमेण विवक्षित इत्याशयेनाह । पूजायामित्यादीति । तदुक्तम्भाष्ये । नमसः पूजायाम्॥वरिवसः परिचर्यायाम् । चित्रङ आश्चर्ये । सूत्रे नमस्यति देवानिति । अत्र नमः शब्दस्य योगेऽपि वृत्तिघटकस्यानर्थकत्वान्न तद्योगे नमः स्वस्तीति चतुर्थी । स एवायमितिप्रत्यभिज्ञयाऽर्थवत्त्वमेवेति चेदुपपदविभक्तेः कारकविभक्तिर्बलीयसीति द्वितीयेति भाष्ये उक्तम् । चतुर्थी तु नमोऽस्तु देवेभ्य इत्यत्र चरितार्था । यत्र नारायणन्नमस्कृत्येति प्रयुज्यते तत्राप्युपपदेतिन्यायेन द्वितीयैव । नमः शब्दस्य निपातस्य द्योतकतया करोतेरत्र स्वनिष्ठपकृष्टत्वप्रकारकज्ञानानुकूलव्यापारवाचितया देवानाङ्कर्मत्वात् । अत एवेयरितार्थतयेति । अस्य चित्रङ इत्युच्चारणस्य सम्यगाद्यप्युपदेशेऽर्थं ङित् । तथापि विशेषविशिष्टप्रयुक्तस्य तदन्तस्य धात्वादौ मनेपदप्राप्तिः सामर्थ्यादेवञ्ज्ञापनेन इति भावः । पुच्छशब्दश्चीव

रा । यद्यपि करण इति प्रागुक्तन्तथापि तत्सूत्रादिभ्यः कर्तृवेदनायामित्यनेन व्यवहितमत आह । अत्र पुच्छादय इति । टिलोप इति । णाविष्ठवत्प्रातिपदिकस्येत्यत्र सामान्यतो णावित्येवोक्तमतोऽस्यापि ग्रहणमिति भावः । तस्य॥टिलोप । तस्य । शब्दान्तरेत्यस्य । कृताकृतप्रसङ्गमात्रेण नित्यत्वस्य लक्ष्यानुरोधादाश्रयणमिति भावः । कैयट इति । एतेन तस्य भाष्यानारूढत्वम्ध्वनितम् । भाष्यसम्मतरीत्या त्वाह । गमकत्वादिति । यद्यपि माणवकम्मुण्डङ्करोतीतिवाक्ये माणवकस्य कर्मसमानाधिकरणत्वमस्ति तथापि वृत्तौ मुण्डीतिणिजन्तस्यार्थो मौण्ड्यानुकूलव्यापार इति मौण्ड्यरूपफलाश्रयत्वान्मुण्डयति माणवकमित्यत्र माणवकपदोत्तरं द्वितीया मौण्ड्याश्रयस्य करणासम्भवादित्याशयेनाह । माणवकमित्यादि । आपुकः प्रातिपदिकावयवत्वाट्टिलोपशङ्कायामाह । विधानसामर्थ्यादिति । एषाम् । सत्यापेतिसूत्रविहितण्यन्तानाम् । अत एव । लुङ्यनभिधानकल्पनादेव । आपुङितिभाष्यमिति । तत्र हि सत्यस्यापुगागमे टिलोपस्य प्राप्तिमाशङ्क्य एवन्तर्ह्यापुट् करिष्यते इत्युक्तम् । आपुटो णिज्भक्तत्वात्तस्मिन् टिलोपेऽपि सत्यापयतीति भविष्यतीत्यभिप्रायः । तदुत्तरमथ वा पुनरस्तु आपुगेव । ननु चोक्तष्टिलोपः प्राप्नोति । आपुग्वचनान्न भविष्यतीत्युक्तम्॥एवमुक्तमिति त्वन्यत्। अत्र णिच आपुडागमपक्षे टिलोपे च सति ततो लुङि चङि द्विर्वचनेऽससत्॥दिति रूपमापुगागमपक्षे तु णौ चङीतिह्रस्वत्वेऽससत्यपदिति रूपादिति लुङ्॥ट्पक्षेऽनभिधानमावश्यकमन्यथा था पुनरस्त्वितिकथनस्य॥स्य सङ्गः स्यात्। अयम्। घप्रत्ययः॥हलन्त॥तत्करोतीति णिचि तु तुल्यापयतीत्येव । परत्वात् ।पुंवद्भावात्परत्वात् ।सदतिदेशसामर्थ्याच्चेति । पुंवद्भावातिदेशसामर्थ्याच्चेत्यर्थः । भवदुक्तरीत्या सर्वत्र टिलोपस्य प्राप्त्या सदतिदेशोऽन्यथा व्यर्थः स्यात् । अत एव । तस्याप्रवृत्तिस्वीकारादेव । अनित्यत्वं श्नसोरल्लोप इति तपरत्वप्रमाणमि-

तत्त्वे । पापार्थत्वे । अस्य । पापार्था इति कथनस्य । अत एव । तदभिप्रायकत्वादेव । कण्वचिकीर्षायामित्यस्य कण्वचिकीर्षारूपेऽर्थ इत्यर्थः प्रतीयते स न युक्त इत्याह । कण्वचिकीर्षायामिति । कर्मणो रोमन्थ। अत्र यद्वर्त्तनायामिति व्याख्यातन्तल्लाभप्रकारमाह । वर्त्तीतीति॥अत एव तन्निरूपितकर्मत्वस्यापि सम्भवः। चरेत्यत्र सम्पदादित्वाद्भावे क्विप् । कैयटोक्तौ प्रमाणमाह । उक्तञ्चेति । उभयत्रान्वयाय मन्त्रग्रथर्वणमिति व्याख्यातम् ।शब्दवैरकलह।करणशब्दस्य कारकविशेषबोधकतया करणे कारक इत्यर्थः प्रतीयते स तु न युक्तः । शब्दशब्दाद्यर्थस्याक्रियात्वात्तन्निरूपितकारकत्वासम्भवादत आह । व्याख्यानादिति । सुदिनदुर्दिनेत्यादिवार्त्तिकम् । अत्रत्य चकारेण भाष्योक्तानासटाट्टाशीकाकोटापीठासोठाप्रुट्टाहणानाद्ग्रहणम् । वेदनेत्यत्र विद्धातोर्ज्ञानार्थकाण्णिचि युच् । प्रत्यासत्तिलभ्यार्थमाह । वेदनाकर्तृसम्बन्धीति । नमोवरिवश्चित्रङः क्यच् ।वरिवस्शब्दोऽव्युत्पन्नप्रातिपदिकं सेवार्थकम् । यद्यप्यत्र क्रियासामान्यार्थककरणपदमनुवर्त्तते तथापि भाष्यीयव्याख्यानात्क्रियाविशेषः क्रमेण विवक्षित इत्याशयेनाह । पूजायामित्यादीति । तदुक्तम्भाष्ये । नमसः पूजायाम्॥वरिवसः परिचर्यायाम् । चित्रङ आश्चर्ये । मूले नमस्यति देवानिति । अत्र नमः शब्दस्य योगेऽपि वृत्तिघटकस्यानर्थकत्वान्न तद्योगे नमः स्वस्तीति चतुर्थी । स एवायमितिप्रत्यभिज्ञयाऽर्थवत्त्वमेवेति चेदुपपदविभक्तेः कारकविभक्तिर्बलीयसीति द्वितीयेति भाष्ये उक्तम् । चतुर्थी तु नमोऽस्तु देवेभ्य इत्यत्र चरितार्था । यत्र नारायणन्नमस्कृत्येति प्रयुज्यते तत्राप्युपपदेतिन्यायेन द्वितीयैव । नमः शब्दस्य निपातस्य द्योतकतया करोतेरत्र स्वनिष्ठपरकृष्टत्वप्रकारकज्ञानानुकूलव्यापारवाचितया देवानाङ्कर्मत्वात् । अवयवेऽपरितार्थतयेति । अस्य निरवहु ... ... सत्त्वाद्यद्यप्युपदेऽयं ह्नित् । तथापि चित्रीयतेतिमनुदात्तय तदन्तस्य। भावादात्मनेपदाप्राप्तेः सामर्थ्यादिवङ्कृत्यम इति भावः । पुष्पभारस्यैव

प्रत्ययादेशत्वे सर्वादेशत्वमन्तस्य न स्यादत आह॥सर्वादेशत्वमिति॥ आ-
तिदेशिकमिति ॥ त्यादपतीत्यादिमूलोक्तम्॥ ननु ण्यादित्वविरहात् क-
थम्भत्वमत आह । इष्ठेति । अतिदेशेनेत्यनेन यचि भमित्यस्याप्राप्तिमङ्गी-
कृत्यैव समाहितम् । न ह्यतिदेशेन णिचः स्यादित्यतिदेशो लभ्यते । इष्ठव-
दित्यत्र सप्तम्यन्ताद्वतेः स्वीकारात् । अत एव श्वयुवेतिसूत्रघटकस्यातद्धित
इत्येतद्बोध्यनिषेधस्याप्रवृत्तिः । ननु श्वादीनां सम्प्रसारणे नकारान्तग्रहण-
मनकारान्तप्रतिषेधार्थमिति वार्त्तिककारोक्तेः कथमत्र सम्प्रसारणमत आ-
ह । मान्तेति । कथं सम्प्रसारणमिति । नान्तत्वविरहात्कथं सम्प्रसारण-
मित्यर्थः । वार्त्तिकैकवाक्यतयेति । अस्यास्यापीत्यत्रान्वयः । तत्साहचर्ये-
ण । अल्लोपोऽन इत्येतत्साहचर्येण । सूत्रान्तरसाहचर्येण व्यवस्थापकमत
आह । अर्थाधिकारेति । टिलोपमभ्युपगम्य सम्प्रसारणाभावमुपपाद्य
टिलोप एव तावद् दुर्लभ इत्याह । किञ्च पपूर्वेतीति । प्रकृतिभावस्य न-
स्तद्धित इतिसूत्रबाधकत्वाङ्गीकारेऽपि भाष्यविरोधः प्राप्नोति । यस्येतिसू-
त्रानन्तरपठितेष्वेव यस्येत्यादौ प्रकृतिभाव इत्यनेन प्रकृतिभावस्य लाभ
इति तद्विरोधशङ्कावारणाय तदभिप्रायमाह । चन्विति । न च पूर्वोक्तरी-
त्या तद्धितत्वाभावात्कथं नस्तद्धित इतिप्राप्तस्यापि प्रकृतिभाव इत्येतदि-
ति वाच्यम् । तद्धितत्वाभावेऽपि ब्रह्मिष्ठ इत्यत्र तस्य दर्शनेन तदतिदेश-
स्य सम्भवात् । न च मूलोक्तरीत्या तद्दर्शनमेव दुर्लभमिति वाच्यम् । व-
क्ष्यमाणरीत्या तद्दर्शनसम्भवात् । तन्नरायेति । वार्णादाङ्गमितिन्यायेत्यर्थः ।
टेरित्यस्याप्राप्ताविति । विन्मतोर्लुक्फलदपवादत्वस्य कथनात् । ब्रह्मिष्ठ इ-
तिरूपञ्चिन्मतुबन्तस्य उत ब्रह्मन्शब्दस्यैवेति विकल्प्य पक्षद्वयेऽपि दूषणमा-
ह । किञ्चेति । तेन।लुका।न पौरस्त्यस्य टेरित्यस्य प्रवृत्त्युत्तरं यदि विन्मतो-
रित्यस्य प्राप्तिस्तदाऽस्यापवादत्वं येन नाप्राप्तिन्यायेन स्यात्तदा प्रवृत्तिमात्रबा-
धः स्यान्नैव तु कथम् । पूर्वं ब्रह्मन्शब्दादिष्ठनि मतुप्प्रत्ययस्यातो नियमो
स्यदंशाधिकविकारमन्त्यैकदेशविकृतन्यायाप्रसरात् मतुप्युद्धरसम्भवादिति

त्यन्यत्रोपपादितम् ॥ अत एव ॥ छन्दस्येतुलोपसत्त्वादेव । मूले । पर्यवयुढदिति । प्रभोपरिवृढ इति निपातनेन ढत्वस्य प्रवृत्तत्वा तत्र यथा वृढशब्दद्वित्वन्तयोर्दिशब्दस्य नेतिध्वनयितुमेतदुपादानम् । उपसर्गसमानाकारस्य परिशब्दस्यदृष्टकृतिरत्र द्रष्टव्या ॥ तद्भावः । ढिशब्दस्य द्वित्ववादिनो भावः । ननु ढिशब्दद्वित्वेऽप्यभ्यासावयवस्य चुत्वे ढत्वस्यासिद्धत्वादौजिढदिति स्यादत आह । द्वित्वे एत इत्यादि । वैयाघ्रपद्यवार्त्तिके । शुष्किकाशुष्कजङ्घा च क्षामिमानौजढश्चेति वार्त्तिके। तत्रैवोक्तमिति । परे त्वित्यादिना प्रत्यादिपठितधात्वन्तुल्यत्वं यत्र तत्रैव स्थानिवद्भाव इत्युक्तम् ननु यदि स्वाशब्दस्याप्यचोञ्णितीतिवृद्धिस्तदास्य सूत्रस्यात उपधा इत्यनेन योगविभागस्य सत्यर्थमित्येवप्रयोजनमुक्तन्तदसङ्गतमत आह । प्राप्नतीत्यादि । अन्तरङ्गत्वादिति । छ्वोरितिसूत्रे सतुक्कग्रहणाद्धि साङ्गनित्या ॥ इतरमानाभावादिति ॥ पदस्य विभज्यान्वाख्याने हि सतुक्कनिर्देशस्य ज्ञापकत्वं सम्भवति ॥ यदि साङ्गनित्या न स्यात्तदा तया परिभाषया शादेशस्याङ्गस्य पूर्वम्प्रवृत्तिः स्यादिति सतुक्कनिर्देशोऽव्यर्थः स्यादितिरीत्या। यदि तु प्रकृते क्रमेणान्वाख्यानमेव कल्प्यते तदा वार्णदाङ्गस्याङ्गबलात्प्राप्तिसमये प्राप्त्या तुकोऽश्रयणाय सतुक्कनिर्देशस्यावश्यकत्वेन तस्याङ्गनित्यत्वे ज्ञापकत्वस्य सम्भवतीति भाव । त्याश्रयेऽपीति । समाननिमित्तिकत्वं समानाश्रयत्वमिति भवत्सम्मतमिति भावः ॥ परत्वात्प्राद्विति ॥ न च प्राग्दीव्यतीयविषये टिलोपस्याप्यप्राप्त्या चारिताभ्योभावात्कथमेतदिति वाच्यम् ॥ क्वतेऽपि टिलोपेऽवशिष्टे आदेशस्य चारिताभ्यं मित्यभिमानात् ॥ वस्तुतष्टिलोपप्राप्तियोग्ये चारिताभ्योभावेन प्राग्यादेशानामपवादत्वमेवेत्याह ॥ चिन्त्येति ॥ अस्यमेव अपवादत्वेन समाधानमेव ॥ अत एव ॥ अपवादत्वादेव ॥ उच्चारणसामर्थ्यादिति ॥ अप्राप्त्यपवादत्वादिति तु नोक्तम् ॥ आदेशात्पूर्वमप्राप्तेः॥ननुवर्णना-

प्रसशादेशत्वे सर्वादेशत्वन्तयन न सवादत आह॥सर्वादेशत्वमिति॥ आतिदेशिकमिति ॥ त्यादयतीत्यादिमूलोक्तम्॥ ननु स्थादित्वविरहात् कथम्भत्वमत आह । इष्ठेति । अतिदेशेनेत्यनेन यचि भमित्यस्याप्राप्तिमङ्गीकृत्यैव समाहितम् । न ह्यतिदेशेन णिच. स्थादित्वातिदेशो लभ्यते । इष्ठवदित्यत्र सप्तम्यन्ताद्वतेः स्वीकारात् । अत एव ययुवेतिसूत्रघटकस्यातद्धित इत्येतद्बोध्यनिषेधसामर्थ्यमिति । ननु श्वादीनां सम्प्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थमितियाष्टिककारोक्तेः कथमत्र सम्प्रसारणमत आह । मान्तेति । कथ सम्प्रसारणमिति । नान्तत्वविरहात्कथ सम्प्रसारणमित्यर्थः । यापिकैकवाक्यतयेति । अस्यास्यापीत्यनेनान्वय । तत्साहचर्येण । अल्लोपोऽन इत्येतत्साहचर्येण । सूत्रान्तरसाहचर्यञ्च व्यवस्थापकमत आह । अर्थाधिकारेति । टिलोपमभ्युपगम्य सम्प्रसारणाभावमुपपाद्य टिलोप एव तावद् दुर्लभ इत्याह । किञ्च पर्यूवतीति । प्रकृतिभावस्य नस्तद्धित इतिसूत्रबाधकत्वाङ्गीकारेऽपि भाष्यविरोध प्राप्नोति । यस्येतिसूत्रानन्तरपठितेष्वेव यस्येत्यादौ प्रकृतिभाव इत्यनेन प्रकृतिभावस्य लाभ इति तद्विरोधशङ्कावारणाय तदभिप्रायमाह । यत्त्विति । न च पूर्वोक्तरीत्या तद्धितत्वाभावात्कथमनस्तद्धित इतिप्राप्तस्यापि प्रकृतिभाव इत्येतदिति वाच्यम् । तद्धितत्वाभावेपि प्रश्लिष्ट इत्यत्र तस्य दर्शनेन तदतिदेशस्य सम्भवात् । न च मूलोक्तरीत्या तद्दर्शनमेव दुर्लभमिति वाच्यम् । वक्ष्यमाणरीत्या तद्दर्शनसम्भवात् । तन्न्यायेति । वार्णादाङ्गमितिन्यायेत्यर्थः । टेरित्यस्याप्राप्ताविति । विन्मतोर्लुकस्तदपवादत्वस्य कथनात् प्रश्लिष्ट इतिरूपङ्मित्तुरन्तस्य उत उत्पन्नशब्दस्यैवेति वितर्क्य पक्षद्वयेऽपि दूषणमाह । किञ्चेति । तेन लुका न चोत्सर्गस्य टेरित्यस्य प्रवृत्त्युत्तरं यदि विन्मतोरित्यस्य प्राप्तिस्तदास्यापवादत्वं येन नाप्राप्तिन्यायेन स्यात्तदा प्रवृत्तिमात्रबाधः स्यात्तैव तु कथम् । पूर्वश्रवणवच्छन्दादिष्ठनि मतुबवयवस्यातो निवृत्तौ स्यात्तदधिकविकारसत्त्वेनैकदेशविकृतन्यायामवृत्तस्तु मतुस्त्वबुद्धरसम्भवादिति

प्रतीचयतीत्यस्य सिद्धेः। प्रत्यङ्गमन्तरङ्गम् । न च वार्त्तिकेन समीचयतीत्यत्रापि प्रतिषेधः प्राप्नोतीति वाच्यम् । तदुत्तरभाष्ये एतदेव ज्ञापयति न चौ प्रत्यङ्गमागति । यदयञ्चौ दीर्घत्वं शास्तीत्युक्तम् । तद्भाष्यैकवाक्यतया यत्रान्तरङ्गनिमित्तस्य बहिरङ्गेणाव्सम्बन्धिलोपेन विनाशसम्भावना तत्रैव वार्त्तिकेनान्तरङ्गस्य प्रतिषेधो बोध्यते । समीचयतीत्यत्र तु स्थानिवत्त्वेन तथा नास्तीति भावः । तिर्यञ्चमाचष्ट इत्यत्र प्रकृतिभावाभावं साधयति । तिरस इति । अलोप इतिप्रतिषेधस्त्वत्र न प्रवर्त्तत इत्याह । तिरसस्तिर्यलोपेति । विष्वग्देवयोरितिसूत्रादञ्चतावप्रत्यय इत्यनुवर्त्तते। न लोपो यस्येत्यर्थकमलोप इतिपदञ्च तस्य विशेषणमिति प्रतियोगितासम्बन्धावच्छिन्नप्रतियोगिताकलोपाभाववतो ग्रहणमित्यर्थः। स्यात्तदा टेरितिसूत्रविहितलोपस्य ग्रहणात्स्यात्तिर्यादेशस्य प्रतिबन्धः । परन्तु स लोपो न गृह्यते किन्त्वनन्तरत्वादच इत्यलोप एव टिलोपस्तु ततो व्यवहितः । एवञ्चात्र नलोपो यस्येति बहुव्रीहिसमास एव । अच इतिसूत्रविहितो लोपश्च प्रतियोगिताऽवयवे वर्त्तते। तदभेदोऽञ्चतावित्यनेन बाधित इत्यलोपपदमर्शआद्यजन्तमिति लोपाभाववत्संबन्धिनो ग्रहणम् । सम्बन्धश्चावयवावयविभावो लोपाभाववतावयवेनावाधित इत्यच इतिलोपस्तिरर्थस्यादौ वर्त्तते तत्र तिर्यादेशो न भवति। प्रकृते तु स्यादेवेति भावः । ननु तिर्यादेशे जातेऽपि टिलोपेऽव्ययानामितिविहितः प्राप्नोतीत्यत आह । स्थानिवत्त्वेनेत्यादि । अत एव । असिद्धत्वादेव । टिलोपस्य पराव्सम्बन्धित्वेन बहिरङ्गत्वमिति भावः । अनेन । असिद्धत्वेन । तस्याः । अङ्गवृत्तपरिभाषायाः। फलाभाव इति । पिपतेर्गुणप्रतिषेधाकरणमात्रस्य तत्प्रयोजनत्वेन भाष्ये कथनात् । मूले आमुमुमुआयदिति । अत्र मुत्वस्यासिद्धत्वेन दधद्दयुदुना द्वित्वेऽभ्यासे दकारस्यैव श्रवणापत्तिरिति तु न शङ्क्यम्। पूर्वत्रासिद्धीयमद्विर्वचन इति निषेधात् । अव्ययानामिति टिलोप इति ।

याच्यम्।विनाद्यन्तं यद्वाभिन्नमङ्गन्तदवयवस्य निर्दिश्यमानसजातीयावयवस्य लुगित्यर्थेन लुगुत्तरमपि सर्वे सर्वपदादेशा इतिन्यायेन तान्तस्य वान्तादेशे स्थानिवद्भावेन मतुवन्तत्वबुद्ध्या तदवयवकारे निर्दिश्यमानावयवत्वबुद्ध्या लुक्प्राप्तेर्निरूपयितुं शक्यत्वात्। परत्वादित्युक्तिमपि खडयति। किञ्चेति। ध्वनिततयेति। तत्र हि प्रकृत्यैकाजितिसूत्रोदाहरणानामन्यथा सिद्धिनिरूपणावसरे विन्मतोर्लुगर्थमित्यभिधाय ननु च विन्मतोर्लुक् टिलोपम्बाधिष्यते। यथैव खल्वपि विन्मतोर्लुक् टिलोपम्बाधते एवन्नस्तद्धित इत्येतमपि बाधेतेत्युक्त्वा येन नाप्राप्तिन्यायेन टिलोपस्यैव बाध इत्युक्तम्। ततश्च स्रग्वीयानिति न सिद्ध्यति। अथ वा पुरस्तादपवादन्यायेन टिलोपस्यैव बाधकत्व इत्यभिहितम्। अत्र पुरस्तादपवादन्यायेनेति नस्तद्धित इत्यस्य टिलोपापेक्षया परत्व एवोपपद्यत इति तथा कथनेन तस्य परत्वन्ध्वनितमिति। नेत्येक इत्यत्रैकपदाभिधानस्य बीजन्दर्शयति। टिलोपेनेत्यादिना। तत्परिभाषेति। अङ्गवृत्तपरिभाषेत्यर्थः। परिभाषायाः प्रदर्शनानन्तरं किमेतस्याः प्रयोजनमितिप्रश्ने पियतेर्गुणप्रतिषेध उक्तस्स न वक्तव्य इत्येव प्रयोजनमुक्तन्न तु लक्ष्यसिद्धिरूपन्तेन परिभाषाभावो ध्वनितः। इदमेव। यस्तन्त्रस्य दुर्लभत्वमेव। धायिति दीर्घ इति। वाक्यसंस्कारपक्षे प्रति अच् इ इति स्थिते प्रकृत्यैकाजितिप्रकृतिभावेऽच इत्यल्लोपे धायितिदीर्घ इत्यर्थः। असमास इति तु नेति। भिन्नित्यसमासयोरितिप्रतिषेधो नेत्यर्थः। ननु यदि पृथक्करणेन समासमियुन्नित्सर्वं स्वरपदपरत्वाभावेन सन्ध्यादेशाभावात्कथं समीत्यस्य श्रवणमत आह। पृथक्करणेनेत्यादि। स्थानिवत्वेन। गर्यस्याय् इत्यस्य य् इत्यादेशकल्पनया। न चान्तरङ्गत्वात्सन्ध्यादेशस्यैव प्रत्यङ्गमाचष्टे प्रतीचयतीत्यत्रापि णिजुत्पत्तेः प्राग्यणादेशोऽपि स्यादिति प्रतीचयतीत्यसाभिद्धिः। अन्तरङ्गपरिभाषायाः स्थौकारे तु समीचयतीत्यस्याप्यसिद्धिरिति वाच्यम्। चौ प्रत्यङ्गस्य प्रतिषेध इतिवार्तिकेन

नन्वेभ्यो धातुभ्य इत्यनुपपन्नं भ्वादिपठितानामेव धातुसंज्ञाविधानादत आह । धातोरित्यनुवृत्तीति । धातोरेकाच इत्यतो धातोरित्यनुवृत्तिसामर्थ्यादेषामधातुत्वमस्तीति ज्ञायते । कण्ड्वादयः । भ्वादिपठिताः । धातुप्रकृतिककार्योद्देश्यत्वादित्यनुमानम् । अनुवृत्तिसामर्थ्यादित्युपलक्षणम् । यकः कित्वसामर्थ्यादित्यपि बोध्यम् । तद्धि कण्डूयति कण्डूयत इत्यादौ गुणाभावार्थम् । एषाम्प्रातिपदिकत्वे च दीर्घपाठः कण्डूः मन्तूः इत्यादौ दृष्टो ज्ञापकः । यद्येते धातव एव स्युस्तर्हि दीर्घोऽकृत्सार्वधातुकयोरित्येव सिद्धं इति दीर्घोच्चारणं व्यर्थं स्यात् । तदुक्तम्भाष्ये । धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि । आह चायमिमन्दीर्घमतो धातुर्विभाषित इति । न च दीर्घविधानाभावेप्येभ्यः क्विपि सर्वप्रातिपदिकेभ्य इत्यनेन कृते पुनः कर्तरि क्विपि कण्डूरित्यादिसिद्ध्यर्थन्दीर्घोच्चारणमस्त्विति कथन्दीर्घोच्चारणस्य ज्ञापकत्वमिति वाच्यम् । नैतेभ्यः क्विप् दृश्यत इत्यनेन भाष्यकृतैव समाधानात् । कण्ड्वादीनामाकृतिगणत्वस्वीकारे प्रमाणमाह । कण्ड्वादीति ।

## ॥ इति कण्ड्वादिविवरणम् ॥

तृतीयस्येत्यनेनाप्यसहितस्य द्वियजन्त लभ्यतेऽतोऽप्राप्यं काच इत्यस्य सम्बन्धो बोध्यस्तस्मादेवाह । एकाच इत्यर्थ इति । तद्घटितेति । कण्ड्वादिघटितेत्यर्थः । लक्षणायाम्मानमाह । भाष्य इति । कण्ड्वादिघटित एवं लक्षणा न तु यगन्तघटिते । तेन कण्डूमिच्छतीत्यर्थे यत्र केवलकण्डूप्रकृतिकसुबन्तात्क्यच् ततः सन् तत्रापि द्वित्वसिद्धिर्यथेष्टं बोध्या । नामधातुरित्यत्र नामधातुशब्दो नाम्नो धातुरित्यर्थकस्तत्पुरुषसंज्ञकः । विग्रहवाक्ये दृष्टा या षष्ठी तदर्थश्च घटितत्वरूपः सम्बन्ध इति तदर्थान्तर्भावेणैकार्थीभावस्वीकारादाह । नामघटितेति । नामपदञ्च सुबन्तपरमिति प्रागुक्तम् । अत एव । नामघटितधातौ यथेष्टं द्वित्वस्वीकारादेव । अतोऽपीति ।

प्रकृत्यैकाजिति प्रकृतिभावस्तु टेरित्यस्यैव बाधक इति प्रागुक्तमिति शेषः। यदि तु सर्वस्य प्रकृतिभावः प्रकृत्यैतिपदस्वारस्यात्कल्प्यते तदा स्वरयतीत्येव। संज्ञापूर्वकविधेरनित्यत्वम्प्राचीनसम्मतं यद्यपि तथापि कैयटेन तेन वचनेन समाधानन्न कृतङ् किन्तु परिभाषान्तरेणेति तस्या असम्बन्धध्वनितमित्यभिप्रायेणाह। णाविष्ठवद्भेनेति। अस्याङ्गत्वनतिदिश्यमानकार्याणामुत्पत्तिदेश एव देश इति स्वीकाराङ्गोध्यम्। अत एव। अङ्गवृत्तपरिभाषया निषेधादेव। सिद्धान्तिसम्मतम्पक्षमाह। परे त्विति। एतद्भाष्यप्रयोगात्। दवयतीतिभाष्यप्रयोगात्। अस्मिन्वाक्ये। इष्ठवदितिवाक्ये। बाधकत्वसम्बन्धावच्छिन्नाधारत्वं सप्तम्यर्थः। अभावातिदेशः। इष्ठति यत्र भवति तत्रापि नेतिरीत्याऽभावातिदेशः। इष्टसिद्धिः। दवयति प्रापयतीत्यनयोः सिद्धिः। तदनुक्तेति। भाष्यानुक्तेत्यर्थः। एतेनेति। अभावातिदेशेन। अस्येरथोक्तमित्यत्रान्वयः। मतुप्घटितानित्यत्वेन। मतुप्घटितमनित्यमितिपरिभाषया। अरराजदित्यत्रेव मतुपो लुकप्यलोपित्यमस्त्येव। एतत्। अराजयदित्यस्याभिधानम्। इत्युचितमिति। मतुप्घटितमितिपरिभाषाया असत्त्वादिति भावः। वणादिलोप इति। वनुशब्दस्य लोपः। माधवानुरोधेनेति। आदेशस्य आदेरुच्चारणमिति शेषः। स्त्रजयतीतिवदिति। तत्र यथा प्राचीनैः संज्ञापूर्वकविधेरनित्यत्वादुपधावृद्ध्यभाव उपपाद्यते तथात्रापि तत्र यदिसंज्ञापूर्वकेतिपरिभाषया अयाचोऽप्यभावातिदेशेन वृद्ध्यभावस्तदात्रापि तथेति भावः। कनादेशो युवाल्पयोरिति भवतीति तदुपपाद्य तत्प्रसङ्गेन आदेशोप्युपस्थित इति तद्विषये विशेषमाह। मूले इष्ट भसंज्ञेति। विशिष्टस्य। प्रागन्तर्गतस्य। इदमपि माधवरीत्यैव। यस्मात्प्रातिपदिकाणिविधीयते तस्यैव प्रातिपदिकणातिदेशेनादेशः प्रकृते तु णिच्प्रकृतिभूतं प्रातिपदिकं भसंज्ञमेव तस्य न स्थानित्वेनोपादानमतोऽत्र नादेशस्य प्रवृत्तिः॥

॥ इति नामधातुविवरणम् ॥

नन्वेभ्यो धातुभ्य इत्यनुपपन्नं भ्वादिपठितानामेव धातुसंज्ञाविधानादत आह । धातोरित्यनुवृत्तीति । धातोरेकाच इत्यतो धातोरित्यनुवृत्तिसामर्थ्यादेषामधातुत्वमस्तीति ज्ञायते । कण्ड्वादयः । भ्वादिपठिताः । धातुप्रकृतिककार्योद्देश्यत्वादित्यनुमानम् । अनुवृत्तिसामर्थ्यादित्युपलक्षणम् । यकः कित्त्वसामर्थ्यादित्यपि बोध्यम् । तद्धि कण्डूयति कण्डूयत इत्यादौ गुणाभावार्थम् । एषाम्प्रातिपदिकत्वे च दीर्घपाठः कण्डू मन्तू इत्यादौ दृष्टो ज्ञापकः । यद्येते धातव एव स्युस्तर्हि दीर्घोऽकृत्सार्वधातुकयोरित्येव सिद्ध इति दीर्घोच्चारणं व्यर्थं स्यात् । तदुक्तम्भाष्ये । धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि । आह चायमिमन्दीर्घमतो धातुर्विभाषित इति । न च दीर्घविधानाभावेऽप्येभ्यः क्विपि सर्वप्रातिपदिकेभ्य इत्यनेन कृते पुनः कर्त्तरि क्विपि कण्डूरित्यादिसिद्ध्यर्थन्दीर्घोच्चारणमस्त्विति कथन्दीर्घोच्चारणस्य ज्ञापकत्वमिति वाच्यम् । नैतेभ्यः क्विप् दृश्यत इत्यनेन भाष्यकृतैव समाधानात् । कण्ड्वादीनामाकृतिगणत्वस्वीकारे प्रमाणमाह । कण्ड्वादीति ।

॥ इति कण्ड्वादिविवरणम् ॥

तृतीयस्येत्यनेनाच्सहितस्य द्विर्वचनं लभ्यतेऽतोऽत्राप्येकाच इत्यस्य सम्बन्धो बोध्यस्तस्मादेवाह । एकाच इत्यर्थ इति । तद्घटितेति । कण्ड्वादिघटितेत्यर्थः । लक्षणायाम्मानमाह । भाष्य इति । कण्ड्वादिघटित एव लक्षणा न तु यगन्तघटिते । तेन कण्डूमिच्छतीत्यर्थे यत्र केवलकण्डूप्रकृतिकसुबन्तात्क्यच् ततः सन् तत्रापि द्वित्वसिद्धिर्यथेष्टं बोध्या । नामधातुश्चेत्यत्र नामधातुशब्दो नाम्नो धातुरित्यर्थकस्तत्पुरुषसंज्ञकः । विग्रहवाक्ये दृष्टा या षष्ठी तदर्थश्च घटितत्वरूपः सम्बन्ध इति तदर्थान्तर्भावेणैकार्थीभावस्वीकारादाह । नामघटितेति । नामपदञ्च सुबन्तपरमिति प्रागुक्तम् । अत एव । नामघटितधातौ यथेष्टं द्वित्वस्वीकारादेव । अतोऽपीति ।

रान्तस्य यथा द्वित्वानुभयो भवन्मतेऽपि नास्ति तथापि न ह्रि कार्यातिव-चनस्य प्रवृत्तिर्भवत्येव तथास्माकमपीति भावः। इदमिति। चन्द्रीयि-पतीत्यत्र नकारपरित्यागेन द्वित्वकरणमित्यर्थः। माधवानुरोधेनेति। अत एव नदराणां संयुक्तानामधः परस्यैव द्वित्वनिषेध इत्येव प्रागुक्त-म्। आदिभूतादधः परस्येति। अत्रादित्वन्न धातुघटकाजन्तरापेक्षयैवेति किन्तु यत्र द्वित्वस्य प्रसक्तिस्तत्र तस्य समुदायस्यावयवो योऽच् स्वाव्य-वहितोत्तरत्वसम्बन्धावच्छिन्नप्रतियोगिताकतादृशसमुदायघटकाभाव-वांस्ततः परेषान्नदराणामेव निषेधस्य प्राप्तिरिति न चन्द्रशब्दस्यावयवो यो नकारस्तस्य निषेधप्राप्तिरिति भावः। माधवेनेति। एतेन पूर्वोक्तद-वयतीतिभाष्यप्रयोगे यथा वृद्व्यभावोऽभावातिदेशात्तथा स्त्रजयतीत्यत्रैव वृद्व्यभावस्तेनापि स्वीकार्य इति ध्वनितम्॥

## इति प्रत्ययमालाविवरणम्।

कर्तरि कर्मव्यतिहारे। क्रियापि कृत्रिमकर्मेति भाष्योक्त्या यद्यपि कर्मशब्देन क्रियाग्रहणे विरोधो नास्ति तथापि कर्मशब्दस्य लौकिकक-र्मपरत्वमेव प्रसिद्धत्वादिति प्रतिपादयितुमाह। कर्मह क्रियेति। न कृ-त्रिमकर्मग्रहणम्। न लोकप्रसिद्धकर्मग्रहणम्। कर्मशब्दस्य क्रियापरत्वे सूत्रार्थानुपपत्तिं शङ्कते। यद्यपीति। अत एव। उक्तस्य व्यतीहारस्य क्रियासम्बन्धित्वाभावादेव। एतेन। क्रियायाः साध्यस्वभावत्वेन। क्रि-याया एकत्वे हि देवदत्तकर्तृकक्रियाया यज्ञदत्तेन करण सम्भवेत्तदेव न सम्भवति कर्तृभेदेन क्रियाया भेदादिति भावः। अत एव। परियत्नेन-रूपस्य व्यतीहारस्यासम्भवादेव। तत्तत्साध्यत्वेनेति। यथा देवदत्तसाध्य-त्वेन ज्ञाता या क्रिया सा यदा यज्ञदत्तेन क्रियते तदा व्यतिलुनीत इत्यादि व्यवहारः। अन्यक्रियामन्यः करोतीत्यादि जयमङ्गलाकारोक्ते-रप्ययमेवार्थः। सः। प्रकृतसूत्रघटककर्मव्यतिहारशब्दार्थः। अर्थान्तरम-

सुबन्तघटितधातोरेव भाष्यीयोदाहरणदर्शनादपि । णयन्ताच्चङि । प्रातिपदिकप्रकृतिकण्यन्ताच्चङि । नामघटितधातुस्थल एव पुपुत्रीयिषतीत्युदाहरणादेव नामधातुशब्दस्य कर्मधारयत्वशङ्कापि न कार्या । यदुक्तम्स्तेऽन्यतमस्य तत्साधकमाह । एकाच इत्यादि । ननु यत्र कण्ड्वादियगन्ताण्णिच् तदन्तात्सन् तत्र कण्ड्वादेरित्यनेन कण्डूयियिषेति स्थितौ यशब्दस्य द्वित्वे कण्डूयियियिषतीति एवङ्कण्ड्वादियगन्तविषये आयादय आर्द्धधातुके वेत्यनेन यकोऽभावेऽपि कण्डूधातोर्ण्युट् तदन्तादाचारे क्विप् ततः सन् आचारक्विबन्ताद्धेतुमण्णिजन्ताच्चङ् वा तत्रापि तृतीयैकाचो द्वित्वापत्तिरेवं पुत्रीयेतिक्यजन्ताण्णिजन्तात्पुनर्णिच् ततः सन चङ् वा तत्रापि यथेष्टमित्यस्य प्रवृत्त्यापत्तिरत आह । एषां वचनानामिति । अत्र बहुवचनमीप्यतेस्तृतीयस्येत्यस्यापि सङ्ग्रहाय । तद्वदेव । नन्द्रा इतिसूत्रवदेव । आदिभूतादचः परस्यैवेति । अजादेरित्यनुवृत्तस्य नटभार्याबद्धनञ्जनामीति न्यायेन नकारसहितस्य यत्राद्रिशब्दप्रकृतिकसुबन्तात्क्यच् तदन्तात्सन् तत्र दकारसहितस्य च प्राप्तमपि द्वित्वस्य न्द्रा इतिनिषेधेनादिभूतादचः परस्यैव नेत्यर्थः। इन्द्रीयतेः सनि इडागमेऽतोलोप इत्यल्लोपस्य द्विर्वचनेऽचीतिनिषेधाद्यशब्दस्य द्वित्वप्राप्त्या यिशब्दस्येत्युपपादनमनुचितमित्यभिप्रायेण शङ्कते। न चेति। कार्यानुभयसत्त्वेन । समुदायावयवयोरिकार्यकार्ययोर्द्वित्वप्राप्त्या सनो द्वित्वानुभयसत्त्वेन द्विर्वचनेऽचीत्यस्याप्रवृत्तिरिति भावः । नामधातुष्वित्यनेन सुबन्ते यत्रैकाच्त्रयन्तत्र प्रवृत्तिर्यथेष्टमित्यस्येत्यभिमानेन शङ्कते । न चेति । नामघटितधातुषु नामघटितधातुघटकवर्णसम्बद्धैकाचामित्यर्थस्याश्रयणेन प्रकृते नामघटितधातुघटकयकारस्य तद्घटकत्वान्निषेधस्य प्रवृत्तिर्यथेष्टमितिवचनस्य च प्रवृत्तिरस्त्वेवेत्याह । नामधात्विति । ननु मूले यिशब्दस्यैवोक्तम् अत्र तु यिस्शब्दस्यत्र किम्बीजमत आह । यिशब्दद्वित्वेऽपीति । असाम्प्रतमेवेति । यथा कथञ्चित्कार्यानुभयसत्तापेक्षिता साऽस्त्येव यिस्शब्दस्य द्वित्वेऽपि सनोऽका-

८२ उपपदविभक्तेरिति न्यायेन कारकविभक्तेः प्राबल्यादेव । अक्रियायोगार्थमिति । कप्रत्ययार्थकर्त्तरि साहित्यविवक्षया क्रियायोगाभावार्थमित्यर्थः । नन्वेकवचनान्तप्रयोगो भट्टिकाव्य एव दृश्यत इति चेद् नृपे तर्हि सोऽप्यनुचित इत्याह । एतेनेति । पूर्वोक्तस्य तत्तत्साध्यत्वेन ज्ञातक्रियाया साध्यसाधनभावव्यत्यासस्यैव कर्मव्यतिहारपदार्थत्वेन । आत्मनेपदोद्देश्यत्वाच्चेति । प्रकृते तु न तथा । उभयोरपि धर्मयोः कर्तृत्वस्याख्यातार्थनिरूपितस्य युगपत्प्रतीतिर्न तु स्वदुर्नकर्तृकत्वेनोचितक्रियायामुद्दुर्नस्यैव कर्तृत्वप्रतीतिरिति नात्मनेपदमुचितमिति भावः । रघुद्रुप्ये दृष्टानामेकवचनान्तप्रयोगाणान्तु छान्दसत्वमेवेत्याह । तासन्त्योरित्यादिना । इति दिगिति । दिगर्थस्तु द्वितीयस्यां परस्परकरणरूपव्यतीहारस्य नात्र भट्टिप्रयोगस्थले प्रसङ्गः । यत्र कर्तृभेदेऽपि युगपदुभयकर्तृका क्रियाऽगुरुसङ्गारित्वेनाख्यातार्थैकदेशे चैकरालिकत्वेन च गह्यते तत्रैव तु दृष्टव्यतीहारसम्बन्धस्यात्मनेपदप्रयोजकत्वम् । सम्प्रहरन्ते राजान इत्यत्र यथा । प्रकृते तु न तथा । क्रौर्याक्रौर्ये तु कप्रत्ययोर्भेदस्यैव प्रतीतेरिति । नन्वस्मिन्सूत्रे कर्तृग्रहणं व्यर्थम् । भावकर्मनिवृत्त्यर्थत्वन्तु तस्य न सम्भवति । तत्र हि भावकर्मणोरित्यनेनैव एवात्मनेपदम् । व्यतिगम्यन्ते ग्रामाः । व्यतिहन्यन्ते दस्यव इति यथा । न च न गतीतिसूत्रेणात्मनेपदस्य कर्मव्यतिहारे निषेधेन न स्यादिति वाच्यम् । अनेन सूत्रेण प्राप्तस्यानन्तरस्येति न्यायेन निषेधेऽपि व्यवहितेन भावकर्मणोरित्यनेन प्राप्तस्य निषेधासम्भवादिति चेन्न । शेषात्कर्त्तरीतिसूत्रार्थमेतदुपादानात् । तत्र हि कर्त्तरीत्यनुवर्त्य कर्त्तैव कर्त्ता तत्र यथा स्यादित्यर्थ इष्यते । अनुपराभ्यां कृञ इतिसूत्रार्थं चेति तत्रैव वक्ष्यते । नेर्विश । पूर्वन्यायात् साधनेन युज्यत इतिन्यायेन साधनबोधके लकारे तस्यापरनिमित्तत्वेनान्तरङ्गत्वान्निरूपलक्षितसूत्रेण सामान्यत आदेशे उपसर्गयोगेऽपि कृताऽकृतप्रसङ्गित्वेन नित्यत्वाद्विकरणे विकरणा

प्याह । परस्परकरणमिति । तत्कर्तृमात्रे । अत्र मात्रपदं कात्स्न्र्ये । अत एव । एतादृशे विषये द्वयोर्बहूनां वा तादृशक्रियाकर्तृत्वविवक्षया यत्र सद्भावस्तत्रैव सूत्रोदाहरणादेव । एतेन । वक्ष्यमाणप्रकारेण एकस्यैव कर्तृत्वासम्भवेन च । अपास्तमित्यत्रास्यान्वयः । देवदत्तेन सह चैत्रो व्यतिलुनीत इत्यस्माद्देवदत्तसाहित्यवच्चैत्रकर्तृकं व्यत्यस्तं लवनमिति शाब्दबोधे देवदत्तेन कर्तुं योग्या या लवनक्रिया तामेकश्चैत्रः करोतीति मानसबोधसम्भव इति कर्मव्यतिहारोऽस्त्येव । अत एव । एतादृशे विषये एकवचनान्तप्रयोगस्येष्टत्वादेव । अकर्मव्यतिहार इति । कर्मशब्दोऽत्र क्रियापरः । क्रियाव्यतिहाराभावेऽपीत्यर्थः। तस्यै विश्राणयतया सहोपभुङ्क्त इत्यत्र तस्याविश्राणनक्रियासम्प्रदानत्वविषयकशाब्दबोधे सति तत्साहित्यवदेककर्तृकयत्समानकालिकी उपभोगक्रियेतिशाब्दबोधे तस्याः शाब्दीय उपभोगान्वयस्तदभावस्य सत्त्वेन तस्या अप्राधान्यसत्त्वात् सहयुक्तेऽप्रधान इत्यनेन तृतीया सहार्थयोगे एव जातेति तृतीयान्तप्रयोगस्य यद्यप्युपपत्तिस्तथापि क्रियाभेदादेकजातीयोपभोगक्रियायामन्यकर्तृकत्वेन सम्भावितायामन्यकर्तृकत्वस्याप्रतीतिरतो व्यतीहाराप्रतीतिरिति भावः । ननु विश्राणनकर्त्तरि दासीसाहित्यविवक्षायां सहार्थतृतीया स्यादेवेत्यत आह । किञ्चेति । अयम्भावः । विश्राणनविशिष्टोपभोगोऽत्र सम्पूर्वकदाण्धात्वर्थः । दाण्धात्वर्थघटकदाने च तस्याः कथमपि न कर्तृत्वमिति सम्प्रदानत्वमेव कल्पनीयमुपभोगकर्त्तरि च साहित्यमिति कारकविभक्तेः प्रावल्याच्चतुर्थ्येव युक्तेति । परोक्तमप्युपेत्याह । किञ्च धातोरिति । दास्या मोस्माहितः कामुकस्त्वस्यै यावद्ददाति तावत्तया विपरीतरत्यादिना प्रथमत एवोपभोगः प्रारब्धो यत्र तत्र प्राधान्येन भासमानोपभोगे तस्याः कर्तृत्वमिति कारकविभक्तित्वात्प्रथमैव युक्ता । तस्यै विश्राणयेत्यस्य ग्रामत्वयत्योपपत्तिस्तूपभोगमध्य एव कामुककर्तृकदानानन्तरमप्युपभोगसम्भवमुक्तं स्यादाद्य त्यपितोत्पत्रैव कार्या । अत

एष्यन इत्याह । अत एवेति । शप उपालम्भे । मूले उपालंभ इति प्राचीनसम्मतपाठमाक्रोशार्थादित्यनेन व्याख्याय भाष्यसम्मतमाह । परे त्विति । प्रकाशनमात्रशक्तस्योपलम्भनशब्दस्य शपथकरणके प्रकाशने लक्षणा । अत एव । शपथकरणेऽर्थे वृत्तिस्वीकारादेव । चतुर्थ्येव । श्लाघह्नुङिति चतुर्थ्येव । प्रकाशनस्थेयाख्ययोश्च । प्रकाशनं ज्ञापनम् । स्थेयो विवादपदनिर्णेता ।स्थेयशब्दे च कृत्यल्युटो बहुलमित्यत्र बहुलग्रहणादधिकरणे यत् । तिष्ठन्ति यस्मिन्नुना विवादपदनिर्णयकर्तृत्वप्रकारकनिश्चयविशेष्यतया स्वीकुर्वन्तीत्यर्थः । स्थेयो विवादस्थानस्य निर्णेतरि पुरोहिते इति मेदिनीकारः । कर्णादिषु तिष्ठत इत्यत्र तथा स्पष्टम् । उदोऽनूर्ध्वकर्मणि । अत्रोर्द्ध्वशब्द ऊर्ध्वदेशानुयोगिकसंयोगपरस्तस्य नञा समासे क्रियापरकर्मशब्देन षष्ठीतत्पुरुषः । ऊर्ध्वदेशवृत्तिसंयोगभिन्नसंयोगानुकूलव्यापारलाभेनोर्ध्वदेशसंयोगफलकक्रियालाभात्तादृशक्रियायां वर्त्तमानादुदः परात्स्थाधातोरात्मनेपदमित्यर्थः । मुक्तावुत्तिष्ठते काशीमित्यत्र निमित्तात्कर्मयोग इति सप्तमी । मुक्तिफलककाशीवृत्तिसंयोगानुकूलैककर्तृको वर्त्तमानो व्यापार इति शाब्दबोधः । उद ईहायामिति वार्त्तिकमूलकाद्व्याख्यानान्मूले ईहायामेवेत्युक्तमत्रेहापदार्थमाह । कायपरिस्पन्देति । मुक्तावुत्तिष्ठत इत्यत्रेहा स्पष्टैव । पीठादुत्तिष्ठतीत्यत्रापीहाऽस्त्येवेति अनूर्ध्वकर्मणीत्युपात्तम् । शतमुत्तिष्ठतीत्यत्र नेहेति बोधयितुमाह । शतेति । उपान्मन्त्रकरणे । मन्त्रकरणकेऽर्थे वर्त्तमानादित्यर्थो बहुव्रीहिसमासाश्रयणात्कार्यस्तदाह । मन्त्रेति । आग्नेय्याऽग्नीध्रमुपतिष्ठत इत्यत्र मन्त्रकरणकोऽर्थः स्तुतिरूपः । आग्नेयी अग्निर्देवता यस्यास्या ऋक् । अग्निमिन्धे अग्नीत् । ऋत्विग्विशेषस्तत्तया ऋचा स्तौतीत्यर्थः । वा लिप्सायामित्यत्र लिप्सा लाभेच्छा सा यत्र गम्यते तत्रात्मनेपदमिष्यत इत्याशयेनाह । लिप्सोपसर्जनक इति । भिक्षुकः प्रभुमुपतिष्ठत इत्यत्र स्थाधातोः समीपगमनानुकूलो व्यापारो ऽर्थस्तस्यालिप्-

न्ताङ्गस्यादि कृते तस्य समुदायभक्ततया धातोर्नः परत्वासम्भवान्नियमो
मस्यादित्याशयेनाह । नेरिति षष्ठीति । अत एव । द्योतकानान्यादीना-
ङ्ग्रहणादेव । तेनोन्निकुलङ्ग्रामम्प्रविशतीत्यर्थके उन्निविशति ग्राम-
मित्यत्र न । आङो दोऽनास्य । ददातेर्ञित्वादात्मनेपदं सिद्धमेवेत्यत
आह । अकर्त्रभिप्राय इति।विकासार्थत्वमिति । ओष्ठपुटविभागार्थत्वमि-
त्यर्थः । अत एव विपादिकां व्याददातीत्यत्रापि प्रतिषेधः सिद्धः । एव-
ञ्चाविकासार्थस्य ददातेर्ग्रहणे यदोपसर्गवशाद् ग्रहणाद्यर्थकता तदाऽनेना-
त्मनेपदमिति सिद्धौ प्र·ी क्रमाददातीत्यादि न भवति तदाह । प्रतीके-
ति । लाभाच्चेति । एवञ्च मनोरमोक्तो हरदत्ताद्यनुसारीसमाधानाभा-
सो निरस्तः । अस्यैव । पूर्वोक्तस्यैव । अत्र भाष्ये स्वाङ्गकर्मकाच्चेत्युक्त-
त्तस्य स्वाङ्गकर्मकादेव प्रतिषेध इत्यर्थस्तदभिप्रायेण मूले पराङ्गकर्मकान्न
निषेध इति । भाष्ये यथान्तस्यैव इति । माणवक आगमयस्व ता।वदि-
त्यस्य । नन्वागमयस्वेत्यत्र प्रयोजकव्यापाराप्रतीतेः कथण्णिजित्यत आ-
ह । हन्तर्यार्थ्येतीति । शिक्षेर्जिज्ञासायामित्यत्र शिक्षविद्योपादान इ य-
स्य न ग्रहणङ्किन्तु शकिः सन्नन्तः । सनिमीमेति सूत्रेण कृतेम् भावविशि-
ष्टोऽनुकृतः । एवञ्च जिज्ञासायामित्यस्यान्वयाय ज्ञानपदाध्याहार आवश्यक
इत्याह । अत्रेत्यादि । मूले नियमार्थमिति । न चैतादृशनियमस्वीका-
रेऽस्यानुदात्तेत्त्वं व्यर्थमिति वाच्यम् । युजर्थन्तत्वात् । हरतेर्गतताच्छी-
ल्ये । धर्म इति । गुणक्रियादिः । मातुरनुहरतीति प्रत्युदाहरणे तु सादृ-
श्यमात्रप्रतीतिर्न तु मातृवृत्तिगुणस्य सततम्परिशीलनमिति नात्मने-
पदम् । किरतेर्हर्षजीविका । यद्यपि कुलायो नीडमस्त्रियामिति कोशाच्छी-
ड्वाचीकुलायशब्दस्तथापि भाष्येऽपकिरतेशाऽश्रयार्थोन्युदाहृतमित्य-
थोऽत्र कुलायशब्दो वासस्थानमात्रपरः । शुद्धभाव इति । अपाच्चतुष्पा-
दिति विहितसुडोऽभावः । मूले नेष्यत इति । किरतेरिति वार्तिकोदा-
हरणानां समुद्रवा ।।ने र प्रत्युदाहरणस्तु अभावे नेष्यत इति क-

सीयादिस्मरणमित्यर्थः । यः कौमारहर इत्यादिगोद्बोधकसमग्रधानम्प्रदर्श्य वेतसीतरुतटे चेतः समुत्कण्ठते इत्यनेन काव्यप्रकाशे स्पष्टमियन्दर्शिता । नेयमानमिति । भाष्ये तु न दूश्यत इति शेषः।भासमान इति । कर्त्तरि ल्युट् । अन्यदीयज्ञानस्य प्रत्यक्षमन्यस्य न सम्भवतीति ज्ञान इत्यस्येदं कथनमयुक्तमित्याशङ्कायामाह । बोधोत्तरमिति । शास्त्रे वदत इति शब्दजन्यशाब्दबोधोत्तरमित्यर्थः । ज्ञानवत्त्वमित्यस्य वदनकर्त्तुरिति शेषः । उत्साहः चित्तवृत्तिविशेषः । तद्विषयकविलक्षणज्ञानजन्यसुखविशेषो वा । प्रसिद्धतरमिति । खगानाञ्च तथा तदुच्चारितशब्दे सादृश्यान्तथा प्रतीतिमात्रमेतेन शुकशारिकादीनां व्यावृत्तिः। वरतन्विति । अयि विजहीहि दृढोपसङ्ग्रहनताङ्ग रतिसङ्गमकाङ्क्षमानसे । अरुणकरोद्गम एप वर्त्तते वरतनुसम्प्रवदन्ति कुक्कुटाः। विरामोचित्तेरति । इदमुपलक्षणन्नवोढाया रमणेच्छोर्नायकस्योक्तिरियमित्यपि बोध्यम् । तद्यथा । अयि विजहीहि दृढोपगूहनन्तराज नवसङ्गमभीरुवल्लभे। अरुणकरोद्गम एप वर्त्तते वरतनु सम्प्रवदन्ति कुक्कुटाः । तदुक्तम्भाष्ये । व्यक्तवाचामित्युच्यमानेऽप्यत्र प्राप्नोति । एतेऽपि हि व्यक्तवाचः कुक्कुटेनोदिते उच्यते कुक्कुटो वदतीति । एवन्तर्हि सर्व एव व्यक्तवाचस्तत्र प्रसंगतिर्विज्ञास्यते साधीयो ये व्यक्तवाचः । येषां वाच्यकारादयो वर्णा व्यज्यन्ते इति । परस्परविरोधेनेति । विप्रलापो विरुद्धोक्तिरिति कोशात् । इति भाष्यमितीति । तत्र हि गिरतेरिति वक्तव्यङ्गृणातेर्मा भूत् । तर्हि वक्तव्यन्न वक्तव्यम्प्रयोगाभावात् । न चाद्‌पूर्वस्य गृणातेः प्रयोगोऽस्तीत्युक्तम् । समस्तृतीया युक्तात् । अत्र समस्तृतीययेत्येव सिद्धे युक्तग्रहणाद्यत्र श्रूयमाणतृतीयान्तपदयोगस्तत्रैवात्मनेपदमिदन्तेनोभौ लोकौ सञ्चरसीति प्रत्युदाहरणं साधु सङ्गच्छते । सर्वत्रैव षष्ठीति । येन येनोपसर्गयोगे विधानं सर्वत्रैव षष्ठीत्यर्थः। उपाद्यम. स्वकरणे । नन्वस्वं यदा स्वं करोति तदा भविष्यमिति भाष्याच्च्विप्रत्य-

कित्व्यवहारविषयस्य । स्तुतोऽयं व्यवहारो न युक्तः ॥ आत्मनोऽन्तः करणस्य वा कर्तृत्वं तयोश्च न शरीरतादात्म्यमित्यं तद्ध्वनयितुमात्मनेपदोपादानम् । सम्बन्धविशेषेण । स्वनिष्ठाधिकरणतानिरूपितसमवायसम्बन्धावच्छिन्नाधेयत्वसम्बन्धेन । वृत्तिसर्गतायनेषु । मूले वृत्तिरप्रतिबन्धइति । यत्र न प्रतिबन्धस्तत्र । लोके एतादृशव्यवहारस्य दर्शनात् । स्फीतानीति । प्रवृद्धानीत्यर्थः । उपपराभ्याम् । क्रम इत्यनुवर्तते । यदुक्तम्मूले आभ्यामेवेति तदेवयुक्तमित्याह । अस्य नियतत्वमिति ॥ आङ् उद्गमने । उद्गमनमूर्ध्वदेशसंयोगानुकूलव्यापारः । अत्रोर्ध्वदेशत्वञ्ज्योतिषामेव । आकाशस्यानवच्छिन्नत्वात् । वेः पादविहरणे । विहरण इत्येव सिद्धे पादशब्दोपादानस्य प्रयोजनमाह । धातूनामिति । सूत्रस्यभाष्येति । तत्र हि अनुदात्तङित इति किमर्थमित्याशङ्क्य नियमार्थम् । सामान्यतो लस्य स्थाने तिबादिति सिद्धेः ॥ विकरणेभ्यो व्यवधानादनुदात्तात्परत्वासम्भवात्पुनरप्यनुपपत्तिशङ्कायां विकरणेभ्यो नियमो बलीयानिति समाहितन्तत्रादौ बुधादिद्युतादीत्यादिसूत्रे परस्मैपदादीनां विभाषित्वेनोपादानस्य ज्ञापकत्वमुद्भाव्य सामान्यसूत्रेण परस्मैपदादीनां सिद्धत्वान्नित्यसत्वानुपपत्तिं परिहृत्य यत्नस्त्वनुपसर्गाद्वेति विभाषार्थं शास्त्री युक्तम्। एतर्हि शेषादिति मात्रनियमबाधनार्थं यदि नियमस्य विकरणापेक्षया बलवत्त्वं न स्यात्तदा सामान्यसूत्रेणोभयपदे सिद्धे विकरणव्यवधानेन शेषादित्यस्याप्राप्तावपि सिद्धत्वेति अनुपसर्गाद्वेत्यस्य वैयर्थ्यमिति प्रतिपादितम् । तच्च ज्ञापकत्वं तदा घटेत यदि वैयर्थ्यं स्यात् । तदेव तु न सम्भवति यतो । यत्नाग-मत्वात् । क्रंशीड़ेत्यत्र विकरणाभावच्छेषादिति प्राप्तनियमबाधकतयाऽस्यावश्यकत्वमित्यतोऽस्य विकल्पार्थप्रवृत्तिः स्वीकार्येति भावः । पूर्वं विप्रतिषेध इति । न चेमि विप्रतिषिद्धसूत्रभाष्ये एतत्स्पष्टम् । उपान्मन्त्रकरण इति । झटिति झटित्युद्भूतसंस्कारजन्यस्मरणं ...

ननु पुनरर्थस्य चेद्विवक्षा तदा तत्प्रतिपादकणिचोऽपि निवृत्तिः स्या-
त्प्रयोजकव्यापारविवक्षायामेव तस्य साधुत्वाभ्यनुज्ञादर्शनादत आह । व्य-
क्तस्येत्यादि । सर्वनाम्नो वृत्तिमात्र इति । क्वचित्सर्वनामत्वेन दृष्टस्य
पुंवद्भावः । तद्दर्शनञ्च प्रकृतेऽप्यस्तीति भावः । भूमिः । प्रयोगात्मकं स्था-
नम् । प्राप्यते ज्ञायत इत्यर्थः । इत्येका कक्ष्येति । अत्र न्यग्भवनानुकू-
लव्यापारो रुहधात्वर्थः । आरुह्यते हस्ती स्वयमेवेति । अत्र कर्मणि
हस्तिनि न्यग्भूते क्रियाकृतविशेषस्य दर्शनाद्भवत्यात्मनेपदं यक् च ।
द्वयम् । आरोहयन्ति हस्तिनं हस्तिपका इति कक्ष्या । व्यात्यंभूतेति ।
अणौ कर्मणो णौ कर्तृत्वविरहेण सा व्यावर्त्यते । शुद्धे । णिजूहिते ।
यथा कथञ्चिदिति । अत्रस्याचतुष्टयस्थले पूर्वोक्तैव रीतिः । पञ्चमीत्वप-
क्षे तु द्वितीयकक्ष्यायाम्फलसमानाधिकरणो व्यापारोऽयं । ततः प्रयो-
जकव्यापारे णिच् । ततः प्रयोजकव्यापारस्य फलसमानाधिकरणव्यापा-
रस्य च त्यागे चतुर्थी कक्ष्या । ततः फलसमानाधिकरणस्य व्यापारस्यैव
प्रयोजकत्वविवक्षया तस्मिन्विवक्षिते पुनर्णिजिति । एतादृशार्थसूचनाय
सर्वान्ते हरिणा निवृत्तप्रेषणादित्याद्युक्तम् । उदाहरणभूतकक्ष्यावान-
णायित्यादिवाक्यार्थद्वयसत्त्वमाविष्कर्तुम्भूमिकामाह । न्यग्भवनेत्यादिना ।
अन्यथा । स्वरूपयोग्यतानिश्चयस्यानपेक्षायाम् । एतत्प्रतीयते इति कथ-
नेन न्यग्भावनादीनां वाच्यत्वमिति भ्रमः स्यात्तद्वारणायाह । अग्रेत्या
दि । आर्थो । मानसबोधविषयरूपा । अत एव । कर्तृदेशसंयोगावच्छि-
न्नव्यापारस्य रुहधात्वर्थत्वादेव । अत्रापि पक्षे । अध्यारोपितप्रेषणप-
क्षे । तस्याः । निवृत्तपक्षीयकक्ष्यायाः । मूलभूतत्वात् । क्रियासाम्यं यां
कक्ष्याम्प्रदर्श्य बोधनीयं सा कक्ष्या तन्मूलभूतेति व्यवहारादिति रीत्या
मूलभूतत्वात् । आधिक्यमात्रेति । अणौ या क्रिया सैव चेदित्यनेना-
धिका तदपेक्षया या क्रिया सा व्यवच्छिद्यते न तु न्यूनेति भावः । अ-
यमपि । यद्वेत्यादिना उक्तो द्वितीयोऽपि । स देवदत्तादेर्यिना कटादिषु

क्रिया सैव चतुर्थ्यो नास्ति । अणौ कर्मणो णौ कर्तृत्वमस्तीति प्राप्तम् प्यात्मनेपदमनच्छेदकावच्छेदेनान्वयस्वीकाराच्च भवति । अणौ कर्मत्वस्य णव्यपि सत्त्वात् तस्माच्च न णौ कर्तृत्वमिति । स्वमर्थत्यादिति । प्रत्यासत्या णाविति लाभेऽपि साक्षादुच्चारणं विना वृत्तस्यानुपस्थितत्वाच्छाब्दबोधविषयता न संभवतीति श्रूयमाणशब्दस्य तद्घटिते शक्तिः कल्पनीया तदपेक्षया णावित्यस्योच्चारणस्यैव युक्तत्वादित्यर्थः । यत्तु तृतीयवाक्ये णावित्यस्याभावेऽणौ या क्रिया सा चेणावित्येतदुदाहरणभूतकल्पाघटितकल्पासमुदायघटकयत्किंचित् कल्पामादाय यथोपपाद्यते तथाऽणौ यत्कर्म स चेत्कर्तृत्वस्याप्यर्थो याद्वाञ्छितकल्पामादायोपपादनीय इत्यपि स्यात्तथा च निवृत्तप्रेषणपक्षीयतृतीयकल्पायामात्मनेपदापत्तिः । प्रथमामादायाणौ या क्रिया सा चेदित्यस्य यथोपपादानन्तथाऽणौ यत्कर्म स चेत्तादृशसमुदायघटकयत्किञ्चित्क्रियायामित्यस्य द्वितीयामादायोपपादनसम्भवात् । णावित्युपादाने तु णिजन्तघटिततादृशसमुदायघटकल्पामादायैव तृतीयवाक्यार्थस्योपपत्तिः कार्या सा च यां कल्पामादाय भवति तस्यामेवात्मनेपदमिति वदन्ति तन्न युक्तमित्याशयेनाह । अत्र फलकल्पना त्विति । प्रत्यासत्त्यैव प्रागुक्तफलस्य गतार्थत्वादिति भावः । अणावकर्मकादिति सूत्रस्य प्राप्तिमुपपादयति । यत्र क्वाप्येति । इत्यर्थे नेति । अस्य द्वितीयामादायाणावकर्मकत्वस्य सत्त्वादिति शेषः । अत्र पूर्वविप्रतिषेधे । दर्शयते राजेतीति । दर्शयते भृत्यान् राजेत्युदाहरणमिति बोध्यम् । भृत्यानित्यस्यानुपादानन्तु दर्शयते भव इत्येतत्स्थलप्रदर्शनाय । यदि परस्मैपदबाधनार्थमेवैतत्सूत्रन्तदा यत्र परस्मैपदप्राप्तिस्तादृशोदाहरणमेव प्रदर्शयितुमुचितमिति भावः । भव । पश्यति भव इत्यत्र । कर्मस्थक्रियत्वाभावेनेति । यत्र कर्मणि क्रियाकृतो विशेषो दृश्यते तत्रैव क्रिया कर्मस्था भवते न तथेति भावः । व्यापारे इति । अभिमंगे इति शेषः ।

भयभक्ता इति प्रयोगस्ततो य. परित्यक्तो भयनिष्ठो व्यापारश्चाक्षुषज्ञान-विषयत्वानुकूलव्यापारस्य प्रयोजको व्यापारस्तत्रैव णिचि दर्शयति भ-य इति प्रयोगः। ततो द्वयोरपि व्यापारयोस्त्यागे चाक्षुषज्ञानविषय-तामात्रेऽर्थे णिजन्तस्य लक्षणां स्वीकृत्य दर्शयते भय इति प्रयोगस्तत्रा-णौ प्रथमकक्ष्यायां या क्रिया ततो न्यूना यद्यप्यस्ति तथाप्यधिका ना-स्ति नियमेन सैव चेदित्यनेन व्यावृत्तिस्तु तत्र वक्तुमशक्या। आधिक्य-मात्रव्यवच्छेदे तात्पर्यमित्युक्तत्वात्। अणौ कर्मकारकस्य भयस्य तत्र क-र्तृत्वाच्च भवत्यात्मनेपदमिति। एतादृशस्थले द्वितीयकक्ष्यायामात्मनेप-दस्य शङ्कैवन्द्वितीयकक्ष्यायामपि प्रथमकक्ष्यायां या क्रिया सैवास्ति न त-तोऽधिका न्यूना वा। अणौ कर्मकारकस्य कर्तृत्वञ्चास्तीति। समाधत्ते। गमकं विनेति। एवञ्च प्रकृते तादृशगमकस्यादर्शनेन द्वयोर्मध्ये एकस्य त्यागङ्कृत्वा परित्यक्तव्यापार एव णिजिनिर्वक्तुमशक्यमिति भावः। अणावियति किमिति। कर्म णौ चेदित्येव द्वितीयं वाक्यमस्तु। यत्किञ्चि-त्क्रियानिरूपितकर्मत्वं विवक्षितम्। कर्मशब्दश्च क्रियापर एव। एवञ्च स्वमूलभूतकक्ष्यायां या क्रिया प्रतीयते सैव चेण्यन्ते नोच्येतेत्यर्थोऽस्त्वि-ति भावः। निवृत्तप्रेषणेत्यादि। अत्रेदम्बोध्यम्। चाक्षुषज्ञानविषयत्वा-नुकूलव्यापाररूपेऽर्थे पश्यन्ति भयम्भक्ता इति प्रथमकक्ष्या। ततो व्यापा-रस्य त्यागेन चाक्षुषज्ञानविषयत्वमात्रस्य धात्वर्थत्वविवक्षया पश्यति भ-य इति द्वितीया। ततः परित्यक्तव्यापारे ज्ञानविषयीभवनानुकूलत्वे नवि-वक्षिते णिचि दर्शयन्ति भयम्भक्ता इति तृतीया। ततः कर्मणो भयस्यै-व प्रयोजकत्वविवक्षया तदीयव्यापारे विषयीभवनरूपे द्वितीयणिचि द-र्शयति भयो भक्तैरिति तुरीया कक्ष्या तत्र तुरीयकक्ष्यायां मा भूदिति। यस्य भयनिष्ठव्यापारस्य प्रयोजकत्वविवक्षा। तं व्यापारन्दर्शयति। कर्म-निष्ठेत्यादिना। अणावित्युपादाने चाणौ प्रथमकक्ष्यायां ज्ञानविषयत्व-मात्रस्य सत्त्वम् तु ज्ञानविषयीभवनस्येत्याधिक्यस्याऽऽत्मनेपदमिति भा-

विद्यत इत्यन्वयः । अस्याः । प्रथमकारिकायाः । देवदत्तादिनिष्ठव्यापारस्य कटादिकर्मवृत्तित्वविवक्षायाः फलमाह । प्रेरणास्वीकार इत्यादि । अत्र पक्षे । यद्वेत्यादिप्रदर्शितद्वितीयपक्षे । स्वयन्दूती । स्वकार्यसाधनाय स्वयमेव नायकम्प्रतिगत्वाऽधुना मद्गृहे भवताऽऽगन्तव्यमिति या वक्ति सा।निदर्शनम्।दृष्टान्तः।न तद्वितीति। तदेकस्य त्यादारस्याधिक्यात्समानक्रियत्वाभाव इति भावः । अन्तर्भावितण्यर्थस्येति । शुद्धरुहधातोरेवोर्द्धदेशसंयोगावच्छिन्नक्रियानुकूलव्यापारानुकूलव्यापारे शक्तिकल्पनयेति शेषः । सा । अन्तर्भावितण्यर्थपक्षे या दर्शिता तदेतदुपपादयति । तत्तत्कल्पा स्येति । एवं हि । एवम्परिष्कारे हि । परोक्तानुपपत्तिम्परिष्कृत्य परिहरति । न चेति । वाच्यमिति परेणान्वयः । कल्याशब्दः कल्यापर्यायः । कक्षो बाहुमूले । कष्धातोर्तृषदिहनिकमकषिभ्यः स इति सप्रत्ययान्तः । तस्मादाधारेऽर्थे कक्ष इव आचरति या सा कक्षा आधारक्विबन्तादचि टाप् कल्याशब्दे आचारक्विबन्ताद्बाहुलकात्कर्त्तरि यत् ततष्टाप् । तद्वदाचरणञ्च स यथा प्राणिनोऽवयविन उपकारङ्करोति तद्वदियमपस्या चतुष्टयस्योदाहरणोपपादकस्य घटकतयोपकारङ्करोतीति । प्रकृते । अन्तर्भावितण्यर्थतायाम् । भाष्याक्षरानारूढत्वादिति । एवञ्च कल्पयोर्मूलत्वविचारेण समाधानमसङ्गतमिति भावः । अन्तर्भावितण्यर्थेति। प्रथमकल्पायामेवान्तर्भावितण्यर्थेत्यर्थः । तद्यथा प्रथमकल्पायामेव धात्वपादानविषयस्यानुकूलव्यापारानुकूलव्यापारार्थको यो धातुस्तदर्थघटकव्यापारस्यैकस्य त्यागं कृत्वा ततः परित्यक्तव्यापार एव णिचि कृते यो धातुर्दर्शयेति तस्य दर्शयति भव इत्यत्र प्रयोगेणेत्यर्थः । तदर्थमूलकादिति । प्रथमद्वयास्यघात्वर्थमूलकादौ मध्ये निवृत्तप्रेषणको धातुः कल्प्यते तदर्थादित्यर्थः । तत्र द्वितीयकल्पायाम् । एवं ह्यत्र क्रमः प्रथमकल्पायाद्धाधुपदानविषयत्वानुकूलव्यापारानुकूलव्यापारैवदेवास्य द्वितीयव्यापारस्य त्यागेन धात्वपदानविषयत्वानुकूलव्यापारकर्त्तरि पश्यन्ति भ-

ति हि तत्र वार्त्तिकम् । तद्व्याख्यायाऽणौ यत्कर्म यदा यण्यन्ते तदेव कर्म भवतीति । उभयत्रापीति । कर्मवत्कर्मणेति सूत्रे प्रकृतसूत्रे चेत्यर्थः । एवञ्च कर्त्तरि कर्मेति सूत्रदृष्टान्तेन क्रियापरत्वेन व्याख्यानञ्च युक्तम्प्रकृतसूत्रे ॥ अत एव । कर्मशब्दस्य कर्मकारकपरत्वादेव । नन्वेवमणौ कर्मणो णौ कर्तृत्वन्तृतीयवार्त्तिकेन प्रतिपाद्यमानं विरुध्येतेत्यत आह ॥ तत्र द्वितीयवाक्येनेति । तत्र । कर्मशब्दस्य कर्मकारकपरत्वे । कर्मान्तरनिवृत्तिरिति । अणौ यत्कर्म तदतिरिक्तङ्कर्म न चेदित्येवङ्कर्मान्तरनिवृत्तिरित्यर्थः । भृत्यरूपकर्मण इति । भृत्या राजानम्पश्यन्तीति प्रथमकक्ष्यायाम्भृत्यानाङ्कर्तृत्वन्ते पश्यन्तायस्यायाङ्कर्मत्वेनाणौ यत्कर्म तदतिरिक्तकर्मणो विद्यमानत्वाद्विरोधः । ये कर्तृकर्मणी इति । एवञ्च भृत्यानान्तदानीङ्कर्तृत्वेनोभाभ्यामतिरिक्तङ्कर्म नास्तीति न विरोध इति भावः । नन्वेवङ्कर्मशब्दस्यैतन्मते लक्षणापत्तिः । पूर्वमते तु क्रियापि शक्त्या कर्मेति न लक्षणेत्यत आह । कर्त्तरि कर्मेत्यत इति । एकदेशेनेति । नपुंसकमनपुंसकेनेतिसूत्रे चैकशेषेणेत्यर्थः । कर्मान्तरनिवृत्तेः फलमाह । कर्मान्तरेति । तत्र हि । स्थलमारोहयतीत्यत्र हि । प्रेरणावृद्धिमदिति । यथाऽध्यारोपितप्रेरणपक्षे प्रेरणावृद्धिः पूर्वमते प्रतिपादिता तद्वत् ॥ अत्र । स्थलमारोहयति मनुष्यानित्यत्र । धात्वर्थः । प्रकृत्यर्थः । नन्वेतावतास्य धात्वर्थत्वे प्रथमतः आरोहन्ति हस्तिनं हस्तिपका इत्येव भाष्ये दर्शितम्न तु स्थलमपि कर्मेति न्यूनता प्राप्नोतीत्यत आह । आरोहन्तीत्यादि । इत्यस्यैव मूलभूतेति । एवञ्च यत्प्रत्युदाहरणत्वेनाभिमतन्तस्य तादृश्या मूलभूता न भवतीति न न्यूनतेति भावः । तत्प्रदर्शनवैयर्थ्यं शङ्कां वारयति । आरोहयमाणेत्यादिना । तस्य दृष्टान्तांशेऽप्युपादानमित्येतद्विशदयति । किञ्चास्योदाहरणस्येति । कर्मशब्दस्य क्रियापरत्ववादिना मनुष्याः स्थलमारोहन्तीति प्रथमकक्ष्या न्यायमतानुगुणो यो मनुष्यनिष्ठो व्यापारस्तद्बोधतात्पर्यिका वाच्या । ततः नीकर्मविरहात् कर्मणोऽपि स्थल-

वः । न च ज्ञानविषयीभवनानुकूलव्यापारस्य यत्र प्रथमकक्ष्यायां विवक्षा तत्रातिप्रसङ्गो दुर्वार इति वाच्यम् । अणौ या क्रियेत्यस्याण्यन्तावस्थास्थधातुजन्यबोधीयक्रियानिष्ठा यावद्विषयतास्ताभिरतिरिक्तविषयता यस्यान्तजन्यबोधीया नास्ति तस्माण्ण्यन्तादात्मनेपदमित्यर्थात् । न ह्येवं पूर्वोक्तविवक्षायामस्ति । ज्ञानविषयीभवनस्य द्विधा भानादिति बोध्यम् । ननु भट्टिप्रयोगे मध्वपाययतेत्यत्रात्मनेपदं दृश्यते तत्रात्मानमित्यस्य कर्मत्वदर्शनेन तस्य कर्मत्वोपपत्त्यर्थं क्रियाधिक्यं स्वीकार्यमिति कथमात्मनेपदमित्याशङ्कायामाह । मध्वपाययतेत्यादि । ईदृशम्मधु स्वच्छं सोत्पलं सुरताभोगः सुरतविमर्दस्तस्मिन्यो विश्रम्भो विश्वासस्तस्य यदुत्पादनं तत्र समर्थमात्मानं दयितस्य कामुकस्यान्तिके समीपे दर्शयित्वाऽपाययत इत्यन्वयः । ईदृशं यत् पूर्वश्लोकेनोक्तं रक्षसां गणः सुरामलमुपाभुङ्क्ताभ्याहृतवान् तत् । दर्शयित्वेत्यस्याध्याहारे सत्यात्मानमित्यस्य दर्शनक्रियानिरूपितकर्मत्वं न तु पानक्रियानिरूपितमिति फलाधिक्यमात्मनः कर्मत्वोपपत्तये न कार्यमित्यणौ या क्रिया सैव ण्यन्तेनोच्यते कर्मणो मधुन एवाणौ तथात्वेऽपीदानीं णौ कर्तृत्वञ्चास्तीति भवति प्रकृतसूत्रेणात्मनेपदम् । सः मधु पिबतीति प्रथमकक्ष्या । ततः कर्म मधु पिबन्तं रक्षोगणं प्रेरयतीत्यर्थे णिचि समपाययतीति द्वितीया कक्ष्या । ततः सौकर्यविवक्षया द्वयोरपि प्रकृत्यर्थणिजर्थव्यापारयोस्त्यागे मध्वपाययतेत्येवमनेनैवात्मनेपदमिति भावः । उत्पादनमित्यत्र पदन्तात्पदेः कृत्यल्युटो बहुलमिति कर्तरि ल्युट् । उदाहरणभूतकक्ष्यायान्दर्शनविशिष्टम्पानन्यात्मवर्थो विवक्षित इत्यणौ या क्रिया तदधिकास्तीति नानेन सूत्रेणात्मनेपदं किन्तु णिचश्चेत्यनेनेत्याशयेनाह । करेणुरित्यादि । गिरयाद्भ्रस्व इति । स्मृ आध्याने इति घटादौ पाठेन मित्त्वाद्ध्रस्व इत्यर्थः । पृथक्त्वसम्मतां स्वाभ्यासमदृष्ट्यं भाष्यानुसारिमतमाह । अपरे त्विति । उपक्रमयाति स्मरयति । णेरात्मनेपदविधाने ण्यन्तस्य कर्मणस्त्रोपलब्धिरि-

परवाक्योच्चारणेन समाधानार्थमप्रवृत्तत्वा स आचार्यस्तथापि साक्षाद्बाधिका क्रिया सैव स्पष्टप्रतिपत्तये प्रदर्शनीया सा न प्रदर्शिता किन्तु सकर्मकोदाहरणमेव दर्शितमतोऽयमाचार्यदेशीय इति भावः । इत्युक्ते । परेणैवमुक्ते । कर्मकर्तृत्वात्सिद्धम् । कर्मण एव कर्तृत्वे कर्मवत्कर्मणा तुल्यक्रिय इत्यनेन सिद्धम् । कर्मवद्भावातिदेशे भावकर्मणोरित्यनेनात्मनेपदम्भविष्यतीति भावः । इत्याशङ्केरति । इदन्तर्हि प्रयोजनमनाध्यान इति वक्ष्यामि । इह मा भूत् । स्मरति वनगुल्मस्य कोकिलः । स्मरयत्येनं वनगुल्मः स्वयमेवेतीत्यनेनाशंकेरत्यर्थः । कर्तृस्यभावकत्वादिति। कर्मणि क्रियाकृतविशेषानुपलम्भादयन्न कर्मस्थक्रियः । नन्वत्राधीगर्थेति सूत्रेण कर्मणः शेषत्वविवक्षया वनगुल्मस्येति षष्ठी वाच्या । एवञ्च कर्मण एवाभावेनाणौ यत्कर्मकारकमित्यंशाभावात्कथमात्मनेपदप्राप्तिरिति चेन्न । सूत्रस्थकर्मशब्दस्य फलाश्रयमात्रपरत्वात् ॥ न च कर्मवद्भावात्सिद्धमिति भाष्यग्रन्थस्याकर्मकार्यवोदाहरणानीति मत्वा प्रवृत्तेरत्रैनमित्यस्य कर्मवाचकस्योपादानेन नायमकर्मक इति कथमियमाशंकेति वाच्यम् । कर्मबोधकपदाघटिते स्मरयति वनगुल्म इत्यत्र तात्पर्यात् । यद्यपि गतिबुद्धीतिसूत्रे ज्ञानसामान्यस्यैव बुद्धिपदेन ग्रहणन्न तु ज्ञानत्वन्यूनवृत्तिधर्मावच्छिन्नवाचकस्येति स्मरयति योगेनाण्यन्तकर्तुः कर्मत्वप्राप्तिरित्येनमित्यस्यानुपपत्तिस्तथापि तत्र सूत्रे आध्यानार्थस्मरयतेरप्येतद्भाष्यबलाद्ग्रहणमिति तात्पर्यम् । यथा तव तत्र कर्मवद्भावस्याप्राप्तिर्निषेधवैयर्थ्यन्तथा ममापि तेनात्मनेपदाप्राप्तिरात्मनेपदसिध्यर्थमिदं सूत्र मित्याह । यथा तवेत्यादि । इत्यर्थ इति । मकारवचनार्थकजातीयप्रत्ययस्योपादानादिति ॥ तज्जातीयस्यमित्यर्थः । सकर्मकाण्यप्यस्य इति । कर्मवद्भावस्य तु तत्र निवर्त्तनादिति भावः । दर्शयते भृत्यान् राजेति। भृत्या राजानम्पश्यन्ति । भृत्यान् राजा दर्शयते । अत्र प्रथमकल्पायाश्चाक्षुषज्ञानविषयत्वानुकूलव्यापारोऽर्थः । ततो दृग्धातोस्तादृशव्यापारानु-

स्य कर्तृत्वविवक्षया तत्र यः कश्चनविलक्षणो न्यग्भवनसमानाधिकरणो व्यापारस्तस्य मनुष्यनिष्ठव्यापारजनकत्वविवक्षया मनुष्यान्स्खलमारोहयतीति प्रयोगो यत्र तत्रात्मनेपदव्यावृत्तिपरत्वमस्य भाष्यग्रन्थस्येति वाच्यन्तन्न युक्तमित्याह । न मनुष्या इत्यादिना । स्खलनिष्ठायाः क्रियाया अधिकायाः प्रतीत्याऽणौ या क्रिया तदधिकायाः प्रतीत्या द्वितीयवाक्यार्थाभावेन नात्मनेपदमिति भवता वाच्यन्तन्न सम्भवति हस्तिन एव स्वरसतः कर्तृत्वस्य प्रतीतेरिति भावः । हस्तिन एव कर्तृत्वप्रतीतेः । मध्यमणिन्यायेन हस्तीत्यनेन पूर्वोच्चारितवाक्यार्थे परोच्चारितवाक्यार्थे च कर्तृत्वप्रतीतेः । हस्तिन एवेत्येवकारेण स्खलस्य कर्तृत्वं व्यवच्छिद्यते। तदेतदुपपादयति । शतृशानजौति । यथा कुर्वन्कुर्वाणो वा सर्पि हरिर्विजयत इत्यत्र शतृशानच्प्रत्ययार्थकर्तुर्हरेर्विजयत इत्यत्र कर्तृत्वम्प्रतीयते तथा सर्वत्र प्रतीतिः शब्दशक्तिस्वभावतो भवतीति भावः । क्रियान्तरस्य । आरोहणातिरिक्तक्रियायाः । प्रत्युदाहरणासङ्गतिरिति । तृतीयवाक्यार्थाभावेनैतद्व्यावृत्तिलाभाद्द्वितीयवाक्यार्थघटकैकर्तृत्वव्यवच्छेद्यत्वमस्य न सम्भवतीति भावः । ननु नारोहयमाणो हस्तीति वाक्यार्थघटकस्य हस्तिनः कर्तृत्वप्रतिपादने आरोहयमाणो हस्तीति वाक्योच्चारण तात्पर्यं किन्तु शुद्धदृष्टान्तार्थन्द्वितीयवाक्यार्थे कर्तृत्वं स्खलस्यैव विवक्षितमित्यत आह । तत्र हस्तीति । तिङन्तमेवेति । तिङ्संज्ञकात्मनेपदस्यावर्त्यत्वमेतन्नु स्यतया तिङन्तमेवोच्चारयेदित्यर्थः । कर्मशब्दस्य क्रियापरत्वादिमते भाष्यग्रन्थं न्यूनतापत्तिरित्याह । किन्तु कर्मपदस्येति । एवञ्चारम्भोऽप्यस्याभावस्य ज्ञानम्प्रतियोगिज्ञानजन्यमिति तत्सम्पादनाय द्वितीयश्लोदाहरणमुपितेति भावः । एवमिति । अस्य इति सूचितमिति परेणान्वयः । अकर्मकाणामेवैतदिति । अविरतव्यवच्छेदफलकस्य समानक्रियत्वस्य तत्रैव सम्भवादिति भावः । आचार्यदेशीयेनेति । यद्यपि तर्हि वत्सान्ध वत्सान्मित्यादिना समानक्रियत्वाभावप्रदर्शन-

गत्वात्। न चात्मनेपदेनैव न तु यक्चिणाविति नियमार्थमेव सूत्रमस्तु । अन्यथा कर्मवद्भावात्तावपि स्यातामिति वाच्यम् । यक्चिणोः प्रतिषेधे णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसङ्ख्यानमिति वार्त्तिकेन तयोर्निषेधादेव सिद्धेः । न च यत्र क्रिया कर्मस्था तत्र कर्मवद्भाव इष्यते । कर्मस्थत्वञ्च यत्र कर्मणि क्रियाकृतो विशेषो दृश्यते तत्र कल्प्यते यथा पच्यते ओदन इत्यत्र तत्र पक्वापक्वतण्डुलयोर्विशेषस्य दर्शनात् । प्रकृते तु न तथा । दृष्टादृष्टभवे विशेषानुपलम्भादिति वाच्यम् । पच्धात्वर्थक्रियाकृतस्य श्रमादिरूपस्य विशेषस्य कर्त्तर्यपि सत्त्वेन पच्धातोः कर्तृस्थक्रियकत्वापत्तेः । चिन्तयत्यादीनां कर्तृस्थभावकत्वाभावापत्तेश्च । न हि कर्त्तरि क्रियाकृतो विशेष उपलभ्यते । तस्मादत्र व्यवस्था न विशेषदर्शनमात्रेण । किन्तु फलताव्यापारजन्यतान्यतरावच्छेदकसम्बन्धेन कर्तृकर्मवृत्तिफलन्धातुना प्रतिपाद्यते यत्र तत्र स धातुः कर्तृस्थभावक इति व्यवहारः । यथा पश्यति घटं । ग्रामं गच्छतीत्यादौ । अत्र हि फलं दृश्धातुप्रतिपाद्यञ्चाक्षुषज्ञानविषयत्वानुकूलव्यापारस्य धात्वर्थत्वादिमते चाक्षुषज्ञानविषयतैव सा फलतावच्छेदकस्वरूपसम्बन्धेन कर्मणि स्वप्रयोजकज्ञानवत्त्वसम्बन्धेन कर्त्तरि चास्तीत्ययन्धातुः कर्तृस्थभावकः। चाक्षुषज्ञानानुकूलव्यापारस्य धात्वर्थत्ववादिमते तु फलतावच्छेदकविषयतासम्बन्धेन कर्मणि व्यापारजन्यतावच्छेदकसमवायसम्बन्धेन कर्त्तरि चास्तीति । गम्धात्वादिगत्यर्थकधातुस्थले संयोगरूपफलमनुयोगिताकफलतावच्छेदकसम्बन्धेन ग्रामादिकर्मणि व्यापारजन्यतावच्छेदकसमवायसम्बन्धेन कर्त्तरि चास्ति । एवन्देवदत्तमुपक्रमतीत्यत्रापि बोध्यन्त्रापि इष्धात्वर्थे इच्छानुकूलव्यापारस्तत्रेच्छा रूपफलं स्वप्रयोज्यदुःखत्वसम्बन्धेन कर्मणि व्यापारजन्यतावच्छेदकसमवायसम्बन्धेन कर्त्तरि चास्तीति । एवमेवान्यत्र कर्तृस्थभावकत्वस्य यथा यथमुपपत्तिः कार्या । यत्र तु कर्मवृत्तिधर्मरूपफलन्धातुना प्रतिपाद्यते स धातुः कर्मस्थभाव-

दाहरणत्वेन तत्र कर्मवद्भावो न भवतीति प्रागुपपादितम् । व्यापारद्वय-न्यायेनोदाहरणस्थले लक्षणया गङ्गायाङ्घोष इत्यत्र गङ्गापदस्य घोषे लक्षणायामपि टाप्स्थितिवत्खिचः स्थितिस्तेनोपपादिता सा न युक्तेत्याह । किञ्च गभीरायामित्यादिना । गभीरनदीतीरे यदि नदीपदस्य लक्षणाऽऽश्रीयते तदा नद्याः पदार्थैकदेशतया तत्र गभीरपदार्थान्वयो न स्यादिति नदीपदस्य गभीरनदीतीरे लक्षणा गभीरपदञ्च तादृशेऽर्थे लक्षणायान्तात्पर्यग्राहकमिति यथोच्यते तथा प्रकृते णिच्सत्त्व एव कर्मव्यापारे लक्षणा सम्भवति तदभावे तात्पर्यग्राहकाभावान्न सम्भवतीति वक्तुं न शक्यम्पच्यते ओदनः स्वयमेवेत्यादिदर्शनादितिभावः।स्वास्वर्थसम्भव्यइति *स्वार्थप्रतीतिश्चोभयसद्भावे भवतीति तयोरुपादनं सार्थकमिति भावः।वक्तु-*मशक्यत्वादिति । नचैवङ्गङ्गायाङ्घोष इत्यत्र तीरे लक्षणायामपि टापः साधुत्वानापत्तिरिति वाच्यम् । लक्षणा हि न शक्यसम्बन्धरूपा ॥ न वा शक्यतावच्छेदकातिरिक्तधर्मावच्छिन्नस्य लक्षणया बोध इति युक्तम् किन्तु शक्यतावच्छेदकारोपो लक्षणा ॥ आरोपितशक्यतावच्छेदकप्रकारिकैव प्रतीतिरिति यद्धर्मावच्छिन्नबोधनाय टाबन्तस्य साधुत्वस्योचितत्तद्धर्मावच्छिन्नविषयताशाल्येव बोध इति नासाधुत्वम् ॥ अत एव कचतस्त्रसति वदनं वदनात्कुचमण्डलन्त्रसति ॥ मध्याद्बिभेति नयनन्नयनादधरः समुद्विजतीत्यतश्चमत्कारो भवति ॥ अत्र कचशब्दस्य राहौ वदनशब्दयोश्चन्द्रे कुचमण्डलशब्दस्य कमलकुड्मले मध्यशब्दस्य सिंहे नयनशब्दयोः कुरङ्गे अधरशब्दस्य रक्तनूतनाम्रादिपर्णे लक्षणाऽस्ति ॥ यदि राहुत्वादिप्रकारको बोधो लक्षणया स्वीक्रियते तदा न तथा चमत्कारो यथा कचत्वादिप्रकारकबोध इति । स्वमते उपपत्तिमाह । तस्मादिति ॥ णिजर्थ इति ॥ दर्शयते भव इत्यत्र णिजर्थः ॥ स्वस्य ॥ भवस्य ॥ अत एव । उदाहरणभूतकल्पायामपि प्रेरणाया णिजर्थत्वादेव ॥हयुक्तरीत्या पञ्चमी कल्या सूत्रोदाहरणमित्येतद्वोपयितुमादौ दृष्टान्तायाह ॥ मियस-

फः। यथा भिनत्सि पचयीत्यादौ । आद्ये द्विधा भवनन्द्वितीये विक्लित्तिः फलन्तच्च कर्म्मवृत्तीति स्पष्टमेव। अत एव कर्मवत्कर्मणा तुल्यक्रिय इति सूत्रभाष्ये उक्तञ्च च कर्तृस्थभावकानाङ्कर्मणि क्रियायाः प्रवृत्तिरस्तीति । तेषान्धातूनां वाच्यायाः क्रियायाः कर्ममात्रे प्रवृत्तिर्नास्तीत्यर्थः । तदुक्तं हरिणा । विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता । क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकल्पितेति । एतत्कारिका पूर्वार्द्धोक्तार्थे पूर्वोक्तामनुपपत्तिम्परिचिन्त्य शेषराद्धे नान्येषाम्मते शब्दैरेव क्रिया व्यवस्था प्रकल्पितेति तेनोक्तम् । शब्दश्चानुपदमुक्तो ज्ञातव्यः । न च पूर्वोक्तरीत्या दृश्धातोः कर्तृस्थभावकत्वाद्यद्येवङ्कर्म कर्त्रायम्भवति तत्र कर्म कर्तृत्वासिद्धमिति भाष्यग्रन्थासङ्गतिरिति वाच्यम् । णेरणाविति सूत्रोदाहरणभूतकल्पायां व्यापारस्य वाच्यत्वाभावेन व्यापारघटितोक्तशब्देन कर्तृस्थभावकत्वसम्भोपपादनासम्भवात्।नन्‌ यद्येवमिति भाष्यग्रन्थेन कृता शंका कर्मवत्कर्मणेति सूत्रस्थभाष्योक्तरीत्या न सङ्गच्छते । तत्र हि कर्मवदकर्मकाणाङ्कर्ता कर्मवद्भवतीति वक्तव्यम्। किम्प्रयोजनम् । भिद्यमानः कुसूलः पात्राणि भिनत्तीति । अत्र भिद्धात्वर्थफलन्द्विधा भवनन्तच्च कुसूले पात्रे चास्तीति प्राप्नोति । तथा समानधाताविति वक्तव्यम् । इह मा भूत् । पचत्योदनन्देवदत्तः । राध्यत्योदनः स्वयमेवेति प्रतिपादित मेवञ्च प्रकृतसूत्रोदाहरणस्थले समानधातुत्वाभावो णिचः सत्वासत्वान्यामस्तीति चेन्न । लुनाति केदारन्देवदत्तः । लावयते केदारः स्वयमेवेतियदुपपत्तेः । तत्र यथा प्रथमा लुनाति केदारन्देवदत्त इति कल्पा । ततो लुनन्तन्देवदत्तङ्केदारः प्रयुङ्क्त इति विवक्षया लावयति केदारो देवदत्तमेति द्वितीया कल्पा । ततः प्रयोज्यप्रयोजकभावाविवक्षायां लावयते केदारः स्वयमेवेति तृतीया कल्पा । तत्र यथा स्वक्रियामपेक्षापि स्वव्यच्छेदाया अधिकक्रियाया अभावाद्भवति तथा प्रकृतेपि यथादिनि । कर्मशब्दश्च कारकपरत्वमेवेति मते सकर्मकाणामेवो-

धिकरणव्यापारस्याप्रतीतेः । द्वितीयायां यद्यपि हरप्रतीतिस्तथापि तदा हस्ती न कर्म । तृतीयायां यद्यपि कर्म । तथापि तामादाय तुल्यक्रियत्वमेव न । तदा समानाधिकरणव्यापारस्यानुद्भूतस्य प्रतीतेः । तुरीयायां तु हस्ती न कर्मेति कर्मवद्भावस्याप्राप्तेरेतत्सूत्रोदाहरणमिति द्रष्टव्यम् । एवञ्च कर्मशब्दस्य कर्मकारकपरत्वमेवेति व्यवस्था सिद्धौ द्वितीयायां अध्यारोपितप्रेषणपक्षे कल्प्या तत्राप्यात्मनेपदमपेक्षितमिति लायवतीति परस्मैपदप्रयोगानुपपत्तिरत आह । तद्रीत्येति । कर्मशब्दस्य क्रियापरत्वग्रादिरीत्या । सः । परस्मैपदप्रयोगः । मूले यदुपक्रमे पूर्वविप्रतिषेधेनेत्युक्तंतत्खण्डयति । एतम्पूर्वेति । यद्यस्य सूत्रस्योदाहरणेऽणावकर्मकादित्यस्य प्राप्तिस्तदा युज्यते पूर्वविप्रतिषेधः । वस्तुतो न प्राप्तिरिति दर्शयितुं शङ्कते । दर्शयत इति । भाष्यप्रयोगदर्शनेन पूर्वविप्रतिषेधकल्पनापि नेत्यर्थः । परस्मैपदविधायकसूत्राप्राप्तिमुपपादयति । अण्यन्तसकर्मकेष्विति । अत एव भाष्ये पश्यन्ति भृत्या राजानमिति दर्शयित्वा दर्शयते भृत्यान् राजेति भाष्ये उपात्तम् । विभाषोपपदेन । अस्याः प्राप्तविभाषात्वे हेतुमाह । स्वरितेत्यादि । ननु क्रियाफलस्य कर्तृगामित्वद्योतकमत्र स्वमितिपदान्तरमुच्चारितमेवेत्यात्मनेपदप्रयोगो न उन्नयति यथा हेरामेत्यादौ हि इत्यस्य हेशब्देन द्योतितेऽर्थे प्रयोगो न भवति । एतञ्च सम्ीगेचारितेन पदेनेत्यनुपपन्नमत आह । पत्रभिप्राय इत्यादि । इहापि प्राप्नोतीति । यत्र स्पष्टप्रतिपत्तये आदौ स्वमित्यादिप्रयुक्तं तत्रापि व्यतिलुनीत इतिवत्प्राप्नोतीत्यर्थः ॥

## इत्यात्मनेपदप्रक्रियाविवरणम् ।

शेषात्कर्तरि परस्मैपदम् । शेषात् । आत्मनेपदनिमित्तहीनात् । मन्वत्र शेषग्रहणेनात्मनेपदनिमित्तहीनस्य ग्रहणे भिद्यते पुमूलः स्वयमेवेत्यत्रापि परस्मैपदम्प्राप्नोति । कर्तुः कर्मत्यातिदेशेऽपि स्वाश्रयस्य

प्रेषणादिति ॥ प्राकृतेऽर्थे ॥ प्रकृतेरयम्प्राकृतः ॥ निवृत्तिप्राक्कालिकप्रतीतिविषये व्यापाररूपेऽर्थे ॥ ब्रवीति पचतेरर्थमिति ॥ निवृत्तप्रेषणकपचतेरर्थमित्यर्थः । सिध्यतिर्न विना णिचेति ॥ विक्लित्योदन इत्यत्र सिध्यतिर्विक्लित्तिमात्रार्थको भवति स सिध्यतिर्णिचि सति साधयतीत्यत्र ण्यन्तसमुदायघटकतया पचतेरर्थे पचत्योदनमित्यत्र यः पचतेरर्थस्तस्मिन्सर्वथा वर्त्तते तदा विक्लित्त्यनुकूलव्यापारः साधयतेरर्थो भवतीत्यर्थः । तद्वद्रुहेरिति ॥ निवृत्तिप्रेषणरुहधातोर्णिचि पूर्वावस्थायां यो न्यग्भवनानुकूलव्यापाररूपोऽर्थस्तमादाय तुल्यार्थत्वमिति ॥ इदमुक्ततृतीयकल्पोदाहरणेत्यादि ॥ तृतीयकल्पायामुदाहरणभूतपञ्चमकल्पायोश्च समानमित्यर्थः ॥ ताः कल्पा दर्शयति ॥ तत्र द्वितीयेत्यादिना ॥ प्रथमकल्पायाम्न्यग्भवनानुकूलो यो हस्तिपकनिष्ठो व्यापारस्तस्य प्रतीतिः ॥ आरोहन्ति हस्तिनं हस्तिपकाः ॥ आरोहति हस्तीति द्वितीया ॥ अत्र न्यग्भवनसमानाधिकरणो व्यापारो विवक्षितः ॥ ततो हस्तिपकस्य प्रयोजकत्वविवक्षया तदीयव्यापारेऽणिचि आरोहयन्ति हस्तिनं हस्तिपका इति तृतीया ॥ तत उभयोरपि व्यापारयोस्त्यागे सति तादृशीभवराहित्यबोधनाय शुद्धरुहधातुघटिता आरुह्यते हस्तीति तुर्या कल्पा ॥ अत्र कर्मवद्भावाद्यगात्मनेपदे ॥ ततो न्यग्भवनसमानाधिकरणव्यापारस्य प्रयोजकत्वविवक्षया तस्मिन्व्यापारे णिच् ॥ आरोहयते हस्तीति पञ्चमी कल्पा ॥ अत्र स्यन्दूती दृष्टान्तार्थे न कल्पनीया ॥ एतदेव न्यग्भावयतान्यग्भवनं यत्नेऽपि प्रतिपद्यत इति प्रागभिहितम् ॥ भिन्नार्थः॥ तृतीयायां व्यधिकरणस्य व्यापारस्य सत्त्वादत्र तु नेति भिन्नार्थत्वमित्यर्थः॥असम्भवोऽपीति ॥ न च द्वितीयायामादाय समान विषयत्वमस्तीति वाच्यम् । तत्र कर्मसमानाधिकरणस्य व्यापारस्यानुद्भूतस्य प्रतीतिः ॥ अत्र तु तस्य हेतुत्वं विवक्षितमत उद्भूतत्वमिति वैलक्षण्यात् ॥ अनेनादृशवैलक्षण्येऽपि कर्मवद्भावस्य प्राप्तिरिति न शङ्क्यम् ॥ अण्येन प्रथमकल्पायां समाना-

देश इत्यादिना । इति मत इति । इदञ्च मतम्मुख्यम् । अत एव परिवीरित्यत्र व्येञः क्विपि सम्प्रसारणेऽन्तरङ्गत्वात्क्विपो लोपेऽपि स्थानिवद्भावेनाङ्गत्वात् दीर्घत्वयोः प्राप्तौ परत्वाद्दीर्घ इति सङ्गच्छते । भाष्यस्वरस इति । आत्मनेपदसाधनाय यत्पूर्वसूत्रे भाष्यकृतोक्तं कर्तरि कर्मव्यतिहार इत्यत्र कर्तृग्रहणप्रत्याख्यायते तत्प्रकृतमुत्तरत्रानुवर्त्य शेषात्कर्तरि कर्तरीति तद्भाष्यस्वरस इत्यर्थः । पूर्वसूत्रे कर्तृग्रहणस्य पूर्वोक्तरीत्या प्रकृतसूत्रार्थत्वस्य स्वीकारादिति भावः । अभेद एव सूचित इति । एतेनातिदिश्यमानकार्याणामुत्पत्तिदेश एव देश इत्यर्थादुक्तम्भवति । अग्रेऽपीति । अभिप्रत्यतिभ्य इति सूत्रेऽपीत्यर्थः । वीजादिकस्य परिमर्षतीति मूले आधृषीयत्वाण्णिजभाव इत्यपि बोध्यम् । स हि स्वरितेत् । मतान्तरे त्वनुदात्तेत् । व्याङ्परिभ्यो रमः । रम्धातुरनुदात्तेदित्यस्यारम्भः । अकर्मकाणाम् । युधनशजन् इत्येषाम् । तदर्थमिति । अणावकर्मकादित्यस्य तदाऽप्राप्तेः । यो जनयत इति । यः ईश्वरः । अत्र चित्तवत्कर्तृकत्वात्परस्मैपदन्याय्यमिति भावः । ण्यन्तात्साविति । अणावकर्मकादित्यस्य यो धातुरणावकर्मकस्तत्प्रकृतिकण्यन्त एव प्रवृत्तिरिति भावः । ननु भक्तजनस्य प्रीतिकर्तृकोत्पत्त्यनुकूलव्यापाररूपफलाश्रयत्वात्तस्य कर्मसंज्ञायान्द्वितीया स्यादत आह । प्रयोज्यकर्तुरिति । निगरणचलन । कठिनद्रव्यवृत्तिगलाधःसंयोगानुकूलव्यापारे निगरणशब्दस्य प्रसिद्धेः पा पान इत्यस्य ग्रहणं न स्यादत आह । अत्र निगरणेति । पाग्रहणादिति । निषेधस्य प्राप्तिपूर्वकत्वादिति भावः । ननु च मुधातोरदनार्थत्वेन निगरणार्थत्वाच्छ्रीहर्षपद्ये आशयनयत इत्यत्रात्मनेपदमनुपपन्नमत आह । इमाङ्क्लिमिति । अत एव । सादरज्ञानलाक्षणिकत्वादेव । कर्मचक्रि । गतिबुद्धीतिसूत्रेणेति शेषः । इति न्यायादिति । न चैवमदेः प्रतिषेध इत्यस्य वैयर्थ्यमिति शङ्क्यम् । निगरणचलनेति सूत्रस्य णिचश्चेत्येतत्सूत्रापवादतया यत्र कर्तृगामित्वं क्रियाफलस्य विव-

कर्तृत्वस्यानियमनात्। अतिदिश्यमानधर्मविरुद्धस्वाश्रयधर्मप्रयुक्तकार्याभावस्यातिदेशस्वभावसिद्धत्वेन समाधानन्तु प्रकृते नास्ति। अतिदिष्टकर्मत्वेन कर्तृत्वस्य विरोधाभावात्। कर्तुरेव हि कर्मवद्भावो भवति। अत एव चाभिहिते कर्तरि प्रथमेति प्रथमा कुसूलशब्दाद्भवति। न च शेषपदं सप्तम्यन्तं करिष्यते। एवञ्चात्र शेषे कर्तरि गृह्यमाणे कुसूलस्य कर्तृकर्मत्वातिदेशेनोपयुक्तभावकर्मणोरित्यत्रेति परस्मैपदन्न भविष्यतीति वाच्यम्। बुधादिभ्योऽनुदात्तङितः परस्मैपदस्य शुद्धे कर्तरि दुर्वारत्वात्। यदि च सौत्रत्वेन शेषादिति पदमावृत्त्यैकस्य सप्तम्यन्तत्वकल्पनया शेषार्द्धेऽपि कर्तरीत्युच्यते तदा कर्तरीति व्यर्थम्। भावकर्मणोरुपयुक्ततयाऽशेषत्वादिति चेन्न। सप्तम्यन्ते कर्तरीत्यस्योपादाने आवृत्तिस्तस्यैकस्य विशेष्यानुरोधात्सप्तम्यन्तत्वम्भवतीति तत्रैव तात्पर्यग्राहकतया कर्तरीत्यस्य चारितार्थ्यात्। उत्तरार्थत्वाच्च। अत एवानुपराभ्यां कृञ इति परस्मैपदमनुक्रियते स्वयमेव पराक्रियते स्वयमेवेत्यत्र न भवति। यदि च सप्तम्यन्तस्य कर्तरीत्यस्यावश्यमुत्तरार्थत्वे तत्रैक कर्तव्ये इह कर्तरीत्यस्योपादानाच्छेषपदं सप्तम्यन्तमेवास्तु। अनुदात्तङित इति सूत्रमनुदात्तङित आत्मनेपदमेवेत्येवमाकृतिनियमपरमित्याश्रीयते तदा शेषादित्यस्यावृत्तिर्न कार्या। अनुपराभ्यां कृञः। कर्तृगामिक्रियाफलविवक्षायां स्वरितञित इत्यस्य बाधनार्थमिदं सूत्रम्। अत्र मूले कर्तरीत्येवेत्युक्तम्। एतत् प्रत्ययनियमपक्षे बोध्यम्। कार्यातिदेशस्य मुख्यत्वेति। शास्त्रातिदेशस्य कार्यसम्पत्तिफलकत्वात्कार्यातिदेशस्य मुख्यत्वम्। एवञ्च प्रकृते आत्मनेपदविधायकं कर्तरि कर्मत्वेव तथानुपराभ्यामित्यतः परानिति कर्मकर्तरि न भविष्यतीति भावः। तादेशस्य गुणस्यात्मुपि चेति दीर्घ इतिवत्प्रकृते कार्यम्भावकर्मणोरित्यनेनैवेत्याश्रीयते तदाप्याह। शास्त्रातिदेशपक्षे त्विति। मुख्यकार्यातिदेशपक्षेऽपि कर्तृपदस्यानुवृत्ततया वर्णैव च कर्मत्वाभावप्रसङ्गमित्याह। कार्मेति·

दव् प्रत्ययः । अत एव भावनाशब्दस्योत्पादनाशब्दपर्यायवाचकता स-ङ्गच्छते । ननु फलशब्दस्योत्पत्त्याश्रयबोधकतया द्रव्यादिषु सत्तया स्वी-पत इत्यत्र स्थितेरुत्पत्त्यभावादनुपपत्तिरत आह । फलत्वञ्चेति । कर्तृ-प्रत्ययसमभिव्याहार इति फलव्यापारयोः कर्मणि प्रत्यये विशेषणवि-शेष्यभावव्यत्यासेऽपि फलत्वासम्भवव्युदासाय । तद्धात्वर्थविशेषणत्वे सतीति । तद्धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारताश्रयत्वे सतीत्यर्थः । विशेष्यता च न मुख्यविशेष्यतैव । किन्तु प्रकारत्वावच्छिन्नविशेष्यतापि। अत एव गत्याद्यर्थकधातुप्रकृतिकणिजन्तस्थले संयोगस्य फलत्वमुपपद्यते। तद्धात्वर्थत्वञ्च तद्धातुवाच्यत्वम् । वाच्यतावच्छेदकञ्च फूत्कारत्वादिक-मेव । चेतनाचेतनेति । तेन गम्यते ग्रामो रथेनेत्यस्योपपत्तिः । अत एव । क्रियाया धातुवाच्यत्वादेव । रूपा । व्यापारार्थकरूपाविवरणवि-क्रियमाणयोः समानार्थत्वस्य भूवादिसूत्रस्थभाष्ये कथ ज्ञायते क्रियाव-चनाः पचादयः यदेतेपाङ्करोतिना सामानाधिकरण्यमित्यनेन स्पष्टमुपद-र्शनात् । क्रियावचना इत्यत्र क्रियात्वेन रूपेण क्रियायाः प्रवेशस्तच क्रियात्वञ्चेमित्याकाङ्क्षायामाह । क्रियात्वमिति । धातुवाच्यत्वसमाना-धिकरण इत्युपाहन्न तु धातुवाच्यतावच्छेदकमिति । क्रियात्वरूपसा-मान्यधर्मस्य वाच्यतानवच्छेदकत्वात् । अत एव पचति चैत्र इति वा-क्यजन्यशाब्दबोधोत्तरम्फूत्कारयत्न वेति संशयानुत्पत्तिः सङ्गच्छते । यदि क्रियात्वरूपसामान्यधर्म एव वाच्यतावच्छेदकः स्यान्न तु फूत्कार-त्वादिविशेषधर्मस्तदा सामान्यधर्मावच्छिन्नप्रकारनिश्चयस्य विशेषधर्मा-वच्छिन्नाभावकोटिकसंशयविरोधिता न स्यात् । न चैवं फूत्कारत्वादि-विशेषधर्मावच्छिन्नप्रकारकशाब्दबोधे जाते सामान्यधर्मावच्छिन्नाभाव-कोटिकः संशयः स्यादिति वाच्यम् । विशेषधर्मावच्छिन्नप्रकारकनिश्च-योत्तरं सामान्यधर्मावच्छिन्नप्रकारकमानसस्यानुमितेर्वा जननात् । जा-तिविशेषः । शब्दत्वव्याप्य इति शेषः । धातुत्वेनेत्यत्र तृतीया .प्रकृत्या-

क्षितत्वात्रात्मनेपदसम्पादकत्वेन चारिताथ्यात् । अणावकर्मकादिति सू-
त्रे यच्चित्तवत्कर्तृकादिति तदणावकर्मकादित्यस्य यद्विशेष्यत्वस्यैव विशे-
षणत्वदभिप्रायेण तत्प्रयोजनमाह । शुष्यन्ति व्रीहय इति । अत्र व्रीही-
णां यद्यपि प्राणित्वमस्ति तथापि यादृशं चित्तवत्त्वम्मनुष्यादीनामस्ति
तादृशन्नेति विवक्षितञ्च चित्तशब्देन तथैव । चित्तञ्चैतन्यम् । अणावि-
त्यत्र प्रतियोगिभूतो णिर्हेतुमण्णिरेव । पूर्वस्मिन्गुधघुषेतिसूत्रे तस्यैव
शुधादिभ्यः सम्भवात् । स एव च णिशब्द इहानुवर्तते । एवञ्च य-
णिजन्तादनेन परस्मैपदं विधीयते प्रत्यासत्त्या प्रतियोगित्वमपि तस्यैव ।
तेन चुरादिण्यन्ताद्धेतुमत्तौ भवत्येव परस्मैपदम् । चेतयमानम्प्रयोज-
यति चेतयतीति यथा । न पादम्याङ् । निषेधस्य प्राप्तिपूर्वकत्वादेभ्यः
प्राप्तिरुपपादिता निवृत्तिनिगरणार्थं इत्यादिना मूले तेषु यदिदम् धातु-
स्सकर्मक एव तदाऽणावकेत्यस्य न प्राप्तिरितीह तदुपपादनं द्वयं सा-
दित्याशयेनाह । दमिरकर्मकोऽपीति । यस्धातुः प्रकृतसूत्रे यादिरेव
गृह्यतेऽत्र प्रमाणमाह । कुत्रिप्रकरणेति । धेट्धातोर्निगरणार्थत्वात्प्राप्त-
स्परस्मैपदन्निवर्तयितुमिहोपसंख्याने शेषादिति प्राप्तस्यापि निषेधे प्रा-
प्ते आह । अनन्तरस्येतीति । योगद्वयस्येति । पादम्यादिन्य योगद्वय-
स्यैव प्राप्तेरिति द्वयपदोपादानम् । समीपि इत्यत्र प्रथमा द्वितयस्य वा
उन्दमीति पूर्वसवर्णदीर्घः । अनन्तरस्येति व्यापकस्यैवाग्रहणे भानमनु-
भिलायामयतीति हेतुमति चेति सूत्रस्यप्राप्त्यभावेन एव ॥

## इति परस्मैपदप्रक्रियाविवरणम् ।

सार्वधातुके यक् । अनुवर्तत इति । तत्र भावकर्म सार्वधातुक इत्यस्य
विशेषणम् । भावकर्मणोरित्यस्य भावकर्मबोधक इत्यर्थः । तेन भावे
च लकारस्य सार्वधातुकस्य धातुप्रत्यासत्त्यानुवादकत्वेऽपि न क्षतिः ।
भावो भावनेत्यत्र धातुस्वरूपस्य [illegible]

तत्र । सोऽख्याते । आख्यातपदञ्च तिङन्तपरम् । सदाश्रयः । क्रियाश्रयः । शेषग्रहणन्त्यक्त्वेति । अयम्भावः । यदि युष्मदीत्यादिसूत्राणामुपपदनियमार्थत्वं युष्मदि मध्यम एवास्मदि उत्तम एवेति तदा शेषे मध्यमोत्तमयोर्व्यावृत्त्यर्थं शेषे प्रथम एवेति नियमोऽपि स्वीकार्यः स च शेषपदस्यैवोपपद्यत इति शेषग्रहणङ्कर्त्तव्यम् । यदि पुरुषनियमो युष्मद्येव मध्यमः । अस्मद्येवोत्तम इति तदा शेषग्रहणन्न कार्यमिति विचारे पुरुषनियमेऽपि शेषवचनं कार्यमन्यथा मध्यमोत्तमयोर्नियतत्वेऽपि प्रथमस्यानियतत्वाद्युष्मदस्मत्सामानाधिकरण्येऽपि प्राप्नोतीत्यभिधाय भाष्यकृतोक्तम् । उपपदनियमे शेषग्रहणं शक्यमकर्तुम् । कथं युष्मदस्मदी नियते मध्यमोत्तमाभ्यनियतौ तौ शेषेऽपि प्राप्नुतः । ततो वक्ष्यामि प्रथम इति । तन्नियमार्थम्भविष्यति यत्र प्रथमश्चान्यश्च प्राप्नोति तत्र प्रथम एव भवतीति । एवं व्याख्यानेन भावे यत्र लकारस्तत्र मध्यमोत्तमौ प्राप्तावपि प्रथम इत्यनेन व्यावर्त्तिताविति प्रथमस्यैव श्रवणम्भवति । भवतामप्येवं विधनियम आवश्यक इत्याह । तवेति । भावाख्यातस्थले एकवचनमेवेति वदतस्तव मतेऽपि यत्रैकवचनञ्चान्यच्च प्राप्नोति तत्रैकवचनमेवेति नियमस्वीकार एवेष्टसिद्धिरन्यथा द्वित्वे द्विवचनमेव बहुत्वे बहुवचनमेवेति नियमेन द्विवचनबहुवचनयोरनियतत्वादेकत्वेऽप्येतौ स्याताम् । यदुक्तम्मूले तस्यौत्सर्गिकत्वेन संख्यानपेक्षणादिति तद्दूषयति । एकवचनमित्युत्सर्गेण त्विति । यथा कर्मण्येव द्वितीयेत्यादिरीत्या प्रत्ययनियमेऽन्येभ्यो विभक्तिसामान्याभावे प्रसक्ते सत्येकवचनमिति सूत्रमप्राप्तप्रापणार्थन्तच्चाविशेषात्सर्वासां सुप्विभक्तीनामेकवचनानि विधत्ते तथेहापि सर्वेषाम्पुरुषाणामेकवचनानि प्राप्नुवन्ति । पूर्वोक्तरीत्या एकवचनमित्यस्य नियमत्वे तु येषाम्प्रत्ययानामेकवचनञ्चान्यच्च प्राप्नोतीत्याकारकोक्तिर्योऽप्यस्यन्तेष्वेकवचनमेवेति नियमे प्रथमपुरुषैकवचनमेव भवतीति भावः । स्पष्टञ्चेदमिति । शेषग्रहणपरित्यागेन प्रथम इत्यस्यो-

दित्वात् । ध्वायमान इति शेषः । अन्वयश्चास्य सकलधात्वित्यत्र । गम-
कत्वात्समासः । धातुत्वञ्च न शक्ततावच्छेदकन्तदज्ञानतोऽपि शाब्दबो-
धदर्शनात् । शक्ततावच्छेदिका च पदाद्यानुपूर्व्येव तदाह । तद्वयस्येति ।
ना ना शक्तिकल्पना । शक्यतावच्छेदकभेदेन ना ना शक्तिकल्पना ।
अंशद्वयेति । फलव्यापाररूपांशद्वयेत्यर्थः । अकर्मधातोः फलप्रतिपादक-
त्वादेव स्तोकमेधत इत्यादौ फलसामानाधिकरण्यात्स्तोकादिपदेभ्यो
द्वितीया । तथा स्मृतत्वात् । धातुवाच्यत्वस्य स्मृतत्वात् ॥ यत्र तु फल-
मात्रं वाच्यम् । व्यापारांशस्य त्यागस्तत्र फल एव क्रियात्वव्यवहारोऽत
एव धातुसंज्ञा तत्प्रयुक्तकार्यञ्च । भावनायाधातुवाच्यत्वाभिधानञ्च भा-
वनाप्रत्ययत्रोध्येति मीमांसकमतनिरासाय । युष्मदादीति । आदिना-
स्मच्छब्दसंग्रहः । न चैवं शेषपदेन युष्मदस्मद्भिन्नोपस्थितौ तत्सामा
नाधिकरण्याभावात्प्रथमोऽपि कथमिति वाच्यम् । शेषे प्रथम इत्यस्यो-
पयुक्तसामानाधिकरण्याभाव इत्यर्थात् । यद्यनया रीत्या शेषपदस्य
त्यागाद्वा । पञ्चम्यन्तत्वम् इतिमताभिप्रायेणाह । तिङन्तेति । इ-
त्येव सूत्रमिति । एवञ्च तेन यथाऽव्ययेभ्यो भवत्येवमावाख्यातस्यऽपि
भवतु विशेषानुपलम्भादिति भाव. । एका क्रियेति । अत्रैकत्वमेकबुद्धि-
विषयत्वेन । तस्य । क्रियागतैकत्वस्य । क्रियायान्तरैकत्वस्यान्वयः प्रकृ-
तिप्रत्ययौ सहार्थमिति न्यायादित्याशयेनाह । एवञ्च तस्येति । न केवलं
भावाख्यातस्थल एव क्रियायामन्वयः । किन्तु यत्र कर्तरि कर्मणि वा
तत्रापि क्रियाया सङ्ख्यान्वय । द्वित्वादिस्तु न स्यात इत्याह । द्वित्वा-
दिकमिति । शायिता इति । धात्वर्थनिर्देशे ण्वुल् । उपमानगतदृष्टु-
त्वारोपेणेति । न चोपमानोपमेययोरभेदान्वयबोधारादारोपस्य गात्रो-
पयोग इति वाच्यम् । मात्रत्वतुल्यत्वाभेदस्य पदत्वमात्रस्य तु वास्त-
वाभेद इत्यप्रयात् । गन्धवस्तुत्वादिप्रकारकमतसंख्याया अप्यारोप इ-
ति मेत्यत आह । निष्कृष्येति । भिन्नाश्चो भेदः । भिन्नाश्चो विशेषः ।

मृषे आदौ कर्मणि लुडुदाहृतः । अन्वतप्तेत्यत्र तप्धातुर्दुःखानुकूलव्यापारबोधकः । दुःखञ्चात्र कर्म । पापकर्तृ । पापनिष्ठो व्यापारश्चात्मधारणादिरूप इति फलव्यापारयोर्वैयधिकरण्यादयं सकर्मकः । पापदुःखयोर्जन्यजनकभावे पापनिष्ठात्मधारणमपि दुःखजनकम् । अत्र फलतावच्छेदकसम्बन्धोऽवच्छेदकता तेन सम्बन्धेन दुःखस्य चैत्रनिष्ठत्वात्तस्य कर्मत्वम् । चैत्रशब्दस्यात्मावच्छिन्नशरीरपरत्वेऽवच्छेदकतासम्बन्धः फलतावच्छेदकः । शरीरावच्छिन्नात्मपरत्वे तु समवायसम्बन्धः फलतावच्छेदकोबोध्यः । पापेन कर्त्रा दुःखित इत्यर्थः । यस्य दुःखमुत्पन्नं तेनाहमन्वतप्सीति प्रयुक्ते दुःखितत्वतोऽनुतापो गम्यते । यत्र त्वन्यदीयकार्श्यरोदनादिविषयकज्ञानोत्तरमयमन्वतप्तेति दुःखितपुरुषादन्येन प्रयुज्यते तदा प्रयोक्तुरनुतापो गम्यते। अनुतापश्च दुःखविषयकज्ञानत्वमेव । भावे चेति । यद्वेत्यादिना भावे लुङ् यत्र तत्रायमाहेत्यर्थः । पापेन पुंसेत्यत्र पापशब्दोऽर्श आद्यजन्तः । कर्तरि तृतीया । अत्र दुःखानुभवानुकूलव्यापार एव धात्वर्थः । धात्वर्थमङ्गीकृतकर्मफलत्वेनायमकर्मकः । अशोचीत्यत्र शुच्धात्वर्थोऽपि स एव । अनुतापस्य फलत्वं समवायसम्बन्धावच्छिन्नाश्रयतया । तदनुकूलो व्यापारश्च मनःसंयोगादिरूप एव । अशोचीत्यत्रापि भावे लुङ् । अत्राप्यनुतापो यथा गम्यते तथाह । अपिबार्थेति । मृषे जाले गाहे इत्यत्र भावे लिट् । दायिता दातेत्यत्र कर्मणि लुट् । चिरूपेण चिण्वद्भावः । अदायि । कर्मणि लुङ् । चिण् । जग्लाहीत्यत्र भावे लुङ् । चिण् । घानितेत्यादौ कर्मणि प्रत्ययः । चिण्वद्भावः । अचिकर्षीरित्यत्र पर्युदासः प्रसज्यप्रतिषेधो वा उभयथापि लक्ष्यसिद्धिरित्याशयेनाह । प्रसज्येत्यादि । अजादीनामतुल्यकार्यातिदेशविधानेन स्यादीनामिणुपातिदिश्यते यथा च प्रसङ्गपरम्परा इति भावः । ननु चिण्वद्भावप्रयोजनमिष्टे इटि सते शाहुणोः स्थ इतोट् पुनः कुतो नेत्यत आह । चमीतिहोति । स एव । यथादेश एव । इण्योरपि कोष्टा

क्तनियमार्थत्वं स्पष्टमित्यर्थः । स्यसिच्सीयुट् । अव्यभिचारादिति । यथा कारिष्यते हारिष्यत इत्यादौ परत्वाद्गुणे रपरत्वे च कृतेऽजन्तत्वस्य व्यभिचारोऽस्तीत्यप्राप्तप्रापणार्थमुपदेशग्रहणं क्रियते तथा न हनादिष्वस्तीति भावः । उपदेश इत्यस्याज्मात्रविशेषणत्वे सापेक्षत्वेनासमर्थत्वेन समासानुपपत्तिपरिहारायाह । अजितीति । विपरिणाम इति । स्यसिच्सीयुट्तासिष्वित्यस्यावृत्तिङ्कृत्वा एकत्र विभक्तिविपरिणाम इत्यर्थः । नत्वङ्गस्येत्यस्य षष्ठ्यन्तत्वं दलसमेवेति तस्यैवेडस्त्वित्यत आह । अङ्गस्य त्विति । तत्सन्नियोगशिष्टः । चिण्वद्भावसन्नियोगशिष्टः । भावकर्मणोरित्यस्य कुत्रान्वय इत्याकाङ्क्षायामाह । भावकर्मण इत्यादि । असम्भवमुपपादयति । आगमेति । अननुवृत्त्य इति । तच्चिण्ग्रहणकारसम्बन्धमभूदिति भावः । गुणानाञ्च परार्थत्वादिति न्यायेनोपदेश इत्येतदजन्तविशेषणं स्यादित्याशयेन शङ्कते । नन्विति । गुणः कृतात्मसंस्कार इतिन्यायमाश्रित्याह । उपदेश इति । आर्द्धधातुक इति । अप्यदमङ्गविशेषणमार्द्धधातुकयित्यपि सप्तम्यन्तत्वात्सैव विशेषणङ्गृणातामिति न्यायथानुगृहीत इति भावः । तत्रैव । अतो लोप इति सूत्रे इयासीयुड्विशेषणत्वमपीति । तेन विधिलिङो व्यावृत्तिः । तथा च भूयेतेति सिद्धम् । न चात्र नित्यत्वाद्गिटः स लोप इति सलोपे यलादित्वमास्तीति तत्सन्नियोगशिष्टचिण्वद्भावो न प्राप्नोतीति सीयुट आर्द्धधातुक इति विशेषणं व्यर्थमिति वाच्यम् । यलादित्वस्यानपेक्षणात् । अत एव नित्यत्वायं यलुनिमित्तो विघातीति भाष्ये उक्तम् । न च विधिलिङः सार्वधातुकत्वात्प्रशक्तस्सिद्ध सति तेन व्यवधानाद्गुणाभावविधिप्रभावो न भविष्यतीति वाच्यम् । यगमनराम्नुपदेशे योऽप् तदन्ताङ्गत्वात्पायाद्दोषः स्यात् । आर्द्धधातुक इत्यस्य मत्वे त्वार्द्धधातुकोपदेशे यदुजन्तमित्यर्थो भवति । तथोक्तमुत्पाद्य । तदपरक्तेः स्थाने प्राप्तवित्वनुनाये मार्ये यत्र निविष्यते तत्र चर्मणि सार्ये वा तुक् भवनाद्यत इत्याशयेन

भट्टमाकारादिवृत्तस्तुत्पन्नानुकूलव्यापारस्य प्रकृते धात्वर्थत्वे तादृशनिष्ठव्यापारस्य चैकनिष्ठत्वेनाकर्मकत्वादित्यर्थः । भाष्यस्वरसादिति । एवञ्च विभाषा चिण्णमुलोरित्यस्य व्यवस्थितविभाषात्वं सप्रमाणमेवेति ध्वनितम् । विभाषायनेतोति । एवञ्च नुमो नित्यत्वमर्थादेव लभ्यते । सूत्रविषयाणाम् । दुहियाचिप्रच्छीत्यादिना भाष्ये पठितानाम् ॥ स्पष्टञ्चेति । प्रधानकर्मणीत्यारभ्य यदुक्तन्तत्सर्वमेवमेव स्पष्टमभिहितमित्यर्थः । नन्वेवन्दुह्यते पयो गोपेनेति न स्यात्पयसो मुख्यकर्मत्वादत आह । एतदप्यनेकेति । गदा दोग्धव्यम्पय इति । अत्र गोः करणत्वविवक्षा द्रष्टव्या । सपर इति । सह परेण गतिबुद्धीतिसूत्रेण । तत्र गुणकर्मशब्देन प्रयोज्यङ्कर्मविवक्षितम् । अपर आहेत्यादिना ण्यन्ते कर्तुश्च कर्मण इत्यभिधानेन तदेकवाक्यत्वात् । भ्रु वचेष्टितयुक्तिषु । घु ययुक्तिषु । अकर्मकेषु चेष्टितयुक्तिषु । गत्यर्थेषु । पूर्वाचार्यप्रसिद्धिवाद्वु ययुक्तयोऽकर्मका उच्यन्त इति कैयटः ।

## इति भावकर्मप्रक्रियाविवरणम् ।

तत्सत्कारकेति । करणादिकारकेत्यर्थः । अत एव तेषाङ्कर्तृत्वोपपत्तिः । फलसमानाधिकरणेति । एवञ्च कर्तृसंज्ञायाः कर्मसंज्ञा बाधकत्वेनैतच्छास्त्रीयकर्मसंज्ञकायोनन्वयफलसत्त्वेनाकर्मकत्वम् । द्विकर्मकस्थले त्वेकस्य कर्मणः कर्तृत्वेऽप्यपरस्य कर्मणः सत्त्वान्न तादृशमकर्मकत्वम् । कर्मवत्कर्मणा तुल्यक्रियः । ततस्था क्रियाकर्मस्यक्रिया । अत्र क्रियाशब्दः फलपरः । बहुव्रीहिरिति । तुल्या क्रिया यस्मिन्निति विग्रहः । भेदारोपेणेति । सादृश्यस्य भदघटितत्वमताभिप्रायेणेदम् । गोतोणिदिति वद्वतिनिर्देशाभावेऽपि प्राप्तो भविष्यतीति शंकायामाह । कर्मसंज्ञक इति । तयोः । यगात्मने पदयोः । ननु भावे यत्र पच्यते ओदनेन भेत्तव्यङ्कुसूलेनेति प्रयोगस्तत्र ओदनादिपदाद्द्वितीयाया आपादानमसङ्गतमतिदिश्यमानकार्याणामुपपत्तिरि-

सम्बन्धेनेति । हन्तेः सीयुटि घिण्वदिति वाक्यकल्पनाऽत्र बोध्या ॥ पश्चा-
त् । तादृशकल्पनोत्तरकाले । तेन । कल्पितेन तादृशवाक्येन । एतदेवाह ।
मूले विशेषविहितत्वादिति । सीयुट्त्विति । सौत्रसीयुट्शब्दस्त्वित्यर्थः ।
न्याय्य इति । अन्यथा द्वन्द्वस्यैवासाधुत्वं स्यादिति भावः । अत एव ॥
अपवादत्वाभावादेव । ननु भाष्यकाराभिमतविप्रतिषेध. पूर्वोक्तरीत्या
वधभावस्यात्र नोपपद्यत इत्यत आह । घिण्वद्भाववाक्येऽपीति । अद-
र्शि । कर्मणि लुङ् । तस्य तादेशः । च्लेश्चिण् । अदर्शिषातामित्यत्र प्रा-
प्तस्य चिणादेशस्य निषेधे एव सिचः सम्भव इत्याशयेनाह । न दृश इती-
ति । मूले कर्मणि च इति । शमूधात्वर्थो नाशानुकूलो व्यापारः । तत्र
फलतावच्छेदकसम्बन्धः प्रतियोगिता । ततो हेतुमति णिचि कृते ना-
शानुकूलव्यापाराश्रयस्य गतिबुद्धीतिसूत्रेण शमूधातोरकर्मकत्वात्कर्तुः
कर्मत्वम् । मूले ह्रस्वविकल्पासिद्धेरिति । अनेन प्रथमस्य णेर्यो लोपस्त-
स्य स्थानिवद्भावे सति चिण्परणिपरत्वमस्तीति दर्शयति । णावित्याकृ-
तिनिर्देशेन समाधानस्याभिप्रायमाह । भाष्यन्दुर्बलमिति । प्रकारान्त-
रेण । यथाकृतिनिर्देशस्वीकारेण । न पदान्तसूत्रे दीर्घग्रहणञ्च न कार्य-
मित्येव युक्तमिति तदाशयः । अभिमान इत्युक्तिबीजम्प्रकटयति । प्राक्-
तसूत्रस्येत्यादिना । प्राक् । घटादौ । मिद्वरः । शमादिभ्यः । तदनभि-
धानेति । यङ्लुकोऽनभिधानेत्यर्थः । इत्यंशस्येति । चिण्णमुलोर्णिज्यधे-
शानां यङ्लोपे घोपसङ्ख्यानमिति हि प्रकृतसूत्रे वार्तिकम् । प्रत्याख्या-
नात्सम्भवः । यथाकृतिनिर्देशेनेति रीत्या प्रत्याख्यानासम्भवः । शंशमय-
तेर्णिचि लुङि चिणि अशंशमि । अशंशामि । शंशमम् । शंशाममिति
यथा स्यादित्येवमर्थन्तस्यां अवश्यवक्तव्यत्वात् । वचनारम्भ इति । तत्र
मत इति शेषः । एवञ्च भाष्यस्थो अभिमानपदमनपेक्षया मदुक्तव्या-
ख्यानमेव युक्तमिति भावः । इत्यर्थ इति । प्राचीनसम्मतया व्याख्या-
स्पष्टमित्यन्वः । स्वमतमाह । भाष्यरीत्या त्विति । अकर्मकत्वादिति ।

ति प्रयोगे तृतीया कर्मणीति पूर्वं पदप्रकृति स्वरापत्तेः । अतिदेशविधायकसूत्राभावे दूषणान्तरमाह। निवृत्तेति । नमते दण्डः स्वयमेवेत्यत्र चेत्कर्मणि प्रत्ययस्तदा दूषणान्तरमाह ।नमत इत्यादिना । नन्वेवं स्वयमेवेत्यस्य वैयर्थ्यात्प्रयोग एव न स्यादत आह ॥ क्व चिदिति । न च लिङ्गाशिष्यहित्यत्र लिशब्दात्पूर्वं लकारप्रश्लेषे तस्य श्रवणापत्तिरितिवाच्यम् ॥ संहितापाठे व्यत्ययो बहुलं लिङ्याशिषीत्यत्रैव हलो यमां यमीत्यनेन लोपात्॥ राध्यत्योदन इत्यादौ कर्मवद्भावातिप्रसङ्गं वारयति । प्रत्यासत्तेति ॥ साध्यसिरित्यत्र कर्मणेत्यस्याभावेऽपि कर्मवद्भावस्य नापत्तिरित्याशंकते ॥ ननु करणत्वेति । लक्ष्यत इति ॥ एवञ्च लक्ष्यमाणार्थस्य शाब्दबोधविवक्षता सिध्यर्थङ्कर्मणेत्यावश्यकमिति भावः । कर्तृत्वेनैव व्यवहार इति। एतच्च त्वस्माग.भहितम् ॥ ज्ञानेच्छावद्यत्नस्यापि कर्तृत्वात् क्रियते घट इति नैयायिकमते करोतेर्यत्नार्थकत्वेन सिद्धेरित्याह । करोतिरुत्पादनार्थ इत्यादिना मूले । ननु केवलयत्नमात्रस्य कृञ्वाच्यत्वन्न यद्यमः किन्तु इत्यनुकूलयत्नस्येति शङ्कां वारयति । अनापत्तेरिति बीजे तादृशयत्नाभावादनापत्तेरित्यर्थः । न च करोतेरुत्पत्त्यनुकूलव्यापारसामान्यार्थकत्वे कृतिशब्दाद्यत्नातिरिक्तव्यापारस्यापि बोधापत्तिरिति वाच्यम् । तस्य कृतिशब्दतया यत्नमात्रे रूढिस्वीकारात् । ननु पच्यते ओदन इत्यत्र यथा कर्मस्था क्रिया विक्लित्तिरूपा सैवास्या भेदेन कल्पितभेदयो व्यापारस्य त्यागेन कर्तृस्था सम्पन्नेति तामादाय कर्तृस्थक्रियत्वाद्भवति कर्मवद्भावस्तथा नान्योऽन्यं स्पृशत इत्यत्रास्ति एकस्य चैत्रस्य यत्क्रियामादाय कर्मत्वमन्तत्क्रियामादाय न कर्तृत्वमिति कर्मवद्भावस्य न प्राप्तिरिति कथमेतस्य कर्मकाणामित्यस्योदाहरणमत आह । अयम्भाव इति ॥ चैवेति । यज्जातीयेत्यर्थः । साजात्याद्भेदापरामर्शेन यैवेत्युक्तिः । प्रकृते तुल्यस्वमयस्याभेदेन न किन्तु स्वरमत एवेत्याह। आश्रयभेदादिति। कर्तृस्थः-स्पर्श इति । तथा च कथङ्कर्मवद्भावप्राप्तिरिति भावः । मूलेऽजा

शएव देश इति सिद्धान्तात् द्वितीयायास्तृतीयापेक्षया पूर्वत्वादित्याशङ्कते। नचेति। न शङ्कितमिति। एकस्मिन्नेव पुत्रे ज्येष्ठत्वातिदेशेऽपि कनिष्ठत्वव्यवहारवद्भावे लकारो भविष्यतीति भावः। के चिन्मुख्याः। कर्तुर्लकारवाच्यत्वमुपपादयति॥ तत्र तस्य विधानादिति। कर्त्तरि लकारस्य विधानादित्यर्थः। द्विलकारकादित्यस्य द्वौ लकारौ यस्मिन्नित्यर्थः। अन्यपदार्थजिज्ञासायामाह॥ सूत्रमिति॥ लुप्तषष्ठ्यन्तलकारसहितं लिड्या शिष्यङिति सूत्रमित्यर्थः॥ निर्देशः। क्ङितीति निर्देशो वाऽन्यपदार्थः। इदमिति। मूलोक्तकर्तृत्वस्योपलक्षणम्। एतत्फलमाह। कर्तीहेत्यादिना। भिन्दानाभेदयन्तः। भेदो द्विधाभवनम्। क्तप्रत्ययविषये विशेषमाह। क्तोऽत्रेति। भवत्येवेति। कर्मत्वं यस्योत्पत्तौ निमित्तं तस्यातिदिष्टकर्मत्वेन प्रवृत्तिर्बाध्या गत्यर्थाकर्मकेति क्तस्यातिदेशात्पूर्वमपि प्राप्नोतीति न तस्य बाध इति भावः। अत एव। क्तविशेषस्य ग्रहणादेव। लकारवाच्यः कर्ता कर्मवदित्यतिदेशान्निष्ठेति सूत्र विहितः क्तप्रत्ययो न भवतीत्युक्तं तस्य फलमाह। तेनेति। परशुभिन्नः कुसूल इत्यादावपि। परशुना भिन्न इति करणतृतीयान्तस्य गत्यर्थेति सूत्रविहितक्तान्तेन सह समासः साधनकृतेति। यद्यत्रातिदिष्टकर्मत्वमादाय निष्ठेतिसूत्रविहितः कर्मणि क्तः स्यात्तदा तृतीयान्तस्य पूर्वपदस्य कर्मधारयक्तान्ते उत्तरपदे प्रकृतिस्वरं स्यादित्यर्थकं तृतीया कर्मणीतिसूत्रं न प्रवर्त्तेत। यत्तु कैयटेन भिद्यते कुसूल इत्यत्रातिदिष्टकर्मत्वमादाय द्वितीया कुसूलपदान्न भवतीत्युक्तं तत्तु न युक्तं सामान्यातिदेशेऽप्यनभिहिताधिकारेण द्वितीयाया अप्राप्तेः। अनभिहितत्वविशिष्टकर्मत्वस्यात्यतिदेशस्तु वक्तुमशक्यः। सामान्यातिदेशेऽपि विशेषानतिदेशात्। एतेन। लकारवाच्यकर्तुरेव कर्मत्वातिदेशेन। कर्मण्येवेति। पच्यते ओदनः स्वयमेवेत्यत्र मुख्ये कर्मण्येवास्तु। अपादानमिति। कर्त्तरि प्रत्ययो यत्र तत्रैवातिदेश इति स यदुक्तग्रामापवादापादानमित्यर्थः। क्तीदृशमिति॥ तथार्थे इष्टापत्तिस्तु कर्तुर्भक्त्या परशुभिन्नः कुसूल इ-

ति प्रयोगे तृतीया कर्मणीति पूर्वं पदप्रकृति स्वरापत्तेः । अतिदेशविधायकसूत्राभावे दूषणान्तरमाह। नियृत्तेति । नमते दण्डः स्वयमेवेत्यत्र चेत्कर्मणि प्रत्ययस्तदा दूषणान्तरमाह ।नमत इत्यादिना ।नन्वेवं स्वयमेवेत्यस्य वैयर्थ्यात्प्रयोग एव न स्यादत आह ॥ क्व चिदिति । न च लिङ्याशिष्यङित्यत्र लिशब्दात्पूर्वं लकारप्रश्लेषे तस्य श्रवणापत्तिरितिवाच्यम् ॥ संहितापाठे व्यत्ययो बहुलं लिङ्याशिषीत्यत्रैव हलो यमां यमीत्यनेन लोपात्॥ राध्यत्योदन इत्यादौ कर्मवद्भावातिप्रसङ्गं वारयति । प्रत्यासत्तेति ॥ साध्यसिरित्यत्र कर्मणेत्यस्याभावेऽपि कर्मवद्भावस्य नापत्तिरित्याशंकते ॥ ननु करणत्वेति । लक्ष्यत इति ॥ एवञ्च लक्ष्यमाणार्थस्य शाब्दबोधविवक्षया सिध्यर्थङ्कर्मणेत्यावश्यकमिति भावः । कर्तृस्थेत्येव व्यवहार इति। एतान्त्यभाग.प्रहितम् ॥ ज्ञानेच्छाप्रयत्नस्यापि कर्तृस्थत्वात् क्रियते घट इति नैयायिकमते करोतेर्यत्नार्थकत्वेन सिद्धेरित्याह । करोतिरुत्पादनार्थ इत्यादिना मूले । ननु केवलयत्नमात्रस्य कृञ्शाच्यत्वन्न वदामः किन्तु इत्यनुकूलयत्नस्येति शङ्कां वारयति । अनापत्तेरिति बीजे तादृशयत्नाभावादनापत्तेरित्यर्थः । न च करोतेरुत्पत्त्यनुकूलव्यापारसामान्यर्थकत्वे कृतिशब्दाद्यत्नातिरिक्तव्यापारस्यापि बोधापत्तिरिति वाच्यम् । तस्य कृञन्ततया यत्नमात्रे रूढिस्वीकारात् । ननु पच्यते ओदन इत्यत्र यथा कर्मस्था क्रिया विक्लित्तिरूपा सैवास्या भेदेन कल्पितभेदवती व्यापारस्य त्यागेन कर्तृस्था सम्पन्नेति तामादाय कर्तृस्थक्रियत्वाद्भवति कर्मवद्भावस्तथा नान्योऽन्यं स्पृशत इत्यत्रास्ति एकस्य चैत्रस्य यत्क्रियामादाय कर्मत्वन्तत्क्रियामादाय न कर्तृत्वमिति कर्मवद्भावस्य न प्राप्तिरिति कथमेतत्सकर्मकाणामित्यस्योदाहरणमत आह । अयम्भाव इति ॥ चैवेति । यत्नार्थैर्वेत्यर्थः । साक्षात्स्पाद्भेदापरामर्शेन चैवेत्युक्तिः । प्रकृते तुल्यत्वमयस्याभेदेन न किन्तु स्वरसत एवेत्याह। आश्रयभेदादिति। कर्तृस्थ-स्पर्श इति । तथा च कथङ्कर्मवद्भावप्राप्तिरिति भावः । मूलेऽजा

ग्रामन्नयति इति । अत्र नयतेर्हि कर्मकतया अजारूपकर्मणः कर्तृत्वविवक्षायाङ्कर्मस्थया क्रियया तुल्यक्रियत्वसत्वात् प्राप्तः कर्मवद्भावो ग्रामरूपकर्मणा सकर्मकत्वान्निषिध्यत इति भावः । इदन्तु चिन्त्यमिति । अजायाः कर्मत्वं संयोगानुकूलव्यापारमादायोपपादनीयं स एवेदानीं कर्तृत्वो यद्यपि भवतीति कर्मवद्भावस्य प्राप्तिर्वाच्या सा न युज्यते । तद्व्यापारकृतविशेषस्य तत्रादर्शनात् । कर्त्रन्तरभेदमादाय विशेषो वाच्यस्सोऽपि नेत्याह । नेतृव्यापारेणेति । तथेति । कर्मणि विशेषसम्पादकः । गम्यर्थस्यापीति । तथा च गच्छति ग्राम इत्यत्र कर्मवद्भावापत्तिः । अत एव ॥ यत्र क्रियाकृतस्य विशेषस्य सुप्रसिद्धिस्तदेवोदाहरणं युक्तमित्यभिप्रायादेव इत्यवेति ॥एतज्जातीयकमेव ॥एतेन प्रकृतशास्त्रि कोदाहरणायपरे भाष्यकृता अन्योन्यमाश्लिष्यतः । अन्योऽन्यं संस्पृशतः ॥ अन्योऽन्यं गृह्णीतः इत्येवमुदाहरणत्रयोपादानेन इत्येवेत्युपादानमसङ्गतमित्यपास्तम् दुहिपच्योर्बहुलम् । सकर्मकयोर्दुहिपच्योः कर्त्ता बहुलं कर्मवद्भवतीति वाच्यमित्यर्थः । दुग्धे गौः पयः स्वयमेव । अत्र गोः कर्मणः कर्तृत्वविवक्षायान्द्रवद्रव्यवृत्तिविभागानुकूलव्यापारमात्रं धात्वर्थः । गोः कर्तृत्वेऽपि पयसः कर्मणः सत्वान्निषेधे प्राप्ते वचनम् । पचधातूदाहरणमाह उदुम्बरः फलम्पच्यत इति प्रदर्शितम् । द्विकर्मकत्वे तूदाहरणमुदुम्बरम्फलञ्जालः पचतीति तत्रोदुम्बरस्य कर्मणः कर्तृत्वविवक्षायामुदुम्बरः फलम्पच्यत इति प्रयोगः ॥ अत्र द्विकर्मकत्वमुपपादयति । द्व्यर्थत्वादित्यादिना । तण्डुलानोदनम्पचतीत्यत्र विक्लित्त्यनुकूलो निष्पत्त्यनुकूलश्च व्यापारो धात्वर्थः । स च व्यापारो यद्यपि तदेवदत्तादिनिष्ठः । तद्वत्प्रकृते विभागानुकूलव्यापारानुकूलो विलक्षणगोरवपत्त्यनुकूलश्च व्यापारश्च धात्वर्थः । स च व्यापारः कालनिष्ठः । यदा गौकर्तृविवक्षया कालनिष्ठव्यापारस्य त्यागे उदुम्बरनिष्ठव्यापारस्य तादृशगोत्व्यपत्त्यनुकूलव्यापारपुष्कलत्वविवक्षा तदा कर्मण उदुम्बरस्य कर्तृत्वं विवक्षायेन ग्रसनिष्ठव्यापारमादाय धात्वर्थे-

दंखादादौ कर्मवदित्यस्य प्राप्तिः । विभागः फलावयवनिष्ठस्तन्निष्ठा कार्यता स्वाश्रयसमवेतत्वसम्बन्धावच्छिन्ना बोध्या । यद्वेति । अयम्भावः । द्विकर्मकत्वावस्थायां रसविशेषोत्पत्त्यनुकूलव्यापारानुकूलो यः कालनिष्ठो व्यापारः स एव धात्वर्थः । सौकर्यविवक्षातः पूर्वं वृक्षे पाकश्च तादृशरसोत्पत्त्यनुकूलव्यापार एवेति । अनिष्टत्वादिति । बहुलग्रचनक्किमर्थम् । परस्मैपदार्थंबहुवचनम् । यद्येतन्नार्थो बहुलग्रचनेन । न हि परस्मैपदमिष्यत इति भाष्यकारोक्तिरत्र प्रमाणम् । एतच्च बहुलग्रहणम्प्रत्याख्यातमेवेति प्रतिभाति । परन्त्वेवम्बोध्यम् । प्रकृतवार्त्तिके यद्यपि न बहुलग्रहणस्य प्रयोजनन्तथापि करणेन तुल्यक्रिय इति वचने भाष्यकारपठिते उपयुज्यते । परिवारयति कण्टकैर्वृक्षम् । परिवारयन्ते कण्टका वृक्षमिति । अत्र बहुलग्रहणात्साध्यसिध्दिनत्तीत्यादौ न भवतीति कैयटः । अत एव तस्यात्रानिष्टत्वादिति लेखनेनैतद्वार्त्तिके बहुलवचनस्य प्रयोजनाभावः सूचितः । मूले चिण् तु विकल्पेनेष्यत इति । तत्र नेयमपूर्वेष्टिः किन्तु दुहश्चेतिसूत्रसिद्धार्थकथनमेतदिति बोध्यम् । तदेवाह । दुह इति । इत्येतदर्थ इति । गौः पयो दुग्ध इत्यस्य गौः पयस्त्यजतीत्यर्थ इत्यर्थः । उचितमिति । करोतेरजन्तत्वादिति भावः । दुहश्चेत्यस्य कर्मकर्त्तर्यैव विकल्पेन चिण्विधायकत्वात्तत्रास्मादेव सूत्रात्कर्मकर्त्तरीत्यनुवर्त्तत इति मूलाशय इति कश्चित् । स चेति । सृजेः श्रद्धोपपन्नः कर्त्ता चेत्यर्थः । विध्यर्थमिति । इदं वार्त्तिकमिति शेषः । युज्धातुविषये कर्मणः कर्त्तृत्वन्दर्शयति । योग इति । युनक्तीत्यस्य सम्बध्नातीत्यर्थः । सम्बन्धश्च योगप्रतियोगिको ब्रह्मचार्यनुयोगिकः । योगश्च शमदमादिसम्पत्तिरूपः । प्रथमकक्ष्यायामाश्रयतारूपो यः सम्बन्धस्तद्वत्त्वाद्ब्रह्मचारिणः कर्मत्वम् । ततो द्वितीयकक्ष्यायां योऽर्थस्तमाह । तत इति । यत्तु द्वितीयकक्ष्यायां युजेः सम्बन्धमात्रमर्थः । योगमिति द्वितीया तु प्रतिशब्दाध्याहारेण तद्योगेऽभितःपरित इत्यनेन । एवञ्चाकर्मकत्वात्कर्मवद्भा-

यः कर्मवत्कर्मणेत्येव सिद्धः । प्रकृतवार्त्तिके युजिग्रहणन्तु श्यन्मात्रवि-
धानार्थमिति । तन्न । सृजियुज्योः श्यँस्त्विति वार्त्तिकव्याख्यानावसरे
भाष्यकृता दुहिपच्योरिति वार्त्तिकात्सकर्मकयोरित्यस्यानुवृत्तिः सृजि-
युज्योः सकर्मकयोः कर्त्ता बहुलङ्कर्मवद्भवतीत्युक्त्वा दर्शिता तद्विरोधात्।
युज्यते इत्यत्र श्यन्यकोर्विशेषश्च स्वरविशेषसम्पादकत्वेन द्रष्टव्यः ।
श्यनि नित्यात्प्रकृतेराद्युदात्तत्वम्भवति । यकि तु तङो लसार्वधातुका-
नुदात्तत्वे प्रत्ययस्वरेण यक एवोदात्तत्वं स्यात् । भूषाकर्मकिरादीनाम् ।
कर्मवत्कर्मणेतिसूत्रस्य वार्त्तिकम् । चिण्वदिड्भावाचेति । चेनतस्य
सङ्ग्रहः । अवकिरतीति । ताडयतीत्यर्थः । आद्ययोः । कृगृअनयोः ।
कर्मस्थक्रियतयेति । अन्येषामिति । आद्यस्योपादेयत्वादिप्रकारकज्ञाना-
नुकूलव्यापारो द्वितीयस्य धारणानुकूलव्यापारोऽर्थः । एतयोः कर्मणि
क्रियाकृतविशेषानुपलम्भः स्पष्टः । तृतीयस्य ज्ञानेच्छानुकूलव्यापारोऽर्थः ।
अत्रेच्छारूपफलविशेषणज्ञानविषयस्यापीच्छाकर्मत्वम् । ग्रामञ्जिगमिष-
तीतिवत् । कर्मस्थक्रियकत्वाभावोऽत्रापि पूर्ववत् । आपृच्छते चैत्र इ-
त्यादि । मूले चिकीर्षते कट इति । अत्र सन्प्रत्ययार्थेच्छाविशेषणकरो-
त्यर्थनिरूपितकर्मत्वाश्रये उत्पत्तिरूपफलकृतस्य विशेषस्य दर्शनात्सन्नन्ते-
ऽपि कर्मस्थक्रियकत्वादात्मनेपदव्यतिरिक्तनिषेधार्थं यत्र तु जिज्ञासते
घट इति प्रयोगस्तत्रात्मनेपदाप्राप्ते विध्यर्थञ्च सन्ग्रहणमिति बोध्यम् ।
न रुध. । अवारुद्ध गौः । निर्गमप्रतिबन्धपूर्वकदेशविशेषाधिकरणचिर-
स्थित्यनुकूलव्यापारो रुध्धात्वर्थः । चिरस्थितेः कर्तृनिष्ठत्वादयं कर्मस्थ-
क्रियकः । तपस्तपः कर्मकस्यैव । क्रियाभेदादिति । यदा तपसः क-
र्तृस्थविवक्षा तदा या दुःखोत्पत्त्यनुकूलव्यापाररूपा क्रिया तत्तपसः
कर्मत्वे या अर्जनरूपा क्रिया साभिन्नास्तीति कर्मस्थया क्रियया तुल्यक्रि-
यत्वाभावादित्यर्थः । भाष्ये त्विति । न दुहेतिसूत्रे भाष्यकृतामित्यर्थः ।
एवकारकाभव्यात् । एवकारबलात् । नियमद्वयमाश्रित्य योगविभागो द-

शितः । ननु कृत्युक्तरित्या क्रियातिदाढर्य्यर्थमेवैतत्सूत्रम्भविष्यतीति क-
र्मनियमपरत्वेनास्य विवरणमिति चेन्न । कल्पद्वयेऽपि कर्मकर्तृप्रसिद्धिक्रि-
यायास्तुल्यत्वात् । तथाहि । तपति तापसन्तप इति प्रथमा कल्पा ।
अत्र तपतिरन्तर्भावितण्यर्थः । शरीरसन्तापानुकूलव्यापारानुकूलव्यापारो
धात्वर्थः । शरीरसन्तापानुकूलो व्यापारश्च शरीरसन्तापस्वीकारस्तदा श्र-
यतया तापसस्य कर्मत्वम् ॥ तपःपदार्थश्च शरीरसन्ताप एव ॥ तत्र ता-
पसवृत्तितादृशस्वीकाररूपफलानुकूलो व्यापारश्च स्वस्वरूपेणावस्थानमेव॥
तप्यते तपस्तापस इति द्वितीया कल्पा । अत्र ण्यर्थस्य त्यागेन शरीर-
सन्तापानुकूलव्यापार एव तपेरर्थः ॥ तदाश्रयतया तापसस्य कर्तृत्व-
मिति । लोकस्य चतीत्यत्रेव तपः पदार्थस्य प्रकृतधात्वर्थघटकशरीरस-
न्तापेऽभेदान्वयात्तपसः कर्मत्वम् । एवञ्च प्रथमकल्पायाङ्कर्मस्थाया क्रि-
या तत्तुल्या क्रिया तापसस्य कर्तृत्वावस्थायां वर्त्तत एवेत्यस्य कर्मव-
द्भावस्य प्राप्तिरित्यस्य योगस्य नियमार्थत्वं युक्तमेव । सकर्मकत्वसाध-
र्म्यात्सकर्मकसामान्यविषयको नियमो न त्वत्र कर्मणो भेदाभेदान्वय-
विचार इति सकर्मकाणामित्यस्य प्रत्याख्यानं युक्तमेव । ततस्तपकर्मक-
स्यैवेति द्वितीयो नियमः ॥ अभेदान्वयाभिप्रायेणैव भाष्ये किमिदन्तप
इति प्रश्ने तपेरपर्गीणाको व्यापार इत्युत्तरितम् ॥ एतद्भाष्यैकवाक्यतया
उणादीनामव्युत्पन्नत्वपक्षेऽप्ययमेवार्थस्तपःशब्दस्य ॥ न च तपस्तपःक-
र्मकस्येत्युक्तन्नोपपद्यते क्रियाकर्मणोर्भेदस्य सुप्रसिद्धत्वादिति वाच्यम् ॥
एवं विधनिर्द्देशसामर्थ्यात्सामान्यविशेषभावेनैकस्या एव क्रियायाः क्रि-
याकर्मभावसम्भवात् ॥ अमुमेवार्थन्दर्शयितुम्भाष्यकृतोक्तम् ॥ अथ कः
प्रत्ययार्थः कः प्रकृत्यर्थः ॥ स एव सन्तापः ॥ स एवम्भूतः स एव नाम
प्रकृत्यर्थः स्यात् स एव च प्रत्ययार्थः सामान्यतपेरर्थस्तपिः कर्म भव-
तीति । यदि तपस्तपधात्वर्थकर्मकस्य कर्तृत्वनादा तापसेन
तपस्तप्यत इति प्रयोगोऽपि स्यात् तत्र प्रत्ययार्थप्रकृत्यर्थयोर्भेदाभावा-

यः कर्मवत्कर्मणेत्येव सिद्धः । प्रकृतवार्त्तिके युजिग्रहणन्तु श्यन्मात्रविधानार्थमिति । तन्न । सृजियुज्योः श्यँस्त्विति वार्त्तिकव्याख्यानावसरे भाष्यकृता दुहिपच्योरिति वार्त्तिकात्सकर्मकयोरित्यस्यानुवृत्तिः सृजियुज्योः सकर्मकयोः कर्त्ता बहुलङ्कर्मवद्भवतीत्युक्त्वा दर्शिता तद्विरोधात् । युज्यत इत्यत्र श्यन्यको विशेषश्च स्वरविशेषसम्पादकत्वेन द्रष्टव्यः । श्यनि नित्यात्प्रकृतेराद्युदात्तत्वम्भवति । यकि तु तङो लसार्वधातुकानुदात्तत्वे प्रत्ययस्वरेण यक एवोदात्तत्वं स्यात् । भूपाकर्मकिरादीनाम् । कर्मवत्कर्मणेतिसूत्रस्य वार्त्तिकम् । चिण्वदिड्भावायेति । येनतस्य सङ्ग्रहः । अवकिरतीति । ताडयतीत्यर्थः । आद्ययोः । कृगृअनयोः । कर्मस्थक्रियतयेति । अन्येषामिति । आद्यस्योपादेयत्वादिप्रकारकज्ञानानुकूलव्यापारो द्वितीयस्य धारणानुकूलव्यापारोऽर्थः । एतयोः कर्मणि क्रियाकृतविशेषानुपलम्भः स्पष्टः । तृतीयस्य ज्ञानेच्छानुकूलव्यापारोऽर्थः । अत्रेच्छारूपफलविशेषणज्ञानविषयस्यापीच्छाकर्मत्वम् । ग्रामञ्जिगमिषतीतिवत् । कर्मस्थक्रियकत्वाभावोऽत्रापि पूर्ववत् । आपृच्छते चैत्र इत्यादि । मूले चिकीर्षते कट इति । अत्र सन्प्रत्ययार्थेच्छाविशेषणकरोत्यर्थनिरूपितकर्मत्वाश्रये उत्पत्तिरूपफलकृतस्य विशेषस्य दर्शनात्सत्त्वेऽपि कर्मस्थक्रियकत्वादात्मनेपदव्यतिरिक्तनिषेधार्थं यत्र तु जिज्ञासते घट इति प्रयोगस्तत्रात्मनेपदाप्राप्ते विध्यर्थञ्च सन्ग्रहणमिति बोध्यम् । न रुध. । अन्वरुद्ध गौः । निर्गमप्रतिबन्धपूर्वकदेशविशेषाधिकरणचिरस्थित्यनुकूलव्यापारो रुध्धात्वर्थः । चिरस्थितेः कर्मनिष्ठत्वादयं कर्मस्थक्रियकः । तपस्तपः कर्मकस्यैव । क्रियाभेदादिति । यदा तपसः कर्तृत्वविवक्षा तदा या दुःखोत्पत्त्यनुकूलव्यापाररूपा क्रिया तत्तपसः कर्मत्वे या अर्जनरूपा क्रिया भाविकालीति कर्मस्थया क्रियया तुल्यक्रियत्वाभावादित्यर्थः । भाष्ये स्थितेति । न दुहेतिसूत्रे भाष्यस्थमित्यर्थः । एवकारसामर्थ्यात् । एवकारबलात् । नियमद्वयलाभाय योगविभागो द-

यत्र यकः प्राप्तिस्तत्र श्यन्परस्मैपदञ्चेत्यर्थः ॥ यकस्तु सार्वधातुक एव प्राप्तिरित्यनेन सार्वधातुक एव श्यन्विधीयते इति लभ्यते । एतेन लिटि लिङि च प्रवृत्तिर्नेति ध्वनितम् । चुकुपे पादः स्वयमेव । कोपिषीष्ट पादः स्वयमेव । ररञ्जे वस्त्रं स्वयमेव । रंक्षीष्ट वस्त्रं स्वयमेवेत्यत्र न श्यन् । यग्विषये श्यनः फलन्तु ञ्नित्यादिरिति स्वरस्य प्रवृत्तिरूपम् । अत्र ताच्छीलिके चानशि कतीह कुष्यमाणाः पादा इत्यत्र श्यन्न । तच्छील्यकर्तुः कर्मत्वातिदेशविधानेनात्र कर्मत्वातिदेशाप्राप्त्या यग्विषयताया अभावादित्यपि बोध्यम् । एवं श्यनि कुष्यन्ती जङ्घा । अत्र शप्श्यनोरिति नित्यन्नुम् । यत्र यत्र स्वयमेवेति प्रयुज्यते तत्र स्वयमेवेत्यस्यात्मनेत्यर्थः । तत्रात्मनः करणत्वन्न तु कर्तृत्वमन्यथा कर्मण्येव लविधानं स्यात् ॥

## इति कर्मकर्तृप्रक्रियाविवरणम् ।

अभिज्ञावचने लृट् । अभिज्ञा स्मृतिः । वचनशब्दः करणल्युडन्तः । उदाहरणे गोकुले वत्स्याम इति वाक्यार्थोऽभिजानासीत्यस्यार्थे कर्मत्वेन सम्बध्यते । तेनास्मिन्विषये पश्य मृगो धावतीत्यत्रेव गोकुलाधिकरणकास्मत्कर्तृकभूतानद्यतनवासकर्मकं त्वत्सम्बोध्यकं स्मरणमिति बोधः । इदञ्चिन्त्यमिति । वचनशब्दोपादानेनाभिज्ञावचन इति सूत्रेऽभिज्ञायामित्येव वक्तव्ये यदा कथञ्चिदभिज्ञा यत्र प्रतीयते तत्राप्यस्य प्रवृत्तिरित्यस्य ज्ञानस्य सम्भवेऽपि भाष्ये तथा नोक्तमतः संस्कारजन्यतावच्छेदकज्ञानत्वावच्छिन्नवाचकोपपद एवास्य प्रवृत्तिरिति ध्वनितम् । वचनशब्दस्तु स्पष्टार्थ एव । यद्वनेऽभुञ्ज्महीत्यत्र यच्छब्दः स्मृतिविषयार्थस्य झटित्युद्बोधकत्वमित्यस्य द्योतनाय । भूतानद्यतनवासाधिकरणकास्मत्कर्तृकभोजनकर्मकं स्मरणमिति बोधः । विभाषा साकाङ्क्षे । साकाङ्क्षपदस्य प्रायेणाकाङ्क्षाविषये एव प्रसिद्धिदर्शनादाह । विद्यमानेति । तेन निरुपप-

दनुपपत्तिरित्याशयेनाह क इत्यादुरुक्तिरिति ॥ स एवेत्यनेनोत्तरम् ॥ तपधात्वर्थ एव क्रियापदेन कर्मपदेन च गृह्यते इत्यर्थः ॥ तपधात्वर्थश्च ज्ञानविशेषजनकोपवासादिरूपस्ततः ॥ अवयवस्तपिः स एव विशेषः सन्तापपदव्यवहार्यः ॥ अत्र यथा विशेषसामान्ययोः कर्मक्रियाभावो दर्शितस्तथान्यत्राप्यस्तीति दृष्टान्ततया भाष्ये प्रदर्शितमेतान्पोषान्पुषत् गोपोषमश्वपोषम् । रैपोषमिति । सामान्यपुषेरवयवपुषिः कर्म भवति ॥ अत्र पोषानिति भावघञन्तम् सामान्यस्तस्य विशेषसमर्पकाणि गोपोषमित्यादीनि भावघञन्तान्येव बोध्यानि । ननु विशेषस्य सामान्यनिरूपितकर्मत्वेऽपि विशेषस्य सामान्यार्थेऽभेदेनैवान्वयो वाच्यस्तथा च कर्मणि लकारो न सम्भवति ॥ लः कर्मणीतिसूत्रघटकः कर्मशब्दो धात्वर्थभेदसम्बन्धेनान्वयि कर्मबोधक एव भविष्यति कर्तृसाहचर्यादिति कथन्तापसेन तपस्तप्यत इति प्रयोग इति चेन्न । प्रकृतभाष्यग्रन्थस्य प्रामाण्येन सामान्यविशेषभावेन यस्यान्वयस्तादृशकर्मणोऽपि ग्रहणङ्कर्मपदेनेति स्वीकारात् । द्वितीयनियमस्य प्रयोजनम्भाष्यकृतोत्तपतीत्यादिनोक्तन्तत्रापि तपिरन्तर्भावितण्यर्थ एव सुवर्णं सुवर्णकारमुत्तपयतीत्यर्थ एवेत्यर्थः । एतदेव विशदयति ॥ अयम्भाव इत्यादिना भाष्ये उक्तमित्यनेन । उक्तबीजमिति ॥ चिण्वदित्यत्र षष्ठ्यन्ताद्वतिरिति प्रागुक्तेन चिणि यत्कार्यन्तस्यातिदेशोऽयम् । चिणेत्यतिदेशो हि न चिणि कार्यमतः स्यादीनामत्र चिण्वदिट्भवत्येवेति भावः ॥ कर्मस्थक्रियस्यमस्येति ॥ तथा च कर्मवद्भावस्य विषयतासम्बन्धेनातिदेशेन यक्चिणोः प्राप्तिर्बोध्या ॥ भारद्वाजीयवार्तिके पौन्येषोपातन तु ऐणुगणिरिति मेन णिचोऽपि ग्रहणमित्याशयेनोदाहृतम् उत्पुच्छयते गौरिति ॥ आत्मनेपदार्थकानामित्यस्यात्मनेपदविधौ योऽकर्मकश्चेत्यर्थस्तदभिप्रायेणोदाहृतम् विकुर्वते सैन्धवा इति ॥ तद्भावपरौ ॥ णिङ्भावाभावपरौ ॥ कुषिरजोः ॥ न दुहेत्यतो नेति यगिति च वर्त्तते । किन्तु चिणिति ।

नन्विति समुदायो वितर्के । नन्वोर्विभाषा । अत्र ननू शब्दौ पर्यायौ । प्रत्येकमनयोर्निमित्तत्वमित्याशयेनाह । अनयोरिति । अनद्यतने त्विति । अनद्यतनत्वविवक्षायान्त्वित्यर्थः । क्रियागतनिश्चितत्वद्योतकौ ननू शब्दौ ॥ पुरि लुङ् चास्मे ॥ मूले मण्डूकप्लुत्यानुवर्त्तत इति ॥ लुङिति त्यस्य पुनरुपादानेन लुङिति सूत्रापेक्षयाऽस्य वैलक्षण्यम्बोधितमिति प्रकृतसूत्रेऽनद्यतन इत्यस्य सम्बन्धः ॥ अत एव एतदभावेऽनद्यतनत्वमात्रविवक्षायां लङ् परोक्षत्वस्यापि विवक्षायान्तु लिङ् भवती । न तु लुङ् । अपवादस्य विषयतायाः सत्त्वात् ॥ यावत्पुरा । निश्चयद्योतकौ । क्रियागतस्य विषयतया निश्चयविशिष्टत्वस्य द्योतकौ । एवञ्च यावद्भुङ्क्त इत्यत्र भुजधातोर्विषयतासम्बन्धेन निश्चयविशिष्टे भोजने लक्षणा । तया प्रत्यायितो निश्चयो यावच्छब्दसन्निधाने शाब्दबोधे भासते । लक्षणप्रतिपदोक्त परिभाषयैव सिद्धे निपातग्रहणन्तस्याः परिभाषाया अनित्यत्व एव ज्ञापकम् ॥ इदं सूत्रं मण्डूकप्लुत्यानद्यतन इत्यत्रानुवर्त्य वाक्यभेदेन व्याख्येयम् । तेन यावच्छ्रौ भुङ्क्त इत्येवेति भाष्ये स्पष्टम् ॥ मूले करणभूतयेति । एतेन पुरायास्तृतीयान्त पुरीवाचकात्पूःशब्दात्तृतीयेति ध्वनितम् ॥ विभाषा कदाकर्ह्योः ॥ भविष्यतीति लडिति वर्त्तते ॥ कदा कर्हि वा भुङ्क्ते । भोक्ष्यते भोक्ता वा । भविष्यत्वे विधीयमानोऽयं लट् यदाऽनद्यतनत्वविशिष्टेऽपि काले प्रवर्त्तते । एतदभावे भविष्यत्वमात्रविवक्षायां लृट् । सामानाधिकरण्यसम्बन्धेनानद्यतनत्वस्यापि यदा विविवक्षा तदा तु लुट् । ननु कर्हि भोक्ष्यत इत्यनुपपन्नमनद्यतने र्हिलन्यतरस्यामित्यनेनानद्यतने एवर्हिल्प्रत्ययस्य विधानेन लुड्विषयताया एव सत्त्वात् । लादेशविषये वासरूपन्यायाभावेन वासरूपन्यायेनापि न स इति चेन्न । भूतमिदं ब्राह्मणीतियच्छक्यसम्बुद्धुपहन्तुमितिवच्च भविष्यत्सामान्ये भोक्ष्यत इति पदं व्युत्पाद्य कर्हि शब्दयोगः कार्य इति कल्पनयाऽदोषात् । स्पष्टा चेयं रीतिर्भविष्यति गम्यादय इति सूत्रभाष्ये । तत्र

स्वविषयत्वान्यतरसम्बन्धेनाकाङ्क्षावैशिष्ट्यं विशेषणमत्रेति बोधितम्। विवक्षितत्वादिति। ज्ञापकत्वेन ज्ञाने कस्यायमर्थो ज्ञापकः। ज्ञाप्योऽयमिति ज्ञाने किमस्य ज्ञापकमित्याकाङ्क्षाया उत्थिताया दर्शनात्प्रकृतेति रूपकत्वविषयत्वान्यतरसम्बन्धेनाकाङ्क्षावैशिष्ट्यमुभयत्रासीत्युभयत्राप्यस्य प्रवृत्तिः। ज्ञाप्यज्ञापकभावसम्बन्धेन वाक्यार्थवैशिष्ट्यवाक्यार्थस्य धर्मत्वमभिप्रायाम्बोध्यम्। परोक्षे लिट्। इदं सूत्रम्भाष्यारयातमप्यत्यन्तापह्नव इत्यस्यापरोक्षविषय एव प्रवृत्तिं बोधयितुम्पुनरत्र व्याख्यातम् परोक्षे तेनैव सिद्धेः। भूतानद्यतनत्वन्तु एष्टाप्यपेक्षितमेव। अबाधितपरोक्षेति एतेन यत्र चैत्रकर्तृकवङ्गगमनाभावेऽपि तदीयवङ्गगमनभ्रान्त्या वङ्गेष्वशात्सीरिति प्रश्नस्तत्र नात्यन्तापह्नव इत्यर्थादुक्तम्भवति। अपह्नात्यन्तापह्नव. स्वरूपतः सत्र्येव लिट्प्रयोजको न नत्वस्य शाब्दबोधविषयत्वापेक्षा। प्रश्ने चासन्नकाले। प्रश्नशब्दे कर्मणि नङ्प्रत्ययस्तेन वाक्यो वाक्यार्थः सम्पन्नस्तमाह। प्रश्नविषयीभूतेति। अत्राप्यासन्नकालत्वम्प्रयोगनियामकमेव न तु तस्य शाब्दबोधविषयत्वम्। आसन्नकाल इत्यत्र बहुव्रीहिः। मूले लिड्विषय इत्यनेन भूत इत्यादीनामिहानुवृत्तिर्ध्वनिता। लट् स्मे। अस्यापि सूत्रस्य लिड्विषयेव प्रवृत्तिः। अत एवापवादत्वम्। अपरोक्षे च। ननु लट् स्मे इति सूत्रे परोक्षशब्दस्य सम्बन्धो न कार्यः एवञ्चोभयत्र स्मशब्दयोगे लट् सिद्धाविदं सूत्रमत्यावश्यमिति चेन्न। तद्वदनद्यतन इत्यस्यापि निवृत्तिशङ्का मा भूदित्यर्थंतत्स्यात्। ननौ पृष्टप्रतिवचने। मूले नित्यमिति। लट् स्मे इति सूत्रभाष्ये न पुराभूतमात्र इत्युक्तिरत्र प्रमाणम्। ननु क्रियानिवृत्तावपि वेदे चिरनिवृत्ते क्रियाया अनुमानेन ननु पुरन्तस्यस्य ननु पुराणमस्मेति प्रयोगो दृश्यते तत्र प्रश्नादेशो न प्राप्नोति। वर्तमाने विहितलट् एव स्थाने नवोविभाषाविधानमाह। नन्वादौति। ननु तेनैव प्रकारेण लटः सिद्धावस्य सूत्रस्य वैयर्थ्यमत आह। सूत्रेनित्यति। अत्र

परावृत्त्य स्वगृहम्प्रतिगन्तुं प्रयुक्तं शिष्यम्प्रतिगुरुपत्न्यदेरुक्तिरित्युदाहरणमित्याह ॥ मूले उपाध्यायेदित्यादि ॥ स्वार्थे ष्यञिति प्रियतद्धिता दाक्षिणात्या इति भाष्यकारोक्तेः ॥ येनोपाधिनेत्यस्य येन निमित्तेनेत्यर्थः ॥ मूले कदा आगतोऽसीति प्रश्नोऽद्येति भूतकालाभिव्यक्तये ॥ ननु यदा आगत इति प्रश्ने कदेत्युपादानादागमनाधिकरण कालविषयकजिज्ञासावक्तुः प्रतीयतेऽतोऽयमुत्तरवाक्यमपि तादृशकालबोधकमेवाधिगतमित्ययमागच्छामीत्यनुपपन्नम् ॥ किञ्चागमनक्रियाया अतीतत्वादयमितीदमः सन्निकृष्टस्य परामर्शकस्य प्रयोगश्चानुपपन्न इति चेन्न ॥ अयमित्यनेन नागमनम्प्रतिनिर्दिश्यते किन्तु वर्त्तमानसमीपः सूर्योदयादिरूपो यः काल आगमनकर्त्तृपुरुषगतपांसुलपादस्वपरिकरवन्धनादिनाऽनुमितः स एव बोध्यते तत्रेत्यस्य चाध्याहारेण वाक्यार्थस्य पर्यवसानात् ॥ एवम्भविष्यत्कालविषयेऽपि येन केन चिन्निमित्तेन तस्य कालस्य ज्ञाने तस्मिन्नित्यस्याध्याहारेण पर्यवसानङ्कल्प्यम् ॥ आशंसाया भूतवत् ॥ अप्राप्तेति ॥ अप्राप्तस्य प्राप्तीच्छा । एतेनैतत्सूत्रस्य प्रयोजनन्दर्शितम् ॥ वर्त्तमानत्वेऽपीति ॥ यस्मिन्काले देवश्चेद्वर्षीदित्यादि प्रयुज्यते तस्मिन्काले निरुक्ता आशंसा अस्ति एतद्विषयो वर्षणं तच्चोत्पन्नमिति भविष्यत्कालिकवर्षणसम्बन्धादाशंसापि भविष्यत्त्वेनोच्यते ॥ आशंसायामित्यत्र विषयभूतायामिति शेषः ॥ एवञ्च प्रत्ययस्तथा यादृशार्थलाभस्तन्दर्शयति ॥ आशंसमानेति ॥ मूले सामान्यातिदेश इति ॥ भूतवदित्यनेन भूतसामान्यस्योपस्थितिर्न तु भूतत्वव्याप्य धर्मवत्तेति भूतत्वव्याप्यधर्मविशिष्टकालनिमित्तकङ्कार्यमत्र न भवतीत्यर्थः ॥ अत एवात्र भाष्ये भूतवदतिदेशे लङ्लिटोः प्रतिषेधो वक्तव्य इत्युक्त्वा न वा अपवादस्य निमित्ताभावादिति समाहितम् ॥ पूर्वसूत्राद्वाग्रहणानुवृत्तयाऽस्यातिदेशस्य वैकल्पिकत्वादेतद् भाष्ये स्वाश्रयमपि यथास्यात्सामान्यातिदेशमपि स्यादित्याशयेन वर्षिष्यति वर्ष्यति इत्युपात्तम् ॥ क्षिप्रवचने लृट् अत्र

हि भविष्यतीत्यनद्यतने उपसङ्ख्यानम् । श्वो ग्रामं गमी । किन्तुनः कारणन्न सिध्यति । लुटायन्निर्देशः क्रियते । लृट्चानद्यतने लुटाबाध्यते । तेन लुट एव विषये प्रत्ययाः स्युः । लुटोविषये न स्युरित्याशङ्कार्या पश्चादस्य निमित्ताभावादनद्यतने हि तयोर्विधानमित्युक्तमिति । भविष्यतीति सामान्येन निर्देशात्तायन्मात्रविवक्षायामयम्प्रत्ययो भविष्यति विशेषस्य विवक्षायान्तु नेत्याशयेन शङ्का ॥ वास्तवविशेषसत्त्वेऽपि तस्यादावविवक्षया सामान्यस्यैव विवक्षामाश्रित्य तदाश्रयो णिनिः अनद्यतनस्यस्तु विशेषः पश्चात् श्वःशब्दसन्निधाने प्रतीयते इत्युत्तराशयः ॥ व्यत्ययो बहुलमिति सूत्रस्य श्वोऽग्नीनाधास्यमानेनेत्यादौ कालव्यत्ययपरमधाता अयष्टेति प्राप्त इतिभाष्यन्तु वाक्यसंस्कारपक्षाभिप्रायेण ॥ किं वृत्ते लिप्सायाम् ॥ अत्र सूत्रे यद्यपि किं वृत्तमिति सामान्येनैवोपात्तन्तथापि प्रयोगानुसारेण त्रयाणामेव ग्रहणमिति वृत्तिकाराशयः ॥ किंवृत्तमितिसामान्येनोपादानाद्यद्यरिकंशब्दनिष्पन्नस्य सर्वस्य ग्रहणन्तेनकमित्यादीनाङ्कस्मै दास्यसीत्यादीनाञ्च सङ्ग्रह इति भाष्यसम्मतेव रीतिरुक्ता तदाह ॥ रद्वृत्तादिति ॥ लिप्सायामित्यस्य लिप्सायां याच्यायामित्यर्थ इति क्रमं वारयति ॥ उदाहरण इत्यादिना । ननु यत्र यथाकथञ्चिल्लिप्सागम्यते तत्राकिं वृत्तेऽप्यनेनसूत्रेण नेष्टन्तदाप्रतसूत्रे किं वृत्तग्रहणमनर्थकमतआह ॥ अत्र कि मिति ॥ मितिरहितायामिति ॥ याचकस्य लिप्सायत्रास्ति दातुस्तु दाने च्छाभावादप्रवृत्तिस्तत्र कि वृत्तप्रयोग एव तद्विरयर्थमितितत्सरम् ॥ लोडर्थलक्षणे ॥ प्रैषविषयगोचारणरूपाक्रियायपालस्यैतत्पाह ॥ कृष्णश्चोऽग्नमिति ॥ अन्यदीये क्षेत्रे गोचारणार्थम्प्रवृत्तोपाध्यायस्तिरस्कृत्य विषयवद्रुपपत्तः सेवकादिनो याक्यमिदम् ॥ लिङ् चोर्ध्वमौहूर्तिके दिग् शब्दइति । दिग्शब्दस्यापि दिग्दि दर्शनादिति भावः ॥ अत्र लोडर्थलक्षणइत्यनुवर्तते ॥ उपाध्यायस्य स्वगृहागत्ये तत्र यथागमङ्गादिपिस्यर्थे न मनः

तासद्विचिम्प्रकटयति । असामीप्य इति । अनभिधाने प्रमाणन्तु भाष्यकारेण तथानुक्तत्वमित्येव॥अतिक्रान्त इत्यनेनातीतत्वस्याभिव्यक्तिः।कालविभागे॥ काले न कृतः कालकृतः कालकृतश्चासौ विभागश्चेति कालविभागः शेषषष्ठीति कालविभागशब्दार्थापेक्षया शेषषष्ठीत्यर्थः. तेनाहोरात्राणामन्येन कालेन विभागे कालान्तरस्य वाऽहोरात्रेर्विभागेऽहोरात्राणामेवाहोरात्रैर्विभागेवाऽयन्निषेधः प्रवर्त्तते मूलेऽपरः पञ्चदशरात्र इति । एतेनैतन्मासीयपञ्चदशरात्रान्तरेण मध्ये व्यवधानेन सामीप्याभावलाभ ॥अत. पुँस्त्वमिति। बहुव्रीहित्वादेव पुँस्त्वमित्यर्थः।सङ्ख्यापूर्वं रात्रं क्लीबमिति तु रात्राह्नाहाः इत्येतदपवादतया द्वन्द्वतत्पुरुषयोरेवेति योगविभागेन समासान्तकल्पनापेक्षया पञ्चदशरात्र इत्यस्य साधुत्वम्प्रकारान्तरेणाह । पृषोदरेति ॥ भाष्ये स्पष्टमिति । तत्र हि कस्मिन्परस्मिन् कालविभागे । कुत एतत् योग विभागसामर्थ्यादित्युक्तम् ॥ भविष्यति मर्यादावचने वरस्मिन्नहोरात्राणामित्येकयोग एव कर्त्तव्ये पृथग्योगोपादानम्परस्मिन्विभाषेत्यत्र काल विभागग्रहणसम्बन्धार्थमेवेत्यर्थः । गर्हायां लडपिजात्वोः ॥ अपिजात्वोर्योगे लट् स्याद्गर्हायां विषये ॥ भविष्यतीत्यादिप्रकृतसूत्रे न सम्बध्यते तेन कालत्रय इत्यस्य लाभः ॥ नन्वपिजातुशब्दयोगे त्रिषु कालेषु यस्य कस्य चित्कालस्य विवक्षायां लकारान्तरस्यावश्यम्प्राप्त्या निरवकाशोऽयं योग इतिपरत्वादित्यनुपपन्नमत आह । लटष्टत्वादिति ॥ यदा त्वतीतानागतयोर्गर्हातिशयप्रतिपादनाय वर्त्तमानत्वस्यारोपस्तदा वर्त्तमाने लडिति लटि शानजादेशोऽपि।अपि गणिकामाददानम्पश्येति।प्रकृतसूत्रस्य नारोपार्थमिति बोध्यम् । विभाषा कथमि । अत्र भविष्यतीति । अत्र विभाषा कथमिति सूत्रे भविष्यति । भविष्यदर्थे । लिङो निमित्तभूतं शब्दो गर्हा च एतद्वयमस्ति भविष्यदर्थगर्हास्ति यद्यपि तत्तदाह । क्रियातिपत्तावित्यपीति । किं वृत्ते लिङ् लृटौ । विभाषाप्रक्रियपर्यन्तगित्यर्थः । कालत्रय इति। भविष्यतीत्यादि नियमकत्वात् । लट्यारणापेति।

वचनग्रहणात्पर्यायेऽलभः । नेत्युक्तौ भूतवदित्यस्यातिदेशस्य निवृत्तौ चकारेण बोधितस्य वर्तमानवदित्यस्याप्यतिदेशस्य निवृत्तौ पूर्वोक्तरीत्या आशंसाविषयस्य भविष्यत्त्वाल्लृटः सिद्धौ लृड्ग्रहणमनर्थकमित्यत आह मूले लुटोऽपि विषय इति । तस्या विषयतायाः सूचनाय च इत्युपात्तम् । अस्येति । क्षिप्रवचन इत्यस्येत्यर्थः ॥ एवञ्च यत्र क्षिप्रपर्यायस्याशंसावाचकस्य च प्रयोगस्तत्रापवादविषयपरिहारेणोत्सर्गस्य प्रवृत्तेर्भूतवदित्यस्य वर्तमानवदित्यस्य चातिदेशस्याप्रवृत्तौ क्षिप्रपर्यायप्रयोगाभावे चरितार्थस्य लिङ्विधायकस्य क्षिप्रपर्यायप्रयोगस्य सत्त्वात्प्राप्तलृड्बाधकत्वमित्याह ॥ क्षिप्रप्रयोगेऽपीति ॥ नानद्यतनवत् ॥ सातत्यम् ॥ नैरन्तर्यम् ॥ इदञ्च यावज्जीवमित्यस्य प्रयोगेण गम्यते ॥ अनद्यतनस्यस्य भूतत्वभविष्यत्त्वान्यतरसमानाधिकरणतयाऽनद्यतनवत्त्व इत्यनेन विहितस्य निषेधेन लङो लुटो लिटश्च प्रतिषेधे भूतत्वविवक्षायान्तन्मात्रे विहितो लुङ् भविष्यत्त्वस्य विवक्षायाञ्च लृट् भवतीति बोध्यम् ॥ लङ् लुटौ नेति मूले लिडपि नेति पूरणीयम् ॥ एतेषाञ्चाऽपि भूतत्वभविष्यत्त्वात्मकसामान्य धर्मसमानाधिकरणविशेषधर्मविवक्षायाञ्चोध्या ॥ सामीप्यञ्चद्विविधम्प्रसिद्धम् ॥ कालकृतन्देशकृतञ्च ॥ तद्विविधमपि विनिगमनाविरहाद् ग्रहणे तदाह । सामीप्यञ्चेत्यादि ॥ तत्र कालकृत सामीप्यमुक्त एवोपपादितन्देशकृतन्त्वस्यमाह । देशसामीप्य इत्यादि ॥ अतिक्रान्त आगामी त्वनयोर्यथा गङ्गेकाचित आधारयत इत्यनयोरन्वयः ॥ न च कालविशेषविहितप्रत्ययस्यैव नानद्यतनवदित्यनेन निषेधात्प्रत्यासत्त्या कालकृतसामीप्यस्यैव ग्रहणंयुक्तमिति वाच्यम् ॥ भविष्यति मर्यादेति सूत्रभाष्यप्रामाण्येन देशकृतस्यापि ग्रहणात् । तत्र हि योऽयमध्वा गन्तव्य आपाटलिपुत्रात्तस्य यदवरं साकेतादित्यादौ नानद्यतनवदितीष्यत इत्युक्तम् ॥ भविष्यति मर्यादा ॥ सूत्रस्य प्रयोजनमाह । अध्वेत्यादि । तत्रार्थान्ते प्रमाणमाह । तद्यथेत्यादिना । कैयट इत्याभिधानमपि

लिङ्। नियुक्तस्यादिति। यीताप्योरित्युक्तत्वादिति भावः॥ कामप्रवेदने॥ मूले कच्चिज्जीवतीति। न चात्र कामप्रवेदनस्य गमकाभावान्न लिङः प्राप्तिरित्यकच्चितीति व्यर्थमिति वाच्यम्। कामो मेऽस्ति कच्चिज्जीवतीति वाक्यस्य कल्पनमभ्भवात्। अथ वा कच्चिदित्यस्येष्टप्रश्न एव प्रयोगात्तत्प्रयोगेणैव कामप्रवेदनङ्गम्यते तदाह। अयमिति॥ मौढिपदार्थं व्याचष्टे। प्रौढिरिति॥ अपि गिरिं शिरसाभिन्द्यादित्युक्ते कर्तृत्वेन प्रतीतस्य पुरुषस्याङ्गदार्ढ्यनिश्चयोऽस्य कृत्यसाध्यमस्तीति गम्यत इति भावः॥ सम्भावनेऽलमित्यत्र च विसक्तिविपरिणामोऽर्थानुरोधात्। यथा कदुचुरिति इति न्यायाबाधायाह॥ आवर्त्येति॥ अनुष्ठातुं समर्थ इति। अनेन क्रियानिष्पादनसामर्थ्यं निष्ठायोत्कटत्वात्स्वविषयतातच्छालिष्ठाममास्तीति गम्यत इति प्रौढिरस्त्येव॥ अलमिति किम्। प्रायेण गमिष्यति॥ अत्र संभावनस्य भविष्यद्विषयत्वाद्भविष्यद्विषयसर्वलकारापवाद इति हरदत्त आह॥ विभाषा धातौ सम्भावनवचने॥ उत्प्रेक्षण इति उत्प्रेक्षापि संभावनैव शक्त्यनिष्ठोत्कटत्वास्यविषयताविशेषनिरूपितविषयिता शालिज्ञानरूपसम्भावनाया अत्र सत्यात्पूर्वसूत्रस्य प्राप्तिरस्ति॥ प्रत्युदाहरणे। अयदीत्यस्य प्रत्युदाहरणे॥ हेतुहेतुमतोर्लिङ्॥ हेतुहेतुमतोरर्थयोर्वर्तमानाभ्यां धातुभ्यां लिङ्। यत्र द्वयोर्धात्वर्थयोर्हेतुहेतुमद्भावः प्रतिपिपादयिषितस्तत्र विनिगमनाविरहादुभाभ्यामपि धातुभ्यां लिङ्भवति॥ एतत्सूत्रोदाहरणात्कृष्णन्नमेच्चेत्सुखं यायादित्यादिभ्यो जायमानः शाब्दबोधो हेतुहेतुमद्भावसम्बन्धेन हेतुक्रियाविशिष्टकार्यक्रियाविषयको भवतीति प्रतीतिः लिङः साधुत्वम्॥ लिङिति वर्त्तमान इति। यताप्योरिति सूत्राल्लिङिति वर्त्तमान इत्यर्थः॥ न च विभाषा धाताविति सूत्रे ततोऽनुवर्त्तमानं लिङ्ग्रहणं विभाषापदसम्बद्धमसूदिति विभाषापदानुवृत्त्यर्थमत्र लिङ्ग्रहणमस्त्विति वाच्यम्। विभाषापदसम्बन्धस्यात्रापीष्टत्वात्। अत एव हेतुहेतुमतोर्लिङ्वेति भाष्ये उक्तम्॥

यदा यत्र मामस्त्वविवक्षा किंवृत्तशब्दयो गर्हा च तदा लिङोऽभावे लट् स्यादिति भावः । अपि जातु शब्दयोरन्यतरयोगे तु गर्हायामित्यनेन लट् स्याल्लट्ग्रहणसत्त्वे तु तस्य योगस्य परत्वादनेन बाध इति भावः। ननु लिङ्निमित्त इति सूत्रस्येदं सूत्रम्परत्वाद्बाधकम्भविष्यतीति कथम्भविष्यतीत्याद्युक्तिरत आह । लिङ्निमित्त इतीति ॥ वाक्यभेदादेव क्रियातिपत्त्यभावेऽपीदं सूत्रं प्रवर्त्तत इति भावः ॥ अनवक्लृप्त ॥ लिङ्लृटावित्यनुवर्त्तते ॥ भविष्यतीत्यादिनुवृत्तेः प्रागुक्तत्वादाह कालत्रयेऽपीति ॥ नेष्यत इति । तत्प्रयोजकस्वरितत्वस्येहाभावात् । यथा चास्य सूत्रभाष्ये स्पष्टमिदम् ॥ अत्राकिंवृत्तेऽपीति किंवृत्तग्रहणासम्बन्धप्रतिपादनायोपात्तन्तच्च न कर्त्तव्यम् । पूर्वसूत्रस्थकिंवृत्तशब्दे स्वरितत्वाभावात्तस्येहासम्बन्धेनोभयत्र सिद्धेः । न चाकिंवृत्त इत्यस्य पर्युदासतया किंवृत्तशब्दसदृशशब्दान्तरस्योपपदसंज्ञार्थमेतद्भविष्यतीति वाच्यम् । अतिङिति समासनिषेधेनोपपदसंज्ञायाः फलाभावात् । न च यदा यदादेशस्तदा नित्यसमासप्रवृत्तिः फलमस्त्विति वाच्यम् । भविष्यतीत्यनुवृत्तत्र विहितलृट एव यदादेशस्य प्रवृत्तेः । तदुक्तम्भाष्ये किंवृत्तस्यानधिकारादुत्तरत्राकिंवृत्तग्रहणानर्थक्यम् । तस्मिन्नकिंवृत्तेऽविशेषेण किंवृत्ते चादृते च भविष्यति । इदन्तर्हि प्रयोजनमुपपदसंज्ञां वक्ष्यामि । अतिङिति हि प्रतिषेधः प्राप्नोति । यदा तर्हि यत्संज्ञी तदोपपदसंज्ञा भविष्यति । भविष्यदधिकारविहितलृट. सत्संज्ञाविति ॥ किंकिलास्त्यर्थेषु । लिङपवादत्वमुपपादयति । पूर्वसूत्र इति ॥ इह लो निवृत्तयेति । लृट्ग्रहणेन समुच्चयनमुपपदमेवोक्तमित्यर्थः ॥ यच्चयत्रयोः ॥ अयमपीति ॥ अपि जातुपदोरित्यस्य सङ्ग्रहः । लिङ् चेति वचनेनेदं सूत्रविषयमात्रमिति न भ्रमितव्यङ्किन्तु फलितार्थकथनमेतदित्याह । अनेनेत्यादिना ॥ शेषे लृड-यदौ । अत्र लृडनेति । एतत्सूत्रस्य प्रवृत्तिकालस्मिन् सति लिङो विधानाभावेन लिङ्निमित्त इति सूत्रप्रवृत्तिरिति शेषः ॥ उताप्योः समर्थयो-

लिङ् । निषृत्तत्त्वादिति । चोताप्योरित्युक्तत्वादिति भावः ॥ कामप्रवेद-ने ॥ मूले कच्चिज्जीवतीति । न चात्र कामप्रवेदनस्य गमकाभावान्न लिङः प्राप्तिरित्यकच्चितीति व्यर्थमिति वाच्यम् । कामो मेऽस्ति कच्चिज्जीवतीति वाक्यस्य कल्पनसम्भवात् । अथ वा कच्चिदित्यस्येष्टप्रश्न एव प्रयोगात्तत्प्रयोगेणैव कामप्रवेदनङ्गम्यते तदाह । अयमिति ॥ प्रौढिपदार्थं व्याचष्टे । प्रौढिरिति ॥ अपि गिरिं शिरसाभिन्द्यादित्युक्ते कर्तृत्वेन प्रतीतस्य पुरुषस्याङ्गदादेरनिश्चयेऽस्य शक्यसाध्यं नास्तीति गम्यत इति भावः ॥ सम्भावनेऽलमित्यत्र च विभक्तिविपरिणामोऽर्थानुरोधात् । सक्तुदुच्चरित इति न्यायाबाधायाह ॥ आजत्र्येति ॥ अनुष्ठातुं समर्थ इति । अनेन क्रियानिष्पादनसामर्थ्यं निष्ठायोत्कटत्वाख्यविषयतातच्छालिप्रामम्मस्तीति गम्यत इति प्रौढिरत्त्यैव ॥ अलमिति किम् । प्रायेण गमिष्यति ॥ अत्र संभावनस्य भविष्यद्विषयत्वाद्भविष्यद्विषयसर्वलकारापवाद इति हरदत्त आह ॥ विभाषा धातौ सम्भावनवचने ॥ उत्प्रेक्षत इति उत्प्रेक्षापि सम्भावनैव शक्यत्वमिष्टोत्कटत्वाख्यविषयताविशेषनिरूपितविषयिता शालिज्ञानरूपसम्भावनाया अत्र सत्यात्पूर्वसूत्रस्य प्राप्तिरस्ति ॥ प्रत्युदाहरणे । अयदीत्यस्य प्रत्युदाहरणे ॥ हेतुहेतुमतोर्लिङ् ॥ हेतुहेतुमतोरर्थयोर्वर्त्तमानभ्यां धातुभ्यां लिङ् । यत्र द्वयोर्धात्वर्थयोर्हेतुहेतुमद्भाव प्रतिपिपादयिषितस्तत्र विनिगमनाविरहादुभाभ्यामपि धातुभ्यां लिङ् भवति॥ एतत्सूत्रोदाहरणात्करणलमेधेत्सुखं यायादित्यादिभ्यो जायमान' शाब्दबोधो हेतुहेतुमद्भावसम्बन्धेन हेतुक्रियाविशिष्टकार्यक्रियाविषयको भवतीति भवतीह लिङः साधुत्वम् ॥ लिङिति वर्त्तमान इति । उताप्योरिति सूत्राल्लिङिति वर्त्तमान इत्यर्थः ॥ न च विभाषा धाताविति सूत्रे ततोऽनुवर्त्तमानं लिङ्ग्रहण विभाषापदसम्बद्धनमूदिति विभाषापदानुवृत्त्यर्थमत्र लिङ्ग्रहणमस्त्विति वाच्यम् । विभाषापदस्यान्यस्यात्रापीष्टत्वात् । अत एव हेतुहेतुमतोर्लिङ्वेति भाष्ये दर्शनम्॥

उद्र्ध्वमौहूर्त्तिकत्वं स्वरूपसंनिमित्तन्तच्च धात्वर्थविशेषणम्।न त्वस्यार्थस्य प्रत्ययवाच्यत्वमनेनप्रतिपाद्यते । अन्ययोः । प्रैषातिसर्गयोः । प्राप्तकालपदस्बहुव्रीहिसंज्ञकं यजनविशेषणतयोपात्तङ्गम्यमानस्याप्यर्थस्य स्पष्टप्रतिपत्त्यर्थम् ॥ स्मे लोट् । स्मशब्दे उपपदे प्रैषादिषु गम्यमानेषु ऊर्द्ध्वमौहूर्त्तिके धात्वर्थे वर्त्तमानाद्धातोर्लोट् स्यात् ॥ लिङ्कृत्यानामयमपवादः । निरवकाशत्वेन बाधकः । स च नित्य एवेत्येतद्विषये लिङादीनामप्रवृत्तिरेव ॥ अधीष्टे च । अधीष्टः सत्कृत्यव्यापारः। ऊर्द्ध्वमौहूर्त्तिकत्वाभावेऽपि प्रवृत्त्यर्थमिदम् ॥ लिङ् यदि ॥ अस्य तु पुनरपवादत्वमुपपादयति । भाव इति ॥ कर्तुं विवक्षायामयञ्चरितार्थः ॥ भगवता भवता कन्या वोढव्या । वहतीया ॥ सद्विद्यादिगुणसम्पन्नम्प्रत्युक्तिरियम् ॥ शकि लिङ् च । भावे क्विविति । सूत्रे शकीति शकधातुप्रकृतिकभावक्विबन्तप्रकृतिकम् । शक्नोत्यर्थः सामर्थ्यम् ॥ क्रियाजननानुकूलविजातीयव्यापारः ॥ अत्र शकीतिप्रकृत्यर्थविशेषणम्॥ तेन शक्नोत्यर्थोपाधिकेऽर्थे वर्त्तमानाद्धातोरित्यर्थः ॥ माङि लुङ् ॥ सर्वलेति । वर्त्तमानाद्यर्थकानामयमपवादो यतस्तत शङ्क्यमिति शेषः ॥ ननु निरनुबन्धकमाशब्दप्रयोगे यदि सर्वे लकारास्तर्हि सूत्रवैयर्थ्यमत आह । सूत्रमिति । असाधुत्वमेवैतादृशप्रयोगाणामनार्षाणामित्याह । वस्तुत इति । ध्वनितत्वादिति । प्रागुपपादितमेतत् ॥ धातुसम्बन्धे प्रत्ययाः ॥ द्विवचनान्तेन समासः । धात्वोः सम्बन्ध इत्यर्थः । इदञ्च विधिसूत्रन्त्वधिकारसूत्रन्तथा सति धातुसम्बन्ध इत्येव सिद्धे प्रत्यया इत्यस्यवैयर्थ्यापत्तेः । न च षष्ठी सङ्ख्याविशेषानवगमात्कथन्द्विवचनान्तेन समासेऽपि सङ्ख्याविशेषावगतिरिति वाच्यम् । द्वित्वात्मकसङ्ख्यायाऽनवगतावपि व्यक्तिद्वयप्रतीतौ बाधकाभावात् ॥ ननु धात्वोः सम्बन्धः समानकर्तृकत्वादिरूपो वाच्योऽर्थद्वारक परस्परसम्बद्धार्थकानेकधातुप्रयोगे यत्र येषांप्रत्ययानां शास्त्रान्तरेण विधानन्ततोऽन्यत्र तेभ्यो धातुभ्यः प्रत्ययाः सा

धन इत्यर्थः । एवञ्च गोमानासीत् । गोमान् भवितेत्यादावनुपपत्तिः । तदस्यास्त्यस्मिन्नित्यनेन यत्तं नानसत्ताकर्तृ गोसम्बन्धिपुरुषकर्तृकातीतसत्तानेन प्रतिपादयितुमशक्या । गोकर्तृकसत्ताप्रतिपादकधातुप्रयोगाभावेन तेन सम्बन्धस्य प्रतिपादनासम्भवात् । यदि तथा स्यात्तदा गौरस्तीत्यत्रास्तेरनेन सूत्रेणातीतकाले प्रत्ययं विधाय तेन धातुना सम्बन्धः स्यात् । किन्तु विद्यमान एव धेन्वे तद्धर्मिणामतीतानागतसत्त्वप्रतिपादनायायमप्रयोगो गोसम्बन्धिनो दरिद्रत्वभवनमेतद्धनत्वम् । एवञ्च गोकर्तृकभूतसत्तायाः सम्बन्धवती या गौस्तद्वत्पुरुषकर्तृकभूतसत्तविषयसत्त्वर्थस्य भाष्यसम्मतस्य प्रतीत्यनुपपत्तिः । न च तदस्यास्तीति सूत्रे कालाविवक्षयाऽयमप्रयोग इति वाच्यम् ॥ धनसत्त्वस्यातीतत्वे धनिकृष्टेत्युक्ते शब्दप्रयोगाधिकरणकालजातदरिद्रत्वस्य पुरुषस्यापि प्रतीत्यापत्तेरत आह । धातुशब्देनेति । तदर्थः । धात्वर्थः ॥ लभ्यत इति । एवञ्च गोकर्तृकसत्ताप्रतिपादकधातुप्रयोगाभावेऽपि तदर्थस्य गम्यमानतया तस्मिन्सत्तारूपेऽर्थेऽतीतत्वसम्बन्धेनान्वये न तद्धर्मावगतिरस्त्येव गोमत्त्वस्यातीतत्वात्तद्विशिष्टपुरुषकर्तृकसत्ताया अप्यतीतत्वेन गोमानासीदिति प्रयोगः । शब्देनाप्रयुज्यमानेनेसम्बन्धाभावेऽप्यर्थेन बुद्धिस्थेन सम्बन्धो वक्तुं शक्यत एव । एवङ्गोमान्भवितेत्यत्र गोकर्तृकसत्तायां भविष्यत्वरूपतया प्रयोगस्योपपादनङ्कार्यम् ॥ मतुप्प्रत्ययो यद्यप्यसन्निहितत्वपापि मत्तसूत्रे मत्वर्था एलुपादानगाम्यांमस्योकारीत्योरपतिरस्मात्स्या यदि प्रत्ययपदग्रहणप्रत्ययलकारपरमेवस्यात्तदा प्रत्ययाधिकारेणैव सिद्धेऽस्य वैयर्थ्यं स्यात् । न चाधिकारप्रत्ययसंज्ञा परमिति चाप्यधिकारेण संज्ञिलाभ इति वाच्यम् । तद्पञ्चम्येव । निर्देशेन संज्ञिपरत्वसम्भवात् । तद्धितप्रत्ययपदमविशिष्टप्रत्ययस्यापि कालान्तरे साधुत्वार्थमिति विभावनेः ॥ न च स्वरूपप्रतिपत्तये क्रियाससम्बन्ध प्रयोक्तव्यामिति वाच्यम् । ... गौरस्ति । न च गम्यमे प्रत्यया इ-

त्येवास्तु धातोरित्यस्याधिकृतस्य षष्ठ्या विपरिणामेन सम्बन्धविशेषण-
त्वम्भविष्यतीति वाच्यम् । सम्बन्धेऽर्थे प्रत्ययविधायकत्वापत्तेः ॥ प्र-
त्यया इति बहुवचनं विषयबहुत्वाभिप्रायेण ॥ ननु तत्तत्प्रत्ययविधाय-
कसूत्रेणैव प्रत्ययस्य सिद्धौ किमनेन सूत्रेण । अप्राप्तस्य प्रत्ययस्यानेन
विधानमिति तु न युक्तम् । यस्मिन्नुपाधौ याभ्यश्च प्रकृतिभ्यो येषाम्प्र-
त्ययानां विधानमस्ति तेषामुपपदान्तरेऽन्यप्रकृतिभ्यश्च विधानमित्यपि
कल्पना स्यादत आह ॥ यत्र काल इतीति । एवञ्च प्रत्ययानां यथायोगं
विहितानामाकालान्यत्वस्यैव प्रतिपादनार्थमेतत्सूत्रमिति भावः । तदेवाह ।
वर्त्तमानसामीप्य इत्यादिना ॥ एतेन । अर्थापत्त्या लटोऽन्यकाले साधु-
त्वकल्पनेन। प्रयोगे श्रूयमाणानामिति कथनेनास्मिन्प्रकरणे एतत्सूत्रप्रा-
क्तनसूत्रविहितानाम्प्रयोगे श्रूयमाणानां शत्रादीनामन्यकाले उत्पत्तिक-
ल्पना न तु लिङादीनामपीति सूचितम्। एतेन श्रूयमाणपदघटित वाक्यघट-
कधात्वर्थयोः साक्षात्सम्बन्धे यथा च भवतीत्यादौ चरितार्थमिदं सूत्र-
मिति गम्यमानधात्वर्थसम्बन्धे गोमानासीद्गोमान्भवितेत्यादौ न स्या-
दित्यपास्तम् । तिङाम्प्राक्तन सूत्रविहितत्वाभावात् । अत्र सम्बन्धो धा-
त्वर्थयोः समानकारककत्वस्वकारकसम्बन्धिकारककत्वान्यतररूपो बोध्यः।
एवं सति यत्राभिनवजातशत्रुत्वदत्पुरुषसम्बन्धिग्रामाभिप्रायेण ग्रामो ग-
म्यमान आसीदित्यादिप्रयोगस्तत्राप्युपपत्तिः । सूत्रारम्भकृत्सूत्रकारस्या-
शयमुपवर्ण्य प्रकृतसूत्रानारंभाभिप्रायकम्भाष्यकारीयकल्पनमाह । भाष्य-
कृतस्त्विति । पर्यायतयेति । न च भावीत्यत्र भूधातुस्सत्तार्थकस्ततोऽ-
तीते प्रत्ययकल्पनेऽस्तु पर्यायत्वञ्जनिष्यमाणेत्यत्र तु कथम्पर्यायत्वञ्ज-
नधातोरुत्पत्त्यनुकूलव्यापारवाचकत्वमस्यधातोस्सत्तार्थकत्वमित्यर्थभेदादि-
ति वाच्यम् । धातूनामनेकार्थत्वेनास्तेरप्युत्पत्त्यनुकूलव्यापारार्थकत्वस-
म्भवात् । वर्त्तमानत्वं बुद्धिस्थीकृत्य वर्त्तमानत्वमारोप्य । प्रत्ययः ।
ज्ञाता ॥ तत्फलम् । आरोपेणैतादृशप्रयोगकरणफलमित्यर्थः । प्रत्ययः ।

प्रतीतिः । प्रकृतसूत्रस्य सरूपाणामिति सूत्रस्थभाष्यप्रयोगोऽप्युदाहरणमित्याह । ननु चोत्पततैवेत्यादिना । तत्र हि पृथक् सर्वेषां विभक्तिपराणामेकशेष इति पक्षे एकशेषेण प्रातिपदिकानामन्वित्युक्तावपि विभक्तिश्रवणापत्तिरूपो दोष उक्तस्तस्य द्वन्द्वे कृते एकशेष इति पक्ष नाग्नित्योद्धारबोधकमिदं वाक्यं ननु चोत्पततैव वचनदोषश्चोदितासीति ॥ अस्यार्थः । उत्पतता विभक्तिपराणामेकशेषपक्षे दोषमुपक्रमता पृथग्विभक्त्युपलब्धिस्तदाश्रयत्वादित्यनेन दोषश्चोदिता स्म इति । अत्रोत्पततेति शत्रन्तम् तस्य वर्तमानार्थकलट्स्थानिकत्वे दोषश्चोदिता इति भूतार्थकनिष्ठावाक्यार्थानुपपत्तिरिति प्रकृतसूत्रेण वर्तमानार्थकोऽपि भूते उपपाद्यः ॥ प्रत्याख्यानपक्षे तु वसन्ददर्शेत्यत्र चोत्पूर्वकपतधातोर्भूते वर्तमानत्वारोपेण शतोपपाद्यः । न चोपक्रमतेत्यनुपपन्नमुपाभ्यां समर्थाभ्यामित्यनेन धातोः प्रारम्भार्थकत्वे आत्मनेपदविधानादिति वाच्यम् । उपक्रमतेत्यस्य दोषकथनाय प्रवृत्तेत्यर्थात्प्रारम्भाविवक्षणात् । अत्राप्युत्पतनक्रियाया उद्भाव्यत्वक्रियायाश्च समानकालत्वप्रतीतिरेवं सति भवति ॥ क्रियासमभिहारे लोट् ॥ कालविशेषानुपादानेन विधानादयं सर्वकाले भवति एवञ्च लडादिभिर्व्याप्यव्यापकभावाभावेनायं सर्वेषां व्याधक इत्याशयेनाह । सर्वलकारापवाद इति ॥ लोट एव स्थाने हिस्वादेशविधानस्य फलमाह । यदीति । एतयोर्हिस्वयोर्यथा परस्मैपदात्मनेपदमता भवति तथाह । लोडित्यनुवर्तते ॥ द्वितीयवाक्ये लोडित्यनुवृत्त्यं लोटो लोड्वद्धिस्वौ भवत इति वाक्यनिष्पत्तिरत्र यदि लोड्धर्मस्य कस्यप्रत्ययत्वस्यातिदेशार्थं लोड्वेदित्यतिदेशस्तर्हि तदतिदेशविधानवैयर्थ्यं स्थानिवद्भावेन सिद्धेरतो लोट्शब्दः स्वादेशलाक्षणिक इत्याशयेनाह । लोडादेशेति ॥ एवमपि मेरादेशस्याट्प्रयोगोपगच्छिनु विधिनियमाविरहात्सर्वथामादेशानामाशिषमपि न परस्मैपदात्मनेपदसंज्ञायोगात् । एवञ्च स्थानान्याविदेशो विशेषापेक्षानिर्देश इत्येवं परिभाषातिदेशविभा-

नसामर्थ्याल्लभ्यत इति भावः ॥ हिस्वयोरतिदिष्टे परस्मैपदात्मनेपदसं-
ख्ये यथा सङ्ख्येन भवतस्तदाह मूले क्रमेणेति । हिस्वविधानसामर्थ्या-
दिति । यद्यनयोः पुरुषैकवचनसंज्ञयोरप्यतिदेशः स्यात्तदा युष्मद्युपपद
इत्यस्यैकस्यैकवचनमिति च शास्त्रसंवादिनी प्रवृत्तिरनयोः स्यादेवञ्च सा-
मान्यशास्त्रेण वचनद्वयैकवाक्यतया विधायकेन सिद्धावेतयोर्विधानं व्यर्थं
स्यादिति भावः ॥ व्याख्यानादिति । ध्वंशब्दसाहचर्यमूलकव्याख्यानादि-
त्यर्थः ॥ मूले हिः कर्त्तरीत्युक्तन्नोपपद्यते अनुप्रयुज्यमानसमभिव्या-
हारेणैव कर्त्राद्यर्थस्याभिव्यक्तेरेतयोः कर्त्राद्यर्थकत्वानङ्गीकारादत आह ॥
कर्त्रादयश्चेति ॥ ननु स्वातन्त्र्येण क्रियासमभिहारे हिस्वौ विधेयौ न
तु लोट् लोड्वदिति च वाच्यमत एव सर्वसामञ्जस्ये लोडिति प्रथमान्तक
वक्तव्यमिति चेन्न । लोडित्यस्यातिदेशवाक्यघटकस्य लोडादेशबोधकता-
पत्तेः ॥ लोटः स्थानेऽनयोर्विधाने हि पूर्वोक्तरीत्या लक्षणा भवति ॥
क्रियासमभिहारे विहितोऽयं लोट् तस्याभिव्यक्तये द्विर्वचनमपेक्षते व्यति-
लुनीत इत्यादावात्मनेपदेन कर्मव्यतिहारस्य द्योतनेऽपि व्यतिशब्दव-
त् । अत एवात्र क्रियासमभिहारे द्विर्वचनं वक्ष्यते ॥ यङ्पुनरस्मिन्न-
र्थे शक्त इति तस्य न द्विर्वचनापेक्षा ॥ समुच्चयेऽन्यतरस्याम् ॥ अनेक
क्रियाणां स्वस्वबोधकधातुघटितशब्दबोध्यानां विवक्षा समुच्चयः ॥ प्र-
कृते समुच्चयशब्दो बहुलग्रहणेन कर्मणि विधीयमानाजन्तोऽयञ्च क्रिया-
पदार्थस्य विशेषणन्तदाह । समुच्चीयमानेति ॥ अत एव । कर्मार्थकाज-
न्तस्य क्रियापदार्थविशेषणत्वादेव ॥ भावाजन्तत्वे हि विनिगमनावि-
रहात्कारकसमुच्चयेऽपि स्यादिति भावः । एवञ्चैककारककानेकक्रियावि-
वक्षायामस्य प्रवृत्तिः ॥ व्याख्यानादिति ॥ पूर्वसूत्रवदस्मिन्नपि सूत्रे वा-
क्यत्रयकल्पनेन प्रथमवाक्यघटकलोट्कर्तृकभवनस्य पुरस्फूर्त्तिकत्वमूलक-
व्याख्यानादित्यर्थः ॥ यथा विध्यनुप्रयोगः पूर्वस्मिन् ॥ विधानं विधिः
विधिमनतिक्रम्य यथाविधि । विधानस्य सावधिकत्वाद्यस्मादित्यस्या-

प्रतीतिः । प्रकृतसूत्रस्य सरूपाणामिति सूत्रस्थभाष्यप्रयोगोऽप्युदाहरणमित्याह । ननु चोत्पततैवेत्यादिना । तत्र हि पृथक् सर्वेषां विभक्तिपराणामेकशेष इति पक्षे एकशेषेण प्रातिपदिकानामभिवृत्तावपि विभक्तिश्रवणापत्तिरूपो दोष उक्तस्तस्य द्वन्द्वे कृते एकशेष इति पक्ष आश्रियोद्धारबोधकमिदं वाक्यन्नु चोत्पततैव यचनदोषश्चोदितास्मेति ॥ अस्यार्थः । उत्पतता विभक्तिपराणामेकशेषपक्षे दोषमुपक्रमता पृथग्विभक्त्युपलब्धिस्तदाश्रयत्वादित्यनेन दोषश्चोदिता स्म इति । अत्रोत्पत्ततेति शत्रन्तम् तस्य वर्त्तमानार्थकलट्स्थानिकत्वे दोषश्चोदिता इति भूतार्थकनिष्ठाचात्वयानुपपत्तिरिति प्रकृतसूत्रेण वर्त्तमानार्थकोऽपि भूते उपपाद्यः ॥ प्रत्याख्यानपक्षे तु यमन्दद्र्शेत्यत्रेवोत्पूर्वकपतधातोर्भूते वर्त्तमानत्वारोपेण शतोपपाद्यः । न चोपक्रमतेत्यनुपपन्नमुपपाभ्यां समर्थाभ्यामित्यनेन धातोः प्रारम्भार्थकत्वे आत्मनेपदविधानादिति वाच्यम् । उपक्रमतेत्यस्य दोषकथनाग्रहवतेत्यर्थात्प्रारम्भाविवक्षणात् । अत्राप्युत्पतनक्रियायाश्चोदनात्मकक्रियायाश्च समानकालत्वप्रतीतिरेवं सति भवति ॥ क्रियासमभिहारे लोट् ॥ कालविशेषानुपादानेन विधानादयं सर्वकाले भवति एवञ्च लडादिभिरस्याबाधकाशाज्ञायेनायं सर्वेषां बाधक इत्याशयेनाह । सर्वलापवाद इति ॥ लोट एव स्थाने हिस्वादेशविधानस्य फलमाह । यदीति । एतयोर्हिस्वयोर्यथा परस्मैपदात्मनेपदसंज्ञा भवति तथाह । लोडित्यनुवर्त्तत इति ॥ द्वितीयवाक्ये लोडित्यनुवर्त्त्य लोटो लोड्वद्धिस्वौ भवत इति वाक्यनिष्पत्तिस्तत्र यदि लोड्धर्मस्य कृत्यप्रत्ययत्वमात्रस्यातिदेशार्थं लोड्वदित्यतिदेशस्तर्हि तिङ्त्वाविधानमेव व्यर्थं स्थानिवद्भावेन सिद्धेरतो लोट्शब्दः स्यादेशलाक्षणिक इत्याशयेनाह । लोडादेशेति ॥ एवमपि नैकादेशमात्रस्य बोधनमपि तु विभिन्नमविरहाभावे सर्वेषामादेशानामतोऽयमन्न परस्मैपदात्मनेपदसंज्ञयोर्लाभ । एवञ्च सामान्यातिदेशे विशेषानतिदेश इत्येषा परिभाषाऽतिदेशविधा-

मसासध्यांद्वाध्यत इति भावः ॥ हिस्वयोरतिदिष्टे परस्मैपदात्मनेपदसं- ज्ञे यथा सङ्ख्येन भवतस्तदाह मूले क्रमेणेति । हिस्वविधानसामर्थ्या- दिति । यद्यनयोः पुरुषैकवचनसंज्ञयोरप्यतिदेशः स्यात्तदा युष्मद्युपपद इत्यस्यैकस्यैकवचनमिति च शास्त्रसंवादिनी प्रवृत्तिरनयोः स्यादेवञ्च सा- म्यशास्त्रेण वचनद्वयैकवाक्यतया विधायकेन सिद्धावेतयोर्विधानं व्यर्थं स्यादिति भावः ॥ व्याख्यानादिति । ध्वंशब्दसाहचर्यमूलकव्याख्यानादि- त्यर्थः ॥ मूले हिः कर्त्तरीत्युक्तन्तन्नोपपद्यते अनुप्रयुज्यमानसमभिव्या- हारेणैव कर्त्राद्यर्थस्याभिव्यक्तेरेतयोः कर्त्राद्यर्थकत्वानङ्गीकारादत आह ॥ कर्त्रादयश्चेति ॥ ननु स्वातन्त्र्येण क्रियासमभिहारे हिस्वौ विधेयौ न तु लोट् लोड्वदिति च वाच्यमत एव सर्वसामञ्जस्ये लोडिति प्रथमान्तम वक्तव्यमिति चेन्न । लोड्वित्यस्यातिदेशवाक्यघटकस्य लोडादेशबोधकता- मापत्तेः ॥ लोटः स्थानेऽनयोर्विधाने हि पूर्वोक्तरीत्या लक्षणा भवति ॥ क्रियासमभिहारे विहितोऽयं लोट् तस्याभिव्यक्तये द्विर्वचनमपेक्षते व्यति- लुनीत इत्यादावात्मनेपदेन कर्मव्यतिहारस्य द्योतनेऽपि व्यतिशब्दव- त् । अत एवात्र क्रियासमभिहारे द्विर्वचनं वक्ष्यते ॥ यङ्पुनरस्मिन्न- र्थे शक्त इति तस्य न द्विर्वचनापेक्षा ॥ समुच्चयेऽन्यतरस्याम् ॥ अनेक क्रियाणां स्वस्वबोधकधातुघटितशब्दबोध्यानां विवक्षा समुच्चयः ॥ प्र- कृते समुच्चयशब्दो बहुलग्रहणेन कर्मणि विधीयमानाजन्तोऽयञ्च क्रिया- पदार्थस्य विशेषणन्तदाह । समुच्चीयमानेति ॥ अत एव । कर्मार्थकाज- न्तस्य क्रियापदार्थविशेषणत्वादेव ॥ भावाजन्तत्वे हि विनिगमनावि- रहात्कारकसमुच्चयेऽपि स्यादिति भावः । एवञ्चैककारककानेकक्रियावि- वक्षायामस्य प्रवृत्तिः ॥ व्याख्यानादिति ॥ पूर्वसूत्रवदस्मिन्नपि सूत्रे धा- त्वर्थद्वयकल्पनेन प्रथमवाक्यघटकलोट्कर्तृकत्वस्य पुरस्फूर्त्तिकत्वमूलक- व्याख्यानादित्यर्थः ॥ यथा विध्यनुप्रयोगः पूर्वस्मिन् ॥ विधानं विधिः विधिमनतिक्रम्य यथाविधि । विधानस्य सायधिकत्वाद्यसादित्यस्या-

प्रतीतिः । प्रकृतसूत्रस्य सरूपाणामिति सूत्रस्यभाष्यप्रयोगोऽप्युदाहरणमित्याह । ननु चोत्पतवैवेत्यादिना । तत्र हि पृथक् सर्वेषां विभक्तिपराणामेकशेष इति पक्षे एकशेषेण प्रातिपदिकानान्निवृत्तायपि विभक्तिश्रवणापत्तिरूपो दोष उक्तस्तस्य द्वन्द्वे कृते एकशेष इति पक्ष माश्रित्योद्धारबोधकमिदं वाक्यन्ननु चोत्पततैव वचनदोषश्चोदितास्तीति ॥ अस्यार्थः । उत्पतता विभक्तिपराणामेकशेषपक्षे दोषमुपक्रमता पृथग्विभक्त्युपलब्धिस्तदाश्रयत्वादित्यनेन दोषश्चोदिता स्म इति । अत्रोत्पत्यततेति शत्रन्तम् तस्य वर्त्तमानार्थकलट्स्थानिकत्वे दोषश्चोदिता इति भूतार्थकनिष्ठाबाल्वयानुपपत्तिरिति प्रकृतसूत्रेण वर्त्तमानार्थकोऽपि भूते उपपाद्यः ॥ प्रत्याख्यानपक्षे तु वसन्ददर्शेत्यत्रे चोत्पूर्वकपतधातोर्भूते वर्त्तमानत्वारोपेण शतोपपाद्यः । न चोपक्रमतेत्यनुपपन्नस्त्रोपाभ्यां समर्थाभ्यामित्यनेन धातोः प्रारम्भार्थकत्वे आत्मनेपदविधानादिति वाच्यम् । उपक्रमतेत्यस्य दोषकथनाग्रहवतेत्यर्थात्प्रारम्भाविवक्षणात् । अत्राप्युत्पतनक्रियायाश्चुदपात्वर्थक्रियायाश्च समानकालत्वप्रतीतिरेयं सति भवति ॥ क्रियासमभिहारे लोट् ॥ कालविशेषानुपादानेन विधानादयं सर्वकाले भवति एवञ्च लडादिभिरव्याप्तायकाशाभावेनायं सर्वेषा म्बाधक इत्याशयेनाह । सर्वलापवाद इति ॥ लोट एव स्थाने हिस्वादेशविधानस्य फलमाह । यदीति । एतयोर्हिस्वयोर्यथा परस्मैपदात्मनेपदसंज्ञा भवति तथाऽऽह । लोडित्यनुवर्त्तते ति ॥ द्वितीयवाक्ये लोडित्यनुवर्त्त्य लोटो लोड्वद्धिस्वौ भवत इति वाक्यनिष्पत्तिस्तत्र यदि लोट्धर्मस्य कृत्यप्रत्ययस्यमात्रस्यातिदेशार्थं लोड्वदित्यतिदेशस्तर्ह्यतिदेशविधानवैयर्थ्यं स्थानिवद्भावेन सिद्धेरतो लोट्शब्दः स्वादेशलाक्षणिक इत्याशयेनाह । लोडादेशेति ॥ एवमपि नैकादेशसादृश्यबोधनद्धित्तु विनिगमनाविरहात्सर्वेषामादेशानामन्तेऽयन्ते न परस्मैपदात्मनेपदसंज्ञयोर्लाभः । एवञ्च सामान्यातिदेशे विशेषानतिदेश इत्येषा परिभाषाऽनिदेशविधा-

दुःखार्थकेनेत्यसङ्गतमिति वाच्यम् ॥ तादर्थ्यात्ताच्छब्द्यमिति न्यायेन प्रयोजकव्यापार एव मनोदुःखपदस्य प्रवृत्तेः ॥ तत्र । तस्मिन्पक्षे ॥ उपात्तेनेति शेषः ॥ उपादानात् ॥ प्रतिपादनात् ॥ तस्य । रावणस्य ॥ तत्त्यावगतिः । अतीतत्वस्यावगतिः ॥ तदनुपयोगः । अनुप्रयोगानुपयोगः। कालकारकतद्गतसंख्याविशेषावगत्यर्थं सामान्यवचनस्यानुप्रयोगः प्रार्थनीयः । तेषाञ्चावगतिः प्रकरणाद्वाक्यैकदेशन्यायेन भविष्यतीति भावः ॥ विधौ लोट् तदा वक्तव्यो यदि प्रेरणा प्रतीयेतेत्याशङ्कायामाह । स्वसेवकेति ॥ प्रेरणाविषयश्चासौ अवस्कन्दनादिश्चेत्यर्थः ॥ अत एव । गम्यमानस्थलेऽनुप्रयोगानावश्यकत्वादेव ॥ अत एव । प्रकरणसद्भावादेवानुप्रयोगे सिद्धे तदर्थं वचनस्यानावश्यकत्वादेव । प्रत्याख्यातमिति ॥ किमर्थमिदमुच्यते । अनुप्रयोगो यथा स्यात् । नैतदस्ति प्रयोजनम् ॥ हिस्वान्तमनभिव्यक्तपदार्थकन्तेनानुप्रयोगो भविष्यति । यथा विधीति वक्ष्यामीति । एतदपि नास्ति प्रयोजनम् । समुच्चये सामान्यवचनस्येति वक्ष्यति तत्रान्तरेण वचनं यथा विध्यनुप्रयोगो भविष्यति ॥ समुच्चय एव सामान्यवचनस्यानुप्रयोग इति नियमात् क्रियासमभिहारे यथा विध्यनुप्रयोगो भविष्यतीति भावः । एवम्प्रकारेण प्रथमं सूत्रन्द्वितीयमपि हिस्वान्तमनभिव्यक्तपदार्थकन्तेनापरिसमाप्तोऽर्थ इतिकृत्वाऽनुप्रयोगो भविष्यति । इदन्तर्हि प्रयोजनम् । सामान्यवचनस्येति वक्ष्यामि । एतदपि नास्ति प्रयोजनम् । सामान्यवचनस्याऽनुप्रयोगोऽस्तु विशेषवचनस्येति । सामान्यवचनस्यैवानुप्रयोगो भविष्यति लघुत्वादित्यनेन प्रत्याख्यातमित्यर्थः ॥ इदञ्च लाघवकल्पं क्वचिदेव पर्यायवचनस्थले आद्रियते न सर्वत्र पर्यायेषु लाघवगौरवयोरनादरात्प्रकृते त्वपर्यायत्वं स्पष्टमेवेति भावः। विस्तरस्त्विति ॥ यदि तु पुरीमवस्कन्देत्यत्रावश्यमनुप्रयोगोऽपेक्षित इति दुराग्रहस्तदा चक्र इत्यस्य तन्त्रेणोभयत्रान्वयोऽस्त्वित्यनेनेत्यर्थः ॥

ध्याहारः विधानक्रियाकर्म चोपस्थितत्वाल्लोटेव तस्येत्यस्य चाध्याहार इति यस्माद्धातोर्लोड्विधानन्तस्यानुप्रयोगोऽनेन बोध्यते। यद्यपि प्रकृतस्य लोटः कर्त्राद्यनभिधायकत्वेनैतदन्तादपरिसमाप्तोऽर्थ इत्यनुप्रयोगः सङ्ख्याकर्त्राकाङ्क्षाशान्त्यर्थं प्रकृतसूत्राभावेऽपि सिद्ध एव। तथापि यथा विध्यं वानुप्रयोग इति नियमार्थमिदं सूत्रम्। पूर्वस्मिन्निति तु स्पष्टार्थम्॥ समुच्चये विशेषस्य वक्ष्यमाणत्वात्॥ कृञ्चानुप्रयुज्यत इति सूत्रविहितानुप्रयोगादस्य वैलक्षण्यमाह। अस्येति॥ यथा विध्यं वेति नियमाद्याहि याहीति यातीत्येव प्रयोगो न तु याहि याहीति गच्छति लुनीहि लुनीहीति छिनत्तीति भवति॥ समुच्चये सामान्यवचनस्य। सामान्यमुच्यते येन स सामान्यवचनः। सामान्यं समानो धर्मः स च समुच्चितधात्वर्थवृत्तित्वे सति अनुप्रयुज्यमानधात्वर्थवृत्तिरेवेत्यभिप्रायेणाह। सामान्यवचनत्वञ्चेति॥ अनुप्रविष्टेति। अनुप्रविष्टः समुच्चितधात्वर्थो यस्मिन्नर्थे तादृशोऽर्थो यस्य धातोस्तत्त्वमित्यर्थः॥ भाष्ये स्पष्टमिति। लोड्मध्यमपुरुषैकवचनस्य क्रियासमभिहारे द्वे भवत इत्यनेन स्पष्टम्॥ अत्यास्यरक्रिया इत्यत्रात्यास्यम्य क्रियेति भ्रमवारणायाह। अत्यास्यरमिति प्रथमान्तमिति। तेन प्रथमान्तेन क्रियाशब्दस्य प्रथमान्तस्य कर्मधारयसमासः॥ मन्वभेदान्वयतात्पर्यप्राहकस्येतिशब्दस्य प्रयोगे मध्ये कृतेऽनुप्रयोग इत्यस्य व्याख्यार्थविरोध इति चेन्न। अत्रानुशब्दस्यानुवादकपरत्वात्। ननु गान्दोऽधीत्यादौ यथाऽयभित्यफलाश्रयत्वयोर्युगपद्विवक्षायाम्परत्वात्कर्मसंज्ञायाःकोशब्दाद्द्वितीयया कर्मत्वभानेऽप्ययभित्यमभासते तथेहापि समुच्चयक्रियासमभिहारयोर्विवक्षायाम्परत्वादनेन लोटयप्युभयभागभ्यविप्यत्यतीत्यत आह। तत्रायेति॥ आकाङ्क्षामुत्थाप्येति। अनेन तस्या चरितत्वनिरासः। तस्य। पुष्यंयरकन्दनायभिन्ना स्वारथ्यस्य। न च धर्मोद्वृत्तिद्-राप्रयोजकव्यापारो ध्यात्रारस्यव्यपदेश प्रतीयते न तु धर्मो दुःखोऽवेति अन्वरास्यव्यपदेश धर्मो-

मूले त्वम एवेति । पुरुषांशे वचनांशे चेति शेषः । पूर्वोक्तरीत्यैव निर्णयसम्भवादिति सकलेष्टसिद्धिः ॥

## ॥ इति लकार्थप्रक्रियाविवरणम् ॥

इति श्रीमदनन्तकल्याणसद्गुणनिधानाखिलपण्डितसार्वभौमभूमण्डलप्रसारिविमलतरानवद्यसद्यशःपार्वणपीयूषभान्वगस्त्यकुलवंशावतंसश्रीभवदेवमिश्रात्मजभैरवमिश्रकल्पितायाञ्चन्द्रकलायां शब्देन्दुशेखरव्याख्यायान्तिङन्ताख्यप्रकरणं सम्पूर्णम् ॥ श्रीमत्सीतारामचन्द्रार्पणमस्तु ॥

॥ श्रीः ॥

# चन्द्रकलायाः

अर्थात्

## अगाधमेधश्रीभैरवमिश्रसंकलितायाः

## शब्देन्दुशेखर व्याख्यायाः

चतुर्थः खण्डः ।

ग्रन्थकर्तुः प्रपौत्रेण श्रीपण्डितगणेशदत्त-
शर्ममिश्रेण ग्रन्थकर्तृहस्तलिखितपु-
स्तकमवेक्ष्य संशोध्य संस्कृत्य र-
सिकजनसौलभ्याय द्विवेदपं-
डितरामनाथशर्मद्वारा



काशिककाशिकायन्त्रालये मुद्रयित्वा प्रकाशितः ।

सं० १९५४ भा० शु० १४

# ॥ अथ कृदन्तप्रकरणम् ॥

श्रीगणेशाय नमः ।

नत्वा श्रीजानकीजानिं सानुजं वरदम्प्रभुम् ॥
कृतां व्याख्यानमधुना क्रियते तत्प्रसादतः ॥ १ ॥

धातोः । अधिकारसूत्रमिदन्तस्य फलमाह । सोपसर्गाणामिति । एतत्सूत्राभावे वर्त्तमाने लडित्यादेर्वर्त्तमानाद्यर्थे प्रत्यासत्त्या तादृशार्थप्रतिपादकेभ्यो लडादयः स्युरित्यर्थे पर्यवसन्ने सति सोपसर्गाणामपि तादृशार्थप्रतिपादकतया तेषामप्यङ्गत्वापत्तावडाद्यव्यवस्थापत्तेरिति भावः । यद्यपि तृतीयाध्यायसमाप्तिपर्यन्तम्धातोरेकाच इत्यस्य धातोरित्यस्य सम्बन्धेन धातोरेव लडादयो भविष्यन्तीति न सोपसर्गाणामङ्गत्वस्य प्रसक्तिस्तथापि द्वितीयस्य धातोरित्यस्याधिकारसूत्रस्याभावे तिङ्शिदित्यस्यार्द्धधातुकमित्यस्य च धातोर्ये तिङः शितश्च ते सार्वधातुकाभिन्नास्तेभ्यो भिन्नाद्यार्द्धधातुकाभिन्ना इत्यर्थापत्तिः स्यात् । तथा सति क्विबन्तानां लूप्रभृतीनामपि धातुत्वाल्लूभ्याम्लूभ्यामित्यादौ भ्याम आर्द्धधातुकत्वस्य सत्त्वादिडागमः स्याद्द्वितीयस्य धातोरित्यस्य सत्त्वे तु उक्तसूत्रयोर्धातोर्धातोरित्येवमानुपूर्वीकशब्दोच्चारणेन विहितानान्ते संज्ञे भवत इत्यर्थनिष्पादनान्न भ्याम आर्द्धधातुकत्वस्य प्रसक्तिः । नन्वातृतीयसमाप्तेर्य्येदयमधिकारस्तदा स्यादिप्रवृत्तियोग्ये विषये नित्यत्वात् स्यादिषु कृतेषु तदनन्तरं लस्य स्थाने तिबाद्यादेशस्य तेन व्यवधानादप्रवृत्तिर्न स्यात् । सूत्रस्थतिप् तसित्यस्य चारितार्थ्यन्तु इस्य विकरणस्य सार्वधातुकनिमित्तकत्वमस्य शबादेर्विषये स्यादत आह । स्यादिव्यवधान इति । तिप् तसिति सूत्रे धातोरित्येतत्सम्बन्धस्य प्रयोजनमाह । लुनातीत्यादाविति । व्याख्यात इति । पूर्वार्द्धे प्रसङ्गतो व्याख्यात इत्यर्थः । वासरूपोऽस्त्रियाम् । असरूप इति छेदः । असरूपत्वञ्च किमपेक्षयेत्याकाङ्क्षायां यस्य स्वविषये सर्वत्र प्रवृत्तिस्तदपेक्षयेति प्रत्यासत्त्या लभ्यते । एतादृशश्चोत्सर्ग एवेति फलितमत उत्सर्गस्याऽसरूपोऽप-

ग्रहणसामर्थ्यादुपधान्यत्र कार्यम् । हलन्तग्रहणम कार्यमित्येव कुतो नोक्तमिति वाच्यम् ॥ ऋदन्तस्य तत्र पाठे धातुसाहचर्येण ऋधातोर्ग्रहणमिति कल्पनस्यापि सम्भवात् ॥ नन्वजन्तभूतपूर्वादपि यद्यथा स्यादित्येवमर्थमज्ग्रहणमस्तु । अत एव दित्स्यं धित्स्यमित्यादावार्धधातुकसामान्ये बुद्धिस्थेऽतो लोपे कृतेऽपि यद् भवति । तेन यतोऽनाव इत्येषस्वरो भवति । अतो लोप इतिसूत्रस्थस्यार्धधातुकपदे विषयसप्तमीस्वीकारेऽपि यस्य बुद्धिर्यस्य प्रवृत्तौ नियामिका तस्य तन्निमित्तकत्वव्यवहारः । अत एव णयतीत्यत्राल्लोपस्य स्थानिवद्भावाद्वृद्ध्यभाव इति चेन्न । भाष्यकारस्य तथैवेष्टत्वेनेष्टापत्तेः । अत एव भाष्यकृतोक्तरीत्याज्ग्रहणवैयर्थ्यं सुपपाद्य इदन्तर्हि प्रयोजनमजन्तभूतपूर्वादपि यथा स्यादित्युक्तम् ॥ मूलन्तु तस्यार्धधातुकपदस्य परसप्तमीत्वाभिप्रायेण ॥ प्रकृतानुग्रहणमेवार्धधातुकपदस्य 'विषयत्वार्थकसप्तम्यन्तत्वाभिप्रापकमिति तु भाष्यकृताशयः । यत्तु दरिद्रातेरार्धधातुकविवक्षायामाकारलोपे भूतपूर्वाजन्तत्वेन यत्सिद्धिरज्ग्रहणफलमिति ॥ तन्न ॥ दरिद्रा इत्यस्य घरच्कत्वेन ण्यतोर्विशेषाभावात् ॥ इत्यत्र नेति । यत्प्रत्ययो न । किन्तु ण्यत् । एवञ्च यतोनाव इत्यस्य तदनुबन्धकपरिभाषयाऽप्रवृत्तौ तित्स्वरितमिति प्रत्ययस्य स्वरितत्वम्भवति ॥ हनो वा यद्वधश्च वक्तव्यः ॥ हन्धातोः सकर्मकत्वात्कर्मणि यत् स चार्हे कृत्यतृचश्चेति योग्यतायाम् ॥ यत्र तु न योग्यता किन्तु बलात्कारेण हन्यते स घात्य एव ॥ तद्धितो वेति भाष्यात् ॥ तत्र हि तद्धितो वा पुनरेष भविष्यति वधमर्हतीति वध्य । दण्डादिभ्य इति यत् ॥ यदि तद्धितान्तोऽयन्तदा समासविधायकलक्षणाभावादसिवध्यो मुसलवध्य इति न प्राप्नोति । यदि षष्ठीसमासस्तदान्तोदात्तत्वापत्तिः । यदि हन्धातोर्यत्तदा प्रत्ययस्याद्युदात्ततया तेन सह साधनकृता समासे गतिकारकोपपदादिति कृदुत्तरपदप्रकृतिस्वरे आद्युदात्तत्वमेव भविष्यतीत्येवमर्थमिदं वार्त्तिकम्भाष्यकृता स्थापितम् । भाष्ये स्पष्टमिति ॥ एवञ्च कृदुत्तरपदप्रकृतिस्वरेणासम्प्रश्ने स्वरितत्वे वावस्थानम्भवति ॥ उपाध्यर्षणायाम् । प्रशंसायाञ्च्यमानायाम् । प्रत्ययस्तु प्राप्त्यर्थकात्कर्मण्येव । तेन यस्य यत्प्राप्ता लाभे सति प्रयासा तस्य लाभहेतुका भवति तदिहोदाहरणम् यथापि योग्यवत्तं माने विषयसप्तम्येव । तेनान्तस्वरितत्वसिद्धिः । इष्टे

किञ्चिद्विषम्यसूचनाय तयोरैवेत्यस्यावश्यकत्वात् ॥ वसिस्त्यक्तार्त्तरि चिच ॥ व-सधातोस्त्यक्तार्त्तरि स्यात्स च चित् स्यात् ॥ भूलेऽयमिति । कैसिमप्रत्ययः । क्त्यचः ॥ उपसर्गादिति रषाभ्यामिति चातुवर्त्तते । तत्स्थानात्स्य्ध्दामित्याश-येनाह उपसर्गस्यादिति । अत्र च । क्तत्यर्थे ति व्याख्याने च । एतेन क्तति परे यतः क्तो विधातस्तदवयवस्योपसर्गस्यासिमित्तात्परस्य नस्येत्यर्थ उचित इति निरस्तम् । मत्वा सत्याऽऽजपि क्तस्य एव ग्राह्म इति शंकां वारयति । अजपी-ति । येर्विभाषा ॥ अत्र येरिति विधानक्रिया निरूपितापादाने पञ्चमी स्यायेन ध्यन्ताद्विहित इति व्याख्यातम्स्यायमाशय. । अट्कुप्वाङित्यस्य स-म्बन्धे न रषाभ्यामित्यस्ये निष्टपिद्दिरभाषावाधेऽपि येरिति पञ्चमीदर्शनेन त-दर्थे निर्दिष्टपरिभाषाबाधे मानाभाव इति ॥ एतत्फलञ्च मूलकारेणैव दर्शि-तम् । इजादे. सनु ॥ इजादेर्हलन्तादिति यदन्न व्याख्यातम्तदस्य सूत्रस्य नियमा-र्थत्वसम्पत्तये । एवं व्याख्याने ह्यस्य सूत्रस्य ण्यन्ते ऽप्रवृत्तिर्लभ्यते तदाह । वि-हितविशेषणत्वे ति । व्याख्यानादिति । अट्कुप्वाङिति सूत्र एव नुमुपदग्रहणा-नुस्वारसामान्यार्थकत्वे न तत्र वैद्यानुवृत्तिमूलकव्याख्यानादित्यर्थः ॥ वा निंस-निक्षनिन्दाम् ॥ क्त्यच इत्यत. क्तीत्यनुवर्त्तते । तत्र तत्र यद्यपि नकारवि-शेषणत्तयापीष्टनिमित्तमित्याह ॥ क्तीति ॥ ण्यन्तभादीनामुपसङ्ख्यानमिति वार्त्तिकारम्भस्य बीजमाह ॥ प्रभायमानमित्यादाविति ॥ भादीति । भावे ल्यट् । मानच् । यक् । अत्र यका व्यवधानाद्धानोः परत्वाभावात्क्तो निषेधो न स्यादतो येषामिति पञ्चम्यर्थे षष्ठी विहितविशेषणत्वावश्यकम् । एवञ्च ण्यन्तस्य सम्प्रदानत्वादप्राप्ते निषेधे निषेधविध्यर्थं वार्त्तिकमिति भावः ॥ अत्र । एतत्प्र-प्रकरणोपरिपाठे ॥ क्तो बहुलमिति । बहुलपदग्रहणेनाम्नं पाठक्तता पदयापेक्षया लाघवात्क्तो बहुलमित्येव युक्तमिति भावः ॥ तस्यदादिषु यतः पाठेऽयमप्यु-त्सर्गः । अस्य विशेषविहितत्वाणादधक इति भावः । मन्त्रप्रपदग्रपत्ते दि-ग्धादिस्यमित्यादौ यति सन्निपातपरिभाषयाऽतो लोपो न प्राप्नोति तदकरणे तु प्राप्नोतीति फलभेद इत्यत आह । अजुपदय इति । ननु यतो ण्यता बाधो-ऽनुमाऽऽवश्यं बाध्य इति यतस्तव्यदादिषु पाठे यत्काद्दत्यस्तव्यदादयोऽपि बाध्-ता बाध्येरन्नित्यत आह । वासरूपेति । न च ण्यस्तव्यदादिषु पठनीयः । अ

ातिभाव इत्यस्यापकर्षणेम प्रमाणमिति भावः। नन्वेवम्प्रश्नोद्यमित्यस्य का
ारत आह भाव इति। अत एव। भाव इत्यस्यापकर्षणाभावादेव। प्रत्यु
तमिति। हस्यादाविति शेषः। भाष्ये तु सुवाद्यमण्वाद्यमिति प्रत्युदाहृत-
ते बोध्यम्। पूर्वोक्तमेवार्थन्द्रढयति। स्तवन्मादिति। हनस्त च। नन्वस्य
ास्य हन्तेस्तकार. प्रत्ययः क्यप् त्वेवार्थः किन्न स्यादत आह। व्याख्याना-
ते। स्वहत्या वर्त्तत इति भाष्योयोदाहरणदर्शन मूलकव्याख्यानादित्यर्थः।
र इति। भावे घञ्। तद्प्राप्तेरिति। तयोरेवेति नियमादिति भाव.॥ स्व-
त्य इति। कर्मणि ण्यत्। शुना थाल्य इत्यर्थः। अनुपसर्गे किमिति। वद-
पीतिसूत्रादुपसर्गे भिन्न सुपि लाक्षणिकसुपदानुवृत्तिः किमर्थेत्यर्थः।असा-
ति। विनापि प्रत्ययमित्यस्याश्रयणे प्रमाणसन्दावे तु साधुरेव।केचित्तु हन
: क्यप्चिण्णलोरित्यनेन सूत्रेण क्वापि तकारादेशो विधेयः प्रकृते तु हन्भु-
ाव इति सूत्रद्वार्यमेतावतैव सिद्धो हनस्त चेति पृथक्सूत्रकरणमस्य क्व-
दनुपपदेऽपिप्रहत्त्यर्थम्। तेन निरुपपदेऽपि हत्येति साधित्याहु.॥तत्र। भा-
नुक्तत्वात्। शब्दशक्तिस्वभावादेतद्दिशितक्यबन्तस्य क्लीत्वम्। एतिस्तुशा। ननु
माच्छासेरङ् तस्य शासिरुपधायां इत्वमिति कथं शास्तेरित्वमत आह। शास
ाडिति। अत्र निरोधस्येति अत एव भाष्ये क्यप्विधौ हजो ग्रहणद्दर्त्तव्यम्।
ामाभूत्। वार्या ऋत्विज इत्युक्तम् निरोधश्च देशविशेषे स्थापननियमाचरणा-
रूप.। ननु पूर्वसूत्रे चकारवशात्क्यपः सम्बन्धादस्मिन्सूत्रे तदसम्बन्धात्क्यम्
हणमस्त्वित्यत आह। तकारस्येति स्पष्टो दर्शित। पुन. क्यबुक्तो एव हाधक-
स्पष्टम्। तत्र हि क्यबिति वर्त्तमाने पुनः क्यप्ग्रहणद्विमर्थम्। क्यबेव यथा
ाघ्यदन्यत्प्राप्नोति तन्मा भूत्। किञ्चान्यत्प्राप्नोति। ण्यत्।भोरावश्यके इत्यु-
म्। ननु हलन्तत्वाण्यतापि रूपसिद्धिर्भविष्यतीत्यत आह। ण्यति त्वि-
॥ ईं च खन.। अत्र खनधातोरीकार आदेशो विधीयते न प्रत्यय इति
ाधेयस्य प्रत्ययान्तरस्याभावात्क्यपोऽनुवृत्ति. सिद्ध एव चकारस्तु कार्यद्वयसमा-
ार्थ एवेति क्यपयानुकृष्टत्वाभावादुत्तरत्र सम्बन्धो भवत्येवेति बोध्यम्।
तु ये विभाषेति सूत्रेणैकारादेशे कृतेऽप्यात्वमप्राप्नोतीति तद्बाधनायैकारा-
ारस्य प्रश्लेषसूचको दीर्घनिर्देश इति क्रमः सुपठ इत्यसङ्गतमत आह। ये

इति ॥ यदि पुनरर्थाभावशब्दस्य नञ्घटिततया सूत्रगृहीताव्ययेन समासाभाव इति प्रागुक्ता रीतिस्तदा नाव्ययीभावस्य प्रसक्तिरित्यस्वरसः। समासस्तु नञ्तत्पुरुष एव। पञ्चम्यर्थे सप्तमी ॥ नियमार्थमितीति। यमेर्यदि यत्तदोपसर्गाभाव एवेति नियमार्थमित्यर्थः ॥ मूले नियमे साधुरिति वेति ॥ यदि पूर्वोक्तनियमस्याबाध एवेति स्वीक्रियते तदा नियमशब्दात्तत्र साधुरिति यत्। नचैवं सति त्वयेति तृतीयानियमपदार्थभूतक्रियान्वयविवक्षया वाच्या सा न सम्भवति कर्तृकर्मणोरिति षष्ठ्या बाधात्। कृत्यति तु कृत्यानां कर्तरि वेति विकल्पास्या भविष्यतीति वाच्यम्। कर्तुः करणत्वविवक्षया तस्याः सिद्धेः ॥ अजर्यं सङ्गतं श्व सङ्गतशब्दोऽर्थविशेषे रूढ इत्याशयेनाह ॥ सङ्गच्छतीति ॥ निपातनादिति ॥ अतो बाधाभावाय निपातनस्यावश्यमाश्रयणीयतया तत एवायदुक्तरीत्यर्थकल्पनमपि भविष्यतीति बहुलग्रहणेनेयं कल्पना न कार्येति भावः। वदः सुपि क्यप् च। उपसर्गग्रहणमिति। तथा च सुप्ग्रहणमुपसर्गभिन्नसुबन्तलाक्षणिकमिति भावः। लक्षणायामानमाह। सत्य इतीति ॥ तत्र हि ज्ञापकमनुपसर्गग्रहणमन्यत्र सुप्ग्रहणे उपसर्गग्रहणस्याभावस्येति भावः। भाव इत्यस्यापकर्षे निमित्तमाह अकर्मकत्व इति। उत्तरत्र भुवोऽभाव इति सूत्रे ॥ व्यर्थत्वादिति ॥ तथा च पूर्वसूत्र एव तस्य सम्बन्धेन तत्फलमिति शेषः. उत्तरसूत्रेऽपि तस्य साफल्यमाशङ्क्य निराचष्टे ॥ यद्यपीति न तद्ग्रहणमिति ॥ भूप्राप्तावित्यस्यान्तर्भावितण्यर्थस्यास्य च न ग्रहणमित्यर्थः। एवञ्च तदन्यभावग्रहणमितस्य व्यर्थमेवेति भावः ॥ इदानीमिदमिति ॥ यदसुपीति सूत्रार्थमेव तत्सूत्रस्य भाव इतीति चिन्त्यमित्यर्थः। ननूत्तरार्थमिति कुतस्तद्यपि सूत्रे प्रपूर्वकभूधातोः सकर्मकत्वान्मा भूदित्यनन्यस्यावश्यकत्वादित्यत आह ॥ सोपपदस्येति ॥ तस्मादुपपदसहितस्येत्यर्थः। सोपसर्गस्य व्याहारिणस्तु गदादीति सूत्रादनुपसर्गग्रहणानुवृत्त्या भविष्यति। यद्यपि भाष्ये भुवोऽभाव इतिसूत्रेऽप्यनुपसर्गग्रहणसम्बन्धो दर्शितस्तथापि सोपपदस्येति सोपसर्गस्याप्युपलक्षणमित्यभिमतात्पर्यकमत एव भक्ष् इति सूत्रस्थमुपसर्गेऽपीतिपदमत्र सुप्ग्रहणे उपसर्गग्रहणस्य ज्ञापकत्वपरतया वर्णयन्ति इति सूत्रभाष्यस्याविरोधो न सकर्मकत्वादिति। यदृच्छाकर्मकत्वाभावयोरेवैतस्य ग्रहणमर्था-

तत्र भृञ्विषये भाव एवेष्यत इत्यर्थः । मूले भार्यशब्दो बहुवचनान्तः । यञोः कुविस्रनोः । रागादित्यादीति । तेन रक्तं रागादिति निर्देशादित्यर्थः । आदिना त्यागरागहासित्यस्य सङ्ग्रहः । एषु । न्यङ्क्वादिषु । क्यपोऽडितीति । यदा पूर्वेण इति धातोः क्यप् तदेत्यर्थः । निपातनात्कर्त्तरीति । मर्योरेवेति नियमात्कर्त्तर्यप्राप्ते निपातनमावश्यकम् । तत्त्वेन । धनत्वेन । विपूयविनीय । पूङितीति । पूजिति क्वचित् पाठः । न्यूनतामङ्गीयाह । तैलादाविति । एषु चतुर्ष्विति । गम्यमानेष्विति शेषः । ननु पण्यशब्दस्य नपुंसकत्वविशिष्टार्थाभिधायकत्वेन युग्यशब्दस्य विशेष्यसमानलिङ्गकत्वं युक्तमेवेति सामान्ये नपुंसकत्वमित्यभिधानमनुचितमत आह । पञ्चदात्रेति । एतेन । उक्तरीत्या पुंस्त्वस्यापि सम्भवेन । अमावस्यदन्यतर । वारग्रायेति । तकारोच्चारणेन एतौ निपातादिति शेषः । यथोत्तरमित्यनेन वार्त्तिककारोक्तेः समप्रमापत्वं यदुक्तमसदुक्तमेवेत्याह । वार्त्तिकस्येति । शोक इत्यस्यासिद्धिरिति । निष्ठायां सेट्त्वाद् घञि कुत्वस्याप्राप्त्याऽसिद्धिरित्यर्थः । एतच्च शोकशब्दस्य वार्त्तिकेन निष्ठायामनिट इति पूरणेन सिद्धिः सूचिता । वाहाविति । करबोधकाद् भुजशब्दादजित्यर्थः । इत्येतदाहृत्तयं इति । एतेन निपातनेन स्तोः श्चुनेति श्चुत्वानन्तरम्युदजेवं इति वचनकार्यमित्यनुमीयते । तत्र स्तोः श्चुनेति सम्बध्यते । उद्जेः स्तोः श्चुना योगे वो भवति । एतस्य वचनस्य मन्वडोरित्येतद्व्याऽसिद्धत्वादुद्जिजिपतीत्यत्र जिशब्दस्यैव द्वित्वम् । समुद इत्यादौ पदस्य विभक्त्यन्त्वाख्यानमिति पश्चाच्चैव वकारादेशविधायकस्यानुमितवचनस्यासिद्धत्वात्स्त्वमादौ भवति । एतद्वचनस्योक्तविषयेऽर्थविशेषे न्युद्ज इत्यस्य प्रवृत्तिर्नत्वन्यत्रेति बोधनाय च निपातनमन्यथा न्युब्जेरचापि सिद्धे निपातनं व्यर्थमिति शङ्का स्यात् ॥ चत्र ॥ यजयाचेति सूत्रे ॥ व्याख्यानादिति ॥ भक्ष्याभक्ष्यप्रकरणे ऽस्माकमस्यापि स्मृतौ निदर्शनमूलकव्याख्यानादित्यर्थः ॥ पौरायणाकै ॥ यवश्यमित्यव्ययाश्वमोघादित्वादित्यर्थे कुत्र परिव्ययनामिति टिल्लोपस्य साधुत्वम् । योग्य इति । प्रकरणादिवावश्यकत्वस्य प्रतीतेः । अवश्याकर्ष्य इत्यर्थेऽवश्यं शब्दो वर्त्तते दावकर्दमन्यायेन । न च स्वाध्यमित्यनेनैवावश्यकत्वस्य प्रकरणादिना प्रतीतिसम्भवादवश्यं शब्दस्य प्रयोगोऽनुचित इति वाच्यम् । स

विभाषेत्यत्रेति । विषयसप्तमीत्वेऽपीति ॥ कीर्यते स्वयमेवे त्यत्र कर्तृक
कीत्वाद्युदात्तत्वसिद्धये तास्यनुदात्तेदितिसूत्रादुपदेशपदानुवृत्त्योपदेशेऽजन्ता
नामित्यर्थस्यावश्यकत्वे यक्पदेन सम्बन्धाद्यगुपदेशेऽजन्तानामिति वाच्ये
यत्र जायते स्वयमेवेत्यत्र स्वरो न स्यादिति ये विभाषेत्यत्र विषयसप्तमीत्व
मावश्यकमिति भाव. । अथ तदप्राप्त्येति । ये विभाषेत्यस्य यादि प्रत्ययविवक्षा
यामेवप्रवृत्तिस्तदा प्रत्ययोत्पत्तेः प्रागेवेत्वन्ततो यादि. प्रत्यय इति यादि
प्रत्ययप्रकृतिपरामर्शकाल एव सौत्रक्रमलोचनेपर्यां न पूर्वकाल इति तस्मिन्
कालेऽयमोकारान्त इति भाव. । कृत्वपाठेऽप्येवमेवात्वाप्राप्तिर्बोध्या । एतदुक्ते
ष्वपरिहारायैवेति । यदि यादिप्रत्ययविवक्षायामात्वन्तदाऽऽत्वमुक्तरीत्यानाम्
ङमिति ई च खन इति सूत्रप्रवृत्तेः प्राक् तस्याप्रवृत्त्या रूपासिद्धि स्फुटैवेति दी
क्षपाठेनकारान्तस्य प्रश्नं यसामर्थ्याच्च पूर्वमोत्वमित्यन्तरङ्गत्वात्वस्याप्राप्ति ।
यदि तु ई चेति सौत्रक्रमानुरोधेनादावोत्वन्ततः क्वचित्तिक्रमकल्पनया यादि
प्रत्ययोत्पत्तिकालपूर्वोक्तकालेऽन्तरङ्गत्वात्वस्याप्राप्तिरिति कल्पना तदा क्रम
इति भावः । भृञोऽसंज्ञायाम् । भार्या वधूरित्यत्र संज्ञाया समजेति क्यप् प्रा
प्तिमाशङ्क्य विभर्त्तेः क्रादेर्वा ण्यति भार्या वधूरित्यस्य सिद्धिः संज्ञायां
समजेति क्यप् तु भरतेरर्वेन्युक्तमूले चन्द्रबोध्यम् । यो विभर्त्तिडुभृञ्धार
णपोषणयोरिति तस्य तदनुबन्धकपरिभाषया क्वचिन्नो न ग्रहणम् यस्तु भृ
भर्त्सन इति क्रादिस्तस्य अकारानुबन्धकत्वाभावाच्च ग्रहणमिह स्वाधिका
रसमुच्चे च अकारानुबन्धकस्य ग्रहणादिति । अत एव सामान्येनोक्तम् । क्यप्
त्विति । यथमिति । भृञोऽसंज्ञायामिति विहित । स्वाधिकारस्य । संज्ञायां
समजेति सूत्रविहितः । युक्तः । भृञ् इति अकारमात्रानुबन्धकोच्चारणरूपयु
क्तेः । इत्थं भरतेरेव भवनकाय नन्तु स्वरूपनिर्णयाय । न तु भार्या वधूरि
त्यस्य समाधानाय । संज्ञात्वादित्यस्य तत्रापातुत । नन्वेवम् । विभर्त्तेः
क्रादेर्वा क्यपोऽप्राप्तौ । भरतेर्भार्यायां क्यप्वारणायेति । भार्यां विव
क्षितायां भरते. क्यप्वारणायेत्यन्वयः । भार्यायामित्यस्य भर्त्सनायामिति
नार्थ. किन्तु लोकविशेषे योगरूढो यो भार्याशब्दस्तदर्थ इत्यर्थः न चेह संज्ञायां
समजेत्यत्र प्राप्तिमन्तरेण भार्ये प्रवृत्तिः । तदुक्तमर्थे भार इति तत्र वर्त्तमे

यनादिनिर्मितं स्थलन्तत्र साधयिकम् । निपातनञ्च स्यादायादेशयो. । एवमि
वोपचाय्योऽपि वोध्यम् ॥ समूह्ये तु सम्पूर्वकाद्वहधातोर्ण्यति सम्प्रसारणन्दी
र्घश्च निपात्यते ॥ अत एव प्रत्युदाहरणोपपादनावसरे संगाह्यमित्युपात्तम् ॥
अत्र यो विशेषस्तमाह । वह्निममानार्थ इति ॥ चित्याग्निचित्ये च ॥ चित्यश-
ब्दे कर्मणि क्यप्तौ निपात्यते ॥ अग्निचित्यशब्दे तु भावे क्यबन्तोदात्तत्वयो-
र्निपातनम् । अत एवाग्निचित्ये त्यन्तोदात्तो भाव इति भाष्यसंवाद ॥ सर्वो
पकारकत्वात्प्रकरणान्ते आह । प्रैयातिसर्गप्राप्तकालेति मूले ॥ लोटा बा
धेति । लोटस्तत्र विशिष्यविधानादिह प्राप्तो बाधो नेत्यर्थ. ॥ वा सरूपन्या
येन बाधाभावसिद्धौ पुनरपि कृत्यग्रहणवैयर्थ्यमत आह । स्त्र्यधिकारादिति ॥
अत्र स्त्र्यधिकारादूर्ध्वमित्यस्त्रियामित्यस्यार्थकथनम् । प्राप्यागस्तु वासरूप
विधि क चिन्नेत्येव ॥ अत एव । एतादृशस्य प्राप्यागस्य सत्त्वादेव ॥ न नि-
त्यबाध इति ॥ अयमाव । समानकर्तृकयो. पूर्वकाल इति सूत्रस्य समानक
र्तृकयोरर्थयोर्मध्ये पूर्वकालविशिष्टार्थवृत्तेर्धातो. क्त्वा.त्वत्र इत्यर्थेन पूर्वकाल-
कत्वं क्त्वाप्रत्ययद्योत्यन्तञ्च प्रकारतयाऽसित्वा भुङ्क्त इत्यत्रासनक्रियायामासते ।
तादृशी चासनक्रिया स्वसमानकर्तृकत्वस्वोत्तरकालिकत्वोभयसम्बन्धेन भुजि
क्रियायाम्प्रकारतया भासते । उक्तोभयसम्बन्धेन पूर्वकालिकासनविशिष्टभोज
नमिति बोध ।आस्यते भोक्तुमित्यत्रापि तुमुन्ण्वुलौ क्रियायाङ्क्रियार्थायामिति
सूत्रे क्रियार्थायामित्युपादानात्तुमुन्प्रकृत्यर्थक्रियापूर्वकालत्वस्यासनक्रियायाम्
फलार्थकतुमुनमभिव्याहारात्प्रतीयते ॥ एवञ्चोभयो प्रयोगयो समानार्थक
त्वादास्यते भोक्तुमित्यर्थे आसित्वा भुङ्क्त इत्येव स्यात् । न तु आस्यते भोक्तु-
मिति । न च तुमुना क्त्वाप्रत्ययस्य बाधशङ्का भवति । क्त्वाप्रत्ययविधायकसूत्रे
पूर्वकाल इत्यस्य साक्षादुपादानात् । तुमुन्विधायके तु कार्यार्थकार्थशब्दोपादाने
न कारणत्वङ्गम्यते । कारणत्वस्य च पूर्वकालघटितत्वेन तत्र पूर्वकालत्वङ्गम्यते ।
तेन क्त्वाप्रत्ययेन तुमुनो बाध उक्त । वा सरूपन्यायस्य प्रवृत्तौ तु भुजधातो
स्तुमुनि कृते सति तत्समभिव्याहारेणासने पूर्वकालकत्वङ्गम्यत इति नासधा-
तोःक्त्वाप्रत्यय किन्तु लट् । एवञ्च यत्र धातोः पूर्वकालविशिष्टक्रियावाचकत्व
न्तत्र तद्द्योतकक्त्वाप्रत्यय इति ॥ तदुक्तं समानकर्तृकयोरिति सूत्रभाष्ये

भ्यमानार्थस्यापि स्पष्टप्रतिपत्तये प्रयोगस्य बहुशो दर्शनात्। भ्यतिलुनीत इत्यादौ यथा। भवश्यलाव्यमित्यादौ मयूरव्यंसकादित्वादवश्यं शब्दार्थे करे गान्वयेऽपि समासः। कदुत्तरपदप्रकृतिस्वरोऽप्येवमेव निपातनात्। लुम्पेद वश्यम इत्यन्तलोपः॥ भासुयु॥ प्रकृतसूत्रे सुयहणेन सुञ एव ग्रहणमित्यर्थं प्रमाणमाह। सुनोतेरित्यादाविति॥ ननु निरनुबन्धकस्यैव निरनुबन्धकपरिभाषया ग्रहणं युक्तमत आह। निरनुबन्धकेति॥ इति पाठ इति॥ भाहः सत्वे नोदात्तोपदेशस्येति निषेधविधायकसूत्रस्यानाचमेरित्युक्तत्वादप्रवृत्तिर्भवतीति भावः॥ दक्षिणाग्निविशेष एवेत्यत्र विशेषपदोपादानादाह॥ योगार्थेति॥ द्वौ दक्षिणाग्नी तयोर्मध्ये यो गार्हपत्यादानीयते तस्मिन्नेव निपातनमत्रैव शिष्टाचारानुसारिव्यवहारात्॥ मूले वैश्यकुलादेरिति। वित्तवद्वैश्यकुलादेरित्यर्थः॥ आदिना भ्राष्ट्रपरिग्रहः॥ प्रणाय्योऽसम्मताविति बहुव्रीहिरित्यनेन यच्चिवर्णे निपातनमत्र चौरादौ क्रियते तस्य बोध्यत्वं सूचितम्। सम्मतिरित्यत्र सम्पूर्व कामनधातोः प्रीतिभवनानुकूलव्यापारार्थकात्कर्मणि बाहुलकात्क्तिन्। भावे क्तिन्प्रत्ययेनैवेष्टसिद्धौ तावत्पर्यन्तानुसरणं व्यर्थमित्याशयेन मूले भोगेष्वादर इति॥ सा यत्र लोकानामास्तीत्यर्थविवक्षायां सप्तम्यर्थे बहुव्रीहिः॥ भय वा सम्मतिशब्दः पूर्ववदेव। सा यस्य नास्तीति षष्ठ्यर्थे बहुव्रीहिर्वा॥ तदुक्तमनो वासीति॥ प्रणेयोऽन्य इति। घटादिरिति शेषः॥ भत्र कर्मणि यत्॥ पाय्यसान्नाय्य॥ मानकरणेऽर्थे पाय्यमिति निपात्यते तस्य द्वाभ्यामपि धातुभ्यामुपपत्तिरित्याशयेनाह॥ मिनातीति॥ पर्यादधिवत्यर्थ इति॥ ऐन्द्रमध्यमावास्याया ऐन्द्रम्पयोऽमावास्यायामित्युक्तत्वादिति भावः। ऐन्द्रं हविरित्यत्र हविः सामान्ये प्रयोगस्तु लक्षणया॥ मूले धाय्या ऋगिति। सामिधेनीसामर्थ्ये वर्णितविशेषः॥ क्रतौ कुण्डपाय्य॥ भत्र कुण्डपाय्ये यत्प्रत्ययौ द्रष्टव्यः। कुण्डपाय्ये यद्विधिः। कुण्डपाय्ये यद्विधेय' । कुण्डपाय्यः क्रतुरिति भाष्यात्। पाधातोर्यति तस्य युक्निपात्यते तेन यतोऽनाव इत्याद्युदात्तत्वम्भवति। तत उपपदसमासे कदुत्तरपदप्रकृतिस्वरेणाकारोदात्तकोऽयम्॥ सञ्चाय्यशब्दे तु यत्प्रत्यय एव। प्रकरणात्। निपातनमुत्त्वायादेशस्य॥ क्रतौ किम्। कुण्डपानम्। सञ्चेयः का-ष्ठादिः॥ भग्नौ परिचाय्योपचाय्य॥ सूत्रेऽग्निपदे भ्रधारणार्थं इदिष्टका

कालतात्पर्यकत्वादितिन्यायस्यध्यमनादिति ॥

## इति कृत्यप्रक्रियाविवरणम् ।

ण्वुल् तृचौ । अत्र तृच: प्रत्ययस्वरेणान्तोदात्तत्वे सिद्धे चकारोऽपृक्तग्रहणमिति विशेषणार्थः । तस्मिन् सूत्रे तृ इत्युच्यमाने मातरौ मातर इत्यत्र प्राप्नोति स्वसृनपृक्तग्रहणनियमार्थं भविष्यति एतयोरेव योनिसम्बन्धयोर्नान्येषां योनिसम्बन्धानामिति । एवञ्च तत्रानुपयुक्तत्वाच्चकारस्य प्रयोजनमात्र । तृच इति । यद्यपि कालविशेषोपादानं कृत्वा एतौ न विहितौ तथापि भाष्यप्रामाण्याद्वर्त्तमानकाल एवानयोः प्रयोग इत्याह । अनयोरिति । तदुक्तं भाष्ये तृजादिषु वर्त्तमानकालोपादानमध्यापकवेदाध्यायाद्यर्थम् । अध्यापक: वेदाध्याय: अधीतवति अध्येष्यमाणे वा मा भूदिति न वा कालमात्रे दर्शनादन्येषाम् न वा कर्त्तव्यम् । किं कारणम् कालमात्रे दर्शनादन्येषाम् कालमात्रे ह्यन्ये प्रत्यया दृश्यन्त इति अन्येषाम् ण्वुल् तृज्व्यतिरिक्तानाम् एतेन वर्त्तमानकालोपादानङ् क्रियते तदा तस्याधिकारत्वात्प्रत्ययान्तरेषु दोषः स्यादिति वर्त्तमानाधिकारो न कार्य: अनयोः कालान्तरे अनभिधानमिति ध्वनितम् । न ह्यध्यापकोऽध्येता प्रयोगोऽधीतवत्यध्येष्यमाणे वा दृश्यते । आशिषि च । अत्राशिषीति प्रकृत्यर्थस्य विषयतासम्बन्धेन विशेषणम् । न तु प्रत्ययार्थः कर्त्तरि कृदिति कर्त्तरि प्रत्ययविधानात् । सा चाशीः प्रयोक्तृसमवेताऽप्राप्तप्राप्तीच्छा । एवं च जीवक इत्यादौ जीवधातोः शब्दप्रयोगकालावधिकोत्तरदीर्घकालावच्छिन्नप्राणधारणेच्छाविशिष्टजीवने लक्षणा । एतादृशस्य धात्वर्थस्य वुन्प्रत्ययस्य समभिव्याहारेण प्रतीतिः । एवमेव नन्दक इत्यादावपि बोध्यम् । तदाह।शास्यमानेति । कर्मण्यण् । धातोरण् प्रत्यय: कर्म चोपपदसंज्ञं भवतीत्यर्थः । मूलेऽनभिधानादिति । अनभिधाने मानन्तु प्रकृतसूत्रस्थभाष्यमेव तत्र हि कर्मणि निर्वर्त्यमानविक्रियमाण इति वक्तव्यम् इह मा भूत् आदित्यं पश्यति हिमवन्तं शृणोति ग्रामङ्गच्छतीति निर्वर्त्य कर्मस्वरूपञ्च हरिणा दर्शितम् । सती याऽविद्यमाना वा प्रकृति: परिणामिनी । यस्य नाश्रीयते तस्य निर्वर्त्यत्वमुच्यते इति । यस्य सती परिणामिनी प्रकृति: कार्यसामानाधिकरण्येन यदा न विवक्ष्यते तदा तन्निर्वर्त्यं इष्यते । यथा कुम्भङ्करोतीति ।अत्र

कविधानमित्यनेन सिद्धिर्न शङ्कनीया। घञर्थे कविधानमित्यस्य कर्तृकारका ऽर्थत्वात्प्रतिष्ठन्तेऽस्मिन् धान्यादिकमित्यर्थे प्रस्थशब्दस्य सिद्धि । वयसि च। वयसि गम्यमाने इत्यर्थः । कवचहर इत्यनेन कवचस्यातिगुरुत्वेऽपि तद्धरणेन म न्यमानेन वा कर्तुं पौगण्डाद्यवस्थाविशेषो गम्यते। रपातेरिति। तत्र हि पुनर्धातुग्रहणेन टप्रत्ययस्य बाधनमुक्त्वा कुमारपाण्डवस्त्वाह नैषा शङ्करा शङ्करैषा, रपाति शब्दकर्मा तस्यैष प्रयोग इति प्रतिपादितम् । स्थ क चेत्यत्र भाष्य,इति। तत्र हि किमर्थं स्थ ककिपावुच्येते न क्विप्सिद्ध अन्येभ्योऽपि दृश्यत इति। कथातोऽनुपसर्गे क इति। न सिध्यति। विशेषविहित क सा मान्यविहितं क्विपस्बाध्येत वासरूपेण क्विबपि भविष्यति इदं तर्हि शस्य प्र स्थ उक्तमेतत् शमि सञ्ज्ञाया धातुग्रहण कृञो हेत्वादिषु टप्रतिषेधार्थमिति म यथैवाच् टं बाधते एवड ककिपावपि बाधेतेत्युक्तम् । अत्र शंस्थ इतिप्रयोग सिध्यर्थं को विधेय :[illegible]अत्रस्थ कोऽप्यबाधकत्वेन चरितार्थं इत्यस्य क्विबपवादत्वश्च तमिति वासरूपन्यायानवसरात्क्विप परत्वात्केन नित्यम्बाध स्यादिति क्विब पि विधेय न चाच्प्रत्ययेन शस्था इति भविष्यतीति वाच्यम्। भसंज्ञानिमित्त प्रत्यये आतोलोपापत्तेः । पुरस्तादपवादन्यायेन टस्यैव बाध इति तु न शङ्क्यम्। येन नाप्राप्तिन्यायेन क्विबेव बाध इत्यपि वक्तुं शक्यमित्यस्य भाष्यस्य बाध्यसामान्यचिन्तामाश्रित्योभयबाधकत्वतात्पर्यकत्वात् । शस्थाशब्दे सुमा स्येतिसूत्रविहितत्वस्य भाष्यकारीयप्रयोगादेवाप्रवृत्ति र्धत्वमवकारादाविति वार्त्तिकन्तु धीध्यायतेर्दधातेर्वेति ध्यायते सम्प्रसारणमिति वार्त्तिकव्याख्याना वसरे उक्तत्वेन प्रत्याख्यातमेव । अथ वा क्विपदं माद्दृशादिष्वि उपलक्षणम्। चरेष्ट इत्यत्र भाष्यमिति। तत्र हि कुरु चरतीत्यत्र टप्रत्ययमाशङ्क्य चरेर्भिक्षा ग्रहणं ज्ञापकं कर्मण्यप्रसङ्गस्येत्युक्तम भिक्षाशब्दे उपपदे भिक्षासेनेत्यनेन टो विधीयते यद्यनेन कर्मण्युपपदे ट स्यात्तदानेन तत्र टविधानं व्यर्थं स्यात्। अत्र चरतिश्चरणकरणकेऽर्जने वर्त्तते भक्षणार्थको वा । ज्ञापकपरभाष्यप्रामा ण्यात्तत्र नैवास्य प्रयोग । एतच्चाधिकरण इत्यस्य कर्मणीत्यस्य च सम्बन्धप्रदर्श नेन यथायोग सम्बन्ध इति ध्वनितमिति भाव । चरेष्ट । अधिकरण इतीति। ज्ञापकेन कर्मण्युपपदेऽस्याप्रवृत्तावधिकरण इत्येव परिशेषात्सम्बन्धम्। प्रत्ययाव

कुम्भस्य विद्यमानापि मृद्रूपा प्रकृतिः कुम्भसामानाधिकरण्येनाविवक्षितेति कुम्भात्मकं कर्म निर्वर्त्यम् । यदा तु प्रकृतेः कार्याभेदेन प्रतीतिर्जायतामितीच्छया मृदङ् घटङ्करोतीति प्रयोगस्तदा तद्घटादिरूपङ्कर्मविकार्यमेव । अयोभयोपादानेन कार्यस्य घटस्य रूपान्तरपरिग्रहः प्रतीयते इति घटात्मकं कर्म विकार्यम् । तदुक्तं हरिणा विकार्यं कर्म । प्रकृत्युच्छेदसम्भूतं किञ्चित्काष्ठादिभस्मवत् । किञ्चिद्गुणान्तरोत्पत्त्या सुवर्णादिविकारवदिति । एतदुत्तरार्धोपात्तविकार्यकर्मत्वन्तदा घटादेरस्त्येव । इदानीम घटादिकं कर्म विकार्यमेव न तु प्राप्यम् । क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते । दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यत इति तल्लक्षणात् । दर्शनात् प्रत्यक्षात् । यदा तु प्रकृते कार्याभेदेन कारणत्वेन सम्बन्धित्वेन वा विवक्षा मृदा मृदो वा घटङ्करोतीतिरीत्या तदा घटादिकं कर्म निर्वर्त्यमेव । अनुमानेन कर्मरूपाप्रतीतिर्यत्र तत्कर्म निर्वर्त्यमेव । यथा पुत्रः सुखं करोति । अत्र पुत्रस्य चेष्टादिदर्शनेन पित्रादिनिष्ठं सुखात्मकङ्कर्म सुखविकासादिनानुमीयत इति । अत्र कर्मणः सुखस्याविद्यमाना प्रकृति कार्याभेदेन न प्रतीयत इति यद्यपि तथापि सुखस्य प्रकृतिरन्तःकरणीयचित्तवृत्तिस्थानाकारा सा प्रकृतिरनुमितिगोचरा भवतीति प्राप्यत्वाभावान्निर्वर्त्यत्वम् । प्रकृते. सामानाधिकरण्येन विवक्षाया अभावात् । एवञ्चादित्यम्पश्यतीत्यादावादित्यादिः प्राप्यङ् कर्मेति स्पष्टमेव । ततः कर्मणि निर्वर्त्यमाना विक्रियमाण इति वेदेदाध्यायादीनामुपसङ्ग्रहानम् । वेदाध्यायः चर्चापारः । द्रुपदीनीवद्विस्मयेति वक्ष्यते । भारद्वरः कमण्डलुपाद उदकपायः भारवाह. । अपरिगणनं वा न वार्थ. परिगणनेन कस्मात् भवति आदित्यं पश्यति हिमवन्तं शृणोति ग्रामङ्गच्छतीति । अनभिधानात् अनभिधानादेवः च न भविष्यतीति । अन्यथाप्यनभिधानं तत् पिटाक्यमित्यादि । पोटनपचादय इति । सूत्रे चारम्भसामर्थ्यादिति । सुपीत्यनेन सिद्धेऽप्यारम्भसामर्थ्यादित्यर्थः । आरम्भसामर्थ्यात् यथाविधया स्व इतिसूत्रविषये किञ्चिदेनघयसाक्षरं याथमे यथार्थनियामकस्य कर्त्रीत्यर्थानुपपत्तिरिति कल्प्यार्थं । एवंपानिर्दिष्टार्थस्था द्वाय इति सत्वात् । अत एवंमादिदिशत्यपायमाप्य निर्देशकलक्षणात्माभात । निदृष्टिश्चिन्तु सोपानदशात् । उपपदमसमासनिर्दिष्टकर्तृत्वार्थं याग । तेन एतदं

मामान्यत प्रहृतौ करणाधिकरणयोरित्यनुवर्त्तमानेऽपि तृष्णोर्धेभिविसूत्रेण
घञि विधीयमाने तृष्णौ द्वौ करणाधिकरणे द्वे तत्र सङ्ख्यातानुदेश प्राप्नोती
त्यादिना भाष्ये सङ्ख्यातानानुदेशास्ति प्रसङ्गमाशङ्क्य समानयोगे सङ्ख्यातानु
देश वक्ष्यामीत्यनेन समाधाय आधिटीर्नाडीमुष्ट्यो खलगीरथात् इनित्रकज
घश्च सिन्ध्वयकराभ्या कन् घञ्जो चेत्यत्र सङ्ख्यातानुदेशो न प्राप्नोतीति ता
दृशोक्तो दोष उक्त. । एतदर्थ यथासङ्ख्यमनुदेश समासा स्वरितेनेत्यनेन
सिद्धान्तितम । तत्र दोषप्रतिपादनपरभाष्ये खलगीरथादित्यस्य सिन्ध्वपकरा
भ्यामित्यस्य च यथा सूत्रत्वन्तथा नाडीमुष्ट्योरित्यस्यापि सूत्रत्वमिति समभि
व्याहारात्प्रतीयते । वस्तुतस्तु नाडीमुष्ट्योर्विषये सङ्ख्यातानुदेशो न प्राप्नोतीति
यथासङ्ख्यसूत्रस्थमेकदेश्युक्ति । नासिकास्तनयोरिति सूत्रभाष्यविरोधेनाव य-
थासङ्ख्याभावस्येष्टत्वात । तथाहि । स्तने धेट नासिकार्या ध्मश्च धेटश्चेति
वक्तव्यमित्यनेन यथासङ्ख्याभावार्थं वार्त्तिककृता योगविभागो दर्शित । त
चाप्यव्याप्तिमुद्भावयन् भाष्यकार आ.ह । अल्पत्वमिदमुच्यते नासिकानाडीमु
ष्टिघटीखरीष्विति वक्तव्यम् । नासिकन्धम नासिकन्धय नाडिन्धम नाडि
न्धय मुष्टिन्धम मुष्टिन्धय इति रीत्या प्रतिपादितम । उदि कूले रुजिवहो श्च
चोदीति नोपपदम् । इरदृ तिनाथयोरिति सूत्र इवोन्क्लृनयोरितिद्विवचनदर्श
दर्शे कर्तव्ये उदि कूल इति विभिन्नविभक्तिनिर्देशसामर्थ्यात किन्तूदि सति
कूले उपपदे रुजिवहोरनन्तर प्रत्यय इत्यर्थस्तेन यश्चिवन्तदाह कूले उत्पूर्वा
भ्यामिति । अत एव यथासङ्ख्यसूत्रे भाष्ये उक्तश्चोदिरूपपदम् । किं तर्हि विशे
षणमिति । युक्तत्वादिति । द्वितीताया इति शेष राजदाराणाङ्गुप्तप्रतिशय प्र
तिपादनपरमेतद्वाक्यम ॥ एव ता गुप्तता यत्निवारणानर्हदर्शनमपि सूर्यस्य प
श्यन्तीति ॥ प्रियवशे वद खच । अत्र चकार खचि ह्रस्व इत्यत्र विशेषणार्थ उ
पायतस्तस्य वैयर्थ्यमुपपादयति ।खचश्चित्त्वमिति । खे ह्रस्व इत्युच्यमाने कुला
न्ख इति कुलशब्दात् खप्रत्यये कुलीन इत्यत्र यस्येति लोपस्य स्थानिवद्भावेन
सकारस्योपधात्वेऽपि नातिप्रसङ्ग इत्याह । चावित्यनुवृत्त्येति । नन्वचर्येतिप
रिमाणपयाऽच इत्यस्योपस्थितौ खचि यददन्तस्योपधाया अच इत्यर्थेन कुलीन
इत्यत्र सिद्धिर्भविष्यतीति चावित्यनुवृत्तिर्व्यर्थेति चेन्न । अदुपधाया इतिसूत्र

यवत्वादिति । उणादीनां व्युत्पन्नत्वाभिप्रायेण । अन्तकरशब्दस्य नञा समासेऽनन्तकरस्य तु नेष्टस्य सिद्धिः । अनन्तशब्दे उपपदे कृञष्टे उपपदे समासे कृदुत्तरप्रकृतिस्वरस्य प्रवृत्तिर्भवति नञाऽन्तकरशब्दस्य समासे तु तत्पुरुषे तु ल्यायेति पूर्वपदप्रकृतिस्वरापत्ते । यदुक्तमपरत्वादिति तस्योपपत्तिरच्प्रत्ययस्य टप्रत्ययाप्राप्तियोग्ये विषये चारितार्थ्ये सति घटत इत्याशयेनाह । अजेहेतादाविति । किंदीत्यादिना यत्तच्छब्दयाः परिग्रहः । एतेषां मध्यपसत्त्वे त्वहेतादावपि किमादिषूपपदेषु सूत्रे च टस्य प्राप्त्याऽच्प्रत्ययस्य चारितार्थ्यं न स्यादिति भावः । अभिमान इति वचनवीजन्तु भाष्यकृता सूत्रस्य किमादिषु इत्याप्रत्याख्यानेनाथ पर्यायेण द्वयोरपि टाचोः प्रवृत्तिरिष्टैवेति । किञ्च पुंयोगे विवक्षायामपि क्रिया कर्तृत्वे किंकरीति सूत्रकारमतमिष्टस्य भवदुक्तरीत्याऽसिद्धिरपि द्रष्टव्या । कर्मणि भृतौ अत्र कर्मणीत्यनुवृत्त्यैव सिद्धे पुनः कर्मणीत्युपादानात्कर्मणीति कर्मशब्दपरम् । अस्य कर्मशब्दस्य । व्रीहिवत्सयोरिति वक्तव्यमितियार्त्तिकस्य समुदायेन प्रतिपादयितुमिष्टयोरित्यर्थः । तेन तयोः प्रत्ययार्थकर्तृ विशेषणत्वमेवाभिप्रेतमिति बोध्यम् । फले बर्हिरात्मम्भरिश्च । फलेग्रहिशब्दस्यार्थविशेषे रूढिमद्दर्शयति स्यादवन्ध्यः फलेग्रहिरित्यमरः । यस्य वृक्षस्य फलग्रहणयोग्यता तस्मिन् वृक्षे चायम्प्रयोगः फलात्पत्यावच्छेदककालसम्बन्धीयते । एज् खश् । अत एव । एजन्तादिति व्याख्यानादेव । चरितार्थमिति । शकारोच्चारणमस्य सार्वधातुकत्वे शप यथा स्यादिति कृतम् । केवलाच्चेरर्थस्य स्यात्तदा शपि सत्यमपि वा फलतो न विशेषः । न चोत्तरार्थमस्य मित्वमिति वाच्यम् । इहार्थत्वस्यापि सम्भवे उत्तरार्थत्वसाधकत्वस्यायुक्तत्वादिति भावः । न नुमिति । अनव्ययस्य सम्बन्धे इवि न सर्वत्राव्ययस्य प्रतिषेधः । उपकुम्भम्मन्ये इत्यादौ मुमागमस्येष्टत्वात् । एतच्चाव्ययीभावस्य सुद्मुगमुशोपधारित्वेनाव्ययत्वस्वीकारेण लभ्यते । नासिकास्तन । मुष्टे ययामेत्य गम्यते इति । प्रकृतसूत्रे भाष्ये स्तने धेट. नासिकायां ध्मश्चेति कथनादिति भावः । नाडीमुष्ट्यो श्च । इदन्नासिकानाडीमुष्टीघटीखरीष्विति वक्तव्यमिति नासिकास्तनेति भाष्यदर्शनेन वार्त्तिकमिति प्रतीयते यद्यपि तथापि वृत्तावष्टाध्यायाः पृथक् पाठाच्चायमङ्ग्यसूत्रमाभाष्यकारस्याप्येतदिष्टमेवेति प्रतिपत्तव्यम् । यथा तु नाडीमुष्ट्यो

कर्तरि भुव खिष्णुच्खुकञौ अद्यावित्येव आढ्यीभविता अथेदानीमनेन उक्ते ताच्छीलिक इष्णुज्विधीयते सोऽत्र कस्मान्न भवति रूढिशब्दप्रकारान्ताच्छीलिका न च रूढिशब्दागतिभिर्विशेष्यन्ते न हि भवति देवदत्त. प्रदेवदत्त इतीष्णुजापत्तिपरम् भाष्यमेव भुवयेत्यस्य लोकवेदसाधारणत्वं प्रमाणमिति भाव:। न चक्त्रं रिज्ञदितिसूत्रेण कर्त्तर्यस्य सिद्धे कर्तरीति व्यर्थम्। करण इत्यस्यानुवृत्तिभ्रमवारकतयाऽस्य चारितार्थ्यात्। यदि करण पदस्याखरितत्वेनैवासभाश्च इतिकल्पा तेतदा तु कर्त्तरीति व्यर्थमेव। ननुभूधातोरुदात्तत्वेनेटा भविष्णुशब्द: सिद्ध एवेति खिष्णुच इकारो व्यर्थ । एवञ्च प्रत्ययस्वरेणान्तोदात्तत्वे सिद्धे चकारोऽप्यत्र न कार्य इत्यपरं लाघवमिति चेन्न। मञ' परत्व' यत्वे ष्णुजन्तस्य तत्र क्षत्योकेष्णुस्वादयश्चेत्यु त्तरपदान्तोदात्तत्वसिध्यर्थमिड्कारस्यावश्यकत्वात् इडागमे सत्यमपि ष्णुजेवेति तु यत्नु सगक्यम् नाचषिकत्वात्। स्रगोऽनुदकेक्षिन्। अत्रत्यो नकारो भाष्यकृता प्रत्याख्यात'। तथाहि। नार्थ स्वरार्थ । स्रुग्रेरेकाचत्वात्। नाप्युविगित्यु त्तरार्थं तत्र दधृकमब्दस्य द्विर्वचनान्तोदात्तयोर्निपातनात्। क्विन्प्रत्ययस्येत्यत्र विशेषणार्थं इत्यपि न तत्रापि क्किप्रत्ययस्येत्येव सिद्धि । क्किपो व्यावृत्तिस्तु तदनुबन्धकपरिभाषया भविष्यतीति न च स्पृशधातोर्यङलुगन्तादत्र क्किन्नाद्युदात्तत्वसिध्यर्थंमित्वमस्त्विति वाच्यम्। नकारप्रत्ययाख्यानपरभाष्यप्रामाण्येन यङ्लुकस्यानभिधानस्य। कल्पनात्। सामर्थ्यादिति । स्रग्धातोरेकाचत्वात्क्विन्क्किपो स्वरेऽपि विशेषाभावात्। कुत्वकृतो विशेषस्तु न। क्किप्रत्ययस्येति बहुव्रीह्याश्रयणात्। सत्सूद्विषद्रुह। अत्र सदादिषु केषाञ्चिद्धातूना सकर्मकात्सुपीत्यनुवर्तमानेऽपि कर्मण्युपपदत्वम्प्राप्तौ तौत्यक्तोभाष्ये उपसर्गग्रहण कर्तव्यमित्युक्तम्। तेन कर्मणोति निवृत्तमित्यन्वाख्यातम्भवति। अनुपसर्ग इत्यस्येति। आतोऽनुपसर्गे इतिसूत्रस्थस्यानुपसर्गे इत्यस्ये त्यर्थ । यत्तु वद सुपीतिसूत्रेऽनुपसर्गग्रहणानुवृत्तिप्रदर्शनपरं वार्त्तिकमत्तदपि नापूर्वविधिस्तु प्रकृतज्ञापकसिद्धार्थानुवादएव। सप्तम्यन्ते तदादिति। द्युमदितिप्रयोगे सप्तम्यन्तेतरत्पूर्वपदमित्यर्थ'। एवञ्च सदधातोर्गत्यर्थत्वात्कर्मण्युपपदे प्रत्ययः सप्तम्यन्तेऽप्युपपदे क्किप् इष्यते। आदितेयादिविषद इत्यत्र यथा अत्र सुपामादित्वाम्प

तते। अत्र सन इत्यनेन मन्यतैरेव ग्रहणम्। न तु तनादेः। उत्तरसूत्रे दिवादेरेव ग्रहणेनार्थाधिकारात्। आत्ममाने खश्च। मननं मानः भावे घञ्। आत्मशब्दः प्रत्ययवाच्यत्वेनोपस्थितकर्तृपरएव। कर्मषष्ठ्या समासः। न तु कर्तृषष्ठ्या आत्मशब्दोपादानसामर्थ्यात्तथा च यत्फलितन्तदाह। स्वकर्मकेति। अत्र भाष्ये कर्मकर्तृग्रहणं कर्तव्यम्। कर्मापदिष्टो यक् यथा स्यात्। श्यमा भूदित्युक्तम्। अत्र कर्मकर्तृग्रहणङ्कर्तव्यमित्यस्य कर्तुः कर्मवद्भावः। पूर्वोक्तरीत्या कर्तृलकारवाच्यत्वस्याभावेन कर्मस्थक्रियया तुल्यक्रियत्वसत्त्वेन चाप्राप्तो याच्य इत्यर्थः श्यमा भूदित्यनेन हि अत्र दिवादेर्ग्रहणमिति स्पष्टमेव। ततः श्यनेवं सिद्धे कर्मवद्भावो न वाच्यः रूपे स्वरे च विशेषाभावादिति प्रतिपादितम्। पूर्वपक्षिणा इति। परन्तप इत्यादौ सुमागमे सति मोऽनुस्वारे चिकीर्षिते बहिरङ्गपरिभाषयासुमोऽसिद्धत्वाशङ्कायामिदमुक्तम्। अत एव। श्रियम्मन्य इतिरूपस्ये-ष्टासिद्धत्वस्य प्रहत्त्याऽभग्नत्वादेव। न च यदि न सुपो धात्विति लुकः प्राप्तिस्तर्हिपुंसि चरितार्थस्य सुमो नपुंसकत्वे श्रियम्मन्यङ्कुलमित्यत्र लुक्स्यादेवेति वाच्यम्। पूर्वपदस्योत्तरपदस्योत्तरपदार्थेन सह भेदान्वयात्नपुंसकत्वाभावात् स्वमोर्नपुंसकादितिसूत्रे सुशब्दस्याह्यपर्यपायवत एवामो ग्रहणस्य वक्तुं शक्यत्वाच्च। भूते। इदं धात्वर्थस्य विशेषणम्। अत एव भूतार्थादित्युक्तिसङ्गतिः। सोमेन लताविशेषेणेति। अत्र सोमशब्दस्य द्रव्यपरत्वेऽपि न क्षतिरितिभावः। अग्निष्टोमशब्दस्य क्रत्वर्थाभिधायकत्वाभिप्रायेणाह। अग्निष्टोमसंस्थाकेति। अग्नेः स्तोमः स्तुतिर्यत्र क्रतौ स क्रतुरग्निष्टोमः। रूढोऽयं शब्दः अग्निष्टोमसंस्थाकेत्यस्याप्यग्निष्टोमेति संस्थावाचकः शब्दो यस्येत्यर्थः। समुदायार्थमिरूप्यावयवार्थं निरूपयति। यजेर्घेत्यादिना। त्यागश्च मन्त्रकरणको देवदत्तोद्देश्यको हविःकर्मको विवक्षितः एतादृशत्यागकरणकभावनायां भाव्याकाङ्क्षायां यद्यपि स्वर्गकामादिपदोपस्थितस्य स्वर्गस्य भाव्यत्वमन्यत्रोक्तन्तथापि तस्य कालान्तरभावितया भावनायास्तदव्यवहितपूर्वकालवृत्तित्वाभावेन भावकत्वस्य मशक्यत्वतोऽपूर्वस्य भाव्यत्वमाह। पूर्वं भावितवानिति। मनुष्यापाररूपा या भावना तया त्यागात्मकमफलमत्वन्यत इति तदेव भाव्यत्वेन कुतो नान्वेतीत्यत आह। धात्वर्थत्यागस्येति। धातुप्रतिपाद्यार्थघटकतया करणत्वेनोपस्थितेरित्य-

त्वम् । द्युभदित्यत्र पूर्वपदादितिप्राप्तमपि यत्वच्छन्दसीत्यनुवृत्तेर्न । उपनिष दित्यत्र तु सदिरप्रतेरिति ष । ख्रष्टत्वे दभाष्य इति । तत्र ह्रादोऽनवे इत्येव सिद्धे ग्रव्यग्रहणं वा रूपनिहत्यर्थमित्यन्यमिति । ननु ग्रव्याद इत्यस्य पूर्वो दरादित्वात्साधुत्वमव्यादित्यस्यापि सिद्धौ ग्रव्ये चेतिसूत्रवैयर्थ्यं मत आह ग्रव्ये चेतिसूत्रमिवति । विचोऽपि सम्बन्ध इति । विजुपे छन्दसीतिसूत्राद् उपग्रहणं सम्बध्यते छन्दसीतिनिहत्तमित्यर्थः । इगिग्रहणाद्यथा प्रयोगो इ तेम्य तथैव साधनीयमिति लभ्यते तेनोपपदस्य व्यभिचारोऽपि लभ्यत इ त्याह । इगिग्रहणादिति ॥ भन्त । अनितेरितिवर्त्तते । अथास्त इत्य स्यानितेरिति न विशेषणमव्यभिचारात्किन्तु पदस्येति तदाह । मूले प दान्तस्येति । ईं प्राण् । अन् प्राणने क्विप् अनुनासिकस्येति दीर्घः । म ङिम न्नु घ्योरिति नलोपस्य निषेध । सुप्यजातौ णिनिस्ताच्छील्ये। अजाताविति इ पीत्यस्य विशेषणम् जातिप्रवृत्तिनिमित्तकस्याजातावित्यनेन निषेध । उष्णभोजी त्यादावुष्णादिशब्दो गुणप्रवृत्तिनिमित्तक । अत्रोपसर्गभिन्न एवेत्यस्य यथाला भस्तथाप्रकारमाह । सुपीतीति । भाष्ये तीति । एव हि भाष्ये उक्तम् सुपीति व र्त्तमाने पुन सुब्ग्रहण किमर्थम् अनुपसर्ग इत्येयतदभूत् इद सुग्माथे यथा स्यात् ॥ उदासारिण्य प्रत्यासारिण्य इति । साधुकारिणीत्यत्र साध्विति क्रिया विशेषणम् य सकृदपि साधु यथा स्यात्तथा ददाति साधु करोति स एवमुच्यते ग्रात एव ग्राक्वेरितिसूत्रे तच्छीलापेक्षया तत्साधुकारीत्युपात्तम् । व्रते । व्रतशब्दे उपपदे इति नार्थः । अश्राद्धभोजीतिभाष्योदाहरणात् किन्तु प्रयोगो पाधिपरम् । एतच्च यस्त्विकत्तदाह । सुप्युपपदे इत्यादिना । स्थण्डिलशायीत्यत्र यथा व्रतङ्गम्यते तथाह । स्थण्डिल एवेति । भाष्योदाहरणे स्वमसर्वसमासो द्र ष्टव्य । नञ् एवायमभिप्रतिषेधवाचिन श्राद्धशब्देनासामर्थ्यसमास इति भा ष्यात् । अत एवात्र व्रतङ्गम्यते । श्राद्धशब्देन नञा समासे तु सर्वथाभिव तथा त्वेन व्रतत्व प्रतीयेत । मधुसमाभोजाप्ते । अत्राभोजाप्ते इति धातोर्विशेष णमर्थोदाहरणम् । भोज्य चोत्य इत्यस्य भाग । व्रत इतिसूत्रभाष्य इति । तत्र श्र्राद्धभोजीत्यत्र व्रतत्वगम्यमानतायामुदाहरणमोपात्तम् यथा स्थण्डिलशा यी यदा स्थण्डिले न तिष्ठति तदास्य व्रतलोपो भवतीति । मन । सुपीति च

लक्षितेत्यर्थः । का कवद्वेदनत्तगहमित्यत्राश्विरेण काकेन वेदिकापुण्डरीकादिकं यथोपलक्षितं तद्वत् । यद्रूपमिति । छते इयडि यथान्तं रूपन्तादनुकरणमेतत् । एवञ्चानुकरणस्यानुकार्योपस्थापकतया चि चये चि मिवासगत्योरित्थं तद्वयोरपि ग्रहणे तत्रापि तयोर्ग्रहणापत्तौ भावे कर्मणि या यत्र निष्ठा तत्रातिप्रसङ्गवारणाय दीर्घग्रहणमिति भाव. । चित. काम इत्यत्र चिधातोरन्तर्भावितण्यर्थकत्वेन सकर्मकत्वात् कर्मणि क्तः । भावे तु चितङ्गामेनेति बोध्यम् । दीर्घविधायकवृत्ताविति । दीर्घविधायकस्य सूत्रस्य वृत्तौ विवरणवाक्ये रदाभ्याम् । पूर्वस्य सावधिकत्वेन प्रथमे वाक्ये निष्ठाया उपस्थितत्वात्तस्या एवावधित्वङ् कल्प्यत इत्याशयेनाह । निष्ठापेत्त्येतीति । पूर्वग्रहणमिति । रदाभ्यान्निष्ठातो नो दश्चेत्येव कर्तव्ये कृतं यत्पूर्वग्रहणन्तदित्यर्थः । ल्वादिभ्यः । यदुक्तं मूलकृता एकविंशतेरिति तद्वावस्तु यद्यपि गृधातु तत्र दश्येते तथापि ताभ्यान्निष्ठाया रदाभ्यामित्येव सिद्धमिति । ज्याधातोर्निष्ठायाः संयोगादेरित्यनेन सिद्धिर्न नत्वस्यासिद्धतया प्रथम सम्प्रसारणे यणवत्त्वाविरहात् । ग्रामकर्मकर्तृकस्येति । ग्राम एव कर्मकर्ता यस्येत्यर्थ. । पिण्डीक्रियमाण ओदनादिर्यदा व्यञ्जनदध्यादिसम्बन्धेन स्वयमेव झटिति ग्रासताम्प्राप्नोति तदेतदुदाहरणम् । व्याख्यानादिति ॥ उत्तरसूत्रारम्भमूलकव्याख्यानादित्यर्थः । विभाषाऽभ्यव । अत्रविभाषा भ्यवादिति सिद्धे पूर्वग्रहणङ्किमर्थमत आह । पूर्व ग्रहणमिति । पूर्वशब्दाभावे तस्मादितिपरिभाषयाऽभिसंशीनमित्यत्र समा व्यवधानात्त स्यादिति भावः । स्वीकरीत्या व्यवस्थितविभाषा भाष्योक्तस्थल एवेत्याशयेनाह । एतदपीत्यादि । अश्नोनपादाने । अनपादाने । इत्यसमर्थसमासोऽसूर्यम्ललाटयोरितिवत् । अपादानवाचकस्य प्रयोगे नेत्यर्थः । तदर्थात् । प्रकाशार्थात् एतेन व्यक्तमित्यत्र नत्वापत्तिनिरस्ता । उदक्तमुदकङ्कूपादित्यस्य कूपापादानकोद्धरणकर्मोदकमित्यर्थ । यस्य विभाषा । अथ्या इति । शब्दाध्याहार इत्यर्थः । यस्येति षष्ठ्यर्थस्यार्धधातुकस्येत्यन्वयः । यदीयार्धधातुकस्येड्विकल्पेन विहितस्तस्मान्निष्ठाया इड्न स्यादित्यर्थ. । निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु । वृक्ण इति । ओव्रश्चू छेदने अस्मान्निष्ठायां ग्रहिज्येति सम्प्रसारणम् । ओदितश्चेत्यस्य निष्ठादेशविधायकस्यासिद्धत्वात्स्कोरिति सलोपः । यस्य विभाषेतीड्

र्थः । त्यागकरणकेन व्यापारेण कम्भावयेदिति याऽऽकांक्षा सा पूर्वानुभूता र्थातिरिक्तविषयिण्येवोचितेति भावः । ननूपस्थितम्परित्यज्यानुपस्थितकल्पने मानाभाव इति न्यायेनोपस्थितस्यैव समानशब्दोपात्तत्वप्रत्यासत्त्या तथात्वमुचितमत आह । पुरुषार्थत्वाभावाच्चेति । यच्चात्मसमवायित्वेनेष्यते स पुरुषार्थः । तत्त्वञ्च सुखदुःखाभावान्यतरस्य साक्षात्तत्साधनस्य वा त्यागश्च तेभ्यो भिन्न इति भावः । अपूर्वम् । परमापूर्वम् । ननु करणस्य कार्यपूर्ववृत्तित्वरूपस्य दृष्टत्वाद्यागस्तु भावनायाः कार्यश्च तु भावनापूर्ववृत्तीति कथं करणमत आह । त्यागस्य करणत्वञ्चेत्यादि । भावनायाः भाव्यो भावना भाव्यः भावना भाव्यम्भावयति जनयतीति भावना भाव्यजनकत्वम् । अस्ति चेदृशं करणत्वं त्यागे भावनाभाव्यपूर्वम्प्रति यागस्य जनकत्वात् । सर्वत्र । नकेवलं फलांशस्यैव किन्तु सर्वत्र दण्डेन घटं करोतीत्यत्रापि दण्डस्य भावनाभाव्यघटोत्पत्तिम्प्रति जनकतायाः सत्त्वात् । धातोरंशद्वयाभिधायकतया प्रायः फलांशस्य भावनाम्प्रति भाव्यत्वेन सम्बन्धात्कर्मत्वम् क्व चित्तु करणत्वेन सम्बन्धित्वविवक्षा तदा तृतीया तदभिमतार्थबोधकपदात् अग्निष्टोमेन यजेतेत्यादौ यथा । अत्र च करणे यज इतिसूत्रमेव मानम् । पूर्वोक्तो बहुव्रीहिः । संख्यावाचकपरत्व एव सम्भाव्यत इत्याशयेनाह । संख्यावचनस्यापीति । क्व चित्तु ज्योतिष्टोमशब्दस्येति पाठस्तु ज्योतिष्टोमेन स्वर्गकामो यजेतेतिवाक्याभिप्रायकः । ईदृशानाम् । भाव्यतया भावनाम्प्रति सम्बन्धिनाम् । यत्र तु फलांशस्यैव भाव्यत्वेन सम्बन्धविवक्षा तत्र करणाकाङ्क्षायां बहिर्भूतकरणबोधकपदेन पूर्यते काष्ठैः शोभनम्पचतीत्यादौ यावत्फलाकाङ्क्षायामुपपदे तण्डुलम्पचतीत्यादौ यथा । पूर्वोक्तं निरूपणम क्षमाण आह । के चिदिति । शब्दद्वारा प्रवृत्तिं प्रति प्रयोजको यः सद्दस्य ज्योतिष्टोमेन स्वर्गं जायतामितीच्छाप्रयोजकतया शब्दार्थयोस्तादात्म्याज्ज्योतिष्टोमशब्दार्थज्योतिष्टोम शब्दस्यापि तादृशेच्छाविषयतया तदिच्छाप्रयोजकति विषयविधया जनकत्वेन तद्वारा भावनाम्प्रत्यपि करणत्वमिति भावः । अस्मै चेः । स्तुवि कर्मणीति सम्प्रदाने । अन्ते । कमेर्णिङ् पदे णिचः क्विप् । चापि चतुर्विधो नियम इति काशिकायाम् । स्वर्गशब्दादितिसमुदायः स्वभावित्वे इष्टकादिसिद्धिं चाहवनीयधारणार्थं दृष्टः । तदुपमर्दितेति । अनुवर्तिष

कार्श्येन परिक्लश्य इत्युक्तम्। तत्र कैयटः। गम्यमानार्थत्वादप्रयोगएव लोपस्त-थर्गमिष्यति परिरुपसर्गो न तु कृशिम्प्रतीत्यनुपसर्गत्वात्परेर्निष्ठान्त एव क्लिश शब्द इति तत्पुरुषे तुल्यार्थेत्यव्ययस्वरेणाद्युदात्ततेति। ननु समस्तैकदेश-स्यापि निपातनमिष्यते इत्यनुपलम्भाद्याख्यानुक्तत्वात् अत आह। वृत्तिकारैरिति। ननु निष्ठादेश इतिवार्त्तिकेनेड़भावे सिद्धे तादेशनिपातनस्वीकारो व्यर्थोऽत आह। निष्ठादेश इति। आदितश्च। नन्विदं सूत्रं विभाषा भावादिकर्मणोरि-तेसूत्रेण सहैव पाठमेवञ्च तत्रे ड्विकल्पायस्य विभाषेति निषेधेनान्यत्रे ड़भावे सिद्धे योगविभागवैयर्थ्यमिति चेन्न। यदुपाधेर्विभाषा तदुपाधेः प्रतिषेध इति ज्ञापनार्थत्वात्। तेन विभाषा गमहनेत्यनेन विशिसाहचर्याच्छविकरणस्य विकल्पविधानात्तस्मादेव निष्ठायां इण्निषेधो न तुलुग्विकरणान्निष्ठाया इति फलसिद्धेरिति भाष्ये स्पष्टम्। व्याख्यानादिति। वित्तो भोगेतिसूत्रभाष्यसम्मत-व्याख्यानादित्यर्थः। तत्र हि वित्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते। वि-न्तेर्वित्तश्च वित्तश्चभोगे वित्तश्चविन्दतेरित्युक्तम्। ऋणमाधमर्ण्ये। ऋणशब्दस्या-धमर्ण्यशब्देन बहुव्रीहिः ऋणस्याधमत्वं च दुःखप्रदत्वात्। ततो भावे ष्यञ्। तदन्तस्य च तादृशव्यवहारे लक्षणा एवञ्च विषयत्वनिरूपकत्वान्यतरसम्ब-न्धेन तादृशव्यवहारसम्बन्धिनि गम्यमाने ऋणमिति निपात्यते। निरूपकत्व-निवेशे मानं तु धारेरुत्तमर्ण इति निर्देश एव। नन्विह निष्ठायामित्येव सूत्रमस्तु नित्यार्थत्वञ्चास्यारम्भसामर्थ्याद्भविष्यति विकल्पस्य निरः कुष इत्यनेन सिद्धेरत आह। निष्ठायामित्येतत्त्विति। न च निरः कुषोऽनिष्ठायामित्येव सूत्रमस्तु एवञ्चानिष्ठायामित्यनेन निष्ठायां विकल्पस्य व्यावृत्तौ पर्युदाससा-मर्थ्याच्च यस्य विभाषेति निषेधस्यापि बाधे सिद्धे इडिड्ग्रहणं व्यर्थमिति वाच्यम्। वेः स्कन्देरनिष्ठायामितिवत्स्यादेव विकल्प इति शङ्कास्पदत्वात् पृथ-ङिष्ठायामित्यस्या वश्यकत्वात्। एवञ्चेहेड्ग्रहणाद्वाशब्दस्यासम्बन्ध इति सिद्धम्। तोषमहेत्यादावुत्तरत्र तु सम्बध्यत एव। आरोप्येति। वर्तमाने यत्र प्रत्यय-स्तथापि यत्किञ्चिदवयवसद्भावे चणे सर्वेषामवयवानामविद्यमानत्वेऽपि तस्मि-न्समूहत्वारोपेण वर्तमाने प्रत्ययस्तथेहापीति भावः। उपदेशइत्यनुवृत्तेरिति। तच्चोच्चारस्य विशेषणम्। प्रत्ययोपदेश इति प्रत्यासत्त्या कल्पना कार्या तेन

कार्श्येन परिक्षय इत्युक्तम्। तत्र कैयटः। गम्यमानार्थत्वादप्रयोग एव लोपस्तु
नगमिश्रित परिरुपसर्गो न तु कृशिम्प्रतीत्यनुपसर्गत्वात्परैर्निष्ठान्त एव कृश
शब्द इति तत्पुरुषे तुल्यार्थतृतीयाव्ययस्वरेणाद्युदात्ततेति। ननु कृशत्वैकदेश
स्यापि निपातनमिष्यते इत्यनुपपन्नं भाष्यानुक्तत्वात् अत आह। वृत्तिकारैरिति।
ननु निष्ठादेश इतिवार्त्तिकेनेडभावे सिद्धे तादृशनिपातनस्वीकारो व्यर्थोऽत
आह। निष्ठादेश इति। आदितश्च। नन्विदं सूत्रं विभाषा भावादिकर्मणोरि
तिसूत्रेण सहैव पाठ्यमेवञ्च तत्रैवाश्विकल्पाद्यस्य विभाषेति निषेधेनान्यत्रेडभावे
सिद्धे योगविभागवैयर्थ्यमिति चेन्न। यदुपाधेर्विभाषा तदुपाधेः प्रतिषेध इति
ज्ञापनार्थत्वात्। तेन विभाषा गमहनेत्यनेन विशिसाहचर्याच्छविकरणस्य
विकल्पविधानात्तस्मादेव निष्ठायां इण्निषेधो न तु लुग्विकरणान्निष्ठायामिति
फलसिद्धेरिति भाष्ये स्पष्टम्। व्याख्यानादिति। वित्तो भोगेतिसूत्रभाष्यसम्मत
व्याख्यानादित्यर्थः। तत्र हि विन्नस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते। वि
न्तेर्विन्नश्च वित्तश्च भोगे वित्तश्च विन्दतेरित्युक्तम्। ऋणमाधमर्ण्ये। ऋणशब्दस्या
धमर्णशब्देन बहुव्रीहिः ऋणस्याधमत्वं च दुःखप्रदत्वात्। ततो भावे ष्यञ्।
तदन्तस्य च तादृशव्यवहारे लक्षणा एवञ्च विषयत्वनिरूपकत्वान्यतरसम्ब
न्धेन तादृशव्यवहारसम्बन्धिनि गम्यमाने ऋणमिति निपात्यते। निरूपकत्व
निवेशे मानं तु धारेरुत्तमर्ण इति निर्देश एव। नन्विह निष्ठायामित्येव
सूत्रमस्तु नित्यार्थत्वञ्चास्यारम्भसामर्थ्याद्भविष्यति विकल्पश्च निरः कुषः इत्यनेन
सिद्धेरत आह। निष्ठायामित्येतच्चेति। न च निरः कुषोऽनिष्ठायामित्येव
सूत्रमस्तु एवञ्चानिष्ठायामित्यनेन निष्ठायां विकल्पस्य व्यावृत्तौ पर्युदाससा
मर्थ्याच्च यस्य विभाषेति निषेधस्यापि बाधे सिद्धे इड्ग्रहणं व्यर्थमिति
वाच्यम्। वे स्कन्देरनिष्ठायामितिवदश्रूत्येव विकल्प इति शङ्कास्यादतः पृथ
ङ्निष्ठायामित्यस्यावश्यकत्वात्। एवञ्चेड्ग्रहणादिट्शब्दस्यासम्बन्ध इति सिद्धम्।
लोपमङ्गे त्यादावुत्तरत्र तु सम्बध्यत एव। आरोप्येति। वर्तमाने यत्र प्रत्यय
स्तत्रापि यत्किञ्चिदवयवसद्भावे इति कैश्चिदवयवानामविद्यमानत्वेऽपि तत्कि
ममुद्दत्वारोपेण वर्तमाने प्रत्ययस्तथेहापीति भावः। उपदेश इत्यनुवृत्तेरिति।
तच्चोच्चारस्य विशेषणम्। प्रत्ययोपदेश इति प्रत्यासत्त्या कल्पना कार्या तेन

कार्श्येन परिक्रम्य इत्युक्तम्। तत्र कैयट। गम्यमानार्थत्वादप्रयोगएव लोपस्त्व-मिमिति परिरुपसर्गो न तु कृमिम्मतीत्युपसर्गत्वात्परैर्निष्ठान्त एव क्षाम शब्द इति तत्कृमी तुल्यार्थेत्यव्ययस्वरेणाद्युदात्ततेति। ननु तावत्यंकादेश स्यापि निपातनमिष्यते इत्यनुपपन्नभाष्यानुक्तत्वात् अत आह। वृत्तिकारैरिति। ननु निष्ठादेश इतिवार्त्तिकेनेडभावे सिद्धे तादेशनिपातनस्वीकारो व्यर्थोऽत आह। निष्ठादेश इति। आदितश्च। नन्विद सूत्र विभाषा भावादिकर्मणोरि तिसूत्रेण सहैव पाठमेवञ्च तत्रेड्विकल्पाद्यस्य विभाषेति निषेधेनान्यत्रेडभावे सिद्धे योगविभागवैयर्थ्यमिति चेन्न। यदुपाधेर्विभाषा तदुपाधेः प्रतिषेध इति ज्ञापनार्थत्वात्। तेन विभाषा गह्मनेत्यनेन विश्रिसाहचर्याच्छविकरणस्य विकल्पविधानात्तस्मादेव निष्ठायां इण्निषेधो न तुलुम्विकरणान्निष्ठाया इति फलसिद्धेरिति भाष्ये स्पष्टम्। व्याख्यानादिति। वित्तो भोगेतिसूत्रभाष्यसम्मत व्याख्यानादित्यर्थः। तत्र हि विन्ते स्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते। वि न्ते वित्तश्च विन्नश्चभोगे वित्तश्चविन्देतेरित्युक्तम्। ऋणमाधमर्ण्ये। ऋणशब्दस्या धमर्णशब्देन बहुव्रीहिः ऋणस्याधमत्व च दुःखप्रदत्वात्। ततो भावे ष्यञ्। तदनृतस्य च तादृशव्यवहारे लक्षणा एवञ्च विषयत्वनिरूपकत्वान्यतरसम्ब न्धेन तादृशव्यवहारसम्बन्धिनि गम्यमाने ऋणमिति निपात्यते। निरूपकत्व निवेशे मानं तु धारउत्तमर्ण इति निर्देश एव। नन्विह निष्ठायामित्येव सूचमस्तु नित्यार्थत्वञ्चास्यारम्भसामर्थ्याद्भविष्यति विकल्पस्य निर् कुष इत्यनेन सिद्धेरत आह। निष्ठायामित्येतस्त्विति। न च निर् कुषोऽनिष्ठायामित्येव सूत्रमस्तु एवञ्चानिष्ठायामित्यनेन निष्ठायां विकल्पस्य व्यावृत्तौ पर्युदाससा मर्थ्याद्य यस्य विभाषेति निषेधस्यापि बाधे सिद्धे इड्ग्रहणं व्यर्थमिति वाच्यम्। व स्कन्दे रनिष्ठायामितिवारकत्वेव विकल्प इति शङ्कास्यादत पृथ ङ्निष्ठायामित्यस्या वश्यकत्वात्। एवञ्चेड्ग्रहणाद्दाशब्दस्यासम्बन्ध इति सिद्धम्। तोपमहे त्यादावुत्तरत्र तु सम्बध्यत एव। आरोप्येति। वर्तमाने यत्र प्रत्यय स्तत्रापि यत्किञ्चिदवयवसद्भावे सर्वेषामवयवानामविद्यमानत्वेऽपि तस्मि न्ममूहत्वारोपेण वर्तमाने प्रत्ययस्तथेहापीति भावः। उपदेशइत्यनुवृत्तेरिति। तत्रोकारस्य विशेषणम्। प्रत्ययोपदेश इति प्रत्यासत्त्या कल्पना कार्या तेन

प्रायेण गच्छति । न चैवमिति । एवम् । आदेशस्य तान्तत्वे । दाधातोर्यस्तकारादेशस्तस्मिन्नित्यर्थे यस्मिन्विधिरितिपरिभाषया तदादिविधिः स्यात्तथा च तकारादावुत्तरपदे दीर्घ इत्यर्थाभिप्रायेण समाधत्ते । तकारादाविति । प्राचीनमम्मतसूत्रार्थरीत्याव्याख्याय भाष्यसम्मतसूत्रार्थाभिप्रायेणाह । स्वगा-स्तेत्यादि । तान्तदाधातावित्यर्थे खरि चेति चर्त्वे कृते आदेशस्य तान्तत्वमेवे-ति आगत्याभावेन नेदं व्याख्यानयोर्व्यहिन्तु यस्मिन्विधिपरिभाषालभ्यमेवेति शङ्कामपाकरोति । परिभाषासम्मतव्याख्याने चर्त्वं स्यासिद्धत्वेनादेशस्यातान्तत्वपक्षे दीर्घंव्यावृत्तिर्विशेषणस्य फलमिति बोध्यम् । तत्र परिभाषाबाधेन व्याख्यानमे-वोचितमिति भावः । दोदद्घोरित्यनेन थान्तस्यादेशस्यविधानमेवेत्यत्र भाष्यस-म्मतिमाह । तान्ते दोष इति । ध्वनितत्वादिति । तत्र हिंहचहभिरित्यत्र नलोपे कृते ऐस्भावस्य प्राप्तौ सन्निपातपरिभाषया तद्वारणरूपस्य प्रयोजनस्य नलोपः सुप्स्वरेत्यनेन नलोपासिद्धत्वेन वारणेनान्यथासिद्धिं कृता न त्वसि-द्धस्य सन्निपातविघातकपदेनाग्रहणमित्यर्थप्रदर्शनेन ध्वनितमित्यर्थः । भाष्य-कारेण दान्तत्वे निष्ठानत्वस्य धान्तत्वे धत्वप्राप्तिरिति यदुक्तन्तस्योपपत्ति-माह । जग्धमित्यादाविति । अच उपसर्गात्तः । सम्यैवानुवर्तमानङ् घोरि-ति विशेषणम् । अच इति पदमावर्तते एकमुपसर्गस्य विशेषणन्तेन-तदन्तविधिः द्वितीयमादेशस्य तकारस्य स्थानिबोधनाय । अन्यथोपसर्गादि-तिपञ्चमीनिर्देशादादेः परस्येति स्यादिति भावः । इति भाष्यमिति । तत्र द्वि-घ्नेरित्यादचस्त इत्येतद्भवति विप्रतिषेधेन द्यतेरित्यस्यावकाशः निर्दित्तन्निर्दि-त्तवान् अचस्त इत्यस्यावकाशः प्रत्तम् अवत्तम् । इहोभयम्प्राप्नोति नीत्तम् वीत्तम् अचस्त इत्येतद्भवति विप्रतिषेधेनेत्युक्तम् यद्यपि दद्भावस्यैत्त्वमपवा-दस्तथापि तदुक्तत्वमप्यपवाद इत्यपवादयोर्विप्रतिषेधे परत्वात्तस्याप्रवृत्तेत इति भावः । कपिष्ठलो गोत्रे । गोत्रेऽभिधित्सिते कपिष्ठल इतिनिपात्यते । यः कपिष्ठलशब्दो गोत्रप्रत्ययप्रकृतित्वेन दृष्ट इति यावत् । भाष्यस्वरस इति । त-त्र हि कपिष्ठलः कापिष्ठलिः कापिष्ठलायन इतिरूपस्य गोत्रे यनिच सिद्धये क-पिष्ठलो गोत्रप्रकृताविति वार्तिककृतोक्तम् । इदञ्च वार्तिकं यो दृष्टइत्यव्याख्या-कारेण प्रत्याख्यातमिति स्वष्टम् । घोऽधिकरणे च । अत्र धात्वर्थ प्राप्त

मित्युक्तमत्र स्वार्थे यार्थाल्कर्तरि प्राप्तिं दर्शयितुमाह । प्रायेणाकर्मकाद् इ य
थास्वार्थे यार्थक आस्धातुरकर्मकस्तस्मात्स्त्यर्थाकर्मकेत्यनेन कर्त्तरि प्राप्ति श्च
यमेवाधिपूर्वश्चेत्तदा सकर्मक एवमुपपूर्वश्च सकर्मकस्तदापि कर्त्तरि प्राप्ति
प्राप्ति ओदनन्देवदत्त इति । अत्र हि न कर्मणि प्रत्ययः । ओदनपदाद्द्वितीया
दर्शनात् । सकर्मकत्वाद्भावेऽपि न । कर्तरि त्वप्राप्त इत्याद्युदात्तस्येत्ट्ग्रस
प्रयोगस्येष्टत्वेनेत्यर्थः । अत एव प्रकृते कर्मणोऽविवक्षाया अभावादेव यदि त
था स्यात्तदा भावे प्रत्ययेऽयुक्तोऽयं निर्देश इत्यप्युक्तम् स्यात् । ननु यदि गत्यर्थेति
सूत्रेणाविवक्षितकर्मकाणामकर्मकत्वे चेद्भावे प्रत्ययः स्यात्स्वप्रत्ययास्तस्य प्रयो
गस्तर्हि दत्तवानित्यर्थे दत्त इत्यपि स्यात् । कर्मण्यस्याप्राप्तावपि यथा दत्तवानिति
भवति तथा सदन्तादजपि स्यात् । भावक्तान्ताद्वा तद्विनुमति स्यादत आह ।
दत्तवानित्यर्थे इति । निष्ठाप्रसङ्गात्तत्सम्बन्धिकार्यजातं समुद्भाव्य प्रकृत व्या
चष्टे सुयजोर्ङ्वनिप् । सुनोतेरिति । अत्रोभयपदिना यजिना साहचर्यात्सुनो
तेरेव ग्रहणम् तु सु गतौ पुप्रसवैश्वर्ययोरित्यनयोः । जीर्णइति । अत्र जृधातोः
कर्तरि प्रत्ययः । ध्वनितमिति । प्रकृतसूत्रभाष्य एव न च क्वसोर्वा वचनच्छन्द
सि लिङोऽदर्शनादित्युक्तमन्ते न ध्वनितमित्यर्थः । इण्शजीर्लङ्चेत्यनेन लादेश
गतवैरूप्यमादाय लकारविषये वासरूपन्यायोनप्रवर्तत इत्येव ज्ञापनमिति
भावः । यत्तु वृत्तौ छन्दसि लिट इतिसूत्राल्लिङ्ग्रहणानुवृत्तौ विभक्तिविपरिणा
मेन च सिद्धे पुनर्लिङ्ग्रहणेन लिट्सामान्यस्यादेशो ज्ञाप्यत इति प्रकृते वा व
चनमित्युक्तम् । तन्न प्रकृतभाष्यविरोधात् । तत्र हि कानच्क्वसोर्वा वचनच्छन्द
सि लिङो दर्शनात् । छन्दसि लिङपि दृश्यते । अहं सूर्यमुभयतो ददर्श । अह
द्यावापृथिवी आततानेति । न वाऽनेन विहितस्यादेशवचनात् । न वा एतत्प्र
योजनमस्ति । किङ्कारणमनेन विहितस्यादेशवचनात् एवमुक्ता क्रीत विहितस्या
देश इत्याकाङ्क्षायाञ्छन्दसि लुङ्लङ्लिट इति लिङ् व्यत्ययभविष्यतीति समाधाय
तदेतद्वाचनिकमुक्तं भाष्याभ्यासिकमित्युक्तम् । तत्र तदेतदितिपतीकमुपादायो
तरत्रोपपद्यत इत्युक्तं कैयटेन किं विशुतम्य धातुसम्बन्धे विधाने भाषातुसम्बन्धे
पक्षे भूतमामान्ये लिटआनिकतिङ् व्यवधारणमिदमावश्यकमित्याह । कृञ्
प्रयुक्तिश्चुयदस्तीति । यत्रापि प्रकृतसूत्रभाष्यमेव मानम् । तत्र हि च

योगाच्चिद् क्विदित्येव क्वित्वे सिद्धे क्विल्करणं सयोगान्तार्थमित्यभिधाय इधस्य यद्दधानस्य रोदसी त्वमर्णवान्यद्दधानामरमृणाः वव्रे वाजिवानित्युदाहरणानि प्रदर्श्य छान्दसो कानचक्रम् लिट्च छन्दसि सार्वधातुकमपि दितिङित्वादुपधालोपो भविष्यतीत्यभिहितम् । यद्दधानस्येति । बन्ध बन्धने छान्दसत्वादभ्यासधकारस्य निवृत्त्यभावे झलाञ्जश्झशीति जश्त्वम् । एतद्भाष्यग्रन्थेऽन्ये: वाजिवानितिप्रयोगस्य छान्दसस्य प्रदर्शनेनाच्-प्रकृतिकक्वसुपरमिति कल्प्यते। यदुक्तमेकाज्ग्रहणसामर्थ्यं लब्धमिति तदेतदुपपादयति । तद्धीति । व्याख्यानादिति । भाषायां सदादिभ्यो वा लिडुक्तस्य किम्प्रयोजनम् तद्विषये लुङो निवृत्त्यर्थमिति भाष्यकारोक्तिमूलकव्याख्यानादित्यर्थः । ईयिवानिति । इण्धातो क्वसौ द्वित्वोत्तरमभ्यासेन सह सवर्णदीर्घेऽस्य कृत द्वित्वैकाच्त्वमस्त्वाद्वस्वेकाजाद्घसामितीडिति भावः । पचति ब्राह्मण इति । न च सामानाधिकरण्यमेकार्थविशेष्यकप्रतीतिजनकत्वम् तच्च प्रकृते नास्ति प्रत्ययार्थकर्तुर्विशेषणत्वादिति वाच्यम् । काल्पनिकस्य प्रथमासामानाधिकरण्यस्य सत्त्वात् । यथा शतृशानच्प्रत्ययान्तस्य प्रयोगे सति प्रधानभूतयोः कर्तृकर्मणोः प्रतीतिर्न तु लकारस्य प्रयोगे इति लटोऽप्रथमान्तेन सामानाधिकरण्ये इत्यनुवादोऽनुपपन्न इति प्रक्रियादशायां कल्पिते स्थानिनि लकारेऽप्रथमासामानाधिकरण्यमपि कल्पितं शास्त्रप्रवृत्तिनिर्वाहकन्तथा च कृदन्तं सत्त्वप्रधानानि नामानीति वचनात्कर्तृकर्मणोः प्राधान्यदर्शनेनायं लकारः प्रधानकर्त्राद्यभिधायकस्तथा विधाऽनुवादविषयत्वादित्यनुमानेन कृदन्तदृष्टान्तेन काल्पनिकमेव तत्प्रक्रियानिर्वाहकत्वादृशकल्पना प्रकृते भाष्यार्था सम्भवत्येव । प्रातिस्वदेशे भावप्रधानमाख्यातमितिवचनेन श्रूयमाणप्रत्ययार्थस्य तिङन्तु विशेषणत्वं कृत्सु विशेष्यत्वमिति लभ्यते । वस्तुतस्तु सामानाधिकरण्यं समानार्थकत्वमात्रम् तु तत्र प्राधान्यनिवेश इति नाहार्यायास्तस्याः कल्पनेति बोध्यम् । क्त चिदित्यस्य लाभस्तु मन्त्रोर्विभाषेतिसूत्राद्विभाषापदानुवृत्त्याऽनयोरादेशयोर्विकल्पेन प्रवृत्त्या कल्प्यते सा चानुवृत्तिः सम्बन्धानुवृत्त्या मण्डूकगतिवद्वा कार्या । प्रथमासामानाधिकरण्येऽपि क्त चिदित्यस्य लाभः पुनर्लड्ग्रहणस्य करणेन दर्शिता सा न शब्दाधिकादर्थाधिक्यमितिकल्पनया किन्तु पुनर्लड्ग्रहणे

जो॰ शानन्। ताच्छील्यवयोवचनशक्तिषु चानश् ।इङ्धार्यो शत्रकृच्छ्रीति विहितप्रत्ययान्तरत्वं लादेशत्वं वेतिविचारेऽलादेशत्वं व्यवस्थाप्य सोमम्पवमानः। नटन्निघ्नान इत्यादौ कर्तृकर्मणोर्विहितषष्ठ्या लादेशयोगे निषेधः सोऽत्र न प्राप्नोतीत्याशङ्क्य लटः शतृशानचाविति ह्रिशब्दमारभ्य तनो मकारात्तृविति प्रत्याहार इत्याश्रयणेन तृन् ग्रहणेनैतेषामपि ग्रहणेन न लोकेतिनिषेध उक्तः तेनैतः प्रत्यया न्तरमेवेति सिद्धम्॥ ताच्छील्यवयोवचन ॥ अयम्परस्मैपदिभ्योपि ॥ लादेशश्चैवात्मनेपदसंज्ञाविधानात् ॥ अत एव शत्रु निघ्नान इत्यस्य सिद्धिः। ताच्छील्यन्तत्स्वभावता । यथावक्वोऽत्र मण्डयाना । अनेकेऽत्र पठमाना इत्यादौ। वयोवचन इत्यस्य वयोविशेषस्य प्रतिपादन इत्यर्थ । यथा कवचम्बिभ्राणा इत्यादौ यौवनादिरूपा शरीरावस्था प्रतीयते। शक्तिः सामर्थ्यम्। सा यत्र गम्यते तत्र चानश्। यथा शत्रु निघ्नान इत्यादौ। सुञो यज्ञसंयोगे। सुञः शतृप्रत्ययः स्यात् ।यज्ञेन संयुक्ते कर्तरि शक्तान्तः इतियेत्। संयोगइत्यत्रकर्मणि घञ् अत्र सुञो यज्ञ इत्येव यज्ञविषयत्वेसुनोत्यर्थ इतिव्याख्यया सिद्धे संयोगग्रहणादत्र प्रधानकर्तारोऽभिधीयन्ते तच्चैवानेन योगेन प्रत्ययः तादृशमत्र याग इत्याशयेनाह। सूले सर्वे सुन्वन्त । सर्वयजमाना । यज्ञयोग इति किम्। आक्रोस्ताच्छी । अत्र आङ् अभिव्याप्तौ तच्छब्दो धात्वर्थस्य परामर्शक.। भाष्ये स्पष्टमिति ।तत्र छत्राविलस्य कर्तरि भुव इतिसूत्रेऽनुवर्त्तमानस्याव्योभवितेत्यत्र भूधातोः खिष्णुजनुत्पत्तिरूपप्रयोजनमुक्ता अथेदानीमनेन उक्तो ताच्छीलिक इष्णुच्विधीयते सोऽत्र कथाप्रभवतीति प्रश्ने रूढिशब्दप्रकारास्ताच्छीलिका न च रूढिशब्दा गतिभिर्विशेष्यन्ते न हि भवति देवदत्तः प्रदेवदत्त इत्युक्तम्॥ ताच्छीलिक इष्णुज्भुवर्थं तिसूत्रविहित रूढिशब्दप्रकारो रूढिशब्दसदृशा ॥ यथा रूढिशब्दाना गतिभि. सम्बन्धो न भवति तथा ताच्छीलिकेष्वपि अयमत्र विशेष.॥ ये अत्यन्त शब्दा एवं ते अवताप्यवयवार्थेन व्युत्पाद्यन्ते॥ क्वचित्तु अवयवार्थमन्तरेऽपि॥ यथा गाथक इति ताच्छीलिका अपि क्रियाविषयस्ताच्छील्यमुपादाय प्रवर्त्तन्ते क्रियाविशेषाभावेपि । कामुक इति । अत्र गतिसम्बन्धो न भवति। न हि भवति प्रकामुक इति। क्वचित्तु गतिभिः सम्बन्धो भवति। आगामुक.

प्रवर्त्तक इति यथा । अत एवोक्तम्भाष्येणेति । यत्र तु सोपसर्गा एव रूढिशब्दास्तत्रापि धात्वंशेन गतिना न भवति सम्बन्धः । यथा व्याघ्र इति । अत्र प्रव्याघ्र इति न भवति । शीलं स्वभावः । फलांशविषयकाकाङ्क्षाराहित्यम् । सा शीलं यस्येति बहुव्रीहिः । तद्धर्मा । तत्क्रियाचारकर्ता । अयं तत्क्रियाचरणम्मम धर्म इति ज्ञानप्रयोजकम् । साधु कारी तु तं विनापि यो धात्वर्थं साधु करोतीति सः । कर्ता कटानिति । ताच्छीलिके च कृधातोस्तृन्प्रत्ययः । अलंकृञ्निराकृञ् । अत्र कृञ्ग्रहणेन तृन्सिद्धत्वात्तयोरेव ग्रहणम् । उत्पचादिषु प्रत्येकमुदः पाठो नियमार्थः । तेनोदः प्रयोग एवेष्णुच् । उत्तरार्थ इति । भुव इत्यस्यैव ग्लाजिस्थेतिसूत्रे चकारेण संग्रहार्थः । भाष्य स्वरस इति । प्रतिपादितमेतत्प्राक् । स्पष्टप्रतिपत्तये इह तदेवाह । तत्र हीति । इतिभाष्यमिति ॥ धिनुणकर्मकाणामित्यत्रवीकम् । विनाशेत्यत्र ण्यन्तविनाशेः कृतणिलोपेन निर्देशः । अकारउच्चारणार्थः । मूले ग्लानामिव इति । अनूयतिभिर्स्भ्य इत्यादिः । अन्यथाऽत्र स्वरे विशेषसत्त्वेन वृत्त्या सिद्ध इत्युक्तिर्विरुद्धा स्यात् ॥ अनभिधानमिति । अत्र प्रमाणमकृतसूत्रस्थभाष्यमेव ॥ तत्र हि पदिग्रहणमनर्थकमनुदात्तेतश्च हलादेरितिसिद्धत्वादित्यभिधाय पदस्यादेरुकञ्विधीयते लषपतेति न विशेषविहितस्य सामान्यविहितं युचबाधेतेति प्रतिपाद्य एतज्ज्ञापयत्याचार्यस्ताच्छीलिकेषु ताच्छीलिका वासरूपेण न भवन्तीति प्रदर्शितम् । यदि मरूतरादपि पदेः स्यात्तदा ज्ञापकत्ववर्णनमसंगतं स्यात् । बाध्यते इति । निन्दहिंसेतिसूत्रे वासरूपविधिना वुञादयो नेत्युक्तमिह तु परस्परं न ,नेत्यभ्युपगम्योति विशेषः । शोकोपाद्य इतीति नेदम्भाषिकम् । किन्त्वर्थसिद्धमित्येतत्प्रतिपादयति । सुप्प्रत्यय इत्यादिना । प्रयोजनाभावादिति । न च स्वरे विशेषः । यदि लयोः संज्ञा स्यात्तर्हि गपि मर्त्ये कादेशे च कृते एकादेश उदात्तेनेतिसूत्रेणोदात्तत्वे विशेषाभावस्य स्पष्टत्वात् । सुपो धादित्वेनापि संज्ञा स्याचत्तं मिलं ज्ञाया । इदं मिवमिमीति । इदमुपलक्षणम् । लघायुभर्तोयुजन्दयोरप्येवं सिद्धिः । दाधेट्सिशद । दा इतियोगत्वदारूपाणामनुकरणम् ॥ कर्मकर्त्तर्येवेति ॥ स्नाभावादिति शेषः । तेन । वादित्वत्र टकारस्य सत्त्वे न ङपरत्वे चकारस्य तात्पर्यादकृत

स्यैव ग्रहणं स्यात् ॥ जागरूकः ॥ अधुनेतिवस्समुदायस्य निपातनेन सिद्धे स्वातन्त्र्येण ऊकस्य विधानमुत्तरार्थम् ॥ मूले भाविनेति ॥ यदि क्रतेजायमानस्येत्यर्थः ॥ वावदूकशब्दस्तूणादिप्रत्ययान्तः । स्वरूपावाधेन । प्रत्ययस्वरूपावाधेन । न चैवञ्च प्रत्यत्यत्घटककारस्येत्वमपि न स्यादिति वाच्यम् ॥ तत्तु रिजंगुरिरितिभाष्योदाहरणादित्वस्य प्रवृत्तेः ॥ अत एव स्वरूपावाधेनेत्यपि लब्धम् ॥ अस्मिन्सूत्रे भाष्ये उत्सर्गशृकदसि सदादिभ्यो दर्शनादिति ॥ तेन सेदिः नेमिरित्यादि सिध्यतीत्युक्तम् ॥ यद्यप्यादितिसूत्रच्छान्दसकार्यप्रदर्शकप्रकरण एवोपन्यसनीयन्तथापि भाषायामिति वार्त्तिकं लौकिकप्रयोगाणां साधुत्वान्वाख्यापकमिति तद्‌द्योतनाय प्रकृतेऽस्य लेखः ॥ सष्टभाष्य ,इति ॥ एवमेव स्पष्टमित्यर्थः ॥ मूलरीत्यान्वाख्याय सिद्धान्ताभिप्रायेणाह ॥ वस्तुतस्त्विति । ननु भाष्ये दृणातेर्ह्रस्वश्चेत्युक्तमिति दीर्यतेरित्यनुपपन्नमत आह ॥ दीर्यतेर्वेति तत्र हि ददत् दृणातेर्दीर्यतेर्वेति पठितम् ॥ विपरीतनियम इति ॥ संज्ञान्तरयोरेव क्विविति नियम इत्यर्थः ॥ विधेयसंकोचापत्तेरिति ॥ यत्रैवकारस्ततोऽन्यत्र नियम इत्यस्य सिद्धत्वेन विधेयस्य क्विपः संकोचापत्तेरित्यर्थः ॥ अत्र संज्ञात्वञ्च यावद्द्रव्यभाविसंज्ञा तुल्यत्वन्तु व्यक्तिविशेषसम्बन्धित्वेनेव ॥ व्याख्यानादिति ॥ कर्मण्यणितिसूत्रानन्तरमेव षः ष्ट्रन्नितिवक्तव्येऽत्र प्रकरणे पृथगेतादृशसूत्रकरणमूलकव्याख्यानादित्यर्थः । तादृशपाठे यद्यपि दाम्नीतिसूत्रे पुनः ष्ट्रन्ग्रहणमावश्यकन्तथापि लाघवमस्त्येवेति भावः । दाम्नीशस् । अत्र दशेति ख्यातनलोपस्य दंशधातोर्निर्देशेनाद्धित्यपि क्व चिदस्य नकारो लुप्यते तेन दन्तेषु दशना इति प्रयोगः सिध्यति । न च निपातनस्य बाधकत्वमेवेति सर्वत्रैवास्य नलोप इति दंष्ट्रेत्यनुपपन्नमिति शङ्क्यम् । शुनो दन्तदंष्ट्रेतिसूत्रनिर्देशेन क्वाचित्कत्वस्यैव कल्पनात्।दंष्ट्राशब्देऽजादित्वाट्टाविति प्रागुक्तम् । व्याख्यानादिति । व्याख्यानादिति । दावनेत्रादीनामकरणोपपादानामपि प्रयोगदर्शनमूलकव्याख्यानादित्यर्थः । यदुक्तं हल्येति तदभिप्रायमाह । एवमन्वय इति भाष्यस्वरस इति । तत्र हि कर्त्तरिकृदितिसूत्रस्य तत्र भव्याद्यर्थमित्यनेन भव्यगेयेतिसूत्रेण विधीयमानस्य प्रत्ययस्य कर्तर्यपि कर्त्तरिकृदिति सूत्रम् ज्ञापयेन प्रत्याप्तकप्रयोजनमभिधाय ज्ञापितेयतयोस्तु कृद्भिः समावेशवचनं

प्रयुक्त इति यथा । अत एवोक्तमध्यायेनेति । यत्र तु सोपसर्गा एव रू ढिशब्दास्तत्रापि वाक्येन गतिना न भवति सम्बन्धः । यथा व्याघ्र इति । अत्र प्रव्याघ्र इति न भवति । शीलं स्वभावः । फलांशविषयकाकाङ्क्षा राहित्यम् । सा शीलं यस्येति बहुव्रीहिः । तद्धर्मा । तत्क्रियाचारक र्ता । अथ तत्क्रियाचरणमस्य धर्म इति ज्ञानप्रयोजकम् । साधु कारी तु तो विनापि यो धात्वर्थं साधु करोति सः । कर्ता कटानिति । ताच्छील्ये च कृधातोस्तृन्प्रत्ययः । अलंकृञ्निराकृञ् । अत्र कृञ्ग्रहणेन तुप्रसिद्धत्वात्करो तेरेव ग्रहणम् । उत्पचादिषु प्रत्येकमुदः पाठो नियमार्थः । तेनोदः प्रयो ग एवेष्णुच् । उत्तरार्थ इति । भुव इत्यस्यैव ग्लाजिस्थेतिसूत्रे चकारेण संग्रहार्थः । भाष्य स्वरस इति । प्रतिपादितमेतत्प्राक् । स्पष्टप्रतिपत्तये इह तद्वे वाच्य । तत्र हीति । इतिभाष्यमिति ॥ छिनुणकर्मकाणामित्येतस्योक्तम् ॥ विनाशेत्यत्र णान्तविनाशेः कृतणिलोपेन निर्देशः । अकारउच्चारणार्थः । मूले गन्तुनासिद्ध इति । मनुयतिभिर्वभ्य इत्यादिः । अन्यथाऽत्र स्वरे विशेषसत्त्वेन गत्नुना सिद्ध इत्युक्तिर्विहता स्यात् ॥ अनभिधानमिति । अत्र प्रमाणमुक्त सूत्रस्थभाष्यमेव ॥ तत्र हि पदिग्रहणमनर्थकमनुदात्तेतश्च हलादेरितिसिद्ध त्वादित्यभिधाय अयमपदेशकञ्विधीयते लषपतेति स विशेषविहितस्सामान्य विहितं युचम्बाधेतेति प्रतिपाद्य एतज्ज्ञापयत्याचार्यस्ताच्छीलिकेषु ताच्छीलि का वासरूपेण नभवन्तीति प्रदर्शितम् । यदि मकारादपि पदेः स्यात्तदा ज्ञाप कत्ववर्णनमसंगतं स्यात् । ज्ञाप्यते इति । निन्दहिंसेतिसूत्रे वासरूपविधिना व लादयो नेत्युक्तमिह तु परस्परं न ,नेत्यभ्यवधायीति विशेषः । शोडो पाष्य इतीति नेदम्भार्त्तिकम् । किमर्थमिदमित्येतत्प्रतिपादयति । वुञ्प्रत्यय इत्यादिना । प्रयोजनाभावादिति । न च स्वरे विशेषः । यद्विलपदेशसंज्ञा स्या त्तर्हि शपि सत्यं कादेशे च कृते एकादेश उदात्तेनेतिसूत्रेणोदात्तत्वं विशेषा भावस्य स्पष्टत्वात् । लुगो यादित्वे नापीत्संज्ञा स्यात्तर्हि तु शक्या । इष्टं सिद्ध मितीति । इदमुपलक्षणम् । सपाश्यद्धात्विगन्दगोरप्येवं सिद्धिः । दारिद्रविता द्र । दा इतिप्रयोगमनदारूपाणामनुकरणम् ॥ कर्मिकर्तर्येवेति ॥ अभावादिति शिवः । तेन । घादिस्वच इकारस्य सत्त्वेन ॥ तपराते वरकारस्य तामपरत्वादन्तर

भ्रन्तरङ्गपरिभाषाया इति । अस्य दोषः प्रद्वित इत्यत्रान्वयः । भाष्यकृतेति शे-
षः । एवं हि तत्रोक्तम् । यणादेशादियुवौ । यणादेशादियुवावन्तरङ्गतोऽभिनिष्ट-
त्वाच्च प्राप्नुत वैयाकरण । मोवख इति । लक्षणा हि भवति द्वयोरपि वृद्धिप्रस-
ङ्गे इयुवौ भवत इति । नैषदोषः । अनवकाशावियुवौ । अचीति चावश्यकम् ।
प्रैयमध प्रैयङ्गव इत्येवमर्थमिति ।प्रसङ्गाद्व्याकरणान्तरे लक्षणं विचारयितुमाह।
यणादेशा दिति ।नकपीतिसाहचर्येणेति । कपिपरेऽणतद्धितपरकएवेत्ययमधिका-
रात्केणइतिसूत्रेऽप्यणतद्धितककारपरक एव गृह्यत इति भाव. । लोष्टपलितौ ।
लुषेर्लोष्टमिति भाष्यमिति । स्थानेन्तरतम इतिसूत्रे भाष्ये लोष्ट चिसो वा-
त्त्वेगं गत्वे तिभाष्यप्रयोगाल्लोष्टशब्दोऽद्दर्चादि' । पलितं शैलजे तापे केशपाके
चकर्दमे । दर्भांकुर इत्युपलक्षणम् । पुल्लिङ्गस्य रोमाञ्चेपि दर्शनात् । सूची
तु सीवनद्रव्ये ध्याङ्किकोऽभिनयान्तर इति । ध्याङ्किको रोमाञ्च ॥ प्रागुक्त इति ।
एवञ्चतत्रतं प्रकृत सूत्रे ठत्येव पाठ । पन्ढस्तु वाहुलकात् । लोत्रं चोरचि-
न्हं । भाष्ये उक्तमिति । एतच्च वाहुलकत्वेन तथाप्यस्य साधनं बोध्यम् । श्रग-
स्तिरित्यत्रागशब्दे उपपदेऽसुधातोस्तिप्रत्ययो वाहुलकादित्यादिशयेन मूलेऽ-
सावुक्त' प्रकारान्तरेणापि तस्य सिद्धिमाह । अत्रे ति । इयोः । अगस्तिशब्दाग-
स्त्यशब्दयो । आद्यस्ये ति । रूपमिति शेष । अगस्त्यशब्दस्य प्रकारान्तरेणापि
तस्य सिद्धिमाह । अगस्तिशब्द इति । श्रयते. स्वाङ्गे शिर किच । शिर. शिर
सी । शृणातेर्घ्वर्थे के इकारादेशेऽदन्तोऽप्ययम् । अत एव पिण्ड दद्याद्गयाशिर
इत्यपि साधु । छडगोर्भ्यां रूपस्वाङ्गयो पुट्च । शपो गुह्यमिति । वाहुलकात्प
प्रत्यये शेपशब्दोऽदन्तोऽपि ॥ यस्यामुमन्त्र प्राहराम शेपम् । नह्दिवि भश।नह-
धातोरसुन् भयादेश ॥ नभो व्योम्नि नभो मेघे श्रावणे च पतद्ग्रहे । प्राणे मृ-
णालसूत्रे च वर्षासु च नभ स्मृत । पतद्ग्रह इत्यस्य पतत कफादेर्ग्रह इ-
त्यर्थ । पीकदानीतिलोके । मियुनेऽसिः । धातूपसर्गयोर्योगे मतोण्धातोर-
सिप्रत्यय. स्यात् । पुरूरवा पुरूरवस्शब्दो निपात्यते इत्यर्थ । अप्सरा' ॥ प्रा
येणायं भूम्नि । स्त्रियां बहुष्वप्सरस स्वर्वेश्या उर्वशीमुखा' । ध्वनितमिति । ए-
कवचनान्तप्रयोगेष ध्वनितमित्यर्थ' । विदिभुजिभ्याम् । आभ्यामसिः स्यात् ।
विश्वे वेदाः । विश्वं वेत्तीति विग्रह' ।विश्ववेदास्तनूनपात् ।विश्वभोजा.। विश्व-

ज्ञापकमसमावेशस्य यदयं कर्त्तरि चर्षिदेवतयोरितिसिद्धे समावेशे मसावेशार्थं चकारद्वरोति तज्ज्ञापयत्याचार्यो न समावेश. ॥ अत्र समावेशः कारणरूपेणार्थेन बोध्यः ॥ एवमुपपाद्य भाष्यकारेण वार्त्तिककारोक्तिर्यत्तावदुच्यते ऋषिदेवतयो. रुक्तिः समावेशवचनं ज्ञापकमसमावेशस्येति-नैतज्ज्ञापकसाध्यमपवादरुत्सर्गा बाध्यन्त इति ॥ एष एव हि न्याय'। यदुतापवादैरुत्सर्गा बाध्येरन्निस्युक्तम् ॥ यदि तत्र यथासंख्यमभिमतं स्यात्तदा चकारसद्भावे सति तस्य सम्भवादेवमुक्तिरसंगता स्यात् ॥

## ॥ इति पूर्वकृदन्ताः ॥

अथावसरसङ्गत्योणादिप्रत्ययविषये विशेषमाह ॥ अथोणादय इत्यादिना ॥ निरूप्यन्ते इति शेषः ॥ तत्रापि ॥ कल्पितावयवार्थकल्पनायामपि ॥ अन्यत्रेति ॥ वर्त्तमानकालातिरिक्तकालेनेत्यर्थः ॥ इदमाप्यम् ॥ अन्यकाले चाइस्तेति यजन्तधातुव्याख्यानपरम्। व्याकरणान्तरादिति ॥ व्याकरणान्तरीयाणाम् येषां साधुत्वे चानुशासनमेव प्रमाणम् ॥ उणादिप्रत्ययाः साधव. ", पाणिनिकर्त्तृकानुवादविषयत्वादिति ॥ अत एव ॥ व्याकरणान्तरोक्तत्वेऽपि साधुत्वस्याभिमतत्वादेव ॥ प्रयोजनमिति। भाष्यकृतेति शेष ॥ अथप्रक्रतिस्तनुदृष्टेरितिप्रयोगाद्दिभाषा गुणेऽस्त्रियामित्यस्य क्व चि स्त्रियामपि प्रवृत्ति । एतदेव वचनम् व्याचष्टे । गाद्यात्सर इति ॥ नैरुक्तादयः ॥ एतच्छास्त्रम् ॥ एतच्छासितव्यम्। पाणिनीयसूत्रार्थमाह। उणाद्यन्ता इति। एतावतैव कृतमिति। पाणिनिनेति शेष. ॥ मन्वव्युत्पन्नत्वे अर्पिरागच्छत्यत्र रेफः सर्पिर्वेत्यत्र षकारत इत्यत्र मोऽनुपपन्न' प्रत्ययावयवत्वाभावादत आह। सर्पिषीति। अत एव। एतेषाम व्युत्पन्नत्वादेव। मद्दीयमेति। व्याकरणान्तरीयत्वेन। अत एव। पव्युत्पन्नत्वादेव। लियामिति। किव्यभीत्यादिसूत्रादावित्यर्थः। अत एव। तेषां पादिर्माभावाभावादेव। ननु यौ पात इत्यनुपपन्नम्। युवन्त्यस्य पाणिनिनाऽभावादत आह। युष्टेति। उणादिप्रत्ययान्तानामव्युत्पन्नत्वलोकारे आर्धविशेषणद्वतो भारयति। यत्विति। तस्य भाष्यस्य व्याकरणान्तरानुमानित्वे इत्याशयाद्द। दर्शति ॥

घन्तरङ्गपरिभाषाया इति । अस्य दोषः शङ्कित इत्यथान्वयः । भाष्यकृतेति शेष । एवं हि तत्रोक्तम् । यथादेशादियुक्तौ । यथादेशादियुक्तावन्तरङ्गतोऽभिनिर्वृत्तात्र प्राप्नुत वैयाकरण । मोवञ्च इति । लघणा हि भवति रकोरचि इत्विप्रसङ्ग' इयुवौ भवत इति । नैवदोष । घनञकाशावियुक्तौ । अचीति चावश्यकम्। प्रैयमध प्रैयङ्गव इत्यैवमर्थमिति ।प्रसङ्गाद्व्याकरणान्तरे लघणं विचारयितुमाह। यथादेशा दिति ।नकपोतिसाहचर्येणेति । कपिपरेऽपतद्धितपरकएवेत्यर्थाधिकारात्कोषडतिसूत्रे ऽप्यपतद्धितककारपरक एव गृह्यत इति भावः । लोष्टघन्तिरौ । लुशेर्लोष्टमिति भाष्यमिति । स्थानेन्तरतम इतिसूत्रे भाष्ये लोष्ट इत्सो वाहुवेगं गत्वे तिभाष्यप्रयोगाल्लोष्टशब्दोऽह्वचादि' । पन्तिर्त शैलजे तापे केशपाके चक्रहे मे । दर्भाकुर इत्यु पलक्षणम् । पुलिनङ्गस्य रोमाञ्चेपि दर्शनात् । सूची तु सीवनद्रव्ये आङ्गिकोऽभिनयान्तर इति । आङ्गिको रोमाच्च ॥ प्रागुक्त इति । एवञ्चतन्मते प्रकृत सूत्रे ठेत्येव पाठ । पन्ढस्तु वाहुलकात् । लोत्रं चौरचिन्हं । भाष्ये उक्तमिति । एवञ्च वाहुलकत्वेन तथाप्यस्य साधनं वोध्यम् । अग स्तिरित्यत्रागशब्दे उपपदेऽसधातोस्तिप्रत्ययो वाहुलकादित्यादिशयेन मूलेऽमावुक्त' प्रकारान्तरेणापि तस्य सिद्धिमाह । अत्रे ति । इयो । अगस्तिशब्दागस्त्यशब्दयो । आद्यस्ये ति । रूपमिति शेष । अगस्त्यशब्दस्य प्रकारान्तरेणापि तस्य सिद्धिमाह । अगस्तिशब्द इति । श्रयते स्वाङ्गे शिर किच । शिरः शिरसी । शृणातेर्थर्थे के इकारादेशेऽदन्तोऽप्ययम् । अत एव पिण्ड' दद्याङ्गयाशिर इत्यपि साधु । इडशीभ्या रूपद्वाङ्गयो पुटच । शपो गुग्गमिति । वाहुलकास्य प्रत्यये शेपशब्दोऽदन्तोऽपि ॥ दस्यासुगन्त प्राहराम शेपम् । नहेर्दिवि भश्च।नह-धातोरसुन् भश्चादेश ॥ नभो व्योम्नि नभो मेघे श्रावणे च पतद्गृहे । घाणे मृणालसूत्रे च वर्षासु च नभ स्मृत । पततद्ग्रह इत्यस्य पतत कफादेर्यह इत्यर्थ । पोकदानीतिलोके । मिथुनेऽसि । धातूपसर्गयोर्योगे मतीणधातोरसिप्रत्यय स्यात् । पुरूरवा पुरूरवस्शब्दो निपात्यते इत्यर्थ । अप्सरा' ॥ प्रायेणायं भूम्नि । स्त्रिया बहुष्वपूसरस' स्वर्वेश्या उर्वशीमुखा' । ध्वनितमिति । एकवचनान्तप्रयोगेष ध्वनितमित्यर्थ । विदिभुजिभ्याम् । आभ्यामसिः स्यात् । विश्वे वेदा' । विश्वं वेत्तीति विग्रह' ।विश्ववेदास्तनूनपात् ।विश्वभोजा । विश्व-

भोजाः शत क्रतुः । हृभूलुटितनिताड़िभ्य उलच् । तपश्च । अयमन्तोदात्तः । पूर्वस्तु मध्योदात्त इति पुनर्व्युत्पादितः । शीङो ह्रस्वश्च । शिखा शाखा वर्हि-चूड़ाचूडामात्रेऽपि । चूडामात्रे शिखायाश्च ज्वालायां प्रपदेऽपि चेति दर्शनात् । अनिष्टन्लोपश्च । जटा । जटालग्नकचे मूले मांस्यां च पुनर्जटी । उणादयो बहुलम् । अत्रोणादिशब्देनाष्टाध्याय्यामेतत्सूत्रोत्तरसूत्रैर्विहितानाम्प्रत्ययानाङ्ग्रहणमिति-शङ्कावारणायाह । अत्रोणादीति । मूले केचिदविहिता अप्यूह्या इत्यादिना यथा ऋलृक्सूत्रभाष्ये लृकारोपदेशस्य प्रयोजनकथनावसरे चतुष्टयी शब्दानां प्रवृत्तिरित्येतत्पक्षोपष्टम्भेन लृफिड़लृफिड्डशब्दयोः परतो लृकारोपदेशे सति यदृच्छाशक्तिजानुकरणप्लुत्याद्यर्थमित्यनेन यदृच्छाशब्दे प्रयोजनमभिधाय त्रयी शब्दानाम्प्रवृत्तिर्न सन्ति यदृच्छाशब्दा इतिकथनोत्तरमस्ति प्रवृत्तिश्च हि लोके दृश्यते तस्मात्फिडफिड्डावौणादिकौ प्रत्ययावित्युक्तम् ॥ संज्ञासु धनादिभूतासु कोशादिप्रसिद्धासु ॥ कार्यात् ॥ गुणनिषेधादिकार्यात् ॥ एतदुणादिषु शास्त्रं शासितव्यमित्यर्थः ॥ न च वर्तमान इतिसूत्राद्वर्तमान इति नानुवर्त्तनीयमेवञ्च भूतादौ सिद्धिर्भविष्यत्येवेति भूतेऽपीत्यादि न कार्यमिति वाच्यम् । प्रायेण वर्त्तमान एव क्वचिदेव तु भूते भविष्यति चेति व्युत्पादनाय पुनः सूत्रारम्भात् ॥ तुमुन्ण्वुलौ क्रियायाम् ॥ अत्र क्रियार्थायामित्येव क्रियाया माभि पुनः क्रियायामित्युपादानात्साध्यमात्ररूपभावाद्येतराविशेषणतया भासमाना क्रिया तद्वाचकस्य ग्रहणम् ॥ तेन भोक्तुं पाकः ॥ भोक्तुम्पाचक इति च न । न-चैवम्भोक्तुम्पचति पश्यत्यत्राप्याप्तिरिति वाच्यम् ॥ क्रियायामित्यनेन क्रियाया एवोपस्थितौ तस्या उपपदत्वासम्भवेन तद्वाचकप्रकृतिके लक्षणावश्यं कार्या प-रञ्च तद्वाचकप्रकृतिमात्रजन्यो यः पदार्थोपस्थित्यात्मको बोधस्तत्प्रकारकत्वे-तराविशेषणत्वस्य ग्रहणात् । तदेतदाह । क्रिया चार्थेत्यादिना । तुमर्थे सेसे-रिति मूले उक्तमादाहृतम् । यद्यपि तेन शास्त्रेण तुमुन् स्यात्तदा भविष्यत्-कालाप्रतीतिरकेनोर्भविष्यदाधमर्ण्ययोरित्यत्राकप्रत्ययान्तस्य योगे षष्ठीनिषेधः स्या-दित्यत आह ण्वुल्ग्रहणसामर्थ्याच्च भविष्यदधिकारविहितस्येति भाष्यम् इति केचित्तदनुरूपयन्ति । पठकोऽस्तीत्यत्रेति । न सम्यगिति । इत्याह भाष्ये च भविष्यत्-कालवाचकप्रत्ययवदादिति भिन्न. पुनर्ण्वुलोऽस्यापि तु प्रकरणगृहे न्यूनत्व

षाभावेप्यकान्तमावत्त्वे न खुला सिद्धमित्यत्र तात्पर्यम्। न चेह खुलप्रसङ्गेऽपि क्रियावाचकप्रकृतिके तेन खु ल्स्यादिति वाच्यम्। वाक्यसंस्कारे तादृगवस्थः नैनैव खु लः स्वीकारात्। यत्र स्वातन्त्र्येणाकप्रत्ययान्तस्यसाधनीत्तरं वाक्यस्य प्रयोगस्तस्याकस्य सम्भवेऽपि न तत्र षष्ठीव्याहत्त्वर्थत्वया व्याख्यानमित्याशयेनाह। न चेत्यादि। ननु यथा ण्वुल् न तथा ल्ड़पि न स्यादत आह। लृट् विति। यत्रेदमवधेयम्। यद्यप्यनेन सूत्रेण ण्वुलवत्तुमुनोऽपि विधानं तथाप्ययमभावे भावयन्तो भाव इतिवाचनात्। अत एव तुमर्थाच्च भाववचनादित्यत्र तुमर्थादित्यनेन भाववचनत्वं लब्ध इति व्याख्यातम्। प्रकृते च भावोऽमलभूत एव। अव्ययार्थे लिङ्गसंख्यादीनामनन्वयात्। तुमनन्तार्थस्य चोपपदार्थक्रियायां सोऽद्देश्यकालसमानकर्तृकत्वोभयसम्बन्धेनान्वयः। एवञ्च कृष्णन्द्रष्टुं यातीत्यस्मात्कृष्णकर्मकभविष्यद्दर्शनविशिष्टं यानं कृष्णन्दर्शको यातीत्यस्मात्, कृष्णकभविष्यद्दर्शनकर्तृ कर्तृ कत्वादृशदर्शनविशिष्टं यान मिति च शाब्दबोधः॥ कर्तरि कृदितिशास्त्रेण ण्वुलः कर्त्रर्थकत्वप्रतिपादनेन कर्तुः प्रकृत्यर्थम्प्रति प्राधान्यात्॥ ननु यावत्पुरा निपातयोरितिसूत्रे यावत्पुरादिषु लट्विधिर्लु टः पूर्वविप्रतिषेधेनेति वार्त्तिकमुक्तोऽस्तम्॥ यावद्भुङ्क्ते पुराभुङ्क्ते इत्यत्र लटोऽवकाशः श्वः कर्त्तेत्यादौ लुटोऽवकाशः॥ यावच्छो भुङ्क्ते इत्यत्र तु लुड़् वा। इदं च वार्त्तिकं यावत्पुरेतिसूत्रस्थानद्यतने लुडित्यत्रानुवर्त्य वाक्यभेदेन च सम्बध्यते च यावत्पुरायोगे लटो विधानेन सिद्धा प्रत्याख्यातमेव तु तुमुन्ण्वुलाविति सूत्रस्यापि मध्यपतितत्वादथापि वाक्यभेदेन तत्सम्बन्धः स्यात्तथा च यावत्पुरायोगे भविष्यति क्रियार्थायां क्रियायां लड़ेव स्यादिति चेन्न। विभाषा कदाकर्ह्योरित्यत्रे वाचापि तदसम्बन्धात्। मण्डूकप्लुत्या च तत्र तस्य सम्बन्धः। अत एव यावत्पुरेतिसूत्रेऽनद्यतनेलुड़ित्यत्रेति विशेषोऽलम्। तुमुनः प्रसङ्गात्तुमुन्विधायकसूत्रान्तरमुपन्यस्यम्मूले॥ समानकर्तृकेषु तुमुन्॥ इच्छार्थेषु लिङ्लोटावित्यत इच्छार्थेष्वित्यनुवर्तते इच्छति भोक्तुम्। अत्र तुमुनन्तार्थस्य विषयतासम्बन्धेनेषधात्वर्थम्प्रति विशेषणताऽस्ति तथैव भोजनविषयिणी इच्छे त्याकारकस्य शाब्दबोधस्यानुभवात्॥ न तु भोजनार्थत्वस्य प्रतीतिरिति पूर्वसूत्रे णाप्राप्तस्तुमुन्विधीयते। चिकीर्षति पिपठतीत्यादौ सर्वत्र

कर्तु मिच्छतीतिरीत्या यत्र विग्रहः क्रियते तत्र सर्वेषामेव तुमुन् ॥ इत्तिविग्रहवाक्ययोः समानार्थकत्वस्य न्याय्यत्वेन सन्नन्तजन्यशाब्दबोधे सनर्थेच्छाया प्रकृत्यर्थनिष्ठविषयतासम्बन्धावच्छिन्नविशेषणतानिरूपितविशेष्यतया प्रकृत्यर्थ समानकर्तृकत्वेन च यथा भानन्तथैव तुमुनन्तादपीति ॥ शकधृष ॥ षयमप्य क्रियार्थोपपदार्थ एवारब्धो योगः ॥ शक्नोति भोक्तुम् । धृष्णोति भोक्तुम् ॥ जानाति भोक्तुमिति ॥ शकधात्वर्थोऽनुकूलसामर्थ्यविषयकनिश्चयस्तद्घटकानुकूलत्वं निरूपितत्वसम्बन्धेन भुजधात्वर्थस्यान्वयेन भोजनविषयकस्य शकधात्वर्थस्यानुभवात् ॥ मुख्यविशेष्यतया भासमानो यस्तादृशो निश्चयस्तस्मिन् भोजनायेत्वन्तु न शाब्दबोधविषय इति तुमुन्ण्वुलावित्यस्याप्राप्तिः ॥ धृष्धात्वर्थोऽपि तादृशो निश्चय एव ॥ ज्ञाधात्वर्थे विषयतयाऽन्वयस्तु प्रसिद्ध एव ॥ तदुद्देशेनानुष्ठीयमानत्वं च तादर्थ्यन्तस्याप्रतीतिरस्त्येव । भोक्तुं ग्लायति । ग्लानिः सामर्थ्याभावनिश्चयस्तस्मिन्नपि भोजनस्य विषयतयाऽन्वयः । भोक्तुं घटते अत्र घट्धात्वर्थो योग्यता सामर्थ्यनिश्चयस्वरूपैव । भोक्तुमारभते । आरम्भस्तद्विषयिणी कृतिरस्याभोजनविषयकत्वमप्रसिद्धमेव । भोक्तुं लभते ॥ लभधात्वर्थः प्राप्तिस्तस्या भोजनसम्बन्धित्वं तु भोजनोद्देशेनानुष्ठीयमानत्वम् । भोक्तुं प्रक्रमते ॥ भोक्तुमुत्सहते ॥ उभयथापि भोजनविषयकोत्साहकृतेरेव प्रतीति । भोक्तुमर्हतीत्यत्रापि योग्यताया एव प्रतीतिः । भोक्तुमस्ति भवति विद्यते वा । सर्वत्रास्त्यर्थे सम्बन्धित्वमात्रप्रतीति. व्याख्यानमेवेति । शकधृषधात्वोः ग्रहणपादानमूलमत्राप्याख्यानमेवेत्यर्थः ॥ एवमस्तीत्यस्य विभक्तित्वं नैतस्य पूर्वनिपातं कर्तव्यो तदकरणमपि मूलम् ॥ कालसमयवेलासु ॥ भोक्तुं कालोऽयमित्यादौ भुजधात्वर्थस्य कालिकसम्बन्धावच्छिन्नकार्यतानिरूपितकारणताकयोग्य स्वसमानकालप्रवर्तनप्रयोजकनिश्चयविषयत्वोभयसम्बन्धेन कालि विशेषणता ॥ मम भुक्तानि पचन्तीतिप्रत्युदाहरणाद्वर्तमानत्वस्य धात्वर्थविशेषणतया प्रतीतिर्भोक्तुं कालः इत्यत्रापि न तथेति ध्वनितमित्यत्र चाह ॥ पच धात्वर्थेनेति ॥ भावचनाश्च ॥ भविष्यतीति क्रियार्थायाम् क्रियायामिति चानुवर्तते । यथासङ्ख्यां प्रत्ययानां घञादीनां विभिपर्यविहितम् सूत्रमदाभारत्यादेयुत् ॥ न च वासरूपविधिनातेविभाविष्यतीति वाच्यम् । पूर्वोत्तरघटकतायूपस्य

णेन क्रियार्थायां क्रियायामुपपदे वासरूपन्यायेन ण्वुलादयो नेत्युक्तत्वेन घञपि न स्यादित्याशयात् ॥ न चायं तुमुन् यद्यपि भावे विधीयते तथापि घञ्वाच्यो भावः सत्त्वभूतोऽयं त्वसत्त्वभूत इति कथमनेन घञो बाधस्य प्रसक्तिरिति वाच्यम् ॥ तादृशविशेषस्य स्फुटप्रतिपत्त्यर्थमेवास्य सूत्रस्य करणात् ॥ भाववचनशब्देन घञादीनामुपस्थित्यर्थमाह ॥ बाहुलकादिति ॥ प्रकृतसूत्रे वचनग्रहणादधिकार्थलाभ इत्याह ॥ न चेत्यादिना ॥ यागाय याति ॥ घञन्ताद्धात्वर्थमात्रस्य प्रतीतिस्तस्य धात्वर्थक्रियायामनुकूलत्वसमानकर्तृकत्वोभयसम्बन्धेन प्रकारतया शाब्दबोधे भानम् ॥ अण् कर्मणि च ॥ अनेन सूत्रेण विहितोऽण् कर्तरि भवति कर्तरि कृदितिसूत्रादेवञ्च क्रियार्थायां क्रियायां विशेषविहितौ ण्वुल्प्रत्ययोऽणो बाधकः स्यादित्यारम्भः ॥ चस्य प्रयोजनमाह ॥ उपपदेति । सन्नियोगः । समुच्चय । अत एव अत्रवासरूपन्यायाप्रवृत्तेरेव । एवञ्च ॥ चस्याणः स्वविषये बाधकस्यापि ण्वुलो बाधकत्वे च ॥ तत्र विशेषमाह ॥ पुनरनुवादेनेति ॥ निषेधाप्रवृत्तिमात्रमिति ॥ अत एवोक्तं प्राङ् ण्वुलपीति ॥ एवम् । चस्य प्रतिप्रसवविधित्वे ॥ परत्वादित्यस्योत्कृष्टत्वादित्यर्थस्तदाह ॥ आहस्येति । भाष्ये स्पष्टमिति ॥ तत्र हि यः कर्मण्यणितिसूत्रेणाण् विहितः स क्रियार्थायां क्रियायामुपपदे भविष्यतीत्यत्र च भविष्यतीत्याशङ्क्यापवादविषयेऽनिवृत्त्यर्थमितिसमाधानोत्तरमिदमुच्यते ऽपवादविषयेऽनिवृत्त्यर्थमिति । न पुनरुत्सर्गविषये प्रतिपदविध्यर्थं स्यात् इदानीमेव ह्युक्तं क्रियायामुपपदे क्रियार्थायां वासरूपेण ण्वुलादयो नेति अण् चापि ण्वुलादिरिति पुनराशङ्कायामिवन्तार्थं भयमनेन क्रियतेऽपवादविषयेऽनिवृत्तिरुत्सर्गविषये च प्रतिपदविधानमित्युक्तम् । ततोऽपूर्वविधानापेक्षया प्रतिप्रसवे लाघवादुत्सर्गविषय एव काण्डलावो व्रजतीत्यत्र ण्वुलस्याधित्वाऽण् स्यादपवादविषये किम्बलदायो व्रजतीत्यादौ न स्यादित्यभिप्रायेण कथं पुनरेकेन यत्नेनोभयं लभ्यमित्याशङ्कायां कर्मग्रहणमाकर्षादित्यभिधाने कथं पुनरन्तरेण कर्मग्रहणे कर्मण्यञ् लभ्य इतिपरिप्रश्ने वचनग्रहणमपि प्रकृतमनुवर्तत इत्युक्तम् ॥ तेनाहत्तिर्भ्यनेति भावः । मूले मृष्यतीति स्वर्ग इति ॥ रोगविशेषस्य नामेयम् ॥ स्थ स्थिरे ॥ सरति कालान्तरमिति पाठः । सारांशस्य दृढत्वाच्चिरकालं स्थितिर्भवति । सरतेरित्यनेन भा-

दिशुहीत्यादिपठितयोर्ग्रहणम् । स्थिर इति कर्त्तरि कृदितिसूत्रोपस्थितस्य कर्तृ-
विशेषणमित्युक्तत्वेन स्थिरशब्दे उपपदे इति शङ्का निरस्ता ॥ सारो बलमि-
तिमूलेभिहितमेतच्चहरत्यनुसारेणास्मिन्नर्थे सृधातुर्विलक्षणचेष्टानुकूलव्यापारा-
र्थकः ॥ बलं हि विलक्षणचेष्टां कारयति ॥ वस्तुतस्तु नैतद्युक्तमित्याह । भाष्ये
त्विति । तत्र हि बले शान्तसारः खदिरसार इत्यभिहितम् । यद्यपि घञबन्ताः
पुंसीत्यनेन पुंस्त्वमस्य प्राप्तस्तथाप्यर्द्धर्चादिगणे पाठादुभयलिङ्गोऽयम् ॥ अत
एव ॥ सिद्धावस्थापन्न इतिविशेषणादेव ॥ स्त्रियामिति दिक्प्रदर्शनमिति ॥ कर्म-
व्यतिहारे णच् स्त्रियामितिसूत्रघटकं यत्स्त्रियामिति तद्विशेषणमित्यर्थः । अत
एव प्रकृतसूत्रभाष्ये पुंलिङ्गेनैकवचनान्तेन निर्देशात्पुंलिङ्गे एव भावे एकव-
चने चैते प्रत्ययाः स्युः ॥ स्त्रीनपुंसकयोर्द्विवचनबहुवचनयोर्न स्युरिति शङ्काया-
मत्र निर्देशस्तन्त्रमित्युक्तम् ॥ सिद्धावस्थापन्न इत्यभिधानेन घञादिवाच्य-
भावस्य धात्वर्थभावस्य वैलक्षण्यमभिहितम् ॥ अत्र मानन्तु क्रियान्तराका-
ङ्क्षायानियमेवदर्शनमेव ॥ प्रत्ययेन सिद्धावस्थस्य भावस्याभिधानेपि प्रकृत्या साध्य-
वस्थस्य तस्याभिधानं कारकान्वयानुरोधात्स्वीक्रियत एव ॥ अयं दम्भोध्यम् ॥
साध्यसिद्धत्वाभ्यां धर्माभ्यां भावस्य भेदाद्द्वयोर्भावयोर्भेदेन विशेषणविशेष्यभावेन
शाब्दबोधे भानमिति न किन्तु सिद्धत्वसाध्यत्वाभ्यामेकस्यैव भावस्य भानम् ॥
यथा सम्बन्धिभेदेनैकस्मिन्नेव पिता पुत्र इति च व्यवहारस्तथाऽत्राप्युभयोरेक-
स्मिन्सत्त्वे न तु तयोर्विरोधः ॥ एतयोरेकनिष्ठत्वाच्च शाब्दबोधे स्फुटतया भा-
नम् ॥ एकस्यैव साध्यत्वेन प्रकारता सिद्धत्वेन विशेष्यतेत्यपि केचित् ॥ युक्त-
तरमर्थैकक्रियाया अन्वये पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेति व्यु-
त्पत्तिविरोधः स्यादेव । इक. काश इतिसूत्रस्य व्याख्यानावसरे इगन्ताद्वेति
यदुक्तस्योपपत्तिमाह । अत्र घञीत्यनुवृत्त्यापीति । अशोदेर्घञ् । अवपूर्वाद्-
ह्रदेर्घञ् नलोपश्च निपात्यते । राध इत्येतस्य घञि नलोपगुणौ निपात्येते । पु-
नर्ग्रहणेन तु गुणस्य प्राप्तावपि न धातुलोप इतिनिषेधोऽन्यथा स्यात् ॥ चोद-
स्यन्दघोषादिके छन्दसि मन् नलोपगुणौ ह्यभावयतीति सूत्रे प्रतिपादनपूर्वस्य
अन्येरित्यादिः ॥ अकर्त्तरि च कारके संज्ञायाम् । अधाकर्त्तरि चेतिसूत्रस्य
संज्ञायामित्युत्तरयोजना बोध्ये त्याशयेनाह ॥ प्राधिकमितीति । अदर्थेति तत्र

हि सञ्ज्ञाग्रहणमनर्थकमसंज्ञायामपि घञ् दृश्यते । को भवता लाभो लब्ध ॥ कोभवतादायो दत्त इति ॥ यदि सञ्ज्ञाग्रहणं न क्रियतेऽतिप्रसङ्गो भवति कृत कटइत्यत्र कार कट इति प्राप्नोति । अतिप्रसङ्ग इति चेत्।किङ्कारणम्।अभिधानलक्षणत्वात्प्रत्ययस्य सिद्धम् । अभिधानलक्षणा कृत्तद्धितसमासा अनभिधानान्न भविष्यतीत्युक्तम् ॥ परिमाणाख्यायाम् । परिमाणं परिच्छित्ति ॥ इयत्ता ॥ आख्या उक्ति ॥ एकस्तण्डुलनिचाय इत्यत्र प्रहृद्रुनियौतिसूत्रस्यापरिमाणाख्यायामप्रत्ययविधायकस्य प्राप्तावप्यनेन बाध ॥ कर्मण्यत्र घञ् ॥ निश्चेयतो राशीक्रियमाणस्तण्डुलसमुदाय ॥ निचाय इतिपाठे त्वेरजित्यस्य प्राप्तिर्बोध्या ॥ द्वौशूर्पनिष्पावौ । निष्पूयतेतुषाद्यपनयनेनय शोध्यतेतण्डुलादि सनिष्पाव । तत शूर्पशब्देन तृतीयान्तेन समास ॥ अत्र शूर्पनिष्ठद्वित्वसङ्ख्यया परिच्छित्तिर्गम्यते । द्वौ कारौ ॥ कॄ विक्षेपे इतिधातो कर्मणि घञ । विक्षिप्तौ धान्यराशि कार ॥ अचश्चाधिक्या घञ् ॥ अत्र सर्वेभ्य इत्युक्ते. प्रकृत्याश्रयो य प्रत्यय प्राप्त सोऽनेन बाध्यते । तेनार्थविशेषाश्रयो य प्रत्ययस्स भवत्येव । एका तिलस्यउच्छित्तिरिति यथा ॥ अत्र भावे क्तिन्प्रत्यय । दारजारौ णिलुक्च ॥ अत्र यद्यपि दार इत्येतद्रूपन्दारयते पचाद्यचा सिद्धम् । कर्षात्वत इति घञाद्यन्तोदात्तत्वात् । तथाप्यचःकाववशक्ताविव्यस्य बाधनार्थमिदम् ॥णिलुग्विधानमत्र हृष्टे अत्रणायान्यथा णौ हृत्यवपि मिता ह्रस्व इति ह्रस्वापत्ति ॥ णेरनिटीतिणिलोपे तु तस्य स्थानिवद्भावेन घञाश्रया हृद्धिर्न स्यात् ॥ लुकि तु न लुकस्थानिवत्त्वमपरनिमित्तकत्वात्तुका लुप्तत्वाच्च । कृदादेर्ल्यस्ताद्वत्स्वनभिधानम् ॥ णिलुग्विधानपरभाष्यप्रामाण्यात् । अत्र भाष्ये करणे वा दारजारौ वक्तव्याविव्यनेनाण्यस्माद्दृणातेर्जरयतेश्च पुंसि सञ्ज्ञायामिति घप्रत्यये प्राप्ते तदपवादो घञ् स्वीकृतस्तदात्विद वचनमनावश्यकम् ॥ परन्तु घञ् वचनेन साध्यौ न तु सामान्यसूत्रेण ॥ अन्यथा घञल्युटौ पर्यायेण स्याताम् । इडश्च । अकर्त्तरि कारके इडो घञ् ॥ प्रकृत्याश्रयस्य । एरजित्यच । व्याख्यानादिति । पूर्वसूत्रे सर्वेभ्य इत्युपादानेन तस्य प्रकृत्याश्रयप्रत्ययबाधकता निर्णीता स एव घञस्मिन् सूत्रेऽनुवर्तते इति प्रकृत्याश्रयप्रत्ययबाधकत्वमित्येतन्मूलकव्याख्यानादित्यर्थ ॥ व्याख्यानादिति ॥ शब्दसञ्ज्ञायामित्युक्तिमूलकव्याख्यानादित्यर्थ ।

दिशुहीत्यादिपठितयोर्ग्रहणम् ।स्थिर इति कर्त्तरि क्तादितिसूत्रोपस्थितस्य कर्तु·
र्विशेषणमित्युक्तत्वेन स्थिरशब्दे उपपदे इति शङ्का निरस्ता ॥ सारो बलमि·
तिमूलेभिहितमेतच्चहस्त्यनुसारेणास्मिन्नर्थे सृधातुर्विलक्षणचेष्टानुकूलव्यापारा·
र्थकः ॥ बलं हि विलक्षणचेष्टां कारयति ॥ वस्तुतस्तु नैतद्युक्तमित्याह । भाष्यं
त्विति । तत्र हि बले शान्तसारः खदिरसार इत्यभिहितम् । यद्यपि घञजपाः
पुंसीत्यनेन पुंस्त्वमस्य प्राप्तन्तथाप्यर्धर्चादिगणे पाठादुभयलिङ्गोऽयम् ॥ अत
एव ॥ सिद्धावस्थापन्न इतिविशेषणादेव ॥ स्त्रियामिति विशेषणमिति ॥ कर्म·
व्यतिहारे णच् स्त्रियामितिसूत्रघटकं यत्स्त्रियामिति तद्विशेषणमित्यर्थः । अत
एव प्रकृतसूत्रभाष्ये पुल्लिङ्गेनैकवचनान्तेन निर्देशात्पुल्लिङ्ग एव भावे एकव
चने चैते प्रत्ययाः स्युः ॥ स्त्रीनपुंसकयोर्द्विवचनबहुवचनयोर्न स्युरिति शङ्काया·
मात्र निर्देशस्तन्त्रमित्युक्तम् ॥ सिद्धावस्थापन्न इत्यभिधानेन घञादिवाच्य
भावस्य धात्वर्थभावस्य वैलक्षण्यमभिहितम् ॥ अथ मानन्तु क्रियान्तराका·
ङ्क्षायानियमेवदर्शनमेव॥प्रत्ययेन सिद्धावस्थस्य भावस्याभिधानेपि प्रकृत्या साध्या
वस्थस्य तस्याभिधानं कारकान्वयानुरोधात्स्वीक्रियत एव ॥ अरेदम्बोध्यम् ॥
साध्यसिद्धत्वाभ्यां धर्माभ्यां भावस्य भेदाद्द्वयोर्भावयोर्भेदेन विशेषणविशेष्यभावेन
शाब्दबोधे भानमिति न किन्तु सिद्धत्वसाध्यत्वाभ्यामेकस्यैव भावस्य भानम् ॥
यथा सम्बन्धिभेदेनैकस्मिन्नेव पिता पुत्र इति च व्यवहारस्तथा ऽत्राप्युभयोरेक·
स्मिन्सत्त्वन्न तु तयोर्विरोधः ॥ एतयोरेकनिष्ठत्वान्न शाब्दबोधे स्फुटतया भा·
नम् ॥ एकत्रैव साध्यत्वेन प्रकारता सिद्धत्वेन विशेष्यतेत्यपि केचित् ॥ युक्त·
तरमन्ये तु क्रियाया अन्वये पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेति व्यु·
त्पत्तिविरोधः स्यादेव । इकः काश इतिसूत्रस्य व्याख्यानावसरे इगन्तस्यैवेति
यदुक्तन्तस्योपपत्तिमाह । अत्र घञीत्यनुवृत्त्येति । नशोदेर्घोत्र । अवपूर्वाद्
न्देर्घञ् नलोपश्च निपात्यते । राध इत्यत्रैव घञि नलोपगुणौ निपात्येते । पु·
नर्ग्रहणेन तु गुणस्य प्राप्तावपि न धातुलोप इतिनिषेधोऽन्यथा स्यात् ॥ चोद·
नं इत्यत्रोणादिके उन्देर्मनिन् नोपगुणौऽप्यभावयेतिसूत्रे पञ्चिमाध्यमरपूर्वस्य
न्यस्येरित्यादिः ॥ अकर्त्तरि च कारके संज्ञायाम् । अत्राकर्त्तरि चेतिपकारस्य
संज्ञायामित्युत्तरयोरन्वयो बोध्य इत्याशयेनाह ॥ प्रायिकमितीति । स्पर्श इति तत्र

ह्रि संज्ञाग्रहणमनर्थकमसंज्ञायामपि घञ् दृश्यते । को भवता लाभो लब्ध ॥ कोभवतादायो दत्त इति ॥ यदि सञ्ज्ञाग्रहण न क्रियतेऽतिप्रसङ्गो भवति कृत कटट इत्यत्र कार कट इति प्राप्नोति । अतिप्रसङ्ग इति चेत्।किङ्कारणम्।अभिधानलक्षणत्वात्प्रत्ययस्य सिद्धम । अभिधानलक्षणा कृत्तद्धितसमासा अनभिधाना न्न भविष्यतीत्युक्तम् ॥ परिमाणाख्यायाम् । परिमाणं परिच्छित्ति ॥ इयत्ता ॥ आख्या उक्ति ॥ एकस्तण्डुलनिचाय इत्यत्र ग्रहवृदृनिश्चिगमश्चेतिसूत्रस्यापरिमाणाख्यायामप्प्रत्ययविधायकस्य प्राप्तावप्यनेन बाध ॥ कर्मण्यत्र घञ् ॥ नि श्चेपसो रागोऽक्रियमाणस्तण्डुलसमुदाय ॥ निचाय इतिपाठे त्वेरजित्यस्य प्राप्तिर्बोध्या ॥ द्वौशूर्पनिष्पावौ । निष्पूयतेतुषाद्यपनयनेनय शोध्यतेतण्डुलादि सनिष्पाव । तत शूर्पशब्देन तृतीयान्तेन समास ॥ अत्र शूर्पनिष्ठद्वित्वसख्यया परिच्छित्तिगम्यते । द्वौ कारौ ॥ कॄ विक्षेपे इतिधातो कर्मणि घञ । विक्षिप्यते धान्यराशि कार ॥ यचस्त्वाधिकृत्वा घञ् ॥ अत्र सर्वेभ्य इत्युक्तं प्रकृत्याश्रयो य प्रत्यय प्राप्त सोऽनेन बाध्यते । तेनार्थविशेषाश्रयो य प्रत्ययस्स भवत्येव । एका तिलस्यउच्छित्तिरिति यथा ॥ अत्र भावे क्तिन्प्रत्यय । दारजारौ णिलुकच ॥ अत्र यद्यपि दार इत्येतद्रूपन्दारयते पचाद्यचा सिद्धम । कर्पोत्वत इति घञाद्यन्तोदात्तत्वात् । तथाप्यचकावग्रक्ताविल्यस्य बाधमार्थमिदम।।णिलुग्विधानमत्र हृद्दे अवणायान्यथा णौ वृद्वावपि मिता ह्रस्व इति ह्रस्वापत्ति ॥ णेरनिटीतिणिलोपे तु तस्य स्थानिवद्भावेन घञाश्रया वृद्धिर्न स्यात् ॥ लुकि तु न लुकस्थानिवत्त्वमपरनिमित्तकत्वाल्लुका लुप्तत्वाच्च । क्र्यादेर्ण्यन्तात्त्वनभिधानम ॥ णिलुग्विधानपरभाष्यप्रामाण्यात् । अत्र भाष्ये करणे वा दारजारौ वक्तव्याविल्यनेनाद्यन्तात्दृणातेर्जरयतेर्वा पुंसि सञ्ज्ञायामिति घप्रत्यये प्राप्ते तदपवादो घञ्स्वीकृतस्तदालिद वचनमनावश्यकम् ॥ परन्तु घञ् वचनेन साध्यो न तु सामान्यसूत्रेण ॥ अन्यथा घञल्युटौ पर्यायेण स्याताम् । इङश्च । अकर्त्तरि कारके इङो धञ ॥ प्रकृत्याश्रयस्य । एरजित्यच । व्याख्यानादिति । पूर्वसूत्रे सर्वेभ्य इत्युपादानेन तस्य प्रकृत्याश्रयप्रत्ययबाधकता निर्णीता स एव घञस्मिन् सूत्रेऽनुवतत इति प्रकृत्याश्रयप्रत्ययबाधकत्वमित्येतन्मूलकव्याख्यानादित्यर्थ ॥ व्याख्यानादिति ॥ शब्दसञ्ज्ञायामित्युक्तिमूलकव्याख्यानादित्यर्थ ।

समुदायघटितैव हि संज्ञास्तीति भावः । मूले उदय उद्ग्रहेत्युक्तम् । तत्रोदय इत्यत्र यवाऽवोदोर्निय इति घञः शङ्का तयोर्ग्रहेत्यत्रापीति समवायस्यायाह ॥ उन्नय इत्यत्रे ति । निरभ्योः पूल्वोः ॥ अप्प्रत्ययस्यापवादोयं घञ् कर्मणि विधीयते ॥ कृ धान्ये । धान्यशब्दे उपपदे इत्येतद्भ्रमं वारयति ॥ धान्यविषये ति । धान्यकर्मकेत्यर्थः ॥ यज्ञे समि स्तुवः ॥ अधिकरणे ल्युडपवादोऽयं घञ् ॥ यज्ञविषयकेऽर्थे ॥ शब्दप्रयोगात्मके । तस्य यज्ञविषयकत्वं यज्ञक्रियानिष्पादकत्वेन ॥ प्रे स्त्रोऽयज्ञे ॥ प्रपूर्वस्तृञ्धातुरपि शब्दप्रयोगरूपार्थे वर्त्तते । प्रस्तार इति । शङ्खमस्यादेरिति शेषः ॥ प्रथने वावशब्दे ॥ प्रथने गम्यमाने विशब्दे उपपदेऽयं घञ् ॥ प्रथनमिह विस्तीर्णता । सा चेह तिर्यगायतिरूपा । पटविस्तार इति । आच्छादनमात्रमिह धात्वर्थः ॥ ग्रन्थविस्तर इति । अत्र स्तृञ्धातुर्विस्तीर्णताया एव बोधकः । छन्दोनाम्नि च । समुदायेन छन्दोनाम्नि विविक्षिते स्तृधातोर्घञ् । वृत्तमिह छन्द शब्दार्थः । शब्दविषयत्वात्पूर्वेसूत्रस्येह प्राप्ति । उदिग्रह. । उत्पूर्वाद्ग्रहेर्घञ् । ग्रहवृद्दनिश्चिगमश्चेत्यपोऽपवाद । समि मुष्टौ । ग्रह इत्यनुवर्तते । अत्र ग्रहधात्वर्थोऽङ्गुलिसन्निवेशोऽत एव न परिमाणाख्यायामित्यनेन गतार्थता । मल्लस्य सङ्ग्राह इति । मल्लस्ये ति कर्तरि षष्ठी । परिन्योर्नीणोर्द्यूताभ्रेषयोः ॥ द्यूते विषये परिपूर्वको नीधातुः समन्ततो नयने वर्त्तते ॥ धर्म्यपदार्थं व्याचष्टे । पदार्थानामिति । अनपचारोऽनतिक्रम. ॥ कारणोवित्वम् । द्वितीयार्थोदाहरणं राज्ञोपगाय इति । हस्तादाने चेरस्तेये । हस्तादाने गम्यमाने चिनोतेर्घञ् स्तेये यद्यर्थोपवस्त्र विविक्षितं भवेत् ॥ इति भाष्य इति । ग्रहवृदृनिश्चिगमश्चेतिसूत्रभाष्य इत्यर्थः ॥ निवासचिति ॥ चेरिति वर्तते । कायोनिकाय इति ॥ अत्राधिकरणे घञ् । चितौ यदुदाहरणमस्ति चितिर्धात्वर्थ एव । भावे घञ् । शरीरे यत्र प्रत्ययस्तत्राप्यधिकरणे । भवे वा । चेरिति वर्त्तते । अनौत्तराधर्य इत्यथोत्तरं चाधरं चेति द्वन्द्वं कृत्वा ततो भावे ष्यञि नञ्समासः । औत्तराधर्यमिथो भवं त्रियंञ् । भिक्षुनिकायः भिक्षवो हि क्व चित्तोर्योदो सन्ति विघ्नमात्रार्थं यदाप्यग्रवतिष्ठन्ते तदापत्त्य.। शूकरनिचय इति मत्तुदाहरण शूकराणामार्थं शिशव उत्तराधरभावेन शेरते तदा न भवति प्रत्ययः । भिक्षुवत्तथैव शूकरा यदावतिष्ठन्ते तदा भवत्येव शूकरनिकाय इति । कर्मव्यति-

हारे ण च स्त्रियाम् ॥ कर्मव्यतिहारेवर्त्तमानाद्धातोरित्यर्थः । कर्मशब्दोऽत्र क्रियापर ॥ क्रियाव्यतिहारश्च परस्परकरणम् । कर्मकारके चायम् । कर्त्तरि कृदितिसूत्रात् । विशेषणार्थ इति । तेन ज्वलितिकसन्तेभ्य इतिसूत्रविहित णस्य न ग्रहणम् । व्यावक्रोशीत्यादौ कृद्ग्रहणपरिभाषया विशिष्टादञ् प्रत्यय ॥ अत्रस्तद्धितत्वादादिवृद्धि ॥ न च स्त्रियामित्यधिकारे कर्मव्यतिहारे ण जित्येव वाच्यम् ॥ स्त्रियामिति त्वधिकारादेव लभ्येत तेन व्यतिपाक इत्यत्र न णच् ॥ एवञ्चात्र स्त्रियामिति न कार्यमिति वाच्यम् । व्यावचारीत्यादौ क्तिन् बाधकस्य एवासयत्येति युचोऽपि बाधनार्थन्तदधिकाराद्द्विर्भावस्यावश्यकत्वात् व्यतीहादिषु गुरोश्च हल इत्यस्यापि बाधप्रसङ्ग इति तु न वाच्यम् ॥ ततो व द्विर्भावे सति वासरूपविधिना तस्य सम्भवात् । अत एव व्यवक्रुष्टिरित्यत्र क्ति न् प्रत्यय सिध्यति । प्रकृतसूत्रे भाष्ये तु यदुक्तमकृते स्त्रीग्रहणेऽणजयवण कार्यम् ॥ ततो णिजिति वा व्यक्तेन व्यावचोरी व्यावचर्चीत्यादौ णच् सिध्य तीति तद्वार्त्तिकाशयमात्रत्र तु तत्र लाघवम् । णिच इत्यस्यावश्यकत्वात् ॥ व्य वक्रुष्टिरित्यादे. कृत्यल्युटो बहुलमितिसूत्रस्थबहुलग्रहणेन क चिदन्यदेवेत्यत्र केन साध्यतापत्तेश्च ॥ न च स्त्रियामितिसूत्रे स्त्रियामिति तु क्व चित्स्वार्थिका प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्त इत्यस्य ज्ञापनायेत्यन्यत्रोक्तम ॥ अभिविधौ भावे इनुण् । अभिविधिरभिव्याप्ति ॥ अभिविधौ गम्यमाने भावे इनुण् स्यात्। नपुंसके भावे क्त इतिसूत्रान्तरमस्य पाठेन भावे प्रत्यये सिद्धे पुनर्भावे इति श स्य बाधको यो भावे खल् तस्य पलारागिणमित्यत्र प्राप्तस्य बाधनार्थमिति भाष्ये स्पष्टम् ॥ साराविणमित्यत्र सगम्द ऽ भिविधिर्द्योतक ॥ शब्दशक्तिस्वभावा देतदन्तान्तदपु सकमेव भवति । आक्रोशे ऽन्व्योर्ग्रह । अस्वरितत्वादिति । कि न्तु घञेव दृष्टानुमक्तिकत्व दिति शेष । अवग्रह पदस्य । ग्रहवृदृनियोत्यप् । अ वावग्रहो विलम्बेनोच्चारणम् । स्वभाविकार्धमात्राधिककालेनोच्चारणात्मकम ॥ निग्रहयोरस्य । अव निग्रहो निरोध । देशान्तरसञ्चारविरोधिव्यापारानुकूल व्यापार । प्रे लिप्सायाम् । लिप्सायां गम्यमानायाम्प्रशब्द उपपदे ग्रहेर्घञ् स्यात् । पात्रप्राहैत्यत्र भावे घञ्प्रत्यय ॥ कर्मषष्ठ्यासमास । भिक्षापात्र ग्रहीत्वे ति फलितार्थ । लिप्साया किम ॥ प्रग्रहो देवदत्तस्य । प्रकृष्टोऽभिनि

वेशः । परौ यज्ञे । परावुपपदे ग्रहेर्घञ् । यज्ञे इति वैषयिकाधारे सप्तमी । प्रत्ययान्तार्थो यज्ञविषयश्चेत् । ग्रहवृदृइत्यनेन बाध्यते । नौ वृ धान्ये । वृ इति वृङ्वृञोः सामान्यग्रहणम् । लुप्तविभक्तिकम् । धान्यविषये निशब्दे उपपदे वृ इत्यस्माद्घञ् निवारा इति । एतत्संज्ञका व्रीहिविशेषाः निवारा कन्येति । कर्मणि ग्रहवृदृ इत्यप् । अजब्भ्यां स्त्रीखलना इत्युक्तेः स्त्रीत्वविवक्षायाङ्क्तिन्प्रत्ययेन भवितव्यमित्याशंकानिरासायाह मूले क्तिन्विषयेऽपीत्यादि । अवे ग्रहो वर्षप्रतिबन्धे ॥ वर्षप्रतिबन्धेऽभिधेयेऽवशब्दे ग्रहधातोर्वा घञ् । प्रे वणिजाम् । अत्र वणिजामिति षष्ठीप्रधानप्रत्ययानुरोधात् ॥ प्रत्ययस्तु भावे । रश्मौ च । रथशकटादिसम्बद्धा रज्जूरश्मिः । या रथादियुक्ताश्वादेः संयमनार्थाः कर्मण्येव घञ् । वृणोतेराच्छादने । अत्राच्छादन इति प्रत्ययान्तसमुदायार्थनिर्देशः परौ भुवोऽवज्ञाने । विभाषेति वर्त्तते । अवज्ञानमसत्कारस्तस्मिन् गम्यमाने परिशब्दे उपपदे भुवो वा घञ् स्यात् । एरच् । भावे इति । अकर्त्तरि च कारके इति चानुवर्त्तते । यथा प्रयोगं व्यवस्था । प्रत्ययस्वरेणैवैतदन्तस्यान्तोदात्तत्वे सिद्धेऽस्य चकारस्याथघञ्क्ताजबित्रकाणमित्यस्य ग्रहणाय तेन प्रचयः प्रचय इत्यत्राव्ययपूर्वपदप्रकृतिस्वरम्बाधित्वाऽन्तोदात्तत्वम्भवति । प्रकृतसूत्रे भाष्ये कल्प्यादिभ्यः प्रतिषेध इति वार्त्तिकमर्थतोऽनुवदति । कल्प्यादिभ्य इति अनार्षमिति । भाष्येऽदर्शनात् । अप्विधानसामर्थ्यं नेति । निश्चिग्रहणसामर्थ्यमित्यर्थः ॥ मध्योदात्तमिति । चिधातोर्धातुस्वरेणान्तोदात्तत्वेऽपः पित्वादनुदात्तत्वे आद्युदात्तो हि चयशब्दः । एतेन । पूर्वोक्तव्याख्यानेन । अचैव सिद्धम् । अन्तोदात्तत्वं सिद्धम् । अपस्तस्यापि तेनान्तोदात्तत्वसम्भवात् । घञो बाधनार्थमिति । येनाद्रूर्ध्वाङ्कुरादेर्निश्चयं करोतीत्यत्र घञ्बाधनार्थमित्यर्थः । अप्यादपोऽनिष्टेरिति । अब्विधौ निश्चिग्रहणमनर्थकं स्तेयस्य घञ्विधौ प्रतिषेधात् । निस्पूर्वचिनोतिः स्तेये वर्त्तते । अस्तेयार्थं तर्हीदं वक्तव्यम् । निस्पूर्वाच्चिनोतेरस्तेये अप् यथा स्यात् । अस्तेयार्थमिति चेन्नानिष्टत्वात् । न हि निस्पूर्वाच्चिनोतेरस्तेये चाविष्टः । किन्तर्हि घञेवेष्यते । एवन्तर्हि सिद्धे सति यन्निस्पूर्वाच्चिनोतेरपं शास्ति तज्ज्ञापयत्याचार्यो यदन्यत्र घञ्छाञ्ज्ञाति तन्निस्पूर्वाच्चिनोतेर्भवति । किमेतस्य ज्ञापने प्रयोजनम् । निश्चयः अपः स्वरः सिद्धो भवतीति भाष्यमत्र

मानम्। मध्योदात्तत्वं थाथस्वरेण भवतीति कैयटः। वशिरण्योरुपसंख्यानम्। वश इत्यत्र भावे घञ् प्राप्त रण इत्यत्रापि रणन्त्यस्मिन् पुरुषा मरण सङ्ग्राम इत्यर्थेनाकर्तरि च कारके इत्यनेन प्राप्तस्य घञो बाधकोऽप् विधीयते। घञर्थो भाव कर्त्तृभिन्नकारकञ्च। अत्र भाष्ये स्वाध्यायाहनीतिपठितत्वस्य परिगणनत्वभ्रमवारणायाह। खनेत्यादि। प्रस्थ। अत्राधिकरणे क। परिमाणविशेषस्य शानीय संज्ञेयम्। प्रतिष्ठन्त्यस्मिन् धान्यानि प्रतिष्ठन्ते जना अस्मिन्निति व्युत्पत्तेः। प्रस्थे हिमवत शृङ्गे हिमवत इति क्वाचित्क प्रयोगो न तु तस्यैव संज्ञा। स्नुप्रस्थ सानुरस्त्रियामिति कोशात्। प्रस्नान्त्यस्मिन्निति प्रस्नो ह्रद॥ प्रपिबन्त्यस्यामिति प्रपा पानीयशालिका। आविध्यन्ति येन तदाविधमायुधम्। विघ्नन्त्यस्मिन्ननास्मि अभौ विघ्न। अधिकरणे क इति। एतेन वृत्तिकारोक्ता करणव्युत्पत्तिर्नोचिता भाष्यविरोधादित्युक्तम्भवति। भाष्योक्तस्याप्य वाक्यस्योदाहरणमात्रत्वाद्वना भूमिरित्यादि सिध्यति। न चक्रत्वस्याप्यर्थतब्भचादयसेत्यर्थात्॥ अस्योदाहरणमात्रत्वे प्रमाणन्तु द्वित्वप्रकरणे के हृआदीनामिति वार्त्तिकमेव। अनुपसर्ग इत्यस्योपसर्गभिन्ने उपपदे इति भ्रमवारणायाह। अनुपेति। यम समुपनिविषु च। अत्र चकारादनुपसर्ग इति सम्बध्यते तस्याप्युक्त एवार्थ। अत एव यमया इत्यस्य सिद्धि॥ क्वणो वीणायाच। अत्र वीणाग्रहणस्यानुपसर्ग इत्येतद्बाधरूपप्रयोजनमाह मूले वीणाग्रहणमिति। वीणाग्रहण सोपसर्गार्थमिति वार्त्तिककारोक्ते। मदोऽनुपसर्गे। अस्यानुपसर्ग इत्यस्य पूर्वत्रार्थं इत्याशयेनाह॥ उपसर्गभिन्न इति॥ समुदो रज पशुषु। पशुष्वित्यस्य पशुषु कारकेषु विवक्षितेष्वित्यर्थ। प्रयमस्तु भावे। अक्षेषु ग्लह। ग्लह इति रूपन्निपात्यते। अक्षेषु धात्वर्थसम्बन्धित्वेन विवक्षितेषु यदत्र निपात्यते तदाह। ग्लह इत्यत्रेति। आङि युद्धे। हु इति सम्प्रसारण चेत्यनुवर्त्तते। युद्ध इति प्रत्ययार्थस्य विशेषणम्। तेनाधिकरणे प्रत्यय इति बोध्यम्। निपानमाहाव। आहाव इति निपात्यते। निपान वाच्यश्चेत्। भावेऽनुपसर्गस्य॥ अत्रानुपसर्गस्येति सम्प्रसारणापेक्षया षष्ठी। हु इत्यनुवर्त्तते। हनश्च वध अत्र चकारो भिन्नक्रम॥ वध इत्यनन्तरन्द्रष्टव्य। हन इत्यादेशापेक्षया षष्ठी। आदेशश्चान्तोऽन्तोदात्तो निपात्यते॥ धातोरित्यस्याप इत्यस्य

च सम्बन्धः ॥ हनो वधादेशः स्याद्घातोरप्रत्ययः स्यादित्यर्थः ॥ एवञ्चातो लोपे उदात्तनिवृत्तिस्वरेणान्तोदात्तोऽयम्भवति । उदात्तत्वे प्रमाणन्तु वधेन दस्युमित्यत्रान्तोदात्तदर्शनम् । घञा सिद्ध इति ॥ जनिवध्योश्चेति वृद्धेः प्रतिषेधात्सिद्ध इत्यर्थः । यदुक्तं स्वतन्त्रो वधिर्नास्ति किन्त्वादेश एव एतदुत्तराणामुपक्रमाद्विज्ञायते तदेतदाविष्कर्तुं स्तम्बे कचेति सूत्रभाष्यसम्मतिमाह ।वनान्तर्यतित्यादि भाष्ये स्पष्टमिति । तत्र हि कस्मादयं को विधीयते । हन्तेरित्याह । तदन्तिग्रहणद्वर्त्तव्यत्र कर्त्तव्यम्प्रकृतमनुवर्त्तते स प्रकृतम् । हनश्च वध इति । तद्वै अनेकेन निपातनेन व्यवच्छिन्नन्न शक्यमनुवर्त्तयितुम् । नैतानि निपातनानि ॥ हन्तेरेते आदेशाः । अप्प्रत्ययः इत्यन्तार्थ्यं ते आदेशा इत्यभिप्रायेण यदि हन्तेरेते आदेशाव्यनस्वरो न ःसिध्यतीति परेणोक्ते ततो घनादीनां निपातनं स्वीकृतम् । स्तम्बे क चेति सूत्रे तु हनश्च वध इत्यस्य सम्बन्धानुवृत्त्या समाहितम् । ततोऽय वा पुनः मस्त्वादेशाः । ननु चोक्तं स्वरो न सिध्यतीति । नैष दोषः ॥ अकारान्तादेशा इति । अतो लोपे कृते उदात्तनिवृत्तिस्वरेणापि । उदात्तत्वम्भविष्यतीत्याह । चन्थ इत्यादिना । निघो निमित्तम् । अत्र म त्वयर्थकादत्तः कर्मण्यप् । उपसर्गे घोः किः यद्यपि भावेऽकर्त्तरिचकारके इति प्रकृतस्तथाप्ययम्बाहुलकात्कर्तर्यपि ॥ अत एवोपसमीपे स्वधर्मान्दधातीति व्युत्पत्तिरपि च चिद्दर्शिता । परन्तु मा करण एवोचितेत्याशयेन मूले उपाधीयतेऽनेनेत्युक्तम् । त्युर् तु बहुलग्रहणात् । कर्मण्यधिकरणे च घोरित्यनुवर्त्तते ॥ अत्र कर्मण्यधिकरणे इति च इयमत्युपपदम् ॥ द्वयम् म-समोनिर्देशात् ॥ नाम्यधिकरणे उपपदे कर्मणि प्रत्यय इत्यर्थः ॥ प्रकृतसूत्रेऽकर्त्तरि च कारके इत्येतत्सम्बन्धेन कर्मणो प्रत्ययस्य सिद्धत्वादत्र एव द्वैयंदे सन्धिशरधिमिति प्रामाणिकप्रयोगस्योपपत्तिमाह । व्याख्यानादिति । ननु तथैवाधिकरणे प्रत्ययेसिद्धेऽधिकरण इति व्यर्थमत आह चाधिकरणग्रहणमिति।[illegible] ।चादिना कारकान्तरस्य ॥[illegible] इति[illegible] भाष्ये[illegible] ऽनित्यमिति स्वरो हि चुडशायनिः । पाणिनेस्तु इयम्[illegible] इति रित्यत्र न स्यादित्युक्तम् एतदोपपादनं गौरवः[illegible] इत्यला-

नायणेन। तत्र क्तिन्प्रत्ययस्य नित्यं व्यर्थं स्यादिति परिचिन्त्य क्तिनो नित्त्वात्तादौ च नितिकृत्यतावित्ये तदर्थं स्यादिति कैयटोक्तम्। यद्येकाज्भ्य एव धातुभ्योऽयन्तदेवमभिधानं युज्यत इति। अनेकाज्भ्योऽप्ययञ्चेत्स्यात्तदा ञ्नित्यादिरिति सूत्र एव प्रयोजनसम्भवात्तावत्पर्यन्तानुधावनेनानेकाज्भ्योऽनभिधानमिति तदाशय। अत्र कैयट इत्यस्वरससूचनाय। गार्ग्य' क्तातिरिलत्र न स्यादिति भाष्ये स्पष्ट स्वरो न स्यादिति रीत्यापि व्याख्यानमभ्यवादनेकाज्भ्योऽनभिधाने न मानमिति। मूले घञोऽपवाद इति। घञो बाधक इत्यर्थ.। औत्सर्गिकस्य घञ' पुस्त्वविशिष्टे भावे प्रवृत्ते स्त्रीत्वविशिष्टे तन्निमयमित्येतावता तस्य बाध। पुस्त्वविशिष्टे भावे तस्य प्रवृत्तौ मानस्त्वधिकारोधिकार इति स्वरितेनाधिकार इतिसूत्रस्य व्याख्यानमेव। भावादाविति व्याख्यानादेव श्रूयते इत्यर्थकस्य श्रुतिशब्दस्योपपत्ति.। करणार्थकक्तिन्नन्त.श्रुतिशब्द. श्रोत्रवाची। एव यज्धातोरपि देवपूजनार्थकात्करणे ल्युटो बाधनार्थमिष्टेरपि तद्बाधनार्थं वचनम्। अयन्त्वत्र विशेष.। यज धातुप्रकृतिक' क्रिया विशेषे इषधातुप्रकृतिकस्तु वाञ्छायौरूढ'। स्तुतिशब्दविशेषे तथा। भाष्ये नैतदिति। योगविभागेन साधनम्। तस्मात्सुखे रूढोऽयं शब्दो यदीष्यते तदा बहुलग्रहणेन साधनीय। स्वागापाधचा भावे। क्तिनो बाधकस्य' बाधनार्थमिद सूत्रम्। न च विभाषाख्याने सूत्रविहितयोर्ल्युङिञोरपि क्तिनाबाधे का त्वं स्थापिका स्थायि वेत्यत्र ल्युङिञोरय्यवणापत्तिरिति वाच्यम्। पुरस्तादपवादन्यायेनास्य क्तिनोऽपवादस्यातश्चोपसर्गे इत्यङो बाधनार्थमेवैतत्सूत्रमिति स्वीकारात्। पचधातो पिलात्प्राप्तस्याङोऽप्ययमबाधक: पचग्रहणात्। पिलाचाञादङपि। ग्लाम्लाज्याहाभ्यो धातुभ्य क्तिनबाधकस्याङो बाधनायाच भाष्ये ग्लाम्लाज्याहाभ्यो निर्वक्तव्य इति वचनमारब्धम्। ग्लानिम्लानिर्ज्यानिर्हानिरिति। तेन बहुलग्रहणेन। एतेन व्यवस्थिति निपातनेनाङ. स्त्रीकारे निपातनस्य बाधकत्वसिद्धान्ताद्व्यवस्थितिरिति न स्यादित्यपास्तम्॥ ऊतीयूतीजूती॥ सम्पदादिभ्य सामान्यवचनेन क्तिन' सिद्धौ स्वरार्थं कार्यविशेषविधानार्थं च वचनम्॥ अत्र भाव इति न सम्बध्यते॥ तेनान्यत्राप्ययम्। अत एवोत्तरसूत्रे भाव इति यत्नार्थम्॥ उदात्त इति तृमरथापि सम्बध्यत

च सम्बन्धः ॥ हनो वधादेशः स्याद्धातोरप्रत्ययः स्यादित्यर्थः ॥ एवञ्चातो लोपे उदात्तनिवृत्तिस्वरेणान्तोदात्तोऽयम्भवति । उदात्तत्वे प्रमाणन्तु वधेन दस्युमित्यत्रान्तोदात्तदर्शनम् । घञा सिद्ध इति ॥ जनिवध्योश्चेति वृद्धेः प्रतिषेधात्सिद्ध इत्यर्थः । यदुक्तं स्वतन्त्रो वधिर्नास्ति किन्त्वादेश एव एतदुत्तराणामुपक्रमाद्विज्ञायते तदेतदाविष्कर्तुं स्तम्बे कचेति सूत्रभाष्यसम्मतिमाह ।वनान्तर्यतैत्यादि भाष्ये स्पष्टमिति । तत्र हि कस्मादयं को विधीयते । हन्तेरित्याह । तद्धन्तिग्रहणङ्कर्त्तव्यम्न कर्त्तव्यमप्रकृतमनुवर्त्तते क्व प्रकृतम् । हनश्च वध इति । तद्वै अनेकेन निपातनेन व्यवच्छिन्नम्न शक्यमनुवर्त्तयितुम् । नैतानि निपातनानि ॥ हन्तेरेते आदेशाः । अप्प्रत्ययः हलन्ताद्धन्ते आदेशा इत्यभिप्राये । यदि हन्तेरेते आदेशाद्यन्तस्वरो न सिध्यतीति परेणोक्तं ततो घनादीनां निपातनं स्वीकृतम् । स्तम्बे क चेति सूत्रे तु हनश्च वध इत्यस्य सम्बन्धानुवृत्त्या समाहितम् । ततोऽत्र वा पुनः सन्त्वादेशाः । ननु चोक्तं स्वरो न सिध्यतीति । नैष दोषः ॥ अकारान्तादेशा इति । अतो लोपे कृते उदात्तनिवृत्तिस्वरेणापि । उदात्तत्वम्भविष्यतीत्याह । अन्य इत्यादिना । निधो निमित्तम् । अत्र गत्यर्थकाद्धन्तेः कर्मण्यप् । उपसर्गे घोः किः यद्यपि भावेऽकर्त्तरिकारके इति प्रकृतन्तथाप्ययम्बाहुलकात्कर्त्तर्यपि ॥ अत एवोपसमीपे स्वधर्मं दधातीति व्युत्पत्तिरपि क्वचिद्दर्शिता । परन्तु सा करण एवोचितेत्याशयेन मूले उपाधीयतेऽनेनेत्युक्तम् । ल्युट् तु बहुलग्रहणाच्च । कर्मण्यधिकरणे च घोरित्यनुवर्त्तते ॥ अत्र कर्मण्यधिकरण इति च द्वयमप्युपपदम् ॥ पृथक् सप्तमीनिर्देशात् ॥ नाप्यधिकरणे उपपदे कर्मणि प्रत्यय इत्यर्थः ॥ प्रकृतसूत्रेऽकर्त्तरि च कारके इत्येतत्सम्बन्धेन कर्मणो प्रत्ययस्य निषेधादेव देवं यदे जलधिशरधिमिति प्रामाणिकप्रयोगस्योपपत्तिमाहाह । व्याख्यानादिति । ननु तथैवाधिकरणे प्रत्यये सिद्धेऽधिकरण इति व्यर्थमत आह अधिकरणग्रहणमिति। क्रियां क्रिन्तुभाव्यादाविमीति ।आदिना कारकपरिग्रहः ॥ कैयटस्तत्र इतिकर्तव्याधिकरणस्य प्रयोजननिरूपणावसरे भाष्ये आयसा द्वारा आनिन्यादिनित्यमिति स्वरो हि पुत्रकार्यनि. । पाग्निवेश्म इत्यत्र व्याप्तर्यः सति- विश्यत्र न स्यादिन्युक्तम् एतयोपपादनं शोधयं: नामस्थादमानामस्य इत्यत्रा-

पदसमासो हि नित्यसमासः ॥ सम्पूर्वकः स्पृश्धातुः सम्बन्धमात्रपरः । सुखमिति किम् । कष्टकानामर्दनं दुःखम् । या यौ । अत्र याविति युप्रत्ययपरम् । न तु यकारादिप्रत्ययपरमितिसूचयितुमाह । इदं सूत्रमिति । करणाधिकरणयोश्च । घञोऽपवादः । अत्र करणाधिकरणयोरिति नोपपदबोधकमुत्तरसूत्रेष्वस्यार्थबोधकत्वस्य दृष्टत्वेन तस्यैवौचित्यात् । अजब्भ्यां स्त्रीखलना इति वार्त्तिकव्याख्यानावसरेऽयम्प्रकाशः इष्यत इति भाष्याच्च ध्यम्परत्वादजपोः स्त्रीप्रत्ययस्य च बाधकः. अजब्भ्यां स्त्रीखलनाः स्त्रियाः खलनौ विप्रतिषेधेनेति वार्त्तिकात् । छादेर्घे । उदुपधाया इत्यत उपधापदन्दीर्घो णावित्यतो णाविति चात्रानुवर्त्तते तदाह । अत्रोपधेति । एतेन । उक्तार्थस्वीकारेण । न तु घपरं यदङ्गं णिपरकन्तदुपधाया इत्यर्थः । असंभवापत्तेरिति भावः । धातुर्वेत्यथिमिति । व्यवहारमिति शेषः । खने. संज्ञेयम् । गोचरसञ्चर । देशवाची गोचरशब्दोऽधिकरणल्युडन्तः । विषयवाच्यव्ययम् । उपादानगोचरापरोक्षज्ञानमित्यत्र यथा तत्राप्यप्यधिकरणे घः । गावः इन्द्रियाणि सञ्चरन्त्यस्मिन्निति व्युत्पत्तिः । संचरन्तेऽनेनेति । समस्तृतीयायुक्तादित्यात्मनेपदम् । संज्ञायामित्यस्याप सूत्रे सत्त्वाद्गोचरादिशब्दाः संज्ञिविशेषस्यैव बोधकाः । अवे तृस्त्रोर्घञ् । ल्युटोऽपवादः । प्रायेणेति वर्त्तते इति । तदुक्तं गोचरेति सूत्रभाष्ये । गोचरादीनाङ्ग्रहणं शक्यमकर्तुम् । घञ्कस्मान्न भवति । प्रायवचनात् ॥ यथा कषो निकष इति । प्रयवचनादित्यस्य हलश्चेति सूत्रे प्रायेणेत्यस्य सम्बन्धादित्यर्थः. कषो निकष इत्यत्र प्रायिग्रहणानुवृत्त्या घञ्न भवति तथा गोचरादिष्वपि न भविष्यतीति भावः । व्यवहारादिषु प्रकृतेर्हलन्तत्वाभावाद् घञोऽप्राप्तेरुपसंख्यानम् । उदङ्कोऽनुदके । अधिकरणे घञन्तोऽयन्निपातितो ल्युटश्चाधितुमनुदके इति च बोधयितुम् । यदि तु हलश्चेति सूत्रे प्रायेणेत्यस्य सम्बन्धादेवेष्टसिद्धिरित्युच्यते तदेदमारम्भणीयम् । तदुक्तं भाष्ये । उदङ्कोऽनुदकग्रहणमनर्थकम् । घञ् कस्मान्न भवति । प्रायवचनात् । गोदोहनः प्रसादन इति । बाहुलकादिति । ननु भाष्ये प्रायवचनादित्युक्तमत्र बाहुलकादित्युच्यते इति तद्विरुद्धमिति चेन्न । पुंसीति सूत्रे बहुलमित्यस्य सम्बन्धेन तस्य फाणिकृत्यस्य सिद्धौ प्रायग्रहणस्याप्यनावश्यकत्वमित्याशयात् । आनयानाय ।पा-

एव । व्रजयजो भांवे क्यप् ॥ क्तिनो बाधकोऽयम् ॥ उदात्त इत्यनुवर्त्तते ॥ पित्वन्तू तरेन तुक् सम्पादनेन चरितार्थम् ॥ ननु सञ्ज्ञायामिति सूत्रे भाव इत्यस्य सम्बन्धाद्भावादावित्यनुपपन्नमत आह । चतुर्विधाविति । नन्वेवमय क्यप् भृञधातोरपि भावादौ स्यादत आह । भृञोऽयमिति । भाष्यस्वरस इति । तत्र हि भृञ सञ्ज्ञाप्रतिषेधे स्त्रियामप्रतिषेधोऽन्येन विहितत्वादिति वार्त्तिकस्य संज्ञायां समजेत्यनेन प्राप्तिमाशङ्क्य स्त्रीप्रत्ययप्रकरणे भावग्रहणानुवृत्त्याऽन्यथा सिद्धिरुद्भाविता ॥ भृत्याशब्दोऽयम्भरणार्थक ॥ अथ सञ्ज्ञाग्रहणाद्रूढिराव कस्य मतिशब्दस्योपपत्ति । नैषा सञ्ज्ञा किन्तर्हि क्रियाशब्दोऽयम् ॥ सिद्ध एव ॥ सार्वधातुके यगिति सूत्रेण सिद्ध एव ॥ अकर्त्तरि कारके ऽकरणे ॥ गुरोश्च हल । हल इति धातोर्विशेषणन्ततस्तदन्तविधिस्तस्यैव गुरोरित्यपि विशेषणम् ॥ एवञ्च तस्य गुरुत्वासम्भवाद्गुरुशब्दान्मतुप् तस्य निपातनादेव लुक् ॥ न च गुर्वन्ताप्दल इत्येव किम स्यादिति वाच्यम् ॥ आशंसायामित्यादिप्रयोगासङ्गत्यापत्तेः ॥ न च तथापि शसेरकारो न प्राप्नोति । अस्य निष्ठायामनिट्त्वादिति वाच्यम् ॥ आशंसायामिति निर्देशेन तत्र शेट्त्वाभावेऽप्यकारप्रत्ययस्य स्वीकारात् । षड्विधायेवेति।प्राप्तायश्चाचार्य्य इति निर्देशात् अन्त शब्दस्य तु अन्तः स्याद् विधिगत्वे पूर्वमगत्वं वक्तव्यमिति वचनात्तथेति बोध्यम् ॥ प्रत्ययसामान्याभाव । विभक्तिभिन्नसामान्याभाव. । संज्ञायाम् । अधिकरणकारकेऽयम्प्रत्यय ॥ उद्दालकपुष्पभञ्जिका । उद्दालक श्लेष्मातकस्तस्य पुष्पाणि यस्यां क्रीडायां भज्यन्ते सा । नित्यं क्रीडाजीवकयोरिति समास । विभाषाख्यानपरिप्रश्नयोरितिसूत्रे आख्यानशब्दस्याल्पाच्त्वेन पूर्वनिपातेऽपि लोके आख्यानस्य परिप्रश्नपूर्वकत्वे नार्थक्रमानुरोधेन व्याख्यानवाक्ये परिप्रश्न एवादौ मूलेनिर्दिष्ट परिप्रश्न इति । आक्रोशे । अत्राक्रोशशब्द शापवाची । कर्मणि च येन संस्पर्शात् । अत्र संपूर्वकात्स्पृशधातोर्भावे घञ् कर्त्तुरिति तदर्थकर्मणि षष्ठी येनेत्युभयप्राप्ताविति नियमात्कर्त्तरि तृतीया । एवञ्च परिशेषात्कर्मणोऽत्र कर्त्तृत्वं विधेयप्रकृत्यर्थक्रियानिरूपितमेव ॥ शरीरसुखमित्यत्र शरीरस्पर्शनस्याकर्तृत्वमस्त्येव । एवञ्च यत्फलितमत्तदाह । स्पर्शादिति । परसूत्रविहितो ल्युडपि सुखफलविशिष्टे भावे । अत एवैतत्सूत्रस्य नियमसामान्यंरत्नाकराद्ग्राहि । अप

भवितुमित्यर्थे दुराढ्यंभव स्वाढ्यंभवमितिभाष्यप्रयोगेणाव्ययधानांशस्य प्रकृते स्वीकारात्। अत एव मन्त्रानियमप्रयोगनियमपक्षयोः प्रकृते न फलभेदः। कर्मण्युपपदे भवतेः खल्योदाहरणन्तु अनाढ्य आढ्यः अत एव सुभूयते इत्यर्थे स्वाढ्यं भवमिति अनाढ्य आढ्य स्वयमेव क्रियते। आनाढ्य आढ्यः क्रियते इति। एवमन्यत्राप्यूह्यम्। आतो युच्। अस्यापि खलर्थत्वात्तयोरेवेति सूत्रस्य प्रवृत्त्या भावकर्मणोरेव युच्प्रत्ययविधायकता॥ अत एवाभिहितकर्मेति ईषत्पान' सोमो भवतेत्यत्र सोमपदात्प्रथमा सिद्धि यात्पदान्तात्। निष्पानम्। सर्पिष्पानमित्यत्र ह्रत्यत्र इत्यनेन वा भावकरणयोरित्यनेन वा प्राप्तस्य णत्वस्यानेन प्रतिषेधः। प्रकृते ऽस्य सूत्रस्योपयोगस्तु दुष्पाने णत्वस्य व्यावृत्तिरिति। सप्तमीसमासे मानमाह। अत्र चेति॥ अन्यथा। यात्पदादित्युच्यमानेऽपि यादित्वस्य पदविशेषणत्वेन तदन्तविधिना पान्तात्पदादित्यनेनापि सिद्धे फलाग्रे विशेषाभाव। क्विच्क्वौच्॥ प्रत्ययस्वरेणास्यान्तोदात्तत्वे सिद्धे न क्विचीतिसूत्रे भट्टित्ययेव प्रतिपत्तिर्यथा स्यादित्येवमर्थम्॥ न क्तौ दीर्घश्चेत्युच्यमानेऽप्यनुबन्धकपरिभाषया क्तिनो व्यावर्त्तने प्रयासगौरवम्। एवं सन क्विचीत्यत्रापिबोध्यम्। अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा। छन्दसीति। छन्दसि लुङ्लङ्लिटित्यतोऽनुवर्त्तमानं छन्दसीति भावलक्षण इति च निवृत्तमित्यर्थः॥ इह प्राचाङ्ग्रहणस्य ल्युट समावेशार्थम्। वासरूपविधिनैवायां रुदित्वा रोदनेन वेत्यस्य सिद्धे।यद्यपि स्त्र्यधिकारादूर्ध्वं वासरूपविधि र्न चेत्युक्तत्वात्तथापीह तदभावकल्पने मानाभाव इत्याशयेन मूले प्राचाङ्ग्रहणमिति। न च क्त्वाप्रत्ययेनासत्वभूतो भावोऽभिधीयते ल्युटा तु सत्वभूत इति वाच्यम्। अव्ययकृतो भिद्यान्ताच्छब्दशक्त्या तथा स्वीकारात्। यदा दानार्थमुद्यत पुरुष सम्प्रदानत्वेनाभिप्रेतस्यापात्रत्वनिश्चयेनाप्तेन निवार्यते तदाऽलंशब्द प्रतिषेधवाचकस्तेन प्रयुज्यते। अलन्दत्वेति। अस्तीत्यस्याध्याहारः दत्तार्थस्य दानस्य अलंशब्दार्थेऽभावे प्रतियोगितासम्बन्धेनान्वय। दानाभावकर्तृका सत्तेति बोध। यदादुग्धजलादिपानार्थं प्रवृत्त एव पुरुषोऽधिकपरिमाणकदुग्धादिदर्शनेन पीत्वा खल्विति बोध्यते तदा खलुशब्दोऽपि प्रतिषेधार्थः। एव मर्थ क्रुधम्मनिनोऽप्रमाना न यदा यदा रोदिति तदाऽलं नाम्नि रुदित्वा

नाय इत्यत्राङ्पूर्वान्नीधातोः करणे घञ् । जालशब्दस्तु ज्वलितिकसन्त इति
सूत्रविहितणान्तः एतस्यापि घातकत्वाज्जघातन इति धात्वर्थानुगमनमपि स
म्भवति । खनो घ च । खनधातोः करणे घः । नन्वस्य घित्वं व्यर्थम् । न हि
खनधातौ चजोरित्येतत्सूत्रप्रवृत्तियोग्यः कश्च न वर्णोऽस्तीत्यत आह । मूले
घित्करणमिति ननु तथापि पदमित्यत्र न फलमत आह । भग फलमिती
ति । ईषद्दुःसु० । नन्वीषदादीनामव्ययत्वात् खल खित्वस्य न फलमत आह ।
खित्वमुत्तरार्थमिति । कर्तृकर्मणोरिति सूत्रविषये सुमर्थमित्यर्थः । यद्यप्यत्र
सूत्रे कृच्छ्राकृच्छ्रार्थेष्विति सामान्यत एवोक्तस्तथापि योग्यतावशात्सम्बन्धो बो
ध्य । कृच्छ्राकृच्छ्रार्थेष्विति किम् । यत्राल्पत्वमात्रतात्पर्येणेषद्भेद इत्युच्यते तत्र मा
भूत् । तृतीया पंचमो चेति । तृतीया पञ्चमी योग इत्यस्याध्याहारः इतरः । क
र्मप्रवचनीयादितरः । मूले यदास्वतीकर्मप्रवचनीयाविति । स्वतेः कर्मप्रवचनी
यत्वे त्वनुपसर्गान्तरत्वात्सुस्त्यमस्त्येव कर्मप्रवचनीयसंज्ञाया उपसर्गसंज्ञा बाध
कत्वात् । सोः कर्मप्रवचनीयत्वे तु उपसर्गात्परत्वमेव नास्तीत्यभिप्रायेणोभयोरु
पादानम् । उपसर्गत्वप्रतिषेधस्त्विति । वार्त्तिकमुक्तम् इति शेषः । कर्तृकर्मणो
श्च । भूकृञोः चकार ईषदादिसमुच्चायक एवस्वेषदादीनामुपपदत्वात्तस्माद्दच-
र्येण कर्तृकर्मणोरित्यस्युपपदबोधकत्व त्वर्थपरमत एव खल् खित्वचरिता
र्थम् । किञ्चेषदादीनामनुवृत्त्यैव सिद्धे चकार सन्नियोगार्थोऽपि तेन यत्रान
योरीषदादीनाञ्च युगपत्प्रयोगस्तत्रैव प्रत्ययः । खल. खित्वादेवानुवृत्तेः सिद्ध-
त्वात् ॥ यथा संख्याभावश्च यथासंख्यसूत्रे भाष्य एव स्पष्टः । न च यथासंख्य-
भावफलम्भूधातोः कर्मण्युपपदे ख्मसिद्धिरिति तत्र न संभवति भवतेरकर्म
कत्वात् ॥ यदानुभवरूपप्राप्तिरूपोऽर्थोऽस्य प्रवृत्तिस्तदा सकर्मकत्वेऽपि ष्यर्थंतुसि-
त्वस्य कथं संभव इति वाच्यम् । अन्तर्भावितण्यर्थस्य भवतेः सकर्मकतया धातुधार-
णानुकूलव्यापाररूपफलाश्रयत्वविवक्षायां तदाकर्मत्वसंभवेन तस्य कर्मोप
ण्यर्थद्वसिता याङ्ख्युल्प्रत्ययसिद्धेः प्रयोजनत्वात् । ननु दुरादीनामुपसर्गत्वा-
त्सोपास्थातोरव्यवधानेनैव प्रयोगः संभवति । ते प्रागितिसूत्रे तत्प्रादिति परि-
भाषया उत्तराङ्गविकल्पया उपस्थितेः । खलः खित्वमीषदाद्यर्थमित्यत्र च-
रितार्थमिति चेत् । समानेन भवता दुःखेन स्वाद्येन न गम्यं

इदमुदाहरणम् ॥ पूर्वद्वृत्तियात्र विन्ध्याख्यपर्वत एव । तस्य योग. परगङ्गाया-म् । अतिक्रम्येत्यत्रातिशब्दसमभिव्याहृतस्य क्रमधातोः प्राप्तिक्रियाध्वंसोऽर्थे । तदेकदेशप्राप्तौ पर्वतकर्मकत्वादेनान्वये नपर्वतकर्मकप्राप्तिक्रियाध्वंसस्य लाभे तस्य ध्वंसस्य समानकालिकत्वसम्बन्धेन नदीपदार्थनदीप्राप्तावन्वयाद्दक्षिणदेशस्थपुरुषकर्तृकपर्वतकर्मकप्राप्तिक्रियाध्वंससमानकालिकनदीकर्मकप्राप्तिप्राप्तिक्रियाविषयकशाब्दबोधे वृत्तेऽवरेण पर्वतेन परनद्यास्तकर्मकतादृशपुरुषकर्तृकप्राप्तिक्रिया ध्वंससमानकालिकप्राप्तिकर्मत्वरूपो योगो गम्यत इति बोध्यम् । योगपदार्थश्च सम्बन्धः सचाच क्रियाद्वारक । क्व चित्, साक्षात्क्रिययोरेव परावरयोर्योगा यत्र तत्राप्यस्य प्रवृत्ति. । यथाऽव्यनिकन्यायव्युत्पादनावसरे कथितवाक्यस्थले । अवेमांसमिति विग्रहाविकशब्दात्प्रत्ययस्योत्पत्तिरित्यादौ । विग्रहपदार्थश्च विभिन्नत्वेन ज्ञानरूप एवञ्चावेर्मासमित्याकारकवाक्यज्ञानस्य स्वोत्तरकालिकत्वसम्बन्धेनाविकशब्दावधिकप्रत्ययोत्पत्तावन्वयः । एवञ्चेदं सूत्रमसमानकर्तृकार्थमपूर्वकालार्थमिति च द्रष्टव्यम् । अलङ्खल्वोरिति तु क्रियान्तराभावेऽपि स्वार्थम् । धातुसम्बन्ध इत्यस्य च तत्र सामर्थ्याद्बाध ॥ परत्वादिकम्परावरयोग इत्यत्र लोकव्यवहारेण पुरुषभेदेन भिन्न वैवक्षिकमेव । तेनोत्तराह्वपुरुषकर्तृकदक्षिणदिगवच्छिन्नदेशकर्मकगमनस्थलेऽप्राप्यपर्वतन्नदी अतिक्रम्य पर्वत इति प्रयोगस्याप्युपपत्तिरिति । समानकर्तृकयो पूर्वकाले । पूर्वकाल इति शब्दो बहुव्रीहिर्न तु तत्पुरुष. । समानकर्तृकयोर्द्वयो. पूर्वस्मिन्नित्यनेनैव पूर्वकालावच्छिन्नबोधकपूर्वशब्दोपादानेन पूर्वकाललाभसम्भवेन कालपदोपादानस्य व्यर्थत्वापत्तेः । बहुव्रीहौ तु पूर्वकालविशिष्टार्थस्य लाभ इत्येतदर्थलाभार्थं कालपदम् । समानशब्दात्तुल्यपर्यायः ॥ तच्च तुल्यत्वञ्च वास्तवभेदघटितम् । वयमा सामर्थ्येन च यत्र सदृशौ चैत्रमैत्रौ तयोर्मध्ये चैत्रेण प्रथमभुक्तन्तदनन्तरञ्च मैत्रेण तत्र चैत्रेण भुक्त्वा मैत्रो व्रजतीत्यापत्ते. । किन्तु यत्र क्रियाभेदेन तत्तविरूपितशक्तिभेदद्वातभेदेन । कल्पित. कर्त्रा भेदस्तत्रैव इष्यत इत्यारोपितभेदघटितं सादृश्यन्तथा चैकत्वे पर्यवसान बोध्यम् । नचैवमेककर्तृकयोरित्येवास्तु समानेति व्यर्थमिति वाच्यम् । सादृश्यमारोपितभेदघटितमपीह शास्त्रे शब्दसाधुतानियामकमिति

इति प्रयोगेऽपि प्रतिषेधवाची अलंशब्द । अलङ्कार इत्यत्र भूषणधारणेऽलंशब्दो वर्तते तदर्थस्य जनकतासम्बन्धेन कृधात्वर्थेऽन्वय । उदीचां माङो व्यतीहारे। इत्युक्तेति । एतेन मेङो व्यतिहारे नित्य इत्तिरित्युक्तम् । माङस्तु न तथा। अत एवोदीचाम्माङ इति निर्देशस्य नानुबन्धकृतमनेजन्तत्वमिति परिभाषाया ज्ञापकत्वपर भाष्य सङ्गच्छते । अपमित्य याचत इत्यत्र मेङ्धातोरर्था याच्धात्वर्थपूर्वकालिकत्वाभावस्तद्योपपादयति । पूर्वञ्चासाविति । याचनोत्तरकालिक वस्त्रादिकर्मकम्परिवर्त्य दानमिति बोध । न चानेन सूत्रेणापूर्वकालार्थकाद्धातो क्त्वाप्रत्यये कृतेऽपि याच्धातौ पूर्वकालिकक्रियावाचकात्समानकर्तृकयोरित्यनेन क्त्वेति वाच्यम् धातुसम्बन्धे प्रत्यया इत्युक्तास्य विधानेन यत्र क्त्वाप्रकृत्यर्थक्रियाया क्रियान्तरविशेषणत्वविवक्षा तदैव क्त्वाप्रत्ययोत्पत्त्याऽयमेङ्धात्वर्थस्य स्वसमानकर्तृकत्वस्वपूर्वकालिकत्वोभयसम्बन्धेन याच्धात्वर्थम्प्रतिविशेषणत्वात् । तदा याच्धात्वर्थे पूर्वकालत्वस्य मानसबोधस्य सत्त्वेनैतस्य विशेषणत्वतात्पर्यक क्त्वाप्रत्ययो न भवति । परावरयोगे च । स्वमार्थं वक्तुमवरशब्दं व्याचष्टे । अवरशब्द इति । एवञ्च परशब्दस्य पूर्वसाकाङ्क्षतयाऽवरशब्दस्य परसाकाङ्क्षतया च तयोर्द्वयोर्निमित्तत्वमिह लभ्यते। अप्राप्य नदीम्पर्वतः । दाक्षिणात्यमाङ्काश्चिदेशकागमनसमये यया व्यवस्था भवति तादृशी. कथमिदम् । नद्यत्र गङ्गा । पर्वतो विन्ध्य । दक्षिणदिगवच्छिन्नदेशादागमनकर्तृभिर्दाक्षिणात्यैर्गङ्गामप्राप्य विन्ध्याख्यपर्वतः प्राप्यत इत्यर्थ. । अत्र नञ. प्रागभावोऽर्थ । प्राप्येत्यस्य प्राप्तिक्रियार्थ । तस्या द्वितीयायाश्चार्थस्य गङ्गाकर्मकस्याभेदेनान्वये न गङ्गाकर्मकाभिन्नप्राप्तिक्रियाप्रागभावलाभ. । पर्वतपदस्य च त्यार्थैकदेशम्यायेन पर्वतकर्मकप्राप्तिक्रियार्थ. । चर्मा सामानाधिकरण्यसम्बन्धेन कालिकप्रत्यासत्तिघटितेन गङ्गाकर्मकप्राप्तिक्रिया प्रागभावस्यान्वये सति दक्षिणदेशस्थपुरुषकर्तृका गङ्गाकर्मकप्रागभावसमानकालिकी पर्वतकर्मकप्राप्तिक्रियेति शाब्दबोधे जातेऽर्थाद्गङ्गाया परत्वम्पर्वतस्य तत पूर्वत्वञ्चायाति । परेण पूर्वस्य योगस्य कालिकसामानाधिकरण्यसम्बन्धेन स्वकर्मकप्राप्तिक्रियाप्रागभावविशिष्टक्रियाकर्मत्वरूप एव । प्रतिक्रम्य पर्वतादी । प्राप्यत इत्यध्याहार । पर्वतेन परस्य योगो

रान्तर्गतत्वादावाहनक्रियायास्ततो भेदाभावात्कथङ्क्त्वाप्रत्यय इति वाच्यम्। आवाहनात्मक विशेषधर्मावच्छिन्नस्य पूजने समानकर्तृकत्वात्मकसम्बन्धेन विशेषणत्वन्तद्विशेष्यपूजने च षोडशोपचारैरित्यस्य सामान्यधर्मावच्छिन्नस्य विशेषणत्वमिति स्वीकारात्। यत्र त्वनेकक्रियाप्रयोगस्तत्र स्नात्वा भुक्त्वा पीत्वा व्रजतीत्यादौ सर्वक्त्रिदावैशिष्ट्यम्प्रधाना क्रियायाम्भासते न तु तासाम्परस्परं विशेष्यविशेषणभावः गुणानां च परार्थत्वादिति न्यायात्। यत्र त्वयस्त्वैवो भोजनेन तृप्तो न तु पानेनेत्यर्थविवक्षया भुक्त्वा तृप्तो न पीत्वेति प्रयोगस्तत्र जन्यत्वमपि भोजनस्य संसर्गविधया भासते पानस्य चैतादृशसम्बन्धावच्छिन्नभावस्त र्पणक्रियायां विशेषणम्। अधीत्येतिशिवम्प्रपूज्य तदालये तिष्ठतीत्यादौ व्याप्यत्वं समानकर्तृकत्वञ्च सम्बन्धः तत्र व्याप्यत्वं क्त्व चिकालिकसम्बन्धावच्छिन्नज्ञानात्ते पूपसंख्यानमित्यनेन प्रथमप्य गतः प्रतमप्य गत इत्यत्राव्याप्तिमुद्भाव्याल्लोपे च गुरुपूर्वात् प्रतिषेध इत्यनेन प्रतिचिकीर्ष्य गत इत्यत्रातिव्याप्तिरुद्भाविता। अल्लोपे कृते यो गुरुपूर्वस्तस्मात्परस्य णिभूतपूर्वां लघुपूर्वतामाश्रित्यायादेशः प्राप्नोतीत्यर्थः। ततो लघुपूर्वादिति वचमात्सिद्धमित्युक्तम्भाष्ये। पञ्चम्यन्तपाठे यातिव्याप्तिः सा पञ्चम्यन्ततः प्रतमप्य गत इत्यादौ णिच्यत उपधाया इति वृद्धौ मितां ह्रस्व इति ह्रस्वत्वे कृतेऽप्यसिद्धवदत्रेति तस्यासिद्धत्वात्कथ लघुपूर्वात्परत्वमिति वाच्यम्। समानाश्रये हि आभीयासिद्धत्वम्भवति प्रकृते च णौ ह्रस्वत्वं ल्यपि णेरयादेश इति व्याश्रयत्वं स्पष्टमेव। विभाषापः। यद्यप्यपि इतीडोऽप्यध्याप्य गत इत्यत्र सम्भाव्यते तथाप्यत्र लाचणिकत्वेन प्रतिपदोक्तस्यैवाप इत्यस्य ग्रहणमिति बोध्यम्। मूले कथम् स्वं व्यादायेति। सुखव्यादानस्य नेत्रनिमीलनस्य च स्वापप्रागोत्तरकालिकत्वेन पूर्वकालविशिष्टार्थप्रत्तित्वाभावात्प्रश्नः। तदग्रविवक्षयेति। एतेन विवक्षयैव वस्तु शब्दानां साधुत्वनियामिका। यथा आदिकर्मणि निष्ठासूत्रे धात्वर्थैकदेशस्य स्थितावपि मुत्पत्तिकालावच्छिन्नस्य कम्य चिदवयवस्यातीतत्वविवक्षया निष्ठा भवति तथा प्रकृतेऽपि स्वापप्रागभयोर्व्यक्तिं चिदवयवस्य सुखव्यादाने नेत्रनिमीलनोत्तरकालिकत्वेन तदंशपेक्षया पूर्वकालसम्बन्धिक्रियावचनत्वमादायायम्प्रयोग इत्युक्तम्। न च यत्रादौ स्वप्नतो मुखव्यादानत्वविरतत्कालोत्तर

बोधयितुमेवमभिधानात् । समानकर्तृकयोरिति निर्धारणे षष्ठी । धातोरिति त्वधिकाराल्लभ्यम् । तस्य च पूर्वकाल इति विशेषणम् । वाचकत्वं सप्तम्यर्थः । एवं च यत्फलितं तदाह । तद्विशिष्टेऽर्थ इति ॥ अत एव । बहुव्रीहिसमासेनैतादृशार्थस्याभिप्रेतत्वादेव । अयं क्त्वाप्रत्ययोऽनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति न्यायेन प्रकृत्यर्थ एव । स च भाव एव । एवञ्चाव्ययकृतो भावे इति सिद्धान्तस्याप्युपपत्तिः । कालश्च क्त्वान्तघटितवाक्यजन्यशाब्दबोधे क्त्वाप्रत्ययार्थक्रियायाम्प्रकारीभूय भासते । अत एव पूर्वं भुङ्क्ते पश्चाद्व्रजतीत्यत्र क्त्वाप्रत्ययप्रसङ्गः स्वशब्देनोक्तत्वान्नेति समाहितमाकरसूत्रे भाष्ये । पूर्वशब्देन पूर्वकालरूपोऽर्थः प्रकृतेऽभिधीयते न तु धातुनेति तदर्थः । न च पूर्वं भुक्त्वा पश्चाद्व्रजतीत्यत्रापि क्त्वा न स्यादिति वाच्यम् । नैतत्क्रियापौर्वकाल्यं किन्तर्हि सर्वपौर्वकाल्यमेतत् । पूर्वं ह्यसौ भुक्त्वाऽन्येभ्यो भोक्तृभ्यस्ततः पश्चाद्व्रजतीत्यर्थस्य भाष्यकृतैवाभिधानात् । साधनान्तरक्रियापेक्षपौर्वकाल्यमिति नानेन सूत्रेण क्त्वा । किन्तु विभाषाग्रेप्रथमपूर्वेष्वित्यनेन । अथ पूर्वकालक्रियाया वस्तुतोऽतीतत्वेऽपि तत्त्वेनावबोधाद्भूत इति नाऽभिहितम् । सूत्रे समानकर्तृकयोरिति द्विवचननिर्देशाद्द्वित्वं विवक्षितमिति भ्रमनिवारणायाह । मूले द्वित्वमतन्त्रमिति [illegible]स्याप्यर्थस्य स्पष्टप्रतिपत्त्यर्थं द्विवचननिर्देशो न तु विवक्षितत्वादेव पूर्वकालविशिष्टा क्रिया च समानकर्तृकत्वसम्बन्धेन प्रधानक्रियायां विशेषणम् । स्वरत्यादिधातुभ्यः परस्य क्त्वः स्वरतीतिसूत्रेण प्राप्तोऽपीट् श्र्युकः किति सूत्रेण बाध्यत इत्याह । पुरस्तादिति । अत्र क्त्वार्थक्रियाकर्तुरनभिधानेऽपि प्रधानक्रियाकर्तुरभिधानेनाप्रधानक्रियानिरूपितशक्तेस्तदभिधानमिति न चैत्रो भुक्त्वा व्रजतीत्यत्र चैत्रपदादप्रधानक्रियामादाय तृतीया । नापि पक्त्वौदनो भुज्यत इत्यत्र द्वितीया । यत्र तु तयोरेकनिष्ठत्वन्तत्रैवेयं व्यवस्था । यत्र तु तयोर्भिन्नाधिकरणकत्वन्तत्र स्वप्रधानक्रियाकर्मवाचका द्वितीया भवत्येव । ओदनस्य पक्त्वा ग्रामो गम्यते चैत्रेणेति यथा । न च प्रातः काले मित्रं दृष्ट्वा गि[illegible] क्रिययोरेककर्तृकत्वाभावात्कथं क्त्वाप्रत्यय इति वाच्यम् । एतादृशे विषये स्थितस्य [illegible] समानकर्तृकत्वस्योपपादनात् । न च [illegible]

दादत आह। कर्त्रादिविवक्षापन्न इति। मानाभावादिति । प्रकृतसूत्रविषये ह्रा चित्तु संयोगविशेषावच्छिन्नव्यापारनिष्ठव्यापकतानिरूपितम् । प्रपदं वासः परिधाय वह्निर्गच्छतीयमित्यादौ यथा। गङ्गाम्प्राप्य सेना तिष्ठतीत्यादौ च सति तात्पर्येऽव्यवधानमपि सम्बन्धो भासते। एवमन्यत्र यथा यथम्बोध्यम् । न क्त्वा सेट् । कित्पदस्य संज्ञककारबोधकतया सविशेषणे विधिनिषेध इति न्यायेन विशेषणीभूतसंज्ञाया निषेधेऽस्य सूत्रस्य तात्पर्यमिति भ्रमवारणायाह। अनेनेति। न मृडमृदेति सूत्रं स्वाप्त्वोरिच्चेतिसूत्रानन्तरम्पठनीयम्। सङ्ग्रहणञ्च कर्त्तव्यमेवञ्च मृडादिभ्य एव सेट्। क्त्वा किडवति नान्येभ्य इति नियमो भविष्यति तावतैव गुपित्वेत्यादौ सिद्धौ न क्त्वेति व्यर्थमिति वाच्यम् .मृडादिभ्य क्त्वैवदिति नियमस्याप्यपत्तेः। मृडमृद। यद्यपीह सेडिति न प्रकृतम्। तथाप्यस्य सूत्रस्य न क्त्वासेडितिसूत्रप्राप्तकित्कार्यप्रतिषेधबाधकत्वसेड्विषयकमेवेदं सूत्रमित्याशयेन सेटक्त्वेति मूलेऽभिहितम्। नोपधात्थफान्ता द्वा। न क्त्वासेडिति वर्त्तते इह धातोरिति यद्यपि न प्रकृतन्तथापि क्त्वाप्रत्ययस्य धातोरेव सम्भव इति धातोरित्यस्याक्षेपस्तस्यनोपधादिति थफान्तादिति। च विशेषणम। एवञ्च थफान्तादित्येवतदन्तविधिनाथफान्तस्यलाभेसिद्धेऽन्त[ग्रहणं स्पष्टार्थम्। कोथित्वा। रेफित्वेति। न चेहनोपधग्रहणाभावे कित्वविकल्पः स्यादिति वाच्यन्तन्न सम्भवति ।। रलोव्युपधादित्यनेन कित्वविकल्पस्य प्राप्तेरिति वाच्यम्। प्रकृतसूत्रे नोपध ग्रहणसामर्थ्येन तस्यापि विकल्पस्याप्रवृत्तेः। न च ऋफधातौ. क्त्वा प्रत्यये विकल्पवारणाय नोपधग्रहणमस्त्विति वाच्यम्। द्वाविमौ धातू ऋफ ऋम्फेति । तत्राद्यस्य ऋफधातोः क्त्वाप्रत्ययेऽस्मिन्सूत्रे नोपधग्रहणे विकल्पस्य वारणेऽपि न क्त्वा सेडिति कित्वनिषेधेऽर्फित्वेति रूपम्। द्वितीयस्य नोपधादिति विकल्पेन कित्वपक्षे ऋफित्वेति रूपमिति फलतो विशेषाभावेन नोपधग्रहणस्य तद्व्यावर्त्तकत्वाभावात् । वञ्चिलुञ्च्यृतश्च वञ्चधातो रुदित्वादुदितो वेतीट् पक्षेऽनेन कित्वविकल्पः। ऋतिर्धातुर्घृणार्थकस्तस्मात्क्त्वाप्रत्यये चिकीर्षिते आयादय इत्यनेन ऋतेरीयङिति विहितस्य ईयङ्प्रत्ययस्याभावेऽनेन कित्वविकल्पः। तृषिमृषिकृशेः। नोपधादित्यतो वाग्रहणानुवृत्त्यैव सिद्धे काश्यपग्रहणं पूजार्थम्। अचुधातोरुदि-

मपि स्वापानुवृत्तिस्तत्र मुखं व्यादाय स्वपिति । नेत्रे निमील्य हसतीत्यत्रा-
विवक्षयोत्तरकालिकहासागमादाय यथा प्रयोगस्तथा यत्र मुखव्यादाननेत्रनि-
मीलनयोरुत्तरकालिकस्वापहासाधिकरणकाले निवृत्तिस्तत्रापि मुखं व्यादा-
य स्वपिति नेत्रे निमील्य हसतीति प्रयोगः स्यादिति वाच्यम् । समानकर्तृक-
त्वस्येव कालिकसम्बन्धावच्छिन्नस्वनिष्ठव्यापकतानिरूपितव्याप्यत्वस्यापि संस-
र्गत्वात् । न चैवं पूर्वकालिकस्वापहासाश्रययोरधिकरणे क्षणे कालिकसम्बन्धे-
व्यादाननिमीलनयोरसत्वात्कथमेतादृशव्याप्यव्यापकभावस्योपपत्तिरिति वाच्य-
म् । शब्दप्रयोगाधिकरणकालाव्यवहितोत्तरकालाधेयत्वविशिष्टतत्क्रियात्वाव-
च्छिन्नव्याप्यतानिरूपितव्यापकताया एव संसर्गत्वाभ्युपगमात् । एवमेव विष्णु
विदं व्याप्यास्तीति यत्र प्रयोगस्तत्राप्युपपत्तिः । आभीक्ष्ण्ये णमुल् च । च-
कारोऽत्र स्वविषये क्त्वाप्रत्ययस्यापि प्रयोगार्थस्तदाशंकते यद्यपीत्यादिना । त-
त्र सूत्र इति । विभाषाग्र इति सूत्र इत्यर्थः । तेन न्यायेन । उत्तरकालिकक्रि-
यायां स्वसमानकर्तृकत्वसम्बन्धेन पूर्वकालिकक्रियायाः सत्वमिति न्यायेन ।
पूर्वविप्रतिषेधेनेति । यत्र समासस्तु तत्रैव सूत्रे भाष्यकृता तस्य सूत्रस्यापाग्र
विभाषात्वमुपपादितन्तदेव । योत्तिति मिति । एवञ्च कथं द्विर्वचनमिति शेषः
णमुलादिनेति । यथादिना क्त्वः संग्रहः । अर्थान्तरेऽपि । आभीक्ष्ण्यातिरिक्ते-
ऽपि । तद्विधानादिति । णमुलो विधानादित्यर्थः । न चार्थान्तरेऽप्येतद्विधा-
नादिति कथम् । यस्याप्यव्ययकृतो भाव इति सिद्धान्तात्तत्र एतत्प्रत्ययप्रसक्ता
रादिति वाच्यम् । चाभीक्ष्ण्याभावे दर्शनादित्यर्थस्य विवक्षितत्वात् । विभा
षाग्र इत्यादिसूत्रविषये यथा । मूले वा दीर्घ इति । णम परेणिचि मि-
त्वाद् ह्रस्वे णमुलि परे चिण्णमुलोर्दीर्घोऽन्यतरस्यामिति वा दीर्घ इत्यर्थः ।
न यद्यनाकांक्षे । सूत्रोदाहरणमस्य मतेऽस्य भिराचष्टे । यद्यपीत्यादिना ।
अनाकाङ्क्ष इति यथा यज्जन्ताकाङ्क्षशब्दस्य न जनसाम. । अनाकाङ्क्षो भा-
त्यर्थ दित्यर्थः फलित । यथाकाला तद्विशेषणीभूतार्थप्रतिपादकत्वरूपा ।
एवञ्चाभयोः । क्रियायांस्तयात्वाभावस्तत्रैव निषेधोऽयमतदाह । यदीत्यादिना
मूले । यनेनानन्तरस्येति न्यायेन णमुल एव निषेध इति गाङ्गेकतीयम् । य-
थासामिति व्याख्यानेनोभयोर्निषेधात् । नमुपरो भट्टादय इत्यनुपपन्नमर्थं

र्वं भुङ्क्ते पश्चाद्व्रजतीति क्त्वाशब्देनोक्तत्वान्न भवति। न तर्हीदानीमिदं भवति। पूर्वं भुक्त्वा तदा व्रजतीति। नैतत्क्रियापौर्वकाल्यद्विस्तर्हि कर्तृपौर्वकाल्यमेतत्। पूर्वं ह्यसौ भुक्त्वाऽन्येभ्यो भोक्तृभ्यस्ततो व्रजतीत्युक्तम्। अत्र कैयटः। क्त्वाशब्देनेति। पौर्वकाल्ये द्योत्ये क्त्वादिर्विधीयते न तु विषयभावे। पूर्वशब्दस्यात्र क्रियापौर्वकाल्यवाचित्वादग्रादिसूत्रेणापि न भवति। अग्रादीनां साधनपौर्वकाल्यविषयाणामत्र ग्रहणात्। नैतदिति। द्विविधात्र भुजेः पूर्वकालता व्रजिक्रियापेक्षा तस्यामन्वयः। भोक्त्रन्तरसाध्यभुजिक्रियापेक्षा च तां पूर्वशब्द उपादत्ते ततश्चाग्रादिसूत्रेणात्र क्त्वाणमुलौ भवत इति भावः। कर्तृपौर्वकाल्यञ्च क्रियाद्वारकमेवेति। कर्तृपौर्वकाल्यमित्यस्य कर्त्रन्तरसाध्यस्वसजातीयक्रियापेक्षपौर्वकाल्यमित्यर्थः। एवञ्च साधनपौर्वकाल्यविषयाणामग्रादीनां यत्रोपादानभावस्य च प्राधान्यविवक्षा तदा क्त्वाणमुलौ यदा कर्तुर्विवक्षा तदा लडादय इति बोध्यम्। अग्रभोजमिति प्रकृतसूत्रोदाहरणेऽसत्वाव्ययेनेति नियमात्समासाभावः। कर्मण्याक्रोशे कृञः खमुञ्। कृञत्राभिमतफलानुकूलव्यापारवाची। चोरं कारमित्यत्र चोरशब्दः स्वरूपपरः। तस्य कर्मत्वञ्चोच्चारणापेक्षयेत्युच्चारणमभिमतफलमत्राव्ययकृत इति सिद्धान्तात्खमुञ्प्रत्ययोऽपि भावे। एतदन्तार्थस्यापि पूर्ववत्समानकर्तृकत्वसम्बन्धेन क्रियान्तरम्प्रतिविशेषणता॥ तत्सिद्धेः। चोरशब्दस्य सुम् सिद्धिः। यत्र चोरोऽसीत्युच्चारणमेव क्रोधेन तत्रायम्प्रयोगः। यत्र तु नाहं चोर इति वदन् पुरुषश्चोरत्वेन सम्बध्यते तत्र नायमन्वयः आक्रोशपदस्वारस्यात्। आक्रोशोऽपि विलक्षणशब्दोच्चारणानुकूलव्यापार एव। विशेष्यस्य चोरशब्दोच्चारणानुकूलव्यापारस्य समानकर्तृकत्वसम्बन्धेन सामान्यधर्मावच्छिन्ने आक्रोशे विशेषणत्वम्॥ एवं सति कृञः प्रयोगस्तत्प्रकृतिकखमुञन्तशब्दघटितवाक्यस्य साधुत्वार्थमेव न तु खमुञन्तार्थस्यापि शाब्दबोधे भानमित्येव कल्पना लाघवादुचितेत्याशयेनाह। यद्वेति। आक्रोशपदार्थश्चोच्चारणानुकूलव्यापार एव। चोरशब्दः पूर्ववच्छब्दपर एव। तस्योच्चारणरूपफलाश्रयत्वात्कर्मता। स्वादुमि णमुल्चेत्यनुवर्त्तते। स्वादुमित्यर्थपरम्। वृत्तिकारादिसम्मतव्याख्यानात् स्वाद्वर्थे उपपदे कृञो णमुल् स्यात् स्वादुशब्दश्च विजातीयप्रीतिरूपा या रुचिस्तद्विषयपरः। कृञ्धात्वर्थश्च

त्वादुदितो वेति विकल्पे प्राप्ते आह । अञ्चेः पूजायामिति, नित्यमिडिति । क्त्व मथ त्वि । झलीति वर्त्तत इति । एकदेशे स्वरितत्वसामर्थ्यादिति शेषः । य स्योदित्वादिडभावेऽनुनासिकस्येति नित्यन्दीर्घे प्राप्ते इदम् । ज्ञातनशा वि भाषा । स्कन्दिस्कन्देत्यत क्त्वीत्यनुवर्त्तते । अत्र यथा झलीत्यादावित्यस्य सा भस्त्वमकारमाह । अनिदितामित्यत इति । तेन । क्त्वान्तोत्तरपदक इति व्या ख्यानेन । स्नात्वा कालक इति । मयूरव्यंसकादिसमास । स्पष्टार्थमिति । अथ यपूर्वपदकसमास एवास्य सूत्रस्य प्रवृत्तिर्नत्वव्ययात्परत्वं यत्र क्त्वान्तघटितस मासस्य तत्र प्रवृत्तिरित्यर्थस्य स्पष्टप्रतिपत्त्यर्थमित्यर्थः । अनञः परस्य क्त्वान्तो त्तरपदकस्य समासस्यावयवो यः क्त्वा तस्येत्यर्थे तु तत्र परमकृत्वाशब्देऽतिव्याप्ति स्यात् । प्रकृत्येति । अत्र प्रशब्दस्य धात्वर्थगतप्रकर्षद्योतकतया गतित्वात्कुगती ति समाससंज्ञा ॥ षत्वतुकोरसिद्धः ॥ कोऽसिचदिति । इह पूर्वरूपस्य परादि वद्भावेन ओऽसिचदित्यस्य पदत्वात्सकारस्य पदादित्वाभावादिण परत्वात्षत्वे प्राप्तेऽसिद्धत्वम् । भाष्योक्तसिद्धान्ताभिप्रायेणाशंकते । यद्यपीति । पदान्तपदा द्योरिति । अन्यथा हचेच्छत्रमित्यत्र दीर्घात्पदान्ताद्वेति विकल्पो न स्यात् । सम्प्रदायमतानुसारेणाह । गतिकारकेत्यस्येति । ननु व्यवस्थितविभाषाणां भा ष्यसम्मतानामेव प्रामाणिकत्वमत आह । वा ल्यपीत्यस्येति । न ल्यपिनपीयय स्यामादौ तु पीङ्धातुर्दैवादिको बोध्यः । ल्यपि लघुपूर्वात् । लघु पूर्वो यस्मा दिति बहुव्रीहिः । न च प्रणमय्येत्यत्र सूत्रचारितार्थ्येऽपि विकल्पेत्ययायादेशो न स्यात्पञ्चमीसमासेनाल्लोपस्य स्थानिवद्भावादिति वाच्यम् । अस्याप्युदाहरणा विठाय्य मेटीतिसूत्रे सेट्ग्रहणाच्च पञ्चमीसमासस्यानित्यत्वात् । ननु लघुपूर्वा दित्यत्रान्यपदार्थो वर्ण एव । बध्यश्च स्मृतो साजात्यादेवत्र प्रनिकीर्त्यत इत्य त्रापि वर्णग्रहणे जातिग्रहणादयादेशः प्राप्नोतीति चेत् । प्रवेभिदय्यप्रस्तमय्य त्यादिभाष्योयोदाहरणसंगत्या पञ्चमीसमासानित्यत्वे मैकवर्णात्परत्वं यत्र स र्वेयाप्य प्रवृत्ते स्वीकारात् । वर्णग्रहणे जातिग्रहणमिति तु ज्ञापकसिद्ध सर्वत्रेति परिभाषा भेदाद्योपर्ति । अत एव ल्यपि लघुपूर्वस्येति स्थानि व्य कर्त्त विशेषणं मागमत् साधनपोर्वकात्स्यविषयाणामप्रादीनां ग्रहणम् । अत एव समासकर्त्तव्यं पूर्वकाल इतिसूत्रभाष्ये इत्य कथाम गतमि । पृ

सम्पत्त्यनुकूलव्यापारपरः। तस्य भुजधात्वर्थे विशेषणता पूर्ववत्। मान्तत्वं निपात्यत इति॥ निपातस्य फलमाह स्वाद्वीमित्यादिना॥ अयम्भावः। स्वादुमीत्येव सूत्रं कार्यम्। खमुञ्ग्रहणमनुवर्तनीयम्। स्वादुमादीनाम्मुमागमेन सिद्धौ मान्ततसूत्रेण खमुञो विधानं यत्र खमुञा सिद्धिर्न भवति तदर्थन्ताद्दृशः शब्दस्याव्ययसंज्ञक इति। अत एव चूर्णान्तमुदाहरति॥ स्वाद्वीमित्यादिना। यद्यस्मिन्नुपपदे खमुञ् स्यात्तदाऽनव्ययस्येति प्रतिषेधान्मुम् न स्यात्। घ्वौ चेति स्वादुशब्दस्य दीर्घः स्यात्। सम्पन्नलवणयोरस्य चावित्तत्वं स्यात्। स्त्रियाम्मस्य स्वादुशब्दस्य यवागूपरत्वे वोतो गुणेति सूत्रेण ङीपि सति खित्यनव्ययस्येति सुमि स्वाद्विङ्कारमिति स्यात्। यत्तु खमुञ्यपि सुमेव विधेयो न तु मान्तत्वनिपातनमिति। तन्न। चूर्णान्तत्वे स्त्रियाञ्च पूर्वोक्तदोषापत्तेः। न च प्रत्ययसन्नियोगेन सुमो विधानादन्तरङ्गत्वात्पूर्वम्मुमि नैते दोषा इति वाच्यम्। उपपदमिति महासंज्ञा हि महासंज्ञाकरणात्सुबन्तस्य सुबुत्पत्तिञ्च संख्यामपेक्षते। ततश्च स्वार्थद्रव्यलिङ्गसंख्याकारकाणाङ्क्रमिकत्वे प्रातिपदिकस्य स्वार्थाभिधायकत्वे स्त्रीप्रत्ययानन्तरं सुबुत्पत्तौ पूर्ववदपदार्थाभिधायकत्वेऽनिष्टरूपापत्तिः। स्वादुशब्दस्यैव प्रत्ययसन्नियोगमान्तत्वनिपातने तु न कश्चिद्दोषः। न च मान्तत्वनिपातनमस्तु खमुञ्प्रत्यय एवास्त्विति वाच्यम्। अव्ययार्थेणमुल्विधानमित्यस्य प्रागविधानात्। न च मान्तत्वनिपातनं णमुल्सन्नियोगे न स्वादिवच स्वादुङ्कृत्वेति रूपासिद्धिरिति वाच्यम्। एतत्प्रकरणस्थप्रत्ययसन्नियोगे न मान्तत्वनिपातनमित्याशयात्। यदि तु निपातनं नासत्पूर्वं शब्दोपजन इति स्वादुशब्दस्य स्वादमित्यादेश इतिकल्पना तदा खमुञ् लिङ्गविशिष्टपरिभाषया यथाव्यर्थाभिधायकं स्वादीमर्थे उपपदेऽपि स्वात्मन्तरानं मान्तादेशे स्वादुङ्कारम्भुङ्क्त इत्यस्य सिद्धावपि स्वादीकृत्वा यवागूं भुङ्क्त इतिभाष्यप्रयोगस्य स्वाप्रत्ययपरेऽनुपपत्तिरित्युक्ते तदा णमुल्सन्नियोगे मान्तत्वनिपातनमित्यं नास्तु॥ स्वादुङ्कारं भुङ्क्ते इत्यत्र स्वादुशब्दो द्वितीयान्तमाह स्वादुशब्दोपपदसद्भावेन नित्यसमासप्राप्तेः॥ अन्यथैवं कथमित्थंसु सिद्धाप्रयोगश्चेत्। एषु कृञो णमुल्॥ सिद्धाप्रयोग इत्यनेन सामानाधिकरण्यान्यथाया विपरिणम्यते। व्यर्थत्वादिप्रयोजनाभिधानाभावादित्यर्थः। अन्यथा

नार्थकत्वात्तस्मिन्नर्थे यदा पादघाते हंतीति प्रयोगस्तदास्य सिद्धार्थमित्यर्थः दर्शितस्यास्मिन्नर्थे हन्धातुरन्यत्र।किञ्च हिंसाप्राणवियोगानुकूलव्यापारो न त्वभिघाताख्यसंयोगानुकूलव्यापारः धातूनामनेकार्थत्वात्तस्मिन्नर्थे यदा प्रयोगस्तदाऽप्यनेन सूत्रेण प्रत्यय इष्यते पाण्युपघातं हंतीति भाष्यप्रयोगात् । फलान्तरमाह हिंसायामित्यादिना । स्नेहने पिषः । स्नेहने इत्यत्र करणे ल्युट् । हस्ते वर्त्तिग्रहोः । करण इति वर्त्तते । तेन शुष्कचूर्णेति सूत्रे एव स्नेहनग्रहणं कृत्वेदं सूत्रत्व कार्यमिति शङ्का निरस्ता । तत्र कर्मणीत्यस्य सम्बन्धात् । हस्ते वर्त्तिग्रहोः । करण इति वर्तते । व्याख्यानात्प्राचीनसम्मतादर्थग्रहणमत्र वर्त्तिर्ण्यन्तो निर्दिष्ट । स्वे पुषः । अत्रापि स्व इत्यर्थग्रहणम् । स्ववाचिनि करणे उपपदे पुषधातोर्णमुल्स्यात् । स्वशब्दस्यात्मादयश्चत्वारोऽर्था अन्यत्र प्रसिद्धास्त एवात्रापि । अधिकरणे बन्धः अधिकरणवाचिन्युपपदे बध्नातेर्णमुल् । चाक्रबन्ध इति तदुक्तभाष्ये । इह कस्मान्न भवति । ग्रामे बन्ध इति । एवं वक्ष्यामि । अधिकरणे बन्धः । सञ्ज्ञायामिति । अत्र संज्ञायामिति कथनेना र्थः सूचितः । संज्ञायाम् । अनधिकरणार्थमारम्भः । कर्त्रोर्जीवपुरुषयोः । कर्तृवाचकयोर्जीवपुरुषयोरुपपदयोर्नशिवहोर्णमुल् स्यात् । यथासंख्यमत्रेष्यते । जीवनाशं नश्यति । कर्तृपदान्तस्य जीवनशब्दस्योपपदसमासः । जीवकर्तृकनाशाभिन्ननाशकर्तेति शाब्दबोधे वृत्ते जीवो नश्यतीति फलितम् । ऊर्ध्वे शुषिपूरोः । ऊर्ध्वशब्दे कर्तृवाचिन्युपपदे शुषिपूरोर्णमुल् । ऊर्ध्वशोषं शुष्यति । अत्राप्यार्थ पूर्ववत् । उपमाने कर्मणि च । चात्कर्तरि । उपमानभूते कर्मणि कर्तरि चोपपदे धातोर्णमुल् । अत्र धातोरित्यधिकाराल्लभ्यम् ॥ उपमानशब्दः करणव्युत्पन्नः ॥ कषादिषु यथाविध्यनुप्रयोगः । अत्र कषादिशब्देन निमूलसमूलयोरितिसूत्रनिर्दिष्ट । कषधातुरूपस्याप्यत्र कषादिषु णमुल्प्रत्ययप्रकृतिषु सत्सु यथाविध्यनुप्रयोगो भवति यथाविधीत्यस्य विधानमनतिक्रम्येत्यर्थः ।विधानस्य यत्सम्बन्धित्वं तस्यैवानुप्रयोगे तदनतिक्रमो भवति ॥ कषादिप्रकृतिकणमुल्प्रत्ययस्य धातुसम्बन्धाधिकारे विधानादनुप्रयोगे सिद्धे यथाविध्येवानुप्रयोग इति नियमार्थमिदं सूत्रम् । धातुमात्रस्यानुप्र योगासम्भवात्तत्प्रकृतिकप्रत्ययेऽपि प्रयोक्तव्ये तिङ एवेति नियमे मानाभावादाह । स

वमेव ब्राह्मणवेदं भोजयतीत्यत्रापि बोध्यम् प्रधानीभूतधात्वर्थस्य कारकविशि-ष्टार्थविशिष्टस्यातिशयप्रतिपादनपरमेतद्वाक्यम् । यावति विन्दजीवोः । अत्र लाभार्थकस्यैव विन्देर्ग्रहणम् । शुना विशिष्टस्य निर्देशात् । अलाभस्यार्थमिदं सूत्रम् । चर्मोदरयोः । अत्र पूरेरिति ण्यन्तस्य निर्देशः । अत एव चर्मोदरयोः कर्मत्वसम्भवः । कर्मणीत्येवेति । 'कर्मवाचकयोश्चर्मोदरयोरुपपदयो पूरेर्णमुल्' ॥ अत्र पूर्वकाल इति न सम्बध्यते किन्तु समानकर्तृकयोरित्येव । एवञ्च समानकर्तृकत्वमात्रं समार्थस्य प्रधानधात्वर्थे सम्बन्धः ॥ वर्षप्रमाणे ऊलोपश्च कर्मणि पूरेरिति चानुवर्तते । वर्षशब्दस्यान्यार्थकत्वभ्रमवारणायाह । वर्षो वृष्टिरिति । वर्षस्य प्रमाणमियत्ता परिच्छित्तिः । सा गम्यते चेत्यर्थः । अत्र भाष्ये ऊलोपश्चान्यतरस्यांग्रहणं शक्यमकर्तुम् । कथं गोष्पदप्रष्टो देव इति । प्राप्तिः पूरणकर्मा तस्यापि सः ॥ आतोऽनुपसर्गे कः इति कः । गोष्पदप्रमिति च क्रियाविशेषणमतो नपुंसकत्वमेकत्वञ्च । पदिकं विभक्तीनां श्रवणं प्राप्नोति । णमुलन्त पश्चात् विभक्तयः । तद्यथा । एकेन गोष्पदमात्रपूरितमिति भाष्येणोलोपश्चेत्यादि प्रत्याख्यातत्वाच्चोलोपग्रहणमत्र गोष्पदप्रन्तरामितीति । अनभिधानादिति । अत्र मागन्तु प्रत्याख्यानपरभाष्यस्य । गोष्पदप्रतरामित्यप्येवमपि, तदेवमानम् । न च पूर्वोक्तगोष्पदपूरमित्यस्यापि क्रियाविशेषणत्वान्नित्ये सूत्रस्याप्यवाच्यतापत्तिरिति । वाच्यम् । गोष्पदपूरमिति क्रियाविशेषणापत्तेः । गोष्पदपूरतरामित्यस्याभावापत्तेश्च । ऊलोपवार्त्तिकस्य सूत्रस्य सत्त्वे तु णमुलन्तस्याव्ययत्वेनोभयं सिध्यति । चेले क्नोपेः । वर्षप्रमाण इत्यनुवर्तते । क्नूयीधातुः शब्दे उन्दने च वर्तते । अनेन सूत्रेण णमुलि कृते तदन्तस्य प्रयोगे सति तावद्वर्षितो जातः येन चेलानि शब्दायन्ते आर्द्राणि वा जातानीति गम्यते चेलशब्दोऽर्थपरो हस्तिकारादिव्याख्यानात् । निमूलसमूलयोः कषः । कर्मणीति वर्तते । निगतं च तन्मूलं च निमूलम् । मूलेन सहितं समूलम् । मूले मेर इति । विशेषणतया प्रतीयमानसामान्यपर्यवसिताव्ययार्थे न भावम् । क्वचिदपि यथाविधीयाः । भाष्येनैव प्रयोगः । समूलाकृतजीवेषु । धातूपपदयोरत्र यथासंख्यं करोति हनः । अत्र सूत्रस्य सार्थवत्त्वाच । हिंसार्थानामिति । चर्मिमार्दितिति । शत्रुधातोरेव

नार्थकत्वात्तस्मिन्नर्थे यदा पादघाते हंतीति प्रयोगस्तस्य सिद्धार्थमित्यर्थः । दर्शितश्चास्मिन्नर्थे हन्धातुरन्यत्र । किञ्च हिंसाप्राणवियोगानुकूलव्यापारो न त्वभिघातात्यसंयोगानुकूलव्यापारः धातूनामनेकार्थत्वात्तस्मिन्नर्थे यदा प्रयोगस्तदाऽप्यनेन सूत्रेण प्रत्ययः स्यादिति पाण्युपघातं हन्तीति भाष्यप्रयोगात् । फलान्तरमाह हिंसायामित्यादिना । स्वे हनि पिष । स्वे हने इत्यत्र करणे ल्युट् । हस्ते वर्त्तिग्रहौ । करणे इति वर्त्तते । तेन शुष्कचूर्णेति सूत्रे एव स्वे हनग्रहणं छत्वेदं सूत्रम कार्यमिति शङ्का निरस्ता । तत्र कर्मणीत्यस्य सम्बन्धात् । हस्ते वर्त्तिग्रहो । करणे इति वर्त्तते । व्याख्यानात्प्राचीनसम्मतादर्थग्रहणमत्र वर्त्तिर्ण्यन्तो निर्दिष्टः । स्वे पुषः । अत्रापि स्व इत्यर्थग्रहणम् । स्ववाचिनि करणे उपपदे पुषधातोर्णमुल्स्यात् । स्वशब्दस्यात्मादयस्त्वारोर्था अन्यत्र प्रसिद्धास्त एवात्रापि । अधिकरणे बन्धः अधिकरणवाचिन्युपपदे बध्नातेर्णमुल् । चात्रबध्यत इति तदुक्तभाष्ये । इह कस्मान्न भवति । ग्रामे बन्धतीति । एव वक्ष्यामि । अधिकरणे बन्धः । संज्ञायामिति । अथ संज्ञायामिति कथनेनाकर्षः सूचितः । संज्ञायाम् । अनधिकरणार्थोयमारम्भः । कर्त्रोर्जीवपुरुषयोः । कर्तृवाचकयोर्जीवपुरुषयोरुपपदयोर्नशिवहोर्णमुल् स्यात् । यथासंख्यमत्रेष्यते । जीवनाशं नश्यति । कर्तृपदान्तस्य जीवशब्दस्योपपदसमासः । जीवकर्तृनाशाभिन्ननाशकर्तेति शाब्दबोधे छत्ते जीवो नश्यतीति फलितम् । ऊर्ध्वे शुषिपूरोः । ऊर्ध्वशब्दे कर्तृवाचिन्युपपदे शुषिपूर्योर्णमुल् । ऊर्ध्वशोषं शुष्यति । अत्राप्यर्थः पूर्ववत् । उपमाने कर्मणि च । चात्कर्त्तरि । उपमानभूते कर्मणि कर्त्तरि चोपपदे धातोर्णमुल् । अत्र धातोरित्यधिकारात्सम्बन्धम् ॥ उपमानशब्दकरणस्तु ङन्तः ॥ कषादिषु यथाविध्यनुप्रयोगः । अत्र कषादिशब्देन निर्मूलसमूलयोरिति सूत्रनिर्दिष्टः । कषधातुरुपस्थाप्यते कषादिषु णमुल्प्रत्ययप्रकृतिषु सत्सु यथाविध्यनुप्रयोगो भवति यथाविधीत्यस्य विधानमनतिक्रम्येत्यर्थः ।विधानस्य यत्सम्बन्धित्वं तस्यैवानुप्रयोगे तदनतिक्रमो भवति ॥ कषादिप्रकृतिकणमुल्प्रत्ययस्य धातुसम्बन्धाधिकारे विधानादनुप्रयोगे सिद्धे यथाविध्येवानुप्रयोग इति नियमार्थमिदं सूत्रम् । धातुमात्रस्यानुप्रयोगसम्बन्धात्तत्प्रकृतिकप्रत्ययेऽपि प्रयोक्तव्ये तिङ एवेति नियमे मानाभावादाह । स

त्तिर्भवति ॥ वासरूपविधिना तस्यापीष्टत्वादिति शेषः ॥ पाक्षिकोपपदसमाससिद्धिरिति तृतीयाप्रभृतीनीत्यनेन विहितेत्यादिः ॥ अस्यतितृषोः क्रियाः ॥ अस्यतेरतिक्रमणमर्थः ॥ योजनमत्यति ॥ अध्वकर्मकमत्यनगमनं व्यवधायकञ्च कालकर्मकम् ॥ नाम्न्यादिशिग्रहोः ॥ अत्र नाम्नीति न सुबन्तपरं किन्तु स्वरूपपरं त्वात् सुपीत्येव वदेदत आह ॥ नामशब्द इति ॥ अव्ययेऽयथाभिप्रेताख्याने ॥ अव्यये उपपदे कृञः । णमुल्क्त्वौ स्तोऽयथाभिप्रेताख्याने गम्ये । अत्रायथाभिप्रेतशब्द आख्यानक्रियाया विशेषणम् । अभिप्रेतमभिमतम् । अभिमतत्वात्तु यथा न भवति तथा कथनमित्यर्थः । न च नीचैः कृत्य प्रिय कृते इत्यत्र कथमयथाभिप्रेताख्यानम् । प्रियकथनं यथाभिप्रेताख्यानमेवेति वाच्यम् । अस्याभिमतत्वेऽप्येतत्प्रकारस्य नीचैस्त्वस्यानभिमतत्वात् । तिर्यच्यपवर्गे । अत्र तिरश्चीति पठितव्ये तिर्यचीत्यस्योपपत्तिमाह । सौत्र इति । अयं तिर्यक्शब्दोऽन्तर्द्धावाची समाप्तिवाची च । तत्र द्वितीयामादायोदाहरणम् । तिर्यक्कृत्वा काष्ठं गत इत्यस्यप्रत्युदाहरणवाक्यस्य काष्ठमृजुकृत्वा गत इत्यर्थोऽभिमत इति । न च तिर्यच्यपवर्गे इत्यत्र तिर्यच्इत्यनुकरणशब्दविशेषस्य तथात्वे कार्यस्वरूपशङ्काभिया एतदोचित्यत्र त्यदाद्यत्वमिवाक्षेपो न कृत इत्येव कुतो नोक्तमिति वाच्यम् । न हि प्रयोजनमनुवर्त्ति प्रमाणमितिन्यायविरुद्धत्वात् । सौत्रत्वस्वीकारे बाधकानि निपातनानीत्यनेन शास्त्राप्रवृत्तिरुचितैवेति भावः । स्वाङ्गे तस्प्रत्यये । प्रत्ययग्रहणपरिभाषालभ्यमर्थमाह । तस् प्रत्ययान्त इति । मुखतःकारमिति आद्यादित्वात्तसिः । न च स्वाङ्गे तसीत्येव वक्तव्ये प्रत्ययग्रहणं व्यर्थमिति वाच्यम् । मुखे तस्य तीतिमुखतमित्यस्यापि ग्रहणापत्तेः । अत्वसन्तेति सूत्रेऽधातोरित्युक्तेर्नदीर्घः । मुखतः कृत्वेति । तृतीयाप्रभृतीन्यतरस्यामिति पक्षे समासाभावः । नाधार्थप्रत्यये च्व्यर्थे । अत्र ना च धा चेति द्वन्द्वस्य नाधार्थे शक्तिः । तस्य च द्वन्द्वान्यार्थशब्देन कर्मधारयः । नाञौ । नानाञौ । धाधोः । धमुञादयः । धमुञन्तात् स्वार्थे डदर्शनमिति डप्रत्ययस्यापि धाऽर्थत्वेन तदन्तस्याप्यत्र ग्रहणमिति । अन्वच्यानुलोम्ये । अन्वचीत्यस्यापि तिर्यचीतिवत्साधुत्वम् । आनुलोम्यशब्दार्थं व्याचष्टे । आनुलोम्येति । भुव इत्येतदनुवर्त्तते । प्रत्युदाहरणे त्वन्वक्शब्दो विशेषवाची । तत्र स्थितः । पुरुषोऽनुकूलोऽ-

चाविशेषादिति । उपदंशस्तृतीयायाम् । उपपूर्वाद्दंशधातोस्तृतीयान्त उप-
पदे णमुल्प्रत्ययः स्यात् ॥ न च मूलोक्तं वचनसामर्थ्यादित्यनुपपन्नं मूलकेनोप-
दंशं भुङ्क्त इत्यत्र प्रत्ययस्य समासादिति वाच्यम् । करण इत्येव वक्तव्ये तृ-
तीयायामित्युपादानात्तृतीयान्तोपपदस्य शब्दतोऽन्वयो दंशधात्वर्थे नत्वर्थद-
द्वन्वयस्तथैव प्रत्ययस्य स्वीकारात् । न च वचनसामर्थ्याण्णमुल्प्रत्ययस्य समा-
सस्य च स्वीकारेऽपि णमुल्प्रत्ययार्थनिरूपितकरणत्वाभावेन कृद्ग्रहणपरिभाषया
समासाभावपक्षे प्रातिपदिकसंज्ञापादनपरस्यासङ्गतिरिति वाच्यम् । दंशधा-
त्वर्थनिरूपितकरणत्वसत्त्वेन तत्रार्थान्वयसम्भवेन कारकत्वसम्भवात् । हिंसार्था-
नाञ्च समानकर्मकाणाम् । पञ्चम्यर्थे षष्ठी । हिंसार्थे प्राणिन उपघातः तेन स-
मानकर्तृकत्वमित्याकाङ्क्षायामनुप्रयुज्यमानेनेति प्रत्यासत्त्या लभ्यते ॥ कश-
यतीत्यत्र कशधातुः कशविक्षेप इति चुरादिः । एवं तड आघात इत्यपि चुरा-
दिः । मार्यस्याश्चोपपीड । चान्तृतीयायाम् । दर्प इति । तारागुणकस्य तपधातो-
रूपा निर्देशस्तुदादिम्यादित्यर्थस्तु न तुदादेः तारागणस्य एव । करणे उपलक्षण च
वान् यपतीत्यत्र यथा । समासत्तौ । समासत्तिः सन्निकर्षः । यत्र योद्धारः के-
शेषु गृहीत्वा युध्यन्ते तत्र तेषां समासत्तिरस्त्येव । युद्धविषयकसंरम्भादत्य-
न्तं सन्निकर्षं प्राप्य युध्यन्त इत्यर्थः । प्रमाणे च । प्रमाणावधारणाद्यत्र प्रमाणं
स्यादिति पारिभाषिकम् । प्रकृतिविशेषानुपादानात्तु सामान्यापेक्षया । द्व्यङ्-
गुलोत्कर्षं खण्डिकां छिनत्ति । द्वयोरङ्गुल्योः समाहारो द्व्यङ्गुलम् । तत्पु-
रुषस्याङ्गुलेरित्यच् समासान्तः । द्व्यङ्गुलीयपरिमाणेन परिच्छिन्नखण्ड-
खण्ड एव खण्डिका । अपादाने परीप्सायाम् । परीप्सा त्वरा । अपादाने उप-
पदे धातोर्णमुल् स्यात् । परीप्सायां गम्यमानायाम् । परीप्सामुपपादयति । ए-
वं शीघ्रम् । अनुदात्तस्वरितैकवर्जमित्यपादाने परीप्सायामित्यनेनाधातो-
र्णमुल् । यस्मिन् काले उदात्तः स्वरितो वा विधीयते समानकाले तत्परित्या-
गेनान्यदनुदात्तं कर्तव्यमित्यर्थात् । यदि तत्र नानादानत्वमादा सोपपदस्य
णमुत्र स्यादि भुवि । धातुर्ण इति दिः । समासपक्षे प्रतिषेधोपभागस्य कारणा-
द् प्रपदार्थं तावदाह । येन विनेति विशिष्यतिषदित्यन्यम् ॥ तस्मादेवणी
उत्पद्येत णमुल्ः पुनरित्यनेनापि स्वतन्त्रार्थमवगन्तव्यं यात् । स्वाभिः

त्तिस्थिति ॥ वासरूपविधिना तस्यापीष्टत्वादिति शेषः ॥ पाक्षिकोपपदसमाससिद्धिरिति तृतीयाप्रभृतीनीत्यनेन विहितेत्यादिः ॥ अस्यतित्वपो क्रिया ॥ अस्यतेरतिक्रमणमर्थः ॥ योजनमस्यति ॥ अध्वकर्मकमत्यनगमन व्यवधायकञ्च कालकर्मकम् ॥ नाम्न्यादिशिग्रहो ॥ अत्र नाम्नीति न सुबन्तपरञ्चिन्तु स्वरूपपरत्वं सुपीत्येव वदेदत आह ॥ नामशब्द इति ॥ अव्यये ऽयथाभिप्रेताख्याने ॥ अव्यये उपपदे कृञ । क्त्वाणमुलौ स्तोऽयथाभिप्रेताख्याने गम्ये । अत्रायथाभिप्रेतशब्द आख्यानक्रियाया विशेषणम् । अभिप्रेतमभिमतम् । अभिमततयाख्यानं यथा न भवति तथा कथनमित्यर्थः । न च नीचैः कृत्य प्रियं कृते इत्यत्र कथमयथाभिप्रेताख्यानम् । प्रियकथनं यथाभिप्रेताख्यानमेवेति वाच्यम् । अयथाभिमतत्वेऽप्येतत्प्रकारस्य नीचैस्त्वस्यानभिमतत्वात् । तिर्यच्यपवर्गे । अत्र तिरश्चीति पठितव्ये तिर्यचीत्यस्योपपत्तिमाह । सौत्र इति । तत्र तिर्यक्छब्दोऽन्तर्धावाची समाप्तिवाची च । तत्र द्वितीयामादायोदाहरणम् । तिर्यक्कृत्वा काष्ठं गत इत्यस्य प्रत्युदाहरणवाक्यस्य काष्ठमनृजुं कृत्वा गत इत्यर्थोऽभिप्रेत इति । न च तिर्यच्यपवर्गे इत्यत्र तिर्यगित्यनुकरणशब्दविशेषस्य तत्रानु कार्यस्वरूपशङ्काभिया एतद्दोषनिरासाय त्यदादान्यमिवाल्लोपो न कृत इत्येव कुतो नोक्तमिति वाच्यम् । न हि प्रयोजनानुवृत्तिं प्रमाणमिति न्यायविरुद्धत्वात् । सौत्रत्वस्वीकारे बाधकानि निपातनानीत्यनेन शास्त्रप्रवृत्तिरुचितैवेति भावः । स्वाङ्गे तस्प्रत्यये । प्रत्ययग्रहणपरिभाषालब्धमर्थमाह । तस् प्रत्ययान्त इति । मुखतकारमिति आद्यादित्वात्तसि । न च स्वाङ्गे तसीत्येव वक्तव्ये प्रत्ययग्रहणं व्यर्थमिति वाच्यम् । मुखे तस्य तीतिमुखतमित्यस्यापिग्रहणापत्तेः । अत्र मन्वन्तेति सूत्रेऽधातोरित्युक्तेर्न दोषः । मुखत कृत्वेति । तृतीयाप्रभृतीन्यतरस्यामिति पक्षे समासाभावः । नाधार्थप्रत्यये च्व्यर्थे । अत्र ना च धा चेति द्वन्द्वस्य नाधार्थे शक्तिः । तस्य च द्वन्द्वस्यार्थशब्देन कर्मधारयः । नार्थो । नानाजी । धार्थो । धमुञादयः । धमुञन्तात् स्वार्थे डदर्शनमिति डप्रत्ययस्यापि धार्थत्वेन तदन्तस्याप्यत्र ग्रहणमिति । अन्वच्यानुलोम्ये । अन्वचीत्यस्यापि तिर्यचीतिवत्साधुत्वम् । आनुलोम्यशब्दार्थं व्याचष्टे । आनुलोम्येति । भुव इत्येतदनुवर्तते । प्रत्युदाहरणे त्वन्वक्शब्दो विशेषणवाची । तत्र स्थित । पुरुषोऽनुकूलोऽ

ननुकूलो वेति न प्रतीयते तेन शब्देन । प्रमाणान्तरेण तथा निर्णय इति त्व न्यत् । अत्र यमुम् न । समानकर्तृकयोरिति क्त्वाप्रत्ययस्तु भवत्येव । सर्वेषस्य कृदन्तस्य प्रयोगस्य सिद्धिः सिद्धिशब्दो मङ्गलार्थः ॥

* ॥ इति कृदन्तविवरणम् ॥ *

इति श्रीमदनन्तकल्याणसद्गुणनिधानाखिलपण्डितसार्वभौमभूमण्डलप्रसारिविमलतरानवद्यसद्यशः पार्वणपीयूपभान्वगस्त्यकुलवंशावतंसश्रीभवदेवमिश्रात्मजभैरवमिश्रकल्पितायां शब्देन्दुशेखरव्याख्यायाङ्कृदन्ताख्यम्प्रकरणं सम्पूर्णम् ॥ + ॥

सम्वत् १९ ४४ मिति कार्तिक वदि १३

शुभंभूयात्



## ॥ अथ वैदिकी प्रकरणम् ॥

### ॥ श्रीगणेशाय नमः ॥

प्रणम्य परमात्मानं वैदेहीपतिमव्ययम् ॥
वैदिकस्वरयोर्व्याख्याङ्कुर्वेऽथ क्रमशोऽधुना ॥ १ ॥

वेदलोकसाधारणशब्दसंस्कारनिरूप्यावसरसङ्गत्या वेदमात्रसम्बन्धिसंस्कारं निरूपयति । प्रथेत्यादिना । छन्दसि पुनर्वसोरेकवचनम् । द्विवचनस्यैव प्राप्तौ निमित्तमाह । द्वे तारे इति । एकवचनस्य विशिष्यविधानाभावे द्विवचनमेव स्यादिति भावः । उत्तरत्रेति । विशाखयोश्चेति सूत्रादुत्तरत्र तिष्यपुनर्वस्वोर्नक्षत्र द्वन्द्व इतिसूत्र इत्यर्थः । सुपन्वस्वश्वयोः । वसुश्वशब्दयोरप्रत्ययत्वाद्वस्वेयचिभमितिसूत्रस्याप्राप्तौ उपसङ्ख्यायते । सुपन्शब्दे सुपधातो कतिन् सुपोति विहितकतिनन्तः । नन्वस्रोभाभावे कारणस्य भत्वस्याभाव प्रदर्शयितुमुचितो न त्वज्ञत्वाभाव इत्यत आह । अङ्गस्य भस्येतीति । एकत्वान्वयबलेनेति । एतेन इमत्राया अप्यज्ञापननिमित्तत्वमुक्तंभवति । नभ इत्यादिवार्त्तिकयोश्छन्दसीत्युपादानाभावादत्रैवानयोर्लेखने कारणमत आह । एतद्वार्त्तिकद्वयमिति । अयस्मयादीनि छन्दसि । अयस्मयादीनि शब्दरूपाणि छन्दसि निपात्यन्त इत्यर्थः । अत्र किन्निपात्यत इत्याकाङ्क्षायामाह । मूले सज्ञाद्वयमिति । कल्पनाला घवादाह । सज्ञाद्वयमयुक्तं कार्यमिति । एतेन प्रयोजनानुरोधेन भपदसञ्ज्ञे बोद्धव्ये । तेनायस्मयशब्देऽयस्शब्दस्य भसञ्ज्ञामात्रस्यानेन विधानेऽपि नोभयसंज्ञान्यपीति वार्त्तिकविरोधः । अयस्मयशब्देऽयसोविकार इत्यर्थे द्व्यचश्छन्दसीति मयट् । वाचामिना वाजिना । अयस्मयादिसमुदायस्य पाठः । तस्य समुदायस्य यथोपपत्तिस्तथा भपदसञ्ज्ञयो कल्पना कार्या ते प्रागिति सूत्रस्य

ननुकूलो वेति न प्रतीयते तेन शब्देन । प्रमाणान्तरेण तथा निर्णय इति त्व न्यत् । अत्र णमुल न । समानकर्तृकयोरिति क्त्वाप्रत्ययस्तु भवत्येव । सर्वेटस्य कृदन्तस्य प्रयोगस्य सिद्धि सिद्धिशब्दो मङ्गलार्थं ॥

## * ॥ इति कृदन्तविवरणम् ॥ *

इति श्रीमदनन्तकल्याणसद्गुणनिधानाखिलपण्डितसार्वभौमभूमण्डलप्रसारिविमलतरानवद्यसद्यशः पार्वणपीयूषभान्वगस्त्यकुलवंशावतंसश्रीभवदेवमिश्रात्मजभैरवमिश्रकल्पितायां शब्देन्दुशेखरव्याख्यायां कृदन्ताख्यम्प्रकरणं सम्पूर्णम् ॥ + ॥

सम्वत् १९ ४४ मिति कार्तिक वदि १३

शुभंभूयात्



## ॥ अथ वैदिकी प्रकरणम् ॥

---

### ॥ श्रीगणेशाय नमः ॥

प्रणम्य परमात्मानं वैदेहीपतिमव्ययम् ॥
वैदिकस्वरयोर्व्याख्यां कुर्वेऽथ क्रमशोऽधुना ॥ १ ॥

वेदलोकसाधारणशब्दसंस्कारन्निरूप्यावसरसङ्गत्या वेदमात्रसम्बन्धिसंस्कारान्निरूपयति । अथेत्यादिना । छन्दसि पुनर्वस्वोरेकवचनम् । द्विवचनस्यैव प्राप्तौ निमित्तमाह । द्वे तारे इति । एकवचनस्य विशिष्यविधानाभावे द्विवचनमेव स्यादिति भावः । उत्तरत्रेति । विशाखयोश्चेति सूत्रादुत्तरत्र तिष्यपुनर्वस्वोर्नक्षत्र द्वन्द्व इतिसूत्र इत्यर्थः । हृपन्वस्वस्वयोः । वसुस्वशब्दयोरप्रत्ययत्वाद्भत्वे यचिभमितिसूत्रस्याप्राप्तौ उपसङ्ख्यायते । हृपन्शब्दे हृप्धातोः कनिन्युवृषीति विहितकनिनन्तः । नन्वल्लोपाभावे कारणस्य भत्वस्याभावं प्रदर्शयितुमुचितो न त्वङ्गत्वाभाव इत्यत आह । अङ्गस्य भस्येतीति । एकत्वान्वयेनेति । एतेन भसंज्ञाया अल्लोपनिमित्तत्वमुक्तं भवति । नभ इत्यादिवार्त्तिकयोश्छन्दसीत्युपादानाभावादत्रैवानयोर्लेखने किं कारणमत आह । एतद्वार्त्तिकद्वयमिति । अयस्मयादीति छन्दसि । अयस्मयादीनि शब्दरूपाणि छन्दसि निपात्यन्त इत्यर्थः । अत्र किं निपात्यत इत्याकाङ्क्षायामाह । मूले संज्ञाद्वयमिति । कल्पनालाघवादाह । संज्ञाद्वयप्रयुक्तं कार्यमिति । एतेन प्रयोजनानुरोधेन भपदसंज्ञे बोध्ये । तेनायस्मयशब्देऽयस्शब्दस्य भसंज्ञामात्रस्यानेन विधानेऽपि नोभयसंज्ञान्यपीति वार्त्तिकविरोधः । अयस्मयशब्देऽयसो विकार इत्यर्थे द्व्यचश्छन्दसीति मयट् । वाचास्मिना. वाजिना । अयस्मयादिसमुदायस्य पाठः । तस्य समुदायस्य यथोपपत्तिस्तथा भपदसंज्ञयोः कल्पना कार्या ते प्रागिति सूत्रस्य

पूर्वं व्याख्यातत्वात् नर्लेखनस्य बीजमाह । ते प्रागित्यनुवृत्त्ये ति । छन्दसि परे-ऽपीत्यपिना पूर्वप्रयोगेऽपि साधुत्वमेव । अत एवानुव्यचलदित्यस्य सिद्धिः । व्यवहितप्रयोगादेव गतिरनन्तर इतिसूत्रे ऽनन्तरग्रहणचरितार्थम् । न च ते प्रागितिसूत्रङ्गत्युपसर्गसंज्ञा धातोः प्रागेव प्रयोक्तव्या इतिनियमार्थम् । एवञ्च तत्सूत्रानन्तरञ्छन्दसि नेति सूत्रद्वन्द्वयन्तेन पूर्वोक्तनियमस्य निषेधे सिद्धे प्रकृतसूत्रद्वयन्न कार्यमिति वाच्यम् । तन्त्रेण क्वचिल्लोकेऽपि व्यवहितप्रयोग इत्थंसमर्थं व्यवहितार्थं त्वस्यावश्यकत्वात् । तेन सुकटङ्कराणि वीराणीति भाष्यप्रयोगस्योपपत्तिः । भाष्ये तु धातोः प्राक् प्रयुज्यमाना एव ते गत्युपसर्गसंज्ञा भवन्तीति संज्ञानियमपक्षमाश्रित्यैतत्सूत्रद्वयमुक्त्वाख्यातम् । न च छन्दसि परव्यवधानेन यत्र प्रयोगस्तत्र गत्युपसर्गसंज्ञाया असत्त्वेऽपि यथा साधुत्वंतथा लोकेऽपि परप्रयोगे व्यवहितप्रयोगे वा साधुत्वापत्तिरिति वाच्यम् । क्वचित्तथा प्रयोगे इष्टत्वात् । वारुणीमदविशदमथा विषवधूपोऽभवदसाविराग इत्यत्र यथा । तेन स्वार्थेन भूयत इत्यस्योपपत्तिः । पचति प्रेतिप्रौदनम्पचतीत्यपि च तर्हि साधुस्यादिति तु नापादनीयम् । अनभिधानात् । तदुक्तम्भाष्ये । अनिष्टादर्शनात् । न हि कश्चित्प्रपचतीति प्रयोक्तव्ये पचति प्रेति प्रयुङ्क्ते । यदि चानिष्टन्दृश्येत ततो यत्नार्हं स्यादिति । धातुपाठे भूधातोरादौ पाठात्सर्वतः प्रागुपन्यासे कर्तुमुचिते इन्भिभवतिभ्यामित्युपन्यासे किम्बीजमत आह । इन्भिभवतिभ्यामिति ॥

## इति प्रथमोऽध्यायः ।

ज्ञायत इति । ज्ञाधातोः कर्मणि घञ् । षष्ठीशब्दार्थंत्वे षष्ठी तदन्तेन समासः । विधायकाभावेन न षष्ठ्यर्थसमास इति भावः । न च यथाग्न्याऽग्निहोत्रञ्जुहोतीत्यत्र विशेष्यविशेषणवाचकपदयोरसमानविभक्तिकत्वात्कथमभेदान्वय इति वाच्यम् । विदधार्थंकविभक्त्यनवरुद्धत्वात् । मयैवं नोकेऽपि सुदर्पोषधानां स्वामीति शब्दार्थकूपशब्दार्थाभेदान्वयबोधापत्तिरिति वाच्यम् । एकस्या आत्मनेपदस्य इतिन्यायेन ताहशप्रयोगस्याभावात् । सिद्धे तु न तथा निय-

मः। हुधातोस्त्यागपूर्वकप्रक्षेपे वर्त्तनादेव यवाग्वाः कर्मत्वम्। अयमारम्भ इति। दिवस्तदर्थस्येति षष्ठी बाधनार्थः। ननु पुरुषमृग इतिवाक्ये चन्द्रमस्शब्दादपि षष्ठी स्यादत आह। बहुलग्रहणादिति। वार्त्तिके बहुलग्रहणादित्यर्थः। अयम्। वार्त्तिकद्वयरूपः। परवल्लिङ्गमित्यस्य बाधनाय हेमन्तशिशिरावितिसूत्रमारब्धम्। शिशिरशब्दस्य नपुंसकत्वे प्रमाणन्तु वक्ष्यान्धकारेति लिङ्गानुशासनसूत्रे शिशिराणि नपुंसक इत्युक्तिरेव। ननु शिशिरोऽस्त्रियामिति कोशवचनाच्छिशिरशब्दस्य पुंस्त्वमप्यस्तीत्यत आह। शिशिरशब्दस्येति। इन्धेतमिहत्तय इति नपुंसकत्वपक्षे प्राप्तस्येत्यादिः। मतान्तरमाह। अमरस्येति। लिङ्गानुशासनविरोधात्प्रमाद इत्यर्थः। हनति। हन्तीत्यर्थः। शयने। शेते। शाध्वम्। शायध्वम्। दाति। ददातीत्यर्थः। विवष्टीति। अत्र श्लौ द्वित्वे बहुलं छन्दसीतिसूत्रेण वक्ष्यमाणेनाभ्यासस्येत्वम्। मन्त्रे घसह्वरणश। अघन्निति। अदेर्लुङ् तस्य झिः। च्लिः। लुङ्सनोरिति घस्लादेशः। ह्वरेति ह्वृ कौटिल्य इत्यस्य कृतगुणकस्यानुकरणमकार उच्चारणार्थः। णशेति कृतणत्वानुकरणम्। कुत्वमिति। एतदभावे व्रश्चेति षत्वे प्रणट् इति रूपम्। अक्रन्निति। कृञ इति। झेरादेशे ङित्वादगुणाभावे यण्। अज्ञतेति। जनेर्लुङि तस्य झादेशे च्लेर्लुकि कृते गमहनेति प्राप्ते॥

## इति द्वितीयोऽध्यायः।

अनुप्रयुज्यमानमकशब्दं साधयति। कृञ्चो लुङीति। अत्राप्यनुप्रयुज्यमानः कृञ् क्रिया सामान्यवाची। तदर्थे आमन्तार्थस्याभेदेनान्वयः। पावयां क्रियात्। लिङन्तस्येदं रूपम्। लोक इति। वेदेऽपि लोकवद्दृश्यमानप्रकृतसूत्रे विदाङ्कुर्वन्त्वित्यतोऽन्यतरस्याङ्ग्रहणानुवृत्त्या साधनीयम्। पावयां क्रियादित्यत्र पवतेः पुनातेर्वा प्रयोगः णिजन्तस्येदं रूपम्। विदामक्रन्। विदेर्लुङ्याम्। लुङन्तकरोतेरनुप्रयोगः। मन्त्रे घसेति लेर्लुक्। गुपेश्छन्दसि। चुरिति णिश्रीत्यमचङिति चानुवर्त्तते। अजूगुपतम्। गुपेर्लुङ्। थमस्तयादेशः। तुजादीनां दीर्घोऽभ्यासस्येति दीर्घः। अपीप्रमिति। कदित्वादिडभावे वदव्रजेति वृद्धिः

सिचस्तु झलो झलीति लोपः । नो नयति । गुपेरित्यतश्छन्दसीति वर्त्तते। मात्वायत इति । त्वायतः त्वामिच्छतः जरितुः स्तोतुर्ममकारमभिलापमाजन योः ऊनमाकार्षीरित्यर्थः । मा ऊनन्निति लोके । ऊनधातोश्चुरादेरदन्तात्णिचि चङि णौ तस्याल्लोपस्य स्थानिवद्भावेन न शब्दस्य द्वित्वम् । ध्वनयीदिति चौरादिकस्यादन्तस्य ध्वनशब्द इत्यस्य घटादिपठितनान्तस्य वा रूपम् । भाषायान्तु अदध्वनत् । अदिध्वनदिति वा । ऐलयीत् । इल प्रेरणे चुरादिः । भाषायान्तु ऐलिलदिति । आर्द्दयीत् । अर्द्द गतौ याचने हिंसायाञ्च । भाषायामार्द्दिदत् । चेतुमचयन्तस्यैतद्रूपम् । अमरदित्यत्र व्यत्ययो बहुलमिति परस्मैपदम् । छन्दसि निष्टर्क्यं । यदुक्तम्मूले कृन्ततेरित्यादिना तत्र प्रमाणमाह । निष्टर्क्यं व्यत्ययमित्यादिना । अत एव । दीर्घस्य निपातनादेव । देवयज्येति स्त्रियामेव । यजेर्यः प्रत्ययोऽधिकरणे । देवशब्देन कर्मषष्ठ्यन्तेन समासः । ब्रह्मवाद्यमित्यत्र वदेर्ण्यत् । न च यत्प्रत्यय एव दीर्घनिपातनमस्त्विति वाच्यम् । यतो नाव इत्यादुदात्तापत्तेः । ब्रह्मोद्यं वदन्तीत्यत्र तु व्यत्ययो बहुलमिति क्यप् तदेवाह । लोके त्विति । ब्रह्मोद्यमित्यत्र व्यत्यया स्वीकारे ण्यतात्क्यपो बाधः स्यात् । छन्दसि वनसन । वनसनो वनषणसम्भक्ताविति भ्वादिपठितौ गृह्येते । न तु तानादिकौ । सानुबन्धकत्वात् । ब्रह्मवनिमित्यत्र ब्रह्मवनतीति विग्रहः । अत एव । वैदिकानान्तादृशसम्प्रदायादेव । उक्तसूत्रे । सनोतेरन इति सूत्र इत्यर्थः । छन्दसि सहः । भजो ण्विरित्यतो ण्विरित्यनुवर्त्तते । पृतना षाडिति । षह मर्षण इतिधातोर्ण्विन् प्रत्यये उपधा वृद्धौ सहेः साडः स इति षत्वम् । हरदत्त इति । अत्र केचित्तु ण्विन्प्रत्ययस्य छन्दसि विधानेऽपि ण्विप्रत्ययोपदका धातोर्हेतुमण्णौ ततः क्विपि तुराषाडित्यस्य लोकेऽपि साधनं सम्भवत्येवेति । अत एवाह हरदत्तेति । छान्दसा अपि क्व चिद्भाषायाम्भवन्तीत्याश्रित्य तेषां साधनमित्यपि वदन्ति किञ्च । केवलात्षहधातोर्ण्विन्प्रत्यये सति यः प्रयोगस्तस्य छान्दसत्वेऽपि णिजन्तात्क्विपि प्रयोगस्य लौकिकत्वमपि के चिदिच्छन्ति । अत एवाह यो यायिदाण इति प्रयोग । रम्दारम्भ वाह ऊडितिण्ठस्य । णिदलक्ष्णमिति परिभाषा ज्ञापकता परभाष्यप्रामाण्येन सर्वैरादेयः णिविधायकमिधानाय भवन्तीत्यन्यथोक्तम् । तथाप्यनकारान्तोऽकारान्तोपपदे पोपपदे इति

विशेषोपादानाद्वारवाह इत्यादि भवत्येवेति। कव्यपुरीष। वह इत्यनुवर्त्तते। एतत्साध्यानाच्छान्दसत्वमेव। ह्यव्ये ऽन्तः पादम्। पादस्य मध्ये इत्यन्तःपादम् नान्तःपादमनन्तःपादमिति समासः। एतदुपादानात्पादान्ते वर्तमानस्यास्यसाधुत्वमिति। सूले हव्यवालग्निरिति। द्वयोश्चास्य स्वरयोर्मध्यमेत्यसम्पद्यते स डकारो लकार इति प्रातिशाख्याल्लकारः। जनसनखन। अवृजा इत्यादीनामर्थमाह। अप्सु त्वद्यत इत्यादिना। सप्तम्या अलुगिति। हलदन्तादित्यनेनेत्यादिः। अवे यजः। अवशब्दे उपपदे यज्धातोर्ण्विन् स्यात्। मन्त्रे श्वेतवहोकथशसित्यत्रावयजेति पाठे कर्त्तव्ये पृथक्सूत्रकरणस्य प्रयोजनमाह। योगविभागेति। विजुपे छन्दसि। यज इति वर्त्तते। अत्र मन्त्र इत्यनुवर्त्तमाने छन्दो ग्रहणं ब्राह्मणसङ्ग्रहार्थम्। मन्त्रव्यतिरिक्तो वेदभागो ब्राह्मणम्। एवञ्च मन्त्रब्राह्मणान्यतरत्वं छन्दस्त्वमिति केचित्तन्न युक्तमित्याशयेनाह। छन्दो ब्राह्मणेनि। मुख्यछन्दस्त्वस्येति। एव प्रकृतसूत्रे छन्दसीत्युपादानं यदि मुख्यछन्दस्त्वमन्त्रस्य तस्यैव बोधनायेति चेन्मन्त्रस्य इत्यनुवृत्त्यैव सिद्धिरिति भावः। आतो मनिन्क्वनिबिति सूत्रोदाहरणमाह। सुधीवेत्यादाविति। वनिपि भूरिदावेति। बहुलञ्छन्दसि। ब्रह्मभ्रूणवृत्रेष्विति नियमव्यावर्त्तितः क्विबन्यस्मिन्नपि यथा स्यादित्येवमर्थमिदं सूत्रमित्याह। उपपदान्तरेऽपीति। धातुसम्बन्धाधिकारस्थमिति। तथा च तेन न सर्वत्र सिद्धिरिति शेषः। उत्तरार्थः। भाषायामिति सूत्रार्थः। अभावायेति। एवञ्च छन्दसीति पृथक्सूत्रेण लिड्विधानसामर्थ्याल्लानचो विकल्पे सिद्धे वा ग्रहणमुत्तरार्थम्। लिटः कित्वादेव। न स्वैवमिति। एवम्। कित्त्वस्य प्रतिषेधविषये आरभ्यमाणस्यापि गुणस्य प्रतिषेधार्थत्वे। समाधत्ते। ऋकारान्तेति। अररिवानित्यत्र रा दान इति राधातोर्लिटः क्वसौ वस्वेकाजितीट्। ततो नञ्समासे पूर्वपदप्रकृतिस्वरः। पद्यायुशब्दे। च दीर्घादटीति रुत्वमातोऽटिनित्यमिति नित्यमनुनासिकः। क्याच्छन्दसि। क्यादित्यनेन क्यच् कङोरेव ग्रहणमिति भ्रमवारणायाह। विधो य इतीति। क्यादित्यस्य क्यजितादयशब्दादित्यर्थात्। अनुमूयुव इति। असूयते. कण्ड्वादियगताप्राप्तस्याप्यु प्रत्ययस्याप्रत्ययादित्यनेन बाधादस्यासाधुत्वम्। लोहितादिसूत्रभाष्यरीत्येति। तत्र हि यदय ककारस्य क्याच्छन्दसीत्यत्राम्य -

ग्रहणप्रयोजनन्तेन तुरण्युर्भुरण्युरित्येतत्सिद्धिरूपप्रयोजनमभिधाय याच्छ-
न्दसीत्येवास्तु तावतापि सिद्धिर्भविष्यतीत्युक्त्वा इदन्तर्हि प्रयोजनम् यत्तदक्षय-
कारे इतिदीर्घत्वन्तत्र किद्ग्रहणमनुवर्त्तते तदिहापि यथा स्यात् । लोहिता-
यतीति । किम्पुनः कारणन्तत्र क्ङिद्ग्रहणमनुवर्त्तते । इह मा भूत् । उरुया
धृष्णुयेति । अत्र तृतीयैकवचनस्य स्थाने सुपां सुलुगिति यादेशः । यदि तत्र
क्ङिद्ग्रहणमनुवर्त्तते पित्र्यमिति रीङभावो न प्राप्नोति । रीङभावे क्ङिद्-
ग्रहणंनिवर्त्तिष्यते । पित्र्यमित्यत्र पितुरागतमित्यर्थेपितुर्यच्चेति यत्प्रत्ययः ।
यदि निवर्त्तते कथमसूयावसूयाच यजामह इति । असूयतेरसूया । वसूयतेर्व-
सूया । एवमुक्तम् । अत्र यदीति प्रतीकमुपादाय कैयट आह । यदि रीङभाव
एव निवर्त्तते न तु दीर्घविधावपि तदा असुवसुशब्दाभ्यां पूर्ववदादेशे क्ते
दीर्घाभावादसूयावसूयेति न सिद्ध्यति असूयतेः कण्ड्वादियगन्तस्यासूया ।वसू-
यतेरिच्छाक्यजन्तस्य वसूयेत्युत्तरमिति । मन्त्रे वृषेष । स्त्रियां क्तिन्नित्यतः क्ति-
न्नित्यनुवर्त्तते । ननु लाघवाय प्रकृतसूत्रे क्तिरिति पाठ्यमुदात्तवचनञ्च न का-
र्यमत आह । क्तौ विधातव्य इति । उत्तरार्थत्वमुपपादयति । मजयजोरिति ।
प्रमताविति । प्रमतिरित्यत्रेत्यर्थ. । अत्र क्तिनो नित्वाभावे गतिकारकोपपदा-
दिति कृदुत्तरे पदप्रकृतिस्वरः स्यात् । स्त्रियां क्तिन्नित्येव क्तिन्प्रत्यये सिद्धे प्रत्य-
यस्योदात्तत्वार्थं वचनम् । छन्दसि लुङ् । लोडर्थ इति । आगमत् । अत्र लृदि-
त्वादङ् । अकरमिति । कृमृदृरुहिभ्य इत्यनेन च्लेरङ् भवति न तु मन्त्रे घसेति
लुक् । सूत्रयोः छन्दग्रहणेन पाक्षिकप्रवृत्तेरिष्टत्वात् । मृग्य इति । क्रियान्यतर-
स्योच्चारितशब्दादप्रतीतेरिति भावः । पयम् । मिप्प्रत्ययः । यासिसीष्ठा इत्यत्र
याधातोर्लिङ् तस्य स्थाने व्यत्ययेन याम् । आगिपि चायम् । बहुलग्रहणात्सि-
प् । इण्निषेधः । एकाच उपदेशइतिविहितः । तत एव । छान्दसत्वादेव । इत-
श्च लोपः । अन्य यथा वैकल्पिकत्वमत आह । वेत इति । पताती त्वत्र प्रक्रियामा-
ह । पतल्ट गतावित्यादिना । करवावः । कृञो लटो वस् । उर्विकरणः । आट् ।
आडुत्तमस्य पिच्चेत्यतः पिद्ग्रहणानुवृत्त्याऽऽटो. पित्वादिकारस्य गुणः । क-
रोतेरुत्वाभावश्च । अत्र वक्षसोरित्यत्र सूत्रयितुमुचितम् । मादयेत इति । मदी
हर्षे । णिजन्तात्लेट् । प्रथमस्याकारस्य ऐकारः । वरिशिषात् । अन्यच्च हि नि

त्वात् ऐत्वेन निवृत्तिरदन्तु विधानसामर्थ्यान्न भवति। न च टेरेत्वस्य शब्दान्तरप्राप्त्याऽनित्यत्वं शङ्क्यम्। वैतोऽन्यत्रेति सूत्रेऽन्यत्रग्रहणात्। यदि आत ऐ इत्यनेनान्त्यस्यापि स्थानेऽनेन ऐकारः स्यात्तदा वैत इतिसूत्रोऽध्यस्यान्यत्रैव लाभेन तद्वैयर्थ्यं स्पष्टमेव। वैतोऽन्यत्र। वा एत इति छेदः। भेदज्ञाने प्रतियोगिज्ञानस्य कारणत्वात्प्रतियोगिजिज्ञासायाम्पूर्वस्य पुरस्फूर्त्तिकत्वात्तद्विषय एव प्रतियोगी बोध्यः। अहमेव पशूनामीशै। ईश ऐश्वर्ये। उत्तम इट् लेट् स्थानिकः। तस्य टित इत्येत्वं ऐकारः। प्रहा गृह्णान्तै। ग्रहे. कर्मणि लेट् तस्य झः। आट्। यकि सम्प्रसारणम्। उपसंवादाशङ्कयोश्च। उपसंवादः पणबन्ध. समयकरणमित्यनर्थान्तरम्। सचान्यप्रति यदीदमथवान्मे कार्यंकुर्यात्तदा तुभ्यमहमेतावद्दास्यामीति कथनरूपः। आशङ्कासम्भावना। अहमेवेति। त्रिपुरविजये देवै. प्रार्थितस्य रुद्रस्येदं वचः। पशवः लौकिका। नेज्जिह्मायन्त इति। इच्छब्द आशङ्काद्योतकः। जिह्मम्पापम्। जिह्माचरणेन नरकपातः सम्भाव्यते स मा भूदित्यर्थः। तच्च पापञ्च सर्वेङ्गिन्तु कुटिलस्तच्च कौटिल्यङ्गमित्याकाङ्क्षाशान्तये आह। जिह्मायन्त इतीति। अत्र जिह्मशब्दात्परेच्छायामाचारच्। अथ नेच्छायामाचारच्। किन्तु आचार एवेति वादिमतमाह। अन्ये त्विति। छन्दसि शायजपि। अस्कभायेति। स्कन्भधातोर्लिङ्। तस्य तिप्। अपिशब्दाद्दशायपि शायच्। गृभायेति। ग्रह उपादाने। लोट मेर्हिः। क्र्यादित्वादस्माच्छ्नातस्य शायच्। ग्रहेः सम्प्रसारणम्। शानच उदाहरण बधानेति। ग्रभ्णीमे इत्यस्योदाहरणमाह। गृभ्णामीति। व्यत्ययो बहुलम्। व्यत्ययपदं व्याचष्टे। व्यतिक्रम्येति। णजिति। कर्मव्यतिहारे णजिति णच्। तस्येति। लिङ इत्यर्थः। धातोः। दृधातोः। ननु व्यत्यय इत्येवसूत्र पाठ्यम्। छन्दसि शायजपीत्यन्तस्य विकरणप्रकरणान्ते पाठेनप्रत्यासत्त्याविकरणानां लाभे सिद्धे बहुलग्रहणं सर्वोपाधीनामपि व्यत्ययो यथा स्यादित्याह। विकरणेति। ननु दक्षिणाया इत्यत्र सुपः षष्ठाध्यायेऽप्याडागमो दुर्वार आगमस्येतेष्वपरिगणनादत आह। छान्दसत्वादिति। दक्षिणाया इतिप्रयोगस्य छान्दसत्वादित्यर्थः। उपग्रहपदं सुप्तिङित्यत्रोपात्तं लाक्षणिकमित्याशयेन व्याचष्टे। उपग्रहपदे मेति।

न्योनित्यनपुंसक इत्याशयेनाह । अमृतेति । कारकवाचकस्य क्तप्रत्ययस्य व्यय' सन्धौनप्रतीयत इत्याशयेनावग्रहेण पठति । अमृतदायेति । कर्तर्यच् । तदन्तेन षष्ठ्यन्तान शब्दस्य समासे सुपो लुकि समासे संहितायानित्यत्वादत्रैवमव ग्रहेणप्रयोगोऽनुचित इत्याशयेनाह । लक्षणेनेति । तत्तद्धितानामित्यत्र तद्धितपदन्दीव्यत्याद्यर्थे विधीयमानठगादीनाद्रव्यवाचकत्ववादिनो मतेन । वस्तुतो नैष तद्धितः कारकपरः । तद्धितार्थघटकदेवनादेरक्रियात्वात् । एवञ्चेदन्तद्धितप्रत्ययव्यत्ययमात्रतात्पर्यकं बोध्यम् । अत एव त्वं वत्स्यति ते जातवेदः विश्वे देवा सोमयुतोयतिष्ठनेत्यत्र किमो विहितो डतिर्यच्छन्दादपि दृश्यते। मन्त्रं वोचेमाग्नये ॥ वच धातोराशीर्लिङोममादेश । अङ् । उम् । छन्दस्युभयथेतिलिङ. सार्वधातुकत्वाद्यासुट् इयाधिगे यलोपः । छन्दस्युभयथा । यद्यपि संज्ञयो.समनियतत्वन्तथापि कार्यस्य तत्तत्संज्ञानिबन्धनस्य छन्दसि दृष्टानुविधानेननियम एव । तेनातिप्रसङ्गो न शङ्क्यः । आइगमहन । अत्र आदितिदान्तं यान्तं वा । तेन तपरपदे पञ्चमीसमासेऽपि ऋकारपदेनदीर्घस्याविग्रहणसिद्धि. । असंयोगाल्लिट्किदित्येव सिद्धेकिकिनो. कित्वं कार्यविशेषार्थमित्याह मूले लिड्वद्भावादेवेति । विना पि वर्ति वत्यर्थो गम्यते तेन लिड्वदित्यस्य लाभ. । अनेन लिटि यत्कार्यन्तदतिदिश्यते एवं हि किकिनोः स्वरूपानाधो भवति । तेन लस्य स्थाने विधीयमानादेशो न । तुमर्थे सेसेनसे । तुनशब्दोऽत्र तु सुन्परः । प्रयैरोहिष्यै । प्रपूर्वकाद्याधातोः कैप्रत्ययः । रुहेरिष्यै नञि व्यथे सायम् । दृशे विख्ये च । केप्रत्ययस्तुमर्थे निपात्यते । पूर्वसूत्र एवैतावपि पठितुं योग्यौ । कृत्यार्थे तवैकेन्केन्यत्वनः । अत्र कृत्यार्थशब्देन भावकर्मणोरेवेत्यनयोरेवेतिसूत्रे विशिष्यतयोरुपादानात् । करणादौ स्थानीयमित्यादौ यद्यपि कृत्यो भवति तथापि बाहुलकादिनेति न स प्रतिपदोक्तः । नम्र्वेष्विशये इत्यत्र तवैप्रत्ययः कृत्यार्थे भावे नम्र्वेष्विरुयमित्यर्थः. दिदृक्षेण्य इति । दृशधातोः सनिकेन्यः । यतो लोपः । कर्त्वमित्यत्र कृत्त्वन्वन् । गुण' । कृत्यमित्यर्थ. । अवचक्षे च । चक्षिङ् एशप्रत्ययः । प्रत्ययस्य शित्वात्सार्वधातुकत्वसिद्धि न्याजादेशाभावः । भावलक्षणेत्यर्थे ण् । स्थस्थेतोसुन्त्यर्थे नाधनमिति । भावो ऽत्र धात्वर्थ. । चास्यापिवशो मोदस्मि । यत्र सम्पूर्वक स्थाधातु' समासो

वर्त्तते । संतिष्ठते पितृयज्ञ इत्यत्र यथा । संस्थादीनामवधिलेन सदृधात्वर्थ-लक्षणत्वम् । अस्मिन् सूत्रे तुमर्थे इत्यस्य मम्बन्धादजन्तो सुन्प्रत्ययो भावे । उदेतोः अपकर्तोरित्यादौ इणादिधात्वर्थौ यस्य लक्षणं सा क्रिया यथा यथ-सूहनीया । सृपितृदोः कसुन् । विसृप इति । सृप्ऌ गताविति गत्यर्थकात् सृप् धातोर्भावस्य लक्षणत्वे गम्ये भावे कसुन् । कित्वाद् गुणाभावः । एवमातृद इत्यचोह दिरधातोर्हिंसानादरार्थकात्कसुन् ॥

## ॥ इति तृतीयोऽध्यायः ॥

रात्रेश्चाजसौ । राशदिभ्यां त्रिवितित्रिपप्रत्ययान्तो रात्रिशब्द आद्युदात्त.। अस्मादजसिपये ङीपि यस्येति लोपेऽप्यनुदात्तस्यैव लोप इत्युदात्तनिवृत्ति-स्वरो न । अत्र नित्यं संज्ञाछन्दसोरिति सूत्रात् छन्दसीरित्यनुवर्त्तते । एव-ञ्च संज्ञायां लोकेऽपि । सोऽप्याद्युदात्त एव । एवञ्च यत्फलितन्तदाह । असंज्ञा-विषय इति । नित्यञ्छन्दसि । आरम्भसामर्थ्यादिति । विकल्पस्य पूर्वेण सिद्धेः । एवञ्च भुव इतिसूत्रविहितो ङीङ् नित्यएव । भुवश्च । भूधातोर्ड्प्रत्ययेन ङस्या-न्तोयम् । क्विवन्तस्य तु स्वयम्भूः । मुद्गलाच्छ । इन्द्रवरुणेतिसूत्रे वार्त्तिकमिद-म् । ङीषो लित्वेनानुगाकारस्योदात्तत्वम् । दीर्घजिह्वी चच्छन्दसि । नखमुखा-दित्वतः संज्ञायामित्यनुवर्त्तते । कद्रुकमण्डल्वोः । ऊङ्त इत्यत ऊङितिव-र्त्तते । गुग्गुल्वादीनांलोकेस्त्रीदाह । गुग्गुल्वादीनामिति । पतयालुः स्पृहिगृहीत्यालुजन्तः । अव्ययात्त्यप् । प्राग्व्याख्यातमपि आविष्ट्यस्ये-त्यत्रानुवृत्त्यर्थम्पुनरुपात्तम् । आविष्ट्यस्योपसंख्यानम् । आविष्ट्यशब्द आ-विर्भूत इत्यर्थे वर्त्तते । ङस्रात्तादाविति पत्वम् । त्यपस्तकारस्य ष्टु-त्वम् । दाचश्छन्दसि । मयड्वैतयोर्भाषायामित्युक्तेरप्राप्तौ मयट् विधी-यते । दाच इतिप्रातिपदिकस्य विशेषणम् । ङ्श्छन्दसि । साम्यन्तात्सभाशब्दा-त्साधित्यर्थे ढ. स्यात् । पठ्यत इति । एवञ्च छन्दसि सर्वविधीनां वैकल्पिकत्वा यतो नाव इत्यस्याप्रवृत्तौ तित्स्वरितमित्यस्य प्रवृत्तौ तदन्तस्य स्वरितत्वमुपप-द्यत इति भाव' । पाथोनदीभ्यां ड्यण् । भवार्थे पाथोनदीभ्यांड्यण् स्यात् । अत्र

पाथम् शब्दोऽन्तरिक्षवाची पातिलोकानवकाशदानेनेति हृत्तिः। यद्यपि जले-ऽन्येचायमुणादिषु व्युत्पादितः। अमरसिंहोऽपि कबन्धउदकमाथ इत्याह। तथाप्युणादयो बहुलमिति बहुलग्रहणाऽन्तरिक्षेऽपि भवतीति तद्भावः। वसन्त हिमवद्धाम्। विशिर्भक्षेति व्युत्पादितोऽयम्पल्वलवाची। पल्वले विद्यमाना इत्यर्थः। स्रोतसो विभाषा डाड्‌ड्यौ। जलप्रवाह इति। नद्यादिप्रवाहेचाऽयम् न तु जलसामान्यस्य। सगर्भसयूथ। प्रत्ययोऽयं नित्। तेनैतदन्तस्याद्युदात्तत्वम्। पूर्वेण अग्राप्यदितिसूत्रेण। समुद्राभ्राद्धः। अभ्रशब्दस्य पूर्वनिपाते कर्त्तव्ये परनिपातकरणम्पूर्वनिपातस्यानित्यत्वबोधनाय। बर्हिषि दत्तम्। यव इति दत्तमित्यस्यादिः अर्थविशेषनिर्द्देशादित्यस्यापि बोध्यम् अणक्योरिति। रक्षमृगव्यात्प्रासस्याण' यातुशब्दाच्छस्येत्यर्थः। प्रेषस्य अ इतिनिर्द्देशात्कर्मणि प्राप्तिवारणायाह। बाहुलकादिति। सम्प्रसारणमिति। ततो गुण इति शेषः। हविषा। हविषि हिता। गवादित्वाद्यत्। असुरस्य स्वम्। शैषिकाणोऽपवाद। मायायामण् पूर्वसूत्र विहितस्य यतोऽपवादोऽयम्। असुरपदघटको नञ् विरोध्यर्थक इत्याशयेनाह। असुरेति। तद्धा नासासुपधानो। अत्रोपजानशब्दः करण ल्युडन्त.। उपधीयत अनेन इतिव्युत्पत्तेः। चयनस्य करणमित्यर्थः। वर्चस्वानिति। वर्चशब्दोऽस्यस्मिन्मन्त्रे समन्लो वर्चस्वान्देवस्य त्वा सवितुरित्यादिको मन्त्रः। यद्यपि तस्मिन्मन्त्रे पदान्तराण्यपि सन्ति तथापि छन्दसि दृष्टस्यैवानुविधानान्मत्वन्तादेवायं प्रत्यय। यत्तु सष्टीरुपदधाति। प्राणभृत उपदधातीत्यादिः प्रयोगस्तत्र सष्ट्यादिशब्दानान्तद्घमन्त्रकरणकोपधानकर्मीभूता सिष्टकासु लक्षणया प्रयोगः। अग्निमानण्। अग्निमच्छब्दादुक्तोऽर्थेऽण् स्यात् मतुपश्च लुक्। आग्निनीरुपदधाति। अग्निन्शब्दवाम्मन्त्र उपधानीयामान्ता इत्यर्थः। मतुपो लुक् इनण्यनपत्यइति प्रकृतिभावः। अग्निमानित्येकवचनमग्निमत्सामान्यविवक्षया। तेन बहूनाग्मन्त्राणामस्तित्वमर्थेऽपि नक्षति'। अयस्यासम्। अत्र मूर्द्धन्शब्दमत्प्रकृतिके स्वात्तयिकः। मतुप्शब्दः प्रत्ययपरिभाषया तदन्तपरस्तया च मूर्द्धन्शब्दप्रकृतिक यत्मनुयत्तत्साम्नामतुप् स्यादित्यर्थः। वयस्यामित्यत्र तु वयसशब्दात् पूर्वसूत्रेण यत्। तेनोभयत्रसमर्थमिदम्। तदाह मूर्नि यस्मिमन्ता इति। मूर्द्धन्तोरिपयखामो सृष्टिति मुट्। मत

यच्छाशब्दस्य छन्दस्येव साधुत्वाद्याख्यानासम्भवे प्रयोगोऽनुपपन्न इति वाच्यम्। छान्दसा अपि क्वचिद्भाषायामभवन्तीत्यस्य ज्ञापनार्थत्वात्। छन्दोवत्सूत्राणीति भाष्यकारेष्ट्या सिद्धत्वात्। यस्मिन्मन्त्रे मूर्द्धन्शब्द एवास्ति वयस्शब्दस्तु नास्ति तन्मन्त्रोपधेयास्तु मूर्द्धन्वतीरिति प्रयोगः क्वचिद्दृष्टस्तु लक्षणया साधुः। मत्वर्थे मासतन्वोः। अत्र तनूशब्दो दीर्घान्तस्तेन विलाभावान्नास्य पूर्वनिपातः तदाह। सूत्र इति मासतन्वोरिति समुदायोपाधिरित्याशयेनाह। मत्वर्थ इत्यादिना। मधुमन्त इति। अवयव भवतीति शेष। अनन्तरार्थेवेतीति। अत्र वाशब्दार्थे। तेन मत्वर्थे मासतन्वोः समुदायवाच्यत्वे प्रत्ययो यथा भवति तथा मासतन्वोरेव वाच्ययोरनन्तरार्थेऽपि प्रत्यय इत्यस्य लाभः। लुगिति। प्रत्ययस्य लुगित्यर्थः। मधु अस्यस्मिन्नभासि मन्त्यस्मिंस्तयोस्त्वस्मिन्नित्यर्थे मासे एव वाच्ये प्रत्ययस्य लुगित्यर्थः। ननु मासस्यावशिष्टसमुदायवाच्यत्वेन भस्शब्दस्य पुंस्त्वापत्तिरत आह। अन्त्ययोरिति। इप इति। एषणमिट्। अन्वशब्दार्थं शब्द इत्याह। इडिति। इकारोदाहरणमाह। शुचिरिति। रेफेत्यस्य प्रत्ययत्व भ्रमनिवृत्तये आह। रेफो रशब्द इति। वेशोयश आदे.। वेशोयश इति द्वन्द्व स्यादिशब्देन बहुव्रीहिरित्याह। एतदादिकादिति। भगशब्दार्थमाह। भग इति। पूर्वैः कृतमिनयौ च। पूर्वशब्दात् तृतीया बहुवचनान्तादयम्प्रत्ययः। एतदस्यैकवचनान्तत्वमपि भवति। अद्भिः संस्कृतम्। यदित्येवात्र सम्बध्यते। सहस्रेण सम्मितौ घ.। सम्मितिः साहश्यम्। क्वचित्, समिताविति पाठः। अर्थस्तु स एव। मतौ च। अत्र मतुशब्दो मत्वर्थे। एवञ्च मत्वर्थे सहस्रे णेति पदमप्यस्या विपणतव्योध्यम्। सधो.। मये चेति सम्बध्यते। स्वार्थे इत्यपीति। वमोरिति योगविभागेन स्वार्थे प्रत्ययः प्रथमसूत्रेणेति भावः। अक्षर समूहे। अक्षरं व्यञ्जनसहितोऽच्। अक्षरार्थानिर्देशादयम्प्रत्ययः स्वार्थे। सर्वदेवात्त.तिल्। सर्वदेवादिति समाहारद्वन्द्वात्पञ्चमी। भावे च। अत्र भ.वः प्रकृतिजन्यबोधप्रकार ॥

## इति चतुर्थोऽध्यायः।

पाथम् शब्दोऽन्तरिक्षवाची पातिलोकानवकाशदानेनेति वृत्तिः । यद्यपि जलेऽ-
न्ने चायमुणादिषु व्युत्पादितः । अमरसिंहोऽपि कबन्धमुदकम्पाथ इत्याह । त-
थाप्युणादयो बहुलमिति बहुलग्रहणादन्तरिक्षेऽपि भवतीति तद्भावः । अगस्त
हिमवद्ग्रामम् । विशेर्भश्चेति व्युत्पादितोऽयम्पल्वलवाची । पल्वले विद्यमाना इ-
त्यर्थः । स्रोतसो विभाषा ड्यड्ड्यौ । जलप्रवाह इति । नद्यादिप्रवाहस्यैवाऽयम्
न तु जलसामान्यस्य । सगर्भसयूथ । प्रत्ययोऽयं नित् । तेनैतदन्तस्याद्युदात्तत्व-
म् । पूर्वेण यथाद्यदितिसूत्रेण । समुद्राभ्राद्घः । अभ्रशब्दस्य पूर्वनिपाते कर्त्तव्ये
परनिपातकरणम्पूर्वनिपातस्यानित्यत्वबोधनाय । बर्हिषि दत्तम् । यव इति द-
त्तमित्यस्यादिः अर्थविशेषनिर्देशादित्यस्यार्थे बोध्यम् अण्ढ्योरिति । रक्षस्श-
ब्दाभ्यासस्याथः यातुशब्दाच्छस्येत्यर्थः । प्रेमस्यस्य स्य इतिनिर्देशात्कर्मणि प्रा-
सियारणायाह । बाहुलकादिति । सम्प्रसारणमिति । ततो गुण इति शेषः ।
हविष्या । हविषे हिता । गवादित्वाद्यत् । असुरस्य स्वम् । शैषिकाणोऽपवादः ।
मायायामण् पूर्वसूत्र विहितस्य यतोऽपवादोऽयम् । असुरपदघटको नञ् विरो-
ध्यर्थक इत्याशयेनाह । असुरेति । तदा नासामुपधानो । अथोपजानशब्दः क-
रणे ल्युडन्तः । उपधीयते अनेन इतिव्युत्पत्तेः । चयनस्य करणमित्यर्थः । वर्च-
स्वानिति । वर्चशब्दोऽस्त्यस्मिन्मन्त्रे समन्त्रो वर्चस्वान्देवस्य त्वा सवितुरित्यादि-
को मन्त्रः । यद्यपि तस्मिन्मन्त्रे पदान्तराण्यपि सन्ति तथापि छन्दसि दृष्टर्य-
पानुविधानामत्वन्तादेवायं यत्प्रत्यय । यत्तु सृष्टीरुपदधाति । प्राणभृत उपद-
धातीत्यादिः प्रयोगस्तत्र सृष्ट्यादिशब्दानान्तद्दन्मन्त्रकरणकोपधानकर्मभूता-
स्विष्टकासु लक्षणया प्रयोगः । अग्निमानण् । अग्निमच्छब्दाद्दृशेऽर्थेऽण् स्यात्
मतुपश्च लुक् । आग्निनीरुपदधाति । अग्निन्शब्दश्चामन्त्र उपधानीयासान्ता
इत्यर्थः । मतुपो लुक् इनण्यनपत्य इति प्रकृतिभावः । अग्निमानित्येकवचनम-
ग्निमत्त्वसामान्यविवक्षया । तेन बहुमन्त्रात्कामग्निमत्त्वेऽपि न क्षतिः । व्य-
यस्तासुमू । अत्र मूर्द्धन्शब्दस्तत्प्रकृतिकं माञ्चयिकः । मतुप्शब्दः प्रत्ययग्रहण
परिभाषया तदन्तपरस्तथा च मूर्द्धन्शब्दप्रकृतिकं यन्मतुबन्तन्तस्मान्मतुप् स्या-
दित्यर्थः । यद्यप्यानित्यत्र तु पयसश्शब्दात्पूर्वसूत्रेण यत् । तेनोभयत्रसमर्थ-
मिदम् । तदाह मूर्म्ने शुश्मिप्रमस इति । मूर्द्धन्वतीरिष्टकाः शुद्धिति गुरु । अत्र

वयस्याशब्दस्य छन्दस्येव साधुत्वाद्व्याख्यानासूत्रे प्रयोगोऽनुपपन्न इति वाच्यम्। छान्दसा अपि क्वचिद्भाषायामभवन्तीत्यस्य ज्ञापनार्थत्वात्। छन्दोवत्सूत्राणीति-भाष्यकारेष्ट्या सिद्धत्वात्। यस्मिन्मन्त्रे मूर्द्धन्‌शब्द एवास्ति वयस्‌शब्दस्तु नास्ति तन्मन्त्रोपधेयासु मूर्द्धन्वतीरिति प्रयोगः क्वचिद्दृष्टस्तु लक्षणया साधुः। मत्वर्थे मासतन्वोः। अत्र तनूशब्दो दीर्घान्तस्तेन घित्वाभावान्नास्य पूर्वनिपातः तदाह। सूत्र इति मासतन्वोरिति समुदायोपाधिरित्याशयेनाह। मत्वर्थ इत्यादिना। मधुमन्त इति। अत्रयत्र भवतीति शेषः। अनन्तरार्थेवेतीति। अत्र वा शब्दार्थे। तेन मत्वर्थे मासतन्वोः समुदायवाच्यत्वे प्रत्ययो यथा भवति तथा मासतन्वोरेव वाच्ययोरनन्तरार्थेऽपि प्रत्यय इत्यस्य लाभः। लुगिति। प्रत्ययस्य लुगित्यर्थः। मधु अस्यस्मिन्नाभांसि सन्त्यस्मिंस्तयोस्त्वस्मिन्नित्यर्थे मासे एव याच्ये प्रत्ययस्य लुगित्यर्थः। ननु मासस्यावशिष्टसमुदायवाच्यत्वेन भस्‌शब्दस्य पुंस्त्वापत्तिरत आह। अन्त्ययोरिति। इष इति। एषणमिट्। अन्त्यशाच्यं शब्द इत्याह। इडिति। इकारोदाहरणमाह। शुचिरिति। रेफेत्यस्य प्रत्ययत्व भ्रमनिवृत्तये आह। रेफो रशब्द इति। वेशोयश आदेः। वेशोयश इति द्वन्द्व स्यादिशब्देन बहुव्रीहिरित्याह। एतदादिकाटिति। भगशब्दार्थमाह। भग इति। पूर्वैः कृतमिनयौ च। पूर्वशब्दात् तृतीया बहुवचनान्तादयम्प्रत्ययः। एतदन्तस्य त्वेकवचनान्तत्वमपि भवति। अद्भिः संस्कृतम्। यदित्येवात्र सम्बध्यते। सहस्रेण सम्मितौ घ। सम्मिति. सादृश्यम्। क्वचित्, समितावितिपाठः। अर्थस्तु स एव। मतौ च। अत्र मतुशब्दो मत्वर्थे। एवञ्चेह सहस्रेणेति-पदम्पञ्चम्या विपरिणतम्बोध्यम्। मधोः। मये चेति सम्बध्यते। स्वार्थे इत्यपीति। वसोरिति योगविभागेन स्वार्थे प्रत्ययः प्रथमसूत्रेणेति भावः। अक्षर समूहे। अक्षर व्यञ्जनसहितोऽच्। अत्रार्थानिर्देशादयम्प्रत्ययः स्वार्थे। सर्वदेवात्त.तिल्। सर्वदेवादिति समाहारद्वन्द्वात्पञ्चमी। भावे च। अत्र भ.व. प्रकृतिजन्यबोधप्रकार.॥

इति चतुर्थोऽध्यायः।

विंशिन इत्यत्र विंशतिशब्दात्परिमाणोपाधिकात्षष्ठ्यर्थे डिनि प्रत्यये ति विंशतेरिति तिशब्दस्य निवृत्तिः । तत्र विंशतिशब्दवाच्यमाह । आङ्गिरस इत्यादि । वत्सरान्ताच्छश्छन्दसीति सूत्रोदाहरणमाह । इद्वत्सर इत्यादि । छन्दसिषम् । समयस्तदस्य प्राप्तमित्यतस्तदस्य प्राप्तमिति ऋतोरणित्यत ऋतोरणित्यत ऋतोरिति वर्त्तते । उपसर्गाच्छन्दसि धात्वर्थे । अत्र धातुशब्दो धात्वर्थलाक्षणिको न तु धातुसंज्ञकशब्दपरः । तस्योपसर्गार्थत्वासम्भवात् । अर्थशब्दश्च प्रयोजनवाची । एवञ्च धात्वर्थोऽर्थः प्रयोजनं यस्येत्यर्थ इत्याशयेनाह । धात्वर्थविशिष्टसाधन इति । उपसर्गाणामयं स्वभावो यत्र समभिव्याहृतधातुप्रतिपाद्या क्रियास्ति तत्र तद्गतं विशेषन्द्योतयन्ति यत्र तु तथा नास्ति तत्र क्रियाविशिष्टे साधने वर्त्तनमिति । यथा निष्कौशाम्बिरित्यादौ । एवञ्च यदुद्वत इत्यत्रोद्गमनविशिष्टकर्त्रभिधायकत्वमव्याहतमेव तदाह मूले उद्गतानिति । थट् च छन्दसि । तस्य पूरण इत्यतो डडिति नान्तादसंख्यादेरित्यतो नान्तादिति चानुवर्त्तते । पञ्चथमित्यस्य पञ्चानाम्पूरणमित्यर्थः । अत्र न क्षत इति । अत्रैव न क्षत इत्यर्थः । छन्दसि परिपन्थि । पर्यवस्थातृशब्दात्स्वार्थे इनिः प्रत्ययः स्यात् अवस्थातृशब्दस्य पन्थिपरि इत्यादेशो निपात्येते । छन्दो विन् प्रकरणे । छन्दसि विधीयमानविन्प्रकरण इत्यर्थे । समान्यत उक्तमपि दीर्घत्वं विशेषविषयकमित्याशयेनाह । द्वयीभयेत्यादि । अन्यत्र दीर्घत्वस्य सतः सिद्धत्वादिति शेषः वार्त्तिकेतूपादानमत्यन्तविध्यर्थमिति बोध्यम् । छन्दसीवनिपौ चेति चकारेण प्रत्ययान्तरसङ्ग्रहेऽपि पूर्वसूत्रपठितसङ्ग्रह इत्याह । चाद इति । ईकारस्योदाहरणद्वयमाह । रथ इत्यादि । वनिपस्तदाह । मघमिति । वमतुपोरुदाहरणमाह । उदतमम्बिनीत्यादिना । प्रत्ययविधौ पञ्चम्या न्याय्यत्वादाह । पामनाद्यर्थे योग इति । था हेतौ च छन्दसि । प्रकारवचने थाल्लित्यतः प्रकारवचन इति किमर्थं ति च वर्त्तते । येन प्रकारेण येति । न पृच्छमीत्यथास्याप्यय । यथ यथा । च । प्रकारशब्दस्य स्थाने पथादेशो थकार च आकारो वा प्रत्ययो बोध्य । तुन्छन्दसि । सुपारम्भप्रयोजनमाह । यज्ञादो इत्यादिना । मद्वो नेति । किन्तु यस्मिन् पाथाश्रयादो विहितो तस्मिन्नेव भजन इति शेष । प्रथमादिति । यथशब्दपूर्वकमाद्यादाऽऽस्तुति शब्दापेक्षो कर्योगमयान्तादिति तमना दि

वाच्यमितिष्ठीकार्यन्तया च न लोकेति निषेधान्न षष्ठीति भावः। एतदाह हरदत्तः छन्दस्यादेवायम्प्रत्ययः। कृतपूर्वीकटमित्यत्र कटशब्दाद्यथा द्वितीया तथाऽत्राप्यासुतिशब्दाद्द्वितीयेति तद्दर्शयति अतिशयरूप इत्यादिना। इबन्तस्य शर्मेति। व्यधिकरणे षष्ठी। चो इतौ 'अयम्भावः। कृतपूर्वीकटमित्यत्र यथा भावक्तान्तकृतशब्दपूर्वशब्दयोः समासे विशिष्टादिनौ तदन्तार्थे कटस्य कर्मत्वविवक्षया कृदन्तशक्तिग्रहमात्रप्रयोज्योपस्थितिविषयक्रियानिरूपितकर्मत्वस्य कटेऽभावान्न कटशब्दात्षष्ठी तथा न प्रकृतेऽतिशयरूपेऽनर्थस्य करणशीलताद्रूपत्वन्तार्थकर्तृविशेषणभूतार्थविशेषणत्वात्कृदन्तशक्तिग्रहमात्रप्रयोज्योपस्थितिविषयक्रियानिरूपितकर्मत्वेऽपि न लोकेति निषेधान्न षष्ठी यदि तु इबन्तादयमिष्ठन्स्यात्तदा नलोकेति निषेधाविषयतया षष्ठी स्यादेवेऽनर्थस्य तदा इबन्तार्थेनावच्छेदककारणकर्तृत्वविशेषणत्वात् इबन्तशक्तिग्रहप्रयोज्योपस्थितिविषयक्रियाकर्मत्वस्यासुतिशब्दार्थे सत्त्वादिति। दोहीयसीत्येतस्य साधनं यथा भवति तथाह। दोग्ध्रीशब्द इति। ततः प्रागिति। प्रत्ययोत्पत्तेः प्रागित्यर्थः। असिद्धत्वादिति। सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्ये विषये त्रिपादीस्थशास्त्रस्यासिद्धत्वादप्रवृत्तेरित्यर्थः। प्रत्नपूर्वविश्वेमात्थाल् छन्दसि। प्रत्नादिभ्य इवार्थेऽयं थाल्। अत्र पूर्वशब्दोऽपि द्वन्द्वघटको न तु प्रत्नशब्दः पूर्वो यस्येति बहुव्रीहिः। इमशब्दार्थमाह। इदमशब्द इति। प्रकर्षप्रकर्ष इति। प्रकर्षे विद्यमानादशब्दात्प्रकर्षे तरबित्यर्थः। अनसन्तान्नपुंसकात्। अत्र नपुंसकादिति तत्पुरुषविशेषणम्। परवल्लिङ्गमिति तत्पुरुषस्य नपुंसकत्वम्। छन्दसि च। अनयोऽर्थमिदम्। उभयतो दत इति। उभयतो दन्ता इत्यर्थः। ऋतश्छन्दसि। नद्यृतश्चेति कपोऽयन्निषेधः॥

## ॥ इति पञ्चमोऽध्यायः ॥

यो जागारेत्यत्र जागृधातोर्लिटीति विहितस्य द्वित्वस्याभावः। तुजादीनामोऽभ्यासस्य। अस्य सूत्रस्य छान्दसत्वे प्रमाणन्तु तुजादिषु छन्दः प्रत्ययग्रहणमिति भाष्यं कैयच। तुजादीनाञ्छन्दसि दीर्घो भवति। स च यस्मिन्प्रत्यये

परत इष्टस्तस्य प्रत्ययस्य ग्रहणञ्च कार्त्त्यमित्यस्यार्थः। अत्र यः प्रत्ययग्रहणमि त्यंश सोऽनारम्भो वा छन्दसि दीर्घत्वस्यापरिगणितत्वादित्यनेन प्रत्याख्यात। न हि दीर्घत्वस्य परिगणनङ्कर्तुं शक्यम्। अन्येषामपि छन्दसि दीर्घत्वन्दृश्यते। पूरुषो तारक इति। येषाञ्चारभ्यते तेषामपि तस्मिन्प्रत्यये क्वचिन्न दृश्यते। मामहान उक्थपात्रम्। ममहान इति चेति। तवत्प्रत्ययग्रहणस्य प्रत्याख्याने यथोक्तन्तथाह। छन्दसि सर्वविधीनामिति। तूतुजान इत्यत्र तुज्धातोर्लिट् तस्य कानच। एवमेव मह्धातोर्लिटि मामहानमित्यपि। तूताविलत्र तु सौत्रा त्तु धातोर्लिट। वहुलञ्छन्दसि। इ सम्प्रसारणमिति वर्त्तते। बहुलग्रहणस्य फलमाह। न च भवतीति। ननु छन्दसीर इतिवत्वमिवर्णान्तात्परस्य विधीय तेरेवानित्यत्व तु न तथेति कथ बलमत आह। तत्र विद्दितेति। चाय की। चायते क्यादेशस्य वहुलग्रहणाद्वैकल्पिकत्वमाह। चायतेरित्यादिना। अपस्पृ धेथाम्। एतेषु यथायथनिपातनमित्याह। अयपूर्वस्येत्यादिना। अत्र तिङ्ङ तिङ इति निघातस्य प्रवृत्तावित्यमिति निषेध। प्रकारान्तरमिति। नाभाप शब्दे पूर्वपदद्धिन्तु स्पृधधातोर्नङि द्विर्वचन रेफस्य सम्प्रसारणमकारस्य लोपश्च निपात्यते। एवञ्चेदमेकमेव पदमिति। आनृचुरित्यस्य सिद्धये आह। सम्प्रसा रणेत्यादि। क्रादिनियमादिट् प्राप्ताबाह। अनिट्त्वञ्चेति। तित्याकेत्यत्राभ्या से इकारस्य सिद्धये आह। अभ्यासस्येति। श्रीञ्धातोराशीष्ट इति रूप यथा सिध्यति तथाह। शिरादेश इति। अनुदात्तत्वलक्षणात्मनेपदनिवृत्तये आह। व्यत्ययेनेति। अजस्तादिति। प्राणिरजतादिभ्य इति सूत्रविहिताञ्मादित्यर्थः। मानुषीरिति प्रथमा बहुवचनमत्र मनुशब्दात्मनोर्जातावित्यञ् मनुशब्दस्य षु गागम। बाधकस्यापि पूर्वत्वस्याभावे बाधस्य प्रथमयोरित्यस्याप्रवृत्तये आह। पूर्वत्वाभाव इति। प्रत्ययलक्षणमिति। अत्र त्यदादीनाम इत्यत्व इति शेष। यद्यप्यत्र त्रिभोयात्परस्तथाप्यपरमिमिष्ठकत्वे नाकारद्वयस्याधिद्रमोप एवादी भवति। यदि तु सुप सुलुगितिपूर्वेण सुक तातापिण्डानामित्यादावाकारादे शमोत इत्यादौ च पूर्वसवर्णदीर्घश्छान्दसत्वात्समाचस्तस्मात्तथा त्यदाद्यत्वञ्च तत्र सवर्णदीर्घ इति क्रियते तदुक्तं सूत्रं कार्यमिति बोध्यम्। एवमादिषु। एवमादिषु शब्देषु परेषु। त्वेमविति। स्वापयविति।

एवन्त्वाश्रोद्यश्वितिपरत्न बोध्यम् । भय्यप्रवय्ये च छन्दसि । भय्येत्यत्रापादानेऽर्थे यदितिभीधातोर्यति गुणे यान्तादेशो निपात्यते । एवमप्रपूर्वकाद्वीधातोर्यत् प्रवय्येत्यत्र बोध्य. । अपादाने प्रत्ययस्तु कृत्यलुटो बहुलमिति बहुलग्रहणाद्भवति । अकारस्येति । कृदशब्दाद्भवार्थे यति सुपो लुकि च कृते कृदशब्दावयवाकारस्येत्यर्थः । प्रकृत्यान्तः । इकोऽसवर्ण इति सूत्रे येन प्रकृत्येत्यनुकृष्यत इति भाष्यकारोक्त्याऽयम्पाठोऽस्तीति निर्णीयते । नान्त: पादमित्यपि पाठ: क्व चित् । अस्मिन् पाठे पादमध्यस्थस्य एडो यत्राप्तन्तमे ति व्याख्यानेन पूर्वरूपे निषिद्धेऽयादेशोऽपि न भवति । वाच्छन्दसीति सूत्राच्छन्दसीत्यस्य मण्डूकप्लुत्याऽनुवर्त्तनादस्य छन्दस्येव प्रवृत्तिः मौलस्रकुपादेत्यत्र स्रकुपदं वेदपरम् । प्रकृत्येति पाठे एङः पदादित्यतोऽनुवर्त्तमानमेङ इतिप्रथमया विपरिणमयितव्यम् । प्रकृत्येति तृतीयान्तम् । प्रकृतिशब्दः स्वभाववाची । दुस्त्यजा प्रकृतिर्न्टणामित्यत्र तथा दर्शनात् । तिष्ठेदिति क्रियापदस्याध्याहर्त्तव्यम् । तदाह । प्रकृत्येति । अन्तः शब्दस्याधिकरणशक्तिप्रधानस्य मध्ये इत्यर्थकस्य पदान्तपादशब्देनाव्ययीभाव' । स्वभावेनावस्थितिर्यादेशेनानिवर्त्यत्वरूपा । तेन विकारसामान्याभावलाभ' । व्यपर इत्यत्र बहुव्रीहिरन्यपदार्थश्चात्र वीदस्तत्प्रतियोगिको भेदोऽतीत्येतदर्थातो विशेषणम् । मूले एतेऽर्वन्तीति । अत्र एङ्पूर्वपादान्तः । अकार. परपादादौ । अव्यादवद्याद् । अत्रोध्यादित्याद्यनुकरणम् । तेषाञ्च सुबन्तत्वात्समास । अव्यादित्येतदवेराशीर्लिङि रूपम् । अवद्यात् । अवद्यपण्येत्यत्र निपातितो योऽवद्यशब्दस्तस्य पञ्चम्यन्तस्य । अवक्रमुरिति क्रम्धातोरवपूर्वाल्लिटि तस्योसादेशे छान्दसत्वाद्द्वित्वाभावे रूपम् । अव्रतेति हर्डा लुङि तस्याद्भावे मन्त्रे घसेति च्लेर्लुकि यणादेशे । यजुष्पुर: । एङिति वर्त्तते । उरोऽन्तरिक्षमिति । सस्य रुत्वे उत्वे गुण. । ननु प्रकृत्यान्त: पादमित्येव सिद्धे प्रकृतसूत्रं व्यर्थमत आह । मूले यजुषि पादाभावादिति । आपो जुषाणो । यजुषीति अतीति च वर्त्तते । प्रकृतसूत्रार्थमाह । आप इत्यादिना । योगविभागस्य भाष्येऽदर्शनादाह । अस्मादेवेति । जसन्तमिति । जसन्तानुकरणम् । एवमेव परत्रापि । अम्बे इत्येतदिति । अ स्नेऽस्थिके इत्यनयोस्तु न ङ्कसस्य प्राप्तिरभ्यार्थं हारसं यदीत्युक्तत्वादिति भाव।

अङ्ग इत्यादौ च। अत्राङ्ग इतिसप्तम्यन्तानुकरणम्। तेनोपश्लिष्टस्य सप्तम्य न्ताङ्ग शब्दस्य स्वान्वययोग्यक्रियाक्षेपकत्वमित्याशयेनाह। विद्यमान इति शेष इति। षष्ठी तत्पुरुष इति। तस्य आदिरित्यर्थः। ननु सूत्रे तच्छब्दाभावात् दादावित्यनुपपन्नमत आह। सूत्र इति। अनुदात्ते चकुधपरे। बहुव्रीहिरिति। द्वन्द्वघटितो बहुव्रीहिरित्यर्थः। स चानुदात्ते शब्दसमानाधिकरण। अकार उच्चारणार्थ इति। अत एवाध्वरशब्देऽपि प्रवृत्तिसम्भव। अयं सोऽग्निरिति। अत्राग्निशब्दोऽङ्गे न लोपयति सूत्रेण निप्रत्ययविधानेन साधितोऽन्तोदात्तः। अध्वरशब्द फिषोऽन्तोदात्त इत्यन्तोदात्त इत्युभयत्र शेषनिघातेनाकारस्यानु दात्तत्वम्। अग्रे शब्दस्याद्युदात्तत्वमाह। ऋध्य इति। रमन्तत्वादाद्युदात्त इ ति। अवयथासि च। अवयथामीति तथा सप्तम्यनुकरणात्सप्तमी। मूले यासि लडीति। अत्र पाठक्रमादर्थक्रमो बलीयानिति लडि थासीति विवक्षितम्। आङोऽनुनासिक। अत्राङ इति ङित्सिद्धं आङिति एव ग्रहणम्। स च वाक्य स्मरणयोरङिदिति लक्षणलक्षितो ङिद्भिन्न। एवश्चात्रया अप इत्यत्र पदर्थाद भावात्सप्तम्यर्थद्योतक उदाहरणमित्याशयेनाह। विभक्त्यर्थेति। स्यश्छन्दसि। एतत्तदोरिति सुचाहल्लीति सुलोप इति चानुवर्तते। स्य इत्यत्र त्यदाद्यत्वेन त्यदोर्दकारस्याकारे पररूपे तदो स सावनिति सत्वेन निर्देश। त्यदशब्दे तच्छब्दसमानार्थ इत्याशयेनाह। एष सभातुरित्यर्थ इति। ऋतश्चान्दसोत्तरपदे। अत चन्द्रशब्दस्येत्यर्थस्य लाभायाह। उभयनिर्देश इति। पितरामातरा च। पूर्वपदेऽराडादेशस्य निपातनमत्र उत्तरपदे तु विभक्तौ स्थाने आकारादेशे ऋतो ङीति गुण। समानस्य। सदृस्य स इत्यत स इति वर्त्तते। सगर्भ्य इति समानो गर्भः सगर्भस्तत्र भव इत्यर्थ। छन्दसि क्रियास्वक्षुलम्। अन्यत्र विष्व क्देवयोरित्युक्ता विश्वाधीत्युपात्तस्यानुपपन्नमत आह। इदमिति। तथा च विष्वग्देवयोर्ध्वेति सूत्रस्थयकारोऽप्यनुवर्त्तत इति भाव। बहुलग्रहणफलमा ह। बहुलग्रहणादिति। सधमादस्थयो। अत्र सधेति लुप्तविभक्तिको निर्देश। सधमाद इत्यस्य सहमाद्यन्ति ह्रष्टा भवन्ति देवा अस्मिन्नित्यर्थः। मदी धातो रधिकरणे हलश्चेति घञ्। सहस्याशेषार्थं शब्द। मादेत्यकार उच्चारणार्थ। तेन मादयते क्रियन्ते सधमादो यज्ञस्मिन्नथापि सधादेश। यश्च सिद्धमीति।

स्वाधातोः कर्त्तरि कः। साव्ढ्ं साढ्वासाढा। एते श्रयः शब्दानिपात्यन्ते । तस्याध्याया द्यप्रत्ययस्य ध्वे इत्यादेशो निपात्यते। सहिवहोरोदित्यत्वाभावश्च सर्वत्र ढत्वष्टुत्वढलोपदीर्घाः ढतीयस्याद्युदात्तस्य श्रवणेन ह्यन्तत्वम्। अत एव भूरिचक्रेति मन्त्रे साढेत्यर्थकं साह्वेत्याद्युदात्तमपठ्यते। शत्रूणामभिभवितेति तद्भाष्ये व्याख्यातम्। अत्रेति शब्दः प्रकारे। तेन निष्ठायामपि निपातनमिदम्। असाढमुग्रं सहमानमित्यादि। ढकारस्य स्थाने ह्वकारादेशविधायकवचनस्याष्टाध्यायामभावेऽपि प्रातिशाख्यीयवचनेनास्य सिद्धिरित्याह। द्वयोश्चेतीति। छन्दसि च। अष्टन इतीति। अष्टन संज्ञायामित्यतोऽष्टन इति ढ्लोप इत्यतो दीर्घ इति चानुवर्त्तते। न चाष्टनो नलोपत्यासिद्धत्वं शङ्क्यम्। सुप्तत्वाप्यधर्मावच्छिन्ननिमित्तकादिविधिभिन्नत्वादस्य दीर्घत्वस्येति नलोपः सुबिति सूत्राविषयत्वात्। अष्टापदीत्यत्राष्टौ पादाश्रस्या इति बहुव्रीहौ संख्यासु पूर्वस्येति पादशब्दान्त्यस्य लोपे पादोऽन्यतरस्यामिति ङीप्। श्रोपधेय। न च ऋदिकारादिति ङीपि गतार्थता। अन्तोदात्तत्वापत्तेः। प्रकृतप्रयोगे ङीपोऽभावे तु लघावन्त इत्याद्युदात्तता सिध्यति। ऋचि तु नुप। घशब्दोऽत्र न क्तिमार्थग्राहकः घशब्दस्यैव ऋग्वेदे दीर्घदर्शनात्।श्यात्वादिति भार्या भात्वावाचकात्पञ्चमी। थादेशस्य ङित्वपक्षे इति मूले। भरतेत्यत्र लोण्मध्यमपुरुषबहुवचनस्य थस्य तस्थस्थमिपामिति तादेशो लोटो लङ्वदिति लङ्वद्भावात्। ङित्वमस्य सार्वधातुकमपिदित्यनेन। सार्वधातुकत्वञ्च छन्दस्युभयथेति वैकल्पिकम्। एवञ्चातिदिष्टङित्वादयं तङिति न तु तङ्प्रत्याहारघटकः। एवञ्चिन्देशस्य फलमाह। तेनेति। तङितिनिर्देशेनेत्यर्थः। शृणोतेति। अत्र तप्तनप्तनथनाश्चेति तवादेशः। पित्वान्न ङित्वम्। उरुष्यशब्दः कंड्वादियगन्तो रक्षणार्थः। ततो लोट्। तस्य हिः। तस्यातो हेरिति लुक्। न इत्यस्य नश्च धातुस्थ इति णः। ऋकः सुञि। मन्त्र इत्यनुवर्त्तते। तेन ऋचि मन्त्रेऽस्य प्रवृत्तिः। सुञ् चाव निपातः। अत्रैव सुञोग्रहणार्थस्तत्र अकारः। वामपूर्वस्य निगमे। अत्र पपूर्वस्येति पुंल्लिङ्गस्योपपत्तिमाह। दीर्घस्येत्यादिना। शमिता यज्ञे। अत्र यन्निपात्यते तदाह। यज्ञविषय इति। युप्लुवोः। त्यपिलघुत्वतो त्यपीति वर्त्तते। नशेरेतद्रूपमिति। लुङन्तस्येति शेषः। अत्र हि नशधातोर्लुङि तस्य

तिङ इकारलोपे चूर्मन्त्रे घसेति लुकि हल्ड्यादिलोपे नशेर्वेति कुत्वाभावपक्षे षत्वजश्त्वयोश्चर्त्वेन टः । अमाड्योगेऽपीत्यपि शब्दमङ्ग्राह्यमाह । अपिशब्दादिति । जनिष्ठा इत्यत्र जनेर्लुङ् स्यात् । आवाप्सुरित्यत्र वप्धातोः कर्मणि लुङ् तस्य व्यत्ययेन परस्मैपदमाङ्योगेऽप्यटो निषेधाभावः । युष्माकं शेषे भार्यायां परेषां बीजानि क्षेत्राणि उप्तानि मा भूवन्नित्यर्थः । इरयोरे । इरे इत्यस्य झादेशस्यानुकरणम् तस्ये रेचेरेचेति एकबुद्धिविषयत्वेन सहविवक्षायामेकशेषः । तनिपत्योः । वितत्निरे इति । तनु विस्तारे । लिटः प्रथमपुरुषबहुवचनम् । शृणु । एभ्यो हेर्धिः स्यात् । शुधीहवमित्यत्र बहुलञ्छन्दसीति शपो लुक् । शृणुधीत्यत्र शृवः शृचेति श्रुप्रत्ययः शृभावश्च । उतश्च प्रत्ययादिति हेर्लुक् तु न । विधानसामर्थ्यात् । राम्रढि । पृधातोर्लोट् हेर्धिः । शपो लुक् । उदोष्ठ्यात्युत्वम् । ननु सेर्ह्यपिच्चेति ह्यादेशस्यापित्वविधानात्कथमटित्वमत आह । छन्दसि पच इति । मन्त्रेष्वाङ्यादेरात्मनः । आङोऽन्यत्र सप्तम्येकवचने । त्वत्स्यत्रात्मा । अत्र निपातनं येषां कार्याणां तानि यथायथमूह्यद्रष्टव्यानि । मयटो मकारस्य लोपे यस्येति लोपस्तु न । मलोपस्यासिद्धत्वात् । व्यञ्जनस्य लोपे यस्येति लोपेऽपि रूपस्य सिद्धिर्वा ॥

## ॥ इति षष्ठोऽध्यायः ॥

पक्षे इति यत्सूत्रेऽभिहितं तदुपपत्तिमाह । सर्वेति । दुह इत्यत्र दुहेर्लट् । तस्य झः । टेरेत्वम् । घटयमित्यत्र रित्वादङि ऋदृशोऽङि गुण इति गुणस्तु न । बाहुलकात् । यद्वा बाहुलकत्वाद्दृशेरक् । व्यत्ययेन बहुवचनस्यैकवचनम् । ह्वापीत्यपिशब्दमङ्ग्राह्यमाह । अपिनेति । अत्र छन्दसि सर्वविधीनां वैकल्पिकत्वेन स्वशादेशेऽकृते रूपस्य सिद्धौ ह्वायदुणच्छान्दसत्वमभ्यस्तभावस्यानुवादः । यस्य फलन्तु यथा कश्चिन्नामभावेऽपि साधुस्तस्य छान्दसत्वादेवागमाऽपि स्याप, साधुत्वबोधनम् । तेनाश्वेनाग्नीनि आश्वेति शब्दः साधुर्भवति । तथा विनायकस्यृर्ष्टीति च भवति । अपि शब्दः सर्वभाषाणामेव साधुत्वाय भूदिति क्रियते । सुपामिति षष्ठीनिर्देशात्स्मोऽन्यपरिभाषाबाधनाधायाह । छान्दस-

त्वात्सर्वादेश इति । प्रकारान्तरमप्याह । उकारेति । अयमिति । प्रकृतो यो इत्यर्थ. । न केवलमप्रकृतसूत्रस्यैव तत्प्रपञ्चलद्धिन्तु भाष्योक्तवार्त्तिकस्यापीत्याह सुपां सुपेति । इदमुपलक्षणम् । तिङातिङो भवन्तीत्यपि तस्य प्रपञ्चः । आ स्याधादिति । तृतीयैकवचनस्य स्थाने प्रमाणत आन्ययादीकार इत्यर्थः । पूर्व सवर्णो दकार इति । प्रकृतसूत्रस्थभाष्ये इकारस्थान्यतो दकार इत्युक्तत्ते ना घामपि घोषमस्वारनादाल्पप्राणत्वम् । घोषत्वाद्यभावे निरनुनासिकाल्पप्राण स्तकारोऽपि स्यात् । अल्पप्राणत्वात्तौकारे दधौ पर्यायेण स्याताम् । अचाडघोष त्वे परः सन्निकर्ष इति सूत्रस्थं भाष्यमपि प्रमाणम् । तत्र हि ह्रादाविराम इ तिन्यासपक्षे पचतीत्यत्र द्वयोर्घोषयोर्मध्येऽघोषस्य चकारस्य सत्त्वात्संहिता सं ज्ञा न प्राप्नोतीत्युक्तम् । तत्रैव कैयटः । प्रयत्नविशेषजनितो वर्णाविरमिरप्यनु रणरूपोवर्णान्तरोच्चारणेऽप्यनुवर्त्तमानो घोषो ह्राद इत्युच्यते । संहिता संज्ञा भावे तु तदधिकारीयस्य स्वरितत्वस्याप्राप्तिः स्यादिति भावः । नन्वेवम्पूर्वस वर्णेन परमेष्ठ्योमन्नित्यस्यापि सिद्धौ लुकप्रवृत्तिवैयर्थ्यमत आह । परमेष्ठ्योमन्नि त्यत्रेति । संयोगान्तलोपस्यासिद्धत्वादिति । प्रकृतसूत्रदृष्ट्या तस्यासिद्धत्वात्प्र क्षते लुगेवेत्यर्थः । ननु पूर्वोक्तरीत्या परमेष्ठ्योमन्नित्यादेः सिद्धौ लुग्ग्रहणमेव न कार्यमत आह । यस्तुवन्तीत्यादाविति । स्मिन्नापत्तिरिति । संयोगान्तलोप स्याऽसिद्धत्वात्यदादित्वे ऽस्मिन्नापत्तिरित्यर्थः । अमार्थश्चेति । अत्र पूर्वसवर्ण एव चेद्विधीयते तदालोन्त्यपरिभाषयाऽन्त्यादेशत्वापत्तिरिति । इत्वनिषेध इति । स्थानिवद्भावेन विभक्तित्वादित्वस्य तन्येत्वनिषेध. । मूले न युष्मे वाजबन्धवः । अस्मे इन्द्राबृहस्पती इति । न युष्मेवाजबन्धवोऽनिनित्सु यनमर्त्यः अवदाम धिदीधरदिति मन्त्रस्यैकदेशोऽयम् । वाजमित्यदन्तन्नाम । वाजेनान्नदानेन ब ध्नत्वः वाजबन्धवः । सम्बोधनान्तञ्चेदम् । हे वाजबन्धवो युष्मे युष्मासुनिनित्सु य त्नधि इति सम्बन्धः । विभक्त्यर्थेऽधिशब्देन युष्मे इत्यनेनाव्ययीभावो नित्यः प्राप्तोऽपि बाहुलकान्न । निनित्सु च न । निन्दतेश्छान्तोऽपि न । निन्दतेर्न लोपो बाहुलकात् । एवमेवेडभावश्च । मर्त्यः अवद्यन्त अदीधरत् । नधारय दित्यर्थे दीधरदिति धारयतीत्यर्थः । भवदनुसन्धानेन निष्पापत्वात् । द्वितीय मन्त्रेऽपि देवता प्रार्थ्यते । हे इन्द्राबृहस्पती अस्मभ्यम् रयिञ्जनम् दधातिरिह

तिङ इकारलोपे चुं मन्त्रे घसेति लुकि हलङ्यादिलोपे नशेर्वेति कुत्वाभावपक्षे षत्वजश्त्वयोश्चर्त्वेन टः । अमाङ्योगेऽपीत्यपि शब्दसङ्ग्राह्यमाह । अपिशब्दादिति । जनिष्ठा इत्यत्र जनेर्लुङ् स्यात् । आवाप्सुरित्यत्र वप्धातोः कर्मणि लुङ् तस्य व्यत्ययेन परस्मैपदमाङ्योगेऽप्यटो निषेधाभावः । युष्माकं क्षेत्रे भार्यायां परेषां बीजानि रेतांसि उप्तानि मा भूवन्नित्यर्थः । इरयोरे । इरे इत्यस्य झादेशस्यानुकरणम् तस्य रेचेरेचेति एकबुद्धिविषयत्वेन सहविवक्षायामेकशेषः । तनिपत्योः । वितत्निरे इति । तनु विस्तारे । लिटः प्रथमपुरुषबहुवचनम् । शृणु । एभ्यो हेर्धिः स्यात् । शृधीहवमित्यत्र बहुलंछन्दसीति शपो लुक् । शृणुधीत्यत्र शृत्रः श्रुवेति श्नुप्रत्ययः शृभावश्च । उतश्च प्रत्ययादिति हेर्लुक् तु न । विधानसामर्थ्यात् । एषम्भृधि । पृधातोर्लोट् हेर्धिः । शपो लुक् । उदोष्ठ्येत्युत्वम् । ननु सेर्ह्यपिच्चेति ह्यादेशस्यापित्त्वविधानात्कथमङित्त्वमत आह । छन्दसि पच इति । मन्त्रेष्वाङ्यादेरात्मनः । आङोऽन्यत्र सप्तम्येकवचने । त्मन्यथवास्त्वर । अत्र निपातनं येषां कार्याणां तानि यथायथं द्रष्टव्यानि । मयटो मकारस्य लोपे यस्येति लोपस्तु न । मलोपस्यासिद्धत्वात् । त्मन्नस्य लोपे यस्येति लोपेऽपि रूपस्य सिद्धिर्वा ॥

## ॥ इति षष्ठोऽध्यायः ॥

पक्षे इति यत्सूत्रेऽभिहितं तदुपपत्तिमाह । सर्वेति । दुह इत्यत्र दुहेर्मदि । तस्य झः । टेरेत्वम् । अदृश्यमित्यत्र रिलाटङि ऋदृशोऽङि गुण इति गुणस्तु न । बाहुलकात् । यद्वा बाहुलकत्वात्तेरक् । व्यत्ययेन बहुवचनस्यैकवचनम् । ह्यापीत्यपिशब्दसङ्ग्राह्यमाह । अपिनेति । अत्र छन्दसि सर्वविधीनां वैकल्पिकत्वेन स्यादादेशेऽसति रूपस्य सिद्धौ ज्ञापकस्याच्छन्दस्त्वमध्ययाभावस्यानुवादः । तस्य फलमस्तु यथा कथिचित्साध्यभावेऽपि साधुत्वमेव । छान्दसत्वादेवासमासेऽपि त्यपः साधुत्वसाधनम् । तेमार्ग्यं माचीनि पश्यन्ति शब्दः साधुर्भवति । तथा विनायकस्यर्न्ति च भवति । अपि शब्दः सर्वशाभावकेन साधुतया भृदिति क्रियते । सुपामिति षष्ठीनिर्देशादस्मात्परिभाषाबाधमाशयाह । छान्दस-

लुंडीति । वधादेशः । लुडि चेति वधादेशः । बहुलग्रहणसीत्वड-भाव इत्यपि बोध्यम्। लोपस्त-आत्मनेपदेषु । अत्र सम्यगुपपत्तये विद्यति-क्रियावाचकशब्दमध्याहृत्य व्याचष्टे। आत्मनेपदेष्विति। क चिन्नेति। तकार लोपः क चिन्नेत्यर्थः। मूले वृत्तिकारोक्तिः प्रामादिकीति। लक्ष्ये वकारस्यैव श्रवणेन तयोक्तिः प्रामादिकीत्यर्थः। तस्य तात्। मध्यमपुरुषेत्वस्य विशिष्यला-भायाह। छन्दसीति। अत एव। तनबादेशस्य पित्वादेव । उभयशब्दस्य सर्व-नामत्वाज्जसः शीभावप्रद्वावारणायाह। उभयास इत्यादाविति। विकल्पवार-णायाह। छन्दस्यापार्येति। एकशेष इति । एवञ्च समाहारद्वन्द्वस्य नपुंसक-त्वाद् ह्रस्वो नपुंसक इति ह्रस्वत्वात्सिद्धमिति भावः। अस्यभिरिति। अनजा-दित्वादनडोऽप्राप्ताविदम्। क्वचिदविभक्तावपि इंशिग्रहणादयम् । अश्वत्थाः अश्वत्थेत्यादौ। मूले कीदृङ्इन्द्र इति। त्यदादिषु दृश इति क्विन् । तुमि सति क्विन्प्रत्ययस्येति न खड:। खवानित्यस्य सुष्ठु अवो यस्येत्यर्थः। तुधा-तोर्ह्यर्थकादसुनिस्वं तवोऽवृद्धिर्यस्येति विग्रहः। ततुरिति । तधातोः क्विन्प्र-त्यये द्विर्वचनेऽचीति निषेधात्तु शब्दस्यादौ द्वित्वम्तदनन्तरमुत्वम्। हु ह्वरेश्छ-न्दसि। ह्वरेरित्यागन्तुनेकारेण निर्देशः ह्रु इति लुप्तविभक्तिक। सोमि ह्वरितः। इट्गुणाविति। इदमुपलक्षणम्। आदेशाभावोऽपि बोध्यः। बभूयाततन्। बुधः क्रा दिनियमादिडभावे सिद्धे नियमार्थमिदम्। ससनिं सस्रनि। अस्य सूत्रस्य छान्द-सत्वे प्रमाणमाह। सनिमित्यस्येति। सर्वमा इति । अस्तेर्लङ् । तिपईड-भावेऽपृक्तत्वाद्धल्ङ्यादिलोपः शपो लुक्। जसादिषु छन्दसि। जसादिनिमित्तकै कार्ये छन्दसि वेति वक्तव्यम्। अथादिशब्दः प्रकारे। तेन पूर्वयोगनिर्दिष्टविष-येऽपि विकल्पः। दर्वंदर्वि। अर्थ्यऽव इत्यादौ यथा। देवसुम्नयोः इह यजुःश-ब्दस्य वेदोपलक्षणत्वे सति यादृशो वाक्यार्थस्तमाह । यजुर्वेदीयेति। कव्यध्व-र। कविषध्वरइतना एपामन्त्यस्य लोपः स्यात्काचि। ऋग्वेदे। सुधितवसुधि-त। विषु सुमात्रे तौत्वे प्राप्ते ऽनेनेत्त्वमिपात्यते । धिष्वेत्यभ्यासलोप उत्तर-खण्डे इत्वञ्च । लौकिके तूत्तरखण्डे घ्वाध्यसोर्योरित्यालोपः दधस्तयोरिति भष्भावः। दाधर्ति। ष्टङो यदा अयशब्दास्तदाह । ष्टङ इति। अन्त्ययोः। द्वितीयतृतीययोः। तत्रापि ष्टङो निपातनपक्षे आह । ष्टङ्स्विति। आद्यस्य

दानार्थ.। ता अनुदात्तौ चावयतात्। व्यवस्थावदङ् इति। यद्यपि स्वागापाधव इति विहितः शिवातथोपसर्ग इतिसूत्रविहितस्याङो बाधकस्तथापि व्यवस्थायामितिनिर्देशात्क चित्र बाधक इतिकल्पत इति भावः। आङिति तृतीयैकवचनबोधक आङशब्द इत्याशयेनाह। आङ इति। भाष्यस्वरस इति। प्रश्नसूत्रभाष्ये ईकारः इतित्र शुष्कं सरसीशयानमितीकारादेशोदाहरणमुपन्यस्तत्वात्स्यायमाशयः। शाखान्तरे आदुदात्तोऽप्ययमध्यतेऽत इदमप्युदाहरणमिति। अत्र कैयटः सरमुशब्दात्परस्य ङिशब्दस्येकारादेश इति। अत्रे दमवधेयम्। ईदूतौ च सप्तम्यर्थे इति सूत्रभाष्ये ईकाररूपा सप्तमी अस्तीति प्रदर्शनाय तत्रापि सरसी यदीत्यस्य व्याख्यानावसरे दक्षिणापथे महान्ति सरांसि सरस्य इत्युच्यन्त इति भाष्यकृतोक्तत्वात्, यच्छाखायामयमन्तोदात्तः पठ्यते तच्छाखास्थमिति। अमो मश्। मशादेशस्याकार उच्चारणार्थश्चे च्छकाराभावे मकारो व्यञ्जनमात्रमादेशोऽयचालोन्त्यपरिभाषयाऽमोमकारस्यैव स्यात्तथा चादेशविधानवैयर्थ्य मत आह। मस्यापीति। मस्यादेशस्य,शिवभाष्ये प्रत्याख्यातम्। तथाहि। हिमकारकोऽयंनिर्देश,इति। न च हिमकारकनिर्देशपक्षेऽपि मशकारकनिर्देशपक्षवदकारस्योच्चारणार्थतयाऽऽदेशस्य व्यञ्जनद्वयात्मकस्यैव विधेयवाचकपदादुपस्थितेर्न तस्माद्धिमकारात्मकादेशोच्चारणे लाघवमिति वाच्यम्। भिन्नजातीयवर्णोच्चारणे प्रयत्नगौरवम्भवति समानजातीयवर्णद्वयोच्चारणे तु न तथेत्याशयात्। एकस्यान्त्यमकारस्य च संयोगान्त्यलोपो भविष्यति। एतद्भाष्यमाश्रित्यास्मत्क चिटभलोऽपि संयोगान्त्यलोप इति।यदि हिमकारकोऽयंनिर्देशस्तदा सर्वमेतत्। इत्यनिमित्तकर्तव्यं संयोगान्त्यलोपस्यासिद्धत्वादकृतत्वाभावादीर्णन प्राप्नोतीत्याशङ्क्य यकारादौ न दृश्यति।किं यकारो न श्रूयते। लुप्तनिर्दिष्टो यकार इति तत्रोक्तम्। यकारनिर्देशमादेशस्यानेकाल्त्वात्सर्वादेशत्वम्भविष्यति यकारस्य लुप्तत्वादकृतत्वाश्रयस्य च आगमस्य च सिद्धिर्भविष्यतीति भावः। अत कश्चित्। संयोगान्त्यलोपस्यासिद्धत्वादकृतत्वाश्रयत्वे इडागमस्यानापत्तिरिस्यंकदेश्युक्तिरियमिति। तन्न। तस्य दोषस्य भाष्यकृतैवोद्भावनहृत्वा मशकारकादेशपक्षः परित्यक्त इति तस्यैकदेश्युक्तित्वकल्पनस्य सम्प्रदायविरुद्धत्वात्। यथोक्तिस्तस्य सिद्धिप्रकारमाह। इत्यो-

तुं डीति । वधादेशः । लुङि चेति वधादेशः । बहुलञ्छन्दसीत्यड-भाव इत्यपि बोध्यम् । लोपस्त आत्मनेपदेषु । अत्र सप्तम्युपपत्तये विद्यति-क्रियावाचकशब्दमध्याहृत्य व्याचष्टे । आत्मनेपदेष्विति । क्व चिन्नेति । तकार लोपः क्व चिन्नेत्यर्थः । मूले वृत्तिकारोक्तिः प्रामादिकीति । लक्ष्ये वकारस्यैव श्रवणेन तथोक्तिः प्रामादिकीत्यर्थः । तस्य तात् । मध्यमपुरुषेत्यस्य विशिष्यला-भायाह । छन्दसीति । अत एव । तनबादेशस्य पित्वादेव । उभयशब्दस्य सर्व-नामत्वाज्जसः शीभावशङ्कावारणायाह । उभयास इत्यादाविति । विकल्पवार-णायाह । छन्दस्यापाद्येति । एकशेष इति । एवञ्च समाहारद्वन्द्वस्य नपुंसक-त्वाद् ह्रस्वो नपुंसक इति ह्रस्वत्वात्सिद्धमिति भावः । मस्त्रभिरिति । अनजा-दित्वादनङोऽप्राप्ताविदम् । क्वचिदविभक्तावपि इशिग्रहणादयम् । अद्यग्वन्तः अस्यन्वतेत्यादौ । मूले कीदृङ्ङिन्द्र इति । त्यदादिषु दृश इति क्विन् । नुमि सति क्विन्प्रत्ययस्येति न खङः । स्ववानित्यस्य सुष्ठु अवो यस्येत्यर्थः । तुधा-तोर्ह्यर्थकादसुनित्स्वं तवोवृद्धिर्यस्येति विग्रहः । ततुरिति । तृधातोः क्विन्प्र-त्यये द्विर्वचनेऽचीति निषेधात्तृशब्दस्यादौ द्वित्वमृतदनन्तरमुत्वम् । ह्रु ह्वरेश्छ-न्दसि । 'ह्वरेरित्यागन्तु नेकारेण निर्देशः ह्रु इति लुप्तविभक्तिकः । सोमे ह्वरित. । इद्गुणाविति । इदमुपलक्षणम् । आदेशाभावोऽपि बोध्यः । बभूथाततन्थ । ऋतः क्रा-दिनियमादिडभावे सिद्धे नियमार्थमिदम् । ससनिंससनि । अस्य सूत्रस्य छान्द-सत्वे प्रमाणमाह । ससनिमित्यस्येति । सर्वमा इति । अस्तोर्लङ् । तिपृईड-भावेऽपृक्तत्वाद्धल्ङ्याब्दिलोपः शपो लुक् । जसादिषु छन्दसि । जसादिनिमित्तके कार्ये छन्दसि वेति वक्तव्यम् । अत्रादिशब्दः प्रकारे । तेन पूर्वयोगनिर्दिष्टविष-येऽपि विकल्पः । दर्वेदर्वि । अम्बेऽव इत्यादौ यथा । देवसुम्नयोः इह यजुःश-ब्दस्य वेदोपलक्षणत्वे सति यादृशो वाक्यार्थस्तमाह । यजुर्वेदीयेति । कव्यध्व-र । कविअध्वरपृतना एषामन्त्यस्य लोपः स्यात्करचि । ऋग्वेदे । सुधितवसुधि-त । त्रिषु घुमास्थेतीत्वे प्राप्तेऽनेनेत्वन्निपात्यते । धिष्वेत्यभ्यासलोप उत्तर-खण्डे इत्वञ्च । लौकिके तूत्तरखण्डे श्नाभ्यस्तयोरित्यालोपः दधस्तथोरिति भष्भावः । दाधर्त्ति । ष्टडो यदा अयशब्दास्तदाह । ष्टङ इति । अन्त्ययोः । द्वितीयतृतीययोः । तत्रापि ष्टडो निपातनपक्षे आह । ष्टङस्विति । आद्यस्य

प्रकारान्तरेण साधनमाह। यद्वेति। गुणाभावमात्रमिति। ऋतश्चेति प्राप्तगुणाभावमात्रमित्यर्थः। अतोये व्याख्याभेदेन विशेषमाह। दर्धर्तीत्यत्रेति। लोटीति शेष इति। बोभूत्वित्युच्चारणादेवं कल्पना। लोटि गुणाभावनिपातनान्नोक्ष्येव भाषायाङ्गुण इति भ्रमवारणायाह। लोडतिरिक्ते चेति। अत्र मानन्तु भूसुवोरिति गुणनिषेधे सिद्धे गुणाभावनिपातननियमार्थमत्रैव भूधातोर्गुणाभाव इति। तेतिक्त इत्यत्र यङ्लुक्यात्मनेपदन्निपात्यते। अलर्षीत्यस्य साधनन्तु मूल एवाभिहितम्। एवमुत्तरत्रापि। पठितुं युक्तमिति। न च सूत्रेति धूयारम्भपक्षे निगम एव निपातनन्दाधर्तीत्यत्र पाठे तु भाषायामपि स्यादिति कथमेतदिति वाच्यम्। छन्दस्यापाद्यमानरूपाभावात्। बहुलञ्छन्दसि। निजान्त्रयाणामिति सूत्राच्छ्लाविति वर्त्तते। प्रकृतसूत्रे यद्बहुलमिति तस्य फलमाह। न च भवतीति। चोद्यर्थं॥

॥ इति सप्तमोऽध्यायः ॥

ममसुपोद.। ननु द्वन्द्वाच्चुदषहान्तादिति टच् प्राप्नोतीत्यत आह। अनित्यत्वादिति। अत्र ज्ञापकमन्यत्र प्रपञ्चितम्। यद्यपीह छन्दसीति न प्रकृतम् तथापि द्विरुक्तेन प्रादिना कश्चन विशेषो नद्योत्यतेऽतोऽनर्थका एतेपादपूरणमात्रसम्पादका.। नह्येवं विधस्यानर्थकस्य प्रयोगो लोके दृश्यतेऽतोऽस्य छान्दसत्वमिति विज्ञेयम्। पादस्य पूरणम्पिप्पादनन्तावितिमिन्विवक्षिते इति शेष.। पादपूरणे किम्। प्रदेयं देव्या धिया। छन्दसीरः। छन्दसि सर्वेविधीनां वैकल्पिकत्वात्कश्चिन्मानेन यरम्। योऽप्सिमां उदनिमां दपति। मनो तुद। छन्दसीति वर्त्तते। पक्षगृग्स इति। छन्दस्यपि दृश्यत इत्यनङ्। गुटोऽमिक्ष्यतेरपूर्वस्मोऽपि भूमपूर्वगत्या नुद। तम्याभिवलाश पत्यम्। गत्यम्। स्ना रूपमिति सूत्रेऽस्मदंशे स्युक्रमत आह। मरुतामयोरिति। सुपथिम्नरं इत्यत्र सुपथिन्शब्दादर्शि पदार्थगतप्रकर्षविवक्षया तरप्। प्रकृत्यपत्यमन्त्य लोपः। न च छन्दसि सर्वविधीनामित्यनुरोधेन प्रयत्नेरव मतोपाभावेन सिद्धो गुरुद्भानवैयर्थ्यम्। स्वरवर्ण विशेषात्। भूरिदावत्तर इत्यत्र दावाशीरेनिप्। इंडविम। इविमुत-

ष्टस्य ईदादेशः स्यात्। रथीतर इत्यत्र नलोपापवाद ईकारादेश इति के चित्। तन्न। सवर्णदीर्घे कर्त्तव्ये इकारादेशस्यासिद्धत्वात्सवर्णदीर्घत्वाभावेन रूपासिद्धिप्रसङ्गात्। नमत्त। एतेषामिति। स्वरूपमिति शास्त्रसत्वादेया शब्दपरत्वम्। एते निपात्यन्त इत्यर्थः। तेन रदाभ्यामिति प्राप्तनत्वस्याभावः। अनुत्तमिति। अत्रापि निष्ठाया नत्वाभावो निपातनादेव। न च नुदविदेत्यस्य वैकल्पिकत्वेन पक्षे निपातनाभावेप्यय शब्दः सिध्यतेवेति वाच्यम्। एतन्निपातनसामर्थ्याल्लोकेऽपि न नुदविदेतिविकल्पो नञ्पूर्वत्व इत्याहुः। प्रतूर्त्तमित्यत्र ज्वरत्वरेत्यूठ्। यदा तुर्वीत्यस्य तदा राल्लोपः। सूर्त्तत्वच निपातनादुत्वम्। नचास्योत्वस्यागिद्वत्वादपरत्वन्न स्यादिति वाच्यम्। ,कार्यकालपक्षाश्रयणात्। अम्नरुध। अम्नसशब्द ईषदर्थे। नित्यं छन्दसि प्राप्ते रेफार्थमिदम्। भुवश्च महाव्याहृतेः। महाव्याहृतेः। अन्तरिक्षवाचकस्य भुवस् इत्यस्यामहाव्याहृतिभिन्नस्य भुवइत्यस्य साधनिकामाह। भवतीरिति। ओमभ्यादाने। अत्र प्लुतस्तुत्योपस्थितस्याच इत्यस्य ओम्शब्दो विशेषणन्तेनान्त्यस्य यकारस्य न। वृत्तिमतानुसारेणाह। अभ्यादानमारम्भ इति। कैयटानुसारिव्याख्यानप्रदर्शयन् स्वसम्मतमर्थमाह। न सुब्रह्मण्यायामितीति। सुब्रह्मण्योमित्यत्र यज्ञकर्मण्यजपन्यूङ्खसामस्वित्यनेन प्राप्तस्यैकश्रुतिस्वरस्य निषेधमात्रन्न सुब्रह्मण्यायामित्यनेन कार्यम् स्वरितोदात्तत्वन्तु न विधेयन्तस्य त्वोमभ्यादान इत्यनेन सिद्धिर्भविष्यतीत्यन्यया सिद्धिशङ्कावारणाय कैयटेनैत्युक्तम्। तस्य। ओमभ्यादान इति सूत्रस्य। अत एव। तस्य सूत्रस्याय्यज्ञकर्मविषयत्वादेव। तस्य सूत्रस्य तद्विषयत्वे साधकमाह। अभ्यादानपदेनेति। अनेन प्लुतमाहेति। अयज्ञकर्मणि विधीयमान ओमभ्यादान इति प्लुतः प्रारम्भेऽपि भवति न त्वभ्यादानपदस्य प्रारम्भार्थकत्वमिति बोध्यमेकश्च न सुब्रह्मण्यामिति सूत्रेण सुब्रह्मण्यामित्यत्र यज्ञक्रियायामुच्चारितमन्त्रावयवे स्वरितोदात्तत्वविधानार्थमिदमावश्यकमिति भावः। न च वृत्तिसम्मतमेवाभ्यादानपदस्यारम्भार्थकत्वमस्तु एवञ्च न तेनान्यथा सिद्धिरिति वाच्यम्। यज्ञकर्मणि प्रारम्भे प्लुतोदात्तत्वस्योमित्यत्र सिद्धावपि जपे प्लुतानापत्तेः। न सुब्रह्मण्यायामिति सूत्रे स्वरितोदात्तत्वस्य वृदाहरणान्तरमप्यस्ति। इन्द्र आगच्छेति। अत्र चेन्द्रशब्द आमन्त्रितत्वादाद्युदात्तस्तदेकवाक्यताधन-

शेषनिघातेनान्त्याकारस्यानुदात्तस्योदात्तादनुदात्तस्य स्वरित इत्यनेन स्वरितत्वे कृतेऽनेनोदात्तत्वङ्क्रियते । ये यज्ञकर्मणि । उच्चारित इति शेषः । यज्ञक्रियायामुच्चारितो ये शब्दः प्लुतः स्यात् । इत्यर्थं वाच्यमिति । किमत्र प्रमाणमिति चेद्भाष्यसम्मतं व्याख्यानमेवेति गृहाण । तत्र हि ये यज्ञकर्मणीत्यतिप्रसङ्गो भवति इहापि प्राप्नोति । ये देवासो दिव्येकादशस्थ इति । सिद्धन्तु ये यजामह इति ब्रूह्यादिषूपसंख्यानात् । सिद्धमेतत्कथम् । ये यजामहशब्दो ब्रूह्यादिषूपसंख्येय इत्युक्तम् । एतेन यत्र यत्रानेन प्लुत इष्यते ते ब्रूह्यादिषु द्रष्टव्याः प्रकृतसूत्रस्य न कार्यमित्यभिहितम् । एतेन ये देवास इत्यत्र न भवतीति स्पष्टमेव लभ्यते । प्रणवष्टेः । यज्ञकर्मणीति वर्त्तते । प्रणवशब्दस्य लोके ओंकारमात्रे प्रसिद्धिसत्वादाह । टिस्थानिक इति । भाष्यादावििति । तत्र हि प्रणव इत्युच्यते कः प्रणवो नाम । पादस्य वा अर्द्धर्चस्य वा अन्त्यमक्षरमुपसंहृत्य तदाद्यक्षरशेषस्य स्थाने त्रिमात्र ओकार औकारं वा विदधति तम्प्रणवमित्याचक्षते इत्युक्तम् । अत्र पादस्य वेत्यनेन शास्त्रान्तरे यः प्रणवशब्दार्थः प्रसिद्धः स एवात्राश्रीयत इत्युक्तम् । देवतेत्यादिशब्दस्य यथा शास्त्रान्तरप्रसिद्ध एवार्थोऽभिव्याश्रीयते तथा । अन्त्यमक्षरमुपसंहृत्येति । अक्षरमच् । अन्त्यमचङ्गृहीत्वा इत्यर्थः । तदाद्यक्षरशेषस्येति । अत्र तच्छब्दोऽक्षरवाची । अक्षरञ्च शेषश्चाक्षरशेषम् । शेषशब्दो हल् बोधकः । स आदिर्यस्य तत्तदादि । तदादि च तदक्षरशेषञ्च तदाद्यक्षरशेषन्तस्य टिसंज्ञकस्येत्यर्थः । न च टिस्थानिकादेशस्यैव प्रणवसंज्ञा तदा प्रकृतसूत्रे टिग्रहणं व्यर्थमिति वाच्यम् । वाक्यस्य टेरित्यधिकारादन्त्यपरिभाषाया उपस्थानाद्ॄकारस्यौकारः स्यात् कृते तु टिग्रहणे ओकार ओंकारश्च टेरेव भवति टेरेव यथा स्यादिति । अलोऽन्त्यपरिभाषाया अनुपस्थानादेतच्च टिग्रहणमेवोभयोरेव प्रणवसंज्ञायामुभयोर्विधेयत्वे च मानम् । अन्त्यपरिभाषयोपस्थितमजिति टेर्विधेयत्वमसम्बन्धी यदिष्टार्थं स्यादिति । वस्तुतस्तु प्रातिशाख्योक्तरीत्या टिस्थानिकस्यैव प्रणवपदेन ग्रहणमिति प्रकृतसूत्रस्थटिग्रहणमनुवाद एवेत्याशयेनाह । टेरितीत्यादि । गुणीभूतनिरूपणयोर्भ्रममुपपादयति इत्यत इतीत्यादिना । तदभावे । प्रकृतसूत्रे टिग्रहणाभावे । टेरित्यननुवृत्या । टिपदार्थोऽपि दर्शनार्थं न विधिपक्षसाधको योऽर्थस्तमा-

श्यर्थकस्यानमुहस्या । तदानीमनुवर्त्तमानटिग्रहणमलोन्त्यपरिभाषयोपस्था-
पितो योऽन्त्यपदार्थस्तस्य विशेषणभूतो योऽर्थस्तत्तात्पर्यको भविष्यतीति भा-
वः। तदन्त्यस्य । अनुवर्त्तमानटिग्रब्दार्थान्त्यस्य । ननु प्लुतश्रुत्याऽचपरिभाषोप-
स्थितान्त्यस्याच एवौकारः स्यान्न तु हलोऽत आह । व्यभिचाराभावादिति ।
चोकारस्य त्रिमात्रस्यैव प्रणवपदार्थत्वात् । न चोङ्कारस्य प्लुतोकारघटितस्य न
त्रिमात्रत्वमिति वाच्यम् । प्लुताभिन्न प्रणव इत्यर्थे तस्येहानुपस्थिति स्यादिति
भावः। यद्वोत्वमपीष्यत इत्युच्यते तदाऽसार्श्चचतुर्मात्रिकस्येष्टत्वे न तस्य प्लु-
तत्वाभावात्प्लुत इत्यस्याचानुपस्थितिकल्पनमेवेति तात्पर्यम् । यदा तु प्लुत इ-
त्यस्याऽननुवृत्तिस्तदा प्लुत इत्यनेन शब्देन विधानाभावादच्परिभाषाया अनुप-
स्थितिरेव। इदं सर्वं सौनटिग्रहणस्य प्रयोजनवर्णनमानिभाष्योक्तमतभिन्नम-
ताभिप्रायेणेति बोध्यम् । याज्यान्तः । याज्यापदार्थं व्याचष्टे । याज्याऽनुवाक्ये-
ति। अन्त इति किमिति प्रश्नाभिप्रायमाह । यदन्तग्रहणमिति । अयभावः।
सौत्रमन्त इतिप्लुतश्रुत्योपस्थितस्याच इत्यस्य विशेष्यं विशेषणं वा। नाद्यः।
इलन्तेऽस्य सूचस्य प्रवृत्त्यभावापत्तेः । न द्वितीयः । अन्ताभिन्नोऽच् तस्येत्यर्थे
प्रकरणप्राप्ते न टिनाऽचपदार्थे विशेषितेऽप्यन्तस्य लाभो भविष्यतीति । उत्त-
राभिप्रायस्त्वन्तपदसामर्थ्यादच सर्वान्त्यस्यैव ग्रहणमिति । तदुक्तभाष्ये । अन्त-
ग्रहणं किमर्थम् । याज्यानामकृचो वाक्यसमुदायस्तत्र यावन्ति वाक्यानि स-
र्वेषां टेः प्लुतः प्राप्नोति । इष्यते चान्त्यस्य स्यादिति तच्चान्तरेण यत्नं न सिध्य-
तीत्येवमर्थमन्तग्रहणमिति । अन्तग्रहणसामर्थ्याद्याज्यानामन्तो यष्टिस्तस्य
योऽच् तस्य प्लुत इत्यभिप्रायः। प्लुष्टिमेवयोपट्। हरदत्त इति । तादृशा-
नामुच्चारणस्य याज्ञिकसम्प्रदायसिद्धत्वमेव मानमिति तद्भाव। भाष्यस्वरसोदा-
सीनम्। अतिप्रसङ्गमाशङ्ख्य निराचष्टे । आवृत्तेति। अग्नीमे पये। आदेरित्य-
नुवर्त्तते। अग्नीमे पय इति वाक्यस्थेत्यस्यानुवर्त्तमानस्य विशेषणम्। एवञ्चा-
ग्नीधः मे पये यद्वाक्यन्तस्यादेरिति लब्धम् । परगब्दोपादानेनावध्याकाङ्क्षया
तस्मादित्यस्याध्याहारे सति तत्पदार्थजिज्ञासायामाह। आदिभूतादिति । इ-
त्यनयोरेवायमिति। ओश्श्राश्वयाश्श्यारवययोरिति यत्नव्यमिति भाष्योक्तिरत्र
बीजम् । विचारायामन्यथाप्यादेसृतमात्परस्य च दर्शनादाह । प्लुतमात्रस्येति।

भवत्येवेति। एवञ्च न भाष्ये परिगणनमिन्तु प्लुतस्य वैकल्पिकत्वेनाप्रहृत्तव्याख्यानमेवेति तात्पर्यम्। अत एव भाष्ये बहुलमन्यत्रापीति वक्तव्यम्। उभयत्र३ उभयत्र अभिहर३ अभिहर। आहर३ आहर। तत्तर्हि वक्तव्यम् वक्तव्यम्। योगविभाग करिष्यते। अग्नीत्प्रेषणेपरस्य च विभाषा। तत पृष्टप्रतिवचने हि। विभाषेति। अपर आह। सर्व एव प्लुत: साहसमनिच्छता विभाषा कर्त्तव्य इत्युक्तम्। विभाषा पृष्टप्रतिवचमेति सूत्रघटकपृष्टप्रतिवचनशब्दं व्याचष्टे। पृष्टप्रतिवचनमिति।निग्रह्या।एतद्व्याचष्टे।निगृह्येति स्वयमुक्तमित्यादिना।आम्रेडितभर्त्सने।नन्वाम्रेडितसंज्ञापरभागस्यैवेति तस्यैव प्लुत:स्यान्न तु पूर्वभागस्य इष्यते तु पूर्वभागस्यापीत्यत आह। उपलक्षणमितीति। अत्र मानन्तु भर्त्सने पर्यायेणेति वक्तव्यमिति वार्त्तिकम्। चौरा३चौर। चौरचौरा३ इति भाष्ये ति। यद्योभयो मिद्धिस्तत्प्रकारमाह।तत्रैकैकेति। मण्डूकप्लुत्या गुरोरनृत इति सूत्रादेकैकपदस्यानुवृत्तिः। अमर्ष इति। अमर्षे सूचयितव्ये सम्बोधनद्योतकस्याङ्गशब्दस्य प्रयोग इत्यर्थ:। अनुमये। सान्त्वने। अनाकाङ्क्षोदाहरणमले अङ्ग पचेति। अत्रामर्षसूचनायाङ्गेत्येवोच्चार्य पचेत्येवं यद्युच्चारितम्तयोभयोरेव प्रयोगेण शाब्दबोधपर्यवसानाच्च त्वन्याकाङ्क्षेति भाव.। कोटिद्वयस्पृगिति। कोटिद्वयविषयकमित्यर्थ। नन्वर्थस्य विचार्यमाणत्वम् तु वाक्यस्येति विचार्यमाणानामिति कथं वाक्यानामिति पदेन समानाधिकरणमत आह। इह त्विति। प्लुतविकार:। एचो प्रगृह्यस्यादूराद्धूत इतिसूत्रेण पूर्वार्धस्य प्लुतरूपो विकार:। पूर्वन्तु। अत्र तु शब्दोऽवधारणे। विचार्यमाणार्थप्रतिपादकवाक्ये यस्य पूर्वमप्रयुक्तस्यैत्यर्थ.। अत्र पूर्वसूत्रेण सिद्धे इदं सूत्रनियमार्थमेवमेवेति तु शब्दस्यिष्टोऽवधारणसूचनाय। प्रतिश्रवणे च। अत्र प्रतिपूर्वकःश्रुधातुर्यस्यर्थेषु वर्त्तते तानर्थानाह। प्रतिश्रवणमित्यादिना। अभ्युपगम। अङ्गीकार। प्रतिज्ञानम्। आवश्यकत्वस्य क्रियायाम्बोधनम्। एतयोरर्थयोर्यदा प्रतिश्रवणशब्दस्य प्रयोगस्तदा प्रतिश्रवणे गतिमममात इति कथनेनैतद्यो. शब्दा भवेति दर्शितम्। दत्तोऽयं दत्तकिमाल्सा३ इत्ययेन मम श्रवणाभिमुख्य अपेक्षया दत्तोयते। अनुदात्तप्रश्नान्ता। अत्रानुदात्तोऽयमन्य प्लुत इति पदक्योर्द्वयसमासपक्षकल्पनेन दूराद्धूतादिषु सिद्धस्य सम्प उदात्तपदेनोदात्तत्वे प्राप्ते तु

दात्तत्वमात्रमनेन क्रियते इति फलति । प्रश्नान्ते यत्रानेनानुदात्तत्वविधानम्स-भानस्यापि प्रश्नाख्यानयोरिति प्लुतस्य किम्पृच्छसि त्वमित्यादिर्विध्यस्तथा प्रत्यभिभूतेः शब्दस्य प्रश्नान्तत्वं सम्यगायाति प्रश्नान्तरेणापि प्रश्नान्तत्वमाह । भाष्योदाहरण इत्यादिना । चिदिति चोपमार्थे । चिदिति निपातः । उपमार्थे यत्रास्य प्रयोगस्तत्र वाक्यस्य टेरनुदात्तः प्लुतो भवति । अनेन शास्त्रेणाप्राप्त एव प्लुतोऽनुदात्तत्वगुणविशिष्टो विधीयते । अत्र सूत्रे इतिशब्दश्चिदित्यस्योपमार्थकस्य प्रयोगे सति वाक्यस्य टेः प्लुतार्थः । तदभावे तु उपमानेयत्किञ्चिच्छब्दे प्रयुज्यमाने सति चिच्छब्दस्य प्लुत इत्यर्थो गम्येत । इति शब्दोपादानेन तु वाक्यस्य टेरित्यस्य प्रकरणप्राप्तस्याबाधो बोधितो भवति। प्रयुज्यमान इति पदस्य प्रत्युदाहरणेऽग्निर्माणवकोभायादित्यत्रोपमार्थस्य शब्दान्तरस्य गम्यमानत्वेऽपि चिच्छब्दोऽपि गम्यत इति भवति प्रत्युदाहरणम् । उपरिस्विदासीत्। अयं शब्दः स्वरूपपरः । इति चेत्यस्यास्य शब्दस्येत्यर्थः । अनेनापि शास्त्रेणानुदात्तत्वगुणमात्रं विधीयते । प्लुतस्तु विचार्यमाणानामिति सिद्ध एव । स्वरितमाम्रेडिते । स्वरितमिति सामान्ये नपुंसकम् । पूर्वन्तिङन्तमिति । यदा पूर्वतिङन्तघटितवाक्यप्रयोगेण तादृगतिङन्तार्थघटकक्रियाकर्तुः क्षिया विवक्षिता तदोत्तरतिङन्तस्य प्रयोग आवश्यक एव । न हि पूर्ववाक्यमात्रप्रयोगेण क्षिया गम्यते । एवञ्चै तादृशस्यपूर्ववाक्यजन्यशाब्दबोधविषयक्रियायाः स्वसमानकर्तृकत्वस्वसमानकालिकत्वोभयसम्बन्धेनोत्तरवाक्यार्थक्रियाम्प्रतिविशेषणत्वम् । तस्याकाङ्क्षत्वञ्च तन्निष्ठविषयतानिरूपिताया विषयतायास्तन्निरूपकविषयताविशिष्टबोधजनकत्वेनाभिमतत्वम् । क्षियाया यत्र विवक्षा तत्र द्वयोः क्रियानिष्ठविषयतयोः साक्षान्निरूप्यनिरूपकभावः । इतरयोः परम्परया स । द्विविधोऽपि निरूप्यनिरूपकभावः प्रकृते विवक्षितः । अनन्त्यस्यापि । अपिनान्त्यस्य सद्ग्रहः। प्रमाणेन ज्ञानगमनकम्पसिकार्यान्तरसूचनाय नेदं वाक्यद्विन्तु प्रश्नवाक्यघटकमितिध्वननायाह । भाष्योदाहरण इति । तत्रानन्त्यापेक्षया विशेषमाह । तथान्त्यस्य त्विति । नन्वनेन विधीयमानस्य स्वरितप्लुतस्य नित्यत्वात्पदे इत्यनुपपमभिव्यागस्य तस्य वैकल्पिकत्वं साधयति । यद्यपीत्यादिना । प्रश्नान्त्यस्य तेनानुदात्तः प्लुतो विधीयतेऽनेन तु स्वरितः, उभयमपीदम्परस्परविरुद्धमिति स्वरित-

न्यः पदान्त्यस्थानेन प्लुतप्रसङ्गे विशेषो बोध्यत इत्यतो भद्रहरीषीत्यत्र पदा- न्तत्वेऽपि वाक्यान्त्यत्वाभावान्न तस्य प्लुतप्रसङ्गे विशेषः । ननु भाष्ये पदान्तप- दग्रहणं व्यर्थमित्युक्तं न तु वाक्यशब्दस्यापि तथोच्चारणमतो न्यूनतापत्तिरत आह । पदग्रहणेनेति । वाक्यमपीत्यपि शब्देन पदसंज्ञकस्य संग्रहः । पदान्त पदञ्चेत्यर्थः पदशब्देन पद्यते बोध्यतेऽर्थो येनेति व्युत्पत्त्योभयोरपि सङ्ग्र- हान्न न्यूनतेति भावः । अप्राप्त इति । दूरादाह्वानमत्वात् प्लुतविकारस्या- प्राप्तिः । प्लुतस्तु गुरोरनृत इत्यनेन प्राप्नोत्येव । न च गुरोरनृत इति सूत्रे वा- क्यस्य यदनन्त्यम्पदन्तस्य टेः प्लुतविधायकमिति पक्षे वा इत्यन्यस्य कथमप्रा- प्तिरिति वाच्यम् । अनन्त्यस्यानन्त्यस्य पदस्येति नार्थः । किन्तु दूराद्धूते यद्वा- क्यन्तदवयवानन्त्यस्यापीत्यर्थः । एवञ्चास्त्येव प्राप्तिरित्याशयात् । अथ वा दूराद्धूते चेति सूत्रेण वाक्यान्तस्यैवं प्लुते प्राप्ते तस्य प्लुतस्यान्त्यानन्त्याधस्था- निकत्वमाह गुरोरनृत इत्यनेन क्रियते न त्वनन्त्यपदस्यापीत्यनेनानन्त्यस्यैव पदस्य योऽनन्त्योऽपि शब्दादन्त्यस्तस्यापूर्वप्लुतविधायकमेतदिति प्लुतस्य सिद्धस्य स्थानिप्रदर्शनमात्रङ्क्रियते । तथा च दूराद्धूते चेत्यनेनाप प्लुतस्य प्राप्तिरस्त्येवेत्याशयात् । तयोर्य्वावचि संहितायाम् । अत्र त- योरिति पूर्वसूत्रनिर्दिष्टयोः परामर्शकमित्याशयेनाह । पूर्वसूत्राभ्यामिति । अत्र द्विवचनोपादानेन प्लुतावैच इदुतावित्यनेन स्थिरयोरिदुतोः प्लुतमात्रवि- धानमेचो प्रगृह्यस्येत्यनेन तु प्लुतयोरवयवकारयोर्मात्रिकयोरेवेदुतोर्विधान- मिति सूचितम् । अत्र पूर्वसूत्रादिदुतोरनुवृत्त्या सिद्धे तयोरिति पूर्वसूत्राभ्यां विहितयोरेव बोधकस्तच्छब्द इत्यस्य स्पष्टप्रतिपत्त्यर्थमिति बोध्यम् । इदम् । प- स्तुतसूत्रम् । अग्ना३ इन्द्रमिति । स्थितिप्रदर्शनमेतत् । प्लुतप्रकरणं व्याख्याय तस्मिन् विशेषं वक्तुमुपक्रमते । यद्यपीत्यादिना । तस्य । प्लुतस्य । दाश्वान् । अस्य सूत्रस्य वैदिक्यामेव लेखनस्य निमित्तमाह । प्रसङ्गादित्यादिना । छान्द- सानाम्प्रयोगाणां साधकसूत्रव्याख्यानाद्व्याख्यातस्यास्य सूत्रस्यापि व्या- ख्यानसूचितमतोऽत्रैवोक्तमिति भावः । तदनुबन्धकपरिभाषायाः प्रवृत्तिशङ्का- यामाह । मूले अनुबन्धपरिभाषेति तदनुबन्धकपरिभाषेत्यर्थः । अत एव । अनु- बन्धोच्चारण एव तस्याः परिभाषायाः प्रवृत्तिस्वीकारादेव । प्रकृतत्वादिति ।

अस्मिन्नित्यनुवर्त्तत इति भावः। एवञ्च । उभयथेत्यस्योपादानेन कार्यस्य वैकल्पिकत्वबोधने च। सूत्ररीत्या। उभयथर्क्ष्विति सूत्ररीत्या। आतोटीति सूत्रस्य त्यागे लाघवमप्याह। सर्वविकल्पानामित्यादिना । व्यवस्थितविकल्पेनेति। विकल्पस्य व्यवस्थितत्वञ्च छान्दसत्वाद्भविष्यति। सूत्राण्यपीति। स्पष्टार्थानीति शेषः। कः करत्। अदितिभिन्नात्परस्य विसर्गस्य स. स्यात्। उदाहरणे करित्यादीनाङ्कृधातुप्रकृतिकत्वम्बोध्यम्। पञ्चम्याः परावध्यर्थे। अत्र परावध्यर्थ इति समानाधिकरणे सप्तम्यौ। अध्यर्थ उपरिभाव.। लट्प्रथमैकवचनान्तत्वभ्रमनिवृत्तये आह। याभाविनीति। मनु. पूर्वेभ्य इति। अत्र मनुरिति प्रथमान्तस्य तु षष्ठ्यर्थाऽस्ति। निसस्तपता। आसेवनम्पौन. पुन्यन्ततोऽन्यत्रे त्यर्थं । उदाहरणे निष्टप्तमित्यस्य सकृत्तप्तमित्यर्थ.। लोकवेदसाधारणत्वादिति।छन्दसीत्यस्याप्रसक्तत्वादन्यस्य छान्दसत्वप्रयोजकस्याभावादिति भाव।निष्टप्तरक्ष इत्यस्य छन्दस्यादेतस्यानेन शास्त्रेण साधनमित्यभिप्रायेणास्य सूत्रस्य वैदिक्यां लेखनमिति केचित्। युष्मत्ततक्षु.। छान्दसानामुदाहरणानान्दर्शनादस्य छान्दसत्वमित्यप्याश नेष.। विशेषणमिति। व्यावर्त्तकं विशेषणमित्यर्थः । इतरयोस्तु परत्वकत्वात्। न त्वेकदेशस्य युष्मच्छब्दस्य। समासघटकत्वात् । यजुष्येकेषाम्। यजुःशब्दे पर इति भ्रमवारणायाह। यजुर्विषय इति। न तु स प्रयार्थ.। युष्मत्ततक्षुष्वित्यस्यानुवृत्तेः। स्तुत्स्तोमयो । ननु गोस्तोममित्यस्य षाकत्वात्कथम्पूर्वपदादित्यनेन सिद्धिरत आह। पूर्वम्पदमिति। तदुक्तभाष्ये। स्तुत्स्तोमयोश्छन्दसि वचनमनर्थकम्। किङ्कारणम्। पूर्वपदादिति सिद्धत्वादिति। पूर्वपदमात्रस्येति। पूर्वोक्तभाष्यादत्र पूर्वभूतपदमात्रस्य ग्रहणमिति भाव। सुञ । उक्तार्थकम्पूर्वपदादित्यनुवर्त्तते। निपातस्य ग्रहणमिति। न तु धातोरिति शेष"। सनोतेरन.। छन्दसीति वर्त्तते। सनोतेरन इति समानाधिकरणे षष्ठी नस्येत इति पूर्वपदस्य विशेषणमिण्कोरित्यधिकारात्। नियमार्थमिति। अनंकारान्तस्यैवेति नियमार्थमित्यर्थः। एवः यस्य सनोति.,गवाग्रस्य पलसमूकाराभावेनैवेति नियमः । अत एव भाष्ये सनोतेरन इति वचनमनर्थकम्। पूर्वपदादित्येव सिद्धत्वादित्याशङ्क्य नियमार्थमिदं वक्तव्यमिति गवकमादिषु नाभूदिति नियमस्यावश्यकत्वमुक्तम्। परमादिषु असत्वात्सिद्धमिति कृष्ठिम

गोसनिमित्यस्य सिद्धिरुक्ता। केचित् भाष्यानुसारिण । अण्यन्त इति। प्रकृति ग्रहणे ण्यधिकस्य ग्रहणमिति नास्तीति भाव । तदा गय । ण्यन्तस्य व्यावर्त्य स्य यत्प्रदर्शनं तदाशय । अन्य इति। एतदप्युक्तभाष्ये। अथ वा अयमस्याण्य न्त । सिसनिषतेरप्रत्यय सिसनीरिति। नियमप्रवृत्तिरिति। सामान्यत प्रवृ त्तिर्नियमस्य दर्शिता। सह्वे इत। छन्दसीति वर्त्तत इति। सुतस्सोमयोरित्यत इत्यादि । उभयत्र संहिताधिकारस्य फलमाह। अवग्रह इति। मनोरमेति। न हि वृत्तीत्यनेन प्रतिपदोक्तत्वाद्दीर्घे सिद्धेऽन्येषामपीत्यस्य प्रवृत्तिस्वीकारो निष्फल इत्यनेन ध्वनितम् । निव्यभिव्य । सुनोत्यादिग्रहणानर्थक्याह। एष्य इति। सुनोत्यादेरिति । एतस्य लाभप्रकारमाह। प्रकरणमापूतस्येति। छन्द स्यदवग्रहात्। नोण इत्यनुवर्त्तते। अवग्रहादित्यत्रार्थं भावच्। नन्वेवमवग्र हेऽपि णत्व स्यादत आह। अवग्रहविषयत्वस्येति। चस्त्वर्थे। तेन संहिताधि कारस्याबाध सिद्ध । अवग्रहविषयत्वमुपपादयति। यदकाले चेति। अत एव। अवग्रहविषय एव णत्वप्रवृत्तिस्वीकारादेव। नस धातुस्थो। निमित्तात्। रेफ षकाररूपात्। तेन। सुञोऽनुकरणस्योकारेण। नसशब्दे विशेषमाह। नसि तोति। उभयो । नासिकाशब्दादेशाश्छन्दादेशयो । हरदत्त इत्यनेन सूचि तामरुचिम्प्रकाशयति। उत्तरसूत्र इति। धातुस्थात्परस्योदाहरणमाह। रक्षा ण इति। इति शिवमित्यत्र शिवशब्दो मङ्गलार्थः ॥

इति श्रीवैदिकप्रकरणेऽष्टमोऽध्याय ।

अस्तीत्यनुवर्तत इति भावः। एवञ्च। उभयथेत्यस्योपादानेन कार्यस्य वैकल्पिकत्वबोधनं च। सूत्ररीत्या। उभयथर्क्ष्विति सूत्ररीत्या। धातोरिति सूत्रस्य त्यागे लाघवमप्याह। सर्वविकल्पानामित्यादिना। व्यवस्थितविकल्पेनेति। विकल्पस्य व्यवस्थितत्वञ्च छान्दसत्वान्नविरुध्यति। सूत्राण्यपीति। अष्टाध्यायीनीति शेषः। कः करत्। अदितिमित्यात्परस्य विसर्गस्य सः स्यात्। उदाहरणे करित्यादीनां कृधातुप्रकृतिकत्वम्बोध्यम्। पञ्चम्याः परावध्यर्थे। अत्र परावध्यर्थ इति समानाधिकरणे सप्तम्यौ। अध्यर्थ उपरिभावः। सप्तम्येकवचनान्तत्वभ्रमनिवृत्तये आह। यासावितीति। मनुः पुत्रेभ्य इति। अत्र मनुरिति प्रथमान्तस्य तु षष्ठ्यर्थोऽस्ति। निसस्तपता। आसेवनम्पौनःपुन्यं ततोऽन्यत्र त्वर्थः। उदाहरणे निष्टप्तमित्यस्य सकृत्तप्तमित्यर्थः। लोकवेदसाधारणत्वादिति। छन्दसीत्यस्याप्रकृतत्वादन्यस्य छान्दसत्वप्रयोजकस्याभावादिति भावः। निष्टप्तं रक्ष इत्यस्य छन्दस्यदर्शनेन शास्त्रेण साधनमित्यभिप्रायेणास्य सूत्रस्य वैदिक्यां लेखनमिति केचित्। युष्मत्तत्ततक्षुः। छान्दसानामुदाहरणानान्दर्शनादस्य छान्दसत्वमित्यत्र लेशः। विशेषणमिति। व्यावर्त्तकं विशेषणमित्यर्थः। इतरयोस्तु परत्वकल्पनात्। न लौकिकस्य युष्मच्छब्दस्य। समासघटकत्वात्। यजुष्येकेषाम्। यजुःशब्दे पर इति भ्रमवारणायाह। यजुर्विषय इति। न तु स एवार्थः। युष्मत्तत्ततक्षुष्वित्यस्मान्नुवृत्तेः। स्तुस्तोमयोः। ननु गोष्टोममित्यस्य वाक्यत्वात्कथम्पूर्वपदादित्यनेन सिद्धिरत आह। पूर्वस्पदमिति। तदुक्तं भाष्ये। स्तुस्तोमयोश्छन्दसि वचनमनर्थकम्। किङ्कारणम्। पूर्वपदादिति सिद्धत्वादिति। पूर्वपदमात्रस्येति। पूर्वोक्तभाष्यादत्र पूर्वभूतपदमात्रस्य ग्रहणमिति भावः। सुञः। उक्तार्थकम्पूर्वपदादित्यनुवर्त्तते। निपातस्य ग्रहणमिति। न तु धातोरिति शेषः। सनोतेरनः। छन्दसीति वर्त्तते। सनोतेरन इति समानाधिकरणे षष्ठ्यौ नत्वेन इति पूर्वपदस्य विशेषणमिण्कोरित्यधिकारात्। नियमार्थमिति। अनकारान्तस्यैवेति नियमार्थमित्यर्थः। एवः परस्य सनोतेः सकारस्य षत्वमनकारान्तस्यैवेति नियमः। अत एव भाष्ये सनोतेरन इति वचनमनर्थकम्। पूर्वपदादित्येव सिद्धत्वादित्युक्त्वा नियमार्थमिदं वक्तव्यमिति सूत्रकृत्समर्थ्य गोसनिमितिनियमस्यावश्यमुक्ता। सस्नादिषु कृतत्वान्निष्फलमिति कथनेन

स्वर । मकाराकार इति । तस्य शास्त्रविशेषेण विशेषस्य विधानाभावात् । परिभाषाया लिङ्गम् । परिभाषाया उपस्थितिप्रयोजकं लिङ्गम् । स्वरविधीतीति । स्वरविधित्वमेवास्य लिङ्गमिति भाव. । अत्र को वर्जनीय इत्याकाङ्क्षायामाह । अनुदात्तस्येति । स्वराणाम्प्रवृत्तिव्यवस्थामाह । अत्रेति । परिमाणार्थमिति । यावत पदत्वभावि तावत्समुदायपरम् । अत एव । पदशब्दस्य तादृशसमुदाय-लाक्षणिकत्वादेव । न दोष इति । पदशब्दस्य तादृशसमुदायलाक्षणिकत्वाभावे धातोरिति सूत्रस्य प्रवृत्तिकाले पदसञ्ज्ञकसमुदायाभावेनास्या परिभाषाया अप्रवृत्ति. स्यात् । नन्वेवम्पदशब्दोपादानवैयर्थ्यमत आह । तद्ग्रावर्त्यमिति । भाष्यकैयटयोरिति । तत्र हि अनुदात्तादेरञो विधाने आद्युदात्तान्ङीप उपसंख्यानमिति वार्त्तिकम् । कुवलीवदरी । कुवलीवदरीशब्दौ ग्रामादित्वादाद्युदात्तौ ताभ्यां गौरादित्वान्ङीप् प्रत्यये कृते प्रकृतेराद्युदात्तत्वात्प्रत्ययस्योपसंख्यानं कर्तव्यमिति पूर्वपक्षे ङीप्प्रत्ययस्य प्रत्ययसंज्ञासन्नियोगशिष्टत्वादाद्युदात्तत्वे तदेकवाक्यतापन्नशेषनिघातेनानुदात्तादिरेवायमित्यभिप्रायेण समाधाने सिद्धान्तिना कृते पदस्यानुदात्तादित्वम् । पदस्य निघात सुप्तिङन्तञ्च पदम् ङ्याप्प्रातिपदिकाच्च प्रत्ययो विधीयते इति पूर्वपक्षिणोक्तम् । तत. सिद्धान्त्येकदेशी आह । न वा समर्थस्यानुदात्तादित्वात् । समर्थमनुदात्तादित्वेन विशेषयिष्याम इति । तत पुन पूर्वपक्षी आह नेदं शक्यम् । इह प्रसज्येत वाचो विकारस्त्वचो विकार । साविकाचस्तृतीयादिर्विभक्तिरिति विभक्त्युदात्तत्वे कृते शेष निघातेन समर्थस्य विभक्त्यन्तस्यानुदात्तादित्वात्प्राप्नोतीति भावः । इह च न स्यात्सर्वेषां विकार सार्व इति । सर्वस्य सुपीति विभक्त्यन्तस्याद्युदात्तत्वात् । तस्मान्नैव शक्यम् । न चेदेवमुपसंख्यानं कर्तव्यम् । न कर्त्तव्यम् । आचार्यप्रवृत्तिर्ज्ञापयति यावत्येव द्वितीयस्य स्वरस्य प्रादुर्भावस्तावत्येव पूर्वस्य निघात इति । यदयम्भिक्षादिषु गर्भिणीशब्दस्य पाठङ्करोति । कथङ्कृत्वा ज्ञापकम् । भिक्षादिषु गर्भिणीशब्दस्य पाठ एतत्प्रयोजनमनुदात्तादिलक्षणोऽञ्मा भूदिति यदि च पदस्य निघात गर्भशब्दोऽयमाद्युदात्तः स्त्र्यादितिरिक्तादः प्रत्यय. प्राप्नोति सतायस्यात्तस्मिन्नज्जनिते निघातः तत्र क्तेऽनुदात्तादिलक्षणस्याञः प्रसङ्ग पश्यति स्वाचार्य. यावत्येव द्वितीयस्य स्वर

॥ श्रीगणेशाय नमः ॥

## ॥ अथ स्वर प्रकरणम् ॥

सर्वप्रकरणोपकारकतया साधारणस्वरानाह । मूले अथेत्यादिना । अनुदात्तं पदमेकवर्जम् । अत्रानुदात्तशब्दोऽयं भावप्रधानः । अत एव पदपदसामानाधिकरण्यस्योपपत्तिरिति वक्ष्यते । कर्त्तव्यमित्यस्याध्याहारः । अनुप्रकृतिभूतोऽच्छब्दार्थस्य बोधकोऽनुदात्तशब्दः । पदमित्युद्देश्यम् । एवञ्च एकवर्ज्यपदमनुदात्तवाचकाभिन्नद्रव्यत्तव्यमित्यर्थः । एकवर्जमित्यस्योपपत्तिमाह । द्वितीयायाचेतीति । यत्र त्वरा प्रतीयते तत्रैव द्वितीयायाञ्चेति सूत्रेण णमुल् भवति मा अत्र प्रतीयत इति कथमत्रेन णमुलित्याशङ्कते । नन्वित्यादिना । समाधत्ते इहेति । अत एव यावत्समुदायस्य पदत्वमावितावत्समुदायस्य क्रमेणान्वाख्याने तत्तद्घटकस्य यस्य यस्योदात्तादिर्विधीयते शास्त्रेण तत्तच्छास्त्रैकवाक्यतयाऽस्य पुनः पुनः प्रवृत्तिर्भवति । पक्षान्तरमाह । यद्वेति । अस्य सूत्रस्य विभिसूत्रत्वमेकपदार्थानियमात्र सम्भवति नाप्येतत्संज्ञासूत्रम् । पदस्य समुदायात्मकत्वानुदात्तसंज्ञायामपि तस्याः संज्ञाया विध्यसरोपकारकत्वाभावादत आह । परिभाषेयमितीति । यद्यदुदात्तस्वरितविधायकं शास्त्रन्तत्तच्छास्त्रैकवाक्यतयाऽस्य प्रवृत्तौ तत्तत्सूत्रविधेयस्यावस्थानमभवतीत्यस्य नियामकत्वमुपपादनीयम् । अस्वरितत्वादिति । उत्तरत्र सम्बन्धप्रयोजकस्य स्वरितस्याभावादित्यर्थः । दीर्घविशेषरूपं यत्स्वरितत्वन्तदभावस्याऽस्तु इत्यादाह । एकवर्जमितीति । वैयर्थ्यापत्तिमुपपादयति । तत्तदिति । अधिकारत्वे सर्वैकवाक्यताया असम्भवोऽपि भवतीत्याह । किञ्चेति । एवञ्च विधिपक्षे एकपदार्थानियमे च । विधित्वपक्षे शास्त्रसामान्यस्य पहणं स्यादित्याशयेनाह । शास्त्रविहित इति । उदात्तचतुष्टयस्य त्र्यवकापत्तिमुपपादयति । तत्रेत्यादिना । ङीप् । जातिलक्षणो ङीप् । प्रत्ययस्वरः । दामसक्याभ्याभ्यात इति विपक्षे अप्रमाणानेऽहं इति सूत्रविधौऽमानऽप्रत्ययस्य

त्यर्थं । युगपद्ग्रहणेनेति । तवैचान्तस्य युगपदित्यनेन तवैप्रत्ययान्तस्यान्त उ
दात्तो गतिस्थानन्तर प्रकृत्येत्यनेन कृत्स्वरापवादभूतेनान्येन वाऽ इत्यादावुभ
योरुदात्तयोः श्रवणार्थं युगपद्ग्रहणं क्रियते यदि यत्न विनापि समावेशस्तदा
तवैप्रत्ययान्तस्यान्तोदात्तत्वे कृते तस्य गतिस्थानेन प्रकृतिस्वरे बोधिते तस्य नि
पाता आद्युदात्ता इत्यनेनाद्युदात्तत्वयोरुभयोः समावेशे सिद्धे किं युगपद्ग्रहणे
न । कृतञ्च तद्ग्रहणाभावे समावेशाभावं ज्ञापयतीति भावः । एतच्च चिनुत इ
त्यत्रान्यत्र विकरणेभ्य इति वक्ष्यमाणत्वात्तत उदात्तत्वेन वर्ज्यमानत्वमिति ।
ज्ञापकं विनापि चिनुत इत्यादौ न दोष इत्याह । वस्तुत इति । आद्युदात्तत्व
मित्यादि । आर्धे ऽपित्स्वरात्तित्स्वरस्यापीत्यनेन पित्स्वरतित्स्वरयोर्विप्रतिषेधविचारे
कार्यो ज्ञेयो इत्यत्र यदन्तादावपि कृते तत्र एकादेशे तस्य पूर्वान्तवद्भावेन ति
त्स्वरस्य परादिवद्भावेन पित्स्वरस्य च प्राप्तौ विप्रतिषेधेन तित्स्वरो भवतीत्युक्त
त्वात् विप्रतिषेधाभावेऽपि प्रथमं तित्स्वरितमिति स्वरितत्वे कृते तत एकादेश
आन्तर्यतः स्वरितानुदात्तयोः स्थाने जायमानः स्वरितो भविष्यतीत्यभिहितम् ।
तत्रादौ स्वरितत्वमेव कथञ्चित्त्वत्वादेकादेशेन भाव्यमिति परेण शङ्किते स्वराभ
क्तस्य प्राप्नुवन्विधिरनित्य इति परिभाषयैकादेशस्य शब्दान्तरप्राप्त्या स्वरितत्व
मप्यनित्यमुभयोरनित्ययोः परत्वात्स्वरितत्वमित्यभिहितेऽन्तरङ्गस्त्वाद्येकादेशोऽव
श्यं भाव्य इत्येकादेश पदस्य स्वरितत्वमिति पूर्वपक्षिणा कथिते स्वरितत्वमप्यन्त
रङ्गम्पदग्रहणम्परिमाणार्थमित्युक्तम् । एतेन पदस्य न कार्यिता । किन्तु कार्यि
त्व वर्णस्यैव स्वरितत्वे । पदस्य तु तदेव वाक्यतापन्नशेषनिघातयोर्योपलक्षक
तेति सूचितम् । द्वितीये द्विभ्यां पादन्मूर्द्धस्विव्यत्र द्वित्रिभ्यां षमूर्द्ध इति कृत
समासान्तस्य निर्देशो युक्तोऽथ वाऽकृतसमासान्तस्य युक्त इति विचारे यदा स
मासस्यान्तोदात्तत्वमित्यथ समासान्तस्तदाऽकारान्तग्रहणं यदा तूत्तरपदस्यान्
तोदात्तत्वविधानमिति पक्षस्तदा कृतेऽपि समासान्ते तस्योत्तरपदे अनन्तर्भा
वादकारान्तस्य स्वरविधिरित्यभिप्रायके कृतसमासान्तनिर्देशे समासान्तविधे
रनित्यत्वात्तस्मिन्नकृते द्विमूर्द्धा त्रिमूर्द्ध इत्यत्र स्वरो न प्राप्नोतीत्यभिप्रायात् तर्हि
नकारान्तस्य ग्रहणमिति कथिते द्विमूर्द्धस्त्रिमूर्द्ध इत्यत्र कृते समासान्ते उत्तर
पदस्य विधीयमानमन्तोदात्तत्वं प्रत्ययस्य न प्राप्नोतीति शङ्कायामुदात्तनिवृ

स्य प्रादुर्भावस्तावत्येव पूर्वस्य निघात इत्यतो भिक्षादिषु गर्भिणीशब्दम्पठति। पदग्रहणङ्किमर्थम्पदग्रहणम्परिमाणार्थम् । पदग्रहणङ्क्रियते परिमाणार्थम्। पदावधिर्यथास्यात् वाक्यस्य मा भूदनुदात्तम्पदमेकवर्जमिति भाष्ये उक्तम्। पूर्वस्य निघात इति। प्राग्व्यवस्थितस्य निघात इत्यर्थ । गर्भशब्दोऽयमिति। अर्तिगृभ्याम्भन्निति प्रत्ययस्य नित्वात्। पदग्रहणमिति। यस्य पदत्वम्भविष्यति तस्यैवैकवर्ज्जमनुदात्तं यथा स्यात्पदसमूहस्य मा भूदित्येवमर्थम्पदग्रहणमित्यर्थ इति कैयटे। एवञ्चेति । एकग्रहणस्य विधीयमानोपलक्षणत्वे चेत्यर्थ । तवैचान्तेति। तवैचान्तश्च युगपदिति सूत्रेण तवैप्रत्ययान्तस्यान्त उदात्तोऽनन्तरगतिश्च प्रकृत्या भवतीति युगपदुभयविधानेन द्वयोर्वर्जनम। एतत्सूचोपादानम्पदद्वयात्मकपदे द्वयोर्वर्जनप्रदर्शनाभिप्रायेण। इदमुपलक्षणमसमासात्मकैकपदेऽपि अन्तश्च तवैयुगपदित्यनेनाद्यन्तयोर्युगपतुदात्तत्वविधानेनोभयोर्वर्जनात् द्व्यादीनामित्यत्र।द्विपदोपादानेन द्विचिस्वराणा वर्जनमित्युक्तम तस्योदाहरणमाह। इन्द्राबृहस्पती इति। दुरदात्त इति । बृहच्छब्दोऽतिप्रत्ययान्तत्वादन्तोदात्ता वर्त्तमाने पृषम्महद्बृहदिति व्युत्पादित । पतिशब्दश्च पातेर्डतिरिति डतिप्रत्ययस्यादुरदात्तत्वादादुरदात्त । इन्द्रशब्दश्च रन्नन्तत्वादादुरदात्त । न चैवमिति । एकग्रहणस्य विधीयमानोपलक्षणत्वे दोष स्यादित्याशय । एकेनैवेति। तत्र समानशब्दे उपपदे ख्याधातोरिण्प्रत्यय धातुरदात्तश्चेति सूत्र क्र. २ स्वतयोदात्त सकारस्य समानशब्दस्यानिक एकस्मिन्नेव काले विधीयत। तस्य च प्रत्ययस्य डित्वमप्यतिदिश्यते वातेर्डित्यतो डिद्ग्रहणानुवृत्त्या। यद्यपि विधेयभेदाद्वाक्यभेदो भवति । तथापि विधेयद्वयविषयकोऽन्वावाद्यार्थबोध समूहालम्बनात्मक एक एवेत्याशय यत्र भिन्नेन सूत्रेण विधानन्तत्र पौर्वापर्यभावेन प्रवृत्त्या व्यवस्था कर्तुं शक्येति तद्भाव । यत्र विनेति। विशेषोपादान विनेत्यर्थ । एवञ्च समानस्य स चोदात्त इत्यत्र सस्य विशिष्योदात्तत्वविधानेन तस्यैव शेषो भवति । धिग्विक्रमवीरचेत्यत्र यथाऽकारादेशस्य पृथग्विधेयत्वकल्पना तद्वदिति तात्पर्यम् एवं सति यथा वर्जनस्य क्रम इदस्तथाह।अत्र यस्मिन् पद इति। एवम। सम्यासयस्याया सन्निहितमन्तरमिति स्वीकारे। उदात्तवत्प्रकृतिकाम इति तम उदात्तवत्प्रकृतिकाम इ

दात्तत्वमादौ न प्रवर्त्तते । विकरणस्वरस्य लबाधकत्वादाद्युदात्तत्पदम्भवति । एवञ्च यावत्पदत्वभावीति व्याख्याने च अस्या यथोद्दिंगत्ववादिमतन्दूषयति य स्त्विद्यादिना । अत एव । यथोद्दिंगत्वाङ्गीकारादेव अन्त इति वर्त्तत इति । कर्षात्वत इत्यत इत्यादि. । इत्यपि ज्ञापकमिति । यदन्तस्याद्युदात्तस्य यञ्ञार्थं-कृतन्तत्त्वस्यिवर्च ज्ञापकमित्यर्थ । अन्यथा । अस्या कार्यकालत्वे । तयोरचा-रितार्थ्यंनेति । तथ्यतस्त्रिस्वस्य यतो नाव इति सूत्रस्य च चारितार्थ्यंमित्यर्थ. । ननु सन्निपातपरिभाषाया: स्वरविधावप्रवृत्तेर्वक्ष्यमाणत्वान्नेदं युक्तमत आह । किञ्चेति । कर्त्तव्यङ् ञ्ञा । कण्ठा. क्लचञ्च क्रागव्दस्य नित्स्वरितमिति किमो:-दिति विधीयमानस्य यत. स्वरितत्वात्तत् परत्वेन कण्ठास्तच त्वच चलो लि त्वेन तत्र प्रथ्ध आद्युदात्त इति उदात्तपरत्वेन नोदात्तेत्यस्य प्रवृत्तिरिति भा-व । एवं रीत्या परीक्षाय यथोद्दिंगत्वस्वीकारे ज्ञापकस्य खण्डनेऽस्या. कार्य-कालतैव । विपाद्यामप्रवृत्तौ तूपायान्तरमाह । तद्धादिति । अधिककार्यार्थो-दिति । एतेनास्वरितत्वादित्यनेन न विरोध: । उत्तरसूत्रेषु मन्बन्धप्रयोजकस्य स्वरितत्वस्यास्वीकारात् यत्रैव सूत्र इति । तत्र हि परिभाषेयम् । किन्तुतस्भ-यति । कार्यकाल मन्त्रापरिभाषं यच कार्यन्लचोपस्थितमिदन्द्रष्टव्यमित्युक्तम् । अत एव । अस्या: कार्यकालत्वादेव । अन्यथा । यथोद्दिंगत्वे । उभयो: सम्भवे न । दीर्घकाशेत्यनेनादिराकारस्योदात्तत्वमन्ताचस्यूर्वमित्यनेन लकारोत्तराका रस्योदात्तत्वमित्येव सम्भवेन । विप्रतिपिद्धेति । अस्य भाष्योक्तत्वादि. । अत एव । कार्यकालत्वेऽपि स्वरितत्वप्रतिज्ञयाऽप्रवृत्तिस्वीकारादेव । अन्यत्वे प्रति-योगित्वेनाष्टमिकस्यापि ग्रहणशङ्का वारयति । अन्यत्व इति । एवञ्च सवाध्या-योतिपदमष्टमाध्यायातिरिक्तस्यैव बाधकमिति भाव । उक्तरीत्या । स्वरितत्वेन । अत एव । उक्तरीत्याऽष्टमेऽप्रवृत्तेरेव । पाष्ठादुदात्तत्वे आमन्त्रितस्य चेत्यादा-दात्तत्वे । अनेन । प्रतादात्तत्वेन । कर्यप्रवृत्तिरिति । यदि प्लुतोदात्तत्वं ना-स्यनुदात्तपदमित्यस्यैकवाक्यता स्यात्तदा जातस्यामन्त्रितादुदात्तस्य यवणञ्च स्यादिति हि तवाभिमतन्तञ्च न सम्भवति । प्लुतोदात्तत्वस्यासिद्धत्वादिति तद्वा-व । बाधकाभावादिति । पूर्वत्र परमसिद्धञ्च तु परस्मिन्पूर्वस्यासिद्धत्वमिति.प-रहृत्या पूर्वस्याद्युदात्तत्वस्य सिद्धत्वासिद्धत्ति स्यादेवेति भाव. । ध्वनितमिति ।

त्तिस्वरेणान्तोदात्तत्वमप्रत्ययस्य भविष्यतीत्यर्थः। एतेन समासोत्तरपदस्यान्तो
दात्तत्वं तदेकवाक्यतापन्नशेषनिघातेन प्रत्ययस्यानुदात्तत्वमिति ध्वनितमन्यथा
ऽनुदात्ते परे टिलोपाभावेनोदात्तनिवृत्तिस्वरस्य प्राप्तिर्न स्यात् तथाचानुदात्तत्व
स्यग्रहणस्य परिमाणार्थत्वं सत्युपपद्यत इति। तृतीये पुमानित्यस्योदात्त
स्य परमपुमानित्यत्रान्तोदात्तस्य सिध्यर्थमसुङुपदेशिवद्वचनं स्वरसिध्यर्थस्वाद्धि
रङ्गलक्षणत्वादिति वार्त्तिककृतोक्तम्। एवञ्च विभक्त्युत्पत्तेः प्रागुपदेशावस्था
यामेवासुङ् भवति अन्यथा पूर्वो धुम्सुन्निति धुम्सुमन्त पुमस्मन्दो नित्स्व
रेणाद्युदात्तस्तदवयवसकारस्य स्थाने जायमानोऽसुङादेशो यथा पुमानित्यत्र
मेसन्नवर्णो हल स्थाने जायमानत्वादनुदात्तो भवति तथापरमपुमानित्यत्रा
पि स्यादित्यत लन्तोदात्तत्वेन मकाराकारस्योदात्तत्वमत उपदेशिवद्वचनेन
समासान्तोदात्तत्वात्पश्चात्प्रवर्त्तमानात्पूर्वमेवासुङादेशः स्वीक्रियतेऽन्यथाऽपर
निमित्तकत्वेन समासान्तोदात्तत्वस्य,न्तरङ्गत्वात्सर्वनामस्थाननिमित्तकस्यासु
ङादेशस्य बहिरङ्गत्वात्पूर्वं समासान्तोदात्तत्वेन परमपुमानित्यत्र पुंशब्दोका
रस्योदात्तत्वे कृते तदनन्तरमसुङादेशेऽपि सोऽनुदात्त एव प्रसज्यतेति मध्यो
दात्तस्यदस्यसज्येत। तत्र परेणाद्युदात्तोऽसुङादेश उच्चारणीय इत्यभिप्रायेणा
द्युदात्तनिपातनङ्करिष्यते सनिपातनस्वरः समासस्वरस्य बाधको भविष्यतीत्य
भिहिते सिद्धान्तिना निपातनस्वरस्य प्रकृतिस्वरबाधकत्वापत्त्या पुमानित्यत्रा
प्यन्तोदात्तत्वापत्तिः स्यादत उपदेशिवद्भावारम्भ एव युक्त इत्यभिहितम्। यदि
पश्चात्प्रवर्त्तमानस्यविधायकवाक्ये वा नापन्नशेषनिघातेन पूर्वं प्रवर्त्तमानस्यो
दात्तत्वस्य बाधो न स्यात्तदाऽऽद्युदात्तत्वनिपातनेकवाक्यतापन्ननिघातेन बा
धनम भविष्यतीति निपातनस्वरस्य प्रकृतिस्वरबाधकत्वापत्तिरभिहिता सा वि
रुध्यतेति पदग्रहणस्य परिणार्यत्वं युक्तमेव। यावत्पदत्वं भावीति। अत्र याव
दिति कालस्य परामर्शकम्। यावत्कालपर्यन्तम्पदत्वस्यायोत्यर्थः। नन्वेवमि
न्धिवचनेऽर्धपिर्थेति छादेशस्यापिकरणेन प्रत्ययाद्युदात्तत्वं छादेशस्य भव
तीति तदेकवाक्यतापन्नशेषनिघातेनोभयोरनुदात्तयोः श्रवणं स्यादित्यत आ
दुदात्तोक्त्येत आह। किन्तु इति लिखि। इति न्यायेन। असिद्धवदत्रापि विधौ
स्वहिरङ्ग। नुवाध। इति न्यायेन। एवञ्च लुकप्रयोजकस्य वचनसत्त्वात्प्रत्ययाद्यु

सिद्धकतया परिभाषात्वमसङ्गेति भावः। तत्स्वरस्यापि। एकादेशस्वरस्यापि। तत्त्वेन। बहिरङ्गत्वेन नासिन। आन्तर्यतो जायमानैकादेशस्वरेण। स्वरितत्वेनासिद्धप्रवृत्तिरित्यत्रासिद्धत्वस्य द्विविधस्यापि ग्रहणमिति भावः। स्पष्टश्चेदमिति। तत्र हि गाङ्गेऽनूप इत्यत्राण्णन्तगाङ्गशब्दस्य सप्तम्येकवचनेनैकादेशे एकादेश उदात्तेनेत्यनेनोदात्तत्वे कृते ततो अनूपशब्दावयवाकारेण सहैङः पदान्तादतीत्येकादेशस्य पक्षे स्वरितत्वम्भवतीत्येवमर्थं स्वरितग्रहणं सूत्रकृता कृतन्तच्च न कार्यमित्यभिप्रायेण स्वरितग्रहणं शक्यमकर्तुं इत्यमनुदात्ते परत उदात्तः भवतीत्येव सिद्धम्। कथमिदानीं स्वरितो भविष्यति गाङ्गेऽनूप इति। आन्तर्येण उदात्तानुदात्तयोरेकादेशः स्वरितो भविष्यति। इदन्तर्हि प्रयोजनन्तेन वर्ज्यमानता मा भूदिति प्रतिपादितम्। अस्याय भावः। प्रकृतसूत्रे स्वरितग्रहणाभावेऽनुदात्ते पदादौ य एकादेशस्तस्याऽनेन सूत्रेण वोदात्तता विधेया यदा नोदात्तता तदोदात्तानुदात्तयोरेकादेशस्यान्तरस्यादुभयधर्मवान् स्वरितो भविष्यतीति सिद्धान्तिनोक्ते पूर्वपक्षिणोक्तमिदन्तर्हीति। य आन्तर्यात् स्वरितस्तस्य सिद्धत्वात्तदेकवाक्यतापन्नशेषनिघातेन येशब्दोऽनुदात्तः स्यात् उदात्तयर्थं यदा तु प्रकृतसूत्रे स्वरितग्रहणं क्रियते तदाऽस्य स्वरितस्यासिद्धत्वाद्वर्ज्यमानता न भवतीति। पुनः सिद्धान्ती आह। बहिरङ्गलक्षणत्वात्। असिद्धम्बहिरङ्गमन्तरङ्ग इत्येवम्भविष्यति। यथैव कन्यानूप इत्यत्र कन्याराजन्यमनुष्याणामन्त इति अन्तस्य स्वरितत्वे तत एकादेशस्य स्वरितानुदात्तयोः स्थाने जायमानस्य स्वरितत्वमान्तरतम्यात्तस्य सिद्धत्वाद्वर्ज्यमानत्वे प्राप्ते उदात्तस्वरितयोर्यणस्वरितयुक्तत्वात् प्राप्नोत्यतोऽस्य परिहारोऽसिद्धम्बहिरङ्गमन्तरङ्गलक्षण इति स एव गाङ्गेऽनूप इत्यत्रापि भविष्यतीत्यभिप्रायेण यथैव तर्हि क्रियमाणो यः स्वरितः सिद्धस्तेन वर्ज्यमानता न भवति एवमक्रियमाणेऽपि न भविष्यति तस्मादर्थः स्वरितग्रहणेन। असिद्धम्बहिरङ्गलक्षणमन्तरङ्गलक्षण इत्येव। सिद्धम् इति। स्वरित इति। सन्ध्योयस्तकाराकारः सस्वरित इत्यर्थः। न चेति। वाक्यमिति परिणामान्वयः। उदात्तस्वरितयोः। उदात्तो यकाराकारः स्वरितस्तकाराकारः एतयोः। तदस्य गृह्यते। न चेति। उदात्तमुपजीव्यस्वरितत्वे कृते उपजीव्यविरोधस्यान्याय्यत्वात्स्वरितैकवाक्यतापन्नशेषनिघातो न भविष्यतीति

तच हि प्राचामिति वचनद्विमर्थमिति विचारे एकैकग्रहणेन पर्यायार्थेन वि कल्पस्य सिद्धिमुक्त्वा एकैकग्रहणं यौगपद्येन श्रुतौ मा भूदित्येतदर्थमित्यभि धायानुदात्तम्पदमेकवर्जमिति वचनान्नास्ति यौगपद्येन सम्भव । असिद्ध श्रुत स्तस्यासिद्धत्वान्नियमो न प्राप्नोति । नैष दोष. । यद्यपीदन्तत्रासिद्ध तत्विह सिद्धम् । कथम् । कार्यकाल संज्ञापरिभाषम् यत्र कार्यन्तत्रोपस्थितन्द्रष्टव्यम् । गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचामुपस्थितमिदम्भवति अनुदात्तम्पदमेकव र्जमिति । इहापि तर्हि न प्राप्नोति । देवदत्ता३ । सिद्धाऽसिद्धावेतौ । यो हि सिद्धाविवासिद्धाविव वा तयोर्नियम इत्युक्तम् । इहानुदात्तम्पदमेकवर्जमिति व चनान्नास्ति यौगपद्येन सम्भव इत्यभिधामिकमिव गुरोरिति सूत्रं सकृदेव भवेपा पुनर्विधेयकमित्येवं वक्तुमशक्यमितदेकवाक्य ।पन्नं ऽनुदात्तमिति व चने एकशब्दोपादानेनैकस्य वर्ज्यमानताऽन्येषान्तु तस्मिन्नेव समयेऽनुदात्तत्व विधीयत इति निष्कर्षोऽस्ति तथा च कस्यैकस्य वर्ज्यमानतेति नियमाभावेन यौगपद्येन वक्तुमशक्यमित्यभिप्रायेण । ततस्तेनैकवाक्यतैव न सम्भवतीत्याश येनाह । सिद्ध श्रुत इति । अथासिद्धत्वाभिधानद्वार्यकालपक्षेऽपि स्वरितत्वप्रति ज्ञया विपाद्यान्तस्या परिभाषाया अप्रवृत्त्यभिप्रायेण तेन स्वरितत्वेनाप्रवृत्ति र्ध्वनितेति । तत परेण ययोद्देशपक्षाभिप्रायेणानेनासिद्धत्वाभिधानङ्कृतन्तत्र्चेह न सम्भवति कार्यकालपक्षाभ्युपगमादित्याशयेन नैष दोष इत्यादिना कार्यका लपक्षे प्रदर्शिते तत समाधाताऽऽह इहापि तर्हीति । देवदत्ता३ इत्यत्रामन्त्रि तादुदात्तत्वेन प्लुतोदात्तत्वसमावेशो न स्यादिति भाव । सिद्धासिद्धाविति । आमन्त्रितादुदात्तत्व सिद्ध तस्मिन् स्वपेक्षिते प्लुतोदात्तोऽसिद्ध इति निघातो न भविष्यतीत्यर्थ । प्लुतोदात्तत्वस्यासिद्धत्वात्तदेकवाक्यतापन्नस्यानुदात्तम्पदमित्य स्याप्यसिद्धत्वान्न निघात इति भाव । अत एव । कार्यकालपक्षेऽप्यसिद्ध त्वा आश्रयाश्रयैकवाक्यतया स्वरितत्वेनास्वीकारादेव । शेषनिघाताभाव मुपपादयति । कन्याशब्दो ह्येत्यादिना । अन्तोदात्त इति । अस्य तदेकवाक्यतापन्नशेषनिघातेनानूपशब्दादिरकारोऽनुदात्त इति शेष । अ नुदात्तत्वं स्यादिति । मम तु । असिद्धत्वाश्रयाश्रयैकवाक्यतया, स्वरितत्वेना स्वीकर्तुं मम तु । बहिरङ्गतया पूर्वपरोभयमापेक्षत्वेन बहिरङ्गतया। अपरनि

भाव । पूर्वपची समाधत्ते । तस्या इति । शेषनिघाती न स्यादिति । परम वाचा । अग्निमानित्यत्र शेषनिघातो न स्यादित्यर्थ । तस्मात्सन्निपातपरिभाषाया अनित्यत्वादप्रवृत्तिर्वाच्यैवेति भाव । यथा गोपायतमित्यत्रापान्तयोदात्तत्वे गोकारोऽनुदात्तो भवति तथाऽन्यत्रापि प्राप्नोतीत्यभिमानेन शङ्कते। किञ्चेति । भद्र करिष्यसीति । अत्र कृधातुरनुदात्तस्तस्योदात्तादनुदात्तस्येति स्वरितत्वम् । नचातिङ्ङतिङ इति सूत्रेण समुदायस्य निघातेन भाव्यमित्यस्य शब्दस्यानुदात्तत्वमस्त्येवेति कथमिदमाशङ्केति वाच्यम् । अग्ने भद्रं करिष्यसीति वाक्यस्य यदा यद्वृत्तमभिव्याहृतत्वात्तदा यद्वृत्तान्नित्यमिति निघातस्य प्रतिषेधात् । अस्य स्वरितस्य । ककारस्य जायमानो य उदात्तादनुदात्तस्येति स्वरितस्तस्य । तस्मिन् सतीति । अत्र यस्तच्छब्दस्तेन य पूर्वस्मात्स परामृश्यते । एतत् । इति शिष्टस्वरवलीयस्त्वमित्याकारक वाक्यम् ।अनया। अनुदात्तमिति परिभाषया । अत एव । उत्तरकालप्रवृत्तिकस्य बलवत्त्वादेव। नन्वेकमेवाद्युदात्तयोति सूत्र कथ स्वस्यैव बाधकमत आह । आद्युदात्तश्चेति । अत्र चेति । अन्यत्र विकरणेभ्य इत्यंशे । अन्यथा । तदंशाभावे । क्रियमाणस्य तामि स्वरस्येति । प्रत्ययाद्युदात्तत्वेन जायमानस्य तासेरुदात्तत्वस्य। इत्यनुवर्त्य्येति । आयादय आर्द्धधातुकेवेत्यत आर्द्धधातुक इति पदमनुवर्त्य्येत्यर्थ । तदेदमिति । आर्द्धधातुकत्वकारावस्थायामेव तासेरुदात्तत्वज्ञातत्वात्तस्तमस्वरस्स एवाधुना सति शिष्टो जात इति तस्यानुदात्तत्वसिद्धये तास्यनुदात्तेदित्यावश्यकमित्यस्य ज्ञापकत्वञ्च सम्भवतीति भाव । अस्य च । अन्यत्र विकरणेभ्य इत्यंशस्य च । अत एव । धातुस्वरापेक्षया प्राबल्यादेव । इदमपि । विकरणस्वरस्य दुर्बलत्वमिति । न दोष इति । अत्र चिन्वितित्नुगम्शब्दस्योदात्तत्व यत्र णाभावावति रूपो दोषो नेत्यर्थ । अन्तोदात्तम्पदमिति । श्रूयत इति शेष । तस्य । यद्वृत्तादित्यस्य । व्यवहितेऽपीति । पूजनात्पूजितमितिसूत्रे पूजनशब्दस्य सम्बन्धिशब्दत्वात्पूजितग्रहणे सिद्धे पुन पूजितग्रहणमनन्तरपूजितलाभार्थम्। तेनास्य प्रकरणे निर्दिष्टपरिभाषाऽव्यवधानागरहिता पञ्चमी निर्देशेऽपि प्रवृत्तन इति ज्ञायते । अतो व्यवहितेऽपि प्रवृत्ति । एतच्च तत्रैव सूत्रे मूले स्पष्टम्। तेन दारुणाध्यापक इत्यत्र समासान्तोदात्तत्वं बाध्यते । न तु दारुणशब्द-

४। आमन्त्रितस्य च। पदादित्यपादादाविति चानुवर्तते। इमर्थं इत्यत्र स्वरूपप्रवृत्तिप्रक्रियामाह। अत्र गङ्गे इति। नामन्त्रिते समानाधिकरणे। सामान्यवचनं विशेष्यम्। नन्वेवमग्ने भ्रातरित्यत्राप्यविद्यमानवद्भावनिषेधान्निघातः स्यादत आह। अग्ने भ्रातरिति। षष्ठीशब्दस्य षष्ठीविभक्तिमात्रपरत्वे गोषु स्वामिन्नित्यत्र पराङ्गवद्भावासिद्धिः स्यादत आह। अन्वे ति। आमन्त्रितनिरूपितकारकत्वप्रसिद्धेराह। आमन्त्रितार्थैकदेश इति। इष्यते इति। एतच्च समर्थानुवृत्त्या वेति द्वितीयपक्षे कण्ठोक्ततया कथ्यत इति बोध्यम्। ननु समर्थः पदविधिरिति सूत्रस्थः समर्थशब्द एकार्थीभावलक्षणसामर्थ्यविशिष्टपर इत्यत आह। सामर्थ्यं चेति। तन्निमित्तमित्यत्र तच्छब्दो बुद्धिस्थस्य परामर्शकस्तच्च क इत्याकाङ्क्षायामाह। आमन्त्रितार्थप्रतीति। तन्निमित्तमित्यत्र निमित्तत्वं कारणत्वम्। आमन्त्रितशब्दजन्यप्रतीति विशेष्यनिरूपितकारणत्वस्य मद्राणां राजन्नित्यत्र मद्रपदार्थे विरहात्। किन्त्वामन्त्रितार्थघटकार्थनिरूपितनिरूपकत्वजनकत्वान्यतररूपम्। अत एव। तन्निमित्तग्रहणादेव। षष्ठ्यामन्त्रितकारकवचने हि गोष्वित्यस्य द्वैविध्याभावेन पराङ्गवद्भावो न स्यात्। न च षष्ठीशब्दस्य तदर्थकविभक्तिपरत्वस्यागभिहितत्वात एवेष्टसिद्धिरिति वाच्यम्। तस्य मतान्तराभिप्रायकत्वात्। अत एवाहुरित्युक्तम्प्राक्। प्रकृतसूत्रभाष्ये समर्थपदानुवृत्तिर्यद्यपि न प्रदर्शिता तथापि सुब्विति किम्। करीष्यटन्। नैतदस्ति। असामर्थ्यादेव न भविष्यति। कथमसामर्थ्यम्। समानाधिकरणमसमर्थवद्भवति। इदन्तर्हि। पीडये पीड्यमानेति। इदमप्युदाहरणम्। करीष्यटन्। ननु चोक्तं समानाधिकरणमसमर्थवद्भवतीति। नैष दोषः। अथात्वभिहितमित्यं वक्तादिति साषनिकमप्यसामर्थ्यं प्रकृते नास्तीति उपक्रमे प्रतिपादितत्वान्न प्रकृतसूत्रे समर्थपदानुवृत्तिः प्रदर्शितेति भ्रमेण केचित्समर्थपदानुवृत्त्या प्रयासमने अगिता। एतेनाग्ने त्रप्रणीत्यत्रातिप्रसङ्गो नेत्युक्तं तद्वा मूलकारेणापि प्रदर्शितम्। परन्तु समर्थपदानुवृत्तिर्न भाष्यसम्मता। समर्थपदस्यैकार्थीभावात्मकसामर्थ्यविशिष्टार्थकत्वस्य व्यवस्थापनात्। पश्यनारायणमित्यत्र पराङ्गवद्भावस्य प्रवृत्तेः प्रदर्शनाच्च। न च समर्थपदाननुवृत्तौ कृतेन मित्रावरुणावुतावधाहतम्पूर्वीत्यादौ पराङ्गवद्भावापत्तिः। अत्र हि मित्रावरुणाविन्यामन्त्रितम्। कृतेनेत्येतच्च

ति। तर्हि वक्तव्यन्न वक्तव्यम्। प्रत्ययस्वरोऽत्र बाधको भविष्यति इत्यभिप्राय चुस्वरस्य स्थानान्तरप्राप्त्या प्रत्ययस्वरबाधकत्वमभविष्यतीत्यादावुक्तम्। दधीचो मधून इत्यत्रानुदात्तौ सुप्पिताविति प्रत्ययस्यानुदात्तत्वात्तत्र चुस्वरस्वरितार्थो दाधीच इत्यादावेव उदात्तत्वेन बाध्येतेति प्रत्ययस्वरस्य बाधकत्ववादिनो भावः। तत अपवादस्थानप्राप्तौ बलवानित्यभिप्रायेण स्थानान्तरप्राप्तश्चुस्वर इत्यभिहितम्। प्रत्ययस्वरस्य बाधकोऽनुदात्तौ सुप्पिताविति तद्बाधक उदात्तनिवृत्तिस्वरः उदात्तनिवृत्तिस्वरस्य चुस्वरः स यथैवोदात्तनिवृत्तिस्वरम्बाधते एवम्प्रत्ययस्वरमपि बाधेत। अत्र प्रत्ययस्वरस्येत्यादिनाऽपवादत्वं दर्शयति। प्रत्ययस्वरस्यैवोदात्तनिवृत्तिस्वरेण प्रत्यापत्तिः क्रियत इति प्रत्ययस्वरापवादश्चुस्वर इति भावः। नात्र उदात्तनिवृत्तिस्वरः प्राप्नोति किङ्कारणम्। नगोश्वन्साववर्णेति प्रतिषेधात्। नैष उदात्तनिवृत्तिस्वरस्य प्रतिषेधः कस्य तर्हि तृतीयादिस्वरस्य। यत्र तर्हि तृतीयादिस्वरो नास्ति दधीचः पश्येति। एवन्तर्हि न तृतीयादिस्वरस्य प्रतिषेधं शिष्म किन्तर्हि येन केन चिल्लक्षणेन प्राप्तस्य विभक्तिस्वरस्य प्रतिषेधम्। एवमभिहितस्थानान्तरप्राप्तत्वमस्त्येव चुस्वरस्येत्यभिप्रायेण यत्र तर्हि विभक्तिर्नास्ति दधीची इति। प्रथमसुक्तस्य यत्र तर्हीत्यस्येदन्तात्पर्यम्। यथा परत्वाच्चुस्वर उदात्तनिवृत्तिस्वरं बाधते तथा प्रत्ययस्वरमपि बाधेतेति वचनमावश्यकमिति। प्रत्याख्यानवाद्याह। एवन्तर्हीति। नगोश्वन्निति सूत्रे विभक्तिग्रहणमेवानुवर्त्तते न तृतीयादिग्रहणमिति भावः। यत्र तर्हीति। क्व चित्प्रत्ययस्वरप्रतिप्रसवरूपोदात्तनिवृत्तिस्वरप्राप्तेरस्य परत्वात्तद्बाधकत्वात्तेनैव न्यायेन प्रत्ययस्वरस्यापि बाधापत्त्या दाधीच इत्यादौ प्रतिषेधो वक्तव्य इत्यर्थः। प्रकारान्तरेणापि चौरतद्धित इति वार्त्तिकस्यावश्यकत्वमाष्य उक्तम्। सति शिष्टः स्वरोऽपि चुस्वरः। कथम्। चावित्युच्यते यत्रास्यैतद्रूपमिति। तस्मात्सुष्ठूच्यते चौरतद्धित इति। दधिमथ् अस् इति स्थितेऽन्तरङ्गानपीतिन्यायेन लुकि लुङ्निमित्तस्य च बलवत्त्वबोधनात्पूर्वं तद्धित पदादय इत्यन्तोदात्तत्वादित्यस्य प्राप्तिरिति भावः। आमन्त्रितस्य। सामन्त्रितमिति सूत्रेण विभक्त्यन्तस्यैवामन्त्रितसंज्ञाविधानादामन्त्रितविभक्त्यन्तस्येति पुनरुक्तिमस्त्वभिप्रायेणाह। आमन्त्रितस्येति। आमन्त्रितस्वरमनुदात्तपदमप्यामन्त्रितस्वरमा-

अत्र सुपो लोपो मा भूदित्यादौ प्रयोजनमभिहितम् । ततः सुबन्तकार्य एव पराङ्गवद्भावो विधीयते न तु प्रातिपदिककार्यं इत्यभिप्रायेण न वा सुबन्तैकान्तत्वात् । न वा कर्त्तव्यम् । किद्वारणम् । सुबन्तैकान्तः परादिवद्भावो भवतीत्यनेन पूर्वोक्तप्रयोजनान्यथासिद्धिरुद्भाविता । उक्तञ्च कैयटेन । सुबन्तैकान्तः सुबन्तावयवः पराङ्गवद्भावविधिपदत्वात्पराङ्गवद्भाव उच्यते । पराङ्गवदित्यत्रामन्त्रितसन्निधानात्परशब्देन गृह्यते तच्च सुबन्तमेवेति सुबन्तकार्य एव पराङ्गवद्भावोऽन्तरङ्गत्वान्न तु प्रातिपदिककार्यं इत्यर्थः । अङ्गग्रहणमिति । परवदित्युक्ते पूर्वस्य यत्कार्यं परस्य भवति तस्यातिदेशः स्यात्तदोभयोरप्युदात्तत्वमामन्त्रितस्येत्यनेन स्यात् । अङ्गशब्दोपादाने तु पूर्वस्मिन् परामन्त्रितावयवत्वातिदेशे पूर्वपरघटितसमुदायस्यैकपरिमाणकत्वबुद्धौ तादृशसमुदायाद्यावयवस्योदात्तत्वे तदेकवाक्यतापन्नशेषनिघातेनान्यस्य सर्वस्य तदवयवस्यानुदात्तत्वम्भवतीति भावः । पूर्वाङ्गवदित्यस्यामन्त्रिते परे सुबन्तं यस्य कस्य चिदङ्गवदिति भ्रमवारणायाह । सुबन्तमिति । पूर्वाङ्गवदित्यत्र पूर्वशब्दोपादानेन प्रत्यासत्त्याऽऽमन्त्रिते इत्यध्याहृतस्य पूर्वस्मिन्नित्यस्य समानाधिकरणमिति भावः । अनुवादेऽपि षष्ठीस्थाने इति परिभाषा प्रवृत्तिः सम्प्रदायसिद्धेत्याह । इदमत्रैवेति । परः । द्वितीयोऽभिशब्दः । निघातो नेति । तथा चाभिशब्दे द्वयोः स्वरितोदात्तयोः श्रवणम्भवति । स्थानिन्येव । अनुदात्त एव । यत्संस्कारपक्षमादाय शङ्कते । न च प्रगृह्यसंज्ञासूत्र इति । भाष्यकैयटरीत्येति । अमी इत्यत्र यथा पूर्वं श्रुतेऽपि प्रगृह्यसंज्ञाया यथोद्देशत्वेन त्रिपाद्यां द्विमात्रोऽयमिति बुद्ध्या प्रगृह्यसंज्ञा प्रवर्त्तते तद्वत् । अन्तरङ्गत्वात् । स्वनिमित्तसद्भावेन योग्यप्रवृत्तिकत्वात् । तथा वक्तुमशक्यत्वादिति । यणादेशात्पूर्वं स्वरितप्रवृत्तेर्वक्तुमशक्यत्वात् । भाष्ययासिद्धत्वमिति । यणादेशे कर्त्तव्ये स्वरितः सिद्धो भवतीति वचनकल्पनेनेति शेषः । अतिप्रसङ्गमेवोपपादयति । उदात्तादिति । प्रत्यग्निरिति । अत्र हि प्रतिशब्दस्य निपातत्वादाद्युदात्तत्वे शेषनिघातेनानुदात्तस्येकारस्य यणादेशात्पूर्वमुदात्तादनुदात्तस्येति स्वरितत्वापत्तौ तस्य यो यण् तमादायाग्निशब्दाद्यवयवाकारस्य स्वरितत्वापत्तिरित्यर्थः । इति निषेध इति । उदात्तो य इकारस्तस्मिन्नुन्नितस्य निषेध इत्यर्थः । अन्यथा । अनन्तरस्येति न्यायानङ्गीकारे ।

यदि पराङ्गवत्स्यात्तदा स्तनेनेत्यस्याद्युदात्तत्वापत्तिः स्यात् । समर्थपदानुवृत्तौ तु स्तनेनेत्येतन्न मित्रावरुणाविलनेन समर्थम् स्तनेनेत्यस्य मित्रावरुणाविलस्य च तस्यान्वपि यदा न शाधि इत्यर्थकप्रभागाधि इति पदद्वयेनान्वयेन परस्परमनन्वयात् । समर्थपदस्य इह शब्दाधिकारेण व्यपेक्षाविशिष्टार्थकत्वमित्यतीति वाच्यम् । षष्ठ्यामन्त्रितकारकवचनमिति परिगणनप्रदर्शं तन्निमित्तग्रहण वै त्युक्तत्वेनैव स्तनेनेत्यत्र पराङ्गवद्भावस्य वारणसम्भवात् । अत एव भाष्ये सुवन्त मात्रस्य पराङ्गवद्भावे चत्रेणाग्ने स्वागुः गंरभसा स्वामिन्ने गाग्ने मित्रधेये यत स्वेत्यत्रपराङ्गवद्भावापत्तिरित्येतदर्थपरिगणनन्तन्निमित्तग्रहणं वा कर्त्तव्यमि त्यभिधाय यित्युनरत्र ज्याय. तन्निमित्तग्रहणमेव ज्याय. इदमपि सिद्धं भवति गोपुस्वामिन् पशुपुस्वामिन् एतद्धि नैव षष्ठ्यन्तनाप्यामन्त्रितंकारकमित्युक्तं वोक्तव तु समर्थपदानुवृत्तिर्दर्शिता यदि समर्थपदानुवृत्तिरभिप्रेता स्यात्तदा भाष्यासङ्गतिः स्पष्टैव चत्रेणाग्न इत्यादौ परस्परव्यपेक्षाया विरहात् । यत्तु कैयटेन परस्परसामर्थ्याभावेऽपि क्रियाद्वारकं सामर्थ्यमस्तीत्युक्तन्तत्तु न युक्तम् । स्वार्थपर्यवसायिनामाकाङ्क्षावशात्परस्परमस्यन्वयो व्यपेक्षापदार्थत्वात् । निरूपितमिति । एवमेव तत्र निरूपितमित्यर्थः । प्रकृतसूत्रस्य स्वरग्रहणस्य प्रयोजनमाह । स्वर इत्युक्तेरिति । कूप इत्यस्य पराङ्गवद्भावे तु मित्रविन्द्ये तदरयवसकारस्य पदादित्वाभावापत्तौ सात्पदाद्योरिति षत्वस्य प्रतिषेधो न स्यात् । चा दिपदेन चर्मनमन्त्रित्यस्य परिग्रह । अत्र पराङ्गवद्भावे चर्मनमचिल्यत्रपूर्वपदात्संज्ञायामिति णत्वप्रसङ्ग । पूर्वमत पराङ्गवद्भावविधानेन पूर्वस्यैव परसम्बन्धिकार्यप्रवृत्तिफलकोऽयमतिदेश इत्यभिप्रायेणाशङ्कते न चेति । परप्रयुक्तेति । परसत्त्वप्रयोज्येत्यर्थ । तच्च परनिष्ठमाद्युदात्तत्वम् । अयमाशय । पूर्वस्य पराङ्गवद्भावात्पूर्वमद्रितस्य तत्कार्यमभवतु परावादयवनिष्ठं यत्पदादित्वन्तत्तु न निवार्यतेति । पूर्वनिष्ठकार्यप्रवृत्त्याविति । अखण्डपदावयवत्वप्रयुक्तणत्वादि प्रवृत्त्याविल्यर्थः । तद्विष्ठेति । परनिष्ठेत्यर्थः । अस्य निवृत्तावन्वयः । स मार्थ्यो यस्य पदत्वस्य तस्य निवृत्ताविति यावत् । अखण्डपदत्वाभावेनेति । परावयवे निमित्तानधिकरणनिमित्तिमत्पदावयवत्वबुद्धिस्तु भकारेऽप्यादेयेति भाव । प्रत्याख्यातचेति । तत्र हि स्वरेऽवधारणं सुवन्तोपरामन्त्रगतं तथन् ।

मधूदकमित्युदाहरणमित्यर्थः । मधुमिश्रमुदकमित्यर्थे मधुशब्दोदकशब्दयोः समासे उदकेऽङ्कयत्ते इति सूत्रेणाकेवलं मिश्यन्तद्वाचिनि समासे उदकशब्दे परे पूर्वमन्तोदात्तमित्यर्थकेन पूर्वपदान्तोदात्ते कृते ततः एकादेश मन्यचरस्य उकारस्योदात्तत्वम्भवतीति प्रथमवाक्यस्यै तदुदाहरणमुक्तम । द्वितीयवाक्यस्य तु न प्राप्तिः पूर्वस्य स्वरितत्वाभावात् । क्वावर्रामित्यत्रापि प्रथमवाक्येन नोदात्तत्वम् । न तु प्रकृतसूत्रेणेति छान्दसत्वादिति यदुक्तन्तदेतत्प्रातिशाख्य कराकतया प्रामाणिकमेव । शौनकीयप्रातिशाख्येऽपीति । उक्तमिति शेषः । प्रातिशाख्यद्वयरीत्या क्वावर्रामित्यत्र क्वाशब्दाकारस्योदात्तत्वम् प्राप्नोतीत्यतश्छान्दसत्वमेव कल्पनीयम् । लोके तु स्वरितोदात्तयोरादेश आन्तरतम्यात्स्वरित एव । तदाह लोके त्विति । युक्तमाभातीति । उक्तप्रातिशाख्यमस्वादादुदाहृत्वम् । किञ्च उदात्तस्वरितयोरिति सूत्रानन्तरं सूत्रकृता एकादेश उदात्ते नेति सूत्रस्यपठितत्वेनाचानुदात्तपदानुवृत्तिरभिमता । भाष्येऽपि स्वरितो वेति सूत्रे उदात्तानुदात्तयोरेकादेशस्तस्यैकादेश उदात्तेनोदात्त इत्येतद्भवतीत्युक्तत्वेनानुदात्तपदानुवृत्तिः सूचितैव । अयमिति । एकादेश उदात्ते नेति विधीयमान इत्यर्थः । भाष्ये स्पष्टमिति । तत्र हि वृक्षे इदम् । प्लक्षे इदमित्यादौ वाक्यसंस्कारपक्षेऽपि पूर्वोपस्थितनिमित्तके एकादेशे कृत एव । यादेश प्राप्नोति सोऽसिद्धत्वे उदात्तानुदात्तस्थानिकत्वेनोभयान्तरतम. स्वरित प्राप्तस्स मा भूदित्येवमर्थमेकादेशस्वरोऽन्तरङ्गः सिद्धो वक्तव्य । आन्तर्येत उदात्तस्योदात्तेऽयादेशो यथा स्यादित्युक्तम । प्रपचतीतीत्यादावित्ति । अत्र पचतीत्यस्य तिङ्ङतिङ इति निघाते निपातत्वादाद्युदात्ते इति शब्दे परे य एकादेशस्तत्स्थानिकोदात्तत्वस्यासिद्धत्वम्भवत्येव पदद्वयसम्बन्धिवर्णावाश्रित्य जायमानो य एकादेशस्तस्य बहिरङ्गतया तत् स्थानिकैकादेशस्यापि बहिरङ्गत्वादिति भाव । इति न प्रवर्तते । अनेन गतेर्निघातो न भवतीत्यर्थः । निघातो नेति । यदि पूर्वमेकादेशस्वर स्यात्तदा तीत्यस्योदात्तत्वे कृते पश्चात्पूर्वान्तवत्त्वेन तिङ्ङतिङ इति निघात स्यात् । प्रयाजनन्तरगणीति । यथा गाङ्गेऽनूप इत्यत्रैकारस्योदात्तस्यैकादेश उदात्तेनेत्यनेन कृतस्यानूपशब्देन य एकादेशस्तस्य स्वरितो वेत्यनेन स्वरितत्वम्भवति विकल्पेन पक्षे मृदात्त । असिद्धत्वे आन्तरतम्यात्स्वरित

अत एव । अनन्तरस्येति न्यायाङ्गीकारादेव । पूर्वसूत्रम् । विभक्तमुदात्तयण
इति सूत्रम् । एतदनुवर्त्तमानप्रकृतिभूतत्वादृशानुपूर्वीकशब्दपरम् । स्वरितश
ब्दस्यार्थे तद्विशेषणम् स्वघटितसूत्रनिष्पाद्यत्वं षष्ठ्यर्थः । लाघवेनाह । यद्वेति ।
स्वरविधाविति । स्वरोद्देश्यके विधावित्यर्थः । एवम् । स्वरितग्रहणाभावे । त्य
शब्दाकारस्य स्वरितत्वमुपपादयति । तत्र हीत्यादिना । स्थानिवद्भावादिति ।
पञ्चमीसमासेनेत्यादि । तन्निषेधात् । स्थानिवद्भावनिषेधात् । एतेन । उक्तरी
त्या स्थानिवद्भावनिषेधेन । प्रतिपदोक्तस्यैवेति । भाष्ये सौत्रपदानामेव ल्लोपो
ऽपि प्रकृत इति रीत्या तेषामेव योजनया तादृशवचनस्य व्युत्पादनेन सूत्रप
ठिततादृशशब्देन यो निषेधस्तस्यैवेत्यर्थः । अनुदात्तमिति । अनुदात्तं सर्वम
पादादावित्यधिकारादनुदात्तमित्यर्थः । अनुदात्तः । आन्तरतम्यादिति शेषः ।
वृत्ताविति । वृत्तिग्रन्थ इत्यर्थः । अभिव्यक्तेरिति । अत्र हि स्वरितोदात्तस्था
निकस्यैकादेशस्योदात्तस्य श्रुतिः प्रामाणिकीति भावः । आहुरित्यस्वरसबीज
मप्रकटयन् सिद्धान्तमाह । वस्तुत इत्यादिना । भाष्यादितोऽपीत्यपिना वृत्ति
परिग्रहः । स्वरितान्तेन । यत्प्रत्ययान्तत्वेन स्वरितत्वस्य तत्र सत्त्वात् । उदात्त
स्य । निपातत्वादुदात्तस्य । इत्युक्तमिति । यदि प्रकृतसूत्रेऽनुदात्तस्येत्यस्यानुवृ
त्तिर्नाभिप्रेता स्यात्तदाऽनेनैव प्रथममुदात्तो भविष्यतीति स्वरिताभावेन तत्सू
त्रस्य प्राप्तिरेव न स्यात्तदनुवृत्तौ तु स्वरितोदात्तयोरेकादेशस्य नानेनोदात्तत्व
मिति आन्तरतम्यात्स्वरितत्वम् । एवमेव क्वायरमित्यत्रापि स्वरितोदात्तयोरे
कादेश आन्तरतम्यात्स्वरितो भविष्यतीति भावः । स्वोक्तार्थे प्रातिशाख्यसम्म
तिमाह । तथा चेति । अत्र उदात्तवत्येकीभावे उदात्तं सन्ध्यमक्षरमित्येकं वा
क्यम् । अनुदात्तोदये पुनः स्वरितं स्वरितोपध इति द्वितीयम् । प्रातिशाख्यस्य
प्रथमवाक्यं व्याचष्टे । यस्मिन्नित्यादिना उदात्तमित्यन्तेन । प्रातिशाख्ये स
न्ध्यमक्षरमित्युक्तमतः सन्धीयमानमक्षरमित्यर्थोऽभिप्रेतो न तु शास्त्रान्तर ए
वा सन्ध्यक्षरेति संज्ञा क्रियते तेषामिवेह ग्रहणमिति । द्वितीयं व्याचष्टे स्वरि
तोपध इति । उपधाशब्दः पूर्ववाची । उदयशब्दः परस्य वाचकः । एवञ्च यत्र
स्वरिते पूर्वस्मिन् अनुदात्ते परस्मिन् स्थिते एकादेशो भवति तत्र सन्धीयमान
मक्षरं स्वरितमेव प्रातिशाख्ये फलितम् । सिन्धुरक्षणमिति । अग्निस्थावर्णं

त्वरस्यानुदात्तस्य स्वरितत्वे प्राप्ते निषेध । विरोधमङ्गत्वाद् । एकश्रुतिदूरात् । एकवचनं मम्बु,द्धिरित्येकवचनान्तस्यैव मम्बु,द्धिसंज्ञाविधानादाह । सम्बुद्धिग्रहणमिति । एकश्रुतिशब्दस्य याच्यार्थमाह । स्वराणामिति । भेदेन । पृथक्त्वेन । स्वरिताङ्गेद इति । स्वरिते हि तस्यादित इत्यादिरुदात्तत्वमिह तु नेति विवेक । तयो । उच्चनीचयो । वचनसामर्थ्यादिति । गुरोरन्तत इति स्व,तोदात्तत्वविधानवलादित्यर्थ । तदा चोभयोरिति । यदा स्व,तोदात्तत्वन्तदोदात्ते कश्रुत्योरित्यर्थ । यज्ञकर्मण्यजप । यज्ञकर्मेत्यत्र कर्मशब्द क्रियापर इत्याशयेनाह । यज्ञक्रमे चेति । यजति नोदनेति । यज्धातुघटिता या नोदना विधिवाक्यन्तद्वाधिसङ्गमेत्यर्थ । अनत्तम । अमन्त्वलम् । ननु ममाग्न इति मन्त्रस्यैकश्रुत्या कर्मणि प्रयोगे हविरभिर्यने पठनस्य सम्प्रदायसिद्धत्वात्करणत्वेन कथमेतत्प्रत्युदाहरणमत आह । यद्यपीति । एष्विति । ममाग्न इति मन्त्रषट्कपदेष्वित्यर्थ । यैयथ्यापत्तेरिति । एवञ्च नञुच्चारणसामर्थ्याद्विकल्पस्याप्यप्रवृत्तिरिति भाव । पर्युदासे जपपर्युदासान्मन्त्रेष्वेवैषा एकश्रुति । प्रसज्यप्रतिषेधे तु तादृगनियमालाभ इति विचिन्त्य गहते । न देति । पूर्वसूत्रस्य । यज्ञकर्मणीत्यस्य । प्रसज्यप्रतिषेधे तस्य यज्ञक्रियापठितवाक्यसामान्यविषयकत्वादिति भाव । छन्दस्त्वस्य मन्त्रब्राह्मणान्यतरत्वरूपतया विकल्पस्य ब्राह्मणे चारितार्थ्यन्द्रष्टव्यम् । सामर्थ्यादिति । यज्ञे इत्येव पठनीयम् । एकश्रुति शब्दधर्मत्वाद्वाक्यत्वसामानाधिकरण्येन प्रवृत्तिसिद्धौ कर्मग्रहणमतिरिच्यमानमुद्देश्यतावच्छेदकव्यापकप्रवृत्तिकत्वलाभार्थमिति भाव । अत एव । पर्युदासवदेव मन्त्रेष्वेव यज्ञकर्मणीत्यस्य प्रवृत्तिस्वीकारादेव । अब्रवीदिति । एतेनोहितत्वमस्तीति ध्वनितम् । तद्भाष्यम् । शतपथब्राह्मणभाष्यम् । अत एव । ऊहितस्यामन्त्रतया तत्रैकश्रुत्यभावादेव । एतेन उक्तभाष्यविरोधेन । अस्य । यज्ञकर्मणीत्यस्य । अत एव । व्यवस्थितविभाषात्वस्वीकारादेव । अत एव । उक्तार्थसत्त्वादेव । अच्छन्दसि । अमन्त्रे ब्राह्मण इति यावत् । चरितार्थेनेति शेष । ऋक्षु । यत्किञ्चिदृक्षितेषु । अस्य मन्त्रावयवत्वमुपपादितम् । पूर्वसूत्रस्य चारितार्थ्यन्तु यत्र न किञ्चिदस्य स्तम्भिमन्त्रे । किं चितु विभाषा छन्दसीत्यस्मिन् सूत्रे विभाषापदानन्तरमारभ्य प्रश्नेपेणाय यन्वा योजनीय । प्रश्नेपसूचनाय वैपरीत्यं न नेष्ट इति

एव स्यात्। तथा तुदतीत्यत्र ताम्यनुदात्तेदिति शतुरनुदात्तत्वे कृते उदात्ते नशप्रत्ययाकारेण य एकादेशस्तस्यैकादेश उदात्तेनेत्यनेन जातस्य शित्वा च्छतुरनुमो नद्यजादी इत्यन्तोदात्तादित्य पस्वरो भवति। तथा तुदन्ति लिख न्तीत्यत्रैकादेशस्योदात्तस्य सिद्धत्वे सति तेन वर्ज्यमानता भवतीति। वीदमि त्यत्रानुदात्तादिपरत्वमुपपादयति। इदमशब्द इति। उदात्तेति। दिवशब्दा त्परत्वात्। व्यवस्थितविभाषात्वादिति यदुक्तन्तदुपपादयति मूले इकारेत्यादि ना। तदर्थमाह। ह्रस्व इति। अत एव। वेद एवेति नियमस्वीकारादेव। उक्त श्चेत्यनेन यदुक्तन्तच्छाकल्यस्य मतेनेत्याह। अविशेषेणेत्यादिना। स्रुचीवद्धत मिति। अत्र स्रुचि शब्दोऽन्तोदात्तस्तदवयवेकारेण सहैकादेशे स्वरित। यो जान्विन्द्रते हरी। अत्र हरीत्यत्र प्रथमयोरिति पूर्वसवर्णस्य स्वरितत्वम्। ते व न्तस्मूनवस इति। तिङ्ङतिङ इति निघाते ते शब्देन सहैकादेशस्य स्वरित त्वम्। अनुदात्तो य उकारोऽकारस्तस्य रूपम् पूर्वरूपमित्यर्थ। अत्र स्वरितत्व म्पाणिनीयेन स्वरितो वेति सूत्रेणापि सिद्ध्यति। पूर्वोदाहरणयोस्तु एकादेश उदात्तेनेत्युदात्ते प्राप्ते स्वरितत्व विशिष्य शाकल्यस्य मतेन विधीयत इत्यवि शेषेणेत्युक्तम्। यदुक्तम्पूर्वत्रेकारयोरित्यादिना तद्घटकसञ्ज्ञाना संज्ञी क इ त्याकाङ्क्षानुत्थानायाह। ह्रस्वद्वयेत्यादिना। व्यवस्थितविभाषामूस्या परिगण नाभावात्तथा त्वकथनत्र युक्तमित्यभिप्रायेणाह। वस्तुतस्त्विति। स्वरितप्रसङ्गे- नाह। उदात्तादनुदात्तस्य स्वरित। संहितायामिति वर्त्तते इति। अत्र संहि ताशब्दो न वेदपर। किन्तु पर। संनिकर्ष इति सूत्रबोध्या या तत्पर। अग्नि मीळे इत्यस्याव्यवधानेनोच्चारणेऽग्निमितीकारादुदात्तात्परस्य ईळे इतीकारस्य स्वरितत्वम्। ईडधातोर्लटि उत्तमपुरुषैकवचने तिङ्ङतिङ इति निघात। द्वयोश्चास्येति वक्ष्यमाणेन डकारस्य ळकार। गुरोर्द्व्ययविधित्वेन मकार स्यासिद्धत्वान्नोदात्तात्परत्वम्। तमीशानाम इत्यत्रेशधातो शानचि सत्य न्तोदात्त ईशानशब्दस्तस्माज्जस सुपातनुदात्तत्वेऽनेन स्वरितत्वम्। आज्जसेर सुगित्यसुगागम। नोदात्तस्वरितोदय। उदात्तादिपरमेवेति। स्वरितमिति शेष। मन्तोदात्तमिति। ये इत्यकारादुदात्तात्परस्याकारस्याऽनुदात्तस्य स्वरितत्वे प्राप्तेऽनेन निषेध। आद्युदात्त इति। कन्नन्तस्यादित्यादि। तस्मादादेरकारा

योजयन्ति अत्र विभाषा छन्दसीत्यत्र तदस्वीकारेणाच्छन्दसीत्यपि विवक्षित मत एवेत्यस्य पूर्वत्र सत्त्वेऽपि विभाषापदोपादानम् । इदमेवमतं युक्तमित्यु त्तरत्र व्यक्तीभविष्यति । अत एव । अस्य विभाषाच्छन्दसीत्वे तदपवादत्वादेवा यथा न्यातम् । यथा शास्त्रम् । सूत्रस्थमिति । कात्यायनसूत्रस्थमित्यर्थः । याज मानमन्त्राणाम् । यजमानपठ्यमानमन्त्राणाम् । कल्पसूत्रेति । कात्यायनसूत्र मित्यर्थः । धर्माधिक्यमिति । एतेन दृष्टफलत्वं सूर्यैणोच्चारणे नास्ति तथापि धर्माधिक्यकामनया एकश्रुत्योच्चारणेऽपि नजातिरिति सूचितम् । धर्माधिक्यभावानुष्ठानेन प्रसङ्गादेकान्यफलत्वेऽव्यवस्थां वारयति । वैकल्पिकेष्वादित इति । आदित इत्यत्रादिग्रहणादाक्षसमन्तात्तमिः । अन्यतरोल्लेख इति । चैश्वर्येण मन्त्रानुच्चार्येति वा एकश्रुत्या मन्त्रानुच्चार्येति वा उल्लेखः कार्यः । तद्विशिष्टेति । आधिदैवतासम्बन्धेनोर्ध्वदेशविशिष्टेत्यर्थः । अस्य भवनक्रियायामन्वयः । व्याख्यानादिति । तुल्यार्थत्वमूलकव्याख्यानादित्यर्थः । द्वावपि हि देवतासम्प्रदानस्य द्योतकौ । नचैवमतिपत्तिलाघवाय वौषडित्येव कुतो नोक्तमिति वाच्यम् । मात्रागौरवप्रसङ्गात् । ननु वौषट्शब्दादेर्व्रूहिप्रेष्येत्यनेन प्लुतोदात्तत्वं विधीयत इति कथमनेन तस्योदात्ततरत्वविधानमत आह । तत्रोकारस्येति । तदपेक्षया । पूर्वोदात्तापेक्षया । सजातीयापेक्षया प्रकर्ष इति तद्भावः । न व्यदतमाह । अन्त्ये त्विति । याज्यावाक्ये याज्यान्त इत्यनेनान्त्यस्य प्लुतविधानादादेस्तत्रैकश्रुतिर्भवति तदपेक्षयायम्प्रकर्षः । वौषट्शब्दे तु याज्यावाक्ये व्रूहिप्रेष्येत्यनेनादेः प्लुतो भवति । एकश्रुतिश्च यज्ञकर्मणीत्यनेन तस्य वाक्यस्य भवति तद्वद्वौषट्शब्दे उच्चैस्तरामित्यनेन पक्षे उदात्ततरत्वमपक्षे एकश्रुतिश्च भवति । तदेकश्रुत्यपेक्षया प्रकर्षः । भाष्यस्वरम इति । इकश्रुतिदूरादिति सूत्र भाष्यस्वरस्य इत्यर्थः । तत्र हि किमियमेकश्रुतिरुदात्ता चाहोस्विदनुदात्तेति विचारे उदात्ता । कथं ध्वायते यदयमुच्चैस्तरां वा वषट्कार इत्याह । कथं ह्यत्र ज्ञापकम् । तन्मन्त्रानिर्देशः । उच्चैरेषा उच्चैस्तरामित्येतन्नरनोल्लुन्यमुञ्जन्नकेवटेन । सोमस्याग्नेवीहीवौषडित्यत्र मन्त्रे यज्ञकर्मणीत्यनेनैकश्रुतिर्विहिता तदपेक्षया वौषट्शब्दस्योदात्ततरत्वं विधीयते सति, चैकश्रुतेरुदात्तानुरागे तदपेक्ष: प्रकर्षो युज्यत इति । यस्योदात्तस्य इति । तस्मादित उदात्तमर्द्धमादि-

धानमिति वादिमतन्निरस्यति। यच्चेति। मानाभावादिति। भाष्यानुक्तत्वेन गाहयकयमायाममानाभावादित्यर्थः। प्रत्युतमाहयो कल्पना सूत्रविहहापीत्याह। अपि,चैकेति। एवञ्चेति। अस्या एकश्रुत्यपवादत्वे च। अस्मिन्नित्येति। कन्याराजन्यमनुष्याणामन्त इत्यनेनान्त्यस्य सुरितत्वेऽनुदात्तस्य ककाराकारस्थानेम सन्नतरापत्तिरित्यर्थः। परास्तमिति। एकश्रुतिविषयता च मन्त्रोधर्मे यद्दाक्यन्तवाग्निइन्द्ये त्यत्र तु न तथात्वमिति तदुक्तमयास्तमित्यर्थः ननूदात्तसुरितयोरित्येव सिद्धे परग्रहणवैयर्थ्यमत आह। अनुदात्तानामिति। नन्वेवम्। अस्य सन्नतरस्यैकश्रुतिबाधकत्वमङ्गीकारे। अत्र पाठेनेति। शास्त्रान्ते उत्कर्षो प्रापकाभावात् परन्तु तस्यास्तत्रैव पाठे कर्तव्य इव पाठो प्रापक. परम्परमसिद्धत्वाभावस्येति भाव। एतेन। अन्यस्यत्वमिहस्य नियमेन। न निवर्तमिति। किन्त्वासंस्वितत्वादादुदात्तमेव। इयञ्चैकश्रुतिरोष्टु ताम्यत्वं धनवाक्यस्य भवति सुरितात्तूदात्त एव विधानसामर्थ्यात्।

## ॥ इति साधारणस्वरा ॥

धात्वादिसाधारण्येन जायमाना सुरा इत्यर्थः। धातुसुरस्य प्रथमतो निरूपणे सङ्गतिमाह। प्रकृतिरिति। येऽनुदात्ता एव धातवः पाणिनिना पठितास्तेष्वपि धातोरित्यन्तोदात्तत्वमस्तीत्याह। येऽप्युपदेश इति। सुपादिरिङ्सामचमिटि ताप्यनुदात्तं दित्वतो लसार्वधातुकमिति आदि मिच इत्यत आदिरिति चानुवर्तते। अन्यतरस्यामिति च। सुपान इति। चानशप्रत्ययोऽत्र। यत्तु द्विरयेते. यत इति सूनेर्भिक्षितग्रहण्यनुबन्धेन। तपाध्यायमायय: । अस्य वैकल्पिकत्वेनैतदभावे सुपानीत्यत्र धातुसुरेणादुदात्तत्वमेव भवतीति विशेषाभावादयं विधिर्नेति सुपमानचयेण हि नमानीत्यवाप्यय विधिर्नेति उमस्ताध्यपतितन्यायेन धात्ववयवत्वाद्धातुसुरेणादुदात्तत्वे कृते मध्योदात्तपदं भवति। ततः परस्य सुरितत्वमिति। परस्विदिहेचत इत्यभिधानत्र युक्तमाधानुक्तत्वादित्याह। मंतद्दाय इति। मध्यस्तानामादि। आदि. मिच इत्यत आदिरित्यस्यानुवृ त्येव सिद्धे प्रकृतसूत्रे आदिग्रहणद्गिमर्थमत आह। आदिरिति। नित्यार्थमि

दत्वात्। देवब्रह्मणो.। इदम्पूर्वमूर्धैकदेशस्य स्वरितस्य तूदात्त इत्यस्यापवादः। अत एवाह। सुब्रह्मण्येति। अत एव-अस्य वैकल्पिकत्वादेवोभयत्रामन्त्रिता द्युदात्तत्वे शेषनिघाते चोदात्तादनुदात्तस्य स्वरितः तस्यानेनानुदात्त.। ब्रह्माण इत्यस्याष्टमिकोनिघातस्तु न। आमन्त्रितम्पूर्वमविद्यमानवदिति देवा इत्यस्या-विद्यमानवद्भावे सति पदात्परत्वाभावात्। एषा च कल्पना देवा ब्रह्माण इ-त्यनयोर्वैयधिकरण्यवादिमतेन। अन्ये तु द्वावपि समानाधिकरणावेव। तन्म-ते त्रिभाषितं विशेषवचने बहुवचनमिति देवा इत्यस्य विकल्पेनाविद्यमानव-त्त्वात्पक्षे आष्टमिको निघातो भवत्येव। प्रकृतसूत्रेण स्वरितस्य निघातस्तु देवा। इत्यत्र वकारस्य नित्यः। एतदेवाभिप्रेत्य भाष्ये देवब्रह्मणोरनुदात्तत्वमेव इत्युक्तम्। स्वरितात्संहितायामनुदात्तानाम्। नन्विमीळे इत्यादीति। अत्र ईळे इत्यस्य तिङ्ङतिङ इतिनिघातेऽग्निमित्युदात्तात्परस्यैकारस्यानुदात्तस्य स्वरितत्वे ततः परस्यैवास्य ते इत्यस्याप्यनेनैकश्रुतिसिद्धिः। नन्वेवमेकवचनेन निर्देशे कर्त्तव्ये बहुवचनोपादानमनर्थकमत आह। बहुवचनमिति। अनेक स्य इति। इमं मे गङ्गे यमुने सरस्वतिशुतुद्रीत्यत्र यथा। सङ्घातः कार्यीति। समुदायः कार्यीत्यर्थः। अस्मिन्नर्थे ज्ञापकमोङ्कौभृड्गुमटेति सूत्रे व्यक्तो भविष्य-ति। अन्यथेति। फलमन्यत्र संहिताविषयविहितकार्यातिरिक्त इत्यतोऽन्यथे-त्युक्तम्। ज्ञाप्यन्तु पञ्चमीनिर्देश इत्याद्येव। से शब्दोऽनुदात्त। अनुदात्तं स-र्वमपादादावित्यधिकारात्। का वः सुम्न इति। काशब्दस्याप्रत्ययान्तत्वेन नित् स्वरितमिति स्वरितत्वम्।निर्देशितत्वादिति। अत्र ज्ञापकमग्रेवर्णितम्। अत ए-व। सत्र सूत्रा उत्कर्षादेव। उदात्तस्वरित। प्रकृतसूत्रे सन्नतरेत्युपादानाभा-विहानुदात्तापेक्षयाऽस्यैकश्रुतौ वैलक्षण्यं स्यादिति शङ्कायामाह। 'एकश्रु-तीत्यादि। न स्यादिति। पक्षद्वयैकरूप्यायैवमेव कल्पत इति भावः। सप्त-स्वरगणनेति। एकश्रुतिदूरादिति सूत्रभाष्ये कृता या सप्तस्वरगणना तस्यामि-त्यर्थः। उदात्तः। उदात्ततरः। अनुदात्तः। अनुदात्ततरः। स्वरितः। स्वरिते य उदात्तः सोऽन्येन विशिष्टः। एकश्रुतिः सप्तम इति हि तत्रोक्तम्। अनुदात्तस्य सन्निधानमिति। अनुदात्ततरविधानसिद्ध्यर्थं। एकश्रुतीति पूर्वस्मादेकश्रुतिप-क्षज्ञानमुख्योऽनन्तरं सप्त मध्यमाल्पकम्पनयाऽमेत सम्याः स्यात्सोऽनुदात्ततरश्च

आडागमस्याप्यस्य पित्वं त्वनेन पित्वातिदेशादप्रत्ययस्यापि पितः सम्भवोऽस्तीति वाच्यम्। आडुत्तमस्य पिच्चेत्यनेन यस्योत्तमस्याडिधीयते तस्यैव पित्वातिदेशः क्रियते नत्वाट एवागमिनः पित्वमतिदिश्यते तस्याडागमे विशिष्टस्यापि पिदुपदेशेन ग्रहणमभवत्येवेति प्रत्ययग्रहणे विशेषाभाव इति प्रश्नः। समाधत्ते। प्रत्ययात्पूर्वमिति। प्रत्ययात्पूर्वोऽजित्यर्थः। सङ्घातः। अभ्यस्तसङ्घः समुदाय स उदात्तो मा भूत्। प्रकृतसूत्रे पूर्वग्रहणमपि न कार्यं पितीति सप्तमीनिर्देशात्तस्मिन्निति परिभाषया प्रकृत्या पिति परेऽव्यवहितपूर्वेषां भीप्रभृतीनामभ्यस्यान्त्य इति कल्पनया सङ्घातस्य न भविष्यतीत्यभिप्रायेणाशङ्कते। न चेति। सङ्घातः कार्यीति। यत्र सङ्घातस्य कार्यप्रवृत्तियोग्यता तत्र सङ्घात एव कार्यी नावयव इत्यर्थः एवञ्च तत्रावयवस्य कार्यनिष्पादकानामलोन्त्यस्य त्वादीनामनुपस्थितिरिति भावः। अत एव। सङ्घातस्य कार्यित्वादेव। चरितार्थमिति। सङ्घातस्य कार्यित्वे हि घञ उदात्त इत्युक्ते समुदायस्योदात्तत्वं शरणायान्त इति चरितार्थमित्यर्थः। सङ्घातः कार्यीति स्वीकारे सति यथा प्रकृतसूत्रे प्रत्ययात्पूर्वमिति चरितार्थस्तथाह। यद्यप्यनेक इत्यादिना। चरितार्थमिति। बिभेतीत्यादौ प्रत्यये पिति परे यः सङ्घातस्तदवयवस्य पर्यायेणोदात्तत्वमा भूदन्त्यस्यैव यथा स्यादित्येवमर्थमप्रत्ययात्पूर्वमित्यावश्यकमिति भावः। तेन। सङ्घातः कार्यीति स्वीकारेण। अन्यथा। सङ्घातस्य कार्यित्वाभावे चादेरित्यसम्भवाभावादिति। चादेः परस्येत्यस्य प्रवृत्त्यसम्भवाभावादित्यर्थः। नन्वेवम् पूर्वोपपादितरीत्या प्रत्ययग्रहणस्यावश्यकत्वे। भीवयं इति। क्वेः भस्य भोवयंमत्र भम इत्ययंऽणिङ्दादीनामार्धं त्वेऽऽगमः। ज्ञापनार्थत्वादिति। एवञ्च प्रत्ययात्पूर्वमित्यस्याभावे पित्प्रत्ययागतस्य त्वर्थापत्तौ बिभेति जिह्रेतीत्यादौ प्रत्ययलक्षणेन सङ्घातस्य पित्प्रत्ययान्ततया पुनः पूर्वोपपादितरीत्या पर्यायः स्यादिति भावः। स्वविषये पदग्रहणोपादानस्य चारितार्थ्यमाह। प्रत्ययादितीति। इदञ्च। भीवयंः सामर्थ्यमादत्तमस्य इत्येतच्च। अत एव। निर्दिष्टपरिभाषाविषय एवेति स्वीकारादेव। पूर्वोत्तरमाह्वयाम्। पूर्वसूत्रमागितः कार्त्स्न्यं परसूत्रम्, टाप्येति चेति तयोः सूत्रयोर्घटकान्ते पाम्ययमानतया न निर्दिष्टपरिभाषाविषयत्वमस्यादा भाभ्यां भाष्ययोरिति, इति मन्त्राद्याः प्रथमादि-

ति । पूर्वस्मिन्मुपादीति सूत्रे ऽन्यतरस्यामितयेतत्सम्बद्धस्यादिरित्यस्यानुवृत्तिद र्शनादिति भावः । प्रत्ययस्वरस्य सति शिष्टत्वाद्ददातीत्यत्राभ्यस्तस्यानुदात्तत्वे प्राप्ते आद्युदात्तता सिद्धये आह । इदं सूत्रमिति । शङ्कामिकन्यायेनाह । जक्षतीत्यत्रेति । अनुदात्ते च । दधामीत्यत्र लसार्वधातुकस्याजादित्वविरहा दाद्युदात्तत्वाप्राप्ते रिदमारब्धम् । बहुव्रीहिरिति । न विद्यते उदात्तो यस्मिन्न मावनुदात्त इत्यर्थः । अत एव । बहुव्रीहिसमासाश्रयणादेव । इकारलोपे । इत्यर्थे तानेनेकारलोपे माङ उच्चारणसम्पत्तिविधाय । जर्गतीति । धातुर्मध्योदात्त मिदम । सूत्रस्य प्रयोजनमाह । चकेति । अन्तरङ्गत्वादिति । अपर निमित्तकत्वेनान्तरङ्गत्वादितार्थ । न च धातोरिति । धातोरितिसूत्रे कर्षात्व त इतातोऽन्तोदात्त इत्यनुवृत्त्याऽन्तोदात्तत्वविधायकत्वमुचितमुताद्युदात्तप्र करणे पाठत्वाऽऽद्युदात्तत्वविधायकत्वमुचितमित्येतत्तात्पर्यकं किन्धातोरन्त उदात्तो भवति आहोस्विदादिरिति विचारे आद्युदात्तत्वविधायकत्वे ऽनुदात्ते चेति न वाच्यमिति लाघवमुक्तं तत्र मङ्गच्छतेत्यर्थः । लट्‌योत्या । ददातीत्यत्रो क्तत्या । कैयटस्तु चिन्त्य इति । एव हि कैयटस्य अनुदात्ते चेत्येतदेवम्रा पकमिहान्तग्रहणाधिकारस्येति । स तु चिन्त्य । ददातीत्यत्र पर्यायेणोभयोरु दात्तत्ववारणायानुदात्ते चेत्यस्यावश्यकत्वात् । न च स्थाने द्विर्वचनेन सिद्धि । द्वि प्रयोगो द्विर्वचनमिति पक्षस्यैव सिद्धान्तितत्वात् । न च धातोरित्यस्यान्तो दात्तत्वविधायकत्वे पिबतीत्यत्र पिबादेशस्यादन्तस्यान्तोदात्तत्वापत्तिरिति वाच्यम् । पिबादेशे आद्युदात्तनिपातनस्य क्रियत इति भाष्येण समाधानात् । मीञ्चोभङ्गमद । ननु भ्यादिग्रहणमावेऽपि तिप्रत्यये परत पूर्वस्याद्युदात्तविधा यकत्वेन ददातीत्यत्रापि चेदनुदात्ते चेति सूत्रमचरितार्थमत आह । अनुदा त्ते चेतीति । स्पष्टार्थमिति । अत्र हि मध्ये फलस्या लसार्वधातुकग्रहणानुव र्त्त्या बेभीयात्मिञ्चोयादित्यादौ यङ्लुगन्तादागोर्लिङि प्रत्ययात्पूर्वस्योदात्तत्व वारणाय व्याख्यामङ्गतम् । एवं हि व्याख्याने यङ्लुको भाषाविषयत्वे युक्ते यद्युक्तस्य छन्द स्येवेत्यत्र प्रयोजनमिति छन्दसि इष्टानुविधानादेव सिद्ध मिति भावः । प्रत्ययादिति किमर्थमिति । पूर्वेष्विति इत्यत्र वाच्यम् भीप्रभृतीना मस्त्विति यथा पूर्वेव तत्प्रत्यय एव । न च विभयानीत्यत्र नोऽनुत्तमस्य

विशेषः स्पष्ट एव। सूत्रद्वये। उपोत्तमं इति। चड्यन्यतरस्यामिति सूत्रद्वये। पक्षद्वयेऽपीति। सामान्यापेक्षज्ञापकं विशेषापेक्षं चेति पक्षद्वयेऽपीत्यर्थः। मध्य इति। तिसृभ्यो जसः। सा वैकाचस्तृतीयादिर्विभक्तिरित्येतयोर्मध्य इत्यर्थः। एतयोः सूत्रयोः विभक्तिस्वरविधायकतया चतुर इत्यत्रापि तवाल्वे चतुरः शस इत्येव पूर्वसूत्रवददेत्। उपमानं सञ्ज्ञायामिति सूत्रस्थेति। उपमानशब्दः सञ्ज्ञायामाद्युदात्त इत्यर्थकं यत्सं ज्ञायामुपमानमिति सूत्रन्तद्व्याख्यानभाष्ये त्यर्थः। तत्र हि चञ्चेव चञ्चेत्यादौ ञ्नितीत्येव सिद्धे संज्ञायामुपमानमित्यस्य वैयर्थ्यमाशङ्क्यालुक्यलुकि स्वरे प्रत्ययलक्षणञ्च भवतीत्यर्थे संज्ञायामित्यस्य ज्ञापकतोक्ता माञ्नितीत्यस्य तदन्तसप्तमीत्वे न लुमता तस्मिन्निति न्यासेन निषेधाभावात्प्रत्ययलक्षणप्रवृत्त्योपपादयितुं शक्यते नान्यथेति तद्भाष्यविरोधादित्यर्थ.। एवं सतीति। तेन सर्वस्यादुदात्तत्वमेव विधीयते तत्र तदन्तविधिमस्वाभस्वाप्याद्यार्थभेदाभावेन तदन्तविधिर्न स्यादिति भावः। इष्टापत्तावाह। तथा चेति। सर्वस्तोमासिद्धिरिति। सर्वस्तोमित्यस्याद्युदात्तस्यासिद्धिरित्यर्थ.। यत्तु मस्वत्वाच्चेति। एवञ्च नौवरीणामित्यस्य सामान्यापेक्षैव युक्तेति शेषः। सर्गाचक्षाविदा इत्यादौ दोषन्तरंभाष्यविरोधमपरिहरति। न लुमतेतीति। वार्त्तिकानि। लुमतिप्रतिषेध इत्यादिवार्त्तिकानि। इतिवदिति। तस्य यथा प्रयत्नेनान्यथासिद्धिप्रदर्शनेन प्रत्याख्यानेऽपि पुनस्तथा पाठेनावश्यकता सूचिता तद्वत्। कैयटविरोधमप्युपपादयति जिनेति। उपलक्षणमिति। अनाद्युदात्तादिरित्येतस्यौवरीणां सप्तमीनान्तादन्तबोधकत्वादित्यस्यापि बोधकमित्यर्थः किञ्चिचान्यच्चेति। ञ्निनिकित्सूरा। प्रतिषेधो ग्राह्य इति। तत्र भाष्ये हि षङ्गोरविधाने लुमता लुप्ते प्रत्ययलक्षणं भवतीति वक्तव्यम्। अहर्ददातीत्यत्र रोऽसुपीति प्रत्ययलक्षणेन प्रतिषेधो मा भूदित्युक्तम्। लितीति। प्रकृतभूर्च्छीषीति सूत्र इवाभ्यस्तानामित्यतोऽभ्यस्तानामिति सम्बध्येत अनन्तरस्य पाठादत आह। अत्रेति। परत्वात्। लितीति सूत्रात्परत्वात्। अत परस्मिन्निति स्थानिद्वाव्यस्य प्राप्तिमाशङ्क्याह। स्वरदीर्घेति। आदिर्णमुल्यन्यतरस्याम्। अभ्यस्तानामिति मण्डूकगत्यात्र सम्बध्यते। तदः णमुलन्तत्वमभ्यन्ताटाह। णमुलीत्यस्येति। नातिप्रसङ्ग इति। मना व्यवधानेन णमुलोऽभ्यस्तात्परत्वा-

स्वकल्पनेन न निर्दिष्टपरिभाषाविषयत्वमिति भावः। लाघवादाह। वस्तुत इति। चतुर. अनीति सप्तम्याः सौवरीत्वेऽपि न परिभाषाविषयत्वमित्याह। चतुर इति। अत्र। सौवर्यः सप्तम्यस्तदन्तमप्तस्य इति परिभाषाविषये। सामान्यापेक्षमिति। तदन्तविधिसत्त्वासत्त्वाभ्यां स्वराश्रयकार्यिभेदो यत्र त्वेवं विधवक्ष्यमाणविशेषानपेक्षमित्यर्थः। तेन। सामान्यापेक्षत्वेन। त्रिनीत्यनेनाद्युदात्तत्वविधानेन तदन्तविधिसत्त्वेऽसत्त्वे वा कार्यित्वमादेरक्षतमेव यद्यपि तथापि तदन्तविधिर्भवतीति। न चैवमिति। त्रितोऽत्र तदन्तविधिस्वीकारे। यद्यत्र तदन्तविधिने स्यात्तदा प्रत्ययलक्षणस्य न लुमताङ्गस्येति प्रतिषेध. सम्भति तु नेति भाव.। समाधत्ते। इत्यदेति। इत्यदाविषयकमनीत्यविषय इत्यर्थः। एतदभेदः शब्दे एवेति वक्ष्यमाणानुबन्धनिमित्तशब्दार्थैकदेशस्य शब्दस्य विशिष्यत्वसिद्धिः। अत्राङ्गत्वाभावेपीति कथनम्न लुमताङ्गस्येति सूत्रेऽङ्गस्येत्यनेनाङ्गाधिकारः प्रतिनिर्दिश्यत इतिवादिनः सन्तोषाय वस्तुतस्तथा नेत्याशयेनाह। प्रत्यये परतः पूर्वकार्येति। अत एव। पूर्वोक्तस्य ज्ञापकसिद्धवचनस्य सत्त्वादेव। अत्रय इति। अभिशब्दादितश्चानञ इति ढकि सत्यचिभृग्वित्ति लुक्। क्वचिच्चतदन्तस्यान्तोदात्तत्वविधायकमेतदित्याशयेनेह दोषमङ्गावशङ्का क्वचित्त्वाद्वितस्तस्यैवान्तोदात्तत्वविधायकमेतदित्याशयेनाह। वस्तुत इति। अन्यस्य। तदव्यवहितपूर्ववर्तिन. शब्दस्य। अत एव। असतः स्थानित्वबाधादेव। अनुबन्धनिमित्त इत्यस्यानुबन्धबोधकशब्दनिमित्त इत्यर्थः। एवञ्च मिच् छन्दस्यापि चकारानुबन्धबोधकत्वेन तथात्वमस्तीत्याशयेनाह। माहिदानामित्यादाविति। अत्र माशब्दोऽटो हि शब्दस्य निघातस्य प्रतिषेधाय। पथिप्रियो मथिप्रिय इति। बहुव्रीहिसमासे बहुव्रीहौ प्रकृत्येति पूर्वपदप्रकृतिस्वरे पथिमथोः सर्वनामस्थाने इत्यनेन सर्वनामस्थानान्तपथिमथिशब्दयोरादिरुदात्त इत्यर्थकेनाद्युदात्तत्वापत्तिः सा वचनेन वार्यत इति भावः। ज्ञाप्य वचनमेव लघु कल्प्यत इत्याशयेनाह। यदि प्रागुक्तमिति। संज्ञायामुपमानमिति ज्ञापकमित्यर्थः। मध्यमस्थं विशेषमाह। केचित्त्विति। तत्प्रवृत्तिरिति। सोऽपि; सप्तम्यन्तादत्समप् तस्य इत्यस्य प्रवृत्तिरित्यर्थ.। ज्ञापकविषये कार्यिभेदमाह। शीङ्क्षोत्यर्थेति। दरिद्राधातुविषय इति। अस्य वाक्यकलेनाम्नादत्तोऽयं प्रत्यये व्यञ्जनादौ वा

ननु वद्ग्रहणाभावे तदन्तविधिः कथं विशेषाभावादत आह । घञाचिसेति । ननु प्राक् इत्यत्र ककारस्याऽविद्यमानवत्त्वेनादन्तात्परत्वमस्त्येवेत्यत आह । स्वरविधाविति । सिद्धिं श्रमानपरिभाषयेति । इदमनागमकानां सागमका आदेशा इति पक्षाभिप्रायेण । अन्यथा तु यदागमा इति परिभाषयेति बोध्यम् । इत्यर्थः स्यादिति । सामर्थ्यादिति शेषः । प्रकृतसूत्रस्यान्तशब्दस्य सार्थक्यमाह । यद्यपीत्यादिना । एवञ्च । उक्तरीत्यान्तपदसार्थक्ये च । सिद्धेरिति । अत्र हि हनश्च वध इतिसूत्रे धादन्तवधादेशोऽप्प्रत्ययस्य च विधानेनानुदात्तस्य च यस्योदात्तलोप इत्यनेन सिद्धेरित्यर्थः । गरो विष इति । गरो व्याधावुपविषे त्रिशेषे करणे गरम् । अवन्तोऽन्तोदात्त इति । गरशाचकस्योञ्छादिगणे पाठादिति शेषः । अन्यत्र । उपविषातिरिक्ते । आद्युदात्त इति । नपूर्वविषयस्येत्यनेनाद्युदात्त इत्यर्थः । करणे घञन्ता इति उञ्छादिगणे पठ्यन्त इति शेषः । आद्युदात्ता एवेति । तेषामपाठादिति शेषः । स्तोत्र इत्यस्य व्याख्यासामनीति । अध्वरेति । वर्त्मनीवर्त्मपिण्डे स्यादर्त्तनी मलिने पथि इति कोशात् । अन्तोदात्त इति । अनिप्रत्ययान्ततयान्तोदात्त इत्यर्थः । अन्यत्र । अभ्रातिरिक्ते । दरसोदं दरो मेघं दरः साहमगर्तयोः । कन्दरे तु दरीमाहुरीपदर्थे दरोऽव्ययम् । चतुरः शसि । शस इत्येवेति । तिसृभ्यो जस इत्यस्य पठान्तस्योपक्रमादिष्टापि पट्रैय निर्देश उचित इति भावः । सकाराकारस्येति । स्वरविधौ व्यञ्जनमविद्यमानवदिति सकाररेफयोरविद्यमानवत्त्वात्सकारकारस्य प्राप्तिः । आद्युदात्तनिपातनसामर्थ्यादिति । एकश्रुत्या तिस्र पतस्त्विति इन्द्वसमासमस्त्वेनान्तोदात्ते या उच्चारयितव्ये आद्युदात्तस्य चतसृशब्दस्योच्चारणप्रयोगे तादृशस्य श्रवणार्थमिति तत्सामर्थ्यादित्यर्थः । तत्र । षड्भ्यादिषु । वार्त्तिकप्रामाण्येनेति । प्रकृतसूत्रभाष्ये शसि स्त्रियाम्प्रतिषेधः । शसि स्त्रियाम्प्रतिषेधो वक्तव्य इत्युपक्रमे चतसः पश्येत्यत्र प्रतिषेधस्य प्रयोजनमुक्त्वा आद्युदात्तनिपातनं करिष्यते स निपातनस्वरश्चतुरः शसीत्यस्य बाधको भविष्यतीत्यनेन पूर्ववार्त्तिकं खण्डितं ततो निपातनस्वरस्य प्रतिशिष्टत्वाच्चतसृणामित्यत्र यो विभक्तिस्वरः षट्त्रिचतुर्भ्यो हलादिरिति तस्यापि बाधः स्यादत उपदेशिवद्भावो वक्तव्य इति परेण ग्रन्थेन षट्त्रीति सूत्रे झलादिग्रहणस्य चतसृशब्दादन्यप्रयोजनमास्तीत्यतो

भावात् । विशेषाभावमिति । अस्य सूत्रस्याद्युदात्तविधायकतया तदन्तसप्तमीत्वे परसप्तमीत्वे वा फलतो न कश्चिद्विशेषः । एतेन । अभ्यस्तस्यापर इतिव्याख्यानेन । अनुदात्त इति । तस्य परमाम्रेडितमनुदात्तञ्चेति सर्वानुदात्तः । उभयमप्युदात्तमिति । आदिर्णमुलीत्यस्य वैकल्पिकतया यदाऽनेनाद्युदात्तता तदा लोशब्द उदात्तः । एतदभावे तु लितीत्यनेन लूशब्द उदात्त इत्यर्थः । अचः कर्तृयकि । इत्यर्थादिति । अतो मूलकृता कर्तृयकि पर इत्येव व्याख्यातमिति शेषः । पक्षे । अचः कर्तृयकीत्येतस्य प्रवृत्त्यभावपक्षे । इदञ्च । उपदेशेऽजन्तानामिति व्याख्यानञ्च । एवं उपदेशेऽजन्तानामिति व्याख्याने । ये इति । ये विभाषेति सूत्रे ये इति । पर्यायेणेति । अस्य वैकल्पिकत्वादित्यादिः । अन्यतरस्याम् । एतद्व्याख्यानभूते चङन्ते धाताविति वाक्ये धातावित्यपाठः । चङन्तस्याधातुत्वात् । अन्तशब्दस्य परसमीपपरत्वेन चङ्परे धातावित्यर्थ इति तु न धातावित्यस्याप्रकृतत्वात् । आक्षेपेण लाभस्तु न । आक्षेपे अनुपपत्तेः सह कारितया तदभावात् । फलाभावाच्च । सौवर्यं सप्तम्यस्तदन्तसप्तम्य इत्येतद्विरोधाच्च । अनुदात्त इति । एवञ्च मा हि चीकरतामित्यत्र चङ एवोत्तत्वे प्राप्ते धात्वकारस्योदात्तत्वार्थमिदं सूत्रमिति शेषः । मा हि दधदिति । विभाषा धेट्श्वयोरिति चङ् । अत्र श्लिप्रभृतीनामभावादुपोत्तमञ्चङन्तस्य नास्तीति चङ एवोदात्तत्वम्भवति । परसप्तम्यास्तु धातौ स्यात् ॥

## ॥ इति धातुस्वराः ॥

अथ प्रातिपदिकस्वरा इति । निरूप्यन्त इति शेषः । तेषु विशेषमाह । ते चेति । अत एव । प्रातिपदिकादिसंज्ञाप्रयोजकप्रत्ययबलेन स्वरप्रवृत्तिकल्पनादेव । सर्वानुदात्तत्वमेव अजन्ते चित इत्यनेन अजकारस्योदात्तत्वे तदेकवाक्यतापन्नशेषनिघातेन पूर्वस्य नयोरनुदात्तत्वे प्रत्ययशिष्टोऽकार एवोदात्तः स तु लुप्त इति सर्वानुदात्तत्वमेव । अत एव । उणादिपूणादिप्रत्यये स्वरकल्पनादेव । तथैव अस्योदात्तत्वमेव । आद्युदात्तत्वम् । अन्त्येऽकारस्योदात्तत्वांशे न सहाडोदात्तेन सहैकादेशस्यान्यतरस्यादुदात्तत्वादाद्युदात्तत्वम् । [illegible] ।

ननु वद्ग्रहणाभावे तदन्तविधिः कथं विशेष्याभावादत आह । धन्वाचिनेति ।
ननु पाकोद्रत्यत्र ककारस्याऽविद्यमानवत्त्वेनादन्तत्वात्स्वरस्यार्थवत्त्वेत्यत आह ।
स्वरविधाविति ।॥ निर्दिश्यमानपरिभाषयेति॥ । इदसनागमकानां-सागमका
आदेशा इति पक्षाभिप्रायेण । अन्यथा तु यदागमा इति परिभाषयेति बोध्यम्।
इत्यर्थः स्यादिति । सामर्थ्यादिति शेषः । प्रकृतसूत्रस्थात्मशब्दस्य सार्थक्यमाह।
यद्यपीत्यादिना । एवञ्च । उक्तरीत्यात्मपदसार्थक्ये च । सिद्धेरिति । अत्र हि
हनश्च वध इतिसूत्रे चादन्तत्वधादेशोऽप्युप्रत्ययस्य च विधानेनानुदात्तस्य च य-
थोदात्तलोप इत्यनेन सिद्धेरित्यर्थः । गरो विष इति । गरो व्याधावुपविषे वि-
शेषे करणे गरम् । अयमन्तोऽन्तोदात्त इति । गरवाचकस्योञ्छादिगणे पाठादिति
शेषः । अन्यत्र । उपविषातिरिक्ते । आद्युदात्त इति । नपुंविषयस्येत्यनेनाद्यु-
दात्त इत्यर्थः । करणे घञन्ता इति उञ्छादिगणे पठ्यन्त इति शेषः । आद्युदा-
त्ता एवेति । तेषामपाठादिति शेषः । स्तोत्र इत्यस्य व्याख्यासामनीति । अन्य-
त्रेति । वर्त्तनीवर्त्म पिण्डे स्याद्वर्त्तनी मलिने पथि इति कोशात् । अन्तोदात्त
इति । अनिप्रत्ययान्ततयान्तोदात्त इत्यर्थः । अन्यत्र । स्वभावातिरिक्ते । चरत्रीर्ण
दरो मेघं दरः माद्रमगर्तयोः । कन्दरे तु दरीमाहुरीषदर्थे दरोऽव्ययम् । चतुरः
शसि । शस इत्येवेति । तिसृभ्यो जस इत्यस्य यद्यप्यत्रोपक्रमादिहापि पाठे-
प निर्दिश्य उचित इति भावः । तकाराकारस्येति । स्वरविधौ व्यञ्जनमविद्यमा
नवदिति नकाररेफयोरविद्यमानवत्त्वात्तकाराकारस्य प्राप्तिः । आद्युदात्त-
निपातनसामर्थ्यादिति । एकश्रुत्या तिस्रचतस्रिति इत्यसमासत्वेनान्तोदात्ते
या उच्चारयितव्ये आद्युदात्तस्य चतसृशब्दस्योच्चारणमयोगे तादृशस्य श्रवणा-
र्थमिति तत्सामर्थ्यादित्यर्थ । तत्र । षड़ादिषु । वार्त्तिकप्रामाण्येनेति । प्रकृत-
सूत्रभाष्ये शसि स्त्रियामप्रतिषेधः । शसि स्त्रियामप्रतिषेधो वक्तव्य इत्युपक्रमे
चतसः पश्येत्यत्र प्रतिषेधस्य प्रयोजनमुक्त्वा आद्युदात्तनिपातनं करिष्यते स
निपातनस्वरश्चतुरः शसीत्यस्य बाधको भविष्यतीत्यनेन पूर्ववार्त्तिकं खण्डित त-
तो निपातनस्वरस्य सतिशिष्टत्वाच्चतसृणामित्यत्र यो विभक्तिस्वरः षट्त्रिचतु-
र्भ्यो हलादिरिति तस्यापि बाधः स्यादत उपदेशिवद्भावो वक्तव्य इति परेण ग्र-
न्थेन षट्त्रीति सूत्रे झलादिग्रहणस्य चतसृशब्दात्स्वप्रयोजनमस्तीत्यतो

विभक्तिस्वरस्याबाधस्य सिद्धिरित्युक्तम् । षटसप्रकाना बहुवचनान्तया जगृश सोरस्मात्परयोर्लु ग्विधानेन च षट्संज्ञकविषये न प्रयोजनम् तिसृशब्दोऽपि न प्रयोजयति । द्विवचनैकवचने न स्तः । जस्य सर्वनामस्थानमिति प्रतिषेधात् । शसि तूदात्तयणो हल्पूर्वादित्यनेन सिद्धम् । अन्या सर्वा हलादिविभक्तय । चतु शब्दस्यापि न प्रयोजयति । असर्वनामस्थानमिति वचनाज्जसि न भवित व्यम् शसि तु चतुर शसीत्यनेन भवितव्यमिति चतस्शब्दादेकस्माज्जसि परे विभक्तिस्वरस्याप्रवृत्तये हलादिग्रहणमित्यभिहितम् । यदि गौणे हलादिग्रहण स्य चारितार्थ्य स्यात्तदा विभक्तिस्वरभावश्च हलादिग्रहणादिति वार्त्तिकविरो ध स्पष्ट एवेति । अत्राहुरित्यनेन सूचितामरुचिं स्वयमेवाह । तन्त्विति । तिसृ भ्यो जस इति सूत्रे भाष्ये जस इत्यस्य तिसृका इति प्रयोजनमादावभिहित न्ततो नित्स्वरेणात्र बाधो भविष्यतीत्याशयेन जसग्रहणमनर्थकमन्यथाभावा दिति वार्त्तिककृतोक्तम् । शसि उदात्तयणो हल्पूर्वादित्यनेन सिद्धमन्याविभ क्तया हलादयस्तासु षटत्रिचतुर्भ्यो हलादिर्झल्युपोत्तममित्याभ्या भवितव्यमिति तदाशय ।अनेन प्रकारेण जसग्रहणा ... ये वार्त्तिककृता प्रतिपादिते उपसमस्ता र्थमेके ङसा ग्रहणमिच्छन्ति । अतितिसृ । अतितिसृ इति भाष्यकारेणोक्तम् । अत्र द्विवचने एव जसग्रहणाभावेऽतिप्रसङ्गापादने तात्पर्यम् । जसि त्विष्यत एव तिसृभ्यो जस इति प्रसङ्गोऽवारितमेतत् । एवम्प्रकारेण वार्त्तिक यथा ख ण्डितस्तथा चतुर शसीतिसूत्रेऽपि षटत्रीति सूत्रस्थहलादिग्रहणस्योत्तरीत्या विभक्तिस्वरा बाधकत्वे ज्ञापकता वार्त्तिककृताऽभिहिता सतोऽपि भाष्यकृता चतस पर्य्येत्यत्र नैर वा पुन शसि स्वर प्राप्नोति । यणादेशे शस पूर्व उदा त्ताभावो नास्तीति शत्वे त्यनेन वार्त्तिककारमतङ्खण्डितम् । ऋकारस्य यणा देशे तस्य स्थानिवद्भावेन व्यवधानान्न तकाराकारस्य प्राप्ति स्वरविधौ स्थानि वत्त्वाभावेन न ऋकारस्यैव प्राप्तिरित्याशय । स्वरविधिष्वितीति स्थानिवत्त्व निषेधस्तु नास्ति । स्वरदीर्घयलोपेषु लोपाजादेशस्यैव स्थानिवत्त्वनिषेध इति नियमात् । वार्त्तिककृत्खण्डनपरभाष्याभिप्रायमाह । तस्यादित्तीति । उक्तभाष्यप्र घट्टकतोयापसङ्गति तस्मान्नोण इति । झल्युपोत्तमम् । षपञ्चाट इति । येन नाप्राप्तन्यायेनत्यादि । चापडगिरिति समुदायेऽप्युपोत्तमत्वयोरस्त्वं वति च

थमुपोत्तमग्रहणस्य प्रत्युदाहरणमिति ग्रहणावारणायाह । आ इति भिन्नम्पद मिति। सर्वस्य सुपि। सर्वशब्दस्य स्वाङ्गशिटामदन्तानामित्याद्युदात्तत्व सिद्ध मेवेत्याशङ्कायामाह। सर्वशब्दस्येति। एवञ्च सुपीत्यस्य तदन्तसप्तमीत्वेन प्र त्ययलक्षणेनाद्युदात्तस्य श्रवणमस्त्येव । ननु ह्यसुकप्रयोगेऽत्यन्तस्वार्थिकस्य प्र योगस्तस्य तु सुवुत्पत्तेः प्रागेवोत्पत्तिरत आह ।, अत्यन्त इत्यादि सुपीत्युक्तं. फलमिति । यदि सुपीत्युच्यते तदा सुबन्तस्याद्युदात्तत्वमप्रकृतेस्त्वनुदात्तादि- त्वमिति व्यवस्था सिध्यतीति भाव । अन्तोदात्त एवेति। चित मप्रकृतेर्वहुक अर्थमिति वचनात्। ञ्नित्यादिर्नित्यम्। अत्रादिपदमन्त्यपदासम्बन्धबोधनाय। तद्धि यञि च सेटीतिपूर्वसूत्रे स्वाम्बव्यम्बव्यन्तपदार्थकमभूत् । नन्वेव मति तत्त्वस्वझान्यतरस्यामित्यस्य निवृत्ति सिद्धैवेति नित्यमिति व्यर्थमिति चेन्न । स्पष्टार्थत्वात्। सन्नन्तस्य विधीयमाना धातुसञ्ज्ञा सनोमित्यस्वेत्युभयमपि पर- स्परपरिहारेणाचरितार्थमित्याशयेनाशङ्कते। जुगुप्सेत्यादावित्यना। नित्स्वरस्य चारितार्थ्यन्तु द्वितीयस्तृतीयोभाग इत्यादो। सति शिष्टस्यापीति। धातुस्व- स्येति शेष।पथिमथो।अन्तोदात्तावितिफिट्स्वरेणैतावन्तोदात्तावित्यर्थ । अत एवाह। अस्येति। अस्य। पथिमथो सर्वनामस्थान इति सूत्रस्य। प्रकृतसूत्रा सत्त्वेऽपि तुल्यार्थत्वस्य परत्वात्त न बाधाचेत्यपि वाध्यम्। क्षयो निवासे। नि वासे वाच्ये सति क्षयशब्द आद्युदात्त स्यात्। इति घ इति। निवास इत्यथा प्येवम्। तेनैव। पुंसि सञ्ज्ञायामित्यनेनैव । अन्यत्र। अर्थातिरिक्ते। इपादी नाच। ञ्नित्यादिरित्यत आदिरित्यनुवर्त्तते । अविहितादाद्युदात्तस्येति। अवि- हित आद्युदात्तो यस्य तस्येत्यर्थ.। पष्ठ्यर्थ इति । आदिपदार्थापेक्षया या ष- ष्ठी तदर्थ इत्यर्थ । आशित कर्त्ता। आशितशब्दस्य कर्त्तृवाचकत्वमुपपादयति। सकर्मकेति। भाष्यानुसारिमतान्तरमाह। आङ्पूर्वत्व इति। इत्यस्याप्ययेति। अपिना प्रत्ययस्वरपरिग्रह.। भाष्यसम्मतमिति । तत्र हि किन्निपात्यते। आ- शिते कर्त्तरि निपातनमुपधादीर्घत्वमाद्युदात्तत्वञ्च। आशित इति क कर्त्तरि निपात्यते। अशितवान् आशित । आद्युदात्तत्वमनिपात्यमधिकारात्सिद्धम्। उपधादीर्घत्वमनिपात्यम्। आङ्पूर्वस्य प्रयोग इति प्रतिपादितम्। रिक्ते विभाषा। रिक्तशब्दावयवस्यैवाय स्वरो विहितो न तु तस्मिन् परेऽन्यस्येत्याशये

•

नाह। पूर्वौतरेति। प्रागित: कार्त्ता जुष्टार्पिते इत्युभयत्रोपात्तशब्दावयवस्यैव कार्यित्वे नाद्यच इत्यादित्यर्थ:। सप्तम्यु।यपत्तये प्राह । विद्यमान इति। पञ्चमे सप्तमीत्यपि वक्तुं शक्यम्। पञ्च इति। छन्दसीति शेष:। नित्यमान्ते। पूर्वं सूत्रस्य ब्राह्मणे विकल्पविधायकता द्रष्टव्या। सूत्रविरोधात्। नित्यमन्त्र इति सूत्रविरोधात्। यथा सन्नाम्नप्रकृतिप्रत्ययो: प्राप्तं वारयति। योगविभाग इति। विभक्तेरुदात्ते प्राप्ते इति । युष्मच्छब्दस्य मदिक्प्रत्ययान्ततया तदादेशस्यान्तरतम्यादन्तोदात्तस्य तव शब्दस्यैकादेश उदात्तेनेत्यनेनोदात्ते प्राप्ते इत्यर्थ:। पर्युदासैकवाक्यतयाऽर्थमाह । नोमित्यादित्रिल इति । हल्स्वरप्राप्ताविति। हल: स्वरप्राप्तावित्यर्थ:। हल. स्वरप्राप्तिमुपपादयति। हलादावादेरिति। तद्विषयकेति। हलादिविषयकेत्यर्थ:। प्रतिलक्ष्यं लक्षणभेदस्य सम्प्रदायसिद्धत्वात्। स्पष्टं दभाष्ये इति। समासस्येतिसूत्रभाष्ये इदं स्पष्टमित्यर्थ:। तत्र हि भाष्यार्यप्रवृत्तिर्ज्ञापयति भवत्येषा परिभाषेति मदर्थं यतोऽनाव इति प्रतिषेधं शास्तीत्युक्तम्। नचैवं नाव्यमित्यवाप्यादेर्नकारस्योदात्तगुणक: स्थानकृतान्तरतम्यवान् लकार: स्यात्तद्यावर्त्तकतयाऽनाव इतिप्रतिषेधस्य चारितार्थ्येन कथमस्य ज्ञापकत्वमिति वाच्यम्। दाष्कत्वमस्य सूत्रस्य प्रवृत्तौ लिङ्गम्। यदि नकारस्य स्थानेऽच्स्यात्तदा निमित्तस्य द्राष्कत्वस्य विनाश: स्यादित्युपजीव्यविरोधात्तादृश ऽज्ञ भविष्यतीति नोप्रतिषेधो व्यर्थ इत्याशयात्। अत्र केचित्। नोप्रतिषेधो हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवदित्यर्थ एव ज्ञापक इति न। किन्तु स्वरविधौ व्यञ्जनमविद्यमानवदित्यर्थ एव। स्वरविधिशब्दे च तत्सम्बन्धेन स्वरस्य विधि: स्वरविधि: स्वरेण विधि: स्वरविधिरित्यर्थयतमस्मो' विपचित:। अथ या सम्बन्धसामान्यार्थकषष्ठ्या समास एवास्तु। तत्र षष्ठ्यर्थ: सम्बन्धश्च क्रियाकर्मभावो निमित्तनिमित्तिभावश्चाभिमत इति हल्स्वरप्राप्तावित्यस्य स्वरोद्देश्यके विधावित्यस्य च लाभ:। नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रेत्यादिप्रतिषेधैकवाक्यतया चायमर्थ: कम्पाते स्वरे विधातव्ये व्यञ्जनमविद्यमानवदित्यत्र व्यञ्जनं स्वरस्थानित्वेन प्रसक्तं विवक्षितं ज्ञापकसाजात्यात्। एवञ्च नोप्रतिषेधस्य पृथिव्यादिपर्युदासस्य च या ज्ञापकताऽस्माभिरभिहिता सोत्तार्थद्वयस्य विरहायामित्याहु:। ईडवन्दवृशंसदुहाम्। दाशुषभ्यत्वादिति।

तकारस्यानुबन्धस्येहोपादानादस्ति तदनुबन्धकपरिभाषाप्राप्तिः । वेणुशब्दस्या-द्युदात्तत्वमुपपादयति । स्थोणुरित्येति । स्वरमिदप्रतिपादनमन्यकर्त्तृकमिरमि-तुमाह । यत्त्विति । प्रतिषेधादिति । तथा च नोदात्तनिवृत्तिस्वरप्राप्तिरिति भा-वः । दृश्यते इति । अत्र प्रमाणन्तु प्रकृतसूत्रभाष्ये किमियम्प्राप्ते विभाषा आ-होस्विदप्राप्ते । कथञ्च प्राप्ते कथञ्चाप्राप्ते । यदि संज्ञायामुपमानमिति नित्ये प्राप्ते अथारम्भस्ततः प्राप्तेऽन्यथात्वप्राप्ते । अप्राप्ते विभाषा । प्राप्ते नित्यो विधिः। वेणुरिव वेणुरिति प्रतिपादनमेवेति । त्यागराग । विभाषावेत्त्रित्यतो विभाषा-ग्रहणमनुवर्त्तते । एतदभावे स्वरमाह । मूले भाद्या इति । तत्र । भाद्येषु । तत्र । अस्वेषु विषु । प्रत्ययस्वरेण । प्रत्ययस्य यः स्वरः प्राप्तस्तेन । चित्व इति प्रत्ययस्येति तेनान्तोदात्तत्वम्प्राप्तमिति फलितम् । मतोः पूर्व । पूर्वशब्दार्थस्या-दिरवेतद्विशेषणत्वात्पुंल्लिङ्गेन निर्द्देशे कर्त्तव्ये नपुंसकनिर्द्देशोऽनुपपन्नोऽत आह । पूर्वमितीति । स्त्रियां संज्ञायामिति व्यधिकरणे सप्तम्यावित्याशयेन व्या-चष्टे । स्त्रियामित्यादि । खट्वावतीति । यौगिकोऽयत्र तु संज्ञा । उदुम्बराव ति-ति । देशस्य संज्ञेयम् । उदाहरणे । उदुम्बरावती इत्यत्र । नगर्याः संज्ञेयम् । गवादनी इति । अत्ति यस्यां सा अदनी । अधिकरणे ल्युट् । टिड्ढाणञिति ङीप् । गोरदनीति विग्रहः । नाद इति लोके । इत्यर्थः स्यादिति । तथा च पूर्वपद-पमध्यवर्त्तिपूर्वपरमिति बोध्यम् । अन्तोऽवत्याः । अवत्या इत्यकाकारोच्चारण-स्य प्रयोजनमाह । वत्या अन्त इति त्विति । ननु वेत्रवतीत्यादावन्तोशब्दो मादुपधाया इत्यस्याऽसिद्धत्वान्नाप्नोति कथमुदाहरणमत आह । वस्वन्त्वाश्र-येति । अथ फिट्सूत्राणीति । फिषां सूत्राणि व्याख्यायन्ते इति शेषः । एतेषां साधुत्वव्यवस्थापकत्वे प्रमाणमाह । अपाणिनीयेति । आवश्यकत्वादिति । अय-ञ्च पन्थाः पाणिनीयानामपि सम्मत एव । पाठस्तु । लघावन्त इति प्राप्त इति कथनमेकादेशटापा सह यावत्र जातस्तावत्प्राप्त्यभिप्रायेण । तस्यैवोपधित्वेऽपि स्फुटतया ततः स्त्रियाष्टाप उत्पत्तेः । बाधकबाधमार्थत्वादिति । आद्यमूषबा-धकस्यान्यस्याभावादेवैव निपातनमाश्रीयत इति भावः । अन्तरामिति । आद्युदात्तत्वस्य टाबुत्पत्तेः प्रागपि सत्त्वात्तस्यान्तरङ्गत्वमिति भावः । अपूर्व-स्य स्त्रीविषयस्य । अपूर्वस्येत्यस्यपदार्थे विशेषणमभेदेन सा च स्थानषष्ठी ।

नाह। पूर्वोत्तरेति। आश्रित कर्ता जुष्टार्पिते इत्युभयत्रोपात्तशब्दावयवस्यैव कार्यित्वे नान्यत्रादित्यर्थः । सप्तम्युपपत्तये आह । विद्यमान इति। पञ्चमी सप्तमीत्यपि वक्तुं शक्यम्। पञ्च इति। छन्दसीति शेषः । नित्यमन्त्रे। पूर्वं सूत्रस्य ब्राह्मणे विकल्पविधायकता द्रष्टव्या । सूत्रविरोधात्। नित्यमन्त्र इति सूत्रविरोधात्। यथा सङ्ख्याप्रकृतिप्रत्ययो प्राप्तं वारयति। योगविभाग इति। विभक्तेरुदात्ते प्राप्त इति । युष्मच्छब्दस्य मदिक्प्रत्ययान्ततया तदादेशस्या न्तस्तस्मादन्तोदात्तस्य तव शब्दस्यैकादेश उदात्तेनेत्यनेनोदात्ते प्राप्त इत्यर्थः। पर्युदासैकवाक्यतयाऽर्थमाह । नौभिस्वाद्विश्वित इति । हलस्वरप्राप्ताविति। हल स्वरप्राप्तावित्यर्थः । हल स्वरप्राप्तिमुपपादयति। हलादावादेरिति। तद्वि षयकेति। हलादिविषयकेत्यर्थः । प्रतिलक्ष्यं लक्षणभेदस्य सम्प्रदायसिद्धत्वात्। स्पष्टं चेदम्भाष्ये इति। समासस्येतिसूत्रभाष्ये इदं स्पष्टमित्यर्थः । तत्र हि भा- ष्यार्यप्रवृत्तिर्ज्ञापयति भवत्येषा परिभाषेति यदय यतोऽनाव इति प्रतिषेध शास्तीत्युक्तम्। नचैवं नाव्यमित्यत्राप्यादेर्नकारस्योदात्तगुणक स्यागन्तुकतान्तर तम्यवान् लकारः स्यात्तद्व्यावर्त्तकतयाऽनाव इतिप्रतिषेधस्य चारितार्थ्येन क थमस्य ज्ञापकत्वमिति वाच्यम् । ज्ञापकत्वमस्य सूत्रस्य प्रवृत्तौ लिङ्गम्। यदि मकारस्य स्थानेऽवस्यात्तदा निमित्तस्य ज्ञापकत्वस्य विनाशः स्यादित्युपजीव्य विरोधात्तादृशऽग्न भविष्यतीति नौप्रतिषेधो व्यर्थ इत्याशयात्। अत्र केचित्। नौप्रतिषेधा हलस्वरप्राप्तौ व्यञ्जनमविद्यमानवदित्यर्थ एव ज्ञापक इति न। किन्तु स्वरविधौ व्यञ्जनमविद्यमानवदित्यर्थ एव। स्वरविधिशब्दे च तत्सम्बन्धा येन स्वरस्य विधि स्वरविधि स्वरेण विधि स्वरविधिरित्यर्थयतसम्बन्धो विव क्षित । अथ या सम्बन्धसामान्यार्थकषष्ठ्या समासः एवास्तु। तत्र षष्ठ्यर्थ स म्बन्धश्च क्रियाकर्मभावो निमित्तनिमित्तिभावश्चाभिमत इति हल्स्वरप्रासावि त्यस्य स्वरोद्देश्यके विधावित्यस्य च लाभः । नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रे त्यादिप्रतिषेधैकवाक्यतया चायमर्थः कल्पते स्वरविधातव्ये व्यञ्जनमविद्य मानवदित्यर्थः व्यञ्जनं स्वरस्यानित्येन समस्त विषयेण ज्ञापकसाजात्यात्। एवञ्च नौप्रतिषेधस्य पृथिव्यादिपर्युदासस्य च या ज्ञापकताऽन्यथाभिहिता सो क्तार्थद्वयस्य विवक्षायामित्याह । ईडवन्देत्यादुक्तम् । दासुवस्यत्वादिति ।

दानेनान्तोदात्तत्वसिद्धिः प्रयोजनं तदा चित्वादेव सिद्धमतोऽन्यत्राप्य सूत्रस्य प्रवृत्तिर्वाच्येति भावः । उदाहरणान्तरमेवाह । परिवत्सरेति । अनेन । प्रकृतसूत्रेण । तदार्थमिति । सम्पूर्वाच्चिदित्यत्र चिदित्यस्योपादानं व्यर्थमित्यर्थः । पङ्क्त्यादिसूत्रेति । तेन पातिडेतिरित्यस्य व्यावृत्तिः । साधावित्यस्यार्थमाह । प्रवीण इति । वाच्य इति शेषः । स्वाङ्गाख्यायाम् । दक्षिणस्येत्यनुवर्त्तते । बाधकबाधनार्थत्वादिति । तथा च परस्याप्यनेन बाधः स्यादिति भावः । अन्तोदात्त इत्येवेति । मण्डूकप्लुत्याऽनुवर्त्तत इति शेषः । छगो मृग इति । गुणोपसर्जनद्रव्यवाच्ययम् । अत्र वर्णानान्तरेत्येव प्रवर्त्तते । पद्ये । वा नामधेयस्येत्यस्याप्रवृत्तौ । आद्युदात्तत्वमिति । वाग्रहणसामर्थ्यादिति शेषः । अन्तोदात्तत्वमेवेति । फिट्स्वरेणेति शेषः । शुक्लशब्दे प्रकारान्तरमप्याह । ऋजेन्द्रेतीत्यादि । शङ्केति । वस्तुतोऽस्वरितत्वादेव तत्सम्बन्धाभावे सिद्धे स्पष्टार्थमेवान्तशब्दोपादानमिति भावः । अङ्कोदकेतिसूत्रस्याङ्गशब्दस्य प्रयोजनमूलेऽभिहितमिति तत्परित्यज्योदकशब्दोपादानस्य प्रयोजनमाह । उदकस्येत्यादिना । वगाशब्दस्य चित इत्यन्तोदात्तत्वे सिद्धे नियमार्थमुपादानमित्याह । मूले वगाग्रहणमिति । तत् । आद्युदात्तत्वम् । आद्युदात्त एवेति । यतोऽनाव इत्यसेनेत्यादिः । ज्ञापकादित्येतत्पर्यन्तानुसरणमनुचितमित्याशयेनाह । स्त्रीविषयेति । आश्विषयाणामित्येतद्दातव्यं । नित्येत्यादिना । यवतीति । अत्र अशब्दः अवशब्दपरस्तस्मान्मतुप् । बहुलेति । आर्या बहुलेति कृत्तिकापर्यायौ । ताभ्यां स्वार्थिके के इत्वमित्याशयेनाह । आर्यिकेत्यादि । अत्र । घृतादिगणे । ज्येष्ठकनिष्ठयो । वयसीत्यस्य प्रयोजनमाह । हृदयुवेति । उदात्तग्रहणानुवृत्तेरिति । एवञ्च विल्वतिष्ययोरन्तः स्वरित उदात्तो वेति सूत्रार्थ इति भावः ।

## ॥ इति प्रथमः पादः ॥

वल्लिशब्दस्य स्वभावात् स्त्रीलिङ्गता । तस्य वाच्यार्थमाह । वल्लिशब्द इति । मरुवांसुरित्यत्र मरुशब्दो देशविशेषवाची । लघुमेङ्करिति । नैतौ नित्यस्त्रीलिङ्गौ । न च मल्लादिशब्दस्यापि वल्लिरित्येवमर्थं लिङ्गान्तराभिधायकत्वप्रसङ्ग इति वाच्यम् । प्रवृत्तिनिमित्तैक्ये सतीत्यस्यापि विवक्षितत्वा-

स्त्रीविषयस्येत्यवयवषष्ठी । लघावन्त इति । एकादेशात्प्रागस्य प्राप्तिः । स्वनि
तश्चेदमिति । तत्सूत्रभाष्ये क्यप्विधौ हृञ्ग्रहणम् । क्यप्विधौ हृञ्ग्रहणमुदात्त-
त्वमिह मा भूत् । वार्या ऋत्विज इत्यभिहितम् । तत्र कैयटः । क्यब्विधाविति ।
ईडवन्दवृशंसदुहां ण्यत इति वार्यशब्दस्याद्युदात्तविधानादेतज्ज्ञायते । तत्र
शीङिवन्दिभ्यामात्मनेपदिभ्यां साहचर्याद्वृशब्देन वृणातिर्गृह्यते । ततो भाष्ये
अस्त्वेवोपसंख्यानं कर्तव्यम् । आज्यम् । यदि क्यप्वृद्धिर्न प्राप्नोति । तस्मात्प्र
देशः । यदि ण्यत् । उपधालोपो न प्राप्नोति तस्मात्काश्यपः । ननु चोक्तं वृद्धिर्न
प्राप्नोति । आङ्पूर्वस्य प्रयोगो भविष्यतीति । अत्र तस्मात्प्रदेश इति प्रतीकमु-
पादाय ननु स्वरे भेदो भवति । क्यपि सत्याद्युदात्तम्पदम् । ण्यति सत्यन्तस्व-
रितम् । नैष दोषः । नव्विषयस्यानिसन्तस्येत्याद्युदात्तविधानादिति कैयटे-
नोक्तम् । एव व्युत्पत्तिमार्गमाश्रित्य एतदन्ते नव्विषयस्येत्यस्योपन्यासेन लक्ष्या-
नुसारेण फिट्स्वरस्य बाधकताऽन्यत्राप्यूहनीयेति ध्वनितमिति । स्वाङ्गस्या-
श्मादेरिति सूत्रमिकृप इत्यस्य यद्बाधकत्वं तद्बाधनार्थं तद्बाधकप्रदर्शनम् मूल
एव कृतमश्मादेरिति पर्युदासस्योपपादनावसरे उक्तसूत्रेऽप्रसिद्धत्वशङ्कावार-
णायाह । इदमिति । स्वाङ्गत्वापेक्षत्वादिति । न च टाप उत्पत्तौ स्त्रीत्वापेक्षा-
स्तीति साम्यमिति वाच्यम् । प्रातिपदिकसंज्ञाप्रवृत्तिकाले लिङ्गस्याप्युपस्थिति-
सत्त्वेन लिङ्गाधिक्ये तस्मिन् द्योतनीये टाबादेरुत्पत्त्या लिङ्गोपस्थितेरुभयोस्त्य-
क्तिप्राक्कालिकत्वेन तल्लिङ्गोपस्थितिकृतं टापो बहिरङ्गत्वमित्याशयात् । एतेन
स्वरस्य बहिरङ्गत्वमपनितम् । इदमल्पापेक्षमन्तरङ्गं बह्वपेक्षं बहिरङ्गमिति वा-
दिमतेन । चिन्त्यमिति । अन्ये त्वेवं चिन्तयन्ति । स्वाङ्गशिटामिति सूत्रेऽत इत्यैवं
सदन्तविधिनान्तपदार्थलाभेऽस्मिन्वचनसुदे शावच्छेदकसंज्ञाप्रवृत्तिकालिकमद-
न्तत्वं सूत्रप्रवृत्तौ नियामकमिति शिखाशब्दस्य यदा प्रातिपदिकसंज्ञा तदैव
स्वाङ्गत्वस्य प्रातिरेकादेशस्य तु टाबुत्पत्त्युत्तरम्प्राप्तिरितोऽन्तरेव स्वरस्यैकादेशा-
पेक्षयाऽन्तरङ्गत्वमिह विवक्षितमिति तन्मतेनाह । शस्यादिति । स्वयमेवोदा-
हरणमाह । प्रस्थादीति । नखन्तशब्दोपादानसामर्थ्यात्पूर्वोक्ता कल्पना चेत्त-
दा पीवाशब्दे वाशब्दस्योदात्तस्य श्यणङ्पीवायामित्यर्थ पत्तिविरोध इत्यत
आह । पीवायामिति । सिद्धमिति । तथा च मसाकरशब्द एव वेदकारशब्दोपा-

कृता पुंवद्भावातिदेशस्याशक्यत्वम्प्रतिपाद्य ई च द्विवचने इतीकारादेशस्याव-
श्यकत्वं सूत्रारम्भादिरीत्याभिहितम्। ततः स तर्हि पुंवद्भावो वक्तव्यो न व-
क्तव्यः प्रकृतम्पुंवदिति वर्त्तत इत्यनेन पुंवद्भावस्यावश्यकत्वप्रदर्शनेनैव द्विवच-
ने इत्यनेनैकारादेशविधानञ्च कार्यम्। स्वरस्य सिद्धिस्तु यस्मान्यत्र नपुंसकवन्
दृष्टन्तस्यास्त्यपि नपुंसकत्वे आद्युदात्तत्वम्भवति नपुंसकविषयतासम्बन्धस्यो-
पलक्षणभावेनाश्रयणादिति ध्वनितम्। लुगन मधुशब्दादुत्पन्नस्य लुगकारैकार
रेफाश्च वक्तव्या इत्यनेन कार्यः। यत्त्वत्र कैयटेन पुंवद्भावस्य सर्वोर्थ भृशा-
दीत्यर्थमावश्यकत्वेऽपि वाक्यभेदेन सम्बन्धः क्रियते छन्दसि नपुंसकम्पुंवदित्येकं
वाक्यम्। अस्थ्यादीनाञ्छन्दसीकारादेशो वक्तव्य इति द्वितीयं वाक्यमित्युक्त-
न्तत्तु सूत्राभिप्रायवर्णनमिति न तद्विरोधः। तृणधान्यानाञ्च द्व्यषाम्। धान्य-
वाचकस्य तिला इत्युदाहरणम्मूले। न चास्य धान्यवाचकत्वे माषे मामि ति-
लमाषाणैकादश्यां निरर्थ्येति वाच्यम्। तत्रासमस्यैकादश्यामेव वचन
वलाप्रवृत्तेः। तिला इत्यस्याद्युदात्तत्वङ्कैयटासम्मतमिति मन्यते। यस्त्विति।
इदश्चिन्त्यमिति। तिलशब्दस्य घृतादौ पाठकल्पनञ्चिन्त्यमित्यर्थः। इदञ्चिन्त्य-
मिति। द्व्यषामित्यस्य गोधूमा इत्यत्राद्युदात्तत्वाप्रवृत्त्यभिधानमप्ययोक्तश्चिन्त्यमि-
त्यर्थः। चः सङ्ख्यायाः। नान्तरेफान्तसङ्ख्यावाचकस्यादिरुदात्तः स्यात्। सङ्ख्या-
या इति स्त्रीलिङ्गनिर्देशस्सङ्ख्याशब्दार्थगतस्य स्त्रीत्वस्य नान्तरेफान्तशब्दे आ-
रोपेण। ननु पञ्चेत्यत्र नलोपे कृते स नान्तत्वन्नलोपासिद्धत्वेन तथात्वन्तु
यत्तु सगवरभित्रकार्ये कल्पादित्यत आह। पञ्चेत्यादाविति। पाणिनीये इति।
शास्त्रे, वार्त्तिक इति शेषः। एतदेवाह। अनुदात्तेत्यादिना। सप्ताष्टशब्दयो-
रन्तोदात्तार्थं वारयति। सप्ताष्टनान्ताविति। मूलानुक्तं रेफोदाहरणं स्वय-
माह। रन्त्योदाहरणमित्यादिना। समास उदाहृत इति। अस्य समासाभिरि-
त्यादिशेषः। चतुष्कपाल इति समास उदाहृत इत्यर्थः। स्वाङ्गशिटाम्। स्वा-
ङ्गशिटामदन्तानां शिटादेरादिरुदात्तः स्यात्। इदम्। स्वाङ्गेति सूत्रम्।
तेन। सादृश्यान्वयेन। सर्वादिशब्दे ऽतिप्रसङ्गं वारयति। सर्वोऽपि। तदा
दर्शनात्। अन्तोदात्तस्य दर्शनादित्यर्थः। परो सावयेति। परशब्दस्य सर्वना-
मत्वं न लौकि त्वाद्युदात्तत्वमेव भवति। ननु सर्वादिशब्दस्वरगोऽपि सर्व

त्। विषयपदोपादानसामर्थ्यमथ बीजम्। नञ्विषय। अत्र पूर्वसूत्रादिविषयपदानुवृत्त्यैव सिद्धे विषयेति व्यर्थमित्यत आह। ङस्येत्यादि। यथाश्रुते वैलक्षण्यमलभ्यमित्याह। ङसान्तस्येति। मयोऽनिसन्तस्येत्यत्र पूर्वसूत्रादिविषयपदानुवृत्तिः प्रदर्शनीया सा स्त्रीविषयस्येति पाठे विषयपदस्य समासघटकतया क्लिष्टेति पूर्वसूत्रस्य पाठप्रदर्शनमेतत्। पुनर्विषयपदमिति। अयम्भावः। नेह विषयपदन्नित्यनपुंसकलाभाय। तस्य पूर्वसूत्रस्थविषयपदानुवृत्त्यैव लाभात्। किन्तु नपुंसकविषयतासम्बन्धि यत्तस्य लाभाय। एवञ्चोपलक्षणीभूतो नपुंसकविषयतासम्बन्ध इहाश्रीयते। लिङ्गव्यत्ययेन प्रत्ययलोपेन वा यत्प्रातिपदिकं लिङ्गान्तरसम्बद्धन्तदपि नपुंसकविषयतासम्बन्धोपलक्षितं भवत्येवेति। ध्वनितञ्चेदमिति। तत्र द्वौ च द्विवचन इति सूत्रस्य किमुदाहरणमिति प्रश्ने आदौ अक्षी ते इन्द्र पिङ्गले इत्यभिहितम्। ततश्छान्दसत्वात्पुंवद्भावेन स्यादेशनुमागमयोरभावे प्रथमयोः पूर्वसवर्ण इत्यनेनाक्षि औ इति स्थिते एकादेश इत्याशयेन नैतदस्ति पूर्वसवर्णेनाप्येतत्सिद्धमित्युक्त्वा अक्षीभ्यान्ते नासिकाभ्यामिदमुदाहरणमित्युक्तम्। इदञ्चाप्युदाहरणमक्षी ते इन्द्र पिङ्गले। ननु चैतत्पूर्वसवर्णेनाप्येतत्सिद्धमिति। नुमा व्यवहितत्वात्पूर्वसवर्णो न प्राप्नोति। छन्दसि नपुंसकस्य पुंवद्भावो वक्तव्यः। मधोस्तृप्ता इवासते इत्येवमर्थम्पुंवद्भावेन नुमो निवृत्तिर्नुमि निवृत्ते पूर्वसवर्णेनैव सिद्धम्। स्वरार्थन्तर्हीकारो वक्तव्यः। उदात्तस्तर्हीकारो वक्तव्यः उदात्त ईकारो यथा स्यान्नपुंसकस्वरो मा भूत्। नञ्विषयस्यानिसन्तस्येत्यनेनाद्युदात्तत्वम्मा भूदित्यर्थः। मधोस्तृप्ता इत्येतदर्थम्पुंवद्भाव आवश्यक इत्याशयेनाह। ननु च पुंवद्भावातिदेशादेव स्वरो भविष्यति। अशक्यः पुंवद्भावातिदेशस्तावदयितुमिह हि दोषः स्यात्। मध्वस्मिन्नस्ति मधुमान् इति। सामान्ये नपुंसकमात्रस्य पुंवद्भावो न किन्तु स्व विधेयैवेत्याशयेनाह। स तर्हि पुंवद्भावो वक्तव्यो न वक्तव्यः। प्रकृत्या पुंवदिति वर्त्तते इति भाष्ये उक्तम्। ननु च पुंवद्भावेऽमुक्तिरस्त्वव्युत्पत्तिपक्षाभिप्रायेण व्युत्पत्तिपक्षे तु धञ्जिनिर्दिति नित्त्वादाद्युदात्तत्वेन भाव्यम्। अत एव मधुमांस इति प्रतीकमुपादाय कैयटेन प्रतिपादितम्। मत्वर्थे मासमन्थाः मधोर्ञ चेति यत्र उपसंख्यस्य लुकि सति पुंसि मधुशब्दो वर्त्तते इत्याद्युदात्तत्वं स्यात्। इत्यर्थो न पक्षे न भाष्य-

भवति प्रत्युदाहरणमिति बोध्यम्। वरणा इति। अन्तोदात्तोऽयम्। नामेत्यादि किमिति। उपमेयस्येत्येवास्तु। उपमेयत्वञ्चार्थस्य न च तस्य लुबन्तत्वमिति उपमेयशब्दस्य तद्वाचके वृत्त्येष्टसिद्धिर्भविष्यतीति प्रश्नः। न तु तस्य संज्ञेति। नामधेयशब्दः संज्ञापर इति भावः। न वृक्षपर्वत। उपमेयनामधेयस्येत्यनुवर्त्तते। विशेषपदोपादानाद्विशेषवाचकस्यैवोद्देश्यत्वं निषेधे। तेन स्वरूपस्य व्यावृत्तिः। एवञ्च वृक्ष इव वृक्षः पर्वत इव पर्वत इत्यत्र पूर्वेणाद्युदात्तत्वम्भवत्येव। राजविशेष। आङ्गेत्यत्राङ्गशब्दः क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवदित्यञन्तात्कनि तस्य लुपि तदन्त उदाहरणम्। अङ्गाः प्रत्युदाहरणमिति। बहुत्वे लुप्। तदन्तात्कनो लुप्। एवञ्च। पूर्वसूत्राप्रवृत्तौ च। राजविशेषवाचकस्य लुबन्तस्योपमेयनामधेयस्य चेद्भवत्यैवेति नियमोऽत्राभिप्रेतः। वृत्त्युपपत्तये मतविशेषमाह। यमन्वाशब्द इति। कालिङ्ग इत्युदाहरणमिति। अत्र कालिङ्ग इव कालिङ्ग इत्युदाहरणे बोध्यम्। इच्छन्तीति। एतन्मतेऽक्षतकन्यकेत्युदाहरणम्बोध्यम्। लघावन्ते। अस्यादिरित्यधिकारे पाठेऽप्यसम्बन्धे प्रमाणमाह। अत एवेति। आदिरित्यस्यासम्बन्धादेव। नन्वेवं वराहशब्दोऽपि मध्योदात्तः स्यादत आह। वराहशब्दस्त्विति। अनेनैवाद्युदात्तत्वसिद्धये शङ्कते। न चेति। लघावन्त इत्यादि किमिति। बह्वषो गुरुरित्येवास्त्विति प्रश्नः। वातप्रमीरिति। अत्र संयोगे गुर्वित्यनेन तकाराकारस्यापि गुरुत्वात्तस्याप्युदात्तत्वापत्तिरिति भावः। सिद्धान्ते त्वन्त्यस्य लघोर्द्वयोर्वा लघ्वोरभावादेतत्सूत्राप्रवृत्तौ कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वम्भवति। वातप्रमीरित्यत्रान्त्यस्यालघुत्वं सञ्जननशब्देऽन्त्यस्य द्वयोर्वा लघुत्वेऽपि गुरोर्न तत्परत्वमिति प्रदर्शयितुमनयोरुपादानम्। कपालीशब्दस्य ङीप्रत्ययान्ततयाऽन्त्यस्य लघुत्वसम्भावनयाऽस्य सूत्रस्य प्रवृत्तिशङ्कां वारयति। नान्तत्वादिति। णत्वे न सर्वनामस्थाने परतो दीर्घे कृते नाऽन्त्यलघुपरत्वमिति भावः। किमन्नयमिति। गुरुपदाभावेऽन्त्यलघुपरकस्य नकाराकारस्य गुरुद्वयपरकस्य मकाराकारस्य वा उदात्तत्वापत्तिरिति भावः। न च किमन्नयशब्दे प्राप्तमप्येतत्सूत्रं यान्तस्याऽन्त्यात्पूर्वमित्यनेन परत्वाद्बाध्यतेति वाच्यम्। किमन्नयकमित्यस्योपलक्ष्यत्वात्। अस्य प्राप्तिमात्रेण। स्त्रीविषयेत्यस्य प्राप्तिमात्रेण। बाधादिति। तथा च द्वितीय-

न्तोदात्तः पठनीयस्तावतैव सिद्धौ व्यत्ययकथनमसङ्गतमत आह। परमिति। कुपूर्वमिति पाठे पूर्वशब्दस्य प्रथमान्तत्वादादिरित्यनेन सामानाधिकरण्यम नवोऽस्ति। कुपूर्वाणामिति पाठे तु कथमस्य सम्बन्ध इत्याशङ्कायामाह। तस्य समूह इति। ननु पूर्वशब्दस्य सर्वनामत्वादाम सुट स्यादत आह। सर्वनाम कार्यन्त्विति। कार्ष्मादिरयमिति। तेनादिर्द्वितीयो वा पर्यायेणोदात्तौ। कीत्यादीति। कुपूर्वमिति कथमित्यर्थः। हरदत्तोक्तपाठः। कुपूर्व इति पाठं। आहुरित्यस्वरसबीजन्तु कार्ष्णविधेः सिद्धे पूर्वशब्दोपादानमिदं स्वरचनार्थमापद्येतेति। खय्युवर्णम्। क्षविमाख्ये तस्य क्षविमस्याख्या पुरुषप्रयत्नसाध्यस्याख्येत्यर्थः। बन्धुक। पुष्पविशेषस्याख्येत्यर्थः। ऋवर्णान्तत्वाभावमतिप्रसङ्गं वारयति। पितेत्यादि। व्यर्थ इति। सस्वरस्य तकारस्य प्रथमोपादानेन ग्रहणसम्भवादिति भावः। बोध्य इति। तेन ख्वेतो वाजेत्यत्रान्तोदात्तपाठस्योपपत्तिः। क्तान्तस्य। अन्तादिरिति सम्बध्यते। प्रान्नमिति। कप्रत्ययान्तत्वादन्तोदात्तोऽयम्। ताच्छील्ये किमिति। ताच्छील्ये गम्ये इत्यर्थकन्ताच्छील्य इति पदद्वयमर्थमित्यर्थः। इत्येक इति। लोके प्रवीणे कुशलशब्दप्रयोगेऽपि ताच्छील्यन्न प्रतीयत इत्यस्वरसबीजम्। अत एवाह। अन्तोदात्त इति। मूले पचस्यादेवनस्य। देवनशब्दः करणल्युडन्तः। अर्हस्यासमद्योतने। असमद्योतने योऽर्हशब्दस्तस्यादिरुदात्तः। समस्य समागकस्य द्योतने प्रतिपादने फिट्स्वरेणान्तोदात्तत्वम। पीतदर्थानाम्। आदिरिति सम्बध्यते। ताच्छील्यानवगमात्। समुदायेन संज्ञानवगमात्। लुबन्तस्योपमेयनामधेयस्य। उपमेयनामधेयस्येत्यस्योपमेयवाचकस्येत्यर्थः। चञ्चेव चञ्चेति। इवे प्रतिकृताविति कनो लुम्मनुष्ये इति लुप्। न च लुपः स्थानेऽभावस्य तस्य च सावयवत्वमिति दरकात्र वत्राघकान्तशब्दार्थासिद्धिरिति वाच्यम्। लुबन्तस्येत्यस्य लुब्विशिष्टस्येत्यर्थात्। वैशिष्ट्यञ्च स्वविषयकज्ञानाधिकरणधर्मोत्पत्त्यप्रतियोगिसमयवृत्तित्व-सम्बन्धेन। अग्निर्माणवक इति। यथाग्निशब्द उपमानवाची। माणवकशब्द उपमेयवाचकश्च न लुबन्त इति। यद्यप्यपत्ये कुत्सिते मूढे मनावौत्सर्गिकः स्मृत। नकारस्य च मूर्धन्यस्तेन सिध्यति माणव इत्युक्ते माणवशब्दोऽन्तोदात्तादुदात्त एव। तथापि ततः स्वार्थिके के प्रत्यये कृते माणवकोऽन्तोदात्तोऽयमिति

रित्यस्यापि प्रकृते सम्बन्धस्तेनादेरपि पक्षे उदात्तत्वं भवतीत्याहुः । इगन्ताना-
ञ्च द्व्यचाम् । इगन्तानाञ्चेत्यत्र चशब्दो वाक्यालङ्कारे । वेत्यनुवर्त्तत इति ।
विकल्पार्थकः प्रकृते वाशब्दोऽनुवर्त्तते शब्दाधिकारात् । वाशब्दाननुवृत्तिम-
भिप्रेत्याह । छान्दसत्वादिति । केषाञ्चिन्मतमाह । ये त्विति । एतन्मते कपि-
शब्दः प्रत्युदाहरणम् ॥

## ॥ इति द्वितीयः पादः ॥

अभिमान इति । एकस्यैवोभाभ्यामुदात्तत्वस्यैव प्राप्त्या विरोधाभावेन पर-
त्वादित्यसङ्गतमित्येवमुक्तं । अस्योदाहरणन्तु जघनमिति बोध्यम् । उदाहर-
णदिगिति । तेनात्र कूर्पर इत्युदाहरणमिति ध्वनितम् । रसना । वदनमित्यत्र
तु स्वाङ्गशिटामित्याद्युदात्तत्वम् । मादीनाञ्च । मादीनां आद्यान्द्वितीयमुदात्त-
म् । अस्योदाहरणं यस्मूले मलय इत्युदाहृतन्तदन्यथा सिद्धमित्याह । मलय
इत्यादिना । संज्ञाभूतः शब्दप्रवृत्तिनिमित्तकः । मकारवत्त्वेत्यत्र तु जातिप्रवृ-
त्तिनिमित्तकी गृह्यते । इति न्यायेनेति । एवमुक्तिः प्रातिपदिकस्य कार्येऽपि
भाषास्मते लक्ष्य प्रवृत्तिमभ्युपेत्य । वस्तुतस्तु जातिविशिष्टस्य शीघ्रोपस्थितत्वा-
द्वाचकतासम्बन्धेन तद्विशिष्टग्रहणम् । जलजन्तुविशेषे प्रसिद्धोऽयम् । शादीनां
शाकानाम् । शकारादीनां शाकशब्दविनाऽऽद्यान्द्वितीयमुदात्तम् । मूले शीत-
न्यासतपुष्पा इत्युक्तम् । तत्र शीतन्येत्युदाहरणम् । तेन । आद्युदात्तत्वविधा-
यकमिति कथनेन । कैयटमतं वृत्तिविरुद्धमित्याह । फिडिति । वाच्यत्वाभावा-
दिति । उभयोरप्युदाहरणत्वे नोपन्यास इति वादिमतमसङ्गतमित्यनेन कथि-
तम् । कैयटादिरीत्येति । तन्मते आद्यामित्यस्याचामन्त्यादिति भावः । के
चित्त्विति । अन्यपदस्य त्रित्वसंख्याविशिष्टाच्परतया शर्त पञ्चाशदिति रीत्या
चतुरच्कादिष्वपि व्याप्तः सङ्ग्राह्य इति भावः । वदन्तीति । अनेनास्वरसः सूचि-
तः । स चोत्तरसूत्राद्याधाः पूर्वसंख्याबाधकत्वञ्च न हि पिपुना द्विपुत्रव्यपदेशं ल-
भत इत्यादौ सुप्रसिद्धतया एकाचूर्ध्वद्व्यचोऽपि प्रत्युदाहरणमित्यसङ्गतमिति ।
पाण्डामाण्डमादीनाम् । स्वरविधौ व्यञ्जनमविद्यमानवदित्यस्य सामान्यतः प्रवृ-

स्योदात्तत्वमिह भवति। उदाहरणन्दत्तमिति। मूले इति शेषः। वह्वपूर्वाणामित्य। व्यधिकरणो बहुव्रीहिर्मूले दर्शितस्तद्बीजमाह। अस्वादेरितीति। अन्यथानापत्तेरिति। सामानाधिकरण्ये नान्यथानापत्तेरित्यर्थः। यदि स्वचोः पूर्वे फिषोऽवयव इत्युच्यते तदा व्यर्थत्वं क्लिष्टत्वञ्चेति भावः। शकुनीनाम्। पक्षिविशेषवाचकानामित्यर्थः। बहुवचनस्वारस्यात्। न तु शकुनिशब्दस्यैवार्थः कार्यः। ऋत्यात्पूर्वमिति। पूर्वशब्दस्यावधिमत्काङ्क्षार्थप्रतिपादकतयाऽन्त्यस्य लघावन्त इत्यत्रान्तस्य निमित्तत्वेन श्रवणादिह तदर्थस्यावधित्वमिति भावः। एतेन। मध्योदात्तदर्शनेन। ब स्त्रौ ह स्त्विति। लघुः पूर्वो यस्य तस्य समुदायस्यादिरित्यर्थकल्पनया तित्तिरिरित्यादाविष्टसिद्धेः सम्भवादित्यभिप्रायः। अनयोः। ऋतुप्राणिवाचकयोः। मूले यथालक्षणप्राप्तमिति। उत्सर्गबाधकसूत्रेण प्राप्तमित्यर्थः। अन्तोदात्तत्वमिति। उक्तान्तः प्रासस्त्रेणान्तोदात्तत्वमित्यर्थः। कैयटश्चेति। चिन्त्य इति शेषः। धान्यानाम्। ह्रस्वान्तानामित्यत्र कर्मधारयः। घान्तानामित्यत्र ककारपकारौ पृथङ्निमित्ते घन्तानामिति वक्तव्ये घान्तानामिति कथनेन पकाराकारौ विवक्षितः। एवञ्चकाराकारोऽपि घान्तानामिति तु सौत्रः प्रयोगः। लघ्वनुसारिव्याख्यानादित्याशयेनाह। ह्रस्वसंज्ञकेत्यादि। स्वधान्येति। तृणविशेषवाचकस्य ग्रहणार्थमित्यर्थः। के चित्तु तत्र सूत्रे ईषान्तश्चेतिसूत्रादादिरित्यस्यानुवर्तनात्तस्य वैकल्पिकत्वेन मध्योदात्तोऽप्ययन्तृणविशेषवाची भवतीत्याशयेन तत्र पाठ इत्याहुः। ननु घान्तानामिति सूत्रे उक्तमिह स्वकारान्तमुदाह्रियत इति तद्विरोध इत्यत आह। ह्रस्वान्तानामिति। जनपदशब्दानाम्। जनपदवाचिनामजन्तानामादिरुदात्तः। तस्याप्यनेनेति। अपिना फिषु इत्यस्य सङ्ग्रहः। अङ्गो राजेति। ततः क्षत्रियसमानशब्दादितिविहितप्रत्ययस्य जनपदे लुबिति लुप्। एवमङ्गशब्दोऽपि। ककुपादीनाम्। लान्तानामित्यत्र सेति समुदायो विवक्षितः। न चैवमसंयुक्तेति व्यर्थम्। संयोगान्ता इति व्यञ्जनसमुदायस्यैव संयोगसंज्ञा विधीयते न तद्घटितस्येति वाच्यम्। असंयुक्तस्य व्यञ्जनान्तरागर्भितो यो लकारस्तदन्तानामित्यर्थात्। पूर्वमित्यस्यान्त्यात्पूर्वमित्यर्थः। धर्मो न्तु इर्योकदाभयोरमति प्रयत्ने गतावेशादर्शना-दृश्य. पूर्वमित्यनेनैव पर्याये शङ्के याम्यन्दोऽस्य पार्थं। तेन एकारप्राप्याप्यादि-

धे । अत एव । आदिपदसम्बन्धादेव । ननु कैयटोक्तावन्त इत्यप्रकृतस्याभिधानम् । किञ्च द्वितीयमित्यस्यानभिधानेन न्यूनता चेति दोषद्वयमत आह । अचान्तशब्दे नेति । काशिकायां विरोधाऽप्येवमेव परिहर्त्तव्य इत्याह । एवमिति । इत्येव सिद्धे रितिान चाधुनापि द्वितीयोऽस्त्वान्त्यूर्वे एवेति त्रयाणा ग्रहणं व्यर्थमिति वाच्यम्।आदेरप्युदात्तत्वसम्पादकत्वे न चारितार्थ्यात् । ईपान्तस्य इत्यादेरादिर्वा।अत्रादेरुदात्तभावेऽन्तोदात्तत्वमृफिप इत्यनेन प्राप्तमपि न किन्तु द्वितीयस्य एतत्सूत्राव्यवहितप्राक्सूत्रे द्वितीयमित्यस्य सम्बन्धात् । न च प्रागीषादिति प्रागभिहितमिति कथमत्र द्वितीयमित्यस्य सम्बन्ध इति वाच्यम् । तत्र प्रागीषादिति नापूर्वविहिन्तु प्रकृतसूत्रे विभिन्नार्थकादिपदोपादानेन च तद्घटितवाक्ये द्वितीयमिति न सम्बध्यते इत्याशयकमेव वा ग्रहणेनादेरुदात्ताभावे तु विरोधाभावेन द्वितीयमित्यस्य सम्बन्ध- स्यादेवेत्याशयात् । अत एवाह । पक्षेऽधिकारादिति । मञ्जूषेति । अत्र ईपान्ते त्यनेन प्राप्तादुदात्ताभावे भादीनाञ्चे ति द्वितीय उदात्त' । अम्बरीषमिति । अत्राद्युदात्ताभावे लघावन्त इति सूत्रेण तृतीयस्योदात्तत्वम् । उशीरदाशेर । अत्रादिरित्यनुवर्त्तते । वेति तु निवृत्तम । हृदयशब्दोपादानस्य प्रयोजनमाह । अत्र हृदये ति । देवरग्रहणमिति । प्रकृतसूत्रे देवरपदोपादानाभावेऽप्यादेरुदात्तत्वन्द योर्लवो' परत: उच्चितस्य गुरोरेकारस्य तेनैव सिद्धमिति भाव' । अनिलव्रात मार्यमिति । तत्फलन्तु क्रपालुशब्दे गुरोर्द्वितीयस्योदात्ताभावेऽन्तोदात्तत्व म्फिट्सूत्रेण भवति । केचित्विति । एतन्मते प्रकृतसूत्रे यदि देवरशब्दो न स्यात्तदा त्वन्तोदात्तत्वमेव घृतादीनाञ्चेत्यनेन स्यात् देवरशब्दोपादानसत्त्वे तु घृतादिपाठमाभर्थ्यात्पक्षे प्रकृतमाद्युदात्तत्वभवति अत्र वा वेत्यनुवर्त्तते । एतदभावे तत्र पाठादन्तोदात्तत्वमिति भाव: । केचिदिति ।मुख्या इत्यर्थ: । मञ्जिष्ठपाठयो: । जायाचेटका च जायेटके जायेटकयोराख्ये ति समास. । द्वन्द्वान्ते श्रूयमाणस्याख्याशब्दस्य प्रत्येकं सम्बन्ध । भिस्यादि किमिति । मञ्जिष्ठपाठयो रिति किमर्थमित्यर्थ । मिहीति । इयमपि सिंहस्य या जाया तदाख्ये ति भाव. । जाया शब्दस्यात्र भार्यापरत्वात् । केत्य दिकिमिति । मञ्जिष्ठेति राम्पत्रां फट्टीयच तु भार्यासामान्यवाची योजायाशब्दस्तद्बोध्यबोधक इति भाव ।

त्तिमभ्युपेत्य पादप इत्युदाहरणमुक्तेऽभिहितम् । हल्स्वरप्राप्तौ स्वरोद्देश्यके विधौ वा तत्प्रवृत्तिरिति सिद्धान्ते लम्यातप इत्येवोदाहरणम्पादप इत्यादौ तु सप्तम्यन्तयो बोध्य. । लौकिके त्वाद्युदात्तत्वमेव लघावन्त इत्यनेनेति बोध्यम् । पान्तानाङ्गिङ्गर्दभ इत्यादिग्रन्थस्तु तस्याः परिभाषायाः सामान्यतः स्वरविधौ प्रवृत्तिमभिप्रेत्य । युतान्य । अव्ययपूर्वपदप्रकृतिस्वरे प्राप्ते इति । अयुतशब्दस्य सङ्ख्याविशेषे रूढत्वेऽपि संज्ञाशब्दानां व्युत्पादनमवयवार्थारोपेणेति प्रकृतेऽव्ययपूर्वपदप्रकृतिस्वरप्रवृत्तिः । मकरवरूढ । अचादिरित्यस्योपादानाद्धितीयाधिकारबाधो मा भूदित्याशयेन वाशब्दोपादानम् । एवञ्च मकरादौ पर्यायेणाद्ये द्वितीयस्य वोदात्तस्य श्रवणम् । वरूढ इतीति । अस्यादिरिति शेष. । चादिशब्देन सङ्ख्याह्वान्दर्शयति । पारेवत इत्यादिना । मकर. । मकरो यादसि ना यो निधिराशिप्रभेदयो' । वरूढः । अयं सङ्करजाती । वरूढः सङ्करेऽपि स्यादिति । पारावतः । पारावतः कलरवे शैले मर्कटतिन्दुके । वितस्ता । नदीविशेषे प्रसिद्धोऽयम् । इक्षु' । अस्याभिधेय व्यक्तम् । आर्जि. । आर्जनेऽव्युत्पन्नोऽयम् । द्राक्षाकलाः । द्राक्षायाः कला इत्यर्थः । उमा' । उमोऽतसीहैमवतीहरिद्राकीर्त्तिकान्तिषु । काशाः । दिश । काशीनम् । काशीनः । काश्या इव इत्यर्थः । अयमिति । सुगन्धिते जनशब्द इत्यर्थः । नप' फलान्ता । सूत्रे लिङ्गवचनस्याविवक्षितत्वादप इत्येकवचनान्तस्य फलान्तानामिति बहुवचनान्तेन सामानाधिकरण्यमविरुद्धम् । के चित्यते फ इति षष्ठ्यर्थे प्रथमा । अन्ये त्विति मते फशब्दाकारस्य षष्ठ्येकवचने आत इति योगविभागाल्लोप' । यान्त्यस्यान्त्यात्पूर्वम् । प्रत्यादिर्द्वितीयोवेत्यस्यामस्यार्थमन्त्यात्पूर्वमित्युपात्तम् । न कश्चिद् विशेष इति । एतेनैतस्य सूत्रस्य सुगमाय इति साधारणप्रयोजनमित्यभिहितम् । थान्तस्य ना । षष्ठ्यर्थे प्रथमा । अत्र लघुपदस्यागत्वमभ्युपेत्योदाहरणान्याह । नानैत्यादि । इति पाठ इति । थान्तस्य नालघुनो इति पाठ इत्यर्थ' । के चित्त्विति । एतन्मते थान्तस्येत्यत्र 'थश्च आश्चे'ति द्वन्द्वगर्भो बहुव्रीहिः । तत्र थाकारघटितं वाक्यं लघुशब्दरहितम् । तेन पूर्वोक्तोदाहरणानामपि सङ्ग्रहः । सम्यग्घात इति । शण्डूकाण्ड्य इत्यादिः । मांकाल्यकाम्पिल्य । चादिर्वेति शर्त्त इति । मकरवरूढेतिसूत्रादादिर्वेतिमण्डूकाण्ड्या अभ्यस्यत इत्य-

भ्यभिहीति । अत्राभिशब्दस्याद्युदात्तत्वाभावेऽन्तोदात्तत्वे सति यथादेशे उदात्तस्थानेऽय यणिति द्वितीयाभिशब्दाद्याकारस्य स्वरितत्वम्भवति । इद सूत्र मिति । उपसर्गाश्चाभिवर्जमित्येतत्सूत्रघटकमुपसर्गाश्चेति पदमित्यर्थः । तद भावज्ञापनाय । आद्युदात्तत्वाभावज्ञापनाय । एवमभिवर्जमित्यपि न वाच्य मित्याह । अभिर्यैवमादिषु पाठ्य इति । एवञ्च निपातत्वात्प्राप्तमप्याद्युदात्त त्वमेवादीनामन्त इत्यनेन वाधिष्यत इति भाव । केचित्त्विति मते त्वभेरेव मादिषु न पाठ इति बोध्यम । एवादीनामिति पाठ व्याचष्टे । एवादीति । गणे । चादिगणे । मूले तच्चिन्त्यमिति । सहशब्दस्य एवादिषु पाठादन्तोदात्त त्वस्य न्यायसिद्धत्वात् । ते पुनस्सूरिभिरित्यत्रान्तोद त्तदर्शनाच । चिन्त्यावीजञ्च न्त्यमिति यदुक्तन्तत्र साधकमाह । सहशब्दस्यापीति । ननु सहशब्दस्य निपा तत्वेऽपि परत्वाद्विशेषविहितत्वाच्चान्तोदात्तो भविष्यतीत्यत आह । प्रयुज्यते चेति । आद्युदात्त प्रयुज्यत इत्यर्थ । क चिदस्यान्तोदात्तत्व दृश्यमानन्तु छा न्दसमित्याह । ते पुनं त्यादिना । वावादीनामुभौ । अत्र सूत्रे उदात्ताविल्यस्य पाठदर्शनेन तस्य सूत्रघटकत्वमिति भ्रमनिवृत्तये आह । अनुवृत्तिप्रदर्शनमिति । प्रकरणादेवोदात्ताविल्यस्य लाभात् । वावादीनामित्यत्र द्विरुक्ताना वावादीना निर्देश । विसूत्राम । वावादीनामुभौ । चादयोऽनुदात्ता । एवमपूर्वपठित एवादीनामन्त इति इतित्रिसूत्राम् । यदि पूर्वसूत्रेऽप्यादिशब्द प्रकारे तर्हि तत्सूत्रव्याख्यानावसर एव कुतो नैव्य व्याख्यातमिति चेत् । शङ्काग्राहिकान्या येनेति स्वहाण । प्रकारे । सादृश्ये । न तु गणनिर्देश इत्यर्थ । सादृश्यञ्च नि पातत्वेन । चादयोनु । यदत्र निपातपदानुवृत्तिरुक्तातत्फलमाह । पशुनेती ति । अत्र पशुशब्दो न निपात इति नानेनानुदात्तत्वम् । यथेतिपा । आद्युदा त्ता इत्यस्य चादयोऽनुदात्ता इत्यत्र वाधदर्शनात्प्रकृतेऽनुदात्तपदस्यैवानुवृत्ति रित्याह । अनुदात्त इतीति । अनुवादकमिति । कर्मधारयवद्भावे सति समास स्येति सूत्रेणान्तोदात्तस्य सिद्धत्वादनुवादकमित्यर्थ । शेषमिति व्याचष्टे । प्र कारादीति । अनुवादकमिति । तस्य परमाम्रेडितमनुदात्तञ्चेत्यनेनानुदात्त त्वस्यसिद्धत्वादनुवादकमित्यर्थ । अनुदात्तम्पदमित्यस्येति । नेट वचनम्प्रका रादिद्विरुक्तावित्यस्य शेषभूतद्भिन्नु सर्वविशेषविधायकवचनशेषभूता या परि

महिषीजायेति मूले महिषीशब्दस्तु जायापर्यायवाची। अषाढा उपदधातील्यत्राषाढाशब्द इष्टकावाचकः। प्रत्युदाहरणे तु नक्षत्रवाचकस्तदाह। अषाढेति॥

## इति तृतीयः पादः ।

शकटि शकट्योरक्षरम्। पर्यायेणेत्यस्य प्रयोजनमाह। अत्रोभे इति। युगपद्ग्रहणबोधितेत्यस्य इत्यर्थे त्वन्नार्थेऽन्वयः। इति पदेन अनुकरणभूतसमुदायस्य परामर्शः। अस्य वामीयमितिवद्विभक्तेरलुक् तत्फलम्। पर्यायेणेत्थं तत्फलम्। अनुवादकमिति। वस्तुतस्तस्याः परिभाषाया अनित्यत्वज्ञापनार्थमिति तत्त्वम्। मूलेऽन्यत्रेति। ब्राह्मणनामधेयातिरिक्त इत्यर्थः। तेन यौगिकस्य लाभः। पारावत। ब्राह्मणनामधेयस्येत्यत्र न सम्बध्यते। उपोत्तमवर्जमिति यद्वान्तत्फलमाह। अत्र वशब्द इति। कपिकेश। एतयोश्छन्दसि अक्षरमक्षरम्पर्यायेणोदात्तम्। अच्छन्दसि स्वरप्रवृत्तिमाह। भाषायामिति। कपिरन्तोदात्त इति। इगन्तानाञ्च द्व्यषामित्याद्युदात्तत्वम्प्राप्तमपि न भवति घृतादित्वात्। न्यङ्स्वरौ। तदनुवादकम्। उत्तरीत्यासिद्धस्य स्वरितस्याऽनुवादकम्। तिल्यशिक्य। स्वरिताविति वचनविपरिणामेन सम्बध्यते। सूत्रस्थवार्त्तिकेनेति। नवसूरमर्त्तयविष्ठेभ्यो यदिति वार्त्तिकेन यत् स च स्वार्थे। प्रयुज्यते चेति। अन्तस्वरितो धान्यशब्दः प्रयुज्यते इत्यर्थः। स्वरितान्तोऽन्तोदात्तो वेति। कर्ष्मादीनाञ्चेत्यनेनाद्युदात्ते तदेकवाक्यतापन्नशेषनिघातेनान्त्यस्यानुदात्तत्वे उदात्तादनुदात्तस्येति स्वरितः। आद्युदात्ताभावे त्वन्तोदात्तः फिट्स्वरेण। त्वत्त्वसममिमेतिसूत्रे विशेषानुपादानादाह। सर्वानुदात्तानीत्यर्थः। भाष्यप्रामाण्यादिति। तत्र हि प्रत्ययाद्युदात्ताद्धातोरन्तः। प्रत्ययाद्युदात्ताद्धातोरन्त इत्येतद्भवति विप्रतिषेधेन। प्रत्ययाद्युदात्तत्वस्यावकाशः। यत्राऽनुदात्ता प्रकृतिः। समत्वं सिमत्वम्। धातोरन्त इत्यस्यावकाशः। यत्राऽनुदात्तः प्रत्ययः। पचति पठतीति। इहोभयम्प्राप्नोति। गोपायति। धूपायति। धातोरन्त इत्येतद्भवति विप्रतिषेधेनेत्युक्तम्। पत्र प्रत्ययाद्युदात्तत्वस्यावकाशप्रदर्शनावसरे लौकिके समत्वम् सिमत्वमिति प्रयोगेऽनुदात्तत्वप्रदर्शनेन प्रकृते छन्दसीति न सम्बध्यत इति लभ्यते। निपाता आद्युदात्ता इत्युपसर्गाश्चाभिवर्जमिति समत्वं वाच्यमिति। पशुकोशादिना।

प। इति नियमेनेति। यदि वयपोऽनेन सूत्रे णोदात्तत्वस्य प्राप्तिवारणाय तद्वि-तस्येति ब्रूपे तदा मन्त्रे वृषेष पिवेति सूत्रादुदात्त इत्यस्य प्रजयजोरिति सूत्रेऽ-नुवृत्त्या प्रजयजोर्भावि यः क्यप एवोदात्त इति नियमः स्तोकार्योऽन्यथा इत्य इ-त्यत्रेव तस्याप्युदात्तत्वमित्युदात्तग्रहणानुवृत्तिर्व्यर्था स्यात्। एवञ्च तेनैव नि-यमेनेत्यादि विहितस्य क्यप उदात्तत्ववारणे सिद्धे तद्वितस्येत्यस्य नेदमत्यु-दाहरणमिति भावः। अविदूममिति। अवेर्दुग्धे दूमप्रत्ययः। तिसृभ्य इति सूत्रे तिसृशब्दस्य शब्दस्वरूपपरतया बहुवचनासङ्गतिरत आह। बहुवचन-मिति। वार्त्तिकक्रदुक्तं जस्ग्रहणानर्थक्यं दूषयन्नस्य सार्थक्यमाह। यस्त्विन्या-दिना। अनेन। उपसमस्तार्थमेक इति कथनेन। इति सूचितमिति। यत्र यत्र पञ्चमीनिर्देशस्तत्र तत्र तस्मादिति परिभाषा प्रवर्त्तते विहितविशेषणतया व्याख्यानञ्च भाष्यकारादिव्याख्यानं यत्र बाधकमन्त्रे वेत्यप्यस्मादेव भाष्याल-भ्यते। प्रकृतसूत्रे जस्ग्रहणे कृते सत्येतत्सूत्रप्रवृत्तावतिसावित्यादौ स्वर-प्रवृत्तिमाह। अतितिसृशब्द इति। इत्युक्तेरिति। यद्यपि यथा श्रुतसूत्रस्वे-ऽप्यतितिसृशब्दावयवस्य तिसृशब्दस्याऽऽद्यन्ततयाऽतिशब्दात्परस्य तिसृशब्दस्य स्वरः सिद्धस्तथापि वक्ष्यमाणरीत्याऽनिष्टातुलोप इत्यस्यावश्यकतया तादृशन्या-सेऽप्यत्र स्वरः प्राप्नोतीत्याशयेनेत्यमुक्तिः। तथा। अन्तोदात्तः। सावेकाचस्तृती-यादिर्विभक्तिरितिसूत्रस्य सुपरकं यदेकाज्रूपन्न ह्रि ततः परा तृतीयादिर्विभ-क्तिः सम्भवतीति यथा श्रुतार्थो न घटतेऽतो नैतस्मावेकाजिति विशेषणद्विम्-पलक्षणतया तद्विवक्षितमित्याशयेनाह। सौ यदेकाज्रूपमिति। दृष्टमित्यध्या-ध्याहारः। यदिति शब्दस्वरूपापेक्षया नपुंसकनिर्देशः। उपलक्षणीभूतधर्मा-श्रयणफलन्तु राज्ञेत्यत्र विभक्त्युदात्तत्वव्यावृत्तिरिति स्फुटमूले तदानुपपन्न-म्। राजस्वित्यत्र जेत्यघादेकाचः सौदर्शनेन ततः परत्वं राजभ्यामित्यादौ अ-भवत्वमेवेत्यत आह। अर्थवत्परिभाषयेति। एवञ्चार्थवत्परिभाषैकवाक्यतया यादृशो वाक्यार्थो भवति तमाह। सौ यदर्थविशिष्टमिति। राज्ञेत्यत्र स्वरप्रवृ-त्तिमाह। राजन्शब्द इति। ननु एकाज्ग्रहणाभावे सावित्यस्यावर्त्त्यमत आह। सावित्यस्येति। साविति प्रथमैकवचनबोधकमेवाद्विवत्याशयेन शङ्कते सप्तमीत्यादीति। प्रथमैकवचनस्य सुपदेन ग्रहणे मावित्यस्य व्यावर्त्यं मन्त्रिरि-

भाषा तत्त्विद्वानुदात्तत्वानुवादकमित्यर्थः। शान्तनवाचार्यप्रणीतेषु सूत्रेष्विति दर्शनेन शन्तनोरचार्यस्य यदपत्यन्तस्य प्रणेतृत्वमिति भ्रमनिवारणायाह। इदम्मात्र इति। तथा च शन्तनुशब्दात्तेन प्रोक्तमित्यण्। तदन्तस्याचार्यप्रणीत शब्देन कर्मधारयः। आचार्यश्च शन्तनुरेवेत्यर्थोल्लभ्यते। नन्वेव शन्तनुशब्दस्याचार्यशब्देन कर्मधारयङ्कृत्वा तदन्तस्य तृतीयान्तस्य प्रणीतशब्देन समासे विवक्षितस्यार्थस्य लाभसम्भवे किमर्थमोक्तार्थोऽणन्तस्याचार्यप्रणीतशब्देन समासनिर्देश इति चेत्। प्रियतद्धिता दाक्षिणात्या इति लौकिकवैदिकेषु कृतान्तेष्विति भाष्यकृतोक्तदर्शनेन स्वस्यापि दाक्षिणात्यत्वसूचनायेतिगृहाण। फिट्सूत्राणि समाप्तानीति। फिषां संस्कारोपयुक्तानि सूत्राणि सम्यगाप्तानि व्याख्यानेन व्याप्तानीत्यर्थः॥

## इति फिट्सूत्रवृत्तिविवरणम्।

अथ प्रत्ययस्वराः। व्याख्यायन्त इति शेषः। मूलेऽग्निरिति। अङ्गेर्निः स चादादात्तः। उणादिप्रत्ययेष्वपीदमवर्त्तत इत्याशयेनास्योपादानम्। वस्तुतस्तु फिट्सूत्रेणान्तोदात्तत्वे नास्यमिदिरत चादौ कर्त्तव्यमित्यस्यैवविवरणम्। तव्योऽयमिति। तव्यत्तव्यानीयर इति सूत्रनिर्दिष्टो द्वितीयः प्रत्ययः। प्रथमस्य त्वागतु तस्य सुधान्तरेण संस्कारात्तदाह। तव्यस्त्विति। स्वरितो भवतीति। एवञ्च तित्वप्रयुक्तो न विशेष इति शङ्का। विशेषमाह। तथापीति। अचार्यं। स प्रकृतेरित्यर्थं। अन्यथा। स प्रकृतेरित्यर्थाभावे। तस्य। अकचः। ककारादकार उच्चारणार्थोऽन एव पचतकीत्यस्य सिद्धिः। इति न्यायादिति। एवञ्चाकृते एव स्वरे लुक्। पुनस्तु न स्वरप्रवृत्तिः प्रत्ययलक्षणेनेत्याह। प्रत्ययलक्षणेनेति। नन्वेवमतुः फणेतीत्यत्र द्विषिचतुर्थ्ये इति विहितस्वरो लोपाचित इत्यस्य प्रसक्तिर्न स्यादित्यत आह। चतुरिति। तातः परः। अकचः परोऽकारः। तदनुसारेण व्याचष्टे। योगं विभज्य व्याचष्ट इत्यर्थः। ननु योगविभागाभावेऽपि चुक्षयित्वसामर्थ्यान्न जित्स्वरो बाधको भविष्यतीत्यत आह। चुक्षयितमिति। चाज्ञायनादपीति। अत्र शस्रादिभ्य. फञिति फञ्। मा भूदिति। किमाद्धि प्रत्यादादात्तत्वेन भवति। वक्ष्यतीति। पतिसुतास्विल्युव इति अव-

ऽयमित्ययादेशे कृते भवत्येकाच् । प्रथमैकवचने त्वयमित्येकाच् न भवतीति तराप्रसङ्ग इत्युक्तम् । तेनापि । कैयटेनापि । अर्थभेदात् । स्त्रीत्वविशिष्टार्थवाचकत्वमस्त्येनार्थभेदादित्यर्थः । इति निषेधादिति । तस्मिन्नपि सूत्रे सप्तमीबहुवचनग्रहणेन तत्र एत्वप्रवृत्तिप्राक्कालेऽवर्णान्तत्वमस्तीत्याशयेन शङ्कयम् । प्रथमैकवचनेति । तस्मिन् सूत्रे तथैव सिद्धान्तात् । इष्टापत्तेरिति । इष्टस्यैव भवता साधनात् । ननु प्रागुक्तं सर्वानुदात्तत्वद्वयमत आह । एभिरत्र इत्यादि। अन्तोदात्तादुत्तरपदात् । अनित्यसमास इत्यस्यार्थे प्रतियोगितया विशेषणीभूतमनित्यसमासपदं व्याचष्टे । नित्यशब्दस्येति । वाशब्द उदात्तः । समासस्वरेण वाशब्द उदात्त. अग्निचितेति । अग्नौ चेरिति क्विप् । यदुक्तं नित्याधिकारविहितेत्यादि तस्य फलमाह । यस्त्विति । पदमात्रे त्यत्र मात्रपदमवधारणे । इति विग्रह इति । अत्र विद्यमानेत्यस्याधिकारात् समस्यमानपदमात्रघटितत्वं विग्रहस्येति निरुक्तनित्यसमासत्वमत्र कृतबहुव्रीहे । इदञ्चेति । नित्याधिकारविहितसमासादन्यत्रेति यत्तदित्यर्थः । वृत्त्याद्यनुरोधेनेत्यनेन भाष्यानुरोधाभावे उक्त. । भाष्यान्तरविरोधोऽप्यस्तीत्याह । उपपदमपीति । अन्यथा । एतादृशनित्यसमासभेदस्यापि प्रयोजकत्वाविवक्षायाम् । उपस्त्वेन । स्वस्य समीपमुपसन्तेन । यद्वेऽच्छन्दस्यसर्वनाम । अथासर्वनामस्थानमित्युक्तेः फलमाह । शसादिरित्यादिना । अस्य लाघवार्थेत्यादिः । इक. । इकृशतिपाविति विहितस्येक । विवक्षित इति । एतन्मते प्राञ्चेत्यादुदाहरणम् । नन्वत्र न गोश्वन्निति सूत्रेण निषेधो भविष्यतीति कथमेतदुदाहरणमत आह । छन्दसीत्यादि । निषेध । साचेकाच इति प्राप्तस्य निषेधः । तस्यापि । न गोश्वन्निति निषेधस्यापि । लक्ष्यविरोधादिति । अत्र विभक्तेरुदात्तताया दर्शनं नकाराविवक्षायामुपपद्यते । यदि तु नकारस्य विवक्षा तदेतन्न लक्ष्यद्विन्तु प्राञ्चेत्याद्येव तद्वा सामान्यतस्तस्य निषेधस्य प्रवृत्तौ तदेवोदाहरणमस्यापि सूत्रस्येति प्रतीचस्त्वन्तोदात्तत्वमेतन्न चाप्रवृत्तौ नोपपद्यते नकारस्य विवक्षितत्वे तु एवन्न स्यादिति लक्ष्यविरोध स्पष्ट । आकरेति । पदमञ्जर्यादीत्यर्थः । तत्र द्यश्वेरितिसूत्रस्य चाविति सूत्रबाधकतोक्ता । सा यद्यत्र नकारस्य विवक्षा स्यात्तदा चावित्यस्य नुमाक्षरनकारेऽस्त्वताविव प्रवृत्त्याऽस्य सूत्रस्य तु तथाप्रवृत्त्या न सङ्गच्छतेति

ति भविष्यति । विकृतिग्रहण इति । प्रथमैकवचनपरकं यानिति यान्त इति वा तद्विकृतिरूपमेवेति भावः । आगमसहितेति । यानित्यस्यनुमागमविशिष्टत्वात् । लोकिकेन तन्मध्यपतितन्यायेनासिद्धिमाह । तन्मध्येति । य एकाच् । यः शब्द एकाजित्यर्योऽस्त्विति भावः । ततः परेति । दोष्णा दोषभ्यामित्यत्र प्रथमैकवचने यः शब्द एकाच् दोःशब्दस्तस्मात्पराऽस्तीति भावः । नन्वेवमपीति । सौ सप्तमीबहुवचने यदेकाज्रूपन्ततः परा विभक्तिः स्थानिवद्भावेनास्ति । स्थानिवद्भावेन तत्त्वबुद्धिजमनीटिति भावः । अत एव । स्थानिवद्भावस्वीकारादेव । मम तु । स्थानिवद्भावेन तत्त्वबुद्धिस्वीकर्तुं मम तु । न दोष इति । शुनः शुनेत्यत्र श्वभ्रित्यत्र य एकाच् तस्यैव सर्वे सर्वपदादेशा इति न्यायेनतत्त्वबुद्ध्या तस्मात्पराया विभक्तिस्तस्या उदात्तत्वे प्राप्ते न गोश्वन्निति निषेधस्य प्रवृत्त्या निषेधोदाहरणासङ्गतिरूपो दोषो नास्तीति भावः । वारणादिति । दोषभ्यामित्यत्र स्थानिवद्भावेन प्रसक्तस्य दोषस्य वारणात् । दोष्णा इत्यत्र तु;न दोषः । सप्तमीबहुवचने य एकाच्दोःशब्दस्ततः परा न विभक्तिः किन्तु दोषन्नादेशस्य य आदेशस्ततः परा । परम्परया स्थानिवद्भावप्रवृत्तौ मानाभावादिति भावः । एवमेव त्वयेत्यत्र दोषं वारयति । त्वयेत्यादाविति । प्रथमैकवचनप्रकृतेः । युष्मच्छब्दस्य । अविधानादिति । युष्मच्छब्दस्य त्व अदित्यादेशस्तस्य स्थाने त्वय् इत्यादेशेऽपि यः प्रथमैकवचने एकाच् ततो न विभक्तिरिति भावः । रूपविवक्षायाः फलान्तरमप्याह । किञ्चेति । न गोश्वन्निति निषेध इति । अत्र गोशुनोः प्रतिषेधो ज्ञापक इत्यर्थः । इति भाष्यमेवेति । तत्र हि सप्तमीबहुवचनस्य ग्रहणम् । कथं ज्ञायते । यदयन्न गोश्वन्नुमावर्वर्णेति गोशुनोः प्रतिषेधं शास्ति । कथङ्कृत्वा ज्ञापकम् । यदि प्रथमैकवचनस्य ग्रहणं स्याद्गोशुनो प्रतिषेधवचनमनर्थकं स्यादित्युक्तम् । अत्र कैयटः । गोषु श्वस्विति सप्तमीबहुवचने एकाच् स्वाद्गोभ्यां श्वभ्यामित्यादौ विभक्तेः प्राप्तमुदात्तत्वम्प्रतिषिध्यते प्रथमैकवचनग्रहणे तु प्राप्त्यभावात्प्रतिषेधोऽनर्थकः । प्रथमैकवचने हि यदेकाच्छब्दरूपङ्गौरित्यौकारान्तम् च तस्मात्परतोयादिर्विभक्तिः परामवतीति प्राप्त्यभावात्प्रतिषेधेनेति भाव इति । रूपविवक्षायामप्यतिप्रसङ्गमाह । स्यादेतदिति । कैयटोक्तेति । तेन श्वादेशेऽसमुदाहरन्ति । एभ्य एभिरिति, सप्तमीबहुवचने

एध्वित्यशादेशे कृते भवत्येकाच् । प्रथमैकवचने त्वयमित्येकाच् न भवतीति स्वराप्रसङ्ग इत्युक्तम् । तेनापि । कैयटेनापि । अर्थभेदात् । स्त्रीत्वविशिष्टार्थवाचकत्वमस्त्वेनार्थभेदादित्यर्थ । इति निषेधादिति । तस्मिन्नपि सूत्रे सप्तमीबहुवचनग्रहणेन तत्र एत्वप्रवृत्तिप्राक्कालेऽवर्णान्तत्वमस्तीत्याशयेन शङ्क्यम् । प्रथमैकवचनेति । तस्मिन् सूत्रे तथैव सिद्धान्तात् । इष्टापत्तेरिति । इष्टस्यैव भवता साधनात् । ननु प्रागुक्तं सर्वानुदात्तत्वद्वयमत आह । एभिरत्र इत्यादि । अन्तोदात्तादुत्तरपदात् । अनित्यसमास इत्यस्यार्थे प्रतियोगितया विशेषणीभूतमनित्यसमासपदं व्याचष्टे । नित्यशब्दस्येति । वाशब्द उदात्तः । समासस्वरेण वाशब्द उदात्त. अग्निचितेति । अग्नौ चेरिति क्विप् । यदुक्तंनित्याधिकारविहितेत्यादि तस्य फलमाह । यस्त्विति । पदमात्रेत्यत्र मात्रपदमवधारणे । इति विग्रह इति । अत्र विद्यमानत्वस्याधिक्यात् समस्यमानपदमात्रघटितत्वं विग्रहस्येति निरुक्तमनित्यसमासत्वमत्र क्षतबहुव्रीहेः । इदश्चेति । नित्याधिकारविहितसमासादन्यत्रेति यत्तदित्यर्थः । वृत्त्याद्यनुरोधेनेत्यनेन भाष्यानुरोधाभावे उक्तः । भाष्यान्तरविरोधोऽप्यस्तीत्याह । उपपदमपीति । अन्यथा । एतादृशनित्यसमासभेदस्यापि प्रयोजकत्वाविवक्षायाम् । उपस्त्वेन । स्वस्य समीपमुपसन्तेन । अन्त्येऽच्छन्दस्यसर्वनाम । अत्रासर्वनामस्थानमित्युक्तेः फलमाह । शसादिरित्यादिना । अस्य लाघवायेत्यादि: । इक । इक्शतिपाविति विहित स्येकः । विवक्षित इति । एतन्मते प्राञ्चेत्यादुदाहरणम् । नन्वत्र न गोश्वन्निति सूत्रेण निषेधो भविष्यतीति कथमेतदुदाहरणमत आह । छन्दसीत्यादि । निषेध. । सावेकाच इति प्राप्तस्य निषेध. । तस्यापि । न गोश्वन्निति निषेधस्यापि । लक्ष्यविरोधादिति । अत्र विभक्तेरुदात्ताया दर्शनं नकाराविवक्षायामुपपद्यते । यदि तु नकारस्य विवक्षा तदेतत्र लक्ष्यद्विन्दु प्राञ्चेत्यादावेव तदा सामान्यतस्तस्य निषेधस्य प्रवृत्तौ तदेवोदाहरणमस्यापि सूत्रस्येति प्रतीचस्त्वचोदात्तत्वमेतत्सूत्राप्रवृत्तौ नोपपद्यते नकारस्य विवक्षितत्वे तु एवञ्च स्यादिति लक्ष्यविरोध. स्पष्ट । आकरेति । पदमञ्जर्यादीत्यर्थः । तत्र च्वाचेरितिसूत्रस्य चाविति सूत्रबाधकतोक्ता । सा यद्यत्र नकारस्य विवक्षा स्यात्तदा चावित्यस्य लुप्ताकारनकारेऽञ्चताविव प्रवृत्त्याऽस्य सूत्रस्य तु तत्राप्रवृत्त्या न सङ्गच्छेतेति

ति भविष्यति। विकृतिग्रहण इति । प्रथमैकवचनपरकं यानिति यान्त इति वा तद्विकृतिरूपमेवेति भाव.। आगमसहितेति। यानित्यस्यनुमागमविशिष्टत्वात। लौकिकेन तन्मध्यपतितन्यायेनासिद्धिमाह । तन्मध्येति। य एकाच। य शब्द एकाजित्यर्थोऽस्त्विति भाव:। तत. परेति। दोषा दोषभ्यामित्यत्र प्रथमैकवचने य. शब्द एकाच् टो शब्दस्तस्मात्पराऽस्तीति भाव। नन्वेवमपीति। सौ सप्तमीबहुवचने यदेकाज्रूपन्तत: परा विभक्ति: स्थानिवद्भावेनास्ति। स्थानिवद्भावेन तत्त्वबुद्धिजननादिति भाव । अत एव । स्थानिवद्भावस्वीकारादेव। मम तु। स्थानिवद्भावेन तत्त्वबुद्धिस्वीकर्तुर्मम तु। न दोष इति । शुन. शुनेत्यत्र श्वस्वित्यत्र य एकाच् तस्यैव सर्वे सर्वपदादेशा इति न्यायेन तत्त्वबुद्धा तस्मात्पराया विभक्तेस्तस्या उदात्तत्वे प्राप्ते न गोश्वन्निति निषेधस्य प्रवृत्त्या निषेधोदाहरणासङ्गतिरूपो दोषो नास्तीति भाव.। वारणादिति । दोषभ्यामित्यत्र स्थानिवद्भावेन प्रसक्तस्य दोषस्य वारणात्। दोष्णु इत्यत्र तु।न दोष.। सप्तमीबहुवचने य एकाचदो.शब्दस्तत: परा न विभक्ति. किन्तु दोषन्नादेशस्य य आदेशस्तत. परा। परम्परया स्थानिवद्भावप्रवृत्तौ मानाभावादिति भाव । एवमेव त्वयेत्यत्र दोष वारयति। त्वयेत्यादाविति। प्रथमैकवचनप्रकृते। युष्मच्छब्दस्य। अविधानादिति। युष्मच्छब्दस्य त्व अदित्यादेशस्तस्य स्थाने त्वय् इत्यादेशेऽपि य प्रथमैकवचने एकाच् ततो न विभक्तिरिति भाव। रूपविवक्षाया: फलान्तरमप्याह। किञ्चेति। न गोश्वन्निति निषेध इति । अत्र गोशुनो प्रतिषेधो ज्ञापक इत्यर्थ। इति भाष्यमेवेति। तत्र हि सप्तमीबहुवचनस्य ग्रहणम्। कथं ज्ञायते। यदयत्र गोश्वन्साववर्णेति गोशुनो' प्रतिषेधं शास्ति। कथङ्कृत्वा ज्ञापकम्। यदि प्रथमैकवचनस्य ग्रहण स्याद्गोशुनो प्रतिषेधवचनमनर्थकं स्यादित्युक्तम्। अत्र कैयट: । गोषु श्वस्विति सप्तमीबहुवचने एकाच्त्वाद्गोभ्यां श्वभ्यामित्यादौ विभक्ते. प्राप्तमुदात्तत्वमतिषिध्यते प्रथमैकवचनग्रहणे तु प्राप्त्यभावात्प्रतिषेधोऽनर्थक । प्रथमैकवचने हि यदेयाच्छब्दरूपङ्गौरिस्यौकारान्तत्र च तस्मात्तृतीयादिर्विभक्ति' परामभवतीति प्राप्त्यभावात्किम्प्रतिषेधेनेति भाव इति। रूपविवक्षायामप्यतिप्रसङ्गमाह। स्यादेसदिति। कैयटरीत्येति। तेन श्वन्यादेशेऽयमुदाहरन्ति। एभ्य एभिरिति सप्तमीबहुवचने

र्थः । असर्वनामस्थानविभक्त्याक्षिप्तस्यार्थवत इत्यस्य विशेषणतायामूढ इत्यस्य विशिष्टत्वे एकाजभिन्नादूठोऽर्थवतः परादित्यर्थो वाच्यः स चासम्भवग्रस्तः । ऊठोऽर्थवत्त्वासम्भवादित्यपि बोध्यम् । ननु आक्षिप्तं विशेष्यमर्थवत्पदार्थस्तत्र ऊडभेदो बाधित इत्यूडित्यस्य ऊड्घटिते लक्षणा भविष्यति तदभेदश्च न विशेष्येऽर्थवति बाधित इत्यत आह । तद्घटितेति । ऊड्घटितेत्यर्थः । अस्तिहीति। तया चैकाज्ग्रहणमूडित्यस्य विशेषणमिति भावः । इद शब्दस्य चैकाज्ग्रहणं विशेषणमस्त्वेव । आभ्यामित्यत्र सम्भवस्येमकाभ्यामित्यत्र व्यभिचारस्य च सम्भवात् । एवञ्चोपात्तस्येदमित्यस्य तद्विशेषणम् । पदादयश्च पद्दन्न इति सूत्रनिर्दिष्टा येऽधास्तेषु निशपर्यन्तानामेवैकाच्त्वस्य सम्भव इति तद्विषये आह । एतम्पदाद्य शेऽपीति । प्रकृतेरिति । अग्रेतन इत्यर्थः । अत एव । उपात्तविशेषणत्वादेव । इदमेव ध्वनयितुम् । उपात्तविशेषणत्वमेव ध्वनयितुम् । जूरेत्येति । ज्वरधातोः क्विपि ज्वरत्वरेति सूत्रेण वस्योपधायाश्च स्थाने ऊडादेशः । तस्योदाहृतमिति । जूरिति नोदाहृतमित्यर्थः । जूरित्यस्य तदुदाहृतत्वे एकाज्ग्रहणस्य प्रकृतिविशेषणत्वेऽपि चत्वभावशङ्का स्यादिति भावः । तदप्राप्तेरिति । तृतीयादिविभक्तिरित्यस्य तस्मिन् सूत्रे उपादानादिति भावः । एनानिति । द्वितीयाटौस्स्वेन इत्येनादेशः । सर्वानुदात्तत्वमिति । एनादेशोऽनुदात्तः । विभक्तित्वानुदात्तेति भावः । यत्तत्र सूत्रेऽसर्वनामस्थानविभक्तिरुदात्तेति व्याख्यातन्तत्र युष्मदस्मदोर्विभक्तिरिति सूत्रभाष्यात्तृतीयादिविभक्तिरित्यस्य सावेकाच इति सूत्रादनुवृत्तेर्लाभादिति केचित्तन्न युक्तमित्याशयेनाह यद्यपीत्यादि । भाष्यादिति । एवं हि तत्रोक्तम् । विभक्तित्वे किम्प्रयोजनम् । विभक्तित्वे प्रयोजनमिप्रतिषेधः । इदानीम् । न विभक्तौ तुस्मा इति प्रतिषेधः सिद्धो भवति । यद्यविद्गिमोत् । वा प्रे सन्दोग्यमे । साईमामा इत्यत्रापि प्राप्नोति । तौ चोक्तम् । किमुक्तम् । विभक्तौ तवर्गप्रतिषेधोऽतद्धित इति । इदमो विभक्तिस्वरश्च प्रयोजनम् । २ । इतः । इह । इदमस्तृतीयादिर्विभक्तिरुदात्ता भवतीत्येष स्वरः सिद्धो भवतीति भाष्ये । अत्र कैयटः । इत इति सुप्यमुदाहरणमत्र लित्स्वरे प्राप्ते ऊडिदमित्युदात्तत्वं भवति । इहेत्यत्र तु प्रत्ययस्वरेणान्तोदात्तत्वं सिध्यति । ननु मध्येऽपवादन्यायेनान्तोदात्तो भविता-

भावः। इहापि मूलेऽस्य चुस्वरबाधकत्वोक्ता। नन्वस्य सूत्रस्यासमासे चारितार्थ्यात्कथञ्चुस्वरबाधकत्वमत आह। अचोत्तरपदादितीति। उत्तरपदेन समासाक्षेपे सति तस्य विशेष्यत्वमुत्तरपदभूताश्चतेस्तद्विशेषणत्वन्तथा च यादृशो वाक्यस्तमाह। तेनोत्तरेत्यादिना। तदपवाद इति। चावित्यस्यापवाद इत्यर्थः। अस्य तदपवादत्वमुपपादयति। लुप्ताकारेति। सावकाशमिति। एवञ्चापवादत्वोक्तिर्विरुद्धा। समाधत्ते। तत्रेत्यादिना। दध्यश्चेत्यत्र पूजायामकारलोपाभावेन चावित्यस्याप्राप्त्याऽस्य सूत्रस्य तत्र प्राप्त्या तदप्राप्तियोग्येऽपि विषये प्राप्तिरित्येतावताऽपवादत्वाभावशङ्का न युक्ता तत्र न गोश्वन्निति निषेधेन चारितार्थ्यस्य विरहादिति भावः। दध्यग्भ्यामिति। अत्रालोपाभावेन चावित्यस्य नकारलोपस्य सत्त्वेन न गोश्वन्निति निषेधस्य चाप्राप्तिरिति भावः। तत्रापि। दधीच इत्यत्रापि। पराच इत्यादावस्य चारितार्थ्यमाशङ्क्य निराचष्टे। नचेत्यादिना। इष्टत्वादिति। अत एव भाष्ये चौरनिगन्तोऽञ्चतावप्रत्यये। चुस्वरादनिगन्तोऽञ्चतावप्रत्यय इत्येतद्भवति विप्रतिषेधेन। चुस्वरस्यावकाशः। दधीचः पश्य। अनिगन्त इत्यस्यावकाशः। पराङ् पराञ्चौ पराञ्चः। इहोभयम्प्राप्नोति। पराचा। पराचे। अनिगन्त इत्येतद्भवति विप्रतिषेधेनेत्युक्तम्। न च चुस्वरस्य दधीच इत्यत्र चारितार्थ्यम्प्रदर्शितमिह तु भवता चुस्वरस्याधित्वाचेश्छन्दसीत्यस्य प्रवृत्तिरुच्यत इति विरोध इति वाच्यम्। अवकाशप्रदर्शनपरभाष्यस्य लौकिकोदाहरणविषयत्वात्। सति शिष्टेति। भाष्ये विप्रतिषेधन्दूषयित्वा सति शिष्टत्वेनैवानिगन्त इत्यस्य चुस्वरबाधकतोक्ता। एतस्यापि। अचेश्छन्दसीत्यस्यापि। पराच इत्यादौ प्रकारान्तरेणाप्यप्रवृत्तिमुपपादयतामतमाह। केचित्त्विति। अत एव। अन्तोदात्तादित्यस्य सम्बन्धादेव। ननु धातुस्वरेणाद्यतिरन्तोदात्त एवेत्यत आह। सामर्थ्यादिति। अन्तोदात्तादित्यन्तद्विशेषणसामर्थ्यादित्यर्थः। विभक्त्युत्पत्तिकालावच्छिन्नमिति। यस्या विभक्तेरर्थं स्वरो विधीयते तदुत्पत्तिकालावच्छिन्नमित्यर्थः। उडिदम्। इति च वर्त्तत इति। एकाजुभ्योऽन्तोदात्तेभ्य एभ्यः परा सर्वनामस्थानविभक्तिरुदात्ता। अत्रानुवर्त्तमानमेकाज्ग्रहणं यत्र अकर्म तदाह। तत्रैकाजिति। पथ्यभिधार्दिति। ऊगस्त्यपठ् सूत्रप्रवृत्तियोग्यबोधकतया तस्यैकान्त्याव्यभिचारादित्य-

पद्युवा। अणद्युवे इति भाष्यमेव मानमित्यर्थः। यद्यूठ उदात्तत्वन्न निपातितं स्यात्तदा विभक्तेरन्तोदात्तात्परत्वाभावेनोदात्तत्वाप्राप्त्योठ्युपधाग्रहणं कर्त्तव्यमित्यस्याद्युवेत्यत्र प्रयोजनकथनमसंबद्धं स्यादिति भावः। उपधाग्रहणं कर्त्तव्यमित्यस्योपधाभूतऊठ् ग्राह्य इत्यर्थः। अन्यथा पञ्चमीनिर्देशादन्त्य एव गृह्येतेति बोध्यम्। ततः परत्वन्तु येन नाव्यवधानन्यायेन अत एव। ऊठ उदात्तस्य निपातनादेव। तत्त्वात्। अन्वादेशत्वात्। तेन। सूत्रोपात्ता इति कथनेन। तेन। एकाच इत्यस्य सम्बन्धेन। ग्रहणेऽपि। पदादिशब्देनोपस्थितावपि न दोषः। नोक्तषट्त्वसङ्ख्याहानिः। मध्योदात्तमेवेति। अप्राप्तेरिति शेषः। भाष्यकैयटयोरिति। एतच्च प्रागुपपादितम्। भाष्ये ध्वनितमिति। अष्टनो दीर्घादिति सूत्रस्थदीर्घग्रहणस्यात्वं वैकल्पिकमित्यर्थं ज्ञापकत्वोपपादनेनेति शेषः। अत एव। अन्तोदात्तत्वादेव। भाष्यकैयटयोः स्पष्टमिति। प्रकृतसूत्रस्थदीर्घग्रहणस्य कृतात्वस्य षट्संज्ञा भवतीत्यत्र ज्ञापकतोक्त्या स्पष्टमित्यर्थः। शतुरनुमो नद्यजादी। बहुव्रीहिरिति। स च शतुर्विशेषणमिति शेषः। अन्यपदार्थ इति। नुमार्धधातुकस्यादुपदेशात्परत्वाभाव इत्यर्थः। तुदन्तीत्यादावेकादेशस्य प्रत्ययद्वयसम्बन्धिवर्णद्वयापेक्षत्वं शतुरित्यस्य तु न पूर्वप्रत्ययसम्बन्धिवर्णापेक्षत्वमिति शतुरित्यस्यान्तरङ्गत्वमित्याशयेन शङ्कामभ्युपेत्य निराचष्टे। न चेत्यादिना। तेन। श्रूयमाणशतृविशेषणत्वेन। मुञ्चतीत्यादाविति। शे मुचादीनामित्यनेन मुच्धातोरेव नुमागमसत्त्वेन शतुरनुम्कत्वमेव। कस्य चिन्मतमाह। अन्तोदात्तादितीति। न स्यादिति। यदि तदन्तस्यान्तोदात्तादिविशेषणं स्यात्किन्तु शतुः स्यात्तदाऽदुपदेशात्परत्वेन शतुर्निघातात्तुदतीत्यत्र न स्यादिति तद्भावः। अत एव। शतुर्विशेषणत्वादेव। अनुम इत्यस्य पञ्चम्यन्ततयाऽन्तोदात्तादित्यस्य तत्पञ्चम्यन्तं यद्विशेषणं तस्यैवेदमपि विशेषणमतस्तत्सार्थक्यमिति भावः। अयुक्तवत्त्वमुपपादयति। तुदतीत्यत्रेत्यादिना। तत्त्वेनेति। उदात्तत्वेनेत्यर्थः। अन्तोदात्तत्वस्य व्यपदेशिवद्भावेन। तस्मात्। अनभ्यस्तो हि नात्र शतृविशेषणं यतो हेतुस्तत इत्यर्थः। तस्य। पञ्चमीसमासेन स्थानिवद्भावस्य। वार्त्तिकवैयर्थ्यमाशङ्क्य निराचष्टे। यद्यपीत्यादिना। इत्यादीनामन्तेति। किन्त्वत्र विभक्तेरनुदात्तत्वादेः प्रत्ययस्वरेणाद्युदा-

वित्यं तं स्वरं विभक्तिस्वरो बाधते न लित्स्वरम्। नैष दोष। ऊडिदमित्यंत-सूत्रं लितीत्यत्रानुवर्त्तते तेन लित्स्वरम्बाधित्वा विभक्तिस्वरो भवतीति। लितीत्यत्र ऊडिदतित्यस्यानुवृत्तौ न कैयटोक्तिरेव प्रमाणद्विन्लित इत्यत्र विभक्तिसंज्ञाप्रयोजनप्रदर्शनपरभाष्यमेव। अस्य भाष्यस्यैकदेश्युक्तित्वमुपपादयति। तत्रैवेति। एतद्वृत्त्युक्तः। ऊडिदमिति सूत्रस्य प्रवृत्तेरुक्तः। अत्र पञ्चम्यास्तसिलिति विहितस्य विभक्तिसंज्ञा सत्त्वेऽपि तृतीयादित्वमास्तीत्यस्य स्पष्टप्रतीतेः। यत्त्वे तद्भाष्यग्रन्ययोजनार्थङ्कैयटेन तृतीयादिग्रहणेन च तृतीयामारभ्य प्राग्दिशः प्रत्यया विभक्तिसंज्ञा गृह्यन्त इत्युक्तम्। तन्न युक्तम्। अन्यत्र तृतीयादिरित्यनेन तृतीयादि सुपामेव प्रतीतेर्द्दष्टत्वादिष्टार्थान्तरकल्पनायाभाष्यान्तरादर्शनादिति। लक्ष्यविसम्वादाच्चेति। अत्रेत इत्यस्याद्युदात्तत्त्वैव। दर्शनेनेत इत्यस्यान्तोदात्तत्वकल्पनमन्याय्यमिति भावः। ये लक्ष्मिन् सूत्रे सावेकाच् इत्यस्याप्यनुवृत्तिन्दर्शयन्ति तन्न युक्तमित्याह। सावेकाच् इति लितीति। एष्विति रूपादिति। सौ यदेकाज्रूपन्दृष्टन्तत परेत्यर्थस्य माक् प्रदर्शनादित्यर्थः। प्रष्ठवाडिति। वक्ष्येति ण्विप्रत्ययान्तोऽत्र वाट्शब्दः। वचनम्। ऊठुपधेति वचनम्। व्यवहार एवेति। स्वरानुवादस्य सत्त्वेन स्वरोद्देश्यकविधित्वादिति भाव.। अत एव। स्वरोद्देश्यकविधावेव स्वरविधावित्यस्य प्रवृत्तेरेव। अत्र। अत्रद्युवेति प्रयोगे। ऊठ्छ्यो शूडित्यूठ्। अन्तोदात्तोऽयमिति। अयमत्रद्युशब्दोऽन्तोदात्तो भवतीत्यर्थ.। ततो विभक्तावुवङादेश उदात्तस्यानिकत्वे नोदात्त इति मध्योदात्तोऽयम्। तत्रानुनासिकस्य क्विझलोरित्यत क्विझलोरित्यनुवर्त्तते। तत्र क्विझलोरिति विषयसप्तमीत्याशयेनात्र क्विपि विवक्षित इति प्रतिपादितम्। यदि त्वियम्परसप्तम्येव तदा तुल्यत्वादनुनासिके चेत्यपि *तथा स्यादिति प्रतिसन्धायाह। क्विपि परत इति।* मतिशिष्टः स्यादिति। अनुनासिकादिप्रत्ययोत्पत्युत्तरकालिकोपस्थितिकतया मतिशिष्टः स्यादित्यर्थ। न स्यादिति। तथा चेष्टस्य स्योम इत्यस्यान्तोदात्तस्य प्रयोगस्य सिद्ध्यर्थमनुनासिक इति सप्तम्या विषयसप्तमीत्वमावश्यकमित्येकवाक्यघटकयोर्निमित्तत्वे नोपात्तयोः क्विझलोरित्यत्रापि विषयसप्तम्येवेति भावः। इदमेव भाष्यमिति। ऊठुपधापदग्रहणं व्यर्थमस्य मा भूदिति। अ-

द्युदात्त एवेति नुट. शीर्षेश्वाऽनियमान्तोदात्तत्वस्याभावेन मतुप उदात्त त्वन्न स्यादत आह। शिरस इति । छन्दस्युदात्तस्य शीर्षञ्झानित्यतोऽस्य दर्शनमत्रमानम्। वार्त्तिकमेतदिति । वार्त्तिकैकदेशस्य निबन्धनमेतत्। वार्त्तिकस्वरूपन्तु मतुबुदात्तत्वं रेग्रहणमित्याकारकमेव। अत एव । मतुपि यो ह्रस्व इति व्याख्यानादेव। अत्र ह्रस्व इत्यस्य हृष्ट इति शेषो बोद्धव्य। अन्यथा। नामन्यतरस्यामित्यत्र मतुप्पदानुवृत्त्यभावेन ह्रस्वान्तादन्तोदात्तात्परो नाम्शब्द इति व्याख्याने । दीर्घेनामीति दीर्घे । चरितार्थमिति । तत्र न तिसृचतसृिति दीर्घस्य निषेधात्। अन्योक्तमवकाशप्रदर्शनन्दूषयति। चतसृणामितीति। आद्युदात्तत्वादिति। आद्युदात्तनिपातनमादेशस्याद्युदात्तत्वादित्यर्थः। पक्षे। नामन्यतरस्यामित्यस्यवैकल्पिकत्वात्तदभावपक्षे। व्याख्यानादिति। जयन्तीनामित्यादिलक्ष्ये विभक्तेरन्तोदात्तत्वादिदर्शनमूलकव्याख्यानादित्यर्थः। वेत्यनुवृत्तेर्नेहेति। वेत्येतत्समानार्थकान्यतरस्यामित्यस्यानुवृत्तिरित्यर्थ । आद्युदात्तमेतदिति। चतुरदुपदेशात्परत्वेन निघाते कृतेऽनुदात्तयोः शवकारशवकारयोरेकादेशः सोऽप्यनुदात्त एव। ङीप् चानुदात्त इति धातुष्वरेणाद्युदात्त.। षट्त्रिचतुर्भ्यो । एभ्य. परा हलादिर्विभक्तिरुदात्ता। प्रियचीन् पञ्चत्यादीति। एतेन गौणेऽप्यस्य प्रवृत्तिरिति प्रागुक्तं स्मारितम्। अत्र यद्वक्तव्यमिति। गौणेऽपि प्रवर्त्तत इत्यादि तत्रोक्तमित्यर्थः। न गोश्वन्मा। सौत्रत्वादिति। अवर्णपदस्य वर्णग्रहणपरिभाषया तदन्तपरत्वेऽपि तस्य सावित्वे तद्विशेषणमपि चत्वेनामामर्थ्यादप्राप्तो इन्द. सौत्रत्वाद्भवतीत्यर्थ.। सप्तम्यलुक् चेति। सौत्रत्वादिति शेषः। पाठिकस्वर इत्यर्थ इति। एवं व्याख्यानेन विभक्तिस्वरस्य मतुप्स्वरस्य च सङ्ग्रहो ध्वनितः। तन्न्यायानुमरणे। अनन्तरस्येति न्यायानुमरणे। अनमभावादिति। अभावस्य भावप्राप्तिपूर्वकत्वस्य न्याय्यत्वादनन्तरस्येत्यनेन नैकस्यैव प्रहणमिति भावः। एवञ्च। पाठिकस्वर इत्यर्थस्वीकारे च। न भवतीति। सावर्णान्तत्वाच्च भवतीत्यर्थ.। देवी इति। पञ्चादिगणे देवशब्दिति पाठात्। टित्वान्ङीप् । तस्मिन्नस्येति चेत्यकारलोपः। अनन्तरस्येति न्यायाननुसरणेऽनुदात्तस्य च यत्रेत्यस्यापि बाधः स्यादिति भावः। प्राचीनोक्तमुक्तसूत्रव्याख्यानमयुक्तमित्याशयेनाह। यस्मि-

न्त्वामध्योदात्तत्वमेव। सूत्रेणामिद्धेरिति। बहुव्रीहौ पूर्वपदप्रकृतिस्वरविधा
नेनानुदात्तत्वादिति भावः। तस्याप्यप्रवृत्तेरिति। वार्त्तिकस्याप्यप्रवृत्तेरित्य
र्थः। इत्यन्तोदात्तत्वादिति। उणादीनामव्युत्पन्नत्वादिति शेषः। विदुषीति।
विदेः शतुर्वसुरिति वस्वादेशः। बहुतितजा इति। ईषदपरिसमाप्तास्तितउर्व
हुतितजरित्यर्थोऽत्र न ब्राह्मणीपदसामानाधिकरण्यानुपपत्तेः। किन्तु बहवः
स्तितवो यस्या इति बहुव्रीहिः। बहूनि तितजनीति वा। तित उपरिपवनमि
ति भाष्यात् [अन्तोदात्तत्वमस्याह। बह्वोरिति। अत्र। उदात्तयण इति सूत्रे।
ननु प्रमादय इत्यनुपपन्नः अप्रकृतत्वादत आह। प्रमवेति। सुभ्रूरिति। ऊङ
प्रत्ययस्वरेणोदात्ततया ब्रह्मबन्ध्वित्यप्यन्तोदात्तमिति बोध्यम्। एतेनान्तोदा
त्तादित्यस्यानुवर्त्तमानस्याबाधोध्वनितः। ङ्स्वनुड्भ्याम। अत्रान्तोदात्तादि
त्यनुवर्त्तमानमेकदेशस्य ङ्स्वेत्यस्य विशेषणम्। ङ्स्वेत्यत्र वर्णग्रहणे तदन्त
ग्रहणम्। ग्रहणवतेति। तदनुबन्धकपरिभाषयेति शेषः। अधिकरणे किरिति।
उपपदसमासे कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वम्। उदात्त इति। अस्विद
धीति सूत्रादुदात्तग्रहणानुवृत्तेरित्यादि। इपुराद्युदात्त इति। छन्दसि चादे
रित्यत इदित्यनुवर्त्य ईपे किर्श्वेत्यनेन निदित्यधिकारीयस्योप्रत्ययस्य विधा
नात्। मरुत्वानितीति। तसौ मत्वर्थे इति भसंज्ञया पदत्वस्य बाधाज्जशत्व
न। व्यञ्जनस्याविद्यमानवद्भाव प्रकृतेरन्तोदात्तत्वव्यवहारायावश्यक इत्यभिप्रा
यिकामाग्रहाश्रिराचष्टे। न चेति। यद्यप्ययमपि विधि स्वरोद्देश्यकस्तथापि
निमित्तत्वावच्छेदकतयोपात्तस्वरव्यवहारस्य व्यञ्जनेन प्रतिबन्धो नैत्येवच
स्याते एवञ्च स्वरमात्रनिष्ठावच्छेदकताकव्यवहारो भवति। इह तु ङ्स्वस्या
पि निमित्ततावच्छेदकतयोपादानात्तन्निष्ठावच्छेदकत्वव्यवहारप्रतिबन्धो भव
त्येवेति भावः। अत एव। स्वरोद्देश्यकविधौ तत्प्रवृत्तेरेव। अत एव। उक्तवि
षये प्रवृत्तेरेव। अत एव हन्निति। उक्तरीत्या स्वरविधाविति परिभाषयाऽ
स्य ग्रहणादेव। विषय एव नास्तीति। मरुत्वानित्यत्र ङ्स्वान्तात्परो मतुबि
ति व्यवहारे कर्त्तव्ये विषयो नास्तीत्यर्थः। पर एव। अन्तोदात्तादित्यनुवृ
त्त वाक्यभेदेन नुड्ग्रहणमपीति भावः। ननु ग्रयते स्वाङ्गे गिर किप
त्ययुदन्त गिरस इति तस्य स्थाने य गोपवादेश नोऽपि निदन्तत्वादा

न्तमेव। अस्तीत्याह। इह याभ्यो ब्राह्मणीभ्यस्ताभ्यो ब्राह्मणीभ्य इति विधिश्च सिद्धो भवति प्रतिषेधश्च। अस्तु तर्हि प्रथमैकवचनस्य ग्रहणम्। तेनेति स्वर पुंसि न सिध्यति। न चावश्यं पुंस्येव स्त्रियां पुंसि नपुंसके च। तेन ब्राह्मणेन तया ब्राह्मण्या। तेन कुण्डेनेति। सप्तमीबहुवचनस्यापि ग्रहणे एष दोषो भवति। तस्मादुभाभ्यामपि प्रतिषेधे यत्तदोश्च ग्रहणङ्कर्त्तव्यम्। न गोश्वन्साववर्णराडङ्क्रुड्कृद्भ्यो यत्तदोश्चेति भाष्य उक्तम्। एतेन भाष्यग्रन्थेन साविकाच इति सूत्रे सावित्यनेन सप्तमीबहुवचनस्य ग्रहणं रूपविवक्षा च न गोश्वन्निति सूत्रे तु प्रथमैकवचनस्य ग्रहणं रूपा विवक्षा चेति निर्णय इति प्रतीयते। एतेन। उपलक्षणविधया सुपरकालविशिष्टावर्णान्तलक्ष्याश्रयणेन। अदोषादिति। ग्र ग्रहणवैयर्थ्यरूपदोषाभावादित्यर्थः। अत एव। अस्मादेव। अत एव। स्वर निषेधेऽपि कर्त्तव्ये नलोपामिद्धत्वस्य प्रवृत्तेरेव। यदि निषेधे कर्त्तव्ये नलोपा सिद्धत्वं स्यात्तदाऽनडादेशस्य यो नकारस्तस्य लोपे कृते प्रत्ययलक्षणेनावर्णान्तस्य सुपरत्वाद्धस्वनुड्भ्यामित्यस्य प्रतिषेधः स्यात्। साविकाच इति सूत्रे यथा रूपविवक्षा तथा प्रकृतसूत्रेऽपि रूपविवक्षा तदेकवाक्यत्वादित्याशयेनाह। वस्तुतस्त्विति। उत्पत्तिकालावच्छिन्नमिति। प्रथमैकवचनोत्पत्तिकालावच्छिन्नमित्यर्थः। अत एव। अत्रापि रूपविवक्षाऽस्त्वादेव। वेतस्वानित्यत्रेति। सौ यदवर्णान्तं रूपन्तत परत्वाभावेऽपि वेतसशब्दस्य प्रथमैकवचनोत्पत्तिकाले-ऽवर्णान्ततया तत परत्वान्निषेधशङ्का या कृता सा सुयोजा। ड्मतुपो मतुब्ग्रहणेन न ग्रहणमिति त्वन्यत्। अत एव। पूर्वाकार्यस्य विवक्षा सत्वादेव। नन्वेव यत्तच्छब्दात्परविभक्तेः प्रतिषेधो न प्राप्नोतीत्यत आह। यत्तदर्थमिति। अत एव। तादृशार्थविवक्षा सत्वादेव। न निषेध इति। विभक्त्युत्पत्तिकालेऽवर्णान्तत्वाभावादिति शेष। राडिति राजृ दीप्ताविति धातोः क्विबन्तस्य रूपम्। आद्यः। प्राश्वेत्यत्र। ननु प्राश्वेत्यत्र न साविकाच इत्यस्य प्राप्तिस्तत्र यादृगस्येवद्रूपन्तादृशरूपकात्परत्वाभावादत आह। अश्चेश्छन्दसीतीति। अस्त्यैव। प्रत्यश्चेत्येतत्। स्यादेवेति। साविकाच इत्यनेनाचेश्छन्दसीत्यनेन वास्यादेव। लुप्तनकारस्याञ्चेरिति। तत्र हि दधीच पश्य त्युदाहरणमुक्तम्। नन्वेवमृतीचो याङनित्यत्राञ्चेश्छन्दसीति प्राप्तस्य स्वरस्य प्रतिषेधः स्यात्तथा चोदात्तविभ

ति। लक्ष्यविरोधात्। वीरवत्तममित्येतल्लक्ष्यविरोधादित्यर्थः। एतेन। अनन्तरस्येति न्यायेनोक्तयोरेव बाधकथनेन। आत्त्विक इति। अक्षैर्दीव्यतीति ठक्। पूर्वोक्तन्यायेनानुदात्तम्पदमित्यस्य बाधाभावस्य सिद्धावपि तत्र प्रकारान्तरमप्यस्तीति सूचयन्नाह। अनुदात्तम्पदमित्यादि। स च वर्णान्तत्वात्प्राप्तमतिप्रसङ्गं वारयति। ऊडिदमित्यस्येति। साविस्यस्य तत्र सप्तमीबहुवचनबोधकत्व रूपस्य च विवचेति प्रागव्यवस्थापितमिति गर्वा गतेत्यत्र न प्राप्तिरित्याशयेनाह। नन्वत्रेति। ननु स्वरे कर्त्तव्ये स निषेधो भवति वार्त्तिके स्वरे इत्युक्तत्वादिति कथन्निषेधे कर्त्तव्ये स्थानिवत्त्वनिषेधोऽत आह। अत एवेति। स्वरे निषेद्धव्येऽपि तस्य निषेधस्येष्टत्वादेव। सुगुपाल इति। शोभना गावो यस्य स सुगुस्तस्य पाल इत्यर्थः। स्वरो न। पूर्वपदाद्युदात्तत्वम्। किन्तु पूर्वपदस्यानुदात्तत्वमेव भवति समासस्येत्येतदेकयतापन्नशेषनिघातात्। इति कारोक्तमिति। निषेधोदाहरणमिति शेषः। परास्तम्। गोग्रहणे न गुशब्दस्याग्रहणात्परास्तम् प्राप्तिरेव निषेध इविधर्नास्तीति भावः। तथा चात्र यः स्वरो भवति तमाह। एवञ्चेति। भवत्येवेति। नञ्सुभ्यामित्यनेन सुगुशब्दस्यान्तोदात्तत्वात्। ननु शुनश्चिच्छेपमित्यपि कथमुदाहरणम्। सप्तमीबहुवचने श्वसुइति दर्शनादत आह। अत्रेति। बाहुलकात्। व्यत्ययो बहुलमिति बहुलग्रहणात्। ततः परेति। श्वन्निति रूपात्परेत्यर्थः। अदैन्यूनविकारस्य मत्त्वादेकदेशविकृतन्यायस्य प्रवृत्तिः। एवञ्च पदपाठकाले पठ्यमाने शुनः शेपमित्यत्र संहितायाञ्च शुन इत्युदाहरणमिति बोध्यम्। सावेकाच इतिवत्सप्तमीबहुवचनशङ्कां वारयति। नत्विति। व्याख्यानादिति। प्रकृतसूत्रस्यभाष्यदर्शनमूलकव्याख्यानादित्यर्थः। तत्र हि साविति किमिदम्प्रथमैकवचनस्य ग्रहणमाहोस्वित्सप्तमीबहुवचनस्य। कुतः सन्देहः। समानो निर्देशः। पुरस्तादेव निर्णयः सप्तमीबहुवचनग्रहणमिति। इहापि तदेव भवितुमर्हति। यदि सप्तमी बहुवचनस्य ग्रहणन्ताभ्यां ब्राह्मणाभ्याम्। याभ्याम् ब्राह्मणाभ्यामत्र न प्राप्नोति। विधिरप्यत्र न सिध्यति। किङ्कारणम्। न ह्येतद्भवति यत्सौरूपम्। इदन्तर्हि तेभ्यो ब्राह्मणेभ्यो येभ्यो ब्राह्मणेभ्यः। विधिश्च सिद्धो भवति। निषेधस्तु न प्राप्नोति। अस्ति सप्तमीबहुवचनस्य ग्रहणे किञ्चिदिष्टं सङ्गृहीतम्भवति प्रागेविद्योपा

ष्ठेत्यस्याप्युपदेश इत्युपदिश्यमानाकारान्तत्वात्कृतेऽनुनासिकलोपे हतो हथ इत्यत्र प्राप्नोति । यदि त्वकारेणोपदिश्यमानं विशेष्यते तदोपदिश्यमानं यदकारान्तमित्यर्थो भवति तदात्र न भवति । यस्याकारान्तस्य स्वरूपबोधनतात्पर्येणाद्योच्चारणमपि कल्पकन्तदेव तथा भवति । प्रकृते तु नकारान्तस्य यत्स्वरूपत्वाद्बोधतात्पर्यकमाद्योच्चारणमिति भावः । तदुक्तमकृतसूत्रभाष्ये कथमिदं विज्ञायते अकारो य उपदेश इति आहोस्विदकारान्तं यदुपदेश इति । किञ्चातः । यदि विज्ञायते अकारो य उपदेश इति हतो हथ इत्यत्रापि प्राप्नोति । अथ विज्ञायते अकारान्तं यदुपदेश इति न दोषो भवतीति । न च समुदायबोधनतात्पर्येणावयवस्याप्युच्चारणात्कथमेतदिति वाच्यम् । समुदायोच्चारणस्य कार्यार्थत्वात्समुदायोपदेशे तात्पर्यन्तन्निष्पादकतया त्ववयवानामत्येकमनुपदिश्यमानत्वम तु ईति समुदायस्य तत्त्वमित्याशयात् । आत्मनेपदेति । परस्मैपदस्य तिपस्थेदयमादेशस्तदाश्यानियद्भावेन पित्त्वादेवानुदात्तत्वं सिद्धमिति भाव । आत्मनेपदैकवचनेकृतेऽयनेन निघाते तस्योच्चारणामित्रिमुपपादयति । एकवचम इति । स्वरेपीति । तथा च नानुदात्तस्य अवणमिति भावः । फले विशेष । अनुदात्तस्य अवणे न विशेष । उपदेशविशेषणत्वादिति । उपदेशशब्दार्थो यउपदिश्यमानस्तद्विशेषणत्वादित्यर्थः । सामर्थ्यादिति । येन विधिरितिसूत्रबोधिततदन्तविधिस्थलेऽन्तशब्दस्य चरमावयववाचकतयाऽनुवन्धानामनेकान्तत्वपक्षे ङित्पदार्थस्यैकं ष्ठकाङकारस्यानवयवस्य चरमावयवत्वाभावेन विशेषणसामर्थ्यादवयवत्वमेव भविष्यति । ननु शप उपदेशे पान्तत्वेन कथमुपदेशेऽदन्तत्वमत आह । स चेति । शप् चेत्यर्थः । अकारभक्तत्वादिति । चङ्गस्यातो सुगित्यर्थेनायमकारस्यावयवन्यायादित्यर्थः । मुग्विधानसामर्थ्याद्वर्णग्रहणे यदागमा इति परिभाषा न प्रवर्त्तत इति वादिमताभिप्रायेणाशङ्का तन्मतमभ्युपेत्यैव समाधत्ते । न चेत्यादिना । भावादित्यन्तेन । ननु स्वभक्त्यावयवाकारस्यैवाशौ मुक् न तु श्येति समुदायस्येति कथमुपदिश्यमानं यदन्तात्तद्ग्रहणेन ग्रहणमत आह । वक्ष्यमाण इत्यादि । यचन्तो त्वत्राप्य सूत्रस्याप्रवृत्तिमाशंकते । नन्वित्यादिना । नित्यत्वात् । कृताकृतप्रसङ्गित्वेन नित्यत्वात् । अन्तरङ्गत्वात् । एकादेशस्य वर्णमात्रापेक्षत्वेनान्तरङ्ग-

त्यन्तप्रयोगविरोध इत्यत आह । प्रतीचो वाड्‌निल्यादीति । क्वन्तिर्वेति। उभयोरपि क्वदिति रूपस्य सम्भवेन विनिगमनाविरहादिति शेषः । दिवो झ-ल । दृभिरित्यवोडिदमित्यस्य तत्रान्तोदात्तग्रहणानुवृत्तेरप्राप्तिमाशङ्कते,न-न्वित्ति । निपात्यत इति । अत्र च दिवो झलिति निषेधशास्त्रारम्भ एव मान-म् । सामर्थ्यादिति । यदि विभक्तिस्वरः स्यात्तदा तदेकवाक्यतापन्नशेषनिघाते-न प्रकृतेरनुदात्तत्वं स्यादिति निपातनस्य वैयर्थ्यापत्तिरिति भावः । अन्तरङ्गे-ति । प्रथमप्रवृत्तिकेत्यर्थः । प्रकृतिस्वरस्य । फिट्स्वरस्य । बाधेन । उत्तरकालप्र-वृत्तिकत्वे नेत्यादिःन्ट चान्यतरस्याम्‌निषेधविकल्पे विधिविकल्पपर्यवसानादा-ह मूले,वोदात्तेति । स्थानिवद्भावेनेति । न च स्थानिवद्भावस्य गोः पूर्वत्वगित्वा-त्स्वरेष्वित्यनेन निषेधात्कथमिह प्राप्तिरिति वाच्यम् । पूर्वत्वादिसाहचर्येण गोशब्दसम्बन्धेन विहितस्य प्रतिषेधात् । इदम् । प्रकृतसूत्रे झलीत्यनुवर्त्तत इत्येतत् । न च साविकाच इत्यनेन न्ट चेत्यनेन वा विभक्त्यदात्तत्वविधाना-त्फलतो न विशेष इति वाच्यम् । साविकाच इत्यस्य नित्यत्वस्य तु वैकल्पिक त्वमिति विशेषात् । ननु क्व चिन्नरीति रूपमाद्युदात्तमुपलभ्यते तस्य कथमुपप-त्तिर्यतो झलादित्वविरहेण न्ट चेत्यस्याभावेऽपि पूर्वोक्तरीत्या स्थानिवत्त्वेन सा-विकाच इत्यस्य प्राप्तेरित्यत आह । वेदे क्व चिदिति । एतेन । छान्दसत्वकल्प-नया व्यत्ययो बहुलमिति स्वरव्यत्ययकल्पनेन । इष्टसिद्धिरिति । न्ट चेति सूत्र-बोधिताभावांशस्यैव प्रवृत्तिरिति नरीति प्रयोगे साविकाच इत्यपि न प्रवर्त्तते तेनैवाद्युदात्तत्वसिद्धौ छान्दसव्यत्ययकल्पनमन्याय्यमिति भावः । विधायकत्व-शङ्केति । नेत्यस्यासम्बन्धेन विधायकत्वशङ्केत्यर्थः । तित्स्वरितम् । तितिप्रत्यय-ग्रहणङ्कर्त्तव्यमिति वार्त्तिकमूलकव्याख्यानादाह । तिप्रत्ययस्येति । क्व नून-मित्यपाठः मूलेऽपि दर्शनात् । क्वापरमित्यस्योपलक्षणं वा । कर्त्तव्यमिति । अत्र तव्यस्याद्युदात्तत्वम् । पर्यायेणेति । शेषनिघातप्रयोजकस्य स्वरितस्य पर्यायेण प्रवृत्तिः स्यात्र तु युगपदेवानयोः । तथैवान्वत्र युगपदित्यनेन स-मावेशाभावबोधनात् । तास्यनुदात्तेत् । न तु तास्यनुदात्तेङ्दामिति । व्यभि-चाराभावादिति शेषः । कर्मधारय इति । एतत्फलमुत्तरत्र व्यक्तं भविष्यति । इत्यत्रापि स्यादिति । समुदायोपदेश एवावयवोपदेश इति इत्युपदेश एव

परतो लोप श्नमोऽवयवस्य भवति सार्वधातुकश्वाजभल् समुदायरूपमित्यच स्वाद्दृशसमुदायसम्पादकस्यापि लोपमातिनिमित्तत्वमित्याशयेन शङ्केयम्। परोक्तमभ्युपेत्यैव समाधानमाह। सति शिष्टोऽपीति। वस्तुतस्तस्याच समुदायघटकत्वेन निमित्ततावच्छेदकत्वमेव न तु निमित्तत्वमनुदात्तस्य ध य श्वेत्यनेन यदनुदात्तस्योदात्तत्वेऽपश्नतिनिमित्तता तस्यैवानुदात्तस्योदात्तविधानमिति स्वीक्रियते तदात्र न तस्य सूत्रस्य प्राप्तिरिति बोध्यम्। न तूपदेश इति। प्रागेतदुपपादितम्। निघ्नशब्दादिति। मूर्त्तविभुजादित्वेन विधीयमानकप्रत्ययान्तनिघ्नशब्दप्रकृतिकाचारक्विबन्तादित्यर्थः। एतेन। उक्तार्थकनिघ्नशब्दादिति कथनेन। दीव्यमान इत्यपीति। अत्र हि श्यन उपदिश्यमानाकारान्तापरत्वं स्पष्टमेव। दीव्यमान इत्यपि प्रत्युदाहरणमयुक्तम्। श्यना नित्त्वेन तदन्तस्याद्युदात्तत्वेन तदेकवाक्यतापन्नगिवारेण प्राप्तस्यापि तास्यनुदात्ते दित्यनुदात्तस्यैवेहानुदात्तस्यैव श्रवणादित्याशयेनाशङ्कां निराचष्टे। न चेति। लसार्वधातुकस्वरम्। लस्य स्थाने जायमानसार्वधातुकस्य यत्प्रत्ययस्वादाद्युदात्तत्वन्तत्। सार्वधातुकस्वरमात्र ति। अत्र मात्रपदं कार्त्स्न्ये। तथा च चानशश्चित्वप्रयुक्तमन्तोदात्तत्वमपवत्स्येवेति भाव। भाष्ये व्यवस्थापितत्वादिति। स च हि सार्वधातुके यगिति कमजाचिनि मार्वधातुके विधीयमानो यक यथा स्यादित्येवमर्थं इमं कर्तृग्रहणं कर्त्तव्यमिति वात्ति कज्ञतोऽत्रम्। तत कथात्र विशेष यको वा श्यना वा। यकि सत्यन्तोदात्तत्वेन भवितव्यम्। श्यनि सत्याद्युदात्तत्वेन। श्यन्यपि सत्यन्तोदात्तत्वेनैव भवितव्यम्। कथम्। श्यन्स्वर श्नन्स्वर बाधिष्यते सति शिष्टत्वात् श्यन्स्वर प्राप्नोति। आचार्यप्रवृत्तिर्ज्ञापयति सति शिष्टोऽपि विकरणस्वरः सार्वधातुकस्वर न बाधते इति। यदयतासे परस्य लसार्वधातुकस्यानुदात्तत्वं शास्ति। लसार्वधातुक एवैतज्ज्ञापकं स्यात्। नेत्याह। अविशेषेण ज्ञापकमिति प्रतिपादितम्। विन्दीन्धिखिदिभ्यो न। तास्यनुदात्ते दिति सूत्रभाष्येऽस्य वचनस्यानुपलम्भादाह मूले एतच्चानुदात्तस्य चेति। तत्र हि। अनुदात्तस्य यत्रेत्र यस्मिन्ननुदात्ते उदात्तो लुप्यते तस्यानुदात्तस्योदात्तत्व विधीयते तत्र याद्दृशस्थले समुदायरूपेऽनुदात्ते उदात्तलोपस्तत्र समुदायावयवस्यान्त्यादेशेऽनेनोदात्तत्व विधीयते इतियिचा

त्वं स्वरस्य सार्वधातुकसंज्ञकसमुदायापेक्षत्वेन बहिरङ्गत्वमिति भावः। स
त्प्रवृत्तावपीति। उभयत आश्रयणे इत्यस्यानङ्गीकारेणेत्यादिः। अपवर्गस्य
भेदस्य। परत्वव्यवहारस्य पूर्वपरयोर्यत्र भेदस्तत्रैव प्रवृत्तिरिति भावः। इष्टा
पत्तेरिति। एकादेशस्थले स्वराप्रवृत्तावपीष्टापत्तेरित्यर्थः। ननु पचन्तीत्या
दावेतत्सूत्रेणान्त्यस्यानुदात्तत्वाभावे सति शिष्टेन प्रत्ययस्वरेणान्तोदात्तत्वाप
त्तिरतआह। पचन्तीति। मतान्तरमाह। स्वरभिन्नस्येति। एकादेशात्पूर्वमेत
त्सूत्राप्रवृत्तावनुदात्तस्यैकादेशे एतदप्रवृत्तौ नूदात्तस्येति स्वरभिन्नस्येत्यर्थः। प
रमेकादेशो न नित्यउभयोरीत्यास्वरोऽप्यनित्य इति भावः। अन्तरङ्गत्वमपि स्व
पडयति। पूर्वपर इति। दीर्घे। अतो दीर्घो यञीति दीर्घे। स्वरात्पूर्वमस्य प्र
वृत्तिः परत्वाद्बोध्या। पचेदित्यत्र तु परत्वादियादेशेऽपि स्वरस्य गुणात्पूर्वप्र
वृत्तिः। इति परिभाषया। इति परिभाषयाऽदन्तमुद्दिश्यमानप्रत्ययसंज्ञकमेव
गृह्यते। तेनेति शेषः। जहि मघुमन्तिक इति। अत्र जादेशात्परस्य निघा
तोऽन। सा। प्रत्ययाप्रत्यययोरिति परिभाषा। एतस्याकारान्तोपदिश्यमानेति
व्याख्यानम्परिभाषाप्रवृत्तितात्पर्यकमेवेति बोध्यम्। परिभाषाभावे त्वाह। छा
न्दस इति। तत्र। जहीत्यत्र। अनुदात्ते प्रयोक्तव्ये उदात्तस्य प्रयोगश्छान्दस
त्वात्। अस्त इति। अदिप्रभृतिभ्य इति लुकि बलवत्तरे कृते प्रत्ययलक्षणसू
त्रस्य विधायकत्वपक्षे ज्ञापकोपन्यासः। तस्य सूत्रस्य नियमार्थत्वमिति पक्षे
प्राप्तिरेव नास्तीत्याह। प्रत्ययलक्षणस्येति। प्रसङ्गादिति। स्वरस्य निरूपणप्र
सङ्गादित्यर्थः। तस्यानुदात्तत्वे प्राप्ते। धातोः शेषनिघाते प्राप्ते, सेर्ह्यपिच्चे
त्यपित्त्वे सप्रत्ययाद्युदात्तत्वेन हेरुदात्तत्वाच्छेषनिघातस्य प्राप्तिः। यत्र प
रत्वेऽस्य प्रवृत्तिस्तत्रैवाद्युदात्तत्वस्य प्रवृत्तिरिति तदाशयः। वस्तुतो ना
यन्नियम इत्याशयेनाह। यदि त्विति। प्रत्ययत्वाद्युदात्तत्वयोः सन्नियोगेनाद्यु
दात्तत्वस्याप्रवृत्तौ प्रत्ययसंज्ञापि न स्यादिति शब्देस्वाभावापत्तौ हृयक इति
निर्देशानुपपत्तिरिति भाव। परत्वे त्वन्वाचय इति। यत्र परत्वस्य बाधकानव
तारस्तत्रतत्प्रवर्त्तते आद्युदात्तत्वन्तु तदभावेऽपीत्याकारकइत्यर्थः। अत एव। प
रत्वाभावेऽपि प्रत्ययसंज्ञाङ्गीकारादेव। इत्वार्थमिति। धातोर्हेस्स दर्यत्येनेम
इत्वविधानात्। तदसत्। मर्यादाशब्दसमत्। वर्ण्यमानमर्यादेति। सार्वधातुके

मूले विन्दीन्धिखिद्भ्यो नेति वक्तव्यमित्येवाभिहितमत्र तेभ्यो लिङ्स्तङोऽनुदात्तत्वे प्रतिषिद्ध इत्यभिहितमित्यत्र लिङ इत्यप्रकृताभिधानमिति दूषणम्परिहृतम्। अत्र लिङ्ग्रहणस्योक्तवार्त्तिके स्थितत्वात्। ता- नुदात्तेदिति सूत्रभाष्य इति। अत्र भाष्य इति कथनेन न तादृशं वचनं । किन्तु तत्तत्प्रयत्नकाम्यत इति सूचितम्। तथा हि। तत्र हि तुदत इत्यत्रादुपदेशात्परत्वात्सावधातुकं वचनम्पचत इत्यत्र शप उपदेशे पकारान्तत्वाच्च प्राप्नोतीत्याशयेनैतद्दोषमङ्गानङ्गकर्त्तव्यमिति वार्त्तिककृतोक्तम्। ततोऽनेकान्ता अनुबन्धा इत्याश्रितपक्षेण समाधाने कृते यद्यनेकान्ता अनुबन्धाः। अदिप्रभृतिजुहोत्यादिभ्यः प्रतिषेधो वक्तव्यः। अत्तः। जुहुत इति अदुपदेशादित्यनुदात्तत्वमाप्नोति एवम्पूर्वपक्षे वार्त्तिकानुसारिणा कृते स्थान्यादेशाभावात्। नैवात्र स्थानिवत्त्वे वादेशयमश्याम इति प्रत्याख्यानवादिनोक्तम्। आदेशोऽभावरूप इत्यदुपदेशात्परत्वमस्ति स्थानिवद्भावयात्स्थिधिस्वात्प्रतिषिध्यत इति भाव.। तत समाधानान्तरमभिहितमनुदात्तङिद्ग्रहणाद्वा। अथ वा यदयमनुदात्तङिद्ग्रहणङ्करोति तज्ज्ञापयत्यागयर्चो न लुक् श्नुविकरणेभ्योऽनुदात्तत्वमवतीति। नैतदस्ति ज्ञापकम्। असमर्थमेतत्स्यात्। विन्दाते। खिन्दाते इति। एतेनाभिधानेन विन्दाते खिन्दात इत्यत्र लसार्वधातुकानुदात्तत्वम्भवतीति लभ्यत इति। प्रौढिवाद इति। अनुदात्तस्य च यत्रेति सूत्रभाष्यपठितवचने लसार्वधातुकानुदात्तत्वमेति नकारस्य साक्षादभिधानादस्य भाष्यस्य प्रौढिवादत्वमित्यर्थः। किञ्चाकारान्तादुपदिश्यमानादित्यर्थेन पचत इत्यादिसिद्धावितदोषमङ्गानमित्यस्यानुपयोग एव। किञ्चानेकान्तपक्षेण समाधानमपि क्लिष्टम्। तस्यास्थिरत्वात्। एकान्तपक्षेऽप्युद्रीचाम्माङो व्यतीहार इति। निर्देशेनावयविप्रयुक्तकार्येष्वनुबन्धा न प्रतिबन्धका इति कल्पनया पचत इत्यादौ दोषाभावश्चेति। आदिः सिचो। प्रत्ययग्रहणपरिभाषया सिच इत्येतत्तदन्तपरम्। याशिष्टमिलीति। बहुलञ्छन्दस्यमाङ्योगेऽपीत्यट्प्रतिषेधः। मध्योदात्तमिति। यमरमनमातामिति जातस्येटः सिज्ञ्लावयवतया उदात्तत्वेन मध्योदात्तम्। मा हि कार्ष्टाम्। अत्र लङ्प्रतिषेधो माङः प्रयोगादेव। हि चेति निघातस्य प्रतिषेधः। कृधातोः सिचि वृद्धिरिति वृद्धि। प्रत्ययस्वरेण:। अत्र सिचोऽनचकत्वेन स्वरायोग्यतय

र । यद्यनुदात्तश्चेति सूत्रे कर्त्तव्ये इति सूत्रादन्त इत्यनुवर्त्तते तदाश्चेति पक्षस्य यदि नानुवर्त्तते तदा आदेरिति पक्षस्य सम्भव । अनयो पक्षयो प्रकृतसूत्रेऽन्त इति नानुवर्त्तते इति युक्तमित्याभाति । अयचश्चित्करणसामर्थ्यात् । तद्धि इयन्नयमित्यत्र द्विविशब्दावयवेकारस्यायच्प्रत्ययावयवाकारे लोपेऽयचश्चित्वेऽपि तस्यान्तरतम्यादनुदात्ततया तदादेरनुदात्तत्वेन तस्मिन्नादिभूते उदात्तलोपादुदात्तनिवृत्तिस्वरेणाद्युदात्तत्वे प्राप्ते अन्तोदात्तत्वं यथा स्यादित्येवमर्थम् । यदि त्वस्मिन् सूत्रेऽन्तपदानुवृत्तिस्तदा चित्वाभावेऽपि तयपोऽनुदात्तस्यायजादेशोऽन्तरतमोऽनुदात्तस्तस्मिन्नुदात्तलोपे सति तस्यायचोऽन्तस्योदात्तत्वमनुदात्तस्य च यत्रेत्यनेनैव सिद्धमित्ययजादेशस्य चित्वं व्यर्थं स्यात् । इत्यमन्तपदाननुवृत्तिस्तदाऽयचश्चित्वसामर्थ्यादेवानुदात्तस्य चेत्यनेनादेरुदात्तत्वं विधीयत इति पक्षस्य लाभ । तथान्तग्रहणाननुवृत्तिपक्षे विद विचारणे खिद दैन्य इति धातुभ्याम्परस्य लस्य स्थाने आतामित्यादेशे तस्य लसार्वधातुकानुदात्तत्वे कृते श्नमोऽवयवस्य श्नमोरल्लोप इत्यनेन लोपे विन्दाते खिन्दाते इत्यत्राकारेऽनुदात्ते प्रत्ययत्वादुदात्तस्य श्नमोऽवयवस्य लोप इति तस्यातामोऽवयवस्याकारस्योदात्तनिवृत्तिस्वरेणोदात्तत्व सिद्धाति यद्यन्तपदानुवृत्तिस्तदेकारस्य प्राप्नोतीति दूषणमादौ भाष्येऽभिहितम् । ततोऽन्तग्रहणमनुवर्त्तत इत्यभिप्रायेणास्तु तर्ह्यादि । आदिरिति चेदिन्धीतइयमित्यन्तोदात्तत्व विधेयम् । इन्धीतेत्यत्रेन्धेर्लिङ् । तङ् । तस्यानुदात्तेदित्यनुदात्तत्वम् । सीयुट् स चागमानुदात्तत्वेनानुदात्त । श्नम् । श्नसोरल्लोप इत्यल्लोप. । श्नान्नलोप इति नलोप । अत्रेकारेऽनुदात्ते श्नमोऽवयवस्याकारस्योदात्तस्य लोप इत्युदात्तप्रसङ्ग । इयमित्यत्र यस्येति चेत्यल्लोपस्य जातत्वेनायच आदावनुदात्ते उदात्तस्य लोप इत्याद्युदात्तप्राप्नोतीति भाव' । एवम्प्रतिपाद्य अस्तु तर्ह्यादि कदाचो भवतीति । नन्न चोक्तमादिरिति चेदिन्धीतइयमित्यन्त इत्यन्तोदात्त विधेयमिति । इन्धीन्धिखिदिभ्यश्च लसार्वधातुकानुदात्तत्व मिङि नेति वक्तव्यमित्युक्तं वार्त्तिककारेण । ततो भाष्यकृतोक्तम् । मिङ्ग्रहणेन नार्थ' । विन्दीन्धिखिदिभ्यश्च लसार्वधातुकानुदात्तत्वं नेत्येव । इदमपि सिद्धभवति विन्दाते खिन्दाते । अयचि चित्करणसामर्थ्यादन्तोदात्तत्वम्भविष्यतीति । एतेनाच

भाष्ये यगर्थमिति । तत्र हि प्रकृतसूत्रे णेट् उदात्तविधानादस्य सूत्रस्य मिथो-
ष प्रवृत्तिर्भविष्यतीत्यभिप्रायेण सेड्ग्रहणद्विमर्थम्न यशीडन्तोविल्वयेवोच्यत ।
इडन्तोविल्युच्यमाने इहापि प्रसज्येत पपकुय । नैतदस्ति प्रयोजनम् । अच
- इति वर्त्तते । इदन्तर्हि प्रयोजनम्पपायेत्युक्तम् । आदिर्णमुलीत्यत आदिरन्य-
मञ्चानुवर्त्तते । न च सौत्रान्तपदार्थेन सहादिपार्थस्य विरोध: । पर्यायेण प्रवृ-
त्तिसम्भवादन्नेव वक्ष्यति । कार्यविकल्पार्थमिति । पक्षे । प्रकृतसूत्रप्रवृत्त्यभाः
वपक्षे । लित्स्वरइति । एवञ्च यलो लित: पूर्वस्यादेरुदात्तत्वविधानेन लुलदि-
थेत्यत्र लकाराकारस्य त्रयाणां स्वराभावे-ऽदात्तत्वम् । कार्यविकल्पार्थमि-
ति । कार्यिण: स्थानिनो विकल्पार्थमित्यर्थ: । आदिर्णमुलीति सूत्रस्यान्यतर-
स्यामित्यस्य तत्र कार्यविकल्पसम्पादकत्वस्य सम्प्रतिपन्नतया तस्येहापि का-
र्यस्योदात्तस्य विकल्पबोधकता स्यादिति भाव. । ननु यदि प्रकृतसूत्रस्थवा-
यदर्थेन कार्यिविकल्प एव क्रियते तदा कार्यस्य कथं विकल्प इत्यत आह ।
अन्यतरस्यामिति । एतेन तदप्यनुवर्त्तत इति बोधितम् । इत्यादाविति । आ-
दिना तवैचास्तय युगपदित्यस्य परिग्रह. । पपिथेत्यादाविति । भारद्वा नियम-
मादादेडागमस्तदेत्यादि: । न चोक्तरीत्या सिद्धाविह सेड्ग्रहणवैयर्थ्यमिति
वाच्यम् । पपक्थेत्यत्र दोषोपपादनपरभाष्यबलेन थलीत्यनेन थलो निमित्त-
स्य सद्भावो यत्र तस्य सर्वस्य कार्यं स्यात् । इड्ग्रहणात्तु यत्रेट् तत्र तस्यापि
कार्यमित्यस्य कल्पनसम्भवात् । उपोत्तमं रितीति । अत्र सौवर्य: समस्यस्तदन्तसम-
स्य इत्यनेन तदन्तस्योपोत्तमङ्ग्राह्यन्तेन प्रत्ययावयवस्यापि कार्यमित्याश-
येन मूलेरित्यन्तस्य इति व्याख्यातम् । नन्वाह्वर्मायेति समुदायस्य रि-
त्प्रत्ययान्तत्वाभावात्कथमेतदुदाहरणमतोऽत्रोपोत्तममिति सूत्रप्रवृत्ते: फलमा-
ह । ततो गतिसमास इति । तत: । उपोत्तममिति सूत्रप्रवृत्त्यनन्तरम् । प्रत्यय-
स्वरा इति । प्रत्ययसम्बन्धिन: स्वरा इत्यर्थ: । एवञ्च प्रत्ययनिमित्तक: प्रत्यय-
स्यैव वा य: स्वर: स सर्वोऽपि सङ्गृहीत: ॥

॥ इति प्रत्ययस्वरविवरणम् ॥

प्रत्ययस्वरेण तामादेशस्योदात्तत्वं नान्तोदात्तत्वम्। नन्वत्र सिचश्चित्त्वेन तद्विषये न प्रकृतेरित्यस्योपस्थित्या कामश्ब्दावयवाकारस्योदात्तत्वेन भाव्यमित्यन्तोदात्तत्वमित्यनुपपन्नमत आह। सिचश्चित्त्वेनेति। एतच्चि सिच उदात्तत्वार्थम्। सिच स्वतोऽनच्त्वे आदौ भवति इटि कृते तु साच्कस्तत्राप्यागमानुदात्तत्वस्य प्रवृत्तौ सिचश्चित्त्वं व्यर्थमिति भावः। सानाभावादिति। ना हि कार्ष्टामित्यत्र सिचः स्वरायोग्यतया सति शिष्टत्वेन सार्वधातुकप्रत्ययस्य प्रत्ययाद्युदात्तत्वमप्रत्येव। एतस्य प्रत्ययस्य चित्प्रत्ययप्रकृतिघटितसमुदायाघटकतया तत्र प्रत्ययाद्युदात्तत्वमभवत्येवेति भावः। ननु चित इत्यनेन सति शिष्टत्वेन प्रकृतेर्धातोरुदात्तत्वं स्यादत आह। विकरणस्वरस्येति। एतच्च प्राप्तावस्थापितमेवत्र धातुस्वरात्प्रत्ययस्वरस्य सति शिष्टतया समुदायस्यान्तोदात्तत्वं स्यादेवेति भावः। आदिः सिच इत्यस्य वैकल्पिकत्वेनैतदभावे चित्प्रत्ययस्यानुदात्तस्य यवणापत्तिरत आह। अनिट इति। अत्र वार्त्तिकेऽप्यन्यतरस्यामिति सम्बध्यते। अत एवाह। पक्षे आद्युदात्तमिति। वार्त्तिकप्रवृत्त्यभावपक्षे आद्युदात्तमिति। आदिः सिच इत्यनेनेति शेषः। पक्षे। वार्त्तिकप्रवृत्तिपक्षे। ईटः। अस्तिसिच इति विहितस्य ईटः। अयं स्वरः। अनिटः पित इति स्वरः। एतस्य प्रवृत्तावन्तोदात्तम्पदं स्यात्। समाधत्ते इटः पूर्वमिति। ईडागमप्रवृत्तेः पूर्वमित्यर्थः। इतर्थ ति लोपात्प्रागिति शेषः। ईटस्तदा न प्राप्तिरङ्गत्वाभावात्। एवञ्चेटो बहिरङ्गत्वन्तत्कालाप्राप्तिकत्वरूपमनिटः पित इत्यस्यान्तरङ्गत्वन्तु तत्कालप्राप्तिकत्वरूपम्। स्वरे कृते। तिप उदात्तत्वे कृते। ततो लोपे कृते इति शेषः। सत्त्य इति। पित्वावच्छिन्नोद्देश्यकत्वेन लक्ष्ये लक्षणस्येति न्यायस्यात्र प्रवृत्तिर्बोध्या। न च स्वरात्प्रागितर्थ त्यस्य प्राप्तिः। स्वरस्य ततः परत्वेनादौ प्रवृत्तेः। न च लोपो नित्यः। स्वरभिन्नस्य प्राप्त्या तस्याप्यनित्यत्वादिति भावः। अत एव। ईटः स्वरस्यानिटत्वादेव। यच्चानिट इत्यस्य प्रवृत्त्योदात्तयवणभवति तदुदाहरणमदर्शयितुमुचितमिति भावः। मतान्तरमाह। भाष्योदाहरणेति। उपलक्षणत्वादिति। तथा च ना हि कार्ष्टादित्यप्युदाहरणमित्यर्थोपलक्षणत्वादित्यर्थः। लक्ष्यभेदेनेति। लक्ष्यव्यक्तिभेदेनेत्यर्थः। अकृते ईटि तिबवयवेकारस्य तात्परस्योदात्तत्वङ्कृते तु तस्मिस्तस्यैवेति भेदः। यस्मि च भेटोऽस्त्यो या।

दुपपदङ्कृति नञ्तस्य स्वरो बलीयानिति वक्तव्यम्। अकरणिः। अवाक्रोशे-नञ्यनिः। सहनञ्निर्द्दिष्टस्य च नञ्स्वरो बलीयानिति वक्तव्यम्। अव्ययो। अत्र जिह्वीति सूत्रेऽव्ययेति निपातनात्तातुन। सह नञ्समासे नलोपे प्रत्यय इति प्रत्ययस्वरस्य सतिशिष्टत्वेऽपि वचनान्नञ्स्वरस्तत्पुरुषे तुल्यार्थेति विहितो बलीयानित्यर्थः। अतिसः। विभक्तिस्वरान्नञ्स्वरो बलीयानिति वक्तव्यम्। अचत्वारः। अनड्वाहः। विभक्तिनिमित्तस्वराच्च नञ्स्वरो बलीयानिति वक्तव्यम्। एवं वचनारम्भेण नञ्स्वरः साधितः। भाष्ये त्वित्यनेन भाष्यकृतास्पष्टप्रतिपत्त्यर्थमनेकवचनानि यद्यप्यारब्धानि तथापि वचनेन पूर्वोक्तानामफलानां साधनापेक्षया परिगणनमध्ये नञः पृथक् पाठकरणेन भाष्यकृतैवोक्तानामप्रयोजनानामन्यथा सिद्धिः सूचितेति स एव प्रकारो लाघवाद्युक्तोऽत एव मुख्यार्थकैकशब्दोपादानङ्कृतमिति बोध्यम्। एवञ्च। चादिषु कुशब्दपाठे च। स्नात्वा कालकः। अत्र स्नात्वेत्यस्य कालकपदस्य च मयूरव्यंसकादित्वात्तत्पुरुषः॥ किमनेन। किम्परिगणनेन। अन्तोदात्तनिपातनमिति। स्नात्वा कालकशब्दोऽन्तोदात्तो मयूरव्यंसकादिषु पठनीय इत्यास्थितेत्यर्थः। इयत एवेतीति। एवञ्च स्नात्वा कालक पीत्वा स्थिरक इत्यत्र समासार्थनिपातनस्यावश्यकत्वेन तेनैव स्वरे सिद्धे परिगणनञ्च कार्यम् मामिकृतमित्यादि सिद्धिरनायासेन भविष्यति। एवञ्चापरिगणन। इव्ययपूर्वपदप्रकृतिस्वर एवास्तु। इति द्वितीयेति। अत्यन्तसंयोगे चेति समासः। मुहूर्त शब्दो लघावन्त इति मध्योदात्तस्तस्य द्वितीयान्तस्य प्रकृतिस्वरः। अन्योक्तमुदाहरणन्त्वन्यथा सिद्धमित्याह। कार्ष्ण्यतादाविति। न प्रवर्त्तत इति। स्वरविधायकसूत्रे कृत्यतुल्याख्या इत्येव सिद्धे कृत्यतुल्यार्थयोर्वियोगेन पाठादर्थपदोपादानाच्च तदंशे लक्षणप्रतिपदोक्तपरिभाषा न प्रवर्त्तत इति तेषामाशयः। अत एव कुरुगार्हपतेति सूत्रे पल्यकम्बलं संज्ञायामित्युपादाय कृत्यप्रत्ययान्तत्वात्पूर्वपदप्रकृतिस्वरे सिद्धे पल्लकम्बलः संज्ञायामेवेति नियमार्थमिदमिति भाष्यकैयटयोरुक्तम्। विशेषणसमास इति च व्याख्यातम्। कृत्यतुल्याख्येति प्रतिपदोक्तः समासस्तु दुर्लभः। कम्बलपदस्य जातिवाचकत्वात्। कश्चिदिति। अनारुचिवीजन्तु परिनिष्ठितविभक्त्या समासप्रदर्शनं परमकारकमित्यादौ

समासस्य। अन्तोऽवत्या इति सूत्रादन्त इत्यनुवर्त्तते। इलुस्वरप्राप्ताविति। अन्तशब्दस्य चरमावयववाचकतया क्वचित्समासस्य चरमावयवो हलपि स भवतीति तस्य स्थाने स्वरस्य प्राप्तिर्बोध्या। बहुव्रीहौ प्रकृत्या। अनुवर्त्तमानमिति। मण्डूकप्लुत्याऽनुवर्त्तमानमित्यर्थः। कर्षात्वत इत्यत उदात्त इति तिस्वरितमित्यत स्वरितपदमनुवर्त्तते यथादिकीरर्थे त्वाश्रीयते तदिति दर्शित इति। लक्षणयेति शेष। लाघवादाह। यद्वेति। अस्मिन्पक्षे न शब्दद्वयस्य लक्षणा इति भाव.। पूर्वपदस्थेऽपीति। तारस्य्यात्ताच्छब्द्यमिति न्यायेनेति शेष। समासस्येत्यस्यापवादोऽयम। म्यूयत इत्यादि। असुनकर्मणीति बोध्यम्। विभयवा इति। अत्र पूर्वपदस्य चित्रशब्दस्यामिचिमिदिशसिभ्य क्त इति क्तप्रत्ययान्ततयान्तोदात्तत्वेन तस्यैव स्वरस्यावस्थानान्मध्योदात्तत्वम्। समपाद इति। सम पादो यस्येत्यर्थे.। सुजो डमविति। डित्त्वाट्टिलोपे पित्त्वादनुदात्तत्वे तस्मिन्धातुस्वरेणोदात्तस्य टेर्लोपे उदात्तनिवृत्तिस्वरेणान्तोदात्तत्वे प्राप्ते त्वत्त्वसमसिमेत्यनुदात्तत्वम्। बहुव्रीहाविवत्यस्य समासस्येति सूत्रापवादत्वाद्यानेन गृह्यते। नन्विति। अत्र। समपाद इत्यादौ। अस्मिन्स्वरे। पूर्वपदप्रकृतिस्वरे। अस्य सूत्रस्यापूर्वस्वरविधायकत्वाभावादिति शेष.। प्रियविश्व इत्यादाविति। प्रियशब्दोयान्त्यस्यान्त्यात्पूर्वमित्याद्युदात्त।यश्चत्र समासान्तोदात्तत्वं स्यात्तदोदात्तद्वयसमावेशः स्यादिति भाव।एवञ्च पूर्वोक्तदोषपरिहारस्यावश्यकत्वे च। तदप्रवृत्तौ। समासान्तोदात्तत्वाप्रवृत्तौ। पादशब्दस्येति। स्वाङ्गशिटामिति पादशब्दस्याद्युदात्तत्वात्। श्लोकपादवाचकस्य तु वृषादित्वादाद्युदात्तत्वम। आवश्यकत्वे चेति। तथा सति प्रकृतसूत्राप्रवृत्तौ समासान्तोदात्तत्वं भवत्वेवेति भाव। तत्पुरुषे तुल्यार्थ। यदन्त। नीवयेवमेतियदन्त.। टच्यपि। राजाह सखिभ्य इति टच्यपि। परिनिष्ठितविभक्त्या समासपक्षाभिप्रायेण गृह्यते। नन्विति। पृथगादिति। अस्तिवात लक्षणप्रतिपदोक्तपरिभाषाप्राप्तिस्तत्तच्छब्दानुवादेन विधानात्। बाधनार्थमिति। पुनरुपादानेन परस्यापि बाधमिदिर्थमनन्तरकल्पनया भवतीति भावः। मतान्तरमाह। अव्ययीत्यर्थ्यादिना। अव्ययीत्यत्र नञुपपदे व्ययधातोर्जिद्दणीमीनि कृते व्ययीशब्दस्योपपदसमासः। विभक्तिस्वरस्य। तिसृभ्यो जस इति विभक्तिस्वरस्य। वचनान्वेवेति। तव चि य

च । उक्तरीत्या सामानाधिकरण्योपपादने च । सूत्रे प्रतिबन्धिशब्दो न स्वरूपपरः किन्त्वर्थपरो इत्यादिमञ्जरीव्याख्यानात् । पदेपदेशे । अत्रापदेश शब्दो व्याजोद्देशोलक्ष्यञ्चेति कोशात् व्याजपर इत्याशयेनोक्तम्मूले व्याजवाचिनि पदशब्द इति । निवाते वातत्राणे । अत्र निवातशब्देऽर्थाभावेऽव्ययीभावः । वातस्य बहिर्विद्यमानार्थत्वात् । बहुव्रीहिसमासमाह । निरुद्ध इति । आद्ये अव्ययीभावसमासस्वीकारपक्षे । कुव्यादिशब्दोऽत्र पक्षे स्वार्थहेतुकार्ये लाक्षणिकः । अन्त्ये । बहुव्रीहिपक्षे । तत् । सामाधिकरण्यम् । उभयत्रोत्तरपदस्य साहित्येनसमुदायस्यैतद्वाचकता बोध्या । शारदे । कर्मधारये पूर्वोत्तरपदार्थयोः सामानाधिकरण्यमप्रयोजकमित्याशयेनाह । रज्जुशब्द इति । नचात्र षष्ठीसमास एवास्त्विति वाच्यम् । अत्रापि पक्षे रज्जोः साक्षाद्बन्धनसाधनत्वानुपपत्त्या लक्षणाया आवश्यकत्वमित्याशयात् । किञ्च करणस्य शेषत्वविवक्षा स्वीकार्या तदपेक्षयोक्तरीत्या कर्मधारय उचित इति भावः । शरदि भवमिति । अच्छजलमित्यर्थः । उदाहरणे तु शारदः पीतमुक्ते स्याच्छालीनेऽप्रतिभे नवे । शारदो विषभेदे स्याद्विद्विन्ने पारदेऽपि चेति कोशात्पीतमुक्तादौ शारदशब्दो रूढः । तेनास्वपदविग्रहः । अयम् । समुदाय । दौवारिककषायशब्दे षष्ठी तत्पुरुषः । अस्य समुदायस्य जातिवाचकत्वमित्याशयेनाह । रूढिशब्दोऽयमिति । सदृशप्रतिरूपयोः । अत्र सूत्रे यत्सदृशग्रहणन्तत्तु रूपविशेषणमित्याह । सादृश्यवाचिनीति । पित्रा सदृश इत्यर्थे प्रयुज्यमानः पितृसदृश इति शब्दः पूर्वोत्तरपदार्थयोः सादृश्यङ्गमयति । तृतीयासमासे । पूर्वसदृशेति सूत्रविहिततृतीयासमासे । अलुक्समासार्थम् । षष्ठ्या आक्रोश इत्यलुक्समासार्थम् । ननु यत्र षष्ठीसमासस्तत्र तेन सूत्रेणाप्राप्त एव पूर्वपदप्रकृतिस्वरोऽनेन विधीयत इत्यस्त्वित्यत आह । षष्ठीसमासस्त्विति । तदुक्तम्भक्तसूत्रभाष्ये । तत्र सदृशप्रतिरूपसदृशग्रहणस्य प्रयोजनं यन्मातृसादौ शब्दासदृशग्रहणमनर्थकन्तृतीयासमासवचनात् । पूर्वसदृशेति तृतीयासमासेन सिद्धम् षष्ठ्यर्थन्तर्हीदं वक्तव्यम् । पितुः सदृशः पितृसदृश इति । षष्ठ्यर्थमिति चेत्तृतीयासमासवचनानर्थक्यम् । इहाप्युभाभिस्त्रैशब्दः साध्यम् पित्रा सदृशः पितुः सदृशः पितृसदृश इति तत्र द्वयोः समानार्थयोरेकेन विग्रहः । अपरेण वृत्तिर्भविष्यति । अभिरविकन्यायेन । अभि-

स्वरप्राप्तिमाशङ्कय लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति प्रतिपदं या द्विती- या तृतीया सप्तमी समासस्तस्य ग्रहणमिति भाष्ये उक्तत्वात् तु सत्याग्रेऽप्युक्त- परिभाषाप्रवृत्तिरुक्ता प्रकृत सूत्रभाष्ये । तेन तदंशे भाष्यप्रामाण्यादेव परि- भाषाप्रवृत्त्यभावे सिद्धे ज्ञापकानुपयोग इति । कुरुगार्हपतेति सूत्रभाष्याच्च । वर्णो वर्णेष्वनेते । अचानेते इत्येतत्समानाधिकरणं वर्णेष्वित्यस्य विशेषणम् । न च विशेष्य वाचकपदस्य बहुवचनान्तत्वादेकवचनान्तमनेत इत्येतत्कथं वि- शेषणमिति वाच्यम् । नञ्समासस्योत्तरपदार्थप्रधानतयोत्तरपदार्थस्यैकत्वेन समुदायस्यैकवचनान्तस्य तद्विशेषणत्वसम्भवात् । कृष्णसारङ्ग इति । अत्र व- र्णो वर्णेनेति समासः । वर्णवाचकयोः समासे वर्णवाचकस्य कृष्णशब्दस्याद्यु- दात्तत्वेन समुदायस्याद्युदात्तत्वम् । मौलमाद्युदात्तोदाहरणं लौकिकमि- ति सूचयितुमाह । वेदेष्विति । एकमिति । विशेष्यविशेषणान्यतरमित्यर्थः । प्र- त्युदाहरणेषु प्रतिपदोक्तसमासाभावादेव दोषाभावादिति भावः । गाधलवण योः । अरित्रगाधमित्यत्र षष्ठीतत्पुरुषः । अरित्रशब्द इत्रान्तत्वेन मध्योदात्त स्तस्य प्रकृतिभावे सतीकारस्यैवास्मिन् प्रयोगे उदात्तस्य श्रवणम् । दायाद्य- म् । अस्य सूत्रस्य धनदायाद इत्याद्युदाहरणन्तदा भवेद्यदि दायाद्यशब्दः स्वत्ववत्परः स्यात्तथा तु न सम्भवति कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानभाव- प्रत्ययेनेति सिद्धान्तादत एतस्य तत्परत्वमुपपादयति । दीयत इत्यादिना । दाधातोः कर्मणि घञ् । तदन्तप्रकृतिकषष्ठ्यन्तस्य आङ्पूर्वाद्दाधातोः कर्त्तरि के निष्पन्ने नादशब्देन समासः । ततो भावे ष्यञ् । प्रकृतिजन्यबोधे कर्तृत्वां- शे क्रियायाः प्रकारतया भानाभिप्रायेणदायाद्यशब्दस्य दयादानपरत्वमुक्तम् । साधाक्रियायाः कर्तृत्वसम्बन्ध एव प्रकार इत्याशयेनाह । तत्सम्बन्धो वेति । लक्षणया दायाद्यशब्दस्य दीयमानपरत्वकल्पने क्लेश इत्यतः प्रकारान्तरमाह । यद्वेति । आङ्पूर्वकाद्दाधातोर्मूलविभुजादित्वात्कप्रत्ययः आदत्त इत्यर्थो बो- ध्यः । प्रतिबन्धि । ननु गमनचिरमित्यनयोः सामानाधिकरण्यमनुपपन्नङ्गमन- शब्दस्य क्रियाकरणवाचित्वादत आह । भावप्रधानत्वादिति । तथा च गमधातो- र्भावे ल्युडिह बोध्यः । ननु तथापि कथं सामानाधिकरण्यं चिरशब्दस्य काल- वाचकत्वादत आह । चिरकृच्छ्रयोरिति । वर्तमान् । लक्षयेत्यादिः । एव-

ह । उक्तरीत्या सामानाधिकरण्योपपादने च । सूत्रे प्रतिबन्धिशब्दो न स्वरूपपरः किन्त्वर्थपरो वृत्त्यादिसम्मतव्याख्यानात् । पदेऽपदेशे । अपदेश शब्दो व्याजोद्देशौ लक्ष्यञ्चेति कोशाद् व्याजपर इत्याशयेनोक्तम्मूले व्याजवाचिनि पदशब्द इति । निवाते वातत्राणे । अथ निवातशब्देऽर्थाभावेऽव्ययीभावः । वातस्य वहिर्विद्यमानार्थत्वात् । बहुव्रीहिसमासमाह । निरुद्ध इति । आद्ये अव्ययीभावसमासस्वीकारपक्षे । कुट्यादिशब्दोऽत्र पक्षे स्वार्थहेतुकार्ये लाक्षणिकः । अन्त्ये । बहुव्रीहिपक्षे । तत् । सामाधिकरण्यम् । उभयत्रोत्तरपदस्य साहित्येनसमुदायस्यैतद्वाचकता बोध्या । शारदे । कर्मधारये पूर्वोत्तरपदार्थयोः सामानाधिकरण्यप्रयोजकमित्याशयेनाह । रज्जुशब्द इति । नचात्र षष्ठीसमास एवास्त्विति वाच्यम् । अत्रापि पक्षे रज्जोः साक्षादुद्धारसाधनत्वानुपपत्त्या लक्षणाया आवश्यकत्वमित्याशयात् । किञ्च करणस्य शेषत्वविवक्षा स्वीकार्या तदपेक्षयोक्तरीत्या कर्मधारय उचित इति भावः । शरदि भवमिति । अचिरकालमित्यर्थः । उदाहरणे तु शारदः पीतमुद्गे स्याच्छालीनेऽप्रतिभे नवे । शारदी विषभेदे स्याद्दिक्षुल्ले पारदेऽपि चेति कोशात्पीतमुद्गादौ शारदशब्दो रूढः । तेनास्वपदविग्रहः । अयम् । समुदाय । दौवारिककषायशब्दे षष्ठी तत्पुरुषः । अस्य समुदायस्य जातिवाचकत्वमित्याशयेनाह । रूढिशब्दोऽयमिति । सदृशप्रतिरूपयोः । अत्र सूत्रे यत्सदृशग्रहणन्तत्स्वरूपविशेषणमित्याह । सादृश्यवाचिनीति । पित्रा सदृश इत्यर्थे प्रयुज्यमानः पितृसदृश इति शब्दः पूर्वोत्तरपदार्थयोः सादृश्यङ्गमयति । तृतीयासमासे । पूर्वसदृशेति सूत्रविहिततृतीयासमासे । अलुक्समासार्थम् । षष्ठ्या आक्रोश इत्यलुक्समासार्थम् । ननु यत्र षष्ठीसमासस्तत्र तेन सूत्रेणाप्राप्त एव पूर्वपदप्रकृतिस्वरोऽनेन विधीयत इत्यस्त्वित्यत आह । षष्ठीसमासस्त्विति । तदुक्तमन्नत्तसूत्रभाष्ये । तत्र प्रकृतसूत्रस्थसदृशग्रहणस्य प्रयोजनं वक्ष्यमाणो शब्दःसदृशग्रहणमनर्थकन्तृतीयासमासवचनात् । पूर्वसदृशेति तृतीयासमासेन सिद्धम् षष्ठ्यर्थन्तर्हीदं वक्तव्यम् । पितुः सदृशः पितृसदृश इति । षष्ठ्यर्थमिति चेत्तृतीयासमासवचनानर्थक्यम् । इहाप्याभिरौशब्दं साध्यम् पित्रा सदृशः पितुः सदृशः पितृसदृश इति तत्र द्वयोः समानार्थयोरेकेन विग्रहः । अपरेण वृत्तिर्भविष्यति । अविरविकन्यायेन । अवि-

रविक इति समुदायोऽनुकारणशब्द इति न्यायशब्देन समासेऽपि लुगभावः। तदथा अवेर्मांसमिति विग्रहे अविकशब्दादुत्पत्तिर्भवति आविकमिति। एवं पितुः सदृश इति विग्रहे पितृसदृश इति भविष्यति। पित्रा सदृश इति विग्रहे वाक्यमेव भविष्यति। अवश्यञ्च तृतीयासमासो वक्तव्यः। यत्र षष्ठ्यर्थो नास्ति तदर्थम्। भोजनसदृशः। अध्ययनसदृश इति। अत्र हेतौ तृतीया। भोजनहेतुकसादृश्यवानित्यर्थः। षष्ठ्यर्थो नास्तीत्यस्य तृतीयासमानार्थकषष्ठ्यर्थो नास्तीत्यर्थः। एवञ्च समासविधौ समाससिध्यर्थं सदृशग्रहणमावश्यकत्वेनैव सदृशशब्दस्य तृतीयासमासे तत्पुरुषेत्यनेन पूर्वपदप्रकृतिस्वरे सिद्धे प्रकृतसूत्रे सदृशग्रहणम् कार्यमित्याशङ्क्य इदमप्यवश्यं वक्तव्यम्। यत्र षष्ठी श्रूयते तदर्थम्। दास्याः सदृशो वृषल्याः सदृश इति। अनेन प्रकृतसूत्रस्थसदृशग्रहणस्य सार्थक्यम्प्रदर्शितमलुक्समास एव न तु पितृसदृश इति समासो दर्शितस्तेनानभिधानमित्याशयः। अलुक्समासस्य सादृश्यवाचकत्वात्तत्रानेन पूर्वपदप्रकृतिस्वरे विहिते सति यस्य स्वरस्यावस्थानन्तमाह। एवञ्चेति। अन्तोदात्तत्वेति। दंसेः टो न आ चेति दंस्धातोष्टप्रत्ययो नकारस्याकारः। प्रत्ययस्वरेणान्तोदात्तशब्दस्ततष्टित्वान्ङीपि उदात्तनिवृत्तिस्वरेणान्तोदात्त इत्यर्थः। वृषलीशब्दस्तु जातिलक्षणङीषन्तत्वादन्तोदात्तः। इत्यादीति। अनेनादिना पूर्वसदृशेति सूत्रोक्तस्तत्पुरुषावयवसदृशशब्दाकारणप्रकारः सूचितः। तत्र हि भोजनसदृशः अध्ययनसदृश इत्यस्य भोजनेन ज्ञातः सदृशः अध्ययनेन ज्ञात. सदृश इत्यर्थं चाश्रीयते तदा प्रतिपदोक्तस्य तृतीयातत्कृतार्थेनेति विहितसमासस्य सत्त्व.त्तत्पुरुषे तुल्यार्थेति सूत्रेण पूर्वपदप्रकृतिस्वरस्य सिद्धौ पूर्वसदृशेति सूत्रे सदृशग्रहणम् कार्यमिति सदृशग्रहणप्रत्याख्यानप्रकारो बाधितः। सदृशप्रतिरूपयोरिति सूत्रस्यभाष्यस्थैकदेश्युक्तिरिति च तस्मिन् सूत्रेऽभिहितमस्य च सदृग्रहः। प्रतियोगिविशेषसमर्पणार्थम्। सादृश्यप्रतियोग्युपमानविशेषसमर्पणार्थम्। द्विगौ प्रमाणे। समानाधिकरणे सप्तम्यौ। बहुव्रीहौ प्रकृत्यात्मनः पूर्वपदमित्यस्य सम्बन्धेन तेनोत्तरपदस्याक्षेपेण प्रमाणवाचिनि द्विगावुत्तरपदे तत्पुरुषसमासे पूर्वपदमित्यर्थः। समाहारे द्विगुरिति। समानां समानां समाहारः सासमम्। समपुंसकमिति सपुंसकत्वम्। चपपाठ इति। स-

पुंसकत्वस्य न्याय्यत्वात् । उपसर्जनत्वादित्यादि नपुंसकह्रस्वलोपलक्षणम् । उदाहरणे प्राथशब्दो व्युप्रागयागिति यदन्तत्वादाद्युदात्तः । गन्तव्यं पण्यं वाणिजे । वाणिजो व्यवहर्त्ता । मद्रेषु वाणिज इत्युक्तौ सप्तम्यन्तपदसन्निधानवशात्तद्देशीयवणिक्त्वप्रतीतौ तत्र गत्वा व्यवहरतीत्यर्थमिदम् । गन्तव्यङ्गमनकर्म । पण्यम्पणितव्यम् । गायशब्दो ङीप्रत्ययान्तः । लव्यस्येति । शौण्डादिगणेऽस्य पाठाभावेन सप्तम्यन्तपूर्वपदकोऽत्र समासः सुप्सुपेति वाक्यनिष्पन्न एवेति योगविभागस्तु भाष्यानारूढ इति भावः । न च षष्ठीसमासे सूत्रस्य चरितार्थत्वात्कथं सुप्सुपेति समासङ्कल्पयित्वा चारितार्थ्यप्रदर्शनमिति वाच्यम् । न ह्येतत् सूत्रारम्भसामर्थ्यादेवङ्कल्पनं किन्तु तादृशकल्पनया सप्तम्यन्तपदघटितेऽप्यस्य प्रवृत्तिर्न्याय्येत्याशयात्तदाह । षष्ठीसमासार्थमिति । मात्रौ यश्री । नपुंसकवाचिनीति । लिङ्गस्यार्थनिष्ठत्वादेवमुक्तिः । पाणिन्युपज्ञमित्यत्रातश्चोपसर्ग इत्यङन्तेनज्ञाशब्देन षष्ठीतत्पुरुषः । इञन्तः पाणिनिशब्द आद्युदात्तः । उपज्ञोपक्रममिति नपुंसकत्वम् । इक्षुच्छायमित्यस्येक्षूणाञ्छायेत्यर्थः । छायाबाहुल्य इति नपुंसकत्वम् । भक्तपदेति । भिक्षायास्तुल्यप्रमाणमिति कथनेन लौकिको विग्रहस्तुल्यप्रमाणशब्देन कार्य इति दर्शितम् । सुखप्रिययोर्हिते । यदेति । गमनप्रियमित्यादिकर्मधारयो यदायत्याम्प्रीतिकरन्तद्धितमित्यन्वयः । प्रियशब्दः प्रीतिकरे सुखशब्दः सुखजनके वर्त्तते । तस्य माना विधस्य सम्भवाद्गमनस्येतरव्यावर्त्तनाय विशेषणत्वविवक्षेति भावः । गमनमेव विशेष्यमित्यभिप्रायेणाह । मयूरेति । प्रीतौ च । सुखप्रिययोरित्यनुवर्त्तते । । प्रीतिरिच्छा । एवञ्च यद्ब्राह्मणस्य सुखजनकम्प्रीतिभरं या भवति तद्वाचकशब्दघटितसमासाज्जायमानशाब्दबोधोत्तरम्पूर्वपदार्थस्य प्रीतिर्गम्यत एवेति प्रीतावित्यव्यावर्त्तकमत आह । सुखप्रिययोरिति । प्रीत्यतिशयश्च प्रीतिनिष्ठोत्कटत्वाख्यविषयतानिरूपकत्वम् । ब्राह्मणछात्रयोः पायसाऽनध्यायविषयकप्रीत्यतिशय एतयोः सुखजनकत्वादस्त्येव । ब्राह्मणशब्दोऽणन्तत्वादन्तोदात्तः । छात्रशब्दस्तु छत्रादिभ्यो ण इति णान्तत्वात्तथा । उदाहरणवाक्यप्रयोगे कृते तद्घटकोत्तरपदस्य प्रियशब्दस्य नित्यसाकाङ्क्षत्वात्पायसादिप्रयोगोऽध्याहारो वा आवश्यक इति भवति पूर्वपदार्थेतर-

प्रीत्यतिशयप्रतीतिः। राजसुखमिति प्रत्युदाहरणे यदुत्तरपदस्तदर्थविषयके-च्छा राजनि यद्यप्यस्ति तथापि न तत्र प्रीत्यतिशयप्रतीतिः। ब्राह्मणसुखम्पा-यसमित्यत्र लौकिकव्यवहारात्तथास्तीति बोध्यम्। पत्यावैश्वर्ये। तथा। प्र-कृत्या। गृहपतिरित्यत्र यदुत्तरपदन्तस्य ईश्वरवाचकतया विशेषणतया ऐ-श्वर्यङ्गम्यते पूर्वोत्तरपदार्थयोः स्वस्वामिभावसम्बन्धात्। प्रत्युदाहरणवाक्य-स्योत्तरपदार्थेन न सम्बन्धो विवक्षितः। अन्यदीया ह्यपत्यपि कामु-कस्य विप्रस्य नायिका सौन्दर्यात्सम्भवतीति विशेषः। समाहारद्वन्द्व इति। अत एव नपुंसकत्वेनेह दिधिषूशब्दस्य ह्रस्वत्वम्। क्तिनन्ता इति। एवञ्च धातुस्वरेणान्तोदात्ता इत्यर्थः। ऊप्रत्ययान्तः। अन्दूदृम्भूरित्यनेन व्युत्पादित ऊप्रत्ययान्तः। वा भुवनम्। ऐश्वर्यवाचिन्युत्तरपदे भुवनमित्येतत्पूर्वपदं वा प्रकृत्या। भुवनपतिर्विष्णुरित्यत्र विष्णावैश्वर्यस्य प्रतीतिः प्रसिद्धैव। ऐश्वर्ये किम्। भुवने पतिश्चौरस्य शूद्रोऽस्तीत्यर्थे भुवनपतिरित्यत्र सुप्सुपेति समासे मा भूदिति। आशङ्काबाधने दीयस्सु। अत्राशङ्काशब्दो गुरोश्चेत्यकारप्रत्ययान्तः। गमनाशङ्कमित्यत्रोभयोः क्रियाशब्दत्वाद्भवति गमनशब्दस्य विशेषणवाचकत्व-म्। तद्विषयकेति। गमनविषयकेत्यर्थः। अत्रापि कोटावुत्कटत्वं विषयतावि-शेषः। यस्यां शङ्कायां भासमानयोर्भावाभावयोरेकस्मिन् भावेऽभावे वोत्कटत्वा-ख्यविषयताविशेषोऽस्ति तादृशं ज्ञानमेवाशङ्काशब्दार्थः। नित्स्वर इति। गमन-शब्दस्य भावल्युडन्ततया गमनशब्दो लितीत्यनेनाद्युदात्तः। गमनाबाधम्। अ-त्राङ्पूर्वाद्बाधधातोः कर्मणि पूर्ववदकार एव। गमननेदीयो निकटतरमित्य-र्थेऽन्तिकशब्दादीयसुन्प्रत्ययेऽन्तिकशब्दस्यान्तिकबाढयोर्नेदसाधावित्यनेन ने-दादेशः। पूर्वे भूतपूर्वे। अयम्भूतपूर्वार्थे पूर्वशब्दो वृत्तिविषय एवेत्यस्वपदविग्रह एव। सविधसनीड। सविधेत्यत्र विधधातोर्घञर्थे कविधानमिति कः। विपूर्व-काद्दाञ आतश्चोपसर्ग इति के आतो लोपो वा समानशब्दस्य सादेशः। सनी-डेत्यत्र समानपूर्वकान्निसद्धातोर्घञर्थ इति के पृषोदरादित्वाद्दीर्घडकारौ। अ-थ वा निपूर्वाद्दाञः के आकारलोपे दीर्घडकारौ पूर्ववत्। उदाहरणे सर्वत्र ष-ष्ठीसमासः। मद्रसमर्यादमिति। मर्यादया सहितम्। वोपसर्जनस्येति सहस्य सः। मद्रस्य समर्यादमित्यर्थः। सवेशसदेशयोः समानवेशदेशौ वाच्यौ। एवं

व्युत्पत्तिमात्रम । प्रकृते तु समीपे रूढिरेषाम् सामीप्यस्य रूढ्यर्थतावच्छेदकतया तत्र वृत्तिरेषामबोध्या । सामीप्यं किम् । विधानं विधारचना । समाना रचना यस्य चैत्रस्य तत्सविधम् । सदृशं सविधमित्यर्थ । अत्र समाना उच्चनीचरचितेति विग्रहेऽपि तत्र तु तुल्यत्वस्य विवक्षा । विस्पष्टादीति । कर्मधारयाभावेऽपीति । सुबन्तार्थविशेष्यान्वयित्वे एव सामानाधिकरण्यस्य सम्भवात् । मयूरव्यंसकादिषु तत्समुदायस्य पाठेन यथा कथञ्चिदन्वयेन सामर्थ्येऽपि समास सञ्ज्ञा भवति । विस्पष्टे वा दाग्न्त्वनेन निपातितस्पष्टशब्दस्य विशब्देन समास । विचित्रे विपूर्वकाच्चित्रधातोर्यु रादिण्यन्तात्प्रकृतेरेरच् प्रादिसमास । विचित्ते चितो सञ्ज्ञाने इतिधातोर्निष्ठाविगतचित्तमस्येत्यर्थ । व्यक्तशब्दे तु अञ्जूधातोर्निष्ठा तदन्तस्य निष्ठा चेति आद्युदात्तत्वं गतिकारकोपपदादिति कृदुत्तरपदप्रकृतिस्वर । सम्पन्ने सम्पूर्वकात्पदे कर्त्तरि क्त गतिसमासे याथादिस्वर । नित्वादिति । फलिपाटीत्यादिना व्युत्पादितो य उप्रत्यय स धान्ये नित्यधिकारान्निदिति भाव । पण्डितेत्यत्र पण्डाशब्दादितच्प्रत्ययस्थिलादन्तोदात्तत्वन्निष्ठान्तो वायम । कुशले तु कुशान् लातीति विग्रहे लाधातोरातोऽनुपसर्गे क इति के कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वम् । अच्यावमकन् । तद्वत इति । आद्यादेशवत इत्यर्थ । एतेचादेशा इष्ठन्नादिषु भवन्तीति तदन्त इष्ठन्नाद्यन्तसमुदायस्योऽत्र विनापिवच्छब्दसम्बन्ध लभ्यते एवञ्च पापवच्छब्देन द्वन्द्व । गत एवाह । वदितिवितिति । पाठान्तरन्त्विति । मूले पापवाचिनि चेति पाठान्तरमित्यर्थ, । प्रामादिकमिति । पापपर्यायेष्वति प्रसङ्गात् । न च प्रादिमाहचर्यात्पापवाचका इष्ठन्नाद्यन्त एव गृह्यन्त इति वाच्यम् । पर्यायप्रकृतिकेष्ठन्नाद्यन्तस्यापि ग्रहणापत्तेरिति भाव । गमनगर्ये छमित्यादौ गमनगध्यो भावल्युडन्त । स । इष्ठन् । अजादीगुणवचनादेवेत्युक्ते । गुणोपसर्जनद्रव्यवचनानामेव गुणवचनसञ्ज्ञासत्त्वात् । कुमारश्च । तथा । प्रस्तत्या । तस्वमिति । उक्तयो पक्षयोर्मध्ये क पक्षो युक्तियुक्त इत्येतत् । अपरे तु पूर्वोत्तरसूत्रमाहचर्यादुत्तरसूत्रविषये प्रतिपदोक्तकर्मधारयस्यासम्भवादर्थाधिकारानुरोधादप्रतिपदोक्तस्य ग्रहणमित्याहु । कुमारशब्द पचाद्यजन्त । आदि प्रत्ये नमिएतेन पञ्चम्यर्थे प्रथमेति कल्पनेन । पूगेष्वन्यतरस्याम । अत्र पूगेष्विति बहुवचन

निर्द्देशादर्थग्रहणन्तस्य चोत्तरपदत्वासम्भवात्तद्वाचिनी लाभस्तत आह। तद्वाचिन्युत्तरपद इति। आदिरित्यनुवर्त्तते। इगन्तकालकपाल। पञ्चारत्निरित्यत्र पूर्वपदप्रकृतिस्वरे सति नः संख्याया इति पञ्चन्शब्दस्याद्युदात्तत्वात्समुदाय आद्युदात्तः। ननु पञ्चारत्नय इत्यत्र जसि चेति गुणे सत्युत्तरपदस्येगन्तत्वाभावात् स्वरो न स्यादत आह। पञ्चारत्नय इत्यादाविति। अन्तरङ्गत्वात्। विभक्त्यनपेक्षत्वेनान्तरङ्गत्वात्। स्थानिवत्त्वेन। अचः परस्मिन्निति स्थानिवत्त्वेन। सर्वे सर्वपदादेशा इति न्यायेनेगन्तत्वबुद्धिः सुलभेति भावः। तत्सत्त्वेऽपि। अकृतव्यूहपरिभाषासत्त्वेऽपि। भगालशब्दः कपालपर्यायः। बहुन्यतरस्याम्। इगन्तादिषूत्तरपदेषु द्विगुसमासे बहुशब्दः पूर्वपदभूतो वा प्रकृत्या। मूले बहुशब्दोऽन्तोदात्त इति। बहि वृद्धाविति धातोर्लघिबंह्योर्नलोपश्चेति कुप्रत्यय स्तेनान्तोदात्त इत्यर्थः। पक्षे। पूर्वपदप्रकृतिस्वराभावपक्षे। द्व्यसचो वेति। प्रथमस्य द्वितीयस्य ऊर्द्ध्वमाने मतौ ममेति भाष्यीयसिद्धान्तादरे तु मात्रचुतिर्यङ्मानत्वे द्रष्टव्यः। अन्यथा तु द्वयसच। सिद्धसुप्क। स्यान्त इतीति। वुञ्छणिति सूत्रे घित्यादि। आतपशुष्कः। अव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्त आतपशब्दः। चक्रशब्दोऽन्तोदात्तः। कृञः को द्वे चेति कप्रत्ययान्तत्वेन प्रत्ययस्वरेणान्तोदात्तः। अकालादित्यस्य प्रत्युदाहरणे पूर्वाह्णसिद्ध इत्यत्र कृदुत्तरपदप्रकृतिस्वर एव। तथा च समुदायस्यान्तोदात्तत्वम्। सूत्रस्य प्रयोजनमाह मूलकारः कृत्स्वरेणेति। परिप्रत्युपायाः। द्वन्द्वाव्ययीभावविषयाणीति। पारिशेष्यादिति शेषः। एतच्चाग्रे स्फुटम्। अनेन पूर्वपदप्रकृतिस्वरे सत्युपसर्गा आद्युदात्ता इत्याद्युदात्तत्वम्। मा भूत्। पूर्वपदप्रकृतिस्वरो मा भूत्। किन्तु समासान्तोदात्तत्वमेव। राजन्यबहुवचन। अत्र राजन्यबहुवचनशब्दयोः कर्मधारये तस्य द्वन्द्वशब्देन षष्ठीतत्पुरुषः। बहुवचनशब्दस्य विशेषणवाचित्वेऽपि राजन्यशब्दस्य सौत्रः पूर्वनिपातः। द्वन्द्वे इत्यस्य मासम्यन्तस्य वर्त्तमान इति शेषः। शिनिवासुदेवा इत्यत्र शिनिशब्दो बाहुलकाच्छीङो निप्रत्ययो ह्रस्वश्चेति निप्रत्ययान्तत्वादन्तोदात्तः। शिनेर्यत्कथ्यमित्वात्तद्वयपनामत्वस्योपपत्तये मूले शिनिशब्दस्य लक्षणोक्ता सा च शक्यतावच्छेदकारोपरूपेत्याशयेनाह। शिनित्वारोपेणेति। राजन्यानामग्रुकहमिपदर्णमेव महद्दे सिद्धे राजन्यग्रहणं

ध्यर्थमतो मूले राजन्येति । अभिविक्तवंश्यानामित्यत्र कर्मधारयः। तथा च ब्राह्मणवशिष्ठन्यायेन पृथगुक्तिरिति भावः। राजन्यशब्दस्य विशेषपरत्वमन्धकवृष्णिपदसन्निधाने भवति तदभावे तु क्षत्रियसामान्यपरत्वं स्यादित्याशयेनाह। कुरुपञ्चाला इति। सङ्ख्या। द्वन्द्व इत्यनुवर्तते। त्रयोदशेत्यत्र त्रयश्च दश चेति द्वन्द्वः। त्रिशब्दस्य त्रयसादेशस्तस्याद्युदात्तत्वमुपपादयति। त्रयोदश चस इति। आचार्योपसर्जन। षष्ठी बहुवचनेति । द्वन्द्व इत्येतद्विशेषणत्वादपेक्षिते ये बहुवचने तयोः स्थान इत्यर्थः । आचार्य उपसर्जनं विशेषणं यस्य सः आचार्योपसर्जन.। अन्ते वसतीत्यन्तेवासी शिष्यः । समानाधिकरणपदाभ्यामाचार्यप्रकारकशिष्यविशेष्यकोपस्थितिजनकानामिति फलितम् । छात्रा इति। एवञ्च शैषिको वृद्धाच्छ इति छ. । गोत्रे अन्तत्वाभावादिति। तथा च युवप्रत्ययान्तत्वे नैतच्चेत्यस्य न प्राप्तिरिति भाव । व्याख्यानादिति । एतादृशानामेव द्वन्द्वस्य भाष्ये उदाहरणत्वेन प्रदर्शनमूलकाद्दृत्यादिसम्मत व्याख्यानादित्यर्थ. । तदुक्तभाष्ये। अनाचार्योपसर्जनेऽनेकस्यापि पूर्वपदत्वात्सन्देह । आपिशलपाणिनीयव्याडीयगौतमीयाः। एकम्पदं वर्जयित्वा सर्वाणि पूर्वपदानि तत्र न ज्ञायते कस्य पूर्वपदस्य स्वरेण भवितव्यमिति। लोकविज्ञानात्सिद्धम्। तद्यथा अमीषाम्ब्राह्मणानाम्पूर्वमानयेति यः सर्वपूर्वः स आनीयते एवमिहापि यस्सर्वपूर्वपदन्तस्य प्रकृतिस्वरत्वम्भविष्यतीति। पूर्वपदशब्दस्य योगिकत्वाभिप्रायेण पूर्वः पक्षः.। लोकविज्ञानादित्यादिना न्यायेन व्युत्पादनेन समाधानन्तु पूर्वपदशब्दः समासस्य प्रथमावयवे रूढ इत्यभिप्रायेण । सर्वपूर्वपदमित्यस्य सर्वेषां समुदायभावमापन्नानां य पूर्वावयव इत्यर्थस्तेन चात्र न निर्धारण इति निषेधस्य विषयता नेति बोध्यम् । मूले आचेति किमिति। आचार्योपसर्जनेति पदद्वयमर्थमित्यर्थ। छान्दसवैयाकरणा इति। अत्रोभयोरपि पदयोरध्ययनकर्मविशेषणकाध्ययनकर्तृविशेष्यकबोधजनकतयाचार्यस्य न भानमतो न तत्त्वम्। विभक्त्यन्तपाठ इति। प्रायेण गणेषु प्रातिपदिकमात्रस्य पाठदर्शनादत्र विभक्त्यन्तस्य पाठो वैलक्षण्यसम्पादको बोध्य.। तत्रापि यादृशो विभक्त्यन्तो द्वन्द्वघटितः समुदायः पठितस्तत्रैव पूर्वपदप्रकृतिस्वरो न तु, कार्त्तमाण्डूकेयावित्यत्र। प्रातिपदिकमात्रस्य यस्मिन् गणे पाठस्तत्र न पठितसमुदायविवक्षेति

भावः। महान्व्रीह्य। अत्रापि द्वन्द्व इत्यस्य सम्बन्धान्महान्व्रीहिरित्यादिर्द्वन्द्व एवेति केचित्। तन्न। प्रकृतसूत्रस्थभाष्यविरोधात्। तथा हि। तत्र हि किमर्थम्महतः प्रवृद्धशब्दे उत्तरपदे पूर्वपदप्रकृतिस्वरत्वमुच्यते न कर्मधारये निष्ठेत्येव सिद्धम्। न सिध्यति। किं कारणम्। श्रेण्यादिसमास इत्येवन्तादित्युक्तम्। यदि द्वन्द्व इत्यस्य प्रकृतसूत्रे सम्बन्धः स्यात्तदा कर्मधारये निष्ठेत्येवेति भाष्यविरोधः स्पष्ट एव। अत एव सन्महदिति प्रतिपदोक्त एवेति मूलमपि सङ्गच्छते। क्षुल्लकश्च वैश्वदेवे। चशब्दान्महानित्यस्य सम्बन्धः। एषु। महानित्यादिसूत्रेषु। नानुवर्त्तितमिति। न तु तद्ग्रन्थदर्शनेन तत्पुरुषाधिकारस्य राजन्यबहुवचनेति सूत्रे द्वन्द्व इत्यस्य दर्शनेनैव निवृत्तिसम्भावना कार्या तथा च क्वचिच्छिष्टसम्मतव्याख्यानेन तत्पुरुषपदासम्बन्धेऽपि ततोऽग्रे सम्बन्धोऽस्त्येव। तत्पुरुष इत्यस्यासम्बन्धेऽपि समासस्येति सम्बध्यत एव ततश्चैषां सूत्राणामतत्पुरुषेऽपि प्रवृत्तिः। युक्तञ्चैतदिति। तत्पुरुषेऽपि प्रवृत्तिरित्येतद्युक्तमित्यर्थः। अन्यथा। तत्पुरुषेऽपि प्रवृत्तिरित्यस्यास्वीकारे। तस्मादेव। सदेरेव। कुरुगार्हपत। सूत्रोपात्तेषु पञ्चकम्बलान्ताः समुदाया पृथग्भूता यथा पठितास्तथैव स्वरोद्देश्याः। दासीभाराणामित्यत्र तु बहुवचननिर्देशाद्गण निर्देशः। उप्रत्ययान्त इतीति। कृञ उश्चेति विहितो य उप्रत्ययस्तदन्तोऽयम्। तत्र। उप्रत्ययविधायके। एवञ्चाद्युदात्त.। पर्यायेणेति। इगन्तानामित्यत्र इयादीनामित्यतो वेत्यस्यानुवर्त्तनेन निदित्यस्यानुवृत्तौ फलाभाव.। आद्युदात्तत्वस्येगन्तानामित्येव सिद्धे.। निदित्यस्यानुवृत्तिवादिमतेऽपीगन्तानामित्यस्य प्रवृत्त्या पाक्षिकाद्युदात्तत्वसम्भवादिति भावः। मूले ष्विति। अत्र तुना अरुचिः सूचिता। अन्तोदात्तत्वमात्रकथनस्यानुचितत्वादिति। वृजेरिति सकाव्यमिति। गार्हपते पर इति शेष.। कुरुवृज्योर्गार्हपत इति हि प्रकृतसूत्रभाष्ये पाठात्। वृजिशब्दस्य गुपधात्किदितीनन्तत्वादाद्युदात्तत्तस्यापि पूर्ववदिगन्तानामिति सूत्रस्य प्रवृत्तौ तु पर्यायेणाभावमप्युदात्तो। आद्युदात्त इति। न घृतो अप्रत इति समासेऽव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्त.। अश्लीलदृढरूपा। अश्लीलशब्दो नञ्समासत्वादाद्युदात्त.। अस्याद्दृढरूपत्वमुपपादयति। लाघव्यादीत्यादिना। तथा च लाघव्यवहितत्वादश्लीलाकुञ्जत्वादिदोषरहितत्वाद्दृढरूपा। अत्र

पशब्दः स्वरूपपरस्तस्य दृढत्वं दोषराहित्येन । अश्लीलेत्यस्य श्रीर्यस्यास्ति सा श्लीला सिध्मादित्वान्मत्वर्थीयो लः । कपिलकादीनामिति वक्तव्यमिति श्रीशब्दावयवरेफस्य लत्वम् । शोभनवर्णरहितत्वादश्लीला । पारे वडवेवेति । वडवा सादृश्यं जवदार्ढ्यादिमत्त्वेन । छात्रार्थेऽपि इनण्यनपत्य इति प्रकृतिभाववारणायाह । छात्रार्थ इति । तैतिलकद्रूरित्यत्र षष्ठीसमासः । पण्यकम्बलइत्यत्र पण्यशब्दोऽवद्यपण्येति यदन्तत्वाद्यतोऽनाव इत्याद्युदात्त । इत्येव सिद्धमिति । पूर्वपदप्रकृतिस्वरत्वमिति शेषः । प्रतिपदोक्तत्वमिह कृत्यशब्दोच्चारणेन विहितत्वमेव । ननु यस्य कृत्यप्रत्ययान्तस्य समासस्तच्छब्दानुवादेन विहितत्वरूपम् । विशेषणसमास इति । कृत्यतुल्याख्या इति सूत्रेऽजात्येत्युपादाना ज्जातिवाचकभिन्नस्यैव कृत्यप्रत्ययान्तस्य समासो न तु जातिवाचकेनेति यद्यप्यस्ति तथापीह बहुलग्रहणाद्विशेषणसमास इत्यर्थः । न्यायसिद्धेति । कृत्येतिसूत्रं नियमार्थमिति हि प्रसिद्धन्तच्च तदोपपद्यते यद्ययं योगो जातिवाचकभिन्नेन सह समाससंज्ञाविधायकः स्यात् तदा ह्यनियमस्य प्राप्तिर्यदि जातिवाचकेन समाससंज्ञाविधायकमेतद्भवेत्तदा कृत्यतुल्याख्यानामिव पूर्वनिपातनियमार्थमेतत्सूत्रमिति वक्तव्यं स्यात्तादृशनियमस्तत्र विशेषणमिति सूत्रेण समाससंज्ञायामपि सिद्ध इत्यजात्येति न्यायसिद्धानुवादमित्यर्थः । तत्फलम् । अनुवादफलम् । इत्याहुरिति । इत्यनुसारिण इति शेषः । स्वरविधायके । तत्पुरुषे तुल्यार्थेति सूत्रे । परिभाषाया । प्रतिपदोक्तपरिभाषाया । नियमार्थमिदमिति । एवं विधनियमार्थमिदमित्यर्थः अत एव गुणगाईपतेति सूत्रभाष्ये पण्यकम्बलः संज्ञायामिति वक्तव्यम् । यो हि पणितव्यः कम्बलः पण्यकम्बल एवासौ स्यात् । अपर आह । पण्यकम्बल एव यथा स्यात् क मा भूत् । पण्यगवः । पण्यहस्ती इत्युक्तम् । तत्र कैयटेनापि संज्ञायामिति प्रतीकमुपादाय संज्ञायामेव पण्यकम्बल प्रकृतिस्वरपूर्वपदो भवतीत्युक्तम् । यदि क्वचिज्जातिवाचकस्य समास इष्टस्तदा स बहुलग्रहणेनैव साधनीयः । अन्यथेति मूलस्यासंज्ञायामित्यर्थः । पणितव्येति योगार्थप्रदर्शनेनासंज्ञात्वम्ध्वनितम् । तेन । तादृशनियमेन । सोऽपि । कृत्या इति स्वरोऽपि । चतुर्थी तदर्थं । अत्र चतुर्थीति प्रथमान्तम् । कार्ये । तदर्थं इति समस्यन्तमुत्तरपदस्य विशेषणम् । प्रकृतिवि-

ख्यातिभाव एवेति। समाससंज्ञायास्तत्रैव प्रवृत्तेः। स्वरस्य तत्रैव प्रवृत्तौ मान माह। अर्थे इत्यादिना। देवार्थमित्यादावनेनैव स्वरस्य सिद्धत्वात्। न च गोहितमित्यत्र स्वरसिद्ध्यर्थं क्तेन चेति सूत्रमावश्यकमिति वाच्यम्। वक्ष्यमाणरीत्या तत्र क्ते चेत्येतदप्रवृत्तेरनिष्टत्वात्। कुबेरबलिरित्यत्रेति। अत्र बलिशब्दो दीयमानद्रव्यपरः। तस्य द्रव्यस्य तदुपकारकत्वरूपन्तदर्थत्वमस्त्येव। गोसुखमिति। सुखपदार्थस्य न तदुपकारकत्वम्। सुखस्यैव मुख्यफलतया तस्य पूर्वपदार्थाभिप्रेतफलान्तरजनकत्वाभावादिति भावः। इति विग्रह इति। इदङ्गु सुमादिकमिति विशेष्यमत्र बोद्धव्यम्। प्रतिपदोक्तत्वात्। क्तान्तेन प्रतिपदोक्तस्य चतुर्थीसमासस्य ग्रहणात्। प्रतिपदोक्तचतुर्थीसमासो गोहितमित्यत्राप्यस्तीत्यभिप्रायेण गोहितमित्युदाहरणम्मूलेऽभिहितम्। भाष्यानुसारिमतमाह। अन्ये त्विति। अत्रापि। क्ते चेति सूत्रेऽपि। हितशब्दस्य सुखार्थकतया तस्य पूर्वपदार्थोपकारकत्वरूपतादर्थ्याभावात्। अत एव। तदर्थ इति पदस्यानुवृत्तेरेव। गुरुत्वादिति। न्यासान्तरकल्पनेन ज्ञापकत्वोपन्यासस्य युक्तत्वकल्पनायाङ्गुरुत्वात्। तस्य क्तग्रहणस्य। कर्मधारये निष्ठा। क्ते चेत्यतः क्त इत्यनुवर्तते। अनिष्ठेति छेदः निष्ठेत्यस्य प्रत्ययग्रहणपरिभाषया निष्ठान्तपरतया नञ्समासान्निष्ठान्तभिन्नपूर्वपदक्तान्तोत्तरपदपरकर्मधारयसमासघटकस्य क्तस्येत्यर्थः। घटकत्वं सप्तम्यर्थः। प्रतिपदोक्तेति। अनिष्ठान्तस्य क्तान्तेन प्रतिपदोक्त। यद्यप्यनिष्ठान्तमिति समासविधौ नोपात्तन्तथापि क्तान्तस्य साक्षादुपादानादस्ति प्रतिपदोक्तपरिभाषाप्रवृत्तिः। तेन। प्रतिपदोक्तसमासस्यैव ग्रहणेन। इदम्। प्रतिपदोक्तत्वसूत्रविहितस्यैव ग्रहणमित्येतत्। भाष्ये स्पष्टमिति। तत्र हि किमर्थमसत. प्रहृहशब्दे उत्तरपदे प्रकृतिस्वरत्वमुच्यते न कर्मधारये निष्ठेत्येव सिद्धम्। न सिध्यति। किङ्कारणम्। श्रेण्यादिसमास इत्येवमत्र। किम्पुनः कारणं श्रेण्यादिसमास इत्येवन्नस्यादिति मा भूत्। महानिष्टो दक्षिणा दीयत इत्युक्तम्। तत्र कैयट। श्रेण्यादिसमास इति। लक्षणप्रतिपदोक्तपरिभाषया क्तान्तेन प्रतिपदोक्तो यः कर्मधारयस्तस्य ग्रहणमित्यर्थ इति। समासान्तरमित्याद्युपदर्शिते सति लक्षणपरिभाषया प्राकृतशब्दस्य सामान्यमित्याशये नाह। कृतमिति छेद इति। इदमुपलक्षणम्। श्रेण्यादिषु पठित-

शब्दः पठ्यते कृतादिषु च समाख्यातशब्दः पतयो. प्रतिपदोक्ताः श्रेण्यादयः कृतादिभिरिति समासोऽस्ति तथापि प्रकृतसूत्रे ऽनिर्दिष्टतिपदानुपादाने पूर्वपदप्रकृतिस्वरापत्तिः । पण्डितशब्दो हि लघावन्त इत्याद्युदात्तः । अहीनशब्दं व्याचष्टे अविभागेति । अविभागवाचीत्यत्र नञो विभागवाचिशब्दप्रकृतिसुबन्तेन समासः । विभागवाचकत्वञ्च यथा कथञ्चित् । कथञ्चित इति समासघटकश्चितशब्दार्थे कथमपि विभागस्य न घटकता कान्तारातीत इत्यत्र त्वतीत शब्दस्य विभागानुकूलव्यापाराश्रयवाचकतया विशेषणता विभागस्यास्त्येवेति भावः । इत्याहुरिति । भाष्यानुसारिणः । तदुक्तम्भाष्ये । अहीने द्वितीयानुपसर्गे । इह मा भूत् । सुखप्राप्तो दुःखप्राप्त इति । यद्यप्येतदुच्यते अथ वैतदहीनग्रहणन्न करिष्यते इहापि कान्तारातीतो योजनातीत इति । अनुपसर्ग इत्येव सिद्धमिति । नचानुपसर्ग इत्युक्तावप्यहीन इति वाच्यमन्यथा भूमिपतित इत्यत्रापि स्यात् । तदुक्तौ तु नायन्दोषः । पतधातोर्विभागजन्याधःसंयोगानुकूलव्यापारवाचकतया । हीनत्वाचित्वाभावादिति वाच्यम् । पतधातोरधोदेशसंयोगानुकूलव्यापारवाचकत्वैव न तु विभागजन्यत्वस्य तत्र प्रवेशः । यदा शाखाया वृक्षत्यागो नास्ति तदापि कुत्र चिद्दीर्घा शाखा यदा भूमिसम्पृक्ता तदा भूमिम्पतति शाखेति प्रयोगस्य दर्शनात् । वृक्षात्पतितोऽश्वात्पतित इत्यादौ तु पञ्चम्युपपत्तये पतधातोर्विभागविशिष्टव्यापारे लक्षणा स्वीक्रियते । एवमन्यत्रापि तादृशशब्दयोगे यदि पञ्चम्यपादानं दृश्यते तदा तत्रापि विभागविशिष्टोत्तरदेशसंयोगानुकूलव्यापारे लक्षणा । शक्तिस्तु स्वोत्तरदेशसंयोगानुकूलव्यापार एव । अहीनग्रहणं त्वाख्यानपरभाष्यप्रामाण्यादिति बोध्यम् । अत एव मुनोक्तमहीनवाचिनीति साधु सङ्गच्छते । तृतीया कर्मणि । क्ते चेति वर्तते । अकृतेः क्त इति । कर्मणीति शेषः । तदन्तस्य निष्ठा च द्व्यजनादित्याद्युदात्तत्वे प्राप्ते दृतादीनामित्यन्तोदात्तत्वं बोध्यम् । मूले रथयात इति । या धातोर्गत्यर्थकत्वात् कर्तरि क्तः । यद्यपि प्रापणे याधातुर्वाच्यस्तथापि तद्घटकप्राप्तिर्गतिं विना न भवतीत्याशयः । रथगत इत्यपि प्रत्युदाहरणम्बोध्यम् । गतिरनन्तरः । गतिशब्दस्य स्त्रियाङ्क्तिन्निति स्त्रियन्त्वे पुल्लिङ्गेनानन्तरपदेन सामानाधिकरण्यमनुपपन्नमत आह । गतिः क्रियन्त इति । विद्यायमा गति पचिणामित्यादौ ग

तिर्यद्यपि क्त्विन्तः स्त्रीलिङ्ग एव तथापि गतिर्थेति सूत्रघटको गतिशब्दः क्तिच्क्तौ च संज्ञायामिति क्तिजन्त एवेति भावः । हरदत्त इति । वसेस्तिरिति सूत्रविहित उणादिघटको यस्तिप्रत्ययः सोऽत्र बाहुलकाद्गमेरपि तदन्तस्य पुंस्त्वन्तु अगस्तिरित्यत्रेव भविष्यति न त्विह क्तिच्क्तिच्क्तौचेति सूत्रे संज्ञापदेनैकवाक्यतापनिवेशिनीया संज्ञा सा गृह्यत इति तद्भावः । गतिशब्दस्येति । अस्य क्तिन्नन्तत्वेऽपीत्यादिः । तस्य । उद्धृतशब्दस्य । दर्शनादिति । तत्तुल्यन्यायेनाभ्युद्धृतशब्देऽपि उद्धृतशब्दादेरकारस्यैवेष्ट इति भावः । पूर्वपदत्वाभावादिति । इदम्पूर्वपदशब्दः समासप्रथमावयवे रूढ इति मतेन । तस्मतरीत्यैवाह।धातोरित्यादि । अन्यथा । अनन्तर इति व्याख्यानाभावे । इदमेव । अनन्तर इत्यानुपूर्वीपुरस्कारेणोपात्तमेव । इति सूत्रादनुपसर्गग्रहणमिति । तस्मिन्सूत्रे वार्त्तिककारोक्तमनुपसर्गग्रहणमित्यर्थः । न्यायप्राप्तेति । तत्रोक्तरीत्या । एतेन । योगं विभज्य व्याख्यानेन तादौ च निति क्तत्यतौ । अयम् । क्ततीत्युपादानेन क्तत्स्वरस्यावश्यम्प्राप्ते रयं योगोऽपवाद इत्यर्थः । इत्यादि सिध्यतीति । कृत्स्वरम्बाधित्वा गतेः प्रकृतिस्वरेणादुदात्तस्य प्रलपितशब्दस्य सिद्धिरित्यर्थः । व्यवस्था । शास्त्राणाम्प्रवृत्तिक्रमः । मूले प्रजल्पाक इति । अत्र जल्पधातोर्जल्पभिक्षेति पाकन्प्रत्ययस्य मत्वात्कृदुत्तरपदप्रकृतिस्वरेण जकाराकार उदात्त । आगन्तुरित्यत्र, सितनिगमिमसिसच्यविधाञ्क्रुशिभ्य इति तुवन्ते । उपायान्तरस्यानुमर्त्तव्यत्वात् । व्यत्ययो बहुलमिति सूत्रेण स्वरव्यत्ययेनान्तोदात्तत्वस्य तत्रानुसर्त्तव्यत्वात् । न दोष इति । नान्तोदात्तत्वासिद्धिरूपो दोष इत्यर्थः । तत्रैवान्तस्य युगपत् । येन गतिरित्येतदिह सम्बध्यते अन्त उदात्त इति यन्मूलकृताऽभिहितन्तत्राभिप्रायमाह । यद्यप्युदात्त इति । दुर्लभमिति । तदनधिकारादिति भावः । वृद्धिमारोहतीति । गतेरुदात्ततया प्रकृतिभावेन तस्यैवावस्थानबोधनेनैतस्य तादृशो भवतीत्युक्तं उदात्तलाभ इति भावः अन्वेत याडइत्यत्रानुपूर्वकादिणधातोः क्रत्यार्थे तवैकेनिति तवैप्रत्ययः । एतत्प्रवृत्तिरिति । अनिगन्त इति सूत्रस्य प्रवृत्तिरित्यर्थः । अपूर्वविधित्वादिति । स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विध्यभावादित्यर्थः । प्रतीच इति । इदमुपलक्षणम् । द्कोऽमशर्ण इति शाकमपद्येऽनिगन्त इत्यस्य चारितार्थ्यन्द्रष्टव्यम् । यदि गु

मिति नित्यसमासयोः शाकलप्रतिषेध इत्याश्रीयते तदाऽच इत्यल्लोपविषय एव चारितार्थ्यम्। इति वचनेनैवेति। एतच्च नेन्द्रस्येति ज्ञापनादरेणेति बोध्यम्। यदि तु तस्य सूत्रस्य पूर्वोत्तरपदनिमित्तकार्यात्पूर्वमन्तरङ्गमपि सन्धिकार्यं नेत्येतस्मिन्नर्थे ज्ञापकत्वं स्वीक्रियते तदा वचनं विनापि प्रकृतसूत्रस्थमनिगन्त इति चरितार्थमिति द्रष्टव्यम्। साकद्रीचीति। किमशब्दपूर्वपदकः कद्रीचीशब्दः। विष्वग्देवयोरित्यद्र्यादेशः। ननु वक्ष्यमाणरीत्या परत्वादित्यसङ्गतमत आह। वस्तुतस्त्विति। भाष्यकारैश्चैवेति। चुस्वरादनिगन्तोऽञ्चतावप्रत्यय इत्येतद्भवति विप्रतिषेधेनेति भाष्यकारैरुक्तेत्यर्थः। एतस्मिन्स्वरे। न्यधीचेति स्वरे। स्वरितस्थानिकयणादेशोदाहरणमाह। अध्यडीति। पूजायामिदमुदाहरणं चुस्वरादिति। विप्रतिषेधेनेति शेषः। ईषदन्यतरस्याम्। अत्रे षदिति स्वरूपपरम्। अत एव। प्रतिपदोक्तसमासस्यैव ग्रहणादेव। के चित्त्विति। भाष्यानुसारिण इत्यर्थः। एवञ्चेषद्भेद इत्यत्रेषदन्यतरस्यामित्यस्य प्रवृत्तिवारणाय प्रतिपदोक्तस्येति न वाच्यमिति भावः। एवं हि भाष्ये उक्तम्। ईषत्स्वरात्कृत्स्वरो भवति विप्रतिषेधेन। ईषत्स्वरस्यावकाशः। ईषत्कडारः। ईषत्पिङ्गलः। कृत्स्वरस्यावकाशः। इध्मप्रव्रश्चनः। इहोभयम्प्राप्नोति। ईषद्भेदः। कृत्स्वरो भवति विप्रतिषेधेनेति। अत्र भाष्ये, ईषद्भेद इत्यत्रोभयम्प्राप्नोतीत्युक्त्या प्रतिपदोक्तपरिभाषाप्रवृत्त्यभावः स्फुट एव। प्रथमोऽचिरोप। समुदायेनाचिरोपसम्पत्तौ गम्यमानायामित्यर्थः। न दोषः। आर्यब्राह्मण इति समुदायावयवार्यशब्दस्य विकल्पेन प्रकृतिस्वरो न। किन्तु समासान्तोदात्तत्वमेव। राजा च। राजत्वस्य, क्षत्रियधर्मत्वाद्ब्राह्मणशब्देन सामानाधिकरण्यमनुपपन्नमत आह। राजशब्द इति। अत्र। राजा चेति सूत्रे। तेन राजब्राह्मणीत्यत्र न दोषः। षष्ठी प्रत्येनसि। प्रतिगतमेनः पापं यस्य सप्रत्येनाः। राज्ञः प्रत्येना इति षष्ठीसमासः। क्ते नित्यार्थे। अत्र क्तेति तदन्तपरमुत्तरपद इत्यस्य विशेषणम्। ग्रामः शिल्पिनि। अत्र ग्राममिति स्वरूपग्रहणम्। शिल्पिनीत्यत्र त्वर्थग्रहणम्। लक्ष्यानुसारिव्याख्यानात्। ग्रामशब्दो ग्रसेराचेति मन्प्रत्ययान्तत्वादाद्युदात्तः। राजा च प्रशंसायाम्। प्रशंसायाङ्गम्यमानायाम्। षष्ठीसमास इति। कर्मधारय इत्यस्यासम्भवेन समासद्वयेऽप्यस्य सूत्रस्य प्रवृत्तिः। राजयो-

ग्यतयेति । राजपरिचर्यायोग्यतयेत्यर्थः । अधिकारोऽयमित्यस्यायं योग इच
र्येऽन्त इति सूत्रेऽन्तशब्दस्य विरुद्धार्थकपरत्वात्समुदायस्य ततः प्राङ्निवृत्ति
स्यात्तयाचोदात्त, इत्यस्यापि सम्बन्धो न स्यादत आह । अन्त इत्यत इति । अ
यमित्यस्य सौत्रः प्रथमान्तः शब्दो बोध्यः । उद्देश्यतावच्छेदकावच्छेदेन वि
धेयान्वयः । सप्तमीहारिणौ । धर्मशब्दोऽत्र लाक्षणिक इत्याशयेनाह । धर्मा
नामिति । ननु देयमित्यधिकमत आह । प्रकृत इति । एवञ्च स्वीकारस्य यत्कि
ञ्चित्कर्माकाङ्क्षत्वादप्रकृतकल्पनायामिदं व्याख्यानलभ्यमित्यर्थः । अहरणइत्ये त-
द्धर्म्य इत्यस्यविशेषणमित्याशयेन, वाडवहरणमितिप्रत्युदाहरणम् । अहरणमि
ति स्वरूपपरम् । कर्मसाधन इति । कर्मबोधकल्युडन्तोऽत्र हरणशब्दः । युक्ते
चात्र युक्त इत्यस्य युक्तशब्दपरतया युक्तशब्दे परे इति नार्थः। युक्तस्वरश्च कृत्स्वरा-
द्भवति विप्रतिषेधेन । युक्तस्वरस्यावकाशः । गोबल्लवः । अश्वबल्लवः । कृत्स्वरस्यावकाशः
खन. । इहोभयम्प्राप्नोति । गोसङ्क्रः । पशुसङ्क्रः । युक्तस्वरो भवति विप्रतिषेधेनेति भा-
ष्यानुसारिव्याख्यानात् । किन्तु युक्त इति समासस्यविशेषणम् । वाचकत्व-
मिहविशेषणताप्रयोजकसम्बन्ध इत्याशयेनाह मूले युक्तवाचिनीत्यादि । इ-
ष्यत इति । अनुपदम्प्रदर्शितभाष्यमिह मानम् । गोसङ्क्र इति । गोषु सम्यक्
स्यात इत्यर्थः । न च सङ्क्रशब्दस्य कप्रत्ययान्ततया वार्येति सूत्रविषयत्वेन
कथमिह कृत्स्वरात्पूर्वविप्रतिषेधप्रदर्शनमिति वाच्यम् । प्रायमिकप्राप्त्यभिप्राये-
णैवमभिधानात् । इति क इति । कर्मणीतिशेषः । अध्यक्षशब्द इति । अध्यक्षश-
ब्दोत्तरपदकः समास इत्यर्थः । पापञ्च शिल्पिनि । पापमिति स्वरूपपरम् । शिल्पि-
नीति त्वर्थपरम् । लक्ष्यानुसारित्वादिसम्मतव्याख्यानात् । उदाहरणे पापशब्द
आगे आद्युदात्तः । गोत्रान्ते वासि । आद्ययोः । गोत्रान्ते वासिशब्दयोः । अन्त्ययोः ।
परशब्दयोः । समास इति पूर्वपदमिति चाधिकारलब्धम् । गोत्रवाचिनि अन्ते
वासिनि चोत्तरपदे माणवब्राह्मणशब्दयोश्च परयोः पूर्वपदमाद्युदात्तं स्यात् ।
यद्यपि माणवब्राह्मणशब्दयोरपत्यार्थकत्वमसम्भवस्तथापि विशेषरूपेणोभयोरुपा-
दानसामर्थ्यादिह गोत्रशब्दस्तद्वाचकत्वेन प्रसिद्धपर इत्याशयेनाह । माणवेति । भृगु-
ब्राह्मणः सुशब्दश्च छन्दयोः । समासे सम्यक्प्रत्ययकर्तृपरस्ततोऽपत्ये प्रत्ययः । प-
स्य भार्या धीमत्वेन निन्दा । अङ्गानि । अवाङ्गशब्दो येन शैत्यं सम्पाद्य सप

तोकमुपादाय नञा श्राद्धभोजिशब्दस्य समासेऽव्ययपूर्वपदप्रकृतिस्वर. स्यात् तदुत्तरपदप्रकृतिस्वरत्वे नान्तोदात्तत्वमिष्यत इत्यर्थः। ननु च णिनीत्यनेन पूर्वपदाद्युदात्तत्वेन भाव्यमिति नास्ति स्वरभेद. । अत आह। णिनीति सूत्रे संज्ञायामित्यनुवर्त्तते । इयञ्च न संज्ञेति स्वरभेदोऽस्त्येवेति कैयटेनोक्तम्। तेन । संज्ञाग्रहणानुवर्त्तनेन । अत्रेति । नञ् क्रियायां सम्बन्धात् दन्तस्य कारकात्परत्वमिह बोध्यम् । संज्ञापदेन संज्ञात्वेन प्रसिद्धा एव गृह्यन्त इत्याशयः । उत्तरसूत्रेति । उपमानं शब्दार्थेतिसूत्रस्थभाष्यादित्यर्थ. । तत्र हि उपमानमिति किमर्थम् शब्दार्थप्रकृतावेवेतीयत्युच्यमाने पूर्वेणातिप्रसक्तमिति क्रत्वा नियमोऽयं विज्ञायेत । तत्र को दोषः इह न स्यात् । पुष्पहारी । फलहारी। उपमानग्रहणे पुन क्रियमाणे दोषो भवतीत्युक्तम् । यदि णिनीति सूत्रे संज्ञायामित्यस्य सम्बन्धः स्यात्तदा पूर्वेणातिप्रसक्तमित्यभिधानस्य इह न स्यात्, पुष्पहारी फलहारीत्यभिधानस्य चासङ्गतिः स्यादिति स्पष्टमेव । संज्ञात्वेन प्रसिद्धा एव संज्ञापदेन गृह्यन्त इति भावः । तत्त्वमिति । संज्ञायामित्यस्य तत्र सूत्रे संबन्धासम्बन्धयोस्तत्त्वमित्यर्थः । वस्तुतस्तु व्रत इति सूत्रस्थभाष्यप्रामाण्येन संज्ञायामित्यस्य णिनीत्यत्र सम्बन्धोऽस्त्येव । उपमानमिति सूत्रेऽपि यथा । किन्तु भाष्यद्वयप्रामाण्यादाधुनिकसंज्ञापि संज्ञापदेन गृह्यते । व्रत इति सूत्रभाष्यीयाश्राद्धभोजीत्येवं स्वरः प्रमज्येतेत्यत्राश्राद्धभोजीशब्दो द्विविधसंज्ञाभिप्राय इति कल्पनया भाष्ययोरविरोध इत्याशयेनाह । वस्तुत इति। उत्तरसूत्रेऽपीति । अपिर्णिनीति सूत्रस्य सङ्ग्राहकः । उपमानं शब्दार्थप्रकृतावेव । अत्रानुवर्त्तमानं यण्णिनीति तदर्थणिन्यन्तस्य शब्दार्थप्रकृताविति विशेषणम् ।ष्मा भूदिति । तथा चेष्टतोऽवधारणार्थ एवकार. । न स्यादिति । पूर्वेणेति शेषः । युक्तारोह्या । पूर्वपदोत्तरपदेति । विनिगमनाविरहादित्यादिः। अस्य इति । णिनीति सूत्रे संज्ञायामित्यस्य सम्बन्धादिन इत्यर्थः । तदपवादोऽयमिति । क्षीरहोतृशब्दस्य युक्तारोह्यादिषु पाठः । एषः गितिः पादोऽध्येतीति । गिति लक्षण । तत्पुरुष. । द्विगुसमास. । तिशब्द एवेति । समासस्वरेण सविशिष्टेन तिशब्द एवादात्त इत्यर्थः । निमिनिमिस्वरमनोगत्वेति । निमित्तो य. समासो द्विगुस्तत्पुरुषस्वस्य वनीयस्त्वमर्थः । समासेन्ते इति ।

चर्म्मेत्युक्तमित्यत्रान्वयः। एतच्छब्दपाठेन। एकश्रितिपाच्छब्दपाठेन । तेन। पूर्वोक्तार्थज्ञापकस्यैकश्रितिपाच्छब्दस्य पाठाभावेन। अत एव। उक्तार्थे ज्ञापकस्याभावादेव। दीर्घशब्दस्य सत्त्वात्वात्र स्वरूपग्रहणङ्किन्त्वर्थग्रहणमित्याशयेनाह। दीर्घान्तमिति। अन्त्यात्पूर्वम्। जे इतिपदमनुवर्त्तते। उदाहरणे जशब्दस्य सप्तम्यां जनेर्ड इति जन्धातुप्रकृतिकडान्तः। ग्रामेऽनिवसन्तः। निपूर्वकाद्वस्धातोर्लटः शत्रादेशेन निवसच्छब्दस्य निवासकर्तृबोधकतया एकवचनेन निर्द्देश उचित इति कथमेतदित्यत आह। सूत्र इति। के चित्त्विति। व्यत्ययास्वीकर्त्तार इत्यर्थः। ऋजन्तम्। तृभूवहिवसिभासिसाधिगण्डिमण्डिजिनन्दिभ्यश्चेति विहितो योऽझच्प्रत्ययोऽधिकरणे तदन्तम्। समासविशेषणमिति। नञा बहुव्रीहिसमासेनानिवसन्तशब्द समासस्य विशेषणमित्यर्थः। अस्मिन् पक्षे *व्यत्ययेन प्रथमा तु स्वीकार्य्यैव। न निवसन्तो निवासाधिकरणं यस्मिन् समासे तत्रे*ति ऋजन्तस्वीकारपक्षे बोध्यम्। समासनिष्ठो निवासाधिकरणाभावश्च वाचकतासम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः। षष्ठीसमासः। उदाहरणभूतो मल्लग्रामादिशब्दः षष्ठ्यन्तपदघटित षष्ठ्यर्थश्च स्वस्वामि भावः। प्रत्युदाहरणमाह। दाक्षिग्राम इति। एवमुच्यते इति। द्वितीयमतेनेदम्। प्रथममते तु दाक्षीणान्निवासकर्तृत्वमात्रेण पूर्वपदस्य निवासकर्त्रभिधायकत्वम्। प्रत्युदाहरणभूतोऽपि षष्ठीसमास एव परन्तु षष्ठ्यर्थ आधाराधेयभाव इति बोध्यम्। घोषादि च। एषु शब्देषु परेष्वित्यर्थ। छात्र्यादयः शालायाम्। छात्र्यादयः शब्दाः पूर्वपदभूताः शालाशब्दे उत्तरपदे आद्युदात्ताः स्युरित्यर्थः। वृत्ताविति। छात्र्यादिपूर्वपदके प्रतिपदोक्तत्वेनास्य प्रवृत्तिरिति वक्तुमुचितमित्यभिप्रायः। निरवकाशत्वप्रतिपदोक्तत्वपूर्वप्रवृत्तौ नियामकमिति मते त्वस्यानपुंसकत्वे चारितार्थ्यान्नपुंसकत्वे परत्वात्तत्पुरुषे शालायामित्यनेनोत्तरपदाद्युदात्तत्वमेव। विभाषा सेनेतिवानपुंसकत्वमत्र भवति। प्रस्थे वृद्धम्। प्रस्थः शिखरसानयोः। कर्क्यादिपर्युदासादिति। न च सूत्रेऽवृद्धमित्युपात्तमेवेति किमेतावदभिधानमिति वाच्यम्। अवृद्धमित्यस्य लिङ्गाविवक्षया समासविशेषणत्वशङ्कावारणायैतदभिधानात्। समासस्य वृद्धसंज्ञानामधेयत्वाद्यदा भविष्यति तदा प्रत्युदाहरणत्वस्य सम्भवात्। सि-

पर्य्यं स्युरमित्यत्रान्वयः । एतच्छब्दपाठेन । एकमितिपाच्छब्दपाठेन । तेन पूर्वोक्तार्थप्रापकस्यैकमितिपाच्छब्दस्य पाठाभावेन । अत एव । उक्तार्थे प्रापकस्याभावादेव । दीर्घशब्दस्य मत्वात्स्व स्वरूपपरत्वहिन्त्वर्थग्रहणमित्याशयेन ह । दीर्घान्तमिति । अन्त्यात्पूर्वम् । जे इतिपदमनुवर्त्तते । उदाहरणे जशब्द च सप्तम्यां जनेर्ड इति जन्धातुप्रकृतिकडान्तः । ग्रामेऽनिवसन्तः । निपूर्वका इस्धातोर्लटः शत्रादेशेन निवसच्छब्दस्य निवासकर्तृबोधकतया एकवचने न निर्देश उचित इति कथमेतदित्यत आह । सुप इति । के चित्त्विति व्यत्ययास्वीकर्त्तार इत्यर्थः । क्तान्तम् । तुभूयहित्वमिभामिमाधिगण्डिसण्डिनि नन्दिभ्यश्चेति विहितो याक्तच्प्रत्ययोऽधिकरणे तदन्तम् । समासविशेषणमिति । तथा बहुव्रीहिसमासेनानिवसन्तशब्द समासस्य विशेषणमित्यर्थः अस्मिन्पक्षे व्यत्ययेन प्रथमा तु स्वीकार्येव । न निवसन्तो निवासाधिकरणं यस्मिन् समासे तत्रेति क्तान्तस्वीकारपक्षे बोध्यम् । समासनिष्ठा निवासाधिकरणाभावश्च याचकतासम्बन्धावच्छिन्नप्रतियोगिताको बोध्यः । षष्ठीसमासः उदाहरणभूतो मल्लग्रामादिशब्दः षष्ठ्यन्तपदघटित षष्ठ्यर्थश्च स्वस्वामि भावः । प्रत्युदाहरणमाह । दाक्षिग्राम इति । एवमुच्यते इति । द्वितीयमतेनेदम् । प्रथममते तु दाक्षीणाश्रियामकर्तृत्वमात्रेण पूर्वपदस्य निवासकत्वं भिधाय कत्वम् । प्रत्युदाहरणभूतेऽपि षष्ठीसमास एव परन्तु षष्ठ्यर्थ आधाराधेय भाव इति बोध्यम् । घोषादि च । एषु शब्देषु परेष्वित्यर्थः । छात्र्यादयः शालायाम् । छात्र्यादयः शब्दाः पूर्वपदभूताः शालाशब्दे उत्तरपदे आद्युदात्ताः स्युरित्यर्थः । हस्ताविति । छात्र्यादिपूर्वपदके प्रतिपदोक्तत्वे नास्य प्रवृत्तिरिति दक्षमुचितमित्यभिप्रायः । निरवकाशत्वम्प्रतिपदोक्तत्वस्य पूर्वसूत्रे नियामकमिति मते त्वस्यानपुंसकत्वे चारितार्थ्यान्नपुंसकत्वे परत्वात्तत्पुरुषे शालायामित्यनेनोत्तरपदाद्युदात्तत्वमेव । विभाषा सेनेतिवानपुंसकत्वमेव भवति । प्रत्वे इदम् । प्रस्वः शिखरमानयो. । कर्क्यादिपर्युदासादिति । न च सू त्रेऽस्वर्दामित्युपात्तमेवेति किमेतावदभिधानमिति वाच्यम् । अस्वर्दामित्यस निर्द्धारविवक्षया समासविशेषणत्वग्रहावारणायैतदभिधानात् । समासस्य इ

एवञ्चान्ते वामिनीत्यनेन सामानाधिकरण्यम् । आचार्यप्रकारकान्ते वामिविशेष्यकोपस्थितिजनकशब्दे पर इत्यर्थः । मूले वा चेति किमित्यस्याचार्योपसर्जनग्रहणं किमर्थमित्यर्थः । तदाप्यन्ते वामीत्यस्यान्ते वामिविशेष्यकबोधजनकत्वर्थ.स्यादेवेति भवति पूर्वाङ्गे वामीत्यत्र दोष. । अन्ते वामिशब्दस्यान्ते वामित्वप्रकारकबोधजनकत्वात् । एवमन्ते वामिपदाभावेऽप्याचार्यप्रकारकबोधजनके पर इत्यर्थे पाणिनीयशब्दस्य प्रोक्तार्थकप्रत्ययान्तस्यास्ति पाणिनिप्रकारकबोधजनकतेति पूर्वपाणिनीयमित्यत्र दोषः । स्पष्टश्चेदमिति । तत्र छात्रज्ञापितस्यापि हृदिमन्त्रेऽन्वर्थे सर्वभाम सर्वकारक इत्यत्रोत्तरपदत्वे सर्वत्रैत्यस्य प्रवृत्तिमाशङ्क्यैवमुक्तम् । तादृगायत्नाभप्रकारमाह । हृदिमात्रेति । सर्वपाञ्चालक इत्युदाहरणे सुसर्वार्धजनपदस्येति हृदिस्ताहश्यप्तिरस्य । सर्वभाम इत्युक्तस्य । बहुव्रीहौ । संज्ञायामित्यस्य सन्निहितत्वाद्विग्वगन्वविशेषणत्वभ्रमनिवृत्तये आह । संज्ञायामितीति । विश्वकर्मेत्युदाहरणे विश्वशब्दे विशि क्वनिन्प्रत्ययसत्वात्प्रत्ययपदप्रकृतिस्वरेणाद्युदात्तत्वे प्राप्ते पूर्वपदान्तोदात्तत्वस्य विधानम् । विश्वकर्मेत्यत्र विश्वमस्य कर्म यस्येत्यर्थः । कर्मशब्द क्रियापरः । उदात्त्वे । बहुव्रीहाविति वर्तते । अनेन सूत्रेणान्तोदात्तत्वविधानस्य फलमाह । नेन्द्रस्येत्यादिना । यदीदमस्यात्तदा बहुव्रीहाविति पूर्वपदप्रकृतिस्वर. स्यात्तथा च हरिशब्दस्य सार्वधातुभ्य इनीत्यन्ततयादिरुदात्तत्वस लिकारस्येत्युदात्तस्यानिकत्वं यणो न स्यात् । हरिरगोऽस्येति विग्रह. । इत्याद्युक्तिरिति । चेर इत्युत्तरसूत्रस्य संज्ञायामिव प्रवृत्तिरिष्टतया तत्र संज्ञायामिति सम्बध्यत एवेति प्रकृते तस्यासम्बन्धे मण्डूकप्लुत्यापत्ति । सा च सम्बन्धतदभावाभ्यां गुर्वित. । प्रकृतसूत्रेऽपि संज्ञायामित्यस्य सम्बन्ध इति वादिन इत्यर्थ. । कशन्तत्वात् । स्यार्यकृदन्तत्वात् । तथा । आद्युदात्त । इत्यपीति । चिन्त्यमिति शेष । इदम्पूर्वसूत्रविषये उपात्तम् । चिन्ताबीजन्तु सूत्रद्वयस्यापि मक्षिकेषु केशेपुरित्यत्र प्रश्नार्थमिषुशब्दोपादानमावश्यकमित्यपि मक्षेपुरित्यपि बहुव्रीहावित्यै तदपवादत्वादनयोरुदाहरणत्वाश्चान्यथा सिद्धमिति । मक्षिकाशब्द स्त्रीविषयवर्णानुपूर्वाणामित्याद्युदात्त. । कुशशब्दस्तृणधान्यानामित्यनेन तथा । तदेव । रुक्त्सुभ्यामित्येतदेव । ततोऽपि । गत्सुभ्यामित्यतोऽपि । इति

यो. सतोरादुदात्तः । ईश्वरशब्दादरजन्तात्‌ योगमयत्वे ङीपि कृतेऽन्तोदात्तमिति विप्रकारकत्वमीश्वरीशब्दस्य यथा भवति तथाऽस्यापीति मतभेदेनामित्रशब्दोऽपि विप्रकारो भवतीत्यत्रे ष्टापत्तिरिति भावः। उत्तरसूत्रयमपीति। तेष्वपि सौरित्यस्य सम्बन्धात् इत्यनेनैवेति। कर्मनृशब्दस्य कृधातुप्रकृतिकमनिनृप्रत्ययान्ततयाऽऽदुदात्तत्वेन बहुव्रीहौ पूर्वपदप्रकृतिस्वरस्याधिता तत्र प्रवृत्तेन्याय्यत्वादिति भावः। सुयुज इति सर्वधातुभ्योऽमित्यमिप्रत्ययान्तः। अन्यत्र सम्भावितामप्याप्तिं वारयति। सुस्रदित्यत्रेति। न च ध त्वरयवामोऽप्यमृशब्देन ग्रहणेऽस्वस्य प्रत्ययाप्रत्ययम भारणत्वेन कथम् त्ययग्रहणपरिभाषाप्रहत्त्या तदन्तलाभ इति वाच्यम्। अनिनस्मन्निति वचनेन यथाऽर्थवत्परिभाषायास्तदंशेऽप्रवृत्तिस्तथा प्रत्ययमात्रग्रहणे प्रत्ययग्रहणपरिभाषाप्रवृत्तिरिति नियमस्यापि त्यागात्। प्रत्ययभिन्नस्यैव ह्यानर्थकत्वं सम्भवतीति। सुप्रथिमेत्यत्र प्रथिमनुशब्दः पृथ्वादिभ्य इमनिज्वेतीमनिजन्तः। आदुदात्तन्दाच्। आदुदात्तमित्यस्य विधेयसमर्पकस्य प्रकरणादेव लाभे पुनः सूत्रोपात्तमुद्देश्यवोधकमतः याददुदात्तस्यादुदात्तविधानमनर्थकमत आह। आदुदात्तमेवेति। अरय इति। अत्र नञ्सुभ्यामिति प्रवर्त्तते। उद्देश्यसमर्पकादुदात्तपदस्य प्रयोजनमाह। कुप्रत्ययान्त इति। हिरण्यशब्दस्यादुदात्तत्वमबोधयति। कन्यनन्तोऽयमिति। रकप्रत्ययान्त इति। तथा चास्यान्तोदात्ततयाऽऽदुदात्तन्दाजितस्याप्राप्तिरिति भावः। ननु वीर्यशब्दस्यादुदात्ततया सुवीर्यत्वव पूर्वेणैव सिद्धमत आह। मूले वीर्यशब्द इति। आदुदात्तानि स्युरिति। अव्ययीभाव इति शेषः। सुषममित्यत्र सुविनिर्दुर्भ्य इति षत्वम्यासिद्धत्वात्समशब्दो द्रष्टव्यः। यद्यपि समृद्धार्थेऽव्ययीभावस्य विषममित्यत्राव्ययीभावे तस्य सम्भवस्तथाप्यर्थान्तरेऽव्ययीभाव त्वायाह। मूले तिष्ठद्गुप्रभृतीनीति। तिष्ठद्गुप्रभृतीत्यस्योपादानस्य फलान्तरमप्याह। अधिसममित्यत्रेति। विभक्त्यर्थेऽव्ययोभावोऽत्र। क्षेममस्यगुरूपपाद्य। उदाहरणेषु तद्धितार्थे द्विगुः। प्रत्युदाहरणे समाहारे। तत्पुरुषे शालाप्राग्वर्णाग्रमित्यादौ नपुंसकत्वप्रयुक्तस्वरस्य चारितार्थ्ये नानपुंसकत्वे चरितार्थे म चाभरादय इत्यनेन बाध इत्याह। छात्रियाशमित्यादाविति। विभाषासेनेति वा नपुंसकत्वम्। चेलखेट। चेलशब्दोऽल्पपरिमाणजीर्णवस्त्रपर। पुत्रचेलमि-

वाचीत्यनुपपन्नमत आह । अत्र चेति । व्याख्यानमिति । कुम्भीनदालमित्यादौ दाशब्दावयवस्योदात्तस्य श्रवणमूलकव्याख्यानमित्यर्थः । भगालमित्यत्र सुपां सुपो भवन्तीति बहुवचनस्थाने एकवचनादेशो व्यत्ययो बहुलमिति व्यत्ययो वा द्रष्टव्य इति भावः । श्वितेर्नित्या । अत्राबह्वजित्युत्तरपदविशेषणमित्युचितम् । श्वितिशब्दपूर्वपदकबहुव्रीहेर्बह्वच्कत्वाव्यभिचारादित्याशयेन मूले श्वितेः परस्यित्यावह्वच्कमिति । श्वित्यंस इत्यत्रांसशब्दो रोगार्थकाम् धातुप्रकृतिकसन्प्रत्ययान्तत्वादाद्युदात्तः स एव श्वितिरंसो यस्येति बहुव्रीहौ प्रकृत्या । श्वितिललाट इति । अत्र बहुव्रीहौ प्रकृत्येति पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वम् । श्वितिशब्दस्य वर्णानान्तस्येत्याद्युदात्तत्वात् । श्वितिककुदिति । एतद्घटकः ककुच्छब्दः ककुदशब्द एव एकदेशविकृतस्यानन्यत्वादिति यो बह्वच् तदभिन्नत्वेन न श्विति ककुदित्यत्रोत्तरपदस्य नित्याबह्वच्त्वमिति भाव । गतिकारकोपपदात् । कुगतीति समास इतीति । गतिसमास इत्यर्थः । कारकोदाहरणमाह । न्त्वाहसेति । इध्मप्रव्रश्चनशब्दे समासद्वयसत्त्वात्कृदुत्तरपदप्रकृतिस्वरे सत्यपि व्यवस्थामाह । प्रव्रश्चन इत्यादिना । स्वरे कृत इति । एवञ्च प्रव्रश्चनशब्दो मध्योदात्तः । षसुल्विधाविति । अव्यये यथाभिप्रेतेति । णमुल्विधावित्यर्थः । गत्यंश इति । तत्रोदात्तवतेति गतेस्तिङन्तेन समाससंज्ञायाः सम्भवादिति भावः । बाधकमिति । समासस्वरबाधकाव्ययपूर्वपदप्रकृतिस्वरस्यानवकाशत्वेन बाधकमित्यर्थः । तिङन्ते सावकाशत्वेन नानवकाशत्वमित्याशङ्कते । कृदग्रहणप्रत्याख्यानेति भाष्योक्तिखितवार्त्तिकेन प्रत्याख्याने । तदुक्तम् । गत्यादिभ्यः प्रकृतिस्वरत्वे कृद्ग्रहणानर्थक्यमन्यस्योत्तरपदस्याभावादिति । परत्वादिति । अव्ययपूर्वपदप्रकृतिस्वरापेक्षया परत्वादित्यर्थः । निघाते । गतेर्निघाते । इदम् । गतिकारकेति सूत्रम् । परत्वात् । अव्ययपूर्वपदप्रकृतिस्वरापेक्षया परत्वात् । बाधकमिति । प्रकारकमित्यादावित्यादिः । कारकोपपदांशे तु समासस्वरस्य बाधकमपवादत्वादेव । केचिदिति । अनवकाशत्व एवापवादत्वमिति वादिनः । बाध्यत्वेनाभिमतं यच्छास्त्रं तदप्राप्तियोग्ये विषये चारितार्थ्यं ह्यपवादत्वाभावप्रयोजकम्तच्चात्र नास्तीत्यव्ययपूर्वपदप्रकृतिस्वरस्यायमपवादो भवत्येवेत्याशयेनाह । अन्ये त्विति । उक्तमतयोर्द्वितीयमतमेव युक्तमित्याह । आया-

समासः। यत्र च समासः कुगतीत्यनेन तत्र सुपेत्यस्य निवृत्तेरामन्त्रेण न सु ततः सुबुत्पत्तेरपेक्षा। गतिकारकोपपदानां कृदन्तेनैव समास इति नियमस्तु नास्ति किन्तु तेषां कृदन्तेन यत्र समासः प्राप्नोति तत्र स सुबुत्पत्तेः प्राक् प्रवर्त्तते इत्येव नियमः। क्वचिदस्य त्याग इति त्वन्यत्। न च यत्क्रिया युक्ता इति वचनाद्धातुवाच्यक्रिया युक्तास्तस्यातुमन्त्र्येवगतित्वमिति कथमामन्त्रेण गतिसमास इति वाच्यम्। यत्क्रिया युक्ता इत्यत्र या चासौ क्रिया चेति, कर्मधारयाश्रयणात्। तस्यतीत्यस्य तद्वाचकशब्दस्यती: त्यर्थात् न चासत्त्वभूतक्रियामात्रवाचको नास्तीति कृत्वा धातुप्रकृतिकप्रत्ययोत्पत्तेरपेक्षास्त्येव। प्रणीरुर्वीरित्यत्रापि क्रियाविशिष्टकर्तुः प्रतीतिरिति नास्य क्रियामात्रवाचकत्वम्। न च प्रभवनस्य भावव्युत्पन्नस्य क्रियामात्रवाचकत्वमस्तीति वाच्यम्। अत्रापि द्रव्यधर्मविशिष्टस्यैव प्रतीतेः। कृदभिहितो द्रव्यवद्भवतीति भाष्यकारस्य सिद्धान्तात्। द्रव्यवदित्यत्र वतिनिर्देशः प्रसिद्धो यो द्रव्यवाचको घटादिशब्दस्तदपेक्ष.। यथा घटादिशब्दे लिङ्गसङ्ख्याकारकशक्तियुक्तस्य प्रतीतिस्तथा भावविहितकृदन्तेनापि लिङ्गाद्यन्वितस्यैवाभिधानम्। एवञ्च यत्क्रिया युक्तास्तद्वाचकता पचतितरामित्यामन्तस्याप्यस्तीति भवति तेनैकार्थी भावः। एवमेव भोक्तुम्याका इत्यत्र तुमुन्प्रत्यय क्रियार्थायां क्रियायां विहितः सङ्गच्छते। न च प्रस्तुत्येत्यत्र क्त्वाप्रत्ययान्तेनासत्त्वभूतक्रियायाश्चप्रतिपादनमस्त्येति वाच्यम्। अत्राप्युत्तरकालिकत्वादीनाङ् क्त्वाप्रत्ययद्योत्यानां सत्त्वान्न क्रियामात्रवाचकत्वमिति सिद्धान्तात्। अथ वोदात्तवता गतिमता च तिङा गतेः समास इतिवार्त्तिकेन समासः। तिङित्यस्य तिङ्घटितेनेत्यर्थात्। इदञ्च वार्त्तिकं कुगतीत्यत्र सुप्सुपेत्यत्र च पठितमित्येतद्विहितस्य तत्पुरुषत्वाभावः। एतेन कुगतीत्यत्रोपपदमतिङिति सूत्रादतिङित्यस्यापकर्षात्तस्य च तिङन्ताघटित इत्यर्थात्कथम्प्रपचतितरामित्यत्रामन्त्रेण प्रशब्दस्य कुगतीति सूत्रेण समास इति दूषणन्निरस्तम्। एकीयमतत्वेन यन्मूलकता तत्र वन्तेनेत्याद्यभिहितन्तत्तु पूर्वोक्तरीत्या न युक्तमित्यरुचिबीजं स्फुटमेव धीमान्तरमप्याह। अत्राहुचीति। तथा सति। समासादाम उत्पत्तिस्वीकारे सति वान्तत्वाभावादिति। प्रत्ययग्रहणपरिभाषयेत्यादि। प्रशब्दस्य पृथक्स्वरयत्वेपि इष्टापत्तिरिति

वैयात्या यदि सूयात्तवाप्याह । किञ्चेति । भाष्यप्रामाण्यादिति । प्रत्याख्यान-परभाष्यप्रामाण्यादित्यर्थः । प्रपचति देश्यादावपीति । अयं स्वरो भवतीति शेषः । उपपदसमास इति । उपपदस्य समास उपपदसमासः । उपपदस्य प्रादिस्तस्य समासः पृथग्भूतेन गतिपदेन समासः । एतेन प्रशब्दादेरुपपदत्वासम्भवादिदमसङ्गतमित्यपास्तम् । तिङि चोदात्तवतीति सूत्रस्थेति । तत्र ह्यादौ तिङ्ग्रहणस्याभावे आमन्द्रैरिन्द्रहरिभिरित्यादौ मन्द्रशब्दे निघातः स्यादित्यनेन तिङ्ग्रहणस्य प्रयोजनमभिधाय यत्क्रिया युक्ता इतिवचनेन मन्द्रशब्दस्येति न गतित्वमितिरीत्या तत्र दोषाभावमुक्त्वा यद्योगाद्गतित्वमित्यस्य स्वीकारे यत्प्रकरोतीत्यत्र धातोरुदात्तवत्त्वाभावान्निघातो गतेर्न स्यादतस्तिङ्ग्रहणमिति सप्रयोजनं तिङ्ग्रहणमित्यभिधाय यदि तिङ्ग्रहणं क्रियते आमन्त्रे न प्राप्नोति प्रपचतितराम् । प्रजल्पतितराम् । असति पुनस्तिङ्ग्रहणे क्रियाप्रधानमाख्यातमस्मादतिशये तरप् तदन्तात्स्वार्थे आम् एवं रीत्या यत्क्रिया युक्ता इतिवचनेन संवादमपि क्रियायोगाद्भवति निघातस्तस्माद्वाच्यस्तिङ्ग्रहणेन । आमन्द्रैरित्यत्र दोषपरिहारः पूर्ववत् । यत्प्रकरोतीत्यत्र दोषपरिहारस्तु या क्रिया यत्क्रियेति समासेनार्थमपि गतित्वस्य आर्थे कार्यमिति तद्वाचकशब्दमात्रग्रहणमिति प्रतिपादितम् । अत्र भाष्ये यदि तिङ्ग्रहणं क्रियते आमन्त्रे निघातो न प्राप्नोतीति दूषणाभिधानहेतुर्यदि गतिकारकोपपदादित्यत्र कृदुपपदमप्यत्याय्यते तदा गतीत्यादिसूत्रेणोत्तरपदप्रकृतिस्वरेण प्रशब्दस्य निघातः सिद्ध एवेति भाष्यविरोधः स्पष्ट । तस्य परिहारस्तु सहेति योगविभागेन चेत्स्यामस्तदा नात्र गतिकारकोपपदादित्यस्य प्राप्तिस्तस्य समासस्य तत्पुरुषत्वाभावात् । उदात्तवतीति वार्त्तिकस्यापि सहेति सूत्रे पाठात्तत्पुरुषत्वाभाव एव स्वीकार्यं । किञ्च सहेति सूत्रविहितसमासप्रत्ययविषये एकार्थीभावस्वीकारस्यो-कारः । तिङि चोदात्तवतीति सूत्रभाष्योपयोगि समासाभाव एव यातु । तदा च न गतीत्यस्य प्राप्तिः । ईदृशे विषये कुगतीति समासस्तु न प्राप्तिस्तत्किन्तु सूत्रे ऽतिङ्ग्रहणस्य तिङन्तस्यापि इत्यर्थकस्याप्रकर्षेण बोधनादिति भावः । प्रपचति देश्यमित्यत्र गतीत्यनेनोत्तरपदप्रकृतिस्वरो भवति स च कृदुपपदाभावे प्राप्नोतीति कृदुपपदमात्रग्रहणमिति वादिमतमनूद्यति । अपाचीति ।

भाष्यविरोध एवेति। छन्दग्रहणप्रत्याख्यानपरभाष्यविरोध इत्यर्थः। छन्दग्रहणाकरणेऽप्यदपीष्टं सिध्यतीत्याह। तिङन्तसमास इति। नन्वत्र कथमस्य तत्पुरुषत्वमत आह। नित्यमिति। अत एव। तिङन्तेन समासस्य तत्पुरुषत्वस्यापीष्टत्वादेव। गतीत्यस्य प्रवृत्तौ चाद्युदात्तत्वस्यैव श्रवणम्। तिङन्तनिघातस्य तु यच्छब्दयोगान्निपातैर्यद्यदीत्यनेन निषेध इत्याह। अत्रेति। नित्यङ्क्रीडेत्यत्र योगविभागाभावेऽप्याह। उदात्तवतेति। ननूत्तरीत्याद्स्वरस्य चेच्छ्रवणमस्य दा क चिदस्योदात्तश्रवणविरोध इत्यत आह। यत्र त्विति। तत्सत्त्वाम्। अन्तोदात्तत्वद्वयस्याम्। गतिशून्यत्वात्। यांहीत्यस्य गतिमत्त्वाभावात्। ननु सहेति योगविभागलब्धसमासस्य यथा तद्धितप्रकरणपठितत्वेप इति सूत्रस्य लक्षणाधिकारत्वोभयरूपत्वस्तयोभयरूपत्वभविष्यतीत्यत आह। उदात्तस्वरितयोगिन इति। उभयरूपत्वस्वीकारादेव तत्पुरुषत्वमयोऽव्ययाव्ययपूर्वपदप्रकृतिस्वरत्वेति वक्ष्यमाणग्रन्थस्य सङ्गति.। भाष्यस्वरसादाह। परे त्विति। क्रियाया विशेष्यत्वादिति। गतित्वनिरूपकक्रियायाः प्रधानीभूताया ग्रहणात्। न चात्र छन्दर्थभावस्य प्राधान्यत्र त्वसत्त्वावस्थापन्न क्रियाया इति कथमेतदिति। एकैव क्रियाविलक्षणधर्माभ्यामासत इत्यस्य स्वीकारात्। प्रणीरित्यत्र तु प्रत्ययार्थे कर्त्तरि तस्य विशेषणत्वमिति स्पष्टमेव। अत एव भाष्ये या चासौ क्रिया चेति यत्क्रिया युक्ता इत्यस्यार्थम्प्रदर्श्य गतित्वनिरूपकक्रियामात्रवाचक कोऽपि शब्दो नास्तीति कृत्वा प्रणीरुग्नीरित्यत्रैव स्यात् प्रणायक इत्यत्र न स्यादित्यनेन छन्दग्रहणस्य प्रयोजने कथिते प्रणीरुग्नीरित्यपि प्रणायकतुल्यमेव एषोऽपि हि कर्त्तृविशिष्टस्यैव वाचक इत्यनेन प्रत्याख्यानवादिनाऽन्यथा सिद्धौ प्रदर्शितायां सिद्धान्तिनाऽप्यन्तर्हि तस्यैवार्थस्य वाचक प्रभवनमिति प्रदर्श्य तस्मात्छन्दग्रहणङ्कर्त्तव्यमित्युक्तम्। कर्त्तृविशिष्टस्येत्यस्य कर्त्तृविशेषणक्रियावाचक इति प्रणायकशब्दादविशेष इत्यर्थः। प्रभवनमित्ययन्तु विशेष्यतया तस्यैवार्थस्य वाचक इति छन्दग्रहणमावश्यकमित्यर्थः। तत एकदेशिना प्रकृतसूत्रे छन्दग्रहणे कृते प्रपचतितरामित्यादौ गतिकारकोपपदादिति विहितस्वराभावे प्राप्ते यद्दान्तमेव भाष्यन्दर्शितम्। स्वयमेव समाधिङ्करिष्यतीति परबुद्धिपरीक्षणाय समाधिर्नोक्त। तमेव समाधिमाह प्रपचतितरामित्यादिना तिङ्प

द्युदात्त । पृथिवीशब्द. पिप्रन्ययान्तत्वे नान्तोदात्तो ङीपन्तत्वादतोऽनुदात्ता-दित्वमुत्तरपदस्य बोध्यम् । सोमारुद्राविति । सोमशब्दोऽत्र चन्द्रवाचकोऽतो नैकशेष । यद्यप्यभ्यर्हितत्व द्रुद्रशब्दस्य पूर्वनिपातो न्याय्यस्तथापि पूर्वनिपात-प्रकरणस्यानित्यत्वाद्रुद्रशब्दस्य परनिपात । घपपाठ इति । सोमशब्दस्याद्यु-दात्ततयोत्तरपदस्यानुदात्तादित्वाभावेन पृथिव्यादिपर्युदासाविषयत्वात्। ,अ-न्तोदात्ताविति । शुक्रमथिनशब्दाविति शेष. ।~तथा सति । अनुदात्तादौ द्वन्द्व इत्यर्थ मति । मूले विषयविभागार्थमिति । अनुदात्तादावित्यस्याभावे उत्तरप-द इत्यपि न वाच्यमुत्तरपदस्य द्वन्द्वे सद्भावस्यावश्यकतया तदुपादानस्य व्यर्थ-त्वात् । एवञ्च विधिप्रतिषेधयोर्विषयविभागो न स्यादिति भाव. । तत्र शङ्कते । न चेत्यादिना । समाधत्ते । पूर्वसूत्र इति । यदि भवदुक्तो विषयविभाग एवा भिमत स्यात्तदा देवताद्वन्द्वे पृथिवीरुद्रपूषमन्थिष्विति ब्रूयादित्यर्थ । ज्ञापय-तीति । अन्यथा पृथिव्यादीनां व्यञ्जनादित्वादनुदात्तादित्वाभावात्पर्युदासस्य व्यर्थत्वापत्तिरिति भाव' । स्वरोऽयकत्वच स्वरविशेषानुवादेन विहितत्वम् । स्वरित' सिध्यतीति । स्वरोऽयकेति वचनाभावे मकारेण व्यवधानादुदात्ता-त्परत्वाभावेनोदात्तादनुदात्तस्य त्यस्य प्रवृत्तिर्न स्यादित्यर्थ । थाथघञ् । गति-कारकोपपदादिति मण्डूकप्लुत्याऽनुवर्तते । कृन्निति । ह्वनिकुषिरमिकाशि-भ्य' कृथनिति काथन् । तृतीयातत्पुरुषे त्विति । पुरुभि. स्तुत इति विग्रहेण तृतीयातत्पुरुषइत्यर्थ ॥ चय. । प्रचय इत्यत्र चयशब्द । अयं स्वर । थाथेति सूत्रविहितमन्तोदात्तत्वम् ॥ एवञ्च चयशब्दस्यान्ततया निचयशब्दो मध्योदा-त्त एव भवति ॥ सुस्तुतमित्यत्र सुशब्दस्य सु .पूजायामिति॰ कर्मप्रवचनीयत्वाच्च गतित्वमिति थाथेति सूत्राप्रवृत्तावव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वमेव ॥ अयं स्वर: । उत्तरपदस्यान्तोदात्तत्वम् ॥ एतच्च यथा श्रुतसूत्रपाठेन सिध्यतीति क्त-श्चपथशब्दस्याथेति सूत्रे पठनीय इति तात्पर्यम ॥ समासान्तरमाह । क्तश्चपथस्ये-ति ॥ समासनिर्देशात्क्तेति । गतिकारकोपपदात्कृदिति सूत्रे समासनिर्देशा त्क्तत्वर्थ ॥ सूपमानात् ॥ समाहारद्वन्द्व ॥ कर्मप्रवचनीयात्तो परत्वेऽयं स्वरो नित्याशयेनाह । अत्रापीति । अत्रापि समासनिर्देशाभिप्रायेण गतिकारकोप पदादित्युक्तम् उभयतो गतिग्रहणमात्रस्यैव प्रयोजनम् । गते सोरित्यर्थात् ।

हणमत्याख्यातमित्यत्तेन । अतिप्रसङ्ग इति । यदि तिङि चोदात्तवतीति सर्वं तिङ्ग्रहणन्न क्रियते तर्हि आमन्त्रेविन्द्रबर्गिभिर्याहीत्यत्रापि प्रसङ्ग इत्यर्थः । मान्यदेव । यत्क्रिया युक्ता इतिवचनादयमर्थेनैव । अत एव । अनुप्रदीपकीला कद्ग्रहणस्यावश्यकत्वादेव । नोक्तमितीत्यस्योपसंहारग्रन्थे नोक्तमित्यर्थः । किञ्च क्रियाविशेषणकबोधजनकेनापि यत्र समासस्तत्र स्वरमिध्यर्थकद्ग्रहणकर्तव्यम् । इदमेव ज्ञापकङ्क्रियावाचकग्रहणे प्रधानीभूतक्रियावाचकशब्दस्य ग्रहणमित्यर्थस्य । तेन भोक्तुङ्गतो भोक्तुस्याक इत्यादौ तुमुन्न भवति । यत्तु कार्यङ्क्रियामात्रनिमित्तकन्तत्तु गुणभूतायाङ्क्रियायामपि भवति । कारकविभक्तय. क्तवतुआदय. प्रत्ययाश्च यथा । यत्तु कैयटेन कृदभिहितो भावो द्रव्यवत्प्रकाशते तेन प्रभवनमित्येषोऽपि शब्द. स्वघटकधातुप्रतिपाद्यस्यासत्वभूतक्रियारूपार्थस्य प्रत्ययार्थद्रव्यधर्मलिङ्गसङ्ख्याद्युक्तार्थस्य च वाचक इति क्रियामात्रस्यैव वाचको न कश्चिदिति यथा कथञ्चित्क्रियावाचकस्य प्रलम्भयिष्यतीति कृद्ग्रहणमत्याख्यातमित्युपसङ्गतन्तत्र, नोचितम् । एवं व्याख्यानेऽपि साध्यत्वावस्था सिद्धावस्थैत्यवस्थाद्वययुक्ता क्रियैव प्रदर्शिता न तस्य कर्त्रादिरिति तत्रैवानेन स्वर. स्यात् न तु प्रयायक इत्यादाविति कृद्ग्रहणस्य सर्वत्र स्वरमिध्यर्थमावश्यकत्वात् । उभे वनस्पत्यादिषु । सूत्रारम्भस्य प्रयोजनमाह । वनशब्द इत्यादिना । तथा आद्युदात्त इत्यर्थ । अन्यथा । आद्युदात्तनिपातनाभावे । निपातनतुल्यत्वप्रदर्शनायाह । एवमिति । तथा च सति सूत्रे आन्यायप्राप्तस्वराद्विपरीतोच्चारणेन निपातनतुल्यत्वलाभ इति भावः । सप्ताक्षरेण लोपाभावनिपातनमधिकमिति तत्त्वम् । आद्युदात्ताविति । सप्तशब्दे न काराकारस्य धातुस्वरेणोदात्त अकारस्यामिकादेशस्योदात्तत्वम् । अजशब्दे तु जित्स्वरेणेति बोध्यम् । शुन शेप इतीति । शुन इव शेपो यस्येत्यर्थ । शेप पुच्छलाङ्गूलेत्वित्यनुवा । अल्पमरीति । एतदन्ते न शुन इत्यस्यार्थोदात्तस्य प्रदर्शनम् । स्वार्थे स्वलेन तु शेपशब्दस्याद्युदात्तस्य प्रदर्शनमिति विवेक । शिपशब्दः पुंनपुंसकलिङ्गवाची । देवता द्वन्द्वे च । उभे इत्यनुवर्तते । तथैव । आद्युदात्त एव । अग्निशब्दस्यान्तोदात्तादित्वमुपपादयति । अग्निशब्द इति । अन्तोदात्त इति । अङ्गे र्नलोपश्चेति न्यु प्रत्ययात् । धाता पृथिवी इति । धातृशब्द आ

छन्दो व्याख्यानमित्यत्र कर्मषष्ठ्यन्तस्य । राजदन्तादौ तु कर्तृषष्ठ्यन्तेति बोध्यम् । गणे पठिता इति । अत एव तत्र षष्ठीसमासः । सुप्सुपेति समास इति । समस्यमानपूर्वपदक इति शेषः । मूलकारोऽप्यत्र तत्पुरुषे तुल्येति प्राप्तमित्येतद्दर्शयति । पुण्यशब्दस्येति । एतदपवादत्वम् । तत्स्वरापवादत्वम् । ननु सुप्सुपेतिसमासेन चेत्समासस्तदा च न तत्पुरुष इत्यस्य प्राप्तिरत आह । तत्पुरुष इति । तत्स्वर इति । भवतीति शेषः । तदा नास्य प्राप्तिः अपूर्तस्यान्तास्वरत्वाभावात् । प्रकृतिस्वर इति । तृतीयापूर्वपदप्रकृतिस्वर इत्यर्थः । तृतीयातत्कृतेति सूत्रेण समाससंज्ञायाः सत्त्वादिति भावः । व्याख्यानादिति । माषत्रिफलमित्यादिपदानामन्तोदात्तानामन्त्यशेनमूलकव्याख्यानादित्यर्थः । इदम् । ऊनार्थेति सूत्रम् । ननु समशब्दपूर्वपदको यत्र समास समार्थे इत्यादौ तत्र उत्तरपदान्तोदात्तत्वमिष्यतेऽतस्तृतीयाग्रहणमावश्यकम् । न हि तत्र पूर्वपदस्य प्राप्तिः समशब्दस्य लक्षणमसिम इत्यनेन सर्वानुदात्तत्वे बाधितेनोदात्तस्वरेण योगित्वाभावादिति शङ्कते । न चेति । समासस्तु तत्रार्थे न नित्यसमास इति वार्त्तिकेन । प्रकृतिस्वराभावे । अर्थे इतिसूत्रविहितप्रकृतिस्वराभावे । समाधत्ते । तदभाव इति । पूर्वपदप्रकृतिस्वराभाव इत्यर्थः । इत्याहुः । ऊनार्थेति सूत्रेऽर्थ इतिस्वरूपपरमिति वादिनः । आहुरित्यनेन तस्यानुचितामरुचिं प्रकटयति । परे त्वित्यादिना । तृतीयाया इत्युपादानस्यापि चारितार्थ्यमाह । अर्थे ति । प्रतिपदोक्तपरिभाषाभाव इति । पाघादूनादिशब्दोपादानेन विहितो यः समासस्तस्यैव ग्रहणमित्यं तदर्थकपरिभाषाभाव इत्यर्थः । मासपूर्व इति । तृतीयापूर्वपदप्रकृतिस्वरोऽत्र । मिथ्यस्वानुप । तृतीयाया इति वर्त्तते । इत्यं सं दर्पण इति । पणबन्धशब्दस्य हृदेऽर्थे दन्दादेरिति भावः । नर्द्यपर्थ्यम् । अनुपसर्गग्रहणधैर्यम् । प्रतिपदोक्तसमासविधायकेऽनुपसर्गस्यैव पाठात् । वाक्सामित्य इति मन्युदाहरणस्य यदा वाक्यं राजकार्यसाधनाङ्गीकारे कृते सति राज्ञा कस्यचिद्दृश्यते नाङ्गीकारः क्रियते तदा प्रवृत्तिः । नञो गुणप्रतिषेधे । अत्र गुणशब्दो जातिसंख्यादिजातिरिक्तपर्यायः । अल्पमित्यन्तान्तरस्य शब्देन बहुव्रीहिः । कर्मेण । उदाहरणमपि । मुने नञ क्रियते । गुणप्रतिषेधे इत्यं वास्तु प्रतिषेधेन यतनञ एव हस्ता इति मतं । त्रिगादि भर्गिक इत्यत्र नाईभर

एवं सति सुपमानादित्यत्र स्विति लुप्तपञ्चम्यन्तम्पृथक्पदमिति स्वीकारेऽपि न क्षतिः। संज्ञायामना। गतोत्यादिश्च इति च वर्त्तते। इति प्राप्तमिति। तत्परत्वादनेन बाध्यत इति शेषः। अगवि संहितेत्येतद्व्याचष्टे। गोरन्यस्येति। कारकाद्दत्तश्रुतयोः। संज्ञायामिति वर्त्तते मण्डूकप्लुत्या। अत एवाह। संज्ञायामिति। नियमोऽयमिति। संज्ञायाङ्क्तान्तस्याशिषि चेद्दत्तश्रुतयोरेवेत्येवं विधौ नियमोऽयमित्यर्थः। आशिषिक्तान्तस्य वृत्तिं सूचयति। देवा एनमित्यादिना। कारकात्किमिति मूलोक्तस्य तात्पर्यमाह। कारकात्किमित्यादिना। सम्भूयादिति। रामायणपारायणस्य भावित्वे मत्वे तादृशव्यवहारो लोके दृश्यते। सौत्रस्यैवकारस्य विपरीतनियमशङ्कावारणार्थत्वमाह। मूले एव किमित्यादिना। एवकाराभावे दत्तश्रुतयोर्येत्कारकादेवेति नियमोऽपि सम्भाव्येत तथा चेष्टस्थले न स्यादन्तोदात्तत्वमित्याह। तेन संश्रुत इति। देवखातेति। संज्ञेयं खातविशेषस्य। आशिष्येवेत्येवमत्रेष्टो नियम इत्यभिधानमयुक्तं कारकावधारणमित्यादिना दत्तश्रुतयोरेवेत्येव मन्वयस्योक्तत्वादत आह। इत्येवमप्यत्रेति ;। अत्र प्रमाणन्तु कारकाद्दत्तश्रुतयोरनाशिषि प्रतिषेधो वक्तव्यः। अनाहतो नदति देवदत्तः। सिद्धन्तूभयनियमात्। उभयतो नियमः करिष्यते इति भाष्यमेव। अनाहतो नदति देवदत्त इत्यत्र देवदत्तशब्दः शङ्खविशेषस्य धनञ्जयसम्बन्धिनः संज्ञा। वाक्यभेदेन द्विविधो नियमः कार्यं इति भावः। शङ्खविशेषस्य यत्र संज्ञा तत्र देवा एनं देयासुरित्यर्थो न प्रतीयत इति तात्पर्यम्। अत्र कारकादिति योगमिति। तत्र संज्ञायामिति न सम्बध्यते। दूरादागत इत्यागत इत्यस्य क्तान्तत्वङ्कृद्ग्रहणपरिभाषया बोध्यम्। इत्यत्र तेन कृतम्। अत्र कृत मिति कर्मक्तान्तमतस्तृतीयाकर्मणीति सूत्रापवादत्वमस्य तत्फलमाह। भावे यदेति। अन्तो भावकर्म। कारकादित्यनुवर्त्तते। पूर्वोत्तरसाहचर्यादत्र योऽन्तशब्दः सोऽन्तप्रत्ययमात्रबोधक इति तदन्तविधिः। सक्तिन्। कारकादिति वर्त्तते। नन्वस्य कृत्स्वरापवादत्वाभिधानमसङ्गतं क्रीतशब्दे कृत्स्वरबाधकस्य तृतीयाकर्मणीत्यस्य प्राप्तेरत आह। क्रीतेत्विति। एवञ्च यद्यपि तत्र तृतीयेत्यस्य प्राप्तिस्तथापि कृत्स्वरस्य सार्वत्रिकप्राप्तिमात्रेण कृत्स्वरस्यापवादत्वमिति भावः। इयवर्णं पाणिनिकृतिनिर्मयोः कथं षष्ठासमासः।

नञर्थसापेक्षत्वेनासामर्थ्यादप्राप्त इमनिज्ज्ञापकाद्भवत्यर्थमिति । एवम्प्रकारेण नञ्पूर्वात्तत्पुरुषादुत्तरतद्धितविषये प्रत्ययोत्पत्तिरूपप्रयोजनमभिहितम् । अ स्यायम्भावः । सापेक्षत्वेनासामर्थ्यादप्राप्तस्तद्धित इति न नञ्पूर्वादिति प्रतिषेधो न कार्यः स तु कृत इति ज्ञापयति ततश्च न नञ्पूर्वादिति प्रतिषेधस्य स्वतस्त्विषये चारितार्थ्यमिति । तत सिद्धान्तिनोक्तमेतदपि नास्ति प्रयोजनमा चार्यप्रवृत्तिर्ज्ञापयति सर्व एते तद्धिता सापेक्षाद्भवन्ति । यदयन्नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्थास्तद्धिता इत्याहेति । एवम्प्रकारेण न नञ्पूर्वादिति सूत्रमप्रत्याख्यातम् । एवन्तत्सूत्रीयभाष्यप्रघट्टकेन नञर्थस्यैकदेशान्वयेन, सापेक्षत्वेऽपि गुणप्रतिषेधग्रहणाज्ज्ञापकात्तद्धितोत्पत्तिर्भवतीत्यर्थः स्वीक्रियत इति बोध्यम् । न नञ्पूर्वेति सूत्रभाष्यस्य व्याख्यानावसरे कैयटेन तु यथोपपादितन्तद्दूषयति । यत्त्विति । तत्र हि यदयमिति प्रतीकमुपादाय कैयटेनाभिहितम् वत्सेभ्यो न हि त इत्यादौ प्रतिषेधापेक्षणात्तद्धितानुत्पत्तौ नञ परस्य सम्पाद्याद्यर्थतद्धितान्तस्यान्तोदात्तविधानमनुपपन्नन्तःकृत सामा न्येन सर्वस्तद्धितो नञर्थापेक्षादपि भवतीति ज्ञापयतीति ।वत्सेभ्यो न हित इति एव कथनेन प्रधानस्य सापेक्षत्वं स्पष्टमेव । कैयटोक्त्या नञो गुणप्रतीतिसूत्रस्य सम्पूर्णस्य ज्ञापकता लभ्यते सा न युक्तेत्याह सूत्र सार्थक्यादिति । पूर्वोक्तकैयटरीत्यार्थविवक्षायान्त्वमतसिद्धसूत्रसार्थक्यन्तदा भवेद्यदा गुणप्रतिषेधो गम्येत तदेव तु नोपपद्यत इत्याह किञ्चेदृश इत्यादिना । स्वाभिमतङ्गु णप्रतिषेधग्रहणस्य ज्ञापकत्वमुपपादयति । भेदार्थकत्वे त्विति । न गर्दभरथ मर्हतीत्यर्थे युगपद्गर्दभरथस्य नञर्थस्य च तद्धितार्थान्वयविवक्षायाम्भेदार्थकत्वं स्पष्टमेव । एवञ्च । सूक्ष्मेक्षिकाया सत्याञ्च । पष्ठीसमासे । वत्सीयशब्दस्य नञा समासे । तदुदाहरणम् । सूत्रोदाहरणम् सुलभमिति । तथा च न भा ष्योक्तज्ञापनसङ्गतिरिति भावः । भाष्यकारोच्चारित भाष्याक्षराणामप्यसङ्गति कैयटमत इत्याह । किञ्चेति । ननु न वत्सेभ्यो हित इत्यर्थविवक्षायाञ्च नञ र्थस्य हितार्थेऽन्वयविवक्षाऽपि तु वत्सशब्दार्थे हितार्थे तु वत्सान्वयविवक्षेति सापेक्षत्व वत्सस्यास्त्वेवेति भाष्यसङ्गतिरत आह । वस्तुतो युगपदिति । न च भवदुक्तरीत्या गुणप्रतिषेधग्रहणमात्रस्य भाष्यकाराभिप्रेतत्वं यदयङ्गुणप्रतिषेध

धिकशब्दस्य विशब्देन निपातानामनेकार्थकतया नञ्समार्थेन मयूरव्यंसकादित्वात्समासेऽपि प्रसङ्गः स्यादित्युत्तरम् । गुणप्रतिषेधे किमिति । एतदभावेऽपि नञा समासे गुणस्यैव प्रतिषेधो गम्यतेति प्रश्नः । अन्योन्याभावार्थकत्वं यत्र नञस्तत्रान्तोदात्तत्वम्मा भूदित्युत्तरम् । किन्तु तत्राव्ययपूर्वपदप्रकृतिस्वर एव । तत्र प्रतियोगितावच्छेदकात्यन्ताभावस्य स्वार्थच्छिन्नप्रतियोगिताकभेदसमनियतत्वाभिप्रायेण शङ्कते न चेति । वाच्यमिति परेणान्वयः । परत्वात्तद्धिते । नञ्समासविधायकशास्त्रापेक्षया छेदादिभ्य इत्यस्य परत्वात्तद्धिते । एकदेशद्वारकेति । गर्दभरथिकशब्दस्य योऽर्थो गर्दभरथकर्मकार्हणकर्त्ता तदेकदेशगर्दभरथस्य प्रतियोगित्वेनान्वयस्य विवक्षितत्वादस्यैव तद्द्वारकं सामर्थ्यमिति भावः । एकदेशद्वारकसामर्थ्ये समासप्रवृत्तिश्च विस्पष्टपटुरित्यत्र दृष्टैव । आरोपितमिति । एते द्रव्यभेदप्रतीतौ विश्रान्तिमुपचिता प्रत्ययार्थोपसर्जनेति । यद्यप्युभयोरेककाले यदा विवक्षा तदा न प्रत्ययार्थोपसर्जनत्वं सिद्धन्तथाप्यर्थणांशे विशेषणताऽस्त्येवेति सापेक्षत्वशङ्का । स्पष्टश्चेदमिति । न नञ्पूर्वादितिसूत्रे प्रतिषेधस्यानिर्देशेन कस्यायम्प्रतिषेध इत्याशङ्का त्वतलोः प्रतिषेध इति समाधाने दृश्यते नञ्पूर्वात्तत्पुरुषात्त्वतलावब्राह्मणत्वमब्राह्मणतेति प्रतिपाद्य न नञ्पूर्वादित्यधिकारसूत्रमित्यभिप्रायेणाचार्येणात उत्तरम्पठति । न नञ्पूर्वादित्युत्तरस्य प्रतिषेधः । न नञ्पूर्वादित्युत्तरस्य भावप्रत्ययस्य प्रतिषेधः क्रियते । इत्येवमभिहिते पृथ्वादिभ्य इत्यादिना परिगणिताभ्यः प्रकृतिभ्य उत्तरो भावप्रत्ययो विधीयते न च तत्र काचिन्नञ्पूर्वा प्रकृतिर्दृश्यते तदन्तविधिस्तु नास्ति ग्रहणवतेत्यनेन प्रतिषेधादिति पूर्वपक्षे यत्र साक्षादन्तशब्द उपात्तस्तत्र प्रयोजनम्भविष्यति पत्यन्तपुरोहितादिभ्यो यगिति परेणाभिहिते यद्येतावत्प्रयोजनं स्यात्तर्ह्ययम् ब्रूयात्पत्यन्तात्यग् भवति पत्यन्तान्नञ् तत्पुरुषाच्चेति समाधाय एवन्तर्हि ज्ञापयत्याचार्य उत्तरो भावप्रत्ययो नञ्पूर्वाद्बहुव्रीहेर्भवतीति कथितम् । वक्ष्यमाणः प्रत्ययो यस्येति विवक्षायां यथा । एवङ्कथिते नेदमेस्त्वतलाविवेष्यते इत्येवम्प्रतिपादने एवन्तर्हि ज्ञापयत्याचार्य उत्तरो भावप्रत्ययः सापेक्षादपि भवतीति किमितस्य ज्ञापने प्रयोजनमसमर्थसमासेभ्यो भाववचनः स्वरोत्तरपदवृद्ध्यर्थमित्युक्तमदुपपन्नम्भवति । न दर्शोभाव इत्यादिविषय

इत्यर्थविवक्षायान्तु प्रत्युदाहरणम् । दीक्षित इतीति । दीक्षा यज्ञदीक्षा । यज्ञारम्भ सङ्कल्पः । सा सञ्जाता यस्य तस्य पाको निषिद्ध इत्यर्थः । प्रकृतसूत्रे ह-क्षिता इति न सम्बध्यत इत्याशयेनाह । उत्तरेति । गतिकारकपूर्वत्वेऽपीति । अविलिख इति यथा । इगुपधलक्षणः कः । क्षमात्रग्रहणसत्त्वात्तदुग्रहणपरिभाषाप्रवृत्तिः । स्वयं कृद्ग्रहणपरिभाषाप्रवृत्तेः स्थलान्तरमाह । अप्रपच इतीति । अत्र । आक्रोशे चेति सूत्रे । इति स्थितमिति । यदि प्रकृतसूत्रे तयोरनुवृत्तिः स्यात्तदा पूर्वविप्रतिषेधविचारासङ्गतिः स्पष्टैव । नन्वेवमत्र तयोरननुवृत्तौ संज्ञायामित्युत्तरसूत्रवैयर्थ्यन्तस्याप्याक्रोश एव प्रवृत्तेरत आह । संज्ञेति । तत्कार्यम् । देवकार्यम् । अत्र । कृत्य इतिसूत्रे । भाष्यसम्वादेन पूर्वत्र गुणप्रतिषेध इत्यस्याम्बन्धेऽपि मण्डूकप्लुत्याच सम्बध्यते इकारादेरितीति । खिष्णुच्प्रत्ययस्य भूधातोर्विधानात्तस्योपदेश उदात्तत्वाद्वलादिलक्षणे नेडागमेन सिद्धे खिष्णुजित्यत्र कारोच्चारणमिष्णुज्ग्रहणेन खिष्णुच्प्रत्ययस्यापि ग्रहणार्थमिति ह्रस्वानुबन्धकत्वेऽपि न तदनुबन्धकपरिभाषाप्रवृत्तिरिति भावः । चार्वादीन् प्रदर्शयति । चारुसाध्वित्यादिना । विभाषाछन्दसि नञ इत्यनुवर्त्तते तदाह । नञ इत्यादीति । वेति शेषः बहुव्रीहौ । अत्र प्रथमपूरणयोरित्यन्तपदार्थापेक्षयाऽवयवषष्ठी । तृतीयेति योगविभागादिति । द्वितीयश्च तृतीया । इदम् । योगविभागेन समास इत्येतत् । समासान्ता इत्यत्र समासपद समासोत्तरपदपरमिति वादिमतेऽन्तोदात्तत्वद्वय एव स्यात्परन्तु तन्मतनिरासेन समासावयवत्वमेव व्यवस्थापितमिति यत्र कप् तत्रापि कपः पूर्वस्यैवोदात्तत्वं भवतीत्याशयेनाह । समासान्तास्विति । सङ्ख्यायाः स्तनः । सङ्ख्यावाचकात्परः स्तनशब्दो बहुव्रीहावन्तोदात्तः स्यात् । द्विस्तनेति । पापापसर्यो प्रतिमाऽत्र विशेष्य । नासिकाङ्गत्वान् ङीष न ङीप् तत्र यत्र विशेषमाह । द्विस्तनीत्यादाविति । पदे । उत्तरपदस्य स्तनशब्दस्यान्तोदात्तत्वाभावे । अत्र बहुव्रीहाविति । विश्वो मित्रं यस्येतिविग्रह इत्यादिः । इत्येव भवतीति । पूर्वपदान्तोदात्तत्वमेव भवतीत्यर्थः । परत्वात् । बहुव्रीहौ प्रकृत्येतदपेक्षया परत्वात् । अन्तरशब्दस्य सर्वनामत्वेन पूर्वनिपाते प्राप्ते आह । उदाहरणेति । लक्षणलक्षितमिति । तेन स्वराङ्गमिति यौगिकस्य व्यावृत्तिः । नाव्यद्रिकुक्ष-

अङ्गपङ्करोतीत्येव वक्तव्ये सम्पूर्णसूत्रोपादानमनर्थकमिति वाच्यम् । अभाव
मात्रस्य भावज्ञानसापेक्षनिरूपकत्वेन प्रतियोगिप्रसिद्धिसौलभ्याय तयोरुपादाना
त् । इत्याहुः । भाष्याचारस्वारस्यवेत्तारः । यदेतस्य सूत्रस्योदाहरणमकार्षीद्वै
किकमित्यादि तत्र कथञ्चिदप्रतिषेधार्थकत्वनञ इत्याकाङ्क्षानुत्थानाय गुणपदा
र्थनिर्वचनमूले गुणो ह्रीत्यादि । प्रवृत्तिनिमित्तमिति । तत्त्वञ्च वाच्यत्वे सति
वाच्यवृत्तित्वे सति स्वभिन्नवाच्यानधिकरणत्वम् । प्राथमिकं वाच्यपदमर्थधर्मि
कशक्तिप्रयोज्यमुख्यविशेष्यताश्रयभिन्नपरम् । द्वितीयन्तु तदीयविषयतासामा
न्याश्रयपरमेव । येन सम्बन्धेन यस्य प्रवृत्तिनिमित्तताऽभिप्रेता तत्सम्बन्धाव
च्छिन्ना वृत्तिः ऽत्र ग्राह्या । जात्याकृतिव्यक्तित्रितयस्य जात्याकृतिव्यक्तयः प
दार्था इति गौतमसूत्राद्वाच्यत्वेऽपि घटादिशब्दानाञ्जातिरेव प्रवृत्तिनिमित्त
त्वाकृतिस्तस्या अवयवसंयोगविशेषरूपायाः प्रवृत्तिनिमित्तत्वे साक्षात्तस्य सं
योगस्याऽवयव्यवृत्तितया स्वाश्रयसमवेतत्वस्य प्रवृत्तिनिमित्ततावच्छेदकत्वं वा
च्यं स्यात्. प्रवृत्तिनिमित्तत्वे तु समवायसम्बन्धस्तथेति लाघवमिति जातिरे
प्रवृत्तिनिमित्तम् । आकाशशब्दस्य शब्दावच्छिन्ने शक्तिरिति शब्दत्वे प्रवृत्तिनि
मित्तताऽऽकाशशब्दस्य स्यादिति तद्वारणाय द्रव्यत्वे घटादिपदप्रवृत्तिनिमित्त
ता वारणाय वा वाच्यत्वे सतीति । अन्यव्यक्तिविशेषे घोटकोऽयमिति प्र
प्रयोगस्तत्राऽऽकृतिप्रकारकोपस्थितिसत्त्वेऽप्याकृतेः प्रवृत्तिनिमित्तता वारणाय
वाच्यवृत्तित्वमिति । तदुपादाने चाकृतेर्न समवायेन वाच्यवृत्तित्वमिति नाति
प्रसङ्गः । द्व्यादिद्व्यणुकसमवेतत्रसरेणावतिव्याप्तिवारणाय स्वभिन्नवाच्यान
धिकरणत्वस्य निवेश । प्रमेयत्वे प्रमेयत्वरूपप्रमेयाधिकरणेऽव्याप्तिवारणाय
स्वभिन्नेति । न चैवमपि प्रमेयत्वे स्वभिन्नवाच्यत्वाधिकरणत्वस्य सत्त्वादव्याप्
तिरेवेति वाच्यम् । स्वसमनियतभिन्नं यद्यत्तत्तदनधिकरणत्वस्य विवक्षित
त्वात् । तत्स्वर एवेति । अव्ययपूर्वपदप्रकृतिस्वर इत्यर्थः । यतोऽवानदर्थे
सहिता इत्यनुवर्तते । वचनविपरिणामेन यतोरित्यस्य तस्य सम्बन्धः । आकृतेः
भाष्यासिद्धिः । आद्यस्वरोदात्तार्थमिति भाव । उक्तरीत्या । अवयवद्वारक
सम्बन्धेऽपि तद्विशेष्योपस्थितिस्त्वनुपपन्नैव । अपूर्वाय । गुणनिषेधार्थेति । न
समासे इत्यस्य न पूर्वपद इत्यर्थोऽभिप्रेतो यत्र तत्रोदाहरणम् । यद्याद

न्यपदार्थे उत्तरपदं समासो-वेत्याशयेन पूर्वञ्च उत्तरपदे समासे वेति व्याख्यातम्। पूर्वमिति द्वितीयं वाक्यम्। तच्च नियमार्थम्। कपि परे यदुत्तरपदन्तद्घटितसमासेऽन्त्यादेव पूर्वमिति तेन यत् फलितन्तदाह न कपि पूर्वमिति। पुनस्तद्ग्रहणम्। पूर्वग्रहणम्। यदुक्तम्मूलेऽत्रकइत्यत्र कबन्तस्य वेति तदुपपादयति। अन्त्यात्पूर्वं इति। एतदभावे। ह्रस्वान्त इति सूत्राभावे। अनेन नियमेन। ह्रस्वान्ते उत्तरपदे कपि पूर्वस्योदात्तत्वन्नेति नियमेन। कप एवोदात्तत्वमिति। कपि पूर्वमिति सूत्रस्य नियमेन व्यावृत्तौ प्राथमिकप्राप्तिकं यन्नञ्सुभ्यामिति तस्य प्रवृत्तौ कप एवोदात्तत्वमित्यर्थः। बहोर्नञ्वत्। बहुः सुवदिति। बहुशब्दः सुव्यपदेशं लभत इत्यर्थः। तथा च बहुशब्दस्य सुग्रहणे न ग्रहणे नञ्सुभ्यामितिसिद्धमेव पुनर्नञ्वदिति सूत्रान्तरप्रवृत्त्यर्थमित्याशयेनोदाहरणान्तरोपादानमिति भावः। बहुमित्र इत्यस्य बहूनि मित्राणि यस्येत्यर्थः। अत्रोत्तरपदस्य मित्रशब्दस्याद्युदात्तत्वम्भवति। पूर्वपदप्रकृतिस्वरः। समस्यन्तस्य पूर्वपदस्य बहुशब्दस्य प्रकृतिस्वरः। न गुणादयः। बहोरिति वर्त्तते। अवयवा इतिवचनाद्गुणादीनामेव विशेषणम्। न्यूनतामपाकर्तुमाह। मञ्जूषावेति। एतत्। नान्तोदात्ता इति वाक्यम्। तेन। उपलक्षणत्वेन। इतीति। चेत्यस्य तच्छब्दस्य नोभयोरप्यप्रवृत्तिरिति फलितमिति भावः। उपसर्गात् स्वाङ्गम्। उपसर्गग्रहणमादीनामुपलक्षणम्। नेति नानुवर्त्तते। अस्वरितत्वात्। तत्पुरुष इति। प्रपृष्ठ इत्यादौ तत्पुरुष इत्यर्थः। आयुधवाचिनः पर्शुशब्दस्य स्वाङ्गवाचकत्वाभावादाह। पर्शुः पार्श्वमिति। वनं समासे। समास इति पदं समाससामान्यग्रहणार्थम्। उक्तार्थकमुपसर्गग्रहणमनुवर्त्तते। स्वरः प्राप्त इति। स बाध्यत इति शेषः। इतिप्राप्तमिति। इतिसूत्रप्राप्तमित्यर्थः। तेन पर्यादीनामप्राप्तस्य प्रकृतिभावस्य प्रतिषेधः। अन्तः। लुप्तषष्ठ्यन्तमेतत्। अन्तस्य। उपसर्गग्रहणमण्डूकप्लुत्यानुवर्त्तते। अकारान्तान्तशब्दप्रकृतिकप्रथमान्तमेतत्। न निविभ्याम्। प्रथमान्तमन्त इत्यनुवर्त्तते। परेरभितो भावि। बहुव्रीहिरित्यादि। तेष्वयं विशेषः बहुव्रीहितत्पुरुषयोः पूर्वपदप्रकृतिस्वरयोः प्राप्तिरव्ययीभावे तु परिप्रत्युपापेति कूलतीरेत्यस्य वा प्राप्तिः। बहुव्रीहौ परितः कूलमस्येति परिगतङ् कूलादित्यर्थकाव्ययी भा

ष्ट । सुखस्वाङ्गमिति सम्पूर्णसूत्रमनुवर्त्तते । अव्ययादिभ्य परं स्वाङ्गवाचि
सुखमन्तोदात्तं स्यात् । अनेन सूत्रेणान्तोदात्तत्वनिषेधे सति य स्वर प्र
वर्त्ते तमाह । उपसर्गादीनीति । भाष्यस्वरस इति । तत्र लुङ्मुखस्वरोपचारः
इत्यनेन सुखस्वरनिवृत्तेरव्ययीभावस्याव्ययत्वे प्रयोजनकथनात् । सिद्धमेव ।
समासस्येति सिद्धमेव । पुत्रशब्दोऽन्तोदात्त इति । फिट्स्वरेणेति शेष । एवञ्च
पूर्वपदप्रकृतिस्वरेण मध्योदात्तमेतत् । एवमुत्तरेषु यथा यथमूहनीयम् । वा
जाते । अवयविनो जातशब्दस्यान्यपदार्थनिरूपिताधारत्वविवक्षया हृदे शा
खेतिवत्सप्तमी । सुखादिस्वरूपं शृङ्गग्राहिकान्यायेनेह दर्शयति । सुखदुःखे
त्यादिना । उदाहर्त्तुमुचितमिति । प्रकृतसूत्रविषयतासत्त्वादिति शेष । एवञ्च
मासपक्ष इत्याद्युदाहरणम् । नञ्सुभ्याम् । उत्तरपदग्रहणमत्र सम्बध्यते एव
च तस्यैव कार्यित्वे प्राप्ते आह । समासान्तानामिति । कपि पूर्वमित्यस्मात्
ज्ञापकादिति । यदि नञ्सुभ्यामिति पञ्चमीनिर्देशादुत्तरपदमेवेह कार्यि स्यात्त
दा यत्र कप् तत्रापि कप पूर्वस्योत्तरपदान्तस्य कार्यं सिद्धमेवेति तस्य सू
त्रस्य वैयर्थ्यं स्पष्टमेव । एवञ्चेहोत्तरपदान्तस्य समासस्येत्यर्थस्तावतापि प्र
कृतसूत्रेणाव्रीहिरित्यादावन्त्यस्यैकारादेरुदात्तत्वं सिद्धम् । यत्र च समासान्तो
ऋक्पूरित्यनेन विहितस्तत्रानृच इत्यादावकारप्रत्ययस्योदात्तत्वमिति भाव ।
कपि पूर्वम् । पूर्वसूत्रेणोत्तरपदान्तस्य समासस्य कार्यविधानात्समासान्तानां
समुदायावयवत्वेनोत्तरपदान्तसमासपदेन कबन्तस्य ग्रहणात्कप एवोदात्त
त्वे प्राप्ते तत्र पूर्वस्योदात्तत्वमिष्यत इत्यस्यारम्भ । एवञ्चाब्रह्मबन्धुक इत्या
दौ कप पूर्वस्योकारादेरुदात्तत्वं भवतीति भाव । तदन्तस्य समासस्येति । त
च्च समासस्येति षष्ठी कपि पूर्वमिति पूर्वापेक्षयाऽवयवस्वार्था तया च पूर्वस्य
विशेष इति बोध्यम् । कस्यान्ते । उत्तरपदग्रहणं प्रकृतसूत्रे चानुवर्त्तते । तयो
रेकमुत्तरपदावयवके मात्रविकल्पादेकदेशस्योत्तरपदस्य कस्यान्त इति विशे
षणमित्याशयेनाह । कस्यान्तोत्तरपदकसमास इति । उत्तरपदस्येति षष्ठीप्रकृ
तसूत्रेऽस्यापेक्षया । एवञ्चाव्रीहीक सुगायक इत्यादौ व्रीहिशब्दावयवो यो
ईकारादुत्तरं ईकारादि स एवोदात्तो भवति । शूर्मे पञ्चमित्यादिनेति । कस्यान्ते
ऽस्यादित्येव वाक्यम् पूर्वमित्यनुवर्त्तते । कर्म वर्मो यर्धेति चतुर्भीचाव

गतो गौर उपगौर इत्यत्र योऽव्ययपूर्वपदप्रकृतिस्वरस्स च न तत्पुरुष एव किन्तु समासान्तरेऽपीत्याह । बहुव्रीहेति । सोरवक्षेपणे । अवक्षेपणान्निन्दा । सुपत्यवसित इत्यत्र थाथादिस्वरेणैव सिद्धमिति शङ्कां वारयति । एवञ्चेति । ननु सुशब्दो यदि पूजायामस्ति तदा कथमवक्षेपणप्रतीतिरत आह । अनर्थ इति । ननु गौरित्यस्याभावे कुब्राह्मण इत्यत्र यदि प्रकृतसूत्रेणान्तोदात्तत्वन्तर्हि तत्पुरुषे तुल्यार्थेति सूत्रघटकाव्ययपदेन नञ्कुनिपातानामिव ग्रहणार्थं यत्परिगणनन्तत्र कुग्रहणवैयर्थ्यापत्तिरत आह । नञ् कुनिपातेति । ईषदर्थ इति । ईषदर्थककुशब्देन यत्र समासस्तत्रावक्षेपणाविवक्षायामित्यर्थः । विभाषोत्पुच्छे । सप्तमीसारस्यादाह । तत्पुरुषरूप इत्यादि । उत्पुच्छन्दस्तत्पुरुषसंज्ञक इत्याशयेन यदा त्व तन्मूलेऽभिहितम् । तत्र उदिति पृथक्पदमित्याशयेनाह । कैश्चित्विति । लाक्षणिकत्वादिति । णिजन्तप्रकृतिकाजन्तस्य विलम्बितप्रतीतिकत्वादित्यर्थः । न तत्पुरुष इति । पुच्छमुदस्यतीत्यर्थे पुच्छभाण्डेति णिङि चिकीर्षिते यद्यप्युपसर्गसमासाकारस्योत्पुच्छस्य पृथक् कृतिस्तथाप्युत्पुच्छस्य पुच्छशब्देन सामर्थ्यसम्बन्धेनेतिन्यायात्तु तत्प्रकृतिकाजन्तेन तस्य सम्बन्ध इति उदित्यस्यणाजन्तेन समासस्य प्रवृत्तिरित्याशयः । तदवयवक इति । अजन्तावयवक तद्घटक । अजन्तसमुदायघटकोऽकारान्तः पुच्छशब्द इत्यर्थः । अत एव । अकृतसमासान्तनिर्देशादेव । ददादेश इति । कृते सतीति शेषः । प्रत्ययस्वरमिति । अन्य सूत्रस्येत्यादि. । अत्र । पद्दमित्यादेशे । अत एव । बहुव्रीहिग्रहणादेव । एवञ्च । उक्तरीत्या समासान्तभिन्नस्य वारणे च । व्याख्यानादिति । अकारान्तादित्युपादानमूलकव्याख्यानादित्यर्थः । यदि नलिति सूत्रविहिताजन्तस्य ग्रहणं स्यात्तदा चक्रनकृत इत्यादौ प्राप्तिरेवास्य न स्यादित्यकारान्तादिति व्यर्थं स्यादिति भावः । एतस्य प्रवृत्त्यभावपक्षे पूर्वपदप्रकृतिस्वरे सति यः स्वरो भवति तमाह । मुक्तगोरयोरिति । तत्र हि वा नामधेयस्येत्यतो वा ग्रहणानुवृत्त्याऽऽद्युदात्तत्वाभावेऽन्तोदात्तत्वम् । इदम् । वेदभाष्यव्याख्यानानुरोधेन मूलोक्तमुदाहरा इत्यस्योपादानम् । अन्योदाहरणम् । परादिरित्यस्योदाहरणम् । अत्र ऋतशब्दस्यादिरुदात्त । अत्र प्राप्त इति । तस्मिन् सति इकाराकारयोरुदात्तत्वं स्यात् । वा ग्रहणेऽनुवर्त्तमाने इ-

रेन्वयः। प्रादस्वाङ्गम्। अस्वाङ्गवाचकत्वं प्रहादीनामपीत्यायमेनाह। प्रप्रादय इति। प्रपदमिति प्रत्युदाहरणे पूर्वप्रकृतिस्वरः। प्रपदशब्दः पादाग्रवाची। निरुदकादीनि च। निर्गतमुदकं यस्मादिति बहुव्रीहिः। निर्गतञ्च तदुकमिति तत्पुरुषो वा। अर्थाभावेऽव्ययीभावो वा यद्यप्यत्र सम्भाव्यते तथापि तत्रै तत्सूत्रप्रवृत्तिं विनापि समासन्तोदात्तत्वेनेव सिद्धम्। अमेर्मुखम्। मुखं स्वाङ्गमिति तु न भवति। नाव्ययेऽन निषेधात्। अस्य सूत्रस्याभुवार्थत्वप्रदर्शनाय मूलेऽभिमुखा शालेति। अव्ययीभावेऽपीति। मुखं वर्जयित्वेत्यर्थकाव्ययी भावेऽपीत्यर्थः। स्फिगपूत। इरदत्तग्रामात्स्वादिति। एतेन कोगादिमाधका भावो खनितः। व्याख्यानात्। शिष्टकृतादिति शेषः। एवञ्च नाचत्रापकापेक्षेति भावः। अपपाठ इति। वीणाया अस्वाङ्गत्वात्विर इति शेषः। धनोरम। मूले प्रादिसमास इति कथमयुत्तरपदार्थस्याप्राधान्यसूचनाय। पुरुषया। अप्रधानशिष्ट इति। अप्राधान्येन कथित ईत्यर्थः। यथा सम्यत्वं राजानं पूजयेत्यत्र भृत्यानामन्वादिष्टत्वम्। अनुशब्दोपादानस्वारस्य सिद्धयद्दे तिपचे तु यदा देवदत्तानयने प्रवृत्तम्युरुषम्प्रतिपय यज्ञदत्तमानयेति कथिते सति यज्ञदत्तस्यान्वादिष्टत्वम्। ष्णेर। अयथार्थः। पदशब्दस्य कार्यित्वप्रापकशब्देन कथितोऽर्थः। भाष्यान्विति। ष्णेर्धातुलोप इति वक्तव्यम्। अक्रत्वद इति श्रूयमाने इह च प्रसज्येत। शोभनो गार्ग्योऽतिगार्ग्य इति। इह च न स्यात्। अतिकारक। अतिपदः शङ्करी इति भाष्याश्चित्यर्थः। अस्माद्भाष्यादर्या श्रुतम्यासेऽतिपदेत्यध्याप्तिः प्रतीयते सा भवदुक्तार्थे न स्यादिति पदशब्दस्य वर्ज्यमानत्वप्रापकं व्याख्यानमेव यथा श्रुतम्यामस्योचितमिति भावः। अतिकारक इत्यस्य कारकमतिक्रान्तइत्यर्थं इति धातोरप्रयोग एव धातुलोपः। वृत्तिविषयेतिशब्दः क्रान्तार्थवृत्तिरिति धातोर्नांप, स्पष्टः। नेरनिधाने। अनिधानेऽर्थे गम्ये इत्यर्थः। निर्गतम्मूलमस्येत्यर्थं मूलस्य भूतमाविर्गतस्य प्रकाशता प्रतीयत इति भवदुदाहरणम्। प्रत्युदाहरणात् दण्डो निहित इत्यर्थे प्रतीते प्रकाशतया न प्रतीतिः किन्तु व्यापनमात्रमिति भावं हार इत्याह। निशब्द इति। निशब्दस्य निधानार्थकत्वं साधकमाह। प्रादयो घ्रौति। अत्र समासान्तविधेरनित्यत्वे। उपाह्वान। गौरादिभिश्चव्धाजिति भाष्यार्थः। उप-

काम्बितक्रियाबोधकत्तिङन्तद्वयो वाक्यमिति लक्षणेनार्थैकवाक्यत्वाभिधानात् स्यादित्यभिप्राय । वार्त्तिकानुसारेणाह । वस्तुत इति । तदुक्तभाष्ये । अतिङ् वचनमनर्थकम् । समानवाक्याधिकारादिति । अनन्वयापत्तेरिति । पदार्थैकदेशत्वे नानन्वयापत्तेरित्यर्थ । यदादय इति । सूत्रपठिता इति शेष । पृथग्ग्रहणादिति । यदि सर्वनाम्नो यच्छब्दस्य ग्रहणं स्यात्तदा यत्र ग्रहणं न कार्यं तस्य यत्र प्रयोगस्तत्र यच्छब्दयोगादेव निषेधस्य सिद्धत्वादिति भाव । निपातानां यदादीनामर्थानाह । यद्यदार्थे चेति । एतेन । छान्दसत्वेन । अत्र समाधानान्तरमाह । हन्तो इत्यादि । नेच्छब्दयोगे प्रतिषेधोदाहरणमाह । नेदेवमिति । नेच्चेच्छब्दयोरखण्डनिपातत्वं वारयति । अत्रेति । यत् कूजतीति । अत्र कूजतीति सर्वानुदत्तम् । परम्परासम्बन्धश्च स्वान्वय्यन्वयित्वरूपो बोध्य । साक्षात्सम्बन्ध इति । तदन्वयित्वञ्च दधन इत्यस्येति पूर्वोक्तपरम्परासम्बन्ध इहास्तीति भाव । प्रतिषेधयुक्तत्वमुपपादयति । पूर्वमिति । लुङ्तृतीयाकमिति । सूत्र इति शेषो बोध्य । आद्युदात्तमिति । कुर्विति प्रत्ययस्वरेणान्तोदात्तमिति शेष । असमर्थे इति । प्रत्युदाहरणेऽपि सम्बोधनविभक्त्यन्तमिवाङ्गशब्दो यद्यपि प्रयुज्यते तथाप्यसमर्थे सति प्रयुज्यते एतच्च प्रयोक्तृसमवेतक्रोधस्य व्यञ्जक इति प्रातिलोम्यमेव । आद्युदात्तमिति । धातुस्वरेणेति शेष । छन्दस्यनेकमपि । हि चेत्यनुवर्त्तते । उदाहरणे यत इत्यस्य यद्यपि साक्षात्सम्बन्धो मत्तपदार्थे स्थापि परम्परयाद्वयोरेपि तिङन्तयो साकाङ्क्षत्वमस्त्येव । अग्निर्हीति । अत्र हि शब्दसाकाङ्क्षत्वमजयदित्यनयोस्तयोरनेन निघातनिषेध प्राप्तस्तथापि विशेष इत्याह । अनेकमिति । यावद्यथा । इत्युक्तमिति । निपातैर्यद्यदीति सूत्रव्याख्यानावसर इति शेष । सोत्रयथा शब्दार्थमाह । यथेति । यावद्यथाभ्यामित्यस्य पञ्चम्यन्तत्वभ्रमवारणायाह । भ्यामितीति । तेन यस्मिन्वाक्ये यावद्यथाशब्दयो परत्वन्तत्रापि निषेधसिद्धि । देवदत्त पचति यावदिति यथा । पूजायान्नानन्तरम् । अनानन्तरमिति तिङित्यस्य विशेषणम् । नेत्यपिप्रकरणमप्राप्तमनुवर्त्तते । एतच्चाभावाभावस्य प्रतियोगिरूपत्वात्प्रतिप्रसवोऽयमिति फलितमिति बोध्यम् । अनिघातनिषेधस्य । पूर्वसूत्रविहितनिषेधनिषेधस्य । एवञ्च नेति यत्नकान्तन्तदेवानुवर्त्तत इति सिद्धम् । उपसर्गव्यपेतयोगक्रमणि

ति। वामसमानार्थके विभाषायहणेऽनुवर्तमान इत्यर्थः। विभक्तीत्यत्र भीष्मी त्यस्या प्रवृत्तौ लभ्यस्थानामदिरिति भवतीति बोध्यम्।

## इति समासस्वरविवरणम्।

तिङो गोत्रादीनि। गम्यमानयोरिति शेषः। गोत्रमित्यस्य। व्याख्यासङ्कुल ति। कुत्साकरोतीति। एवं हि कर्त्तुः स्तुतिर्भवति न तु कुत्सेति न कुत्सनग्रह णेनान्यथा सिद्धिरिति भावः। पाठविशेषणमिति व्याचष्टे। योगविभाग इ ति। गोत्रादीनि दर्शयति। गोत्रेत्यादिना। कुत्सितं गोत्रमिति। अत्र गोत्रश ब्दो गुधृवीपचिवचियमि ग्रदिच्चदिभ्यस्त्र इति चप्रत्ययान्तत्वादन्तोदात्त। सर्वा नुदात्तमिति। सर्वेऽनुदात्ता यस्मिन्नित्यर्थकमेतत्। नन्वतिङः परस्य सर्वस्यादे रित्यर्थे आदेः परस्येत्येकवाक्यतया स्यादिति कथं सर्वानुदात्ततापदर्शेत्या यद्भायामाह। यथाचेति। निरूपितमिति। तत्र हि विनिगमनाविरहात्सर्वा नुदात्तत्वस्य लाभेऽपि सर्वग्रहणं स्पष्टार्थम्। अलोऽन्त्यस्यादेः परस्येत्यनयोस्त च न प्राप्तिः। अनुदात्तमित्तिङिति श्रुतप्रथमान्तानुरोधेन पदस्येत्यस्य विभ क्तिविपरिणामेन प्रथमान्तत्वकल्पनया स्थानषष्ठ्याभावादिति निरूपितमि त्यर्थः। विशेषमाह। उदात्तस्वरितेति। भाष्यस्वरस इति। तत्रैकादेशस्व रोऽन्तरङ्गः सिद्धो वक्तव्य इति हि वार्त्तिकम्। उदात्तानुदात्तयोर्यः आदेशस्स आन्तरतम्यात् स्वरितो भवति तस्य स्थाने एकादेश उदात्तेनेत्यनेनोदात्तः क्रि यते इति सति यद्यपि ब्राह्मणास्तुदन्ति ब्राह्मणा लिखेतीति प्रयोगे अत्या न्तिप्रन्दावयवाकारस्य च य एकादेशस्सआन्तरतम्यात् स्वरितस्य तिङ्ङतिङ इति निघातविधानादुदात्तस्याप्रयोगः सिद्धस्तथापि स्वरितापवाद उदात्त एकादेश उदात्तेनेति सूत्रेण विधीयत इति दर्शने आन्तरम्यादुदात्तस्यासिद्ध त्वात्तिङ्ङतिङ इति निघातो न स्यादिति प्रयोगे उदात्त एव श्रूयेतेत्यभि प्रायेणोक्तवार्त्तिकस्य किम्प्रयोजनमिति प्रश्ने सर्वानुदात्तार्थमिति प्रयोजन सूत्रकोन भाष्यकारोदात्तस्वरितगुणयोगि तिङन्तविवक्षत इति पक्षो भ भ्यते। पाको भवतीति। पचिक्रिया भवतीत्यर्थो भवतीति तिङन्तार्थभवन क्रियाविशेषको बोध। तत्र भवनक्रियायामेव पचिक्रियायाः कर्तृत्वात्कार

म इति भावः। एव हि भाष्ये उक्तम्। किमर्थमिदमुच्यते। न गत्यर्थलोटा लृ-
डित्येव सिद्धम्। नियमार्थोऽयमारम्भः। एहि मन्ये प्रहास एव। क मा भू-
त्। एहि मन्ये रथेन यास्यसीति। अस्मिन् भाष्योक्तवाक्ये यास्यसीत्यस्य
निघातो भवत्येव। प्रत्युदाहरणे गत्यर्थलोटेत्यस्य प्राप्तिमुपपादयति। पश्ये-
त्यस्येत्यादि। आङ्पूर्वादिणो लोट्। सिप्। तस्य हि। आत्वपूर्वम्। उभयत्र।
विशेष्यविशेषणयोः। अनन्तरग्रहणादिति। तिङन्तस्यापूर्वमिति विशेषणत्वे त-
दाऽऽह। देवदत्त पचतीत्यादौ पचतीत्यादेः सपूर्वत्वादेव निघातो न भविष्यती-
ति तस्मिन् सूत्रेऽनन्तरशब्दं नोपाददीत कृतश्च तन्निमित्तविशेषणमित्यर्थं ज्ञाप-
यति। पूर्ववत्। व्यत्ययेन। व्याख्यानमेवेति। भास्करसम्मतं व्याख्यानमिदं।
चाहौ उताहा। अत्रानन्तरपदं शेषे विभाषेत्युत्तरसूत्रे शेषपदार्थस्य स्पष्टप्रति-
पत्त्यर्थमित्याह। सान्तरं हीत्यादिना। चाहौ उताहोऽयमस्य सूत्रमेतदर्थनिर्दि-
ष्टस्य लुप्तषष्ठ्यन्ततया निर्दिष्टपरिभाषयैवानन्तर्यलाभेऽनन्तरग्रहणमेवेति
भावः। युक्तमनन्तरग्रहणस्य प्रयोजनमन्यथा सिद्धमित्याह। तन्वपूर्वमिति। न
तिङन्तविशेषणमिति। किन्तु निमित्तविशेषणमिति शेषः। एवञ्चाहो देवदत्तः
पचतीत्यत्र निमित्तस्यापूर्वत्वान्निघातनिषेधः स्यादिति कर्तव्यमनन्तरग्रह-
णमिति भावः। निमित्तविशेषणस्य प्रयोजनन्तु सून एव स्पष्टम्। गत्यर्थलो-
टा। स्पष्टश्चेदं भाष्ये इति। तत्र हि कर्त्रपेक्षया यदन्यत्कारकं तस्यान्यत्वे आग-
च्छ देवदत्त ग्राममोदनं भोक्ष्यसे इत्यादौ निघातनिषेधाप्राप्तिशङ्कायामेक-
देशिना व्यक्तमेव पठितव्यम् चेत्कर्ता सर्वान्यो भवतीति समाधाने कृते आग-
च्छ देवदत्तेन शाल्यः यज्ञदत्तेन भोक्ष्यन्त इत्यत्र कर्मण एकत्वेऽपि कर्तृभे-
दान्निषेधस्याप्राप्तिः स्यादिति परेण दूषणे कथिते सिद्धन्तु तिङैकद्रव्या-
भिधानात्। सिद्धमेतत्। कथम्। तिङैकद्रव्याभिधानात्। यत्र तिङ्भ्यामेक-
द्रव्यमभिधीयते तत्रेति वक्तव्यमिति सिद्धान्तिनाभिहितम्। लोट् च। अत्रा-
नुवर्तमानं यद्वेत्यादि तद्घटितवाक्यार्थमाह। गत्यर्थेति। विभाषितं सो।
अत्रानुवृत्तमिति सोपसर्गमिति च लोटो विशेषणम्। निषेधस्य विकल्पे
विधिविकल्पः फलतीत्याशयेनाह मूले वानुदात्तमिति। अनेन कृतस्य विक-
ल्पस्य फलमाह। पच इति। पचे। एतच्छाक्तदर्शनपचे। पचे। पक्षप्रस्य-

त्वयैमोटा युक्त इति प्राप्नोति इत्येवमाशङ्का गत्यर्थाकर्मकेति सूत्रे पृथग्गृ-हिग्रहणात् हरिर्गत्यर्थ इत्यादावुक्तम् । ततो यदि न हरिर्गत्यर्थस्तर्हि आरो-हन्ति हस्तिनं हस्तिपका । आरोहयति हस्ती स्थलमनुयानिचाच गतिबु-द्धीत्यनेन कर्मसंज्ञा न प्राप्नोति गत्यर्थत्वाभावादिति हरेर्गत्यर्थत्वमावश्यकम् । लोट् चेत्यनेन ङ् पूर्वेणिण्धातुना निपातस्यैहीत्यस्य निघ तत्प्रतिषेधस्तु न । छा न्दसत्वादिति प्रतिपादितम् । इत्याहुरिति । अत्रारुचिबीजन्तु यदि विभाषित-मिति सूत्रेणैव तदभावस्तर्हि भाष्ये छान्दसत्वाभिधानमसङ्गतमिति विक-ल्पाभिधानमसङ्गतमिति । गत्यर्थाकर्मकेति सूत्रे हरिग्रहणन्तु प्रपञ्चार्थमेवेति बोध्यम् । यत्नविदिव । अनिहत एवेति प्रकृतसूत्रेण निषेधादिति शेषः । स्प-ष्टमाद्य इति । तत्र हि गतिग्रहणे उपसर्गग्रहणङ्कर्त्तव्यम् । इह मा भूत् । शु-क्लीकरोतिचन । कृष्णीकरोतिचनेत्युक्तम् । यत्रैवेत्यमभिधानमिति न । किन्तु सर्वत्रैवाष्टमिके । तदप्युक्तमाष्ये अपर आह सर्वत्रैवाष्टमिके गतिग्रह णे उपसर्गग्रहणन्द्रष्टव्यम् । गतिर्गतौ । तिङि चोदात्तवति वर्जमिति । इह मा भूदित्यस्य गतेरिति प्रतिषेधो मा भूदित्यर्थः । सर्वत्रेत्यनेन चादिषु च । चवा योगे प्रथमेति सूत्रयोः सङ्ग्रहः । तयोरपि गतिग्रहणानुवर्त्तनात् । तिङो गो-त्रादीनीति सूत्रे कुत्सनाभीक्ष्ण्ययोरिति पाठविशेषणमिति यदुक्तन्तत्स्मा-रयति । कुत्सनेति । चादिषु च । अत्र चादिपदेन गणे पठितानाञ्चादीनाङ्ग्र-हणमिति शङ्कां वारयति । न च वाहेतीति । सन्निकृष्टत्वात् । अनुदात्तमि-त्यधिकारमध्यपाठे न शीघ्रोपस्थितिरिति कल्प्यात् । प्रकृतसूत्रेण दोषः पचतीत्या-दौ प्रथमस्य पचतीत्यस्यैव तिङन्तस्य निघातप्रतिषेधो न तु द्वितीयस्य स्या-दति चेत्तत्रापि । तस्य निघातप्राप्तेरेवाभावादित्याह उदाहरणे इत्यादिना । सदाशय । इत्याशयः । नियमार्थमिति । प्रथमेत्यस्याभावेऽपि प्रथमस्य लाभे सिद्धे पुनरेतदुपादानन्नियमार्थमिति भावः । पश्येत्यस्योत्तरवाक्य इत्यनेनान्व-यः । एवञ्च प्रथमत्वमस्योपपद्यतामिति भावः । इति चियायाम् । चियापदार्थ-माह । एषा इति । प्रयोगाभावादिति । प्रथमस्य भावाद्येत्यपि बोध्यम् विनि-योगपदार्थमाह । अनेकार्थिमिति । समानकर्तृक इत्यस्य क्रियावाचकपदघटि तवाक्यद्वय इति शेषः । निघाताभावश्चेति । चादिलोपे विभाषेत्यस्य वैकल्पि

शान्तोदात्तत्वापवाद एतत्समास इष्यत इति तदृष्ट्यनुसारेणेति बोध्यम्। दाश्वाध्यापक इति प्रत्युदाहरणदर्शनादस्य सप्रकत्वं द्रष्टव्यम्। सगतिरपि तिङ्। पूजनादित्यनुवर्त्तते। काष्ठादिभ्य इत्यस्यापि शेषः। निपातैर्यद्यदीति निषेधे प्राप्ते प्रतिप्रसवार्थमेतत्सूत्रम्। फलान्तरमप्याह। न लुडित्यादीति। इत्याहुरिति। कोयष्टादय इति शेषः। लाभार्थमिति। उत्तरसूत्रे तिङ्ग्रहणादित्यादिना प्रागुक्तमपि पुनर्दार्ढ्याय स्मारितमिति बोध्यम्। भाष्यमिति। निरूपितमेतत्। पदस्येत्यधिकारात्सगतेस्तिङन्तस्याप्राप्तेः सगतिग्रहणमिति गतेस्तिङन्तस्य च निघातोऽनेन विधीयते। प्रतिषेध एवेति। न च गतिग्रहणस्योपसर्गपरत्वे सगतिरपीत्यस्य सोपसर्गोऽपीत्यर्थः। अपिनाऽनुपसर्गस्यापि ग्रहणमिति स्वीकरोतीत्यत्र सूत्रस्यास्य प्राप्तिरस्त्येवेति वाच्यम्। तिप्रयोगस्य विशेषणगतिहेतुत्वेनानुपसर्गोऽपीत्यनेनोपसर्गसंज्ञकशब्दयोगयोग्यता यस्य धातोस्तत्प्रकृतिकतिङन्तं गृह्यते। तद्योगयोग्यश्च यत्र धात्वव्यवहितप्राग्गतेर्नोच्चारणं स एव ते प्राग्धातोरिति सूत्रस्यारम्भात्तादृशमनुदात्तमित्याशयात्। कुत्सने च सु। पदादिति निवृत्तमिति। अत्र प्रमाणन्तु कुत्सने क्रियायाः। क्रियायाः कुत्सन इति वक्तव्यम्। कर्तुः कुत्सने माभूत्। पचति पूतिर्गरति पूतिरिति भाष्यकारोक्तिरेव। क्रियाविशेषणत्वादिति। अयम्पूतिशब्दः कुत्सितवाची स चाभेदेन धात्वर्थस्य विशेषणम्। बाहुलकादौणादिकेति योति। वसिस्तिविति विहितस्तिन् बहुलग्रहणात्पूञ् पूयीधातोर्वा स्वीकार्यः। तथा च धातुस्वरेणाद्युदात्तत्वस्य प्राप्तिरिति भावः। इदम्। चकारानुबन्धकत्वम्। अन्यदेति। यथा वा बह्वर्थमिति वचनेन बहुवचनान्तस्य तिङन्तस्य विकल्पेन निघाते बोधिते निघाताभावपक्षे पचन्ति पूतीत्यत्र पूतिशब्द आद्युदात्त एव। अभावेति। अभ्युद्धरतीत्यत्र। विशेषाभावेऽपीति। अभे. प्रातिपदिकस्वरेणान्तोदात्ततया तस्य यणादेशे कृते य उदात्तस्तच्छ्रवणकृतविशेषाभावेऽपीत्यर्थः। इति नियमादिति। यद्यप्रकृतसूत्रे गतौ वेति नास्ति तदाऽनेनैवोदात्तवति तिङन्तेऽनुदात्तत्वे सिद्धे तिङीति स्वचन्नियमार्थमिति भावः। ननु ते प्राग्धातोरित्यनेन गतेर्धातोरव्यवधानेन प्राक् प्रयोगविधानात्कथमडाडो व्यवधानेन प्रयोग इष्यत आह। ते प्रागिति। प्रयोगनियमार्थं चेति। प्रायेण ह्युपसर्गा धातोः प्रयोक्तव्या इत्या-

त्या ताम्परिहृत्य यद्योगात्तिलन्तस्योदात्तस्य ग्रहणे पुनरपि प्रत्ययस्योदात्तस्य सद्भावो यत्र तत्राव्याप्तिस्तदवस्थैवेत्युक्ता नैष दोष । यत्क्रियायुक्ता इति नैव विज्ञायते यस्य क्रिया यत्क्रिया इति कथन्तर्हि या क्रिया यत्क्रिया यत्क्रिया युक्तास्तम्प्रतिगत्युपसर्गसंज्ञे भवत इति समाहितम् । एवञ्च गतित्वनिरूपकस्य क्रियारूपस्यार्थस्य ग्रहणेऽर्थे कार्यासम्भवात्तद्वाचिनि शब्दे परत कार्यं विज्ञायमानन्तादृशक्रियाप्रधान यद्यत्तत्र सर्वत्र भविष्यतीति प्रत्ययादात्तत्वत्यपि भविष्यतीत्यं तत्तात्पर्यकेण तादृशक्रियाबोधकघटिते तिङपदस्य लक्षणेति ध्वनितमिति । तत्र विशेषमाह । एते निघाता इति । संहिताधिकाराभावात्काल विलम्बे नोच्चारणन्न क्षतिकरमिति भाव ।

## इति तिङन्तस्वरनिरूपणम् ।

मूले तिङ्ङतिङ इति निघात इति । एवञ्च निहतस्य विच्छिद्य पाठे यव षमिति भाव । संहिताया विशेषमाह । संहितायामित्यादि । तदन्तर्भावादिति । संहिताधिकारान्तर्भावादित्यर्थ । कालव्यवायेऽपि प्रवृत्तिज्ञापनस्य फलमाह । तेनेत्यादिना । पूर्वोक्तसिद्धान्ते ग्रहते । नन्विति । विशिष्य विधानादिति । एवञ्च वैदिकवाक्ये तयोधारणन्तच्छास्त्रीयानाम क्षतिकरमिति भाव । नन्वेवमिति । प्रातिशाख्येन व्यवस्थास्वीकारे सतीत्यर्थ । उपगन्तवै इत्यत्रो पगन्तवैत्येव । अन्वेतवेइत्यत्रानुएतवै इत्येवमवग्रह । उत्तरखण्डेति । प्रथमे गकाराकारस्य द्वितीये त्वेकारस्य स्यात् । प्रथमे उपशब्दस्य तवैप्रत्ययान्तगन्तवैशब्देन कुगतीतिसमासेऽव्ययपूर्वपदप्रकृतिस्वरेणोकारस्योदात्तत्वे शेषनिघाते उदात्तादनुदात्तस्येति यकाराकारस्य स्वरितत्वे सति प्रचयस्य द्वितीयेऽप्येवमे वैकारस्य प्रचयप्राप्ति । द्वितीये इणधातोस्तवैप्रत्यय । उभे वनस्पत्यादिषु युगपदित्यनेन पूर्वोत्तरपदयो प्रकृतिस्वरविधानेन प्रातिशाख्यीयवचनान्तरेण व्यवस्था प्रकृते स्वीकायति समाधत्ते । पद्यादीनिति । अनेन प्रातिशाख्यीयवचनान्तरेणासंहितवद्भावे सति तस्मादित इत्यारभ्य नव सूत्रा इहोत्कर्षेण प्रचयविधायकस्य प्रामाण्यसंहितवद्भावेनाप्रवृत्तिरिति भाव । रत्नधातम् । अथ रत्नधातममित्यवग्रह । भवन्ता भवन्तीरित्यथाभवन्ता भवन्तीरित्यवग्रह । न प्र

कारकनियमार्थत्वमित्यर्थः छन्दसि परेऽपि व्यवहिताश्चेत्यनेन व्यवधानेनाप्र
प्रयोगेऽपि गतित्वमाङोऽस्त्येवेति भावः । सञ्ज्ञानियमार्थत्वमिति । धातोः प्राक्
प्रयुज्यमाना एव गत्युपसर्गसंज्ञा भवन्ति न तु परे नापि व्यवहिता इति पक्ष
इत्यर्थः । तत्प्रत्याख्यायत इति । प्रयोगनियमार्थत्वे तदनुकरणस्येति कारकपरप्र
तिषेधोऽनिष्टशब्दनिवृत्त्यर्थः छन्दसि परव्यवहितवचनञ्चेति गौरवाभिधानेन
प्रत्याख्यायत इत्यर्थः । इहाप्युक्तम्भाष्ये । छन्दोऽर्थमिति चेन्नागतित्वात् । यत्
क्रियायुक्तास्तम्प्रत्येव गत्युपसर्गसंज्ञे भवत इति । अयमेवार्थ इति । छन्दसि
परेऽपि व्यवहिताश्चेति सूत्रद्वयप्रत्याख्यानपरक एवोक्तौ ग्रन्थ इत्यर्थः । पर
निमित्तानुपादान इति । यथोपसर्गस्य घञि उपसर्गादसमासेऽपीत्यादौ तत्रैव
यत्क्रियायुक्ता इति न्यायसञ्चारो न त्वत्रेति भावः । समर्थपरिभाषेति । येन
गते सामर्थ्यन्तत्प्रतियोगि गतिः स तस्मिन्निहन्यत इत्यर्थ इति भावः । एकार्थी
भाव एवेति । न चात्रैकार्थीभावस्य सम्भावना । साक्षाद्विध्युद्देश्ययोर्विधेयो
द्देश्ययोर्वा तस्य स्वीकारात् । उक्तभाष्यन्त्वेवं व्याख्येयम् । यया क्रिययाऽव्यव
हितपरशब्दबोध्यया युक्तास्तद्वाचकधातुम्प्रत्येव गत्यादिसंज्ञा । प्रकृते तु यया
क्रियया योगस्तत्र कस्य व्यवहितत्वेन संज्ञानियमपक्षे गतित्वाभावो येन चा
व्यवधानन्तस्य क्रियावाचकत्वाभाव इति सर्वथा गतित्वाभाव इति । अत एव ।
साधनान्वयात्प्रागुपसर्गद्योत्यार्थवृत्तित्वादेव । तिङि चोदात्त । अपवादोऽय
मिति । येन नाप्राप्तिन्यायेनेत्यादि । तदेवोपपादयति । अनुपसर्गेति । शक्री
शब्दस्य निघातः । अनेन सूत्रेण भवतीति शेषः । तन्निवृत्तिरिति । सम्द्रशब्द
स्य निवृत्तिरित्यर्थः । अयम्भावः । गतिसंज्ञाया क्रियायोगे विधानात्तद्वाचकस्य
यत्र परत्वन्तत्र निघातेन भाव्यम्मन्द्रशब्दस्तु न तादृशः । न च छन्दसोऽतिप्रस
ङ्गः । तत्र सुबुत्पत्तेः प्राक् समासे कृत्स्वरथाथादिस्वरगतिस्वराणां यथायथम
प्राप्त्या शेषनिघातेनानुदात्तस्याङ्गते सिद्धमेवेति सिद्धपक्षे व्यर्थमिति । मूले च
रिभाषार्थमित्यस्य यत्नविशेषाश्च्छन्दस्युदात्तस्य परिग्रहार्थमित्यर्थः । तत्र ।
पूर्वाणार्थे मिथिते । धर्मितच्चेदभाव इति । तत्र हि यदि तिङ्पक्षे क्रियते
चामन्त्रेण प्राप्नोति प्रपचतितराम् । प्रजल्पतितरामित्यत्रामन्त्रे सिद्धपक्षेऽस
त्यामियुक्ता तदकरणे चामन्त्रेऽतिव्याप्तिरुद्धाप्य यत्क्रियायुक्ता इति ॰

च्यत इति भाव । उणादयो बहुलमिति सङ्गृहीतमाधुनिकानां व्युत्पत्तिल शास्त्रान्तरे प्रसिद्धमिति तदभिप्रायेणाह । अब्वू इत्यादि । अवनि । वर्त्ति स धृधम्यस्यश्विसृभ्योऽनिरित्यनि । चमूरिति । छपिचमितनिधनिसर्जिखर्जिभ्य ऊरित्यू । दयू । अत्र वकारस्य छ्रोरित्यूठ । अवनिभर । पूर्वसूत्रापवादोऽयम्। मित्यन्त । भूमि । नियो मिरित्यतो मिरित्यनुवर्त्य विहितो भुव किदिति नि । ग्लानि । वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो निदिति नि । वन्ह्यादिशब्दाना निप्रत्ययान्तत्वं न स्त्रीत्वे प्रयोजने श्राह । वह्नि । हरिण । सृवृपिभ्य । किदिति नि । अग्नि । अङ्गेर्नलोपश्चेति नि । अणिकयोन्यू । योणि योनि । वह्नि- श्रीती नि । ऊर्मि । अर्त्तेरूश्चेति नि । ईकारान्तश्च । अत्र ईकार प्रत्यय एव । पूर्वोत्तरसाहचर्यात् । लक्ष्मीरिति । अत्र लक्षेर्मुट चेति सूत्रेऽवितृस्तृत न्त्रिभ्य ईरित्यत ईरित्यस्यानुवृत्त्या तनेकार प्रत्यय । एवमव्यादिधातुभ्य ई कारप्रत्ययेऽपि स्त्रीत्वम् । तद्यथा । अवीर्नारी रजस्वला । तरीर्नौ । स्तरीर्धूम। तन्त्रीर्वीणादेर्गुण । न च यापा किदृ चेति सूत्रविहितेकारान्तस्यापि स्त्रीत्वा- पत्तिरिति वाच्यम् । पुंस्त्वाधिकारोक्तेन यौपध यौपध इत्याभ्यामपरत्वाद्बाधात्। गृप इत्यादौ प्रथमस्य समय इत्यादौ द्वितीयस्य चारितार्थ्यात् । एवञ्च ययीप यीशब्दस्य पुंस्त्वेऽपि न क्षति । ऊङाबन्तश्च । ऊड़ुत इत्यूङ । आब्ग्रहणे म टाब्डाब्चापाङ्ग्रहणम् । यत्समेकाचरम् । ईकारोऽत्र प्रत्यय । ऊकारसाहच र्यात् । विंशत्यादिरानवते । विंशत्यादय पङ्क्तिविंशतीति सूत्रनिर्दिष्टा । दुन्दुभिरक्षेषु । अक्षेषु बोधनीयेषु य प्रयुज्यत इत्यर्थ । नाभिरक्षत्रिये । क्षत्रि भिन्ने यो नाभिशब्द प्रयुज्यते स स्त्रियां स्यात् । इयमाभिरिति । पुरुषावयवे इदम् । उभावन्यत्र पुंसि । इद स्पष्टार्थम् । पूर्वसूत्रयोरेवैवविषय इत्यभिधा नेन सिद्धे । कथन्तर्हीति । अत्र यत्कोमलैरिति तदनुपपन्नम् । स्त्रीलिङ्गनाभि शब्दार्थविशेषणत्वात् । सामान्य इति । लिङ्गविशेष ऽविवक्षया नपुंसकत्वमले रिति समाध्य तस्य नाभिशब्दार्थविशेषणत्वं लोकार्थम् । विशेषणप्रतिपादकस्य यथा पुंस्त्वत्वमप्याधि अविप्सतीत्वाशयेन समाधानान्तरमाह । वस्तुतस्त्विति। चक्रमध्यक्षत्रिययोरिव चक्रमध्ये क्षत्रिये स्मि इन्द । अत एव प्राण्यङ्गे द्वयोरिति मञ्जूद्वरी । तलन्त । तस्य भावस्त्वतलाविति सूत्रविहिततलप्रत्यया

वर्त्तत इति । पूर्वोक्तरीत्याऽसंहितयत्नाभावादिति शेषः । परिग्रह इति । यथापद
योग्यपदघटितस्य संहितस्य क्रमकाले वेष्टनम्परिग्रहः । वेष्टक इति । क्रमकाले
इति शब्दघटितशब्देनोच्चारणरूपं वेष्टनमेव वेष्टकमिति । अलला भवन्तीरि
त्यलला भवन्तीरिति यथा । सर्वेष्ट सिद्धिरिति । सर्वेषामिष्टानाम्प्रातिशाख्योदय
पनेन सिद्धिरित्यर्थः ॥

## इति प्रदर्शितरीत्या स्वरविधायकशास्त्र-प्रवृत्तिविवरणम् ।

मूले अधिकारसूत्रे एते इति । उभयोरधिकारसूत्रत्वेऽपि लिङ्गमित्याशा स्त्रसमाप्ते द्वितीयस्तु तारा धार्त्ति यावदिति विवेकः । अत्रापि लिङ्गशास्त्री यम्प्रायुक्तमेव विवक्षितम् । तच्चार्थनिष्ठं तत्तच्छब्दप्रतिपाद्यम् । तत्राय विशेषः । शब्दशक्तिस्वभावेन कस्य चित्सर्वलिङ्गप्रतिपादकता कस्य चिदेकलिङ्ग-प्रतिपादकता कस्य चिद्विलिङ्गयुक्तार्थप्रतिपादकता चेति । यद्यपि शब्दानामर्थानाञ्चानन्त्यात्प्रातिस्विकरूपेण तेषां ज्ञानं योगिनां युक्तयुञ्जानत्वेन व्यवहा-रयोग्यानामेव सम्भवति न त्वस्मदादीनामज्ञानाम् । तथाप्यस्मदादुद्देशेन शास्त्रप्रवृत्तेर्यथा लघुनोपायेनास्मदादीनां ज्ञानम्भवेत्तथाह । स्त्रकारान्ता इत्यादिना । स्त्रीतिपदमेषु सूत्रेषु सप्तम्यन्तं तच्च भावप्रधाननिर्देशेन स्त्रीत्वपर-म् । तस्य लिङ्गपदेन बहुव्रीहिसमासे स्त्रीलिङ्गा इति सामानाधिकरण्येन व्यवहारः । ताबादिशब्दानां विशेषणत उपादानात्पर्यन्तेति लभ्यम् । अप्रधा-नस्य तु यथालाभस्तत्प्रकारमाह । स्वसादिशब्दपर्यन्तेति । ङीप्निषेधेन । न षट्स्वस्रादिभ्य इति सूत्रेण ङीपो निषेधेन । पर्यायादेरिति । अनेन अर्थपदेन यौगिका शब्दा स्त्रकारान्ता परिग्राह्या । एतच्च क्रोष्टुप्रभृतिशब्दस्यादिना परिग्रहः । न च प्रकृतेऽपि अर्थं प्रवर्त्तते नियमानुपपत्तिरिति वाच्यम् । आदेशस्थानाक्रान्ता. पर्यवेत्यर्थात् । यद्यपि भाव्यमानं स्त्रकृत्क्रोष्टु-रित्यादि विग्रहः । प्रयोग नियमावेत्यपेक्षे प्रियाक्त्वं तागथ क्रोष्टुशब्द स्याप्यादिशब्दागमाक्रान्तत्वम् । तथापि परिनिष्ठितं शब्दस्वमीकारान्तत्व एव प्रवृ

चि वसुशब्दो नपुंसके च द्रष्टव्यः। कृत्वन्तः। नुकारोनकारेस्संज्ञकः। मेरुः। सेतुरित्यत्र सितनिगमिमसिसच्यविधाञ्कुशिभ्यस्तुनिति तुन् सूर्यवाचकः प्रथमः। दारुकसेरु। जत्वादित्वाट्टुप्रत्ययान्ता एते। कंसं चाप्राणिनि। कंसमिति शब्दस्य निर्देशान्नपुंसके चेत्यस्य सबंधः। अप्राणिनि वाच्ये कंसशब्द इत्यर्थः। दिनानाहनी। दिवसाभिधानाविमौ। खारीमानिके। मानाभिधानत्वात् पुंस्त्वे प्राप्तेऽस्यारम्भः। वहुलञ्चेति चकारः पुंस्त्वस्य समुच्चायकः। नाध्ययजनोपपदानि प्रणाङ्गपदानि। अत्रोपपदशब्दः पूर्वपदपरः। न तु तत्रोपपदमिति तस्संज्ञकपरः। तस्य प्राप्त्यभावात्। क्लीवत्वनिवृत्त्यर्थमिति। नपुंसकाधिकारे मुखनयनेत्यादिवक्ष्यमाणसूत्रेण विवराभिधानत्वेन क्लीवत्वस्यामन्त्रनिवृत्त्यर्थमित्यर्थः। अमरस्त्विति। एवञ्च तन्मतेऽर्द्धर्चादिष्वयन्द्रष्टव्यः।
भावे ल्युडन्तः। इदञ्च सूत्रं यद्यपि नपुंसके भावे क्तः ल्युटोचेनेन गतार्थन्तथापि स्पष्टार्थमुपात्तम्। एवमन्तग्रहणञ्चेति बोध्यम्। इध्मप्रव्रश्चन इति। अत्र करणे ल्युट्। निष्ठा च। अत्र निष्ठापदं क्तस्य बोधकम्। इदमपि सूत्रं नपुंसके भावे क्त इत्यनेन गतार्थम्। प्रत्ययग्रहणे तदन्तग्रहणम्। त्वष्यञौ तद्धितौ। भावे इत्यनुवर्त्तते। यद्यपि तस्य भाव इति सूत्रे भावशब्दः। प्रकृतिजन्यबोधीयप्रकारताश्रयधर्मपरः। भावे ल्युडन्त इत्यत्र तु भावशब्दो भावनाबोधक इति भेदस्तथापीह भावशब्दः शब्दाधिकारेणान्वार्थको द्रष्टव्यः। कर्मणि च। चाद्भावे। त्वष्यञावित्याद्यनुवर्त्तते। स्तेनाद्यन्नलोपश्चेति। यद्यपीदं सूत्रप्राग् व्याख्यातमेव। तथापीतः प्रभृतिकथितानान्नपुंसकत्वस्य स्पष्टप्रतिपत्त्यर्थमिहोपादानमिति बोध्यम्। द्वन्द्वैकत्वमिति। द्वन्द्वश्च प्राणितूर्येत्यादिना येषान्द्वन्द्वानामेकवद्भावो भवति ते द्वन्द्वा नपुंसकत्वाभिधायका बोध्या इत्यर्थः। अभाषायामिति। इदमपि सूत्रं हेमन्तशिशिरावहोरात्रे च च्छन्दसीतिसूत्रे छन्दसीत्युपादानेन गतार्थम्। हेमन्तशिशिराविव्यत्र तु निर्देशादेव पुंस्त्वप्रतिपादकता बोध्या। स्त्रियाञ्चेति। चेन नपुंसकमित्यनुकर्षः। विभाषा सेनेति विभाषापदोपादानेनेदमपि गतार्थम्। परवदिति। परवल्लिङ्गमिति सूत्रोपात्त इत्यर्थः। परवदितिसूत्रस्य स्मारकमिदं परवदिति न लिदमपूर्वम्। तत्पुरुष इति। द्वन्द्वस्याप्युपलक्षणम्। संख्यापूर्वा रात्रिः। संख्या-

न्त. स्त्रियां स्यात् । भूमिविद्युदादिति । अत्राभिधानशब्दो भूम्यादिशब्दशक्यता-
वच्छेदकधर्मावच्छिन्नशक्तपरस्तेन प्रमेयशब्दस्याव्यावृत्तिः । एवमन्यत्रापि बोध्यम्
यादौ नपुंसकम् । पूर्वस्यापवादः । स्थूणोर्णे नपुंसके च । चकारेण स्त्रियामि-
त्यस्यानुकर्षणार्थमस्यात्र लेखः । प्रावृडिति । स्त्रीशब्दस्य पूर्वत्र चानुकृष्टत्वेऽपि
स्वरितेनाधिकार इत्यस्याधिकः कार इतिव्याख्यानस्यापि प्रसिद्धत्वादत्र सम्ब-
न्धः । दर्विविदि । दर्विशब्दो दृभ्यां विनितिविन्नन्तस्तस्मात्सर्वतोऽक्तिन्नर्थादि-
त्येक इति विकल्पेन ङीप् दर्वी इति । तिथिनाडि । एते प्राग्वदिति । स्त्रियां
स्युरित्यर्थः । पुंस्येवेति । देवासुरात्मेत्यनेन पुंस्त्वबोधकेन परत्वाद्बाधादिति
भावः । भाष्यप्रयोगादिति । तेन भाष्ये पाविति सूत्रनिर्दिष्टानाम्बहुत्वं प्रा-
यिकमिति कल्प्यते तेनान्यत्र बहुत्वाभावेऽपि न क्षतिः । क्वचिद्व्यभिचारमिति ।
तेन तिथिशब्दस्य पूर्वत्र यथा पुंस्त्वं प्रदर्शितन्तथाऽन्येषामन्यलिङ्गत्वेऽपि सा-
धुत्वमिति सूचयति ॥

## इति स्त्र्यधिकारः ।

भावार्थ एवेति । भावे यो घञ् तदन्तस्य पुंस्त्वमित्युक्तम् । एतस्यापवादमा-
रमाह । नपुंसकेत्यादि । भयलिङ्गेत्यादि । पूर्वस्यापवादोऽयम् । क्वन्तो घुः ।
किप्रत्ययोऽन्तः परो यस्मात्तादृशो यो घुसंज्ञको धातुस्तदन्तः पुमानित्य-
र्थः । देवासुर । अत्र षड्शब्दान्तद्वन्द्वः कृतस्तस्य षष्ठीसमासोऽभिधानशब्दे-
न कर्तव्यः । अभिधानशब्दः करणल्युडन्तो वाचकशब्दपरस्तेन देवादिशब्द-
वाच्यतावच्छेदकेत्यादि पूर्ववद्बोध्यम् । शब्दे । स्वरूपापेक्षया च नपुंसकत्वम् ।
त्रिविष्टप । स्वर्गाभिधानत्वात्पुंस्त्वे प्राप्तेऽस्यारम्भ इति । अत एवाहामरसिं-
हः । क्लीबे त्रिविष्टपमिति । द्यौः स्त्रियाम् । अस्य स्वर्गाभिधानत्वात्पुंस्त्वस्य पू-
र्वेण प्राप्तेऽस्यारम्भः । दधुवाहु । भुजपर्यायवाचकोऽयम् । बाणकाण्डौ । शरा-
भिधानोऽयम् । नान्त इति । नान्तप्रत्ययान्त इत्यर्थः । अपरनपुंसकमिति । शि-
घाभिधानविषये पूर्वस्यापवाद इत्यर्थः । लिङ्गाधिविधिरिति । लिङ्गस्य शेषा-
ऽवयवस्य विधिः व्यापी । काण्डद्वयस्य व्यापको यदि विशेषणाद्येन बा-
धितो न स्यादित्यर्थः । नपुंसके चेति । धाम पुंसि । पद्म धान्येऽपि । धर्मा-

न्तः छन्द ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात् । एवमम्बरः शब्दोऽपि । चान्तः । चप्रत्ययान्तो नपुंसक स्यात् । सर्वधातुभ्यस्त्रन्निति त्रन्प्रत्ययो नकारानुबन्धक इति । यात्रा मात्रा । हुयामितिविहितत्रन्प्रत्ययोऽपि त्रग्रहणेन गृह्य-तेति नपुंसकत्वे प्राप्तेऽस्यारम्भः । एवकारो न्यायसिद्धबाध्यबाधकभावानुवादकः । भूत्रामित्र । पूर्वस्यापवादः । यस्त्विति । दोषान्तरमित्यन्ता तदुक्तिः । मध्योदात्तः । मकारेकारस्य प्रत्ययादुदात्तत्वेन मध्योदात्त इति तद्भावः । चिन्त्य इति । चित्वस्य सत्वात् । नन्वमित्रशब्दो नैवन्तः किन्तु अमिचिमीति मिधातुविहितक्तान्तमित्रशब्देन नञः समासे सति सिद्ध इत्यत आह । नञ्समासेऽप्येवमिति । अन्तोदात्त इत्यर्थः । परवल्लिङ्गतेति । एवं सति नपुंसकत्वं स्यात् । हरदत्तोक्तन्दूपयति । तत्प्रकृतेत्यादिना । नञो जरमरेति । यदि तु न मित्रममित्र इति नञ्समासस्तदा न नञो जरमरमित्रेत्यस्य प्राप्तिस्तस्य बहुव्रीहिसमासे प्रवृत्तेरिति बोध्यम् । कुसुमाभिधायित्वेऽपीति । वस्तुतः कुसुमाभिधायित्वेऽपीत्यर्थः । यदि तु कुसुमविशेषाभिधायिकोऽयम्न तु कुसुमशब्दशक्यतावच्छेदकावच्छिन्नशक्त इति विभाव्यते तदा त्वपूर्वमेवोभयलिङ्गत्वाभिधानमिति । मतान्तरेण । जलजशब्दस्य जलजातकुसुमान्तराभिधायकत्वमित्यभिप्रायकमतान्तरेणेत्यर्थः । आह्वशंपामौ पुंसि । एतयोर्वृक्षाभिधायकत्वान्नपुंसकत्वे प्राप्ते । एवमाजिशब्दोऽपि । फलजातिरिति । फलपदोपादानाद्वृक्षपरस्यामलकीशब्दस्य स्त्रीत्वेऽपि न क्षतिः । हरीतकीति । हरीतक्याः फलानि हरीतक्यः । हरीतक्यादिषु व्यक्तिरिति स्त्रीत्वाभिधानात् । रथाङ्गादाविति । आदिना देवताद्यपरिग्रह ॥

## इति नपुंसकाधिकारः ।

स्त्रीपुंसयो. । अधिकारोऽयम् । नपुंसकश्चेति । चात्स्त्रीपुंसयो. । शलाकाथाचेति । सा च शलाका काष्ठादिनिर्मिता । तत्र मानमाह । तथा चेति । अविशिष्टलिङ्गम् । तत्तल्लिङ्गवाचकतामयुक्तकार्यविशेषशून्यम् । शिष्टा इति । पूर्वोक्तशब्दान्यतमत्वावच्छिन्नप्रतियोगिताकभेदवन्तः । परवदिति । विशेष्यवदित्यर्थः । गुणवचनञ्च । परवदित्यनुवर्त्तते । [illegible]

॥ श्रीः ॥

# चन्द्रकलायाः

अर्थात्

# अगाधमेधश्रीभैरवमिश्रसंकलितायाः शब्देन्दुशेखर व्याख्यायाः

द्वितीयः खण्डः ।

---

ग्रन्थकर्तुः प्रपौत्रेण श्रीपण्डितगणेशदत्त-
शर्ममिश्रेण ग्रन्थकर्तृहस्तलिखितपु-
स्तकमवेक्ष्य संशोध्य संस्कृत्य र-
सिकजनसौलभ्याय द्विवेदपं-
डितरामनाथशर्मद्वारा।



काशिकराजकीययन्त्रालये मुद्रयित्वा प्रकाशितः ।

सं० १९६९ फा० शु० १४

बोध्याः। सर्वादीनि सर्वनामानि। सर्वनामसंज्ञकानि सर्वादीनि परवल्लोध्यानि। स्पष्टार्थेति। लोकश्रुत्यैव तत्तल्लिङ्गाभिधानस्य सिद्धत्वात्। अत एव लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति भगवता भाष्यकृतोक्तम्। तेन यौगिकेषु शब्देषु लोकश्रुत्यत्तिरेव लिङ्गाभिधाने प्रमाणमिति शिवम्॥

## इति लिङ्गानुशासनविवरणम्।

इति श्रीमदनन्तकल्याणसद्गुणनिधानाखिलपण्डितसार्वभौमभूमण्डल
सद्वारिविमलतरानवद्यसद्यशः पार्वणपीयूषभान्वगस्त्यकुलवंश्यावतंसश्रीमद्भवदेवमिश्रात्मजभैरवमिश्रकल्पितायां
शब्देन्दुशेखरटीकायामुत्तरार्द्धं समाप्तम्।

शरपट्टसिद्धिचन्द्राब्दे मन्मथे शुभवत्सरे॥
माघे मासि सिते पक्षे मूले कामतिथौ शुभा॥ १॥
पूर्णाभूद्रविवारे दिनमणेरियच्चन्द्रकलाभिधा॥
शब्देन्दुशेखरव्याख्या भैरवेण यथामति॥ २॥
फणिपता रामकृपया प्रमोदं शिवयोः सदा॥
करोतु विदुषाञ्चैवमधिकं प्रीतिमङ्गलम्॥ ३॥

धीयन्ते तेऽपवादत्वाद्बाधका भविष्यन्ति। ततोऽग्रे धातुग्रहणस्य प्रयोजनमुक्तम्। अङ्गपरिभाषार्थन्धातुग्रहणङ्कर्त्तव्यम्। अन्यथा सोपसर्गात्स्यात्। अपि च धातोर्विहित प्रत्ययः शेष आर्द्धधातुकसंज्ञो भवतीति सन आर्द्धधातुकसंज्ञापि सिद्धा भवति। यच्चोक्तं सोपसर्गस्य कर्मत्वे धात्वधिकारेऽपि सनो विधानमकर्मत्वादिति। नैष दोषः। कर्मण इति नैषा धातुसमानाधिकरणा पञ्चमी किन्तर्हि अवयवयोगे एषा षष्ठी कर्मणो यो धातुरवयव इति। ततः केवलादुत्पत्तिश्चिकीर्षतीत्यत्र न प्राप्नोतीत्याशङ्क्य व्यपदेशिवद्भावेन साधयित्वा कामन्त्वर्थ नेनैव हेतुना क्यजपि कर्त्तव्यः। महान्तम्पुत्रमिच्छतीति कर्मणो यत्सुबन्तमवयव इति। न कर्त्तव्यः असामर्थ्याद भविष्यति। कथमसामर्थ्यम्। सापेक्षमसमर्थं भवतीति। अत्र कैयटः सुबन्तात्क्यज्विधानात्पदविधित्वात्समर्थपरिभाषोपस्थानादिति भावः। अत्रैव यद्यप्येतद्भाष्यव्याख्यानावसरे कैयटेनोक्तम् सन्विधौ तु तदनुपस्थानात्सापेक्षादपि सन उत्पत्तिरिति। तथापि वावचनानर्थक्यञ्चेत्युत्तरभाष्यपर्यालोचनया सन्विधावपि समर्थपरिभाषोपस्थितिरित्यभिप्रायेण स एवाह। अथ वा धातुरेव विशिष्टाङ् क्रियामाह उपसर्गस्तु द्योतक इति सापेक्षत्वाभाव इति। तथाहि। वावचनानर्थक्यन्तत्र नित्यत्वात्सनः। वावचनस्यानर्थकम्। किङ्कारणम्। तत्र नित्यत्वात्सनः। इह द्वौ पक्षौ हन्तिपक्षव्याहन्सिपक्षच। स्वभावतश्चेतद्भवति वाक्यच प्रत्ययच। तत्र स्वाभाविके वृत्तिविषये नित्ये प्रत्यये प्राप्ते वावचनेन किमन्यच्छक्यमभिसम्बन्धुम्। अन्यदतः संज्ञायाः। न च संज्ञाया भावाभावाविष्येते। तस्मात्सार्थो वावचनेनेति। अत्र कैयटः वृत्तेरेकार्थीभावविषयत्वाद्व्यपेक्षाविषयत्वाच्च वाक्यस्य भिन्नार्थत्वाद्बाध्यबाधकभावाप्रसङ्गादिति भावः। न च संज्ञाया इति। असार्थः प्रत्युत वाग्रहणाद्भवति। प्रत्ययसंज्ञाया विकल्पे सति तन्निबन्धनकार्यविकल्पप्रसङ्गादिति। अत्र यद्यपि सनः पदविधित्वाभावात्समर्थपरिभाषानुपस्थितौ वाक्यस्यैकार्थीभावविषयत्वमिति शङ्का भवति। तथापि, एतद्भाष्यप्रामाण्यादस्याप्येकार्थीभावविषयत्वम्। अधिकमन्यत्र द्रष्टव्यम्। ननु विधीयमानसमाससंज्ञाया न समर्थत्वमत आह। पदविधिर्यत्वादिति। सूत्रे समर्थशब्दो लाक्षणिक इति भावः। व्याख्यानादिति। अत्रैव सूत्रे भाष्ये उ-

कारकान्तेन सुप्संज्ञोद्देश्यसम्बन्धिनीं संज्ञान्तप्रयुक्तकार्यञ्च निरूप्य तत्प्रसङ्गात्समासनिरूपणमारभते । समर्थः पद इति । कर्मसाधन इति । भावसाधनत्वे पदानामिति कर्मषष्ठ्यन्तेन वक्ष्यमाणविधानस्य पदकर्मकत्वाभावेन समासानुपपत्तिः समर्थपदसामानाधिकरण्यञ्च नोपपद्यत इति भावः । शेषषष्ठ्या समास इति । योग्यत्वात् । कर्मणि षष्ठी तु न विधीयमानस्य वक्ष्यमाणस्य पदकर्मकत्वविरहात् । ननु पदोद्देश्यकत्वम्पदसंज्ञायोग्यसमुदायस्य तादृशसमुदायाद्वा यत्क्रियते तस्य सम्भवति न तु सन्नन्तविषय इत्यत आह । पदविधिसहचरित इति । अत एव । पदविधिसहचरितस्य पदविधिशब्देन ग्रहणादेव । सन्नन्तादावेकेति । एतस्य पदविधिसहचरितत्वन्तु पदोद्देशेन विधीयमानस्यप्प्रत्ययविधायकशास्त्रे सन्निधायकसूत्रस्थस्येच्छायामित्यस्यानुवृत्त्या पदोद्देश्यकविधिविधायकशास्त्रसम्पाद्यशाब्दबोधप्रयोजकपदघटितवाक्यविधेयत्वेन बोध्यम् । ननु सन्नन्तादावेकार्थीभावे किम्मानमिति चेत् । सन्सूत्रस्थभाष्यस्यैव मानत्वात् । तथाहि । धातोरिति किमर्थम् । प्राकर्त्तुमैच्छत् । प्राचिकीर्षत् । सोपसर्गान्मा भूत् । संघातेन विशिष्टा क्रिया प्रतिपाद्यते इति ततः सन् प्राप्नोति ततश्च संघातादेर्द्विर्वचनादिप्रसङ्गः । यद्यपि लङन्तेऽपि दोषस्तथाप्युपसर्गात्पूर्वमडागमप्राप्तिम्प्रदर्शयितुमत्र लङन्तप्रयोगः । ततो वार्त्तिककार आह । कर्मग्रहणात्सन्विधौ धातुग्रहणानर्थक्यम् । कर्मणः समानकर्तृकादिच्छायां वा सन्भवतीत्येव धातोरुत्पत्तिर्भविष्यति यतोपसर्गसमभिव्याहाराद्विशिष्टा क्रिया प्रतीयते कर्मत्वन्तु विशेष्यमात्रस्येति भावः । ततो भाष्यकार आह । सोपसर्गं वै कर्म तत उत्पत्तिः प्राप्नोति । सोपसर्गङ्कर्मेति चेत् कर्मविशेषकत्वादुपसर्गस्यानुपसर्गङ्कर्मेति । सोपसर्गस्य कर्मत्वे धात्वधिकारेऽपि सनो विधानसकर्मत्वात् । यदि संघातस्य कर्मत्वमर्थद्वारा स्वीक्रियते तदावयवस्याऽकर्मत्वात्तद्वाचकात्सन्प्रत्ययो न स्यात् । अतः किन्तु धात्वर्थस्य कर्मत्वं वाच्यमिति नेदं धातुग्रहणस्य प्रयोजनम् । इदन्तर्हि प्रयोजनम् । सुबन्तादुत्पत्तिर्मा भूत् । अत्र कैयटः । विकल्पितत्वात्स्तनः यथे सायकामाः यवनादय इति भावः । ततो भाष्यकार आह । सुबन्तात्प्रसङ्गः क्यजादीनामपवादत्वात् । सुबन्तात्र प्रसङ्गः किङ्कारणम् । क्यजादीनामपवादत्वात् । सुबन्तात्क्यजादयो वि

धीयन्ते तेऽपवादत्वाद्बाधका भविष्यन्ति। ततोऽग्रे धातुग्रहणस्य प्रयोजनमुक्तम्। अङ्गपरिमाणार्थन्धातुग्रहणङ्कर्त्तव्यम्। अन्यथा सोपसर्गात्स्यात्। अपि च धातोर्विहित प्रत्यय शेष आर्द्धधातुकसञ्ज्ञो भवतीति सन आर्द्धधातुकसञ्ज्ञापि सिद्धा भवति। यदुक्तं सोपसर्गस्य कर्मत्वे धात्वधिकारेऽपि सनो विधानमकर्मत्वादिति। नैष दोष। कर्मण इति नैषा धातुसमानाधिकरणा षष्ठी किन्तर्हि अवयवयोगे एषा षष्ठी कर्मणो यो धातुरवयव इति। तत केवलादुत्पत्तिश्चिकीर्षतीत्यत्र न प्राप्नोतीत्याशङ्काय व्यपदेशिवद्भावेन साधयित्वा कामन्तर्ह्यनेनैव हेतुना क्वचिदपि कर्त्तव्य। महान्तम्पुत्रमिच्छतीति कर्मणो यत्सुबन्तमवयव इति। न कर्त्तव्य असामर्थ्यान्न भविष्यति। कथमसामर्थ्यम्। सापेक्षमसमर्थं भवतीति। अत्र कैयट सुबन्तात्काङ्क्षिधानात्पदविधित्वात्समर्थपरिभाषोपस्थानादिति भाव। अत्रैव यद्यप्येतद्भाष्यव्याख्यानावसरे कैयटेनोक्तम् सन्निधौ तु तदनुपस्थानात्सापेक्षादपि सन उत्पत्तिरिति। तथापि *वावचनानर्थक्यश्चेत्यु* तरभाष्यपर्यालोचनया सन्निधावपि समर्थपरिभाषोपस्थितिरित्यभिप्रायेण स एवाह। अथ वा धातुरेव विशिष्टाङ् क्रियामाह उपसर्गस्तु द्योतक इति सापेक्षत्वाभाव इति। तथाहि। वावचनानर्थक्यन्तु नित्यत्वात्सन। वावचनस्यानर्थकम्। किङ्कारणम। तत्र नित्यत्वात्सन। इह द्वौ पक्षौ वृत्तिपक्षश्चावृत्तिपक्षश्च। स्वभावतश्चैतद्भवति वाक्यञ्च प्रत्ययश्च। तत्र स्वाभाविके वृत्तिविषये नित्ये प्रत्यये प्राप्ते वावचनेन किमन्यच्छक्यमभिसम्बन्धुम्। अन्यदत सञ्ज्ञाया। न च सञ्ज्ञाया भावाभावाविष्येते। तस्मादार्थी वावचनेनेति। अत्र कैयट वृत्तेरेकार्थीभावविषयत्वाद्वाक्यस्य सापेक्षविषयत्वाच्च वाक्यस्य भिन्नार्थत्वाद्बाध्यबाधकभावाप्रसङ्गादिति भाव। न च सञ्ज्ञाया इति। अनर्थ प्रत्युत वाग्रहणाद्भवति। प्रत्ययसञ्ज्ञाया विकल्पे सति तन्निबन्धनकार्यविकल्पप्रसङ्गादिति। अत्र यद्यपि सन पदविधित्वाभावात्समर्थपरिभाषानुपस्थितौ कथमस्यैकार्थीभावविषयत्वमिति शङ्का भवति। तथापि एतद्भाष्यप्रामाण्यादस्याप्येकार्थीभावविषयत्वम्। अधिकमन्यत्र स्पष्टम। ननु विधीयमानसमासमञ्ज्ञाया न समर्थत्वमत आह। पदविधिरित्यादि। सूत्रे समर्थशब्दो लाक्षणिक इति भाव। व्याख्यानादिति। अत्रैव सूत्रे भाष्ये उ

कारकान्तेन सुप्तिङन्तोद्देश्यसम्बन्धिनीं संज्ञान्तरप्रयुक्तकार्यस्य निरूप्य तत्प्रसङ्गात्समासमनिरूपणमारभते । समर्थः पद इति । कर्मसाधन इति । भावसाधनत्वे पदानामिति कर्मषष्ठ्यन्तत्वेन वक्ष्यमाणविधानस्य पदकर्मकत्वाभावेन समासानुपपत्तिः समर्थपदसामानाधिकरण्यस्य नोपपद्यत इति भावः । शेषषष्ठ्या समास इति । योग्यत्वात् । कर्मणि षष्ठी तु न विधीयमानस्य वक्ष्यमाणस्य पदकर्मकत्वविरहात् । ननु पदोद्देश्यकत्वम्पदसंज्ञायोग्यसमुदायस्य तादृशसमुदायाद्वा यत्क्रियते तस्य सम्भवति न तु समन्तविषय इत्यत आह । पदविधिसहचरित इति । अत एव । पदविधिसहचरितस्य पदविधिशब्देन ग्रहणादेव मतल्लादावेवेति । एतस्य पदविधिसहचरितत्वन्तु पदोद्देशेन विधीयमानकप्प्रत्ययविधायकशास्त्रे सन्निधायकसूत्रस्यैच्छायामित्यस्यानुवृत्त्या पदोद्देश्यकविधिविधायकशास्त्रसम्पाद्यशाब्दबोधप्रयोजकपदघटितवाक्यविधेयत्वेन बोध्यम् । ननु मतल्लादावेवकार्याभावे किम्मानमिति चेत् । सन्सूत्रस्थभाष्यस्यैव मानत्वात् । तथाहि । धातोरिति किमर्थम् । प्राकर्तुमैच्छत् । प्राचिकीर्षत् । सोपसर्गान्मा भूत् । संघातेन विशिष्टा क्रिया प्रतिपाद्यते इति ततः सन् प्राप्नोति ततश्च संघातादेर्द्विर्वचनादिप्रसङ्गः । यद्यपि लङन्तेऽपि दोषस्तथाप्युपसर्गात्पूर्वमडागमप्राप्तिमदर्शयितुमत्र लङन्तप्रयोगः । ततो वार्त्तिककार आह । कर्मग्रहणात्सन्विधौ धातुग्रहणानर्थक्यम् । कर्मणः समानकर्तृकादिच्छायां वा सन्भवतीत्येव धातोरुत्पत्तिर्भविष्यति यत्रोपसर्गसमभिव्याहाराद्विशिष्टा क्रिया प्रतीयते कर्मत्वन्तु विशेष्यमात्रस्येति भावः । ततो भाष्यकार आह । सोपसर्गं वै कर्म तत उत्पत्तिः प्राप्नोति । सोपसर्गङ्कर्मेति चेत् कर्मविशेषकत्वादुपसर्गस्यानुपसर्गङ्कर्मेति । सोपसर्गस्य कर्मत्वे धात्वधिकारेऽपि सनो विधानसम्भवात् । यदि संघातस्य कर्मत्वमर्थद्वारा स्वीक्रियते तदावयवस्याकर्मत्वात्तदात्मकात्सन्प्रत्ययो न स्यात् । अतः केवलधात्वर्थस्य कर्मत्वं वाच्यमिति नेदं धातुग्रहणस्य प्रयोजनम् । इदन्तर्हि प्रयोजनम् । सुबन्तादुत्पत्तिर्मा भूत् । अत्र कैयटः । विकल्पितत्वात्ततः परं सावकाशाः क्यजादय इति भावः । ततो भाष्यकार आह । सुबन्तादप्रसङ्गः क्यजादीनामपवादत्वात् । सुबन्ताच्च सनाप्रसङ्गः निदर्शनम् । क्यजादीनामपवादत्वात् । सुबन्तात्क्यजादयो नि-

रसूत्रभाष्ये पाठात्। तयोर्पस्थितिरिति। विशिष्टार्थोपस्थितिरित्यर्थः। समुदा-
येनेति। वृत्त्यात्मकसमुदायेत्यर्थः। समुदायशक्तिग्रहश्च राजपुरुषादिपदं रा-
जसम्बन्धविशिष्टपुरुषादौ शक्तमित्यादिरीत्या भवति सा यदा प्रत्येकपदश-
क्तिग्रहस्तदैव नान्यदेत्याशयेनाह। एवञ्चेति। प्राचाम्मतङ् खण्डयति। जह-
दिति। महाबाहुरिति। आन्महतइत्यात्वस्यार्थवन्महच्छब्दसम्बन्धितया जह-
त्स्वार्थत्वेऽन्वयानुपपत्तेः। ननु समानाधिकरणे उत्तरपदे परे तस्यात्त्वविधाय-
कत्वात्स्वार्थस्य त्यागे पूर्वस्य पदस्य सर्वत्रैवानर्थकतया सूत्रमेव व्यर्थमिति त-
त्सामर्थ्यादनर्थकत्वेऽपि भविष्यतीत्यत आह। सुपन्था इति। पथिमथ्यृभुक्षिवत्य-
स्य केवले चरितार्थत्वादिति भावः। ननु भूतपूर्वगत्योक्तसूत्रद्वयस्यापि निर्वाह
इत्यत आह। भूतेति। तथैव। रथन्तरशालिपर्णीगौरखरेन्द्रयवेन्द्रगोपादौ।
एतेषु रूढेः प्रतिबन्धकत्वाज्जहत्स्वार्थैव। रूढेः प्रतिबन्धकत्वञ्च समुदायशक्ति-
ज्ञानेन विलक्षणार्थविषयकशाब्दबोधे जननीयेऽवयवशक्तिज्ञानस्य सहकारि-
त्वाकल्पनमेव। न तु मणिमन्त्रादिन्यायेन प्रतिबन्धकत्वङ्गौरवात्। एतेषु स-
मुदायावयवेषु आरोपितार्थवत्त्वमादाय साधुत्वम्। राजपुरुषाद्यवयवेषु त्वारो-
पो वक्तुमशक्यः। प्रसिद्धार्थबाधाभावात्। किञ्च जहत्स्वार्थत्वादिव्यवहारः पू-
र्वपदमादायैव। तत्रैकार्थीभावोपपत्तये शास्त्रकल्पितमेव। अत एव यदि
जहत्स्वार्थो पुरुषमात्रस्यानयनम्प्राप्नोतीति भाष्येऽभिहितम्। परिभाषेयमिति।
लाघवात्। न त्वधिकारः प्रतियोगमुपस्थितिकल्पने गौरवात्। पदविधिग्र-
हणोपादानस्य व्यर्थत्वापत्तेश्च। परिभाषात्वस्वीकारे तु पदविधिरितिलिङ्गमि-
ति यत्रोपतिष्ठत इत्यस्याध्याहारेण यः पदविधिस्तत्र समर्थ इत्युपतिष्ठ-
त इत्यर्थकल्पनसम्भवादिति भावः। तत्र विशेषमाह। स चेति। एकार्थीभा-
वविषये विशेषमाह। एकार्थीभावश्चेति। कल्प्यत इति। अत एव द्वितीया
श्रितेत्यादौ सामर्थ्यप्रकृतिकेन सुबन्तेनैकार्थ्यकल्पना भवति। तत्र। अलौकिके
त्वन्विते विग्रहवाक्ये। अत्र। सर्वोऽप्यसमासःसामानाधिकरण्यानुमानन्दर्श-
यं इति। व्यभिचारादिशङ्कानिवर्त्तकमेतत् इत्यर्थः। सद्। असमर्थसमासमा-
नाधिकरण्यः। असमर्थसमासमानाधिकरणादिदोषाद्व्यत्वात्। यद्ययमसमर्थसमासमा-
नाधिकरण्यो न स्यात्तदा तादृशानुवादविषयो न स्यादिति। असामर्थ्य

न्नमेकार्थीभाव सामर्थ्यम्परिभाषा चेतितन्मूलकादित्यर्थः । तस्या । व्यपेक्षाया अभावादिति । अस्याः स्वीकारे तु विशेषणान्वयादिदोष स्यादिति भाव । च न्द्रमौलेध्येयम् । सनाद्यन्ते यद्यप्येकार्थीभावाद्विशेषणसापेक्षत्वे सनादयो न भवन्ति । अत एव महान्तम्पुत्रमिच्छतीत्यत्र क्यचमाशङ्क्य सापेक्षमसमर्थम्भवतीति सन्सूत्रे उक्तम् । तत्तुल्यन्यायेन समानाधिकरणविशेषणसापेक्षत्वे स्तोकम्पक्तुमिच्छतीत्यत्र वाक्यमेव न तु सन् । यत्र तु व्यधिकरण विशेषणन्तत्र भवत्येव ओदनम्पक्तुमिच्छति । ओदनम्पिपक्षति । गमकत्वस्य सापेक्षस्थले वृत्तिप्रयोजकतया तस्याश्चापि सत्त्वात् । अत एव ललितस्त्रिगर्ते तीरे सेतुमेषा चिकीर्षतीति प्रयोगो दृश्यते । प्रधानस्य सापेक्षत्वे तु सामानाधिकरण्येऽपि वृत्तिर्भवत्येव । उपमितमितिसूत्रे सामान्याप्रयोगग्रहणात् । गमकत्वस्य तत्र सत्त्वाच्चेति । तत्रैकार्थीभावपदार्थन्निर्वक्ति । स च विशेषेति । यद्यपि; वाक्यस्याप्यर्थो विशेष्यविशेषणभावोऽस्ति । अत एव कृत्तद्धितेतिसूत्रे समासग्रहणस्य वाक्यस्यार्थवत्प्रातिपदिकसञ्ज्ञावारकनियमपरतया वर्णनं सङ्गच्छते । तथापि तत्र वाक्यार्थानाम् पृथग्भूतत्वम् । वृत्तौ त्वपृथग्भूतत्वमिति विशेष । एवञ्च विशेषत्वस्यापृथग्भूतानामर्थानामित्यादिर्बोध्य । यथा पयः पांसूदकयोः सद्भावेऽपि तयोरन्यतरविषयकप्रतीतेर्नान्यतराविषयकत्वन्तथैवा, पि । पांसूदकमिलने पिण्डाख्यमतिरिक्तं वस्तु प्रतीयते तथेहापि समुदाय एव प्रतीयते । न चैवं वृत्तिविग्रहयोः समानार्थकत्वव्यवहारस्य कथमुपपत्तिरिति वाच्यम् । रक्तगगनन्यायमाश्रित्य शास्त्रनिष्पत्तेन वाक्येन यथा सम्मिश्रपिण्डे पांसूदकमिति व्यवहारस्तद्वदत्रापि पूर्वपदार्थोत्तरपदार्थत्वव्यवहारेण समानार्थकत्वव्यवहारस्योपपत्तेः । अत एव । एकार्थीभावस्वीकारादेव । पदार्थान्तरस्वीकारस्य प्रयोजनमाह । राजमिति । विशेषणपद इति तदर्थस्येव कल्पितत्वमित्यर्थः । पृथगुपस्थिते । इतरपदार्थनिरूपितविषयित्वा न अंशे समानविषयितासम्बन्धेनेति । गमकत्वस्यैव वृत्तिपदार्थकत्वं साधकत्वमाह । गमकत्वादिति । गमकत्वञ्च [illegible] पदार्थनिरू पितविषय [illegible] विषयताशालिबुद्धिजनकत्वं [illegible] तत्त्वादर्थे [illegible] । तत्र उभे इति । सादृश्यम् [illegible]

यवे चैतत्परिसमाप्यते । न समुदाये इति । अस्मिन्मतेऽस्य भाष्ये प्रातिपदिकशब्दस्य जातिशब्दत्वमित्यभिप्रायेणाकृतिस्तु प्रत्येकम्परिसमाप्यत इत्युक्तत्वेन त्रयी शब्दानाम्प्रवृत्तिरिति पक्ष एव स्वीकृतः। अत एव । आकृतेः प्रत्येकपरिसमाप्तत्वादेव । विभक्तित्वमपि प्रत्येकसमाप्तमेव भविष्यतीति भाव.। यद्यपि वैयाकरणसिद्धान्तेऽनुवाद्यविशेषणन्न सर्वत्राविवक्षितम् । आर्द्धधातुकस्येडितिसूत्रे वलादित्वरूपस्यानुवाद्यविशेषणस्य विवक्षितत्वात्। तथापि भाष्योक्तरीत्या दोषपरिहारे सिद्धे भाष्यानुक्तसङ्ख्याविवक्षया दोषपरिहारस्यायुक्तत्वमित्यभिप्रायः। युगपत्समास इति। न तु क्रमेणेति शेषः। साधकाभावात्। क्रमास्वीकारेपि व्यचलदित्यनेनानो. समाससंज्ञास्वीकारादुदात्तवतेतिवार्त्तिकस्योपपत्तिरिति भाव.। इदमिति। सुपतिसूत्रमित्यर्थ.। अन्त्ये। अधिकारत्वे। देवः करोतीति। अत्र प्रथमान्तार्थस्याख्यातार्थम्प्रति विशेषणत्वादस्तिविशेषणसमासप्राप्तिः। अङ्गनिमित्तस्येति। धातुप्रातिपदिकयोर्भेदेनोपादानमकृत्वाऽङ्गस्य सुप इत्येव सूत्रमस्त्विति भावः। अङ्गनिमित्तस्येत्यस्याङ्गसंज्ञानिमित्तस्येत्यर्थः कार्यः। यत्रानेन लुगिष्यते तत्र प्रथमं सुपोऽनेन सूत्रेण लुकि प्रत्ययलक्षणेन सुबन्तत्वप्रयुक्ताङ्गकार्यमिति भावः। परन्त्विदं व्याख्यानमसङ्गतम्। राजानमित्यादौ सुपो लुकि प्रत्ययलक्षणेन पदत्वाच्च लोपादीनामापत्तेः। किञ्चापि पूर्वः टाङसीत्याद्यनेकसूत्रविषयेऽनुपपत्तिः। अत एवोक्तं भ्रमवारणायेति। न चाङ्गस्येति षष्ठी न निमित्तनिमित्तिभावात्मकसम्बन्धे किन्तु अवयवावयविभावात्मकसम्बन्धे। एवञ्चाङ्गावयवस्य सुप इत्यर्थो भविष्यतीति वाच्यम्। परमदक्षस्यापत्यम्पारमदाक्षिरितीष्यते तस्यासिद्ध्यापत्तेः। तथाहि। परम सु दक्ष सु इति स्थिते परिनिष्ठितविभक्त्या समासपक्षे परम ङस् दक्ष ङस इति वा स्थिते समुदायस्य समाससंज्ञायामपि सुपो लुगर्थं समुदायाद्विभक्त्युत्पत्तौ ततः समुदायस्याङ्गसंज्ञायां सुपो लुक्यपि श्रूयमाणपदत्वा चकारान्तप्रकृतिकसुतविरहेणेञ्प्रत्ययो नोपपद्यत इति। किञ्च बहुपटव इत्यत्र विभाषा सुप इति बहुचि जसोऽङ्गावयवत्वाभावेन जसो लुगभावापत्तौ चित इत्यन्तोदात्तत्वं जस एव स्यात्। ननु प्रत्ययग्रहणपरिभाषया बहुपटु जसित्यस्य प्रत्ययान्तत्वाभावेन तस्य प्रातिपदिकसंज्ञाया

मिति । यदर्थबोधकविग्रहवाक्यजन्यशाब्दबोधे परस्परमर्थानां सम्बन्धो भासते तत्र कल्पितेऽलौकिकविग्रहवाक्ये एकार्थीभावस्य कल्पनेति भावः । क्वचित्तु सामर्थ्याभावेऽपि समासो भवति । असूर्यंपश्यानि मुखानि किमोदनः शालीनाम् । सक्त्वाढकमापणीयानामित्यादौ शिष्टप्रयोगात् । समाससंज्ञकमिति । प्राक् समाससंज्ञकमित्यर्थः । प्राक्कडारादित्यत्र प्राग्ग्रहणाभावे समास इत्यधिकारस्तेन वक्ष्यमाणसंज्ञाभिः समावेशः । समासशब्दस्य संज्ञात्वन्तु प्राक्कडारसूत्रे समाससंज्ञेतिभाष्यकारीयव्यवहारात्कल्प्यते । समास इत्यत्र कर्मणि घञ् । सम्पूर्वकादस्यतेः संक्षेपोऽर्थ इत्यन्वर्थेयं संज्ञा । ननु प्रागपवादस्यावधिनिर्देशार्थत्वात्समावेशो वक्ष्यमाणसंज्ञाभिर्न भविष्यति किन्तु पर्याय इत्यत आह । प्राक्कडारादित्यत्रेति । अत्र । विभक्ते सुपा इत्येतत्पदस्यार्थेऽनुवर्त्तमानसुप्पदार्थे च । तत्फलमाह । तेन महिथ्या इत्यादि । न चार्थं षष्ठीत्यस्य सूत्रस्य विषय इति षष्ठ्येकत्वविवक्षायाः फलमिति वक्तव्यमतोऽत्रास्योपादानमफलमिति वाच्यम् । अस्योपलक्षणत्वात् । अत एव वार्त्तिककृता गतिमता तिङा गतेः समास उक्तो न तु गतिसमुदायस्य तिङेति । कैयटादय इत्यनेन सूचितमरुचिम्प्रकाशयति । परे त्विति । अनुवाद्यत्वादिति । अनेनाविवक्षाया हेतुरुक्तः । यद्वं सम्मार्ष्टीत्यत्रेव । एवञ्च । जातिविवक्षायाञ्च । प्रत्येकसमासत्वं नेति । अत एव मतुप्सूत्रभाष्ये आकृतौ शास्त्राणि प्रवर्त्तन्ते आकृतिश्च प्रत्येकम्परिसमाप्यते । यावति चैतत्परिसमाप्यते प्रातिपदिकादिति सुप्सुपेति च तावत उपपत्त्या भवितव्यं द्वयोश्चेतत्समाप्यते न बहुष्वित्युक्तं सङ्गच्छते । सुबन्तत्वस्य जातित्वे चेदमेव भाष्यमानम् । सुमस्तादीत्यादिना प्रातिपदिकत्वपरिग्रहः । तेन मतुप्सूत्रस्थभाष्यस्य सङ्गतिः । तत्र हि पठ्यते कस्मान्न भवति चित्रा गावो यस्य सन्तीति । कुतः कस्मान्न भवति । विग्रहवाक्यादाहोस्वित्समुदायात् । अवयवात्तावन्न भवति । असामर्थ्यात्स्थयसामर्थ्यम् । सापेक्षमसमर्थं भवति । समुदायात्तर्हि कस्मान्न भवति । अप्रातिपदिकत्वात् । नाणु च भोः आकृतौ शास्त्राणि प्रवर्त्तन्ते । तद्यथा सुप्सुपेति वर्त्तमानेऽप्यवयवस्य न समासो भवति । सत्यमेतत् । आकृतिस्तु प्रत्येकम्परिसमाप्यते प्रातिपदिकादिति तावत उपपत्त्या भवितव्यम् । य-

वयवे चैतत्परिसमाप्यते । न समुदाये इति । अस्मिन्मतेऽप्युत्तरभाष्ये प्राति-
पदिकशब्दस्य जातिशब्दत्वमित्यभिप्रायेणाकृतिस्तु प्रत्येकम्परिसमाप्यत इ-
त्युक्तत्वेन वयी शब्दानामप्रवृत्तिरिति पक्ष एव स्वीकृतः । अत एव । आकृतेः
प्रत्येकपरिसमाप्तत्वादेव । विभक्तित्वमपि प्रत्येकसमाप्तमेव भविष्यतीति भा-
वः । यद्यपि वैयाकरणसिद्धान्तेऽनुवाद्यविशेषणन्न सर्वत्राविवक्षितम् । आर्ध-
धातुकस्येडिति सूत्रे वलादित्वरूपस्यानुवाद्यविशेषणस्य विवक्षितत्वात् । त-
थापि भाष्योक्तरीत्या दोषपरिहारे सिद्धे भाष्यानुक्तसङ्ख्याविवक्षया दोषप-
रिहारस्यायुक्तत्वमित्यभिप्रायः । युगपत्समास इति । न तु क्रमेणेति शेषः । सा-
धकाभावात् । क्रमास्वीकारेऽपि व्यचलदित्यनेनानोः समाससंज्ञास्वीकारादुदात्त
वतेतिवार्त्तिकस्योपपत्तिरिति भावः । इदमिति । सुपतिसूत्रमित्यर्थः । अन्ये । अ-
धिकारत्वे । देवः करातीति । अत्र प्रथमान्तार्थस्याख्यातार्थम्प्रति विशेषणत्वा-
दस्ति विशेषणसमासप्राप्तिः । अङ्गनिमित्तस्येति । धातुप्रातिपदिकयोर्भेदेनोपा-
दानमकृत्वाऽङ्गस्य सुप इत्येव सूत्रमस्त्विति भावः । अङ्गनिमित्तस्येत्यस्याङ्गसं-
ज्ञानिमित्तस्येत्यर्थः कार्यः । यत्रानेन लुगिष्यते तत्र प्रथमं सुपोऽनेन सूत्रे-
ण लुकि प्रत्ययलक्षणेन सुबन्तत्वप्रयुक्तकार्यमिति भावः । परन्त्विदं व्या-
ख्यानमसङ्गतम् । राजानमित्यादौ सुपो लुकि प्रत्ययलक्षणेन पदत्वान्न लो-
पादीनामापत्तेः । किञ्चामि पूर्वः टाङसोरित्याद्यनेकसूत्रविषयेऽनुपपत्तिः ।
अत एवोक्तं भ्रमवारणायेति । न चाङ्गस्येति षष्ठी न निमित्तनिमित्तिभा-
वात्मकसम्बन्धे किन्तु अवयवावयविभावात्मकसम्बन्धे । एवञ्चाङ्गावयवस्य सु-
प इत्यर्थो भविष्यतीति वाच्यम् । परमदक्षस्यापत्यम्पारमदाक्षिरितीष्यते तस्या-
सिद्ध्यापत्तेः । तथाहि । परम सु दक्ष सु इति स्थिते परिनिष्ठितविभक्त्या स-
मासपक्षे परम ङस् दक्ष ङस इति वा स्थिते समुदायस्य समाससंज्ञायामपि
सुपो लुगर्थं समुदायाद्विभक्त्युत्पत्तौ ततः समुदायस्याङ्गसंज्ञायां सुपो लुक्य-
पि श्रूयमाणषष्ठ्या अकारान्तप्रकृतिकसुब्विरहेणेञ्प्रत्ययो नोपपद्यत इति ।
किञ्च बहुपटव इत्यत्र विभाषा सुप इति बहुचि जसोऽङ्गावयवत्वाभावेन ज-
सो लुगभावापत्तौ चित इत्यन्तोदात्तत्वं जस एव स्यात् । ननु प्रत्ययग्रहण-
परिभाषया बहुपटु जसित्यस्य प्रत्ययान्तत्वाभावेन तस्य प्रातिपदिकसंज्ञायां

समुदायात्जसि तस्मिन्पूर्वस्याङ्गत्वे तदवयवस्य पूर्वजसौ लुकि पटुशब्दौकारस्यो-दात्तत्वभविष्यतीति चेत्। तथापि सुगौरित्यत्र पूर्ववत्, सु गो सु इतिसमु-दायात्सौ पूर्वकालस्थितयोः सुशब्दयोर्लुकि श्रूयमाणसोर्गोशब्दाद्विहितत्वा-भावेन णिद्वद्भावानापत्तेः। विहितविशेषणाश्रयणन्तु हे भानव इत्यत्र णि द्वद्भाववारणायावश्यकम्। तस्मिन्सूत्रे गकारस्याविवक्षितत्वात्। न च हे भानव इत्यत्र पञ्चमीसमासेनाचः परस्मिन्निति सूत्रेण स्थानिवद्भावोऽभावाति-देशस्यापि सत्त्वाद्भविष्यतीति ओकारात्पर इत्यर्थेऽपि न दोष इति वाच्यम्। एवं सति हे भानो इत्यादावपि पञ्चमीसमासेन स्थानिवद्भावे सति सम्बुद्धि-लोपानापत्तेः। न च तत्र भावातिदेशस्यापि सत्वेन ह्रस्वान्तात्परत्वात्सम्बु-द्धिलोप इति वाच्यम्। तथा सति हे हरे इत्यादौ ह्रस्वान्तात्परत्वादेव लोपे सिद्धे एङ्ग्रहणवैयर्थ्यमिति भावातिदेशस्य तत्राप्रवृत्तिस्वीकारात्। यदि त्वेषु सम्बुद्धिलोपार्थं पूर्वस्मादव्यवहितात्परस्येत्यर्थ आश्रीयते तदा भानव इ त्यत्र णिद्वद्भावोपि वारयितुमशक्य एवेति प्राचीनमते सुगौरित्यत्र णिद्वद्भा-वस्याभावापत्तिः सुपोऽङ्गस्येति न्यासे दुर्वारैव। परे त्वित्यादिना प्रागुक्त लक्षणप्रतिपदोक्तपरिभाषया हे भानव इत्यत्र णिद्वद्भावस्य वारणे यद्यपि वि-हितविशेषणानाश्रयणात्सुगौरित्यत्र न दोषस्तथापि परमसर्वस्मै इत्यत्र दोष एव। पूर्ववद्विभक्तेः सर्वनाम्नो विधानाभावेन सर्वनाम्नः स्मै इति शास्त्राप्रा-प्तेः। न च सुपोऽङ्गस्येति न्यासे वर्णाश्रमेतराणामित्यादौ सर्वनाम्न आमो वि धानाभावेन सुडप्राप्तावन्द्वे चेतिसूत्रवैयर्थ्यमिति वाच्यम्। समुदायगतकृत्या-विवक्षायामकज्व्याहृत्यर्थंतस्यावश्यकत्वात्। न च सुडिधौ विहितविशेषणा-श्रयणवैयर्थ्यमिति शङ्क्यम्। द्वन्द्व इति समस्याः प्रथमार्थत्वसिद्धान्तात्समुदायस्य वर्णाश्रमेतराणामित्यत्र सर्वनामत्वनिषेधेऽप्यवयवस्य सर्वनामत्वात्सुडापत्तेः। न चेतरेतरयोगद्वन्द्वेप्युद्भूतावयवभेदस्य समूहस्य प्राधान्यमिति सिद्धान्ताद्द्वन्द्वा-वयवस्य वर्णाश्रमेतराणामित्यत्रेतरशब्दस्योपसर्जनत्वात् सुद्प्राप्तिरिति विहित-विशेषणवैयर्थ्यमिति वाच्यम्। मासपूर्वाणां वर्षपराणामित्यत्र समुदायस्य तृ-तीयासमास इतिप्रतिषेधेऽप्यवयवस्य सर्वनामत्वात्सुडापत्तेर्दुर्वारत्वात्॥ यदि त्वङ्गस्येत्यस्यैकवाक्यतयाऽवर्णान्तसर्वनामसम्बन्धात्परस्याम इत्यर्थेन तदा

सत्या ग्रामनिरूपिताङ्गस्याश्रयणाज्ञोसपूर्वाणामित्यादौ न दोष इति विभा-
व्यते तदा सुड्विधायकसूत्रे विहितविशेषणाभावेन परमसर्वेषामित्यादौ सु-
पोङ्गस्येतिन्यासे दोषाभावेपि सुकुलमित्यादौ दोषः स्यादेव । अत्र हि सु॑ सु
कुल सु सुःइति स्थिते प्रतिपदविधित्वेन शीघ्रोपस्थितिकत्वात्सुपोऽङ्गस्येतिसू-
त्रस्याधित्वा पूर्वं स्वमोर्नपुंसकादिति द्वितीयस्य सोर्लुकि प्रत्ययलक्षणेनाङ्गत्वा-
द्विशिष्टावयवयोर्द्वयोरपि सुपोरनेन लुकि स्थानिनोऽभावेनातोऽमित्यस्याप्रवृत्तौ
रूपासिद्धिः स्फुटैव ॥ ननु समर्थस्य सुप इति न्यासोऽस्तु सामर्थ्यं चैकार्थीभाव
एवाश्रीयते । तादृशसामर्थ्यं विशिष्टावयवस्य सुप इत्यर्थो भविष्यतीति सुकु-
लमित्यत्रापि विभक्त्युत्पत्तेः प्राक् सुपो लुकि ततः सुकुलशब्दात्स्वतोमित्य-
मादेशे रूपसिद्धिर्भविष्यतीति चेन्न । त्वयकेत्याद्यवयवस्य लुगापत्तेः । कुत्सि-
तइतिसूत्रभाष्योक्तरीत्या कुत्सादिभिः सुबन्तस्यैवैकार्थीभावात् । किमोदनः
शालीनामसूर्यम्पश्यानि सुखानीत्यादावसमर्थसमासे लुगनापत्तेश्च । न चा-
सूर्यम्पश्यानीत्यत्रालुगेवास्त्विति वाच्यम् । उत्तरपदे खिति मुम्विधानस्य प-
रन्तप इत्यादौ चारितार्थ्येपि किमोदनः शालीनाम् । सक्त्वाढकमापणीया-
नामयाद्यभोजी ब्राह्मण इत्याद्यसिद्ध्यापत्तेः । एतेन सुपो वृत्तेरित्येव न्यासोऽ-
स्त्विति परास्तम् । त्वयकेत्यादेर्मूलकेनोपदंशमित्यादेश्चासिद्धापत्तेरिति दिक् ।
अन्ययेति ॥ भूतपूर्वं इतिनिर्दिशस्याश्रयणाभाव इत्यर्थः । अनियमः स्यादि-
ति । न चोभयोः प्रथमानिर्दिष्टत्वाविशेषेऽपि पूर्वशब्दस्य पूर्वकालावच्छिन्न-
परतया तस्य भवनकर्तृविशेषणत्वेनोपसर्जनसंज्ञाया अन्वर्थतया पूर्वशब्दस्यै-
वनियमेन पूर्वनिपातः स्यादिति कथमनियमवर्णनमिति वाच्यम् । उपसर्जनसं-
ज्ञाया अन्वर्थत्वेऽपि वक्ष्यमाणरीत्या पूर्वकायादिसिद्धये समासशास्त्रस्थप्रथमा-
निर्दिष्टशब्दगतस्याप्राधान्यस्यैवाश्रयणमावश्यकमिति तादृशाप्राधान्यस्यप्रकृते-
न सम्भव इत्यभिप्रायेणानियमकथनात् । न च तथापि पर्यायेणोभयोः पूर्वनि-
पातेऽपि भूतपूर्वे चरडिति निर्देशोपपत्तेः कथन्तेन निर्देशेन नियमसिद्धिरिति
वाच्यम् ॥ उपसर्जनम्पूर्वमितिसूत्रस्य प्रतिलक्ष्यभेदेन प्रकृतोदाहरणविषयेऽपि
तस्य पृथग्भूतस्य कल्पनया तस्मिन् वाक्ये यदुपसर्जनपदन्तस्य लौकिको-
पसर्जनत्वबोधकता भविष्यति तथा च पूर्वशब्दस्यैव पूर्वनिपातः स्यादतस्त-

स्य निर्देशस्य नियामकत्वमावश्यकमित्यभिप्रायात्। ननु पूर्वशब्दस्य भूतशब्दार्थैकदेशभवनक्रियाविशेषणतया सुबन्तार्थविशेष्यानन्वयित्वेन कथमत्र समासमासिरत आह। अत एवेति। अस्मादेवेत्यर्थः। एवमेवान्यत्राप्याह। विस्पष्टेति। इवेनेतिवचनेन मातेवेत्यस्य साधुत्वमिति कस्य चिदुक्तिं खण्डयति। हरीतकीमित्यादिना। न चैवमेघ इव मैत्रो गच्छतीत्यादावपि चैत्र इत्यादेरिवार्थेऽन्वयात्प्रथमा न स्यादिति वाच्यम्। एतादृशे स्थले चैत्रादेर्मेघादावभेदान्वय एव। इवशब्दस्तात्पर्यग्राहक इति स्वीकारात्। हरीतकीमित्यत्र त्वेवं वक्तुमशक्यम्। मातृपदाद्द्वितीयापत्तेरिति दिक्। इदञ्च वार्त्तिकमप्राप्तसमाससंज्ञाविधायकन्न किन्तु सुपेतियोगविभागसिद्धसमासानुवादेन विभक्त्यलोपविधायकम्। सहेतिसूत्रभाष्ये एव इवेन समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वञ्चेत्यस्य पाठात्। अत एवाह कैयटः। सुपेत्यस्य लक्षणत्वात्समासे सिद्धे कार्यान्तरविधानार्थं वचनमिति। वाससी इव। कन्ये इवेत्युदाहरणम्। वासःशब्दो वस्तेर्णिदित्यसुन्प्रत्ययान्तत्वादाद्युदात्तः। समासादुत्पन्नस्य सुपः अव्ययादिति लुक्। कन्याशब्दस्तु। कन्याराजन्यमनुष्याणामन्त इतिफिट्सूत्रेणान्तस्वरितः। एतेन वार्त्तिकेन समासविधानमपूर्वमिति ध्वनयति। एतद्योगेति। नन्वत्र सुपेतिसूत्रसिद्धसमासस्य वैकल्पिकतया एतदभावे यथार्थत्वप्रयुक्तसमासो दुर्वार इतीवशब्दस्य पूर्वनिपातोऽपि स्यादत आह। अथ यथार्थत्वादीति। ननु तत्र तस्येवेतिनिर्देशेनेवशब्देन यथार्थत्वप्रयुक्तस्य समासस्याभावकल्पनेऽपि मणीवोष्ट्रस्य लम्बेते इत्यस्य भारतप्रयोगस्य कथमुपपत्तिः। वशब्दस्यापीवार्थकत्वादिष्टापत्तिस्तु कर्त्तुमशक्या। वशब्दस्य पूर्वनिपातप्रसङ्गादिति चेन्न। तेन निर्देशेन यथार्थत्वप्रयुक्तसमासस्य क्वाचित्कत्वस्वीकारात्। सामान्यशास्त्रबाधकल्पनापेक्षया क्वाचित्कत्वरूपधर्मकल्पनाया लघुत्वात्। अथ विभक्त्यलोपश्चेत्यनेन यद्विभक्त्यन्तस्य इवेन समासः प्रत्यासत्त्या तस्या एवालुग्विधानमिति बोध्यम्। निर्दिष्टपदञ्च व्यर्थमिति। समासे प्रथमेत्येव वाच्यम्। प्रथमापदस्य प्रथमान्तपरतया समासघटकस्योपसर्जनसंज्ञा भविष्यतीति भावः। सम[illegible] [illegible]भिप्रायेण ग्र[illegible]न्थे। न चेति [illegible]। प्रधानत्वसामानाधिकरण्य

वाच्यतासम्बन्धेन। यत्प्रति। यदर्थम्प्रति। यदप्रधानम्। यदप्रधानीभूतार्थस्य प्रतिपादकम्। तं प्रति त शब्दप्रति। तदुपसर्जनम्। तच्छब्दसरूपमुपसर्जनसंज्ञम्। एवञ्चोपसर्जनम्पूर्वमित्यस्य यदर्थोपसर्जनीभूतार्थप्रतिपादकं यत्तत्तदर्थपरया पूर्वम्प्रयोज्यमित्यर्थेन न कुमारीशब्दस्य पूर्वनिपात इति भावः। एवम्। अर्थगताप्राधान्यघटितार्थकरणे। समाधत्ते। समासेत्यादि। यत्प्रतीत्यस्य यं शब्दप्रतीत्येत्यर्थो न तु यदर्थप्रतीत्यर्थ. कार्यः। इदं शब्दगतमप्राधान्यमपि लौकिकमेव तदुपपादयति। भवतीत्यादिना। एवमन्यत्र। पूर्वापराधरोत्तरमितिसूत्रे। न चैवम्भूतपूर्वे चरडितिनिर्देशादितिपूर्वेषष्ठ्यामन्नतिरेवेति वाच्यम्। तत्र लघ्वानुरोधेन लौकिकस्य द्विविधस्याप्राधान्यस्याश्रयणात्। अत एव। शब्दगतस्यैतादृशप्राधान्यस्याभिप्रेतत्वादेव। ननु बहुव्रीहिसंज्ञाविधायकशास्त्रे तृतीयान्तपदोपादानाभावान्निकृष्टप्राधान्यन्तत्र नोपपद्यत इत्यत आह। बहुव्रीहौ त्वेकेति। अर्थगतलौकिकाप्राधान्याभिप्रायेण व्यवस्थामुपपादयतामतमाह। यत्तु अर्थगताप्राधान्य इति। तत्सामर्थ्येति। प्रथमानिर्दिष्टसामर्थ्यर्थः। सम्बन्धविभक्त्युच्चारणमेव तर्ह्यस्त्वित्यत आह। प्राथम्यादिति। किञ्च पूर्वोक्तरीत्या सकलव्यवस्थासिद्धौ सामर्थ्यपर्यन्तानुसरणक्लेशो वृथा तदाह। अलमिति। सप्तम्या विप्रतिपद्यत इति। हवे शाखेतियदत्र सप्तमी एवञ्च सप्तम्यर्थोत्र घटकत्वम्। प्रथमानिर्दिष्टपदबोध्यत्वेपि प्रत्यासत्त्यैवैतादृशदोषोपि वारयितुं शक्य इत्याशयेनाह। पूर्वोक्तयैवेति। अर्थस्य प्रधानस्य। पदार्थनिष्ठत्वमर्थः। सम्बन्धाभावे चाप्यान्वयः। सम्बन्धाभावश्च प्रतियोगितासम्बन्धावच्छिन्नप्रतियोगिताको बोध्यः। एवञ्च येन सुबन्तेन पदान्तं संश्लिष्टमिति तत्सुबन्तार्थानुयोगिकसम्बन्धप्रतियोगिवाचकमेव पदान्तं गृह्यत इतीह कुमार्या इति पदान्तं कुमार्या इत्यनेन सुबन्तेन समासविधौ षष्ठीपदेन न गृह्यते किन्तु राज्ञ इत्येवेति तस्यैव पूर्वनिपात इति भावः। सम्बन्धाद्यर्थकम् तदर्थनिरूपितसम्बन्धप्रवृत्तिनिमित्तकम्॥ न भिद्यते। अप्रधानस्वरूपभेदवान् भवति। एतदेव स्पष्टप्रतीत्यर्थं विवृणोति। राजादिपदा न व्यतिरिच्यत इति॥ व्यतिरेकोऽत्र भेदमूलकसम्बन्धः। एवञ्च पुरुषः प्रधानभूतो राजपदार्थनिरूपितभेदनिबन्धनसम्बन्धवान् भवति। विशेष्यवाचकपदाप्रयोगेपि राज्ञ

इत्युक्तौ राज्ञि विशेषणत्वावगतौ विशेषणतानियामकसम्बन्धाकाङ्क्षा भवति पुरुष इत्युक्ते पुरुषे स्वार्थनिरूपितप्राधान्यस्य भानेऽपि न संबन्धाकाङ्क्षेति विशेषणताया एव सम्बन्धावच्छिन्नत्वनियम इति विशेषणनिष्ठ एव सम्बन्धः । सम्बन्धस्य विशेषणनिष्ठत्वञ्च प्रतियोगितासम्बन्धेन । पुरुषे तदभावश्च प्रतियोगितासम्बन्धावच्छिन्नप्रतियोगिताको बोध्यः । इत्युक्तमेवेति । अर्थगतस्याप्रधानत्वरूपोपसर्जनत्वस्याश्रयणे पूर्वकायाद्यसिद्धिरित्यनेनोक्तमित्यर्थः ॥ यत्तु प्रथमानिर्दिष्टं समास उपसर्जनमिति संज्ञासूत्रं कार्यम् । किन्तु प्रथमानिर्दिष्टं समासे पूर्वमिति पूर्वनिपातप्रकरणे पठनीयम् । न चोपसर्जनसंज्ञसूत्राभावे गोस्त्रियोरित्यस्य ह्रस्वविधायकसूत्रस्य कथमुपपत्तिरिति वाच्यम् । लौकिकस्याप्रधानार्थकत्वस्य तत्र ग्रहणात् । न चैवं कुमारीमिच्छन् कुमारीवाचरन् ब्राह्मणः कुमारीत्यत्र ह्रस्वापत्तिरिति वाच्यम् । ह्रस्वविधायकसूत्रे समासस्येत्यस्यापि पाठात् । तेन समास एव ह्रस्वो भविष्यतीति ॥ तन्न । राज्ञः कुमार्या इत्यत्र परिनिष्ठितविभक्त्या समासपक्षे षष्ठीतिपदेन कुमार्या इत्यस्यापि ग्रहणसम्भवेन तस्य पूर्वनिपातापत्तेः । उपसर्जनसंज्ञासूत्रपक्षे तूक्तरीत्या प्रत्यासत्तिलाभेन दोषस्य परिहारः सम्भवति । किञ्च ह्रस्वविधायकसूत्रे लौकिकोपसर्जनत्वस्याश्रयणे ब्राह्मणी चासौ धूर्ता च ब्राह्मणधूर्त्ता । गार्गी चासौ हृन्दारिका चेत्यर्थे गार्ग्यहृन्दारिका इतीयते तत्रोत्तरपदस्य ह्रस्वत्वापत्तिः । समासस्य लौकिकोपसर्जनान्तत्वात् । शास्त्रीयस्य तस्य सर्वतोऽभाव एव । न चास्तु परपदस्यापि ह्रस्वस्तथापि समुदायाद्टापि कृते रूपसिद्धिर्भविष्यतीति वाच्यम् । गोपक्रयणी । कठप्रयक्ती इत्यादावुत्तरपदे ह्रस्वत्वापत्तेर्दुर्वारत्वात् । उपसर्जनसंज्ञासूत्रपक्षे तु प्रथमे शास्त्रीयोपसर्जनत्वाभावेन न दोषः । एतेन प्रथमानिर्दिष्टं समासे पूर्वमितिन्यासेऽपि येन युक्तेन समासविधौ यत्प्रथमानिर्दिष्टं तत्समासे पूर्वप्रयोक्तव्यमित्यर्थेन षष्ठीति समासविधौ षष्ठ्यन्तस्य येन युक्तेन समासस्तादृशानुयोगिकसम्बन्धप्रतियोगिवाचकत्वेन षष्ठीति पदेन ग्रहणे तथा च राज्ञः कुमार्या इत्यत्र समासे न कुमारीशब्दस्य पूर्वनिपात इत्यपास्तम् ॥ एकविभक्तीति । षष्ठ्यादिसमासानामन्यतमे समासे विभक्तिरहिता-

तिपदिकादित्ये कग्रहणोपादानं व्यर्थमेव स्यादिति भावः । एकपदस्यैकजातीयपरम् । तेनैकवचनद्विवचनादिभेदेननानाविभक्तिसम्भवेऽपि न क्षतिः । इदमेव । एकविभक्तीतिसूत्रमेव । तुल्यार्थेतिसूत्रे भाष्य इति । तत्र हि परमेण कारकेणेत्यर्थे परमकारकेणेतिसमासे पूर्वपदप्रकृतिस्वरप्राप्तिमाशङ्क्य लक्षणप्रतिपदोक्तपरिभाषया वारणइतम् । अनेकमितिसूत्रभाष्य इति । तत्र हि शेषपदसम्बन्धेन प्रथमान्तानामेव समास उक्तः ॥ अत्र विग्रहे ग्वनियतविभक्तिकमित्युक्त्वा विग्रहघटकपदान्तरापेक्षया नियतविभक्तिकमित्यर्थो लभ्यते स न युक्त इत्यभिप्रायेण सिद्धान्तार्थमाह । परे त्विति । प्रत्यासत्त्येति । विग्रहे नियतविभक्तिकमित्युक्तौ समासस्य नियमेनोपस्थितेः । अनेन । एकविभक्तीत्यनेन । नन्वनेकग्रहणाभावे कथम्बहूनाम्बहुव्रीहिसमास इत्यत आह । बहूनामिति । ननूत्तरपदनिमित्तकद्विगुविधानमुत्तरपदेन परिमाणिनेतिवचनविषये चरितार्थमत आह । एवञ्चेति । ननु ज्ञापकेन बहूनां समासश्चेद्राज्ञः कुमार्याश्च धनमित्यर्थे राजकुमारीधनमितिप्रयोगापत्तिरत आह । अतिप्रसङ्ग इति । उपसर्जनार्थमिति । प्रथमानिर्दिष्टमित्युपसर्जनसंज्ञासिद्ध्यर्थमित्यर्थः । न वेति । इदं खण्डनमपि वार्तिककारकृतम् । भाष्यकारस्तु तर्हि वक्तव्यं न वक्तव्यमितिग्रन्थेन प्रत्याचष्टे ॥ एकविभक्तित्वादिति । चित्रा यस्य गावः सन्ति स चित्रगुः प्रतिष्ठतितम्यक्षतेन क्षतमितिरीत्या प्रथमान्तेन विग्रहप्रदर्श एकविभक्तीतिसूत्रेणोपसर्जनसंज्ञा भविष्यतीति प्रथमसूत्रे स संज्ञासिद्ध्यर्थमनेकग्रहणं न कार्यमित्यर्थः ॥ अन्वर्थत्वादुक्तेरिति । यं शब्दम्प्रतीत्यादिरीत्योक्तान्वर्थत्वादुक्तेरित्यर्थः । ततखण्डनम् । प्रथमवार्तिकखण्डनम् । भाष्यरीत्येति । कुतश्चिदेव किञ्चित्पदमध्याहृत्य समासस्यानेकविभक्तिकत्वेऽपि प्रथमान्तेन विग्रहे राज्ञः कुमारी राजकुमारीत्यत्रापि तथात्वापत्तिरितिसमासापेक्षया नियतविभक्तिकत्वमिति सिद्धान्तितलन्तद्रीत्येत्यर्थः ॥ एतदिति । एकविभक्तीतिसूत्रस्य । अत्र बहुव्रीहिसंज्ञाविषये । अन्यथा समासापेक्षया नियतविभक्तिकत्वानाश्रयणे । तत्त्वम् । नियतविभक्तिकत्वम् । अनुस्यतेरिति । न तु जातस्य निवृत्तिः । शब्दानित्यत्वप्रसङ्गात् ॥ खर्येत इति। अत एव गोटाङ्ग्रहण-

मिति वार्त्तिकमत्याख्यातम् ॥ अत एव स्त्रीशब्दस्य चातुर्थिकप्रत्ययमात्रप
रत्वञ्च तु स्त्रीशब्दपरत्वञ्च वा स्त्रियां विहितेकारप्रत्ययपरत्वन्तदाह । ते
नेति । तेनातिलक्ष्मीरित्यादौ न ह्रस्वः । स्त्रीशब्दस्य तादृशप्रत्ययमात्रपरत्वा
देवाह । प्रत्ययग्रहणेति । ताभ्याम् । गोशब्दप्रत्ययान्तपरस्त्रीशब्दाभ्याम्
अन्यर्थोपसर्जनस्त्रीप्रत्यये तदादिनियमसत्त्वेनातिखट्व इत्यादौ समुदायस्
स्त्रीप्रत्ययान्तत्वविरहेऽपि स्त्रीप्रत्ययान्तान्तत्वाद्ध्रस्वत्वसिद्धिः ॥ व्यपदेशिवद्भा
वेन गोकुलं राजकुमारीपुत्र इत्यत्रातिप्रसङ्गशङ्कायामाह । गोकुलमित्यादि ।
उक्तमेव दार्ढ्याय पुनः स्मारयति । महासंज्ञाकरणेनेति । ससम्बन्धिकत्वाच्चेति
शेष । तदन्तेत्यादि । तदन्तञ्च तत्तत्समासरूपप्रातिपदिकञ्च तस्य योऽन्त्य-
स्तस्येत्यर्थः । तदन्तेत्यत्र तत्पदं गोस्त्रीप्रत्ययान्तपरम् ॥ एवञ्च यत्समासशास्त्रे
गोस्त्रीप्रत्ययान्तयोः प्रथमानिर्दिष्टत्वं यत्समासापेक्षया एकविभक्तित्वं वा प्र-
त्यासत्त्या गोन्तादेस्तस्यैव समासस्य ह्रस्वत्वमित्यर्थसिद्धा गोकुलमित्यादौ न
दोषस्तदाह । भाष्ये स्पष्टमिति । पूर्वोक्तार्थं समासापेक्षयेति यदुपात्तन्तत एव
गम्यते । यद्यपीति । चार्थसूत्रे भाष्य इति । तत्र ह्येवमुक्तम् । इतरेतरयोगे ।
प्लक्षश्च न्यग्रोधश्चेत्युक्ते गम्यते एतत् प्लक्षोऽपि न्यग्रोधसहायो न्यग्रोधोऽपि प्लक्ष-
सहाय इति । समाहारेऽपि क्रियते प्लक्षन्यग्रोधमिति तत्रायमप्यर्थः द्वन्द्वैकवद्भा-
वो न पठितव्यो भवति समाहारैकत्वादेव सिद्धमिति । अत्र भाष्यकारेण सहा-
यस्योभयत्राभिधानप्रदर्शनात्सहायस्य विशेष्यता दर्शिता समाहारेऽपि क्रियते
प्लक्षन्यग्रोधमितीत्यनेन च द्वन्द्वैकवद्भावस्यापठितव्यत्वाभिधानेन तिरोहितावय-
वभेदता च प्रदर्शिता । अत एव । शास्त्रीयस्य निरुक्तोभयरूपस्योपसर्जनत्वस्य प्र-
कृतसूत्रार्थघटकत्वादेव । अत एव । शास्त्रीयस्यैव ग्रहणादेव । ईयसश्चेतिसूत्रे
भाष्य इति । तत्र हीदवचनस्य गौणीमात्रमिदङ् गौणिरित्यत्र प्रयोजनमुक्तम् अत्र
प्रमाणे अर्थं मायवी शुचि गोणीशब्दस्य गोणीपरिच्छेद्ये वृत्तावपि न शास्त्री-
यनिरुक्तमुपसर्जनत्वमिति भावः । अतिराजकुमारिरित्यादाविति । अत्र हि
निरुक्तं शास्त्रीयमुपसर्जनत्वं राजकुमारीशब्दस्य तस्य कथं स्त्रीप्रत्ययान्तत्व-
मितिशङ्कानिवारणायेदमभिहितम् । यथाकथञ्चिदुपसर्जनत्वे सति परिभा-
षाप्रवृत्त्यानुपसर्जने नेतिनिषेधस्य विषय इत्यभिमानेन शङ्कते । न चेति ।

प्रत्यासत्तिमाश्रित्य समाधत्ते । यस्येति । तुना व्यवच्छेदादिति । वाक्यभेदस्य सूचनादित्यर्थः । इदम् । अपदिशमितिशब्दस्वरूपम् । तदुपन्यास इति । तस्य गोस्त्रियोरितिसूत्रस्योपन्यास इत्यर्थः । न टजिति । एतेन टचि कृते यस्येति चेतिसूत्रेणाकारस्य लोपे ह्रस्वत्वस्य प्रकृते विषय एव नास्तीति गोस्त्रियोरित्यस्य प्रकृते उपन्यासश्चिन्त्य इत्यपास्तम् । अभाव इति । इत्यन्तादिशब्दस्य शरदादौ पाठात् । इदं व्याख्यानमपूलोक्तदिशयोर्मध्यमितिविग्रहाभिप्रायेणेति सूचयन्नाह । अमरेति । क्लीवाव्ययन्त्वपदिशन्दिशोर्मध्यं विदिक् स्त्रियामित्यमरः । इत्यादिसङ्ग्रह इति । अस्याङ्कल्पनायाम्प्रमाणन्तु नाव्ययीभावादितिसूत्रस्थं सप्तम्या ऋद्धिनदीसमाससङ्ख्यावयवेभ्यो नित्यमिति वार्त्तिकमेव । अत्र ऋद्धेरितिपदं लुप्तसप्तम्यन्तम् । ऋद्धिरूपार्थे योऽव्ययीभावस्तस्मात् नद्यवयवः समासो नदीसमासस्तस्मात् सङ्ख्यावयवाः सङ्ख्याविशेषास्तेभ्यः परं यदुत्तरपदन्तदन्तादव्ययीभावात्सप्तम्या नित्यमम्भाव इत्यर्थः । विभक्तीत्यनेनेति । विभक्तिसंज्ञा यस्य प्रत्ययस्य तस्याव्ययार्थत्वन्नास्तीत्यर्थासङ्गतिपरिहाराय विभक्तिशब्दोऽत्र लाक्षणिक इति भावः । अत्र सुबर्थे नेत्यस्येति । ययथाधिहरि भक्तिरितिशब्दाद्धर्यधिकरणिका भक्तिरिति बोधो भवति । अधाधिहरिशब्दात्पुनर्न सप्तमी किन्तु प्रथमेति स्वीकारेऽपि तादृशः शाब्दबोधो भवति सप्तम्यर्थस्यान्तर्भावात् । तदुत्तरेति । हर्यादिशब्दोत्तरेत्यर्थः । अत एव । समर्थप्रकृतिकेतिव्याख्यानादेव । अत एव । विभक्त्यर्थान्तर्भावादेव । द्वितीयार्थस्य त्वन्तर्भावो भवत्येवेत्याह । द्वितीयान्तमिति । ननु समाससंज्ञोत्तरमासिकलुगपेक्षयाऽन्तरङ्गत्वादित्संज्ञायाः पूर्वम्प्राप्त्या हरि ङि अधीत्यलौकिकविग्रहप्रदर्शनमनुचितमत आह । फलाविशेष इति । केचित्तु समासेऽधिशब्दस्य पूर्वनिपातदर्शनेन तदर्थप्रदर्शकविग्रहेऽप्यधिशब्दस्य पूर्वम्प्रयोग एवोचित इत्यधिहरिङीतिप्रदर्शनमुचितमित्याहुस्तन्न युक्तमिति ध्वननायाह । इत्यधीरिति । वचनसामर्थ्यमुपपादयति । प्रत्यासत्त्येति । तद्विभक्त्यैव सूत्रस्यास्य प्रवृत्तौ यदि प्रकृतेऽधिशब्दाभिन्नत्वात्सप्तमी न स्यात्तदा समासविधानमेवानुपपन्नमिति भावः । इदं सामर्थ्याभिधानम्प्रायेणेतिप्रागुक्तरीत्या वस्तुतस्तथा नास्तीत्याह । तिङन्तद्वितेति । अत एव । प्रागुक्तप्रत्यासत्त्यङ्गीकारादेव । अधि-

करणशक्तिप्रधानत्वेऽपीति । अनेन विभक्त्यर्थवृत्तित्वमुपरीत्यस्याव्ययस्यास्तीति सूचितम् । गृहस्योपरीत्यत्र तु षष्ठ्यन्तेन समासप्रसङ्गस्तद्विभक्त्यर्थवृत्तित्वमुपरीत्यस्य नास्तीति भावः । अधिहरीत्यत्र तत्पुरुषसंज्ञयाऽव्ययीभावसंज्ञाया बाधमाशङ्कते । न चेति । अस्य । अव्ययीभावस्य आधेयप्रधानस्येति । एवञ्च सप्तम्यर्थवृत्त्यधिशब्दयोगे तस्याप्राप्तिरेवेति भावः । एतश्चेति । विधानसामर्थ्योपपादनञ्च । यद्यत्राव्ययीभावः स्यात्तदा समयानिकषाशब्दयोगे द्वितीयाया आराच्छब्दयोगे पञ्चम्या विधानाभावेऽपि तत्तद्योगे षष्ठीड् कृत्वाऽव्ययीभाव संज्ञा कार्या तावतापि रूपसिद्धिर्भविष्यतीति भावः । मध्यार्थकसमयाशब्दयोगे सामीप्यत्र प्रतीयत इति तत्र द्वितीयाविधानञ्चरितार्थमित्यन्वयः । यदि द्वितीयापञ्चमीविधानञ्चरितार्थन्तदा समया ग्राममित्यादौ कुतो नाव्ययीभाव इत्याशङ्कायामाह । समयेत्यादि । अधिकरणशक्तिप्रधाना इतीति । समया ग्राममित्यादेर्ग्रामस्य समीपे इत्यादिरीत्या बोधः । उपकृष्णमितिशब्दात्तु कृष्णसामीप्यवानित्याकारक एव बोधः । अवृभचेति । एवम्प्रयोगे योऽप एव भचयति तस्मिन्नेव जायत इति तत्र यथाऽवधारणगर्भः समासो भवति तथाऽत्रापि विभक्त्यर्थादिमात्रवृत्त्यव्ययस्यैवानेन सूत्रेणाव्ययीभावस्य विधानमिति भावः । अत्र विभक्त्यर्थमात्रेत्युपादानाद् गृहस्योपरित्यत्र नाव्ययीभावः । समृद्धादिवाचकत्व इति । अत एव सुमद्रमित्यस्य मद्राणां समृद्धिरित्येवं विवरणङ्कृतमव्ययार्थस्य प्राधान्यप्रदर्शनार्थम् । द्योतक इति । द्योत्यार्थस्य विशेषणत्वमप्रसिद्धमत एवाह । समृद्धा मद्रा इतीति । समस्यमानपदार्थाभावस्य । समस्यमानोत्तरपदार्थप्रतियोगिताकस्याभावस्य । तदेव दर्शयति । अर्थाभावेति । एवञ्च दुर्यवनमित्यादौ यवनपदार्थाभावो न प्रतीयते किन्तु तदीयऋद्ध्यभाव इति नात्रार्थाभावपदेनासमासमिद्धिरिति व्यृद्धिपदेनाशङ्कम् । अत एवार्थाभाव इत्यस्योदाहरणमुपदिशामित्यादि सोपपादनम् । व्याख्यानात् । व्यृद्धिशब्दोपादानमूलकव्याख्यानादित्यर्थः । ननु घटो न पट इत्यत्र नञा पटपदस्य समासापत्तिः पटप्रतियोगिताकाभावस्यैव प्रतीतेरत आह । नञा त्विति । नायम् । अव्ययीभावः । तत्पुरुषोऽपीति । पञ्च नञ्पदबोधकपदघटकत्वेत्यादिः । सुब्युपीत्यस्य सुपोपात्तेत्यर्थः । अभावम् स-

प्रतियोगिकत्वनियमाभिप्रायेण शङ्कते । न चेति । प्रतियोगिभूतेति । प्रतियोगिभूतो यो बहिर्विद्यमानोऽर्थस्तत्समानाधिकरणो योऽभावस्तद्वाचकेनेत्यर्थः । प्रतियोगिसामानाधिकरण्यञ्च प्रतियोगितावच्छेदकसम्बन्धेन यः प्रतियोगिसम्बन्धी तन्निरूपिताभावीयविशेषणतासम्बन्धावच्छिन्नवृत्तित्वरूपम् । एवञ्च पटभेदस्य प्रतियोगितावच्छेदकसम्बन्धस्तादात्म्यं तेन सम्बन्धेन प्रतियोगिसम्बन्धिनि पटे न पटभेदस्तेन सम्बन्धेन वर्त्तत इति न निष्पट इत्यत्र समासः । मक्षिकाणामभाव इत्यत्र तु संयोगसम्बन्धावच्छिन्नाभावः प्रतीयते स चाव्याप्यवृत्तिरतस्तस्य तादृशप्रतियोगिसामानाधिकरण्यमस्त्येव । तेन । प्रतियोगिनि बहिर्विद्यमानत्वनिवेशेन । अयम् । अव्ययीभावः । एवञ्च निर्घटो निष्पट इत्यादौ घटादेरत्यन्ताभावस्य तात्पर्यविषयत्वे भवत्येव । भेदस्य तथात्वे तु न भवतीति सिद्धम् । शशशृङ्गशब्दार्थस्तु न बहिर्विद्यमानः । प्रागभावार्थेन तेन । निरा । न च पटप्रागभावस्य प्रतियोगी पटस्तदधिकरणेषु तन्तुषु पटप्रागभावो वर्त्तत एव पटोत्पत्तिप्राक्क्षणावच्छेदेनेति समासापत्तिर्दुर्वारैवेति वाच्यम् । एकक्षणावच्छेदेनैकाधिकरणवृत्तित्वस्यैवात्र सामानाधिकरण्यपदार्थत्वात् । अत एव । ध्वंसस्यापि तादृशप्रतियोगिसमानाधिकरणत्वविरहादेव ॥ मूलोक्तमत्ययोदाहरणन्दूषयति । तदुदाहरणमिति । तदतिशयस्य । हिमाधिक्यस्य । युक्त्यन्तरमप्याह । अत्ययशब्द इतिरिति । अतिनिद्रमित्यत्र तु नास्य निषेधस्य विषयता । युजिक्रियान्तर्भावेण समासाभ्युपगमेन निद्राया अत्ययो ध्वंसो न प्रतीयते किन्तु युजिक्रियायामप्राशस्त्यम् । एवं सत्यतिनिद्रमितिशब्दान्निद्राकर्तृकवर्त्तमानकालिकयुजिक्रियाऽप्रशस्तेति बोधः । वर्त्तमानकालिकत्वस्याप्राशस्त्येऽन्वयः । नन्वेवं वर्त्तमानत्वभूतत्वयोर्विरोधादतिनिद्रमासीदित्यत्राव्ययीभावसमासानुपपत्तिरत आह । अतिनिद्रमित्यादाविति । लक्षणेतीति । एवञ्चैतादृशव्यवहारविषयकर्तृकस्वक्रियायामभूतत्वम्प्रतीयते तस्य च तादृशाभावनिष्ठवर्त्तमानत्वेन न विरोध इति भावः । मूलघटकशब्दप्रादुर्भावशब्दार्थमाह । शब्दप्रादुर्भाव इति । इतिहरीत्युदाहरणे हरिशब्दः स्वस्वरूपपरस्तेन षष्ठ्यन्तेन शब्दप्रकाशार्थकेतिशब्दस्य समासः । भाष्यप्रयोगादिति यन्मूले उपात्तन्तस्याप्रसिद्धत्वशङ्कां वारयति । अच परस्मिन्निति । इदमुपलक्षणम् । अ-

नेकमन्यपदार्थे इतिसूत्रभाष्ये सर्वपश्चादितिप्रयोगाच्चेत्यपि बोध्यम् । स
च समासे पश्चाच्छब्दस्य पूर्वनिपातः स्यात् । तत्तदर्थबोधकेति । यस्मिन्यस्मि
न्नर्थे विद्यमानस्याव्ययस्य समास इष्यते तत्तदर्थबोधाभिप्रायेण सूत्रे उपात्तो य
शब्दस्तद्घटकतया गृहीतेन तत्तदर्थकेनाव्ययेन नायं समासः । अत्र तत्तदर्थव
नेत्युपादानादसम्प्रत्ययबोधाभिप्रायेण कृतस्य वृत्तिकाराद्यभिप्रेतस्यातिहिम
मित्यादिप्रयोगस्योपपत्तिः । एवमत्ययरूप एवार्थे वैशाखे विहिममित्यस्याप्युप
पत्तिः । तत्तदर्थबोधकपदघटकत्वञ्च स्वविषयकप्रतीत्यविषयतत्तदर्थबोधक
पदकत्वम् । इदञ्च यथार्थाभावपदघटके नञि वर्त्तते तथा स्वस्मिन्नपीति प
श्चाच्छब्दस्य पश्चादर्थघटकत्वम् । अत एव । तत्तदर्थबोधकपदघटकतया गृ
हीतेनेत्यादिकल्पनादेव । भाष्यप्रयोगादेव पश्चाच्छब्दस्य न समास इति तु •
युक्तम् । उक्तसूत्रद्वयभाष्यप्रयोगस्थले तदभावकल्पना यथासादृश्य इतिसूत्रव्या
ख्यानस्थले त्वशोकवनिकान्यायेन यथार्थ इत्यनुक्त्वा सादृश्यसम्पत्तीत्युक्तमित्यस्य
च कल्पनापेक्षया एककल्पनायामेव लाघवमिति भावः यथाशब्दस्य तु समास
स्योपपत्तिमाह । यथाशब्देन त्विति । इदम् । कर्मप्रवचनीयसंज्ञाविधानसामर्थ्य
कथनम् । तस्याः । वीप्सायाः । एवञ्च न वीप्साद्योतनाय द्विर्वचनम् । क्रौष
म् । यथाऽतिक्रम्य पर्वतमदीत्यत्र पर्वतनद्या योगो गम्यते तथा यथागतमु
त्तरञ्च गच्छतीत्यत्र भक्तिसद्भावकालोत्तरदेशगमनकालयोरपि योगोबुद्धिकृतो
द्रष्टव्यः । वैचक्षणार्थं इति । तदाह । यथाऽपश्चिति । कारणत्वेनान्वयात् ।
क्रमस्य कारणत्वेनान्वयात् । युगपच्छब्देनेति । अत एव तत्र सचक्रमित्युक्तम् ।
एतेन युगपच्चक्र इत्यत्राव्ययीभाव इति कस्य चिदुक्तिः प्रत्युक्ता । व्याख्यानात् ।
सादृश्यशब्दोपादानन्यूनतात् । गुणभूते सादृश्य इत्यस्य सादृश्य इत्यनेन
कथं लाभ इत्यत आह । स्वार्थ इति । अन्यथा पूर्वपदार्थप्रधानोऽव्ययीभाव
इति भाष्यादेव सादृश्यस्य गुणत्वात् स्यात् । वाचम् । दुष्कृतकर्तृत्वम्
तद्योगार्थे ति । अदनक्रियाया अपरित्यागेन सह योग इत्यर्थः । पर्यन्तस्ये
ऽर्थार्थ । अग्निपर्यन्त पर्यन्तो यस्येत्यर्थस्तदाह । अधुमोदाग्निनि । तस्मिन् सा
कल्येऽर्थत्वेन परिगृहीतो यावान् अन्नमाग्निपर्यन्त ऽपः । न तु तत परतः
भक्षयत्याग्नीति । अत एव साकल्यार्थकस्य । निपातनमपेऽपीत इत्यस्य कथ

नादध्ययनक्रियायाः समासार्थेऽन्तर्भावात्तान्नाधीत इति वाक्यानुपपत्तिरिति शङ्कावारणायाह। अधीत इत्यस्येति। नन्वध्ययनक्रियाया अनन्तर्भावे तदधीत इत्यण्प्रसङ्ग इत्यभिप्रायेण शङ्कते। न चेति। तथाशब्दस्यापि सादृश्यं कृत्वा तेन सह समासापत्तिं वारयति। तथाशब्दस्येति। प्रतियोगिवाचकेनेति। प्रतियोगितासम्बन्धेन सादृश्यान्वयिवाचकेनेत्यर्थः। तथाशब्दार्थसादृश्यस्य तु तथा हर इत्यत्रानुयोगितासम्बन्धेन हरेऽन्वयः। एतादृशकल्पनायां हेतुमाह। सादृश्य इत्युक्त इति। मूले द्योतयतीत्युपात्तन्न तु शक्त्या प्रतिपादयतीत्युक्तं तद्बीजमाह। सामान्यस्येति। यद्यपि भाष्ये यथाशब्दः सादृश्ये वर्तत इत्युक्तन्तथापि तत्र द्योतनयेति शेषो बोध्यः। सामान्यस्येत्यस्यैकबुद्धिविषयत्वेन गृहीतस्येत्यर्थः। भेदकः। सादृश्यस्य प्रायेण भेदनियतत्वाद्भेदबुद्धिसम्पादक इत्यर्थः। तदभिन्न इति। उपमानोपमेययोरभेदान्वयबोधो व्युत्पत्तिसिद्ध एव। अत एव मृगचपलेत्यत्र पुंवद्भावसिद्धिः। ननूभयत्रैकस्य विशेषधर्मस्याधिकरणत्वप्रतीतावपि नोपमानोपमेयभावप्रतीतिरत आह। यत्तच्छब्दाभ्यामिति। ननु असादृश्य इतिपदस्य सादृश्येनेत्यर्थः कृतः। एवञ्च यथा हरिस्तथा हर इत्यत्र हरेः सादृश्यन्द्योतयतीति वाच्ये उपमानत्वन्द्योतयतीत्यनुपपन्नमत आह। सूत्रेऽपीति। वात्सूत्रे सामान्यस्य भेदको यो धर्मस्तद्रूप इत्युक्तन्न तु थाबर्थः सादृश्यं प्रकृतबोधे प्रकार इत्युक्तमत्र किम्बीजमित्यत्र नियामकमाह। थालसूत्र इत्यादि। सिद्धान्तमाह। भाष्यानुसारिणस्त्विति। यथाशक्ति यथाबलमित्यस्य शक्तिमनतिक्रम्य इत्याद्यर्थः। अत एव। उक्तार्थस्याभिप्रेतत्वादेव। पदार्थानतिवृत्तौ समासार्थं यथाशब्दस्यावश्यकत्वेन सम्पूर्णसूत्रस्य कैमर्थ्यशङ्का न भवतीत्यभिप्रायः। ननु पूर्वसूत्रेणैव समासे सिद्धेऽस्य सूत्रस्य वैयर्थ्यमत आह। यथार्थत्वेनेति। सूत्रगृहीतत्वात्। यथार्थशब्दघटकत्वात्। इदमपि। एतत्सूत्रकरणमपि। उक्तार्थानभिज्ञः शङ्कते। न चेति। उक्ताशयमप्रकटयति। अत्र सूत्र इत्यादि। तदर्थक एव स इति। पदार्थानतिवृत्तिबोधको यथाशब्दः परिशेषादित्यर्थः। असादृश्यग्रहणस्य वैयर्थ्यशङ्कापरिहारायाह। यद्यपीत्यादि। द्योतयतीत्यस्य द्योतनया प्रतिपादयतीत्यर्थः। द्योतना च व्यञ्जनैव तयोपस्थापितार्थस्य शाब्दबोधविषयत्वं भवत्येव तदाह। उपमानदेवद-

स्ताभिन्न इति । लक्षणामूलव्यञ्जनास्थल इवेति । यथा । साधयन्ती
भगं क्षणेक्षणे दूनासि मम कृते । सद्भावस्नेहकरणीयसदृशन्तावद्विरचितं-
थंचोपनायकसमीपे प्रेषिता या दूती सा तन्नायकमुपभोगेन निवृत्तेच्छा
पुनर्नायिकाया निकटे समागत्य स नायातीत्युक्त्वा विरता तत उपभोगचि-
ह्नेन तं वृत्तान्तं ज्ञात्वा तां दूतीम्प्रति नायिकाया उक्तिरियम् मम प्रियं र-
मयन्त्या त्वया शत्रुत्वमाचरितमिति लक्ष्यते । तेन कामुकविषयं सापराधत्वप्र-
काशनं व्यङ्ग्यम् । उभयोः शक्यार्थव्यङ्ग्यार्थयोः । तत्र यथा व्यञ्जना न लक्षणया
गतार्था तथात्रापि व्यञ्जना न गतार्थेत्याशयः । अत एव । उपमानोपमेययोरभे-
दान्वयादेव । पूर्वपदार्थप्राधान्याभाव इति । पूर्वपदार्थत्वेनाभिप्रेतो यो य-
थाशब्दार्थस्तत्प्राधान्याभाव इत्यर्थः । प्रसिद्धत्वात् । सादृश्ये प्रसिद्धत्वात् ।
तत्सामर्थ्यात् । समासविधानसामर्थ्यात् । तदभावेपि । पूर्वपदार्थप्राधान्याभावेऽ-
पि । यत्र प्रकारवचने थालन्तस्य साधुत्वाख्यानेऽपि कुशलशब्दस्य प्रवीण इव
पदार्थानतिवृत्त्यादिष्वपि प्रयोगो भविष्यतीत्यभिप्रायेणाशङ्कते न चेति । सादृ-
श्यमप्यस्तीत्यनेन चेति । तस्य सादृश्येपि वृत्तेर्दर्शनादिति भावः । तत्र । सादृश्ये ।
१ तदप्रयोगात् । पदार्थानतिवृत्तिबोधकस्याप्रयोगात् । तस्मात् । प्रकाररूपेऽर्थे । सा-
धौ । यथाशब्दस्य । एवञ्चाव्ययत्वेन यथाशब्दस्यैव समासबोधकमिदं सूत्रमिति भावः
अत्र मानमाह । इदमेवेति । अतदर्थकस्य । असादृश्यार्थकस्य । इत्यर्थकोऽस्ये-
ति । एवं हि तत्र भाष्यमसादृश्य इति किमर्थम् । यथा देवदत्तस्तथा यज्ञद-
त्तः । असादृश्य इत्युच्यते तत्र दत्र सिध्यति । यथाशक्ति यथाबलमिति । किं-
कारणम् । यथेत्ययमप्रकारवचने थाल्स च सादृश्ये वर्तते । नैष दोषः । अयं य-
थाशब्दोऽस्त्यव्युत्पन्नं प्रातिपदिकं वीप्सायाञ्चास्ति प्रकारवचने थाल् ।
तत्र यदव्युत्पन्नं वीप्सायाञ्च तस्येदङ् ग्रहणम् । अथ वीप्साग्रहणमुपलक्षणम् ।
तेन योग्यतापदार्थानतिवृत्तौ अपि यथार्थौ इति कैयटः । अथ यः प्रकारवचने
थाल् तस्य ग्रहणं कस्मान्न भवति पूर्वेण प्राप्नोति । प्रतिषेधवचनसामर्थ्यान्न भवि-
ष्यतीति । यतस्तदर्थेऽसादृश्ये वर्तते इत्यस्योपमानोपमेयत्वद्योतक इत्यर्थः ।
इदङ्ग्रहणमित्यस्यैतस्यग्रहणीयमित्यर्थः । तद्विवरणेन । असादृश्य इत्यस्य नि-
रुक्तेन । यथाशक्तिरिति । तद्विवरणे पूर्वेण प्रातिपदिकार्थाया यथाभावः स्या-

दिति भाव । तन्नाप्ययोजनायाह । तस्मादिति । कैयट इति । सूत्रगृहीतेत्यादे स्त्रेनानङ्गीकारात् । परन्तु पूर्वोक्तरीत्या तथा कल्पनमावश्यकमित्याशयेना ह । सूत्रगृहीतेति । अन्यकृतं व्याख्यानं यथाकथंचित्सम्भवदुक्तिकमप्यसङ्गतमि त्याशयेनाह । नियमत्वापेक्षयेति । विधिनियमसम्भवे विधिरेव ज्यायान् ॥ विशेषमाह । तत्र सूत्र इति । अत एव । सादृश्याग्रहणादेव । अत एव । पूर्वो क्तोर्थ । इत्युक्तमिति । न तु यथार्थमिति शेष । मूलोक्तमनूद्य दूषयति । न चेति । अन्याव्ययग्रहणार्थमिति । तेन रूपस्य योग्यमनुरूपमित्यस्य सिद्धि । वीप्सादावपीति । अत्रादिना योग्यतापरिग्रह । वीप्सायामुदाहरणं यथाश मिति प्रसिद्धमेव । योग्यतायामुदाहरणन्तु यथास्वरूपन्दक्षिणादानमित्यत्र ज्ञेयम् । नन्वस्मिन्नपि सूत्रे यथार्थे विद्यमानं यदव्ययमितिव्याख्यानं कुतो नेत्याशङ्क्याह । अत्र सूत्र इति । अव्ययमिति । अनव्ययस्य यावच्छब्दव्यावृत्तये अव्ययग्रहणानुवृत्ते । अव्ययस्य समास । यावन्त श्लोका इति वतुब न्तेनानव्ययेनास्वपदविग्रह । अन्यत्राप्यव्ययमव्ययमग्नको दृष्ट । यावदमत्र ब्राह्मणानामन्त्रयस्वेत्यत्र यथा । अव्ययनिवृत्त्यर्थमिति । पूर्वसूत्रे तु त दनुवृत्तिरस्त्येव । तादृशाव्ययेनेति । तद्गतान्यत्वतात्पर्येण यत्र प्रयोगस्तत्रेति शेष ॥ ननु हचमतीत्यत्र समासे कर्मप्रवचनीयसञ्ज्ञाविधानं व्यर्थमत आह । कर्मप्रेति ॥ तदर्थ इति । विपरीतवर्त्तनमर्थ । मूलोक्तोदाहर ण इति शेष । लौकिकविग्रहे वृत्तमितिक्रियावाचकशब्दसत्त्वात्तृतीयान्त सुलभम् । समासे तदभावादाह । अत्र उमिति । एवास्य साधुत्वमिति । अक्षादयस्तृतीयान्ता पूर्वोक्तस्य यथा न तत् । कितवव्यवहारे च एकत्वेऽ चगनाकयोरितिवार्त्तिकसद्भावात् । पूर्वोक्तस्य पूर्ववृत्तस्य । धातूनामने कार्यत्वादत्रेति वर्त्तते । यथा न तत् । तद्वर्त्तन यथा पूर्वं वृत्तन्न त था चेदित्यर्थ । स्पष्टप्रतिपत्त्यर्थमेतस्यैव विवरणभाष्ये शतमयथाद्योतन इति । अययाशब्दो वैपरीत्ये विपरीतत्वद्योतने । पराजयद्योतन इति यावत् । वृत्तौ नाक्षवेति । अस्य द्योतकाभाव इति शेष । तेन कुमा र्यगारम् । वध्वगारम् । यौपमाकीनस्तावकीन इत्यादौ संख्यायगमस त्त्वेऽपि न क्षति । नैषत इति । न च सञ्ज्ञाया भावाभावाविष्येते इ

स्यात्तु नेत्याशयेनाह । वाराणस्या इति । वृत्त्यन्तरे प्रवेशो नेति । समुच्चेतव्यस्याभावादेतदर्थमेव चकारः । तदुक्तं भाष्ये । किमर्थश्चकारः । एवकारार्थः । तिष्ठद्गुप्रभृतीन्येव । क्व मा भूत् । परमन्तिष्ठद्गु । अत्रैवकारार्थं इत्यनेनैतत्सूचितन्तिष्ठद्गुप्रभृतीन्येवैकार्थीभावविषयाणि न त्वेतेषां शब्दान्तरैरेकार्थीभावः । नन्वातिष्ठद्गु इत्यादौ समासान्तरे प्रवेशदर्शनादिदमयुक्तमत आह । आतिष्ठद्गु जपेदिति । अन्यपदार्थेऽव्ययीभाव इति । तिष्ठद्गु कालविशेषे । तिष्ठद्गु कालविशेष इति वक्तव्यम् । तिष्ठन्ति गावो यस्मिन् काल इतिभाष्यात् । इदम् । निपातनरूपम् । अन्त्ये । आयतीगवमित्यत्र । अव्ययीभावविषये अव्ययीभावाभावे तत्पुरुषप्रवृत्त्युपायमाह । पयभाव इति । एकस्वभावः । समानस्वभावः । स्वभावशब्दोऽत्र धर्मवाची । नन्वेवमिति । स्वपदार्थप्राधान्यस्वीकारे इत्यर्थः । मूले विद्यातद्वतामिति । तद्वत्त्वञ्च तत्पर्याप्तत्वसम्बन्धेन । एवञ्च विद्यावत्त्वात्मकधर्मसम्बन्धात्त्रिमुनिशब्दस्य यत्प्रवृत्तिनिमित्तत्वदारोपेण व्याकरणे त्रिमुनिशब्दस्य प्रवृत्तिरिति भावः । इमं क्लेशम्परिहर्त्तुमुपायान्तरमाह । अन्ये त्विति । नन्वेवम्बहुव्रीहौ पूर्वपदप्रकृतिस्वरोऽव्ययीभावे त्वन्तोदात्तत्वमिति स्वरभेदापत्तिरत आह । स्वरभेदश्चेति । इष्ट एवेति । समासभेदेन स्वरभेदे इष्टापत्तेः सर्वसम्मतत्वादिति भावः । लोकप्रसिद्ध्यनुसारेणाह । परे त्विति । नन्वेवं त्रिमुनि व्याकरणस्येत्यस्य कथमुपपत्तिरत आह । यदीष्यत इति ॥ ननु गर्गस्य गोत्रापत्यानाञ्चत्वमित्यर्थे गर्गकुलमित्यत्र यथा यञञोश्चेतिसूत्रेण यञो लुग्भवति तथा एकविंशतिभारद्वाजमित्यत्राञो लुक् स्यादित्येतादृशप्रयोगानुपपत्तिरत आह । वृत्ताविति । अनयोरिति । अनयोः । एकविंशतिभारद्वाजम् । त्रिपश्चागद्गौतममित्यनयोः ॥ ननु नदीभिश्चेतिसूत्रं समानाधिकरणसमासमात्रबाधकमथ वा पुरस्तादपवादन्यायेन पूर्वकालैकेत्यस्य बाधकमुभयथा एकनदीतरेतिप्रयोगानुपपत्तिरव्ययीभावे नपुंसकह्रस्वत्वापत्ते रत आह । तत्रैवेत्ययं इति । तदविवक्षायाम् । समाहाराविवक्षायाम् । एतेनैकापूपीवत्समाहारविवक्षायामेकनदितर इति भवत्येव । समासान्तापत्तिं वारयति । अप्रत्ययेति । वाक्याभावेन । लौकिकविग्रहवाक्यसम्बन्धित्वाभावेन । एवञ्च नित्यसमासस्थले विशेष्याभावादिशिष्टाभावः प्रकृते

तिभाष्यविरोधात् । न ह्येकार्थीभावे संज्ञाया अभाव इत्यर्थः । ध्वनितञ्चेदमिति । इह द्वौ पक्षौ वृत्तिपक्षश्चावृत्तिपक्षश्च । तत्र स्वभावतश्चैतद्भवति वाक्यञ्च वृत्तिश्चेत्यनेनोक्तसूत्रस्थभाष्येण ध्वनितमित्यर्थः । तत्प्रत्याख्यानम् । विभाषाऽधिकारस्य प्रत्याख्यानम् ॥ अत एव । एकार्थीभावविकल्पबोधकत्वादेव । एतत्करणात् । विभाषेतिसूत्रकरणात् । सुप्सुपेत्यस्य नित्यत्वाङ्गीकारे दोषमाह । एवञ्चेति । तस्य नित्यताङ्गीकारे चेत्यर्थः । ननु अव्ययमित्यादिसूत्रैः समाससंज्ञाविधानमेवास्तीत्यत आह । उपपदेति । उद्देश्याप्रसिद्धेरिति । क्वचित्सुबुत्पत्तेः प्राक् समासस्येष्टत्वात् । क्वचित्सुबन्तत्वासम्भवादिति भावः । बहुव्रीहिसंज्ञाविषयेऽपि क्वचिदप्रसिद्धिमाह । अनेकेति । नन्वव्ययमित्यादिसूत्रैः समाससंज्ञाविधानाभावे कथमुपसर्जनसंज्ञेत्यत आह । प्रथमानिर्दिष्टमितीति । उक्तभाष्यादपीति । विस्पष्टं पटुरितिभाष्यादपीत्यर्थः । मानसबोधविषयस्य न शाब्दबोधविषयत्वमित्यभिप्रायेणाह । अग्निव्याप्यमित्यादि ॥ द्योत्यस्याप्यर्थस्य शाब्दबोधविषयत्वं बहुषु दृष्टमिति तद्वचनाप्युचितमित्याशयेनाह । अग्निव्याप्यमिति । कर्मप्रवचनीयद्योत्यसम्बन्धेन । लक्ष्यलक्षणभावेन । द्योतनाभाव इति । लक्ष्यलक्षणभावस्तु तथापीष्यत एव । नन्वेवं कर्मप्रवचनीयसंज्ञाविधानवैयर्थ्यमत आह । अस्य समासस्येति । अधनिदेश इति । अगनिगमनदेश इत्यर्थः । तेन सम्बन्धेन । लक्षणलक्षणभावसम्बन्धेन । एवञ्चानुगङ्गं वाराणसीत्यत्रानुशब्दद्योत्ययोर्या दैर्घ्यसदृशदैर्घ्यस्तदेकदेशे प्रथमतो भासमाने दैर्घ्ये गङ्गापदार्थस्याधेयतासम्बन्धेनान्वयो न त्वनेन गङ्गापदार्थस्य वाराणस्यामन्वयस्तदभिप्रायेणाह । तद्द्योत्यसम्बन्धेनान्वयाभावादिति । एवञ्च गङ्गापदार्थस्य कर्मप्रवचनीयद्योत्यसम्बन्धप्रतियोगित्वाभावाच्च द्वितीयेत्यर्थः । यस्य चायाम इतिसूत्रविषये आह । तथा बोध इति । पूर्वसूत्रविषये आह । अन्वय समीपस्त्व इतीति । तेन सम्बन्धेनान्वये त्विति । अनुद्योत्यसम्बन्धेनान्वये त्वित्यर्थः । तत्र प्रमाणमाह । निर्देशेति । ननु व्याप्यत्वं व्यापकत्वाभिमतविषयकज्ञानजन्यज्ञानविषयत्वमेव तथाच तस्य सम्भवति प्रकृते च वाराणस्याः पक्षत्वमादाय भवेद्यदि वाराणपूर्वज्ञानात

संज्ञोत्तर समासान्तस्यान्मतेऽपि सति शिष्टत्वेन प्रत्ययस्वरस्य बलवत्त्वादन्तोदात्तत्व सिद्धमेवेति इचश्चित्त्वव्यर्थमेव। बहुव्रीहौ प्रकृत्येति सूत्रेण पूर्वपदप्रकृतिस्वरविधानसामर्थ्यात्प्रत्ययस्वरो न भविष्यतीति वक्तुमशक्यम् कप्विषये चारितार्थ्यादिति वाच्यम्। अनुदात्तम्पदमितिसूत्रे पदग्रहणस्य परिमाणार्थं तया समासान्तस्य समासावयवत्त्वबोधनेन च पूर्वपदम्बहुव्रीहौ प्रकृत्या तञ्च वर्जयित्वा यावान्बहुव्रीह्यवयव सन्निहितो भावी वा सोऽनुदात्त इत्यर्थेन इप्रत्ययस्यानुदात्तत्व स्यादतश्चित्त्वं सफलमित्याशयात्। तत्सामर्थ्येनेति। इचश्चित्त्वसामर्थ्येनेत्यर्थ। तेन। आद्युदात्तत्वेत्यस्यासबन्धेन। पूर्वपदप्रकृतिस्वरसिद्धिरिति। यदि समासान्तविधावाद्युदात्तत्वेत्यस्य सम्बन्ध स्यात्तदा तदेकवाक्यतापन्नशेषनिघातेन पूर्वपदस्यानुदात्ततयोदात्तस्वरितयोगित्वाभावेन पूर्वपदप्रकृतिस्वरो न स्यादिति भाव। तेन समुद्गशब्दस्वरस्येव यथार्थं परिनिष्ठितो भवति। ननु समाससज्ञासमकालमेव समासान्तप्रवृत्तिस्वीकारे द्वित्रिभ्यामितिसूत्रस्थभाष्यविरोध प्राप्नोति। तत्र हि कृतसमासान्तपादस्याश्चर्यात्कृतसमासान्ते मूर्धन्शब्देऽस्य प्रवृत्तिस्तदा समासान्ते कृते एव द्विमूर्धानमित्यादौ प्रवृत्तौ नान्तत्व वक्तव्यम्। यदि तु मूर्धस्विति निर्देशाश्चर्यमनादृत्याकृतसमासान्ते प्रवृत्तिस्तदा कृते समासान्ते द्विमूर्ध इत्यत्र स्वरो न प्राप्नोति। एवं वितर्क्याकृतसमासान्तस्यैव मूर्धस्विति निर्देशाद् ग्रहणम्। समासान्तविषये तु समासान्तापेक्षया परत्वात्स्वरे कृते तत समासान्ते टिलोपे च कृते उदात्तनिवृत्तिस्वरेण सिद्धिरित्युक्तम्। यदि समाससज्ञासमकालमेव समासान्तप्रवृत्तिस्तदा समासान्तात्परत्वात्स्वरप्रवृत्ति स्यादित्येतदसङ्गतं स्यादत आह। द्वित्रिभ्यामिति सूत्रे ति। उक्तभाष्यद्वयेति। गोस्त्रियोरितिसूत्रस्यद्वितिसूत्रस्थभाष्येत्यर्थ। समाससज्ञासमकालं समासान्तानामप्रवृत्तिपक्षे तु द्वित्रिभ्यामित्यत्र मूर्धस्विति निर्देशदर्शनादकृतसमासान्तेऽस्य प्रवृत्ति। समासान्तविधिरनित्य। यत्र तु समासान्तस्तत्रापि समासस्य कार्यित्वेनाश्रयणात्समासान्तसङ्घातस्यापि ग्रहणेनानेनैव स्वरस्य सिद्धिरिति कल्पनया निर्वाहो बोध्यस्तदाह। अन्यत्र ति। अत एव। समुदायावयवत्त्वादेव। टिलोपाभाव इति। अव्ययपदेन समासान्तस्य ग्रहणात्।

तु लौकिकविग्रहवाक्यसत्त्वेऽपि तस्य संज्ञाबोधकत्वतया विशेषणाभावाद्विशिष्टाभावोऽत्र एवेति भावः । न चैतावता लौकिकत्वसमानार्थकत्वाभ्यां विशिष्टस्य वाक्यस्याभावेनेति सिद्धम् ॥ एवं सति प्रतियोग्यप्रसिद्धाऽभावाप्रसिद्धिरिति वाच्यम् । लौकिकत्वसमानार्थकत्वोभयाभाववद्वाक्यकत्वं नेत्यर्थात् तदेतदाह । समासघटके ति ॥ अत एव । विग्रहसत्त्वादेव । अर्थं वा । अत एव । एतस्य नित्यसमाससदृशत्वञ्च तु नित्यसमासत्वमेवेति स्वीकारादेव ॥ अत एव । समासपदस्य समाससम्बन्ध्यलौकिकविग्रहवाक्ये लक्षणास्वीकारादेव । अन्यथा समाससामान्यापेक्षत्वरूपान्तरङ्गत्वस्य ह्रस्वत्वे सत्त्वेन तद्ग्रहत्यापत्तिः स्यात् । समासार्थालौकिकविग्रहे लक्षणायान्त्वन्तरङ्गतरकविति न दोषः । गोस्त्रियोरित्यत्र भाष्य इति । तत्र हि कपि ह्रस्वत्वस्य प्रतिषेधो वक्तव्यः । बहुकुमारीकः । न वक्तव्यः । कपि कृतेऽनन्त्यत्वाद्ध्रस्वत्वं भविष्यति । इदमिह सम्प्रधार्यम् । कप् क्रियताम् । ह्रस्वत्वमिति । परत्वात्कप् । समाससामान्यापेक्षत्वादन्तरङ्गं ह्रस्वत्वम् । अन्तरङ्गतरः कप् । ननु चायं कप्समासान्त इत्युच्यते । तादर्थ्यात्ताच्छब्द्यमविष्यतीत्युक्तम् । न कपीतिनिषेधस्त्वनन्तरस्येतिन्यायेन केऽण इत्यस्यैव बाधक इति भावः । अन्त इतिसूत्रे भाष्ये चेति । तत्र हि किं समासस्यान्त उदात्त आहो स्विदुत्तरपदस्य । भाष्ये इदमयमका इत्यादौ कपि पूर्वस्योपसंख्यानकर्तव्यम् । अन्त्योऽन्त्य इत्यादौ नञ्सुभ्यामित्यनेनान्त्याकारस्योदात्तत्वानापत्तिरित्युक्तम् । यदि समासे कृते समासान्तः प्रवर्त्तेत तदा इदमयमका इत्यत्र समासे कृते समासान्तापेक्षया परत्वादिदमेतस्त्रः प्रथमपूरणयोः क्रियागणने इत्यनेन स्वरे कृते ततः कपि दोषाभावसिद्धौ भाष्यासङ्गतिः स्फुटैव । पूर्वोक्तव्याख्यानेन यत्किञ्चिदाह ॥ एवञ्चेति । समाससंज्ञासमकालमेवेत्यत्र समासपदमव्ययीभावादीनामप्युपलक्षणम् ॥ समासार्थालौकिकविग्रहवाक्यस्यान्ताः समासान्ता इति सिद्धान्ते गम्यते । न च पूर्वं समासान्ता इति ॥ अत्र पूर्वमित्यस्य समासाग्रहप्रयोजकार्यात्प्राक्त्वः पूर्वमित्यर्थः एतेन पूर्वोक्तसमकालत्वोक्तिर्विरोध इत्यपास्तम् विभ-व्यर्थेतिसीति । प्रत्ययाद्युदात्तत्वेनैवान्तोदात्तत्वसिद्धेः । न च यथा सर्वं समास-

र्थमाह। अव्ययीभाव इति। नन्वेवमनयेत्यस्यापि अन्नन्तं यत्प्रातिपदिकन्त-त्प्रकृतिकसुबन्तोत्तरपदकाव्ययीभावार्थवाक्यादित्येवार्थ. उचित इत्यन्नन्तादि-त्यनुपपन्नमत आह। अन्नन्तेति। के चिदिति। भाष्य इति सूत्रस्य वैकल्पिकत्व-वादिन इत्यर्थः। वस्तुतस्तु वक्ष्यमाणरीत्या भाष्य इति नित्यमेव। लक्षणेने-ति। अक्ष्णः सम्मुखमिति विग्रहः। अव्ययीभावाप्राप्तिः। परमित्यर्थं वि-धायकाभावादव्ययाघटितत्वाच्चेति भावः। वस्तुतस्त्वस्मिन् गणसूत्रे परशब्द-पाठ आकरविरुद्ध इत्याह। अत्रेति। ननु पूजार्थमितिमूलग्रन्थाद्विरेवेति सूत्रेऽन्यतरस्यामित्यस्य सम्बन्ध इति प्रतीयते तत्र युक्तम्। वक्ष्यमाणयुक्तिवि-त्वाशयेनाह। वेति वक्तव्य इति। अत एव। अन्यतरस्यामित्यस्य स्वरितत्वा-भावादेव। भाष्य इति। तत्र हि कृत्रिमाकृत्रिमन्यायं व्युत्पाद्योक्तम्। यदि त-र्हि कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययो भवति नदीपौर्णमास्याग्रहाय-णीभ्य इत्यत्रापि प्रसज्येत। पौर्णमास्याग्रहायणीग्रहणसामर्थ्यान्न भविष्यति। तद्विशेषेभ्यस्तर्हि प्राप्नोति। गङ्गायमुने इति। एवन्तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति न तद्विशेषेभ्यो भवतीति। यदयं विपाश्शब्दं शरत्प्रभृतिषु पठतीति। अत्र पौर्ण-मास्याग्रहायणीग्रहणसामर्थ्यादिति। यदि नदीसंज्ञकस्य ग्रहणन्तदाऽनयो-रुपादानं व्यर्थं स्यात्। नन्वनयोरुपादानं नियमार्थंभविष्यति ईकारान्तस्य चे-दनयोरेवेति चेत्। एवन्तर्हि पौर्णमास्याग्रहायणीभ्य इत्येव वदेदिति नदीश-ब्दोपादानं ज्ञापकमेव। साहचर्याच्च ऊपदेन नदीसंज्ञकोकारान्तस्य ग्रहणं भविष्यतीत्यभिप्रायः। ये तु नदीपौर्णमासीतिसूत्रेऽन्यतरस्यामित्यस्य सम्बन्धं वदन्ति अस्य च सूत्रस्य व्यवस्थितविभाषात्वं स्वीकुर्वन्ति तेषां देवत्रात इत्या-द्युक्तव्यवस्थितविभाषात्वपरिगणनविरोधः स्पष्ट एव। तस्याश्चेति। अशब्दसं-ज्ञेतिनिषेधस्येत्यर्थः। अत एव। लक्ष्यानुसरणस्य सूत्रमतेऽप्यावश्यकत्वादेव। तस्सूत्रम्। स्वरूपमितिसूत्रम्।

## इत्यव्ययीभावविवरणम्॥

द्विगुश्चेतिपाठेऽपि द्वयोः संज्ञयोः पर्यायेण प्रवृत्तिस्त्रीकारेऽपि चकारचरि-तार्थ इत्यत आह। संख्यापूर्व इति। इत्यर्थलाभ इति। तत्प्रकृतिके लक्षणया

कैयटोक्तोत्तरपदावयवत्वपक्षस्वसंगत इत्याह । यस्त्विति । फलाभावादिति । समासपदस्य समासार्थालौकिकविग्रहवाक्यात्मकसमुदायपरत्वभाष्यकारोक्तं यत्तादर्थ्यात्ताच्छब्द्यमिति तदनुगृहीतं भवति । उत्तरपदावयवत्वे तु न तादृशभाष्योपलम्भ इत्यपि बोध्यम् । ननु यदि समासान्तो नोत्तरपदावयवस्तदा द्विधुरीत्यत्राकारान्तोत्तरपदो द्विगुः स्त्रियामिष्ट इत्यस्य कथमप्रवृत्तिरत आह । द्विधुरीत्यादाविति । अत एव । लिङ्गस्य लोकाश्रयत्वादेव । नपुंसकत्वसिद्धिरिति । उत्तरपदावयवत्ववादिमतेऽपि प्राप्तस्त्रीत्वस्य लोकाश्रयत्वेन वारणं कार्यमिति भावः । उत्तरपदावयवत्वस्वीकारे भाष्यविरोधमपि दर्शयति । अन्त इत्यादिसूत्रे ति । अन्तोदात्तत्वासिद्धिरिति । यद्ययमुत्तरपदावयवः स्यात्तदा नञ्सुभ्यामितिसूत्रेणान्तोदात्तत्वमथ चकारस्य स्यादेवेति भावः । विग्रहवाक्ये समुदायावयवत्वे सरूपसूत्रस्थभाष्यविरोधं धारयति । सरूपेति । तस्यानर्थकत्वेन । समासान्तरहितस्य ऋच् इत्यस्यार्थवत्त्वाभावेन । मानाभावादिति । न च छन्दःपदादत्वव्यवहार एव मानम् छन्दसमासस्यार्थवत्त्वात्प्रातिपदिकसंज्ञायाः प्रत्येकं सुबुत्पत्तावेव मानं : । छात्रछन्दानामितिपक्षे तु सुतरामत्रैवेत्यत आह । विशिष्टरूप इति । अर्थबोधकतावच्छेदकानुपूर्वी विशिष्टरूपेत्यर्थः । तद् विशिष्टमेव । सुप्विशिष्टमेव । तन्मूलभूतेति । सुबन्तात्तद्वित इतिसिद्धान्तमूलभूतेत्यर्थः । अत एव । परिपूर्णमिति युक्तिः सार्थकविषयत्वादेव । तस्यामवस्थायाम् । वाक्यावस्थायाम् । सामान्यत उक्तमेवार्थं स्पष्टप्रतिपत्तये विशेषत आह । तत्रे ति । तद्ग्रहणेन । समासग्रहणेन । न च समासान्तस्य भवदुक्तरीत्या वाक्यावयवत्वे न वाक्यग्रहणेन ग्रहणमभवतु न तु समासग्रहणेन ग्रहणमविष्यतीति वाच्यम् । वाक्यस्यैव समाससंज्ञाविधानेन समासशब्दाभिधेयतया समासशब्देन विशिष्टस्य ग्रहणमविष्यतीत्याशयात् । अन्यथा । मदुक्तरीत्या तावदित्यस्य व्याख्यानाभावे । तदनपेक्षत्वेन । वाक्यनपेक्षत्वेन । अत एव । सुप परस्मादित्यस्याश्रयणादेव । द्विगिति । द्विगर्थन्तु यदन्यत्रालौकिकविग्रहवाक्ये समासान्तो हन्ति तद्धितान्ताप्रातिपदिकत्वं सुबुत्पत्तिप्रसङ्गेन प्रत्येकं सुबन्तत्वेन समासप्रवृत्तिरिति तथ सुबुत्पत्त्यभावप्रत्यायकत्वेन स-
समासान्तस्य समासप्रयोगार्थैकशास्त्रप्रवृत्तिकत्वमेव साम इत्यादिः । एवा-

र्थमाह। अव्ययीभाव इति। नन्वेवमनयेत्यस्यापि अवन्तं यत्प्रातिपदिकन्त-त्प्रकृतिकसुबन्तोत्तरपदकाव्ययीभावार्थवाक्यादित्येवार्थ, उचित इत्यदन्तादि-त्यनुपपन्नमत आह। अवन्तेति। केचिदिति। झय इति सूत्रस्य वैकल्पिकत्व-वादिन इत्यर्थः। वस्तुतस्तु वक्ष्यमाणरीत्या झय इति नित्यमेव। लक्षणेने-ति। अक्ष्णः सम्मुखमिति विग्रहः। अव्ययीभावाप्राप्तिः। परमित्यर्थं वि-धायकाभावादव्ययाघटितत्वाच्चेति भावः। वस्तुतस्त्वस्मिन् गणसूत्रे परशब्द-पाठ आकरविरुद्ध इत्याह।अत्रेति। ननु पूजार्थमितिमूलग्रन्थादिरेयेति सूत्रेऽन्यतरस्यामित्यस्य सम्बन्ध इति प्रतीयते तन्न युक्तम्। वक्ष्यमाणयुक्तेरि-त्याशयेनाह।वेति वक्तव्य इति। अत एव। अन्यतरस्यामित्यस्य स्वरितत्वा-भावादेव। भाष्य इति। तत्र हि कृत्रिमाकृत्रिमन्यायं व्युत्थाप्योक्तम्। यदि त-र्हि कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययो भवति नदीपौर्णमास्याग्रहाय-णीभ्य इत्यत्रापि प्रसज्येत। पौर्णमास्याग्रहायणीग्रहणसामर्थ्याच्च भविष्यति तद्विशेषेभ्यस्तर्हि प्राप्नोति। गङ्गायमुने इति। एवन्तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति न तद्विशेषेभ्यो भवतीति। यदयं विपाशुब्दं शरत्प्रभृतिषु पठतीति। अत्र पौर्ण-मास्याग्रहायणीग्रहणसामर्थ्यादिति। यदि नदीसंज्ञकस्य ग्रहणन्तदाऽनयो-रुपादानं व्यर्थं स्यात्। नन्वनयोरुपादानं नियमार्थं भविष्यति ईकारान्तस्य चे-दनयोरेवेति चेत्। एवन्तर्हि पौर्णमास्याग्रहायणीभ्य इत्येव वदेदिति नदीश-ब्दोपादानं ज्ञापकमेव। साहचर्याच्च रूपेण नदीसंज्ञकोकारान्तस्य ग्रहणं भविष्यतीत्यभिप्रायः। ये तु नदीपौर्णमासीतिसूत्रेऽन्यतरस्यामित्यस्य सम्बन्धं वदन्ति अस्य च सूत्रस्य व्यवस्थितविभाषात्वं स्वीकुर्वन्ति तेषां देवत्रात इत्या-द्युक्तव्यवस्थितविभाषात्वपरिगणनविरोधः स्पष्ट एव। तस्याच्चेति। अशब्दसं-ज्ञेतिनिषेधस्येत्यर्थः। अत एव। लक्ष्यानुसरणस्य सूत्रसत्वेऽप्यावश्यकत्वादेव। तत्सूत्रम्। स्वंरूपमितिसूत्रम्।।

## इत्यव्ययीभावविवरणम् ॥

द्विगुश्चेतिपाठेऽपि द्वयोः संज्ञयोः पर्यायेण प्रवृत्तिस्वीकारेऽपि चकारचरि-तार्थ इत्यत आह।। संख्यापूर्व इति। इत्यर्थलाभ इति।तत्प्रकृतिके सप्तम्या

कैयटोक्तोत्तरपदावयवत्वपक्षस्त्वसंगत इत्याह । यत्त्विति । फलाभावादिति । समासपदस्य समासार्थालौकिकविग्रहवाक्यात्मकसमुदायपरत्वभाष्यकारोक्तं य त्तादर्थ्यात्ताच्छब्द्यमिति तदनुगृहीतम्भवति । उत्तरपदावयवत्वे तु न तादृग भाष्योपलम्भ इत्यपि बोध्यम् । ननु यदि समासान्तो नोत्तरपदावयवस्तदा द्विधुरीत्यत्राकारान्तोत्तरपदो द्विगुस्त्रियामिष्ट इत्यस्य कथम्प्रवृत्तिरत आह । द्विधुरीत्यादाविति । अत एव । लिङ्गस्य लोकाश्रयत्वादेव । नपुंसकत्वसिद्धिरिति । उत्तरपदावयवत्ववादिमतेऽपि प्राप्तस्त्रीत्वस्य लोकाश्रयत्वेन वारणं कार्यमिति भाव । उत्तरपदावयवत्वस्वीकारे भाष्यविरोधमपि दर्शयति । अन्त इत्यादिसूत्रेति । अन्तोदात्तत्वासिद्धिरिति । यद्ययमुत्तरपदावयव स्यात्तदा नञ्सुभ्यामितिसूत्रेणान्तोदात्तत्वमत्र चकारस्य स्यादेवेति भाव । विग्रहवाक्ये समुदायावयवत्वे सरूपसूत्रस्थभाष्यविरोध वारयति । सरूपेति । तस्यानर्थकत्वेन । समासान्तरहितस्य ऋच् इत्यस्यार्थवत्त्वाभावेन । मानाभावादिति । न च द्वन्द्वापवादत्वव्यवहार एव मानम् द्वन्द्वसमासस्यार्थवत्त्वात्प्रातिपदिकसंज्ञायां प्रत्येकं सुबुत्पत्तावेव प्राप्ते । क्षत्रद्वन्द्वानामितिपक्षे तु सुतरान्तदर्थत्वमत आह । विशिष्टरूप इति । अर्थबोधकतावच्छेदकानुपूर्वी विशिष्टरूपेत्यर्थ । सद् विशिष्टमेव । सुप्विशिष्टमेव । सम्मूलभूतेति । सुबन्तात्तद्धित इतिसिद्धान्तमूलभूतेत्यर्थ । अत एव । परिपूर्णमिति युक्तं सार्थकविषयत्वादेव । तस्यामवस्थायाम् । वाक्यावस्थायाम् । सामान्यत उक्तमेवार्थं स्पष्टप्रतिपत्तये विशेषत आह । तत्रेति । तद्ग्रहणेन । समासग्रहणेन । न च समासान्तस्य भवदुक्तरीत्या वाक्यावयवत्वेन वाक्यग्रहणेन ग्रहणम्भवतु न तु समासग्रहणेन ग्रहणम्भविष्यतीति वाच्यम् । वाक्यस्यैव समाससंज्ञाविधानेन समासशब्दाभिधेयतया समासशब्देन विशिष्टस्य ग्रहणम्भविष्यतीत्याशयात् । अन्यथा । मदुक्तरीत्या तावदित्यस्य व्याख्यानाभावे । तदनर्थकत्वेन । वाक्यानर्थकत्वेन । अत एव । सुप परस्मादित्यनाश्रयणादेव । दिगिति । दिगर्थस्तु यदर्थालौकिकविग्रहवाक्ये समासान्ते कृते तद्विशिष्टस्य प्रातिपदिकत्वे सुप्सुकि प्रत्ययलक्षणेन प्रत्येकं सुबन्तत्वेन समासप्राप्तिरिति तत्र सुप्सुप्सत्यादिवाक्यविरोधेन स-

,मासान्तस्य समाससंज्ञायामेकत्वप्रवृत्तिकल्पनेन लाभ इत्यादि । सुपा

र्थमाह'। अव्ययीभाव इति। नन्वेवमनयेत्यस्यापि अन्नन्तं यत्प्रातिपदिकन्त-त्प्रकृतिकसुबन्तोत्तरपदकाव्ययीभावार्थवाक्यादित्येवार्थः उचित इत्यन्नन्तादि-त्यनुपपन्नमत आह। अन्नन्तेति। कै चिदिति। भय इति सूत्रस्य वैकल्पिकत्व-वादिन इत्यर्थः। वस्तुतस्तु वक्ष्यमाणरीत्या भय इति नित्यमेव। लक्षणेने-ति। अक्ष्णः सम्मुखमिति विग्रहः। अव्ययीभावाप्राप्तिः। परमित्यर्थे वि-धायकाभावादव्ययाघटितत्वाच्चेति भावः। वस्तुतस्त्वस्मिन् गणसूत्रे परशब्द-पाठ आकरविरुद्ध इत्याह। अत्रेति। ननु पूजार्थमितिमूलग्रन्थाद्गिरेश्चेति सूत्रे ऽन्यतरस्यामित्यस्य सम्बन्ध इति प्रतीयते तन्न युक्तम्। वक्ष्यमाणयुक्तेरि-त्याशयेनाह। वेति। वक्तव्य इति। अत एव। अन्यतरस्यामित्यस्य स्वरितत्वा-भावादेव। भाष्य इति। तत्र हि कृत्रिमाकृत्रिमन्यायं व्युत्पाद्योक्तम्। यदि त-र्हि कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययो भवति नदीपौर्णमास्याग्रहाय-णीभ्य इत्यत्रापि प्रसज्येत। पौर्णमास्याग्रहायणीग्रहणसामर्थ्यान्न भविष्यति तद्विशेषेभ्यस्तर्हि प्राप्नोति। गङ्गायमुने इति। एवन्तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति न तद्विशेषेभ्यो भवतीति। यदयं विपाश्शब्दं शरत्प्रभृतिषु पठतीति। अत्र पौर्ण-मास्याग्रहायणीग्रहणसामर्थ्यादिति। यदि नदीसंज्ञकस्य ग्रहणन्तदाऽनयो-रुपादानं व्यर्थं स्यात्। नन्वनयोरुपादानं नियमार्थं भविष्यति ईकारान्तस्य चे-दनयोरेवेति चेत्। एवन्तर्हि पौर्णमास्याग्रहायणीभ्य इत्येव वदेदिति नदीश-ब्दोपादानं ज्ञापकमेव। साहचर्याच्च उपदेन नदीसंज्ञकोकारान्तस्य ग्रहणं भविष्यतीत्यभिप्रायः। ये तु नदीपौर्णमासीतिसूत्रे ऽन्यतरस्यामित्यस्य सम्बन्धं वदन्ति अस्य च सूत्रस्य व्यवस्थितविभाषात्वं स्वीकुर्वन्ति तेषां देवचात इत्याः द्युक्तव्यवस्थितविभाषात्वपरिगणनविरोधः स्पष्ट एव। तस्यान्नेति। अशब्दसं-ज्ञेतिनिषेधस्येत्यर्थः। अत एव। तस्यानुसरणस्य सूत्रसत्त्वेऽप्यावश्यकत्वादेव। तत्सूत्रम्। स्वरूपमितिसूत्रम्।

## इत्यव्ययीभावविवरणम्॥

द्विगुश्चेतिपाठेऽपि द्वयोः संज्ञयोः पर्यायेण प्रवृत्तिलीकारेऽपि चकारयति-तार्थ इत्यत आह। संख्यापूर्व इति। इत्यर्थलाभ इति। तत्प्रकृतिके लक्षणया

कैयटोक्तोत्तरपदावयवत्वपचस्त्वसंगत इत्याह । यत्त्विति । फलाभावादिति । समासपदस्य समासार्थालौकिकविग्रहवाक्यात्मकसमुदायपरत्वभाष्यकारोक्तं यतादर्थ्यात्ताच्छब्द्यमिति तदनुगृहीतभवति । उत्तरपदावयवत्वे तु न तादृग्भाष्योपलभ्भ इत्यपि बोध्यम् । ननु यदि समासान्तो नोत्तरपदावयवस्तदा द्विधुरीत्यत्राकारान्तोत्तरपदो द्विगुस्त्रियामिष्ट इत्यस्य कथमप्रवृत्तिरत आह । द्विधुरीत्यादावितिः । अत एव । लिङ्गस्य लोकाश्रयत्वादेव । नपुंसकत्वसिद्धिरिति । उत्तरपदावयवत्ववादिमतेऽपि प्राप्तस्त्रीत्वस्य लोकाश्रयत्वेन वारणं कार्यमिति भावः । उत्तरपदावयवत्वस्त्रीकारे भाष्यविरोधमपि दर्शयति । अन्त इत्यादिसूत्रे ति । अन्तोदात्तत्वासिद्धिरिति । यद्ययमुत्तरपदावयवः स्यात्तदा नञ्सुभ्यामितिसूत्रेणान्तोदात्तत्वमत्र चकारस्य स्यादेवेति भाव. । विग्रहवाक्ये समुदायावयवत्वे सरूपसूत्रस्थभाष्यविरोधं वारयति । सरूपेति । तस्यानर्थकत्वेन । समासान्तरहितस्य ऋच् इत्यस्यार्थवत्त्वाभावेन । मानाभावादिति । न च द्वन्द्वापवादत्वव्यवहार एव मानम् द्वन्द्वसमासस्यार्थवत्वात्प्रातिपदिकसंज्ञायाम्प्रत्येकं सुबुत्पत्तावेव प्राप्तेः । कृतद्वन्द्वानामितिपक्षे तु सुतरामस्येत्यत आह । विशिष्टरूप इति । अर्थबोधकतावच्छेदकानुपूर्वी विशिष्टरूपेत्यर्थः । तद् विशिष्टमेव । सुप्विशिष्टमेव । तन्मूलभूतेति । सुबन्तात्तद्धित इतिसिद्धान्तमूलभूतेत्यर्थः । अत एव । परिपूर्णमिति युक्तेः सार्थकविषयत्वादेव । तस्यामवस्थायाम् । वाक्यावस्थायाम् । सामान्यत उक्तमेवार्थं स्पष्टप्रतिपत्तये विशेषत आह । तत्रे ति । तद्ग्रहणेन । समासग्रहणेन । न च समासान्तस्य भवदुक्तरीत्या वाक्यावयवत्वेन वाक्यग्रहणेन ग्रहणमस्तु न तु समासग्रहणेन ग्रहणम्भविष्यतीति वाच्यम् । वाक्यस्यैव समाससंज्ञाविधानेन समासशब्दाभिधेयतया समासशब्देन विशिष्टस्य ग्रहणम्भविष्यतीत्याशयात् । अन्यथा । मदुक्तरीत्या तावदित्यस्य व्याख्यानाभावे । तदनपेक्षत्वेन । वाक्यनपेक्षत्वेन । अत एव । सुप परस्मादित्यस्याश्रयणादेव । द्विगिति । द्विगर्थस्तु यदन्यपदार्थस्याऽलौकिकविग्रहवाक्ये समासान्ते कृते सहितान्तस्य प्रातिपदिकत्वे सुबुत्पत्तिः प्रत्ययलक्षणेन प्रसंग सुबन्तत्वेन समासमनुप्रति तत्र सुब्लुक्भाष्यकारस्येन समासान्तस्य समासप्रयागार्थे कामप्रवृत्तिसम्भवेन भाव इत्यादिः । गुणा-

र्थमाह । अव्ययीभाव इति । नन्वेवमनस्येत्यस्यापि अन्नन्तं यत्प्रातिपदिकन्त-त्प्रकृतिकसुबन्तोत्तरपदकाव्ययीभावार्थवाक्यादित्येवार्थः उचित इत्यन्नन्तादि-त्यनुपपन्नमत आह । अन्नन्तेति । के विदिति । भाष्य इति सूत्रस्य वैकल्पिकत्व-वादिन इत्यर्थः । वस्तुतस्तु वक्ष्यमाणरीत्या भाष्य इति नित्यमेव । लक्षणेने-ति । अक्ष्णः समनुखमिति विग्रहः । अव्ययीभावाप्राप्तिः । परमित्यर्थं वि धायकाभावादव्ययाघटितत्वाच्चेति भावः । वस्तुतस्त्वस्मिन् गणसूत्रे परशब्द-पाठ आकरविरुद्ध इत्याह ।।अत्रेति । ननु पूजार्थमितिमूलग्रन्थादिरित्येति सूत्रेऽन्यतरस्यामित्यस्य सम्बन्ध इति प्रतीयते तन्न युक्तम् ।। वक्ष्यमाणयुक्ते रि-त्याशयेनाह ।।वेति वक्तव्य इति । अत एव । अन्यतरस्यामित्यस्य स्वरितत्वा-भावादेव । भाष्य इति ।।तत्र हि कृत्रिमाकृत्रिमन्यायं व्युत्पाद्योक्तम् । यदि त-र्हि कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययो भवति नदीपौर्णमास्याग्रहाय-णीभ्य इत्यत्रापि प्रसज्येत । पौर्णमास्याग्रहायणीग्रहणसामर्थ्यान्न भविष्यति तद्विशेषेभ्यस्तर्हि प्राप्नोति । गङ्गायमुने इति । एवन्तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति न तद्विशेषेभ्यो भवतीति । यदयं विपाट्शब्दं शरत्प्रभृतिषु पठतीति । अत्र पौर्ण-मास्याग्रहायणीग्रहणसामर्थ्यादिति । यदि नदीसंज्ञकस्य ग्रहणन्तदाऽनयो-रुपादानं व्यर्थं स्यात् । नन्वनयोरुपादानं नियमार्थंभविष्यति ईकारान्तस्य चे-दनयोरेवेति चेत् ।। एवन्तर्हि पौर्णमास्याग्रहायणीभ्य इत्येव वदेदिति नदीश-ब्दोपादानं ज्ञापकमेव । साहचर्यात्ष्व ऊपदेन नदीसंज्ञकोकारान्तस्य ग्रहणं भविष्यतीत्यभिप्रायः । ये तु नदीपौर्णमासीतिसूत्रेऽन्यतरस्यामित्यस्य सम्बन्धं वदन्ति अस्य च सूत्रस्य व्यवस्थितविभाषात्वं स्वीकुर्वन्ति तेषा देवनात इत्यात् युक्तव्यवस्थितविभाषात्वपरिगणनविरोधः स्पष्ट एव । तस्यान्तेति । अशब्दसं-ज्ञेतिनिषेधस्येत्यर्थः । अत एव । लक्ष्यानुसरणस्य सूत्रसत्त्वेऽप्यावश्यकत्वादेव । तत्सूत्रम् । स्वंरूपमितिसूत्रम् ।।

## इत्यव्ययीभावविवरणम् ॥

द्विगुश्चेतिपाठेऽपि द्वयोः संज्ञयोः पर्यायेण प्रवृत्तिस्वीकारेऽपि चकारचरि-तार्थं इत्यत आह ।। संख्यापूर्वं इति । इत्यर्थलाभ इति । तत्प्रकृतिके लक्षणया

कैयटोक्तोत्तरपदावयवत्वपक्षस्त्वसंगत इत्याह । यस्त्विति । फलाभावादिति । समासपदस्य समासार्थलौकिकविग्रहवाक्यात्मकसमुदायपरत्वं भाष्यकारोक्तं यत्तादर्थ्यात्ताच्छब्द्यमिति तदनुगृहीतं भवति । उत्तरपदावयवत्वे तु न तादृशभाष्योपलम्भ इत्यपि बोध्यम् । ननु यदि समासान्तो नोत्तरपदावयवस्तदा द्विधुरीत्यत्राकारान्तोत्तरपदो द्विगुः स्त्रियामिष्ट इत्यस्य कथम्प्रवृत्तिरत आह । द्विधुरीत्यादाविति । अत एव । लिङ्गस्य लोकाश्रयत्वादेव । नपुंसकत्वसिद्धिरिति । उत्तरपदावयवत्ववादिमतेऽपि प्राप्तस्त्रीत्वस्य लोकाश्रयत्वेन वारणं कार्यमिति भावः । उत्तरपदावयवत्वस्वीकारे भाष्यविरोधमपि दर्शयति । अन्त इत्यादिसूत्रेणेति । अन्तोदात्तत्वासिद्धिरिति । यद्ययमुत्तरपदावयवः स्यात्तदा नञ्सुभ्यामितिसूत्रेणान्तोदात्तत्वमच्चकारस्य स्यादेवेति भावः । विग्रहवाक्ये समुदायावयवत्वे सरूपसूत्रस्थभाष्यविरोधं वारयति । सरूपेति । तस्यानर्थकत्वेन । समासान्तरहितस्य ऋच् इत्यस्यार्थवत्त्वाभावेन । मानाभावादिति । न च द्वन्द्वापवादत्वव्यवहार एव मानम् द्वन्द्वसमासस्यार्थवत्त्वात्प्रातिपदिकसंज्ञायाम्प्रत्येकं सुबुत्पत्तावेव प्राप्तेः । शास्त्रद्वन्द्वानामितिपक्षे तु सुतरामित्येतत आह । विशिष्टरूप इति । अर्थबोधकतावच्छेदकानुपूर्वी विशिष्टरूपेत्यर्थः । तद्विशिष्टमेव । सुप्विशिष्टमेव । तन्मूलभूतेति । सुबन्तात्तद्धित इतिसिद्धान्तमूलभूतेत्यर्थः । अत एव । परिपूर्णमिति युक्तेः सार्थकविषयत्वादेव । तस्यामवस्थायाम् । वाक्यावस्थायाम् । सामान्यत उक्तमेवार्थं स्पष्टप्रतिपत्तये विशेषत आह । तत्रेति । तद्ग्रहणेन । समासग्रहणेन । न च समासान्तस्य भवदुक्तरीत्या वाक्यावयवत्वेन वाक्यग्रहणेन ग्रहणम्भवतु न तु समासग्रहणेन ग्रहणम्भविष्यतीति वाच्यम् । वाक्यस्यैव समाससंज्ञाविधानेन समासशब्दाभिधेयतया समासशब्देन विशिष्टस्य ग्रहणम्भविष्यतीत्याशयात् । अन्यथा । मदुक्तरीत्या तावदित्यस्य व्याख्यानाभावे । तदनपेक्षत्वेन । कमनपेक्षत्वेन । अत एव । सुप् परस्मादित्यस्याश्रयणादेव । दिगिति । दिगर्थस्तु यदन्यत्रालौकिकविग्रहवाक्ये समासान्ते कृते तद्धितान्तत्वात्प्रातिपदिकत्वे सुबुत्पत्तिप्रसङ्गरूपेण प्रत्येकं सुबन्तत्वेन समासप्रसङ्ग इति तच्च सुबन्तत्वभाष्यव्याख्यानेन समासान्तस्य समाससंज्ञायां वक्ष्यमाणदूषणभिन्नत्वेन नाम इत्यादिः । सुपा-

र्थमाह । अव्ययीभाव इति । नन्वेवमनर्थत्यस्यापि अव्ययत्वं यत्प्रातिपदिकान्त-
प्रकृतिकसुबन्तोत्तरपदवाव्ययीभावार्थवाक्यादित्येवार्थं उचित इत्यन्नन्तादि-
त्यनुपपन्नमत आह । अन्नन्तेति । केचिदिति । भाष्य इति सूत्रस्य वैकल्पिकत्व-
वादिन इत्यर्थः । वस्तुतस्तु वक्ष्यमाणरीत्या भाष्य इति नित्यमेव । लक्षणेने-
ति । अक्ष्णः सम्मुखमिति विग्रहः । अव्ययीभावाप्राप्तिः । परमित्यर्थे वि-
धायकाभावादव्ययाघटितत्वाच्चेति भावः । वस्तुतस्त्वस्मिन् गणसूत्रे परशब्द-
पाठ आकरविरुद्ध इत्याह ।।अत्रेति । ननु पूजार्थमितिमूलग्रन्थाद्गिरेरेति
सूत्रेऽन्यतरस्यामित्यस्य सम्बन्ध इति प्रतीयते तन्न युक्तम् । वक्ष्यमाणयुक्तेरि-
त्याशयेनाह ।।वेति वक्तव्य इति । अत एव । अन्यतरस्यामित्यस्य स्वरितत्वा-
भावादेव । भाष्य इति ।।तत्र हि कृत्रिमाकृत्रिमन्यायं व्युत्पाद्योक्तम् । यदि त-
र्हि कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययो भवति नदीपौर्णमास्याग्रहाय-
णीभ्य इत्यत्रापि प्रसज्येत । पौर्णमास्याग्रहायणीग्रहणसामर्थ्यान्न भविष्यति
तद्विशेषेभ्यस्तर्हि प्राप्नोति । गङ्गायमुने इति । एवन्तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति न
तद्विशेषेभ्यो भवतीति । यदयं विपाशशब्दं शरत्प्रभृतिषु पठतीति । अत्र पौर्ण-
मास्याग्रहायणीग्रहणसामर्थ्यादिति । यदि नदीसंज्ञकस्य ग्रहणन्तदाऽनयो-
रुपादानं व्यर्थं स्यात् । नन्वनयोरुपादानं नियमार्थंभविष्यति ईकारान्तस्य चे-
दनयोरेवेति चेत् ।। एवन्तर्हि पौर्णमास्याग्रहायणीभ्य इत्येव वदेदिति नदीश-
ब्दोपादानं ज्ञापकमेव । साहचर्याच्च ऊपदेन नदीसंज्ञकोकारान्तस्य ग्रहणं
भविष्यतीत्यभिप्रायः । ये तु नदीपौर्णमासीतिसूत्रेऽन्यतरस्यामित्यस्य सम्बन्धं
वदन्ति अस्य च सूत्रस्य व्यवस्थितविभाषात्वं स्वीकुर्वन्ति तेषां दैवचात इत्याः
द्युक्तव्यवस्थितविभाषात्वपरिगणनविरोधः स्पष्ट एव । तस्यान्नेति । अशब्दस्त-
भ्रेतिनिषेधस्येत्यर्थः । अत एव । लक्ष्यानुसरणस्य सर्वमतेऽप्यावश्यकत्वादेव ।
तत्सूत्रम् । स्वरूपमितिसूत्रम् ।।

## इत्यव्ययीभावविवरणम् ॥

द्विगुश्चेतिपाठेऽपि द्वयोः संज्ञयोः पर्यायेण प्रवृत्तिस्वीकारेऽपि चकारचरि-
तार्थ इत्यत आह ।। संख्यापूर्व इति । इत्यर्थलाभ इति । तत्प्रकृतिके लक्षणया

तत्राभ इत्यर्थः । भाष्यप्रामाण्येनेति । समासप्रत्ययविधावित्यस्योदाहरण मये काष्टं श्रितः काष्टश्रित इत्यत्र यथा स्यात्काष्टम्परमश्रित इत्यत्र मा भूदित्युक्तत्प्रामाण्ये नेत्यर्थः । अत एव निर्देशात् । पतित इति निर्देशात् । यद्वा सेऽसिचीतिवेट्कत्वात्क्तान्तेरिडभावे सिद्धेऽस्य ईदित्वमिडभावार्थं यत्नेन यस्य विभाषेत्यस्यानित्यत्वज्ञापनादिटः सिद्धिः । कर्तृशक्तिप्रधानम् । कर्त्तृत्वविशेष्यकबोधजनकम् । समासमन्तरायाः प्रवृत्तेः फलस्य स्पष्टप्रतिपत्तये आह । असमास इति । जाल्म इतीति । असमीक्ष्यकारीत्यर्थः । तेन । जाल्मइतिकथनेन । केवलरूढत्वादेव न हि वाक्येन निन्दा गम्यत इत्यस्योपपत्तिरित्याह । एतेनेति । खट्वामारोढु मा वा योयोऽसमीक्ष्य कारी स एवमभिधीयते । वाक्येन तु योगार्थस्यैव प्रतीतिः । काला इत्यनेन स्वरूपस्य ग्रहणमिरस्यति । कालवाचिन इति । अत्र मानमाह बहुवचनादिति । उत्तरसूत्रेण मित्र इति । कालवाचकद्वितीयान्तं समर्थमक्तान्तकसुबन्तेन सहितं समाससंज्ञकमिति तदर्थात् । तुमुनिति । भाव इति शेषः । आरब्धवानित्याङः प्रयोगात्प्रमितेत्यत्र माङ्धातोरादिकर्मणि कर्त्तरि क्त इति सूचयति । तुमुनन्तस्याव्ययत्वात्ततो जातायाः शेषषष्ठ्या लुक् । मासपरिच्छेदारम्भकर्त्तेति बोधः । प्रतिपच्चन्द्रेण हि मासपरिच्छेदः क्रियते । प्रतिपन्नाम विज्ञेया चन्द्रस्य प्रथमा कलेत्यभियुक्तोक्तेः । तद्द्वारकसामर्थ्य इति । तदुक्तम्भाष्ये । तत्कृतार्थेनेति किम् । दध्ना पटुः । घृतेन पटुः । नैतदस्ति । असामर्थ्यादत्र न भविष्यति । कथमसामर्थ्यम् । सापेक्षमसमर्थम्भवति । न हि दध्नः पटुना सामर्थ्यम् । केन तर्हि भुजिना । दध्ना भुङ्क्ते पटुरिति इहापि तर्हि न प्राप्नोति । शङ्कुलाखण्डः किरिकाण इति अत्रापि न शङ्कुलायाः खण्डेन सामर्थ्यं केन तर्हि करोतिना । शङ्कुलया कृतः खण्ड इति । अत्र गम्यस्य गुणोपसर्जनद्रव्यवचनस्य साक्षात्सम्बन्धाभावादपेक्ष्यक्रियाघटिता व्यापारसन्तता कारकतायोगात् । वचनाद्भविष्यति । करोतिद्वारकसामर्थ्यमेवेति भावः । इहापि तर्हि वचनात्प्राप्नोति । दध्ना पटुः घृतेन पटुरिति । तत्रासत्त्वकार्यवचनत्वात्साम्यम् इति । निपुणवस्त्राभ्यां समासविधानादिति । न च गृहाचन्दनादि प्रावरणत्वमप्राद्युभयोर्वोपादानमफलमिति वाच्यम् ।

परतः सदृशग्रहणस्यानावश्यकत्वस्य वक्ष्यमाणत्वात् । गुणवचनेनेत्यथ समासानुपपत्तिं वारयति । गुणेत्यस्येति । ननु गुणेनेत्येव सिद्धे वचनग्रहणङ्किमर्थमत आह । वचनग्रहणन्त्विति । दृतेन पाटवमित्यादाविति । एतेषां केवलगुणवाचकत्वन्तु गुणोपसर्जनद्रव्यवचनत्वमिति भावः । व्याख्यानादिति । गुणेनेतीयता सिद्धे सोयमेवं सिद्धे सति यद्वचनग्रहणङ्करोति तस्यैतत्प्रयोजनमेवं यथा विज्ञायेत गुणमुक्तवता गुणवचनेनेति भाष्याच्छङ्कुलाखण्ड इत्युदाहरणदर्शनमूलकादित्यर्थः । अन्यथा खडि भेदने इतिधातोर्घञि निष्पन्नखण्डशब्देन न स्यात्कृदन्तत्वादिति भावः । पूर्वसदृश । नन्वनेन सदृशशब्देन समासे तृतीयान्तम्पूर्वपदम्प्रकृतिस्वरमिति पूर्वपदप्रकृतिस्वरस्य सिद्धौ सदृशशब्दो नोपादेय इत्यत आह । तत्र हीति । षष्ठ्या अलुकि । षष्ठ्या आक्रोशे इत्यनेन ननु मनसा सदृश इत्यर्थमिदमप्यावश्यकमित्यत आह । मनसा सदृश इति पूर्वपदप्रकृतिस्वरासिद्धिरिति । विधायकाभावादिति शेषः । उपमानबोधकपूर्वपदक एवेति । अत एव तत्सूत्रस्थसादृश्यग्रहणस्य तत्सूत्रभाष्ये परमसदृश इति प्रत्युदाहरणमुक्तम् । कैयटेन ध्वनितमिति । सम्बन्धमात्रविवक्षायां षष्ठीसमासेन पूर्वसूत्रेण या तत्कृतत्वाभिधानादिति ग्रन्थेन । एकदेशयुक्तिरिति । तत्र हि सदृशवचनमनर्थकन्तृतीयासमासवचनात् । सदृशशब्देन तृतीयासमास उच्यते तत्र तृतीयापूर्वपदप्रकृतिस्वरश्च भवतीत्येव सिद्धम् । षष्ठ्यर्थन्तर्हीदं वक्तव्यम् पितुः सदृशः पितृसदृश इति । षष्ठ्यर्थमिति चेत्तृतीयासमासवचनानर्थक्यम् । इष्टाभिसन्धौ ग्रन्थं साध्यम् । पित्रा सदृशः । पितुः सदृशः । पितृसदृश इति । तत्र पितुः सदृश इतिविग्रहे पितृसदृश इति भविष्यति । पित्रा सदृश इतिविग्रहे वाक्यमेव । अचिरविकल्पन्यायेन । अवश्यन्तृतीयासमासो वक्तव्यः । यत्र षष्ठ्यर्थो नास्ति । भोजनसदृश इति । यदि तस्य निबन्धनमस्ति तदेव वक्तव्यम् इदन्नवक्तव्यम् । इदमप्यवश्यं वक्तव्यम् । यत्र षष्ठी न श्रूयते तदर्थम् । दास्याः सदृशः । वृषल्याः सदृश इति । एतेन प्रघट्टकेन पूर्वसदृशेतिसूत्रस्थसदृशग्रहणस्य सदृशप्रतिरूपयोरितिसूत्रस्थसदृशग्रहणस्य चावश्यकर्त्तव्यता लभ्यते सा चोक्तरीत्या न सम्भवतीति । ऐकार्थ्यमिति । एकः समानोऽर्थो यस्य तस्य भाव इत्यर्थः । अर्थशब्दः सम्पादनीयवाची ।

ऊनार्थेऽपीति । तथा च पूर्वसदृशेत्येव सिद्धे इदमत्र कर्त्तव्यमिति भावः । व्य-
वस्थाविपर्ययेति । सर्वनामसंज्ञकार्यमित्यर्थः ॥ प्रत्याख्यानादिति । तृतीयासमा-
सेऽर्थग्रहणमनर्थकमर्थगति ह्यवचनात् । अन्तरेणापि वचनमर्थगतिर्भविष्यति ।
तत्कृतस्यार्थत्वाव्यभिचारादित्यर्थः । नायमर्थनिर्देशः । किन्तर्हि योगाङ्गमि-
दमिदिश्यते । सति च योगाङ्गे योगविभागः करिष्यते । तृतीया तत्कृतेन गुण-
वचनेन समस्यते । ततः अर्थेन । अर्थशब्देन च तृतीया समस्यते । धान्यार्थः ।
वसनार्थः । हिरण्यार्थः । पूर्वसदृशसमोनार्थं इत्यर्थग्रहणञ्च कर्त्तव्यम् । अत्र भा-
ष्ये योगविभागशब्दो योगविभागसमानफलकवाक्यभेदपरः । अर्थशब्दोऽत्र ध-
नपर्यायः । इत्युदाहरणाद्येति । तत्र हि पूर्वसदृशेतिसूत्रमनुपन्यस्य तृतीया
तत्कृतेतिसूत्रोपन्यासेन ध्वनितमित्यर्थः । अस्य । अवरशब्दस्य । परिभाषार्थमा-
ह । यत्र गतिकारकेति । केवलस्यापीति । एतेन नखभिन्न इत्युदाहरणमपि
युक्तमेव । कर्त्तृत्वकर्मत्वयोः क्रियानिरूपितत्वेन तद्वाचकं सुबन्तान्तरमिवालघ-
टितमपीत्यभिप्रायेण मूलेऽतिप्रसङ्ग उक्त इत्याह । काष्ठैरितीति । मतान्तरमा-
ह । अन्ये त्विति । इत्यर्थमतादिति । एतेनैतत्सूत्रे सुपेति न सम्बध्यत इत्यत्र ता-
त्पर्यग्राहकं कृद्ग्रहणम् । ननु काष्ठैः पचतितरामित्यत्र तद्धारकतया कृद्ग-
हणस्य चारितार्थ्यात्कथङ्कृदन्तेनैवेत्यस्य लाभ इत्यत आह । उक्त इति ।
शानजन्तादिभिरिति । आदिना शतृक्त्वातुमुन्प्रभृतिपरिग्रहः । हस्तेन भुञ्जानः ह-
स्तेन कुर्वन् । दात्रेण लूनवान् । परशुना छिन्नवान् । बहुलग्रहणेनेति । इदमु-
पलक्षणम् । बहुलग्रहणेन क्वचित्तृतीयातिरिक्तकारकविभक्त्यन्तस्यापि समासः ।
पादाभ्यां ह्रियते पादहारकः । गले चोप्यते गलेचोपक इति । उभयत्रापि आकु-
सकालकर्मणि ण्वुल् । उत्तरपदस्यामूर्धन्याकादित्यलुक् । शानजन्तादिभिः समासा-
भावे किम्प्रमाणमिति चेत् । कर्त्तृकरणे कृता क्तेन कर्त्तृकरणे कृता क्तेनेति
वक्तव्यम् । अहिहतः । नखनिर्भिन्नः । दात्रलूनः । परशुच्छिन्नः । कृता क्ते-
नेति किमर्थम् । इह मा भूत् । दात्रेण लूनवान् । परशुना छिन्नवान् । तत-
र्हि वक्तव्यम् । न वक्तव्यम् । बहुलग्रहणात्सिद्धमिति भाष्यमेव । पादहारकादि-
षु तु मापमहतेति वा पादहारकाद्यर्थमितिभाष्यमेव समासग्रहणे मानम् ॥
अधिकार्थवचन इत्यत्राधिकरण वाभाविवक्षितया अधिकरण वचनमपवादः

नमित्यर्थः। तत्र स्तुत्यर्थे निन्दार्थे वा तदाह। स्तुतिनिन्दाफलकमित्यादि। पूर्वाभ्यस्त्वे नेत्यादौ यथायोगमन्वयः उत्तरसूत्रेऽपि बहुलग्रहणमनुवर्त्तते। तेन यत्प्रत्ययान्तयोगे समासो भवति काकैः पातव्यइत्यादौ न। क्वचित्तु साधनवैकल्यप्रतिपादनाय यत्र वाक्यप्रयोगस्तत्रापि भवति। यथा वुसोपेन्धम्। तृणोपेन्धाम्। घनवात्यमिति। अग्ने रल्पत्वात्कष्टमेतद्वुसेन वा तृणेन वा प्रज्वालनीयम्। यत्र वा शर्करानिर्मितमोदके दन्तैर्हस्ताभ्यां वा चोदस्यासम्भवप्रतिपादनाय घनेनायःप्रभृतिनेदं घात्यमित्युच्यते तत्रापि भवति। अत एव भाष्यकृतोक्तं साधनङ्कृतेति वा पादहारकाद्यर्थमिति। तदर्थान्तर्भाव इति। उपसेकाद्यर्थान्तर्भाव इत्यर्थः। तृतीयान्तस्य क्रियावाचकेनैव सामर्थ्यं न त्वन्येनेति सामर्थ्याभावात्समासाप्राप्तिपरिहारायेदं वाक्यम्प्रयुज्यते तत्रोपसेकादिक्रियाया एवान्तर्भावो न तु युक्तक्रियाया इत्यत्र मानमाह। सर्वलोकप्रसिद्धेति। प्रविश पिण्डीमित्यत्रेवात्रापि वाक्यैकदेशप्रयोगेण दध्नेत्यादेरोदनादिना सामर्थ्यम्। योगाद्रूढिर्बलीयसीति। योगमर्यादया यत्रार्थप्रतीतिस्तत्रावयवशक्तिज्ञानस्यापेक्षा यत्र तु रूढ्या तत्र न तस्यापेक्षा अत एव रूढेर्बलीयस्त्वम्॥ तदर्थेन प्रकृतिविकृतिभाव एव समासे इत्यत्र बलिरचितग्रहणस्य ज्ञापकत्वमुक्तन्तदुपपादयति। तद्योगे हीति। एतत्सर्वमिति। चतुर्थी तदर्थार्थ इतिसूत्रविषयता यत्र प्रकृतिविकृतिभावस्तत्रैवेत्यत्र बलिरचितग्रहणस्य ज्ञापकत्वमश्ववामादौ षष्ठीसमास इत्यादि चेत्यर्थः। ननु बलिरचितग्रहणस्यैव ज्ञापकत्वमुक्तन्न तु हितसुखग्रहणस्येत्यत्र किम्बीजमत आह। हितसुखयोग इति। हितसुखयोगे तादर्थ्ये चतुर्थ्यसम्भव उपपादितः हितसुखाभ्यामित्यादिना॥ ननु रन्धनाय स्थालीत्यत्रापि षष्ठीद्त्वाऽश्ववासादिवत्समासः कुतो नेत्याकाङ्क्षायामाह। रन्धनायेत्यादि। अभिधानस्वाभाव्यात्। शब्दशक्तिस्वभावात्। न तत्र षष्ठीसमास इति। तदुक्तङ्कैयटेन। रन्धनस्थाल्यादयस्त्वनभिधानात्षष्ठीसमासा न भवन्तीति। किमत्र प्रमाणमिति चेदुपक्रमस्थभाष्यमेवेति गृहाण। तथाहि। चतुर्थी तदर्थमात्रेण चेत्सर्वप्रसङ्गोऽविशेषात्। सर्वस्य चतुर्थ्यन्तस्य तदर्थमात्रेण सह प्रसङ्गो भवति। अनेनापि प्राप्नोति। रन्धनाय स्थाली। अवहननायोलूखलमिति। अथानेनापि प्राप्नोतीत्युक्त्वा समासः कथमप्येषु न भवति॥ एतेन। पूर्वा-

ऊनार्थोऽपीति । तथा च पूर्वसदृशेत्येव सिद्धे इदन्न कर्त्तव्यमिति भावः । व्य-
वस्थाविषयेति । सर्वनामसंज्ञकार्यमित्यर्थः ॥ प्रत्याख्यानादिति ॥ तृतीयासमा-
सेऽर्थग्रहणमनर्थकमर्थगति ह्यवचनात् ॥ अन्तरेणापि वचनमर्थगतिर्भविष्यति ।
तत्कृतस्यार्थत्वाव्यभिचारादित्यर्थः ॥ नायमर्थनिर्देशः । किन्तर्हि योगाङ्गमि-
दन्निर्दिश्यते । सति च योगाङ्गे योगविभागः करिष्यते । तृतीया तत्कृतेन गुण-
वचनेन समस्यते । ततः अर्थेन । अर्थशब्देन च तृतीया समस्यते । धान्यार्थः ।
वसनार्थः । हिरण्यार्थः । पूर्वसदृशसमोनार्थ इत्यर्थग्रहणञ्च कर्त्तव्यम् । अत्र भा-
ष्ये योगविभागशब्दो योगविभागसमानफलकवाक्यभेदपरः । अर्थशब्दोऽत्र ध-
नपर्यायः । इत्युदाहरणाच्चेति । तत्र हि पूर्वसदृशेतिसूत्रमनुपन्यस्य तृतीया
तत्कृतेतिसूत्रोपन्यासेन ध्वनितमित्यर्थः । अस्य । अवरशब्दस्य । परिभाषार्थमा-
ह । यच गतिकारकेति । केवलस्यापीति । एतेन नखभिन्न इत्युदाहरणमपि
युक्तमेव । कर्त्तृत्वकर्मत्वयोः क्रियानिरूपितत्वेन तद्वाचकं सुबन्तान्तर्हितमाक्षिप्त-
टितमपीत्यभिप्रायेण मूलेऽतिप्रसङ्ग उक्त इत्याह । काष्ठैरितीति । मतान्तरमा-
ह । अन्ये त्विति । इत्यर्थंस्तदिति । एतेनैतत्सूत्रे सुपेति न सम्बध्यत इत्यत्र ता-
त्पर्यग्राहकं कृद्ग्रहणम् । ननु काष्ठैः पचतितरामित्यत्र तद्वाचकतया कृद्ग्र-
हणस्य चारितार्थ्यात्कथं कृदन्तेनैवेत्यस्य लाभ इत्यत आह । उक्त इति ।
मानजन्तादिभिरिति । आदिना शतृक्तवतुप्रभृतिपरिग्रहः । हस्तेन भुञ्जानः ह-
स्तेन कुर्वन् । दात्रेण लूनवान् । परशुना छिन्नवान् । बहुलग्रहणेति । इदमु-
पलक्षणम् । बहुलग्रहणेन क्वचित्तृतीयातिरिक्तकारकविभक्त्यन्तस्यापि समास ।
पादाभ्यां ह्रियते पादहारकः । गले चोप्यते गलेचोपक इति । उभयत्रापि बाहु-
लकात्कर्मणि ण्वुल् । उत्तरपदे लुगभावाद्यलुक् । मानजन्तादिभि. समासा-
भावे किम्प्रमाणमिति चेत् । कर्तृकरणे कृता बहुलमिति
वक्तव्यम् । अहिहतः । नखनिर्भिन्नः । दात्रलूनः । परशुच्छिन्नः । कृता बहु-
लमिति किमर्थम् । इह मा भूत् । दात्रेण लूनवान् । परशुना छिन्नवान् । तर्त-
र्हि वक्तव्यम् । न वक्तव्यम् । बहुलवचनात्सिद्धमिति भाष्यमेव । पादहारकादि-
षु तु भाष्यमदृष्टमिति वा पादहारकाद्यर्थमितिभाष्येण समाधानमिति सारम् ॥
अधिकार्थवचन इत्यधिकरणे स्वाभाविकार्थपरा अधिकस्य वचनमभिधान॰

याधित्वा पूर्वपदस्य सर्वशब्दस्यान्तोदात्तत्वभवति । सर्वेषामयटानामयं श्वेतो गुणो धिक इत्यर्थः । न निर्द्धारणे इत्यस्यापवाद इत्युक्तत्वाच्चासङ्गतनिर्द्धारणषष्ठ्या एवाप्राप्तेरित्याशङ्कते । नन्विति । चितयसन्निधाने निर्द्धारणस्य स्पष्टप्रतीतेः । तमबापत्तिर्येति । बहूनामध्ये प्रकर्षमत्त्वात् । एवञ्च तरबप्युपपन्न इति द्रव्यान्तराधेयापेक्षया पटेषु श्वेताधिक्यप्रतिपादनेऽस्य वाक्यस्य तात्पर्यान्न तमपः प्राप्तिः ॥ इत्यस्यापवाद इति । एतेन शेषलक्षणषष्ठीभिन्ना सर्वाऽपि प्रतिपदाविधानेति सूचितम् ॥ द्विजादिशब्दैरिति ॥ नृणामित्यस्य द्विजशब्देन समभिव्याहारे एव निर्द्धारणषष्ठीत्वमिति भावः । अत एव । चितयसन्निधान इति- नियमस्वीकारादेव । भाष्ये उक्तमिति । तत्र चितयसन्निधानाभावान्न निर्धारणे षष्ठी । एतेन चितयसन्निधान इत्यस्याङ्गलगायाभाष्यमपि प्रमाणम् । ननु पूरणगुणेतिसूत्रेण निषेधात्कथं षष्ठीसमास इत्युक्तत्वाह । गुणवचनेनेति ॥ अनित्य इति । संज्ञाप्रमाणत्वादितिनिर्देशादिति मूले एवोक्तम् ॥ वस्तुतः पुरुषोत्तम इत्यत्र कर्मधारय इत्याह । उत्तम इति॥ प्रतिपदविधानेत्यस्य धातुकारकविशेषोपादानेन विहिता षष्ठीत्यर्थस्तदाह । ज्ञोऽविदर्थस्येति । प्रतिपदविधानेत्यस्य युक्तिसिद्धत्ववादिमतन्निरस्यति । यत्त्विति । शेषत्वविवक्षाभाव इति एवञ्चौषधं शरीरे तैलेनोपायेन प्रवर्त्तत इत्यर्थे तैलस्य प्रतिजानीते शरीरे औषधमित्यादौ शरीरौषधशब्दाच्छेषत्वविवक्षया षष्ठी न । तत्रेति । कर्माश्रयषष्ठीविषये सूत्रोपात्तसकर्मकाणामकर्मकवद्वचनमितिवार्त्तिकप्रत्याख्यानाय शेष इति वर्त्तते इति भाष्यकृतोक्ते परेण शेषय क इति पृष्टे षष्ठी शेष इतिसूत्रोक्तं कर्मादीनामविवक्षा शेष इति सिद्धान्तिना स्मारितमे तावता कृत्वोर्थ इत्यत्र तत्सम्बन्ध इति भाष्यव्याख्यायाः प्रामाण्यस्वीकर्तुस्तवेत्यर्थे ।ननु न मम कृत्वोर्थ इत्यत्र शेषपदासम्बन्धोऽनुमतः । किन्तु शेष इत्यस्याचापि सम्बन्धः । अत एव द्विर इन्यध्ययनमिति प्राक् प्रत्युदाहृतम् । अत एव च कर्मादीनामविवक्षा शेष इत्यत्रादिपदोपादानमित्यत आह । कृत्वोऽर्थ इति । भाष्यानुग्रहाभावादिति ॥ दृढतरभाष्यानुग्रहाभावादित्यर्थः । बहुवचनदर्शनमात्रेण तत्र तत्सम्बन्धकल्पनं तस्य तु षष्ठी शेष इतिसूत्रोक्तानुवादकतयापि चारितार्थ्यमिति भावः । नात्यन्तमिति । यदा कर्म विवक्षितभवति तदा षष्ठी न भवति स्वराम्यहम्मातरमि-

क्रियाख्यानेन । ननु यदि प्रकृतिविकृतिभाव एवेति नियमाभावस्तदा चतुर्थी
समासे चतुर्थी तदर्थं इतिसूत्रेण पूर्वपदप्रकृतिस्वरापत्तिरत आह ॥ चतुर्थीस
मासेऽपीति । अनेन । चतुर्थी तदर्थं इत्यनेन । अत एव । क्तो चेतिसूत्रेऽपि तदर्थ
इत्यनुवृत्तेरेव । उक्तार्थेति । चतुर्थी तदर्थं इतिसूत्रस्य प्रकृतिविकृतिभाव ए
प्रवृत्तिरित्यनेनाभिहितो योऽर्थस्तज्ज्ञापकतेत्यर्थः । पञ्चमी भयेनेतिसूत्रे भयश
ब्दस्यैवोपादानाद्भीतिभीशब्दाभ्यां समाससंज्ञासिद्ध्यर्थमेकेन वार्त्तिककृतोक्तमय
भीतिभीभिरिति । अपर आह । भयनिर्गतजुगुप्साभिरिति तदनुसारेणाह । नि
र्गतेति । नन्वेवमपि उपरतादिशब्दैः समासो न प्राप्नोतीत्यत आह । भोगोपर
तेत्यादि । न च भयार्थैरित्येव सिद्धे भीत्यादीनाम्पृथगुपादानं व्यर्थमिति वा
च्यम् । वृकाद्भास इत्यत्रापि समासापत्तेः । कानि चिदेवेति । एवञ्चाभिधान
स्वाभाव्यात्समाससंज्ञाप्रवृत्तिरिति प्रासादात्पतित इत्यत्र न भवतीत्युक्तम् तेन
स्वर्गपतितः प्रासादात्पतित इत्येव भवति न तु स्वर्गात्पतितः प्रासादपतित
इति कुत इति नाशङ्कनीयम् । मंगलसम्बन्धाभाव इति । अमङ्गलसम्बन्धाभा
वस्याप्युपलक्षणम् । अल्पार्थान्मङ्गलामङ्गलवचनमिति हि वार्त्तिककृता अ
नुविधायकमूत्रमुक्तम् । लेशादय इति । भवादिशब्देन लवादयो गृह्यन्ते ।
व्याख्यानादिति । व्याख्यानमेव स्पष्टयति । स्तोकाल्पाभ्यामित्यादिना । गुणा-
त्तरेणेतिवचनस्यासमिद्धत्वशङ्कां वारयति । इदञ्चेति । यद्यपीदं वचनं सर्वज्ञ-
चकारस्त्वं इतिसूत्रे भाष्ये पठितस्तथापि समाससंज्ञासम्बन्धादत्रोक्तम् सकृता
तच हि कारस्त्वं वक्ष्यतीत्यर्थः । सर्वज्ञ इतीयत्य भमाने इहापि प्रसज्येत ।
सर्वेषां श्वेतः । सर्वश्वेतः । कथञ्चात्र समासः । षष्ठी सुबन्तेन समस्यत इति ।
गुणेन नेति प्रतिषेधः प्राप्नोति । एवञ्चाहि गुणान्तरेण समासान्तरलोपसम-
र्थो श्वेततरः सर्वश्वेत इति । अत्र भाष्ये गुणेन नेति प्रतिषेधः प्राप्नोतीत्युक्त्या
षष्ठीसमास एवायम् न कर्मधारयादिः । तरलोपोऽपि समासविधयोगात्षष्ठी
समास एव न तु कर्मधारयादौ । न च षष्ठीसमासः सर्वशब्दस्य । पश्चिमवर्मे
सर्वं गुणैतिसूत्राणमर्थमित्यनुशासने । एतदर्थमेव सर्वज्ञ्चेतिसूत्रे पठितव तु समा-
सप्रकरणे । एव सति याद्भयो वाक्यार्थः सम्पद्यमान । गुणवोधकादिति ।
एवञ्चानेन षष्ठीसमासे तरपव्ययस्य लोपे सर्वश्वेत इत्यत्र समासाल्लोपः

भावादेव। भाष्यकैयटयोरिति। तत्र हि कर्मणि या षष्ठी सा न समस्यते इति या कर्मणि यः क्त इति वा सूत्रार्थ इति मन्दिग्ध कर्मणि या षष्ठीतिव्याख्याने इध्मप्रव्रश्चनः पलाशशातन इत्यत्र समासनिषेधप्राप्तिमभिधाय कर्मणि यः क्त इतिव्याख्याने किमुदाहरणम्। ब्राह्मणस्य भुक्तः। वृषलस्य पीतः। क्तानिर्दे-शेऽसमर्थत्वादप्रतिषेध.। समासः कस्मान्न भवति। असामर्थ्यात्। कथमसाम-र्थ्यम्। सापेक्षमसमर्थंभवतीति। द्रव्यमत्रापेक्षते इत्युक्तम्। तत्र कैयट.। ब्रा-ह्मणस्येति षष्ठी न भुक्तापेक्षया। न लोकेतिनिषेधात्। किन्तु ब्राह्मणस्य य ओदनादिस्तोऽन्येन भुक्त इति प्रतीयते इत्युक्तन्तेन न्यायेन ब्राह्मणस्य गत इत इत्यत्रापि समासाप्राप्तिरुक्तैवेत्यर्थ.। काष्ण्यादय एवाचेति। केवलगुणवाचका एवेत्यर्थः। ननु शुक्लादीनाङ्केवलगुणपरतायान्तेषामप्युदाहरणत्वसम्भव इत्यत आह। गुणिपरतापीति। एवञ्च विशेष्यबोधकशब्दविशेषोपादाने प्रकरणा-दिना तद्बोधकरीत्याऽसामर्थ्यम्। नान्यत्र। विशेष्याश्रयाने। एवञ्च यदा शुक्ला इत्यादीनाम्प्रयोगस्तदापि विशेष्ये दन्ते वृत्तिरस्त्येव। गुणे शुक्लादयः पुंसीति-कोशस्य गुणात्मकविशेष्ये वृत्तावित्यर्थः। शुक्लो वर्ण इति यथा। एवञ्च ब्राह्म-णस्य शुक्लो वर्ण इति यत्र प्रयोगस्तत्राप्युक्तरीत्या शुक्ला इत्यनेनासामर्थ्यम-स्त्येव। अत एवोक्तङ्काष्ण्यादय एवात्रोदाहरणमिति। तदुक्तम्प्रकृतसूत्रे भाष्ये षष्ठीतिसूत्रे। किम्पुनः कारणं गुणेन नेत्युच्यते न पुनर्गुणवचनेन नेत्युच्येत। नैवं शक्यमिह न स्यात्। काकस्य कार्ष्ण्यम्। बलाकायाः शौक्ल्यमिति। एतदेव ह्यस्यपि तस्मिन्योगे उदाहरणम्। इहोदम्ब्राह्मणशुक्ला वृषलस्य कृष्णा इति। असामर्थ्यादत्र न भविष्यति। कथमसामर्थ्यम्। सापेक्षमसमर्थम्भवतीति। द्रव्यमत्रापेक्ष्यते दन्ता इति। तस्माद् गुणेन नेति वक्तव्यमिति। एतेन ब्राह्मणस्य शुक्ला इत्यत्र शुक्ला इत्यस्य वाक्यैकदेशन्यायेन शुक्ला दन्ता इत्यर्थे प्रयोगादसमर्थ प्रकृतिकत्वाभावः स्फुट एव। पूरणार्थेन चेतीति। अनित्य इति शेषः। तत्र प्रमाणप्रदर्शनायाह। लोपे चेत्यादपूरणमित्यादीति। मध्यमलोपी समासः। कर्मधारयः। नन्वेवं काककार्ष्ण्यमित्याद्यपि स्यादत आह। अव्ययेति। अत एव। अस्य निषेधस्यानित्यत्वाभावादेव। नन्वस्यानित्यत्वाभावे गोर्धियतिरि-त्यादिसिद्धिः कथमत आह। सङ्ख्याशब्दा इति। मासशब्दा इतीति। भावप्र-

तिभाष्यीयव्याख्यानवाक्ये आदिपदानुच्चारणात् कर्मपदोच्चारणाच्च । यद्यपि कर्मपदघटिताधीगर्थेतिसूत्रापेक्षया ज्ञोऽविदर्थस्येत्यस्य पुरस्फूर्त्तिकतया करणादीनामविवक्षेत्येवोक्तं स्यादिति भावः । नन्वेवं ज्ञोऽविदर्थस्येत्यनेन विच्छेदादधीगर्थेतिसूत्रे कथं शेषपदसम्बन्ध इत्यत आह । अधीगर्थेत्यादावपीति । दिव इतिसूत्र इति । दिवस्तदर्थस्येतिसूत्रेऽपि शेष इति वर्त्तते अन्यथा कर्माव्ययषष्ठीविषय इतिवार्त्तिकबलाच्छेषस्य दीव्यत इति भाव इष्टस्यासिद्धिरित्युक्ता कृत्वोर्थ इतिसूत्रव्याख्यानसमये विस्तरेणोपपादितमित्यर्थः । दिवस्तदर्थस्येतिसूत्रेऽपि शेषपदसम्बन्धादेवाह । अतस्य देवितेत्यादावपीति । अनेनैव । दिव इति सूत्रेणैव । अत एव । ज्ञोऽविदर्थस्य करणे कृत्वोर्थप्रयोग इतिसूत्रविहितषष्ठी यत्र तत्र समासनिषेधस्येष्टत्वादेव । इदम् । प्रतिपदविधानमितिवचनम् । अत एव । अस्यापूर्वत्वादेव । सर्वा प्रतिपदविधानेति । पदम्पदम्प्रतिपदम्प्रतिपदं विधानं यस्याः सा प्रतिपदविधानेत्यर्थः । यच्च कारकविशेषोपादानेन विहिता इति फलितम् तदाह शेषलक्षणा वर्जयित्वेति । एवं सति कर्त्तृकर्मणोरिति सूत्रविहितषष्ठ्यन्तस्य समासाभावः स्यादत आह । कर्त्रियोगेतीति । तथा च कर्त्रियोगेतिवचनमस्य बाधकमिति भावः । तत्र । शेषलक्षणां वर्जयित्वेति यावत् । शेषमात्रेति । अत्र मात्रपदेन कर्मपदोपादानेऽपि शेषपदानुवृत्त्या या विहिता तद्व्यावृत्तिः । तेन । कारकविशेषोपादानेनेतिव्याख्यानेनैव । न तत्त्वम् । न प्रतिपदविधानत्वम् ॥ अत्रकत्स्यापीति । तस्यापि पूरणार्थत्वात् । न तु पूरणार्थकप्रत्ययान्तत्वादित्यर्थः । व्याख्यानादिति । इन्द्राग्नी न्यूयमाणस्यार्थशब्दस्य द्विषु मध्यममूलकव्याख्यानादित्यर्थः । व्याख्यानात् । गुणार्थैरित्यस्य गुणमिश्रा या विषयता तच्छालिशाब्दबोधजनकैरित्यर्थमूलकव्याख्यानादित्यर्थः । गुणपदेनासामर्थ्यादिति । ब्राह्मणपदार्थस्य इतरपदार्थैःनान्वयादिति भावः । [illegible] । परे त्विति । सामर्थ्यम् । [illegible]पदेन सामर्थ्यम् । षष्ठ्यादिति । समासप्रातिपदषष्ठ्यभावादित्यर्थः । तदेवोपपादयति । अत एवेति । [illegible] । किन्तु [illegible] इति शेषः । [illegible] तिव्याख्यानस्य [illegible] राजपुरुषस्य [illegible] परिनिष्ठितविग्रहवा [illegible] षष्ठीत्यस्य [illegible] स्यात् । अत एव । [illegible]

येन सुबन्तेन समासस्तन्निरूपितसम्बन्धार्थकमेव षष्ठ्यन्तं गृह्यत इत्युक्तमित्यत्र तादृशषष्ठ्यभावात्कथं समासप्राप्तिरितिनिषेधो व्यर्थ इति वाच्यम् । यत्र व्यधिकरणषष्ठ्यन्तयोः समासस्तत्र तादृश्येव षष्ठी गृह्यते पूर्वोक्तभाष्यप्रामाण्यात् यत्र तु सामानाधिकरण्यं तत्र नायन्नियमः । अत्र प्रकृतसूत्रस्थसमानाधिकरणग्रहणमेव मानमिति सूत्रकाराभिप्रायः । तत्पक्षेऽपीति । आर्थिकसामानाधिकरण्येन तत्पक्षेऽपि समासनिषेध इति प्राचीनाः । वस्तुतस्त्वनेन सूत्रेण निषेधकरणसामर्थ्यात्तत्पक्षेऽपि परस्परान्वय एव । तदेवोपपादयति । क्रियान्वयेति । अस्यावश्यकत्वात् । समानाधिकरणग्रहणस्येत्यर्थः । ननु समानाधिकरणसमर्थवदित्यस्य तक्षकस्य सर्पस्येत्यत्र चारितार्थ्यात्प्रकरणान्तरस्थे इस्मोः सामर्थ्य इति सूत्रे कथम्प्रवृत्तिरत आह । समर्थसूत्रेति । तक्षकस्य सर्पस्येत्यत्र विशेषणतावच्छेदकस्य तक्षकत्वस्य सर्पत्वात्मकविशेष्यतावच्छेदकव्यभिचारित्वाभावेन न विशेषणसमासप्राप्तिरितिग्रादिमतन्निरस्यति । विशेषणमित्यादिना । विशेषाभावादिति । उभयथाऽप्यन्तोदात्तत्वात् । नन्वेवमपि प्रथमान्तयोः समासं कृत्वा ततः षष्ठ्यन्तचकमर्पस्येति स्यादेवेत्यत आह । एवमिति ॥ अन्यत्राप्यनभिधानशङ्कानिरासायाह । एतच्चेति । एवं च । भाष्यहस्त्याद्युदाहृतेति स्वीकारे च । ननु प्रकृतसूत्रे समानाधिकरणग्रहणसामर्थ्यादित्येव वक्तव्ये बहुलग्रहणपर्यन्तानुधावनमफलमत आह । निषेधसामर्थ्येति । गतार्थत्वादिति । समानाधिकरणग्रहणसार्थक्यादित्यर्थः । तथा चान्तोदात्तस्य समनर्थस्य इत्यस्य वारणाय समानाधिकरणग्रहणमिति भावः । गुणप्रवृत्तिनिमित्तकत्वेनेति । एतेन प्राचीनसम्मतमुपसर्जनसंज्ञाबोध्यमुपसर्जनत्वमप्यस्त्येवेति सूचितम् । गौरितीति । पोटायुवतीतिसूत्रेण समासविधानादिति भावः । कस्य चिन्मते स्वरूपव्याक्रियैव पराक्रियेति रीत्याऽसङ्गतमिति सूचयन्नाह । ये त्विति । षष्ठ्यन्तयोरितिप्रागुक्तभाष्याभिप्रायेणाह । परे त्विति । इदम् । समानाधिकरणग्रहणाकरणम् । उक्त भाष्य । येन सुबन्तेन समासस्तदर्थनिरूपितषष्ठ्यन्तेनासामर्थ्यं सद्भावरूपः । कथमिति । परस्परान्वयात्कर्मधारयस्थलइवात्रेव सामर्थ्यमिति भावः । व्याख्यानात् । कर्मणि चेतिसूत्रभाष्ये कर्मणि यः स इत्यर्थे पूजायाम्प्रतिषेधोऽनर्थकः राज्ञाम्पूजित । राज्ञामर्चितः । कर्मणो-

त्तिनिमित्तका इत्यर्थः । अत्र भावशब्दो धर्ममात्रपरस्तस्य भाव इत्यत्र यथा । पङ्क्तिविंशतीतिसूत्रे भाष्यमिति । तत्र कैयटोऽपि । भाव इव भावः । यथा शुक्लादिभावः पराश्रय एवमन्योऽपि धर्म इति । तदेषामिति । विंशत्यादीनामित्यर्थः । तत्सादृश्यात् । गुणसादृश्यात् । अन्यथा । गुणबोधकत्वस्यैव स्वीकारे । न चैवं रीत्या कार्ष्ण्यस्यापि भावत्वात्तद्वाचकेन कथमिषेध इति वाच्यम् । यद्धर्ममुद्दिश्यीकृत्य यादृशानुपूर्व्यवच्छिन्नस्य शब्दस्य गुणे प्रवृत्तिस्तस्य धर्मस्य गुणिसमानाधिकरणतादृशपूर्व्यवच्छिन्नशब्दप्रवृत्तिनिमित्तत्वे भावशब्दत्वेन प्रकृते व्यवहार । विंशत्याद्याः सदैकत्वे सर्वाः सङ्ख्येयसङ्ख्ययोरिति कोशेन विंशतिरित्यानुपूर्व्यवच्छिन्नस्योभयत्र प्रवृत्तिबोधनेन गवां विंशतिरित्यादौ विंशतिशब्दस्य यद्धर्ममुद्दिश्यीकृत्य प्रवृत्तिस्तस्य धर्मस्य विंशतिर्गाव इत्यत्र यो विंशतिशब्दस्तत्प्रवृत्तिनिमित्तत्वमस्त्येव । कार्ष्ण्यशब्दस्य तु यद्धर्मे प्रवृत्तिस्तस्य कार्ष्ण्यत्वस्य न कदापि गुणिसमानाधिकरणशब्दप्रवृत्तिनिमित्तत्वमिति भावः । इत्यादि न स्यादिति । अथ हि यथा गुणत्वं पराश्रितत्वम्प्रति सम्बन्ध्यंशे नित्यसाकाङ्क्षत्वरूपत्वया धनापत्यशब्दयोरप्यस्त्वेवेति समासनिषेधादिति शेषः । गुणवचनानामितिवार्त्तिके तु गुणवचनशब्देन गुणिसामानाधिकरण्येन गुणप्रतिपादकानामेव ग्रहणम् । ननु सुहितेत्यत्र कर्तरि क्तस्य सत्त्वेन फलानामवगिरित्रप षष्ठीनिषेध इत्यत आह । भावे क्त इति । फलानामिति कारणस्य शेषत्वविवक्षया षष्ठी । तत्र । फलसुहित इत्यत्र । सम्बन्धत्वेनेति । अवयवशक्तिज्ञानसहकारेण समुदायस्य बोधकतया वाक्यार्थबोधकत्वस्य सत्त्वात् । कर्मणि क्त इति । यत्तु भावे क्त इत्युक्तम्पूर्वत्र तत्, सुहितार्थेत्यत्र सूत्रे द्रष्टव्यम् । सकर्मकत्वादेव दिगुणतापत्तिरितिभट्टिप्रयोग, [illegible] । तत्र भावे क्तस्तु कोऽपि कारके चेति सूत्रेण बोध्यः । अत एव । [illegible] प्रत्ययादेव । [illegible] र्थमिति । सुहितार्थविशेषणानन्वयित्वात् । प्राचीनोक्तं कटाक्षयन्नाह । पूरणे तिति । तादर्थ्ये चेति । [illegible] तथा च [illegible] गुणो [illegible] मिति भाव । चरितार्थ[illegible] समास इति । प्राप्त इति शेष । [illegible]

तिनिर्द्देशात्तृजकाभ्यामित्यस्यानित्यत्वकल्पनेन सर्वेष्टसिद्धिः । स.मर्थ्यादिति । कर्त्तरीति न पूर्वोपस्थितयोस्तृजकयोर्विशेषणन्तृजकाभ्यामित्येव सिद्धेरतस्तदुपादानसामर्थ्यादित्यर्थः । निषेधस्य सिद्धेरिति । यदीदन्निषेधसूत्रं स्यात्तदा जीविकायान्दन्तानां लेखक इत्येवोदाहरणं स्यात्तत्र तु तृजकाभ्यामित्येव सिद्धमिति भावः । नित्यग्रहणाच्चेति । यदीदन्निषेधसूत्रं स्यात्तदा विकल्पेन निषेधाप्राप्तेर्नित्यग्रहणंव्यर्थं स्यादिति भावः । त्वचोनभिधानादिति । अकारान्तान्तशब्दे एव वाक्यरूपेऽउच्चारिते जीविकाप्रतीतेरनभिधानादित्युक्तम् । क्रीडायान्तृचोऽसम्भवादिति । संज्ञाशब्दानान्नियतानुपूर्वीकत्वात् । ण्वुल्तृचावितिसामान्यसूत्रस्य तत्रापि प्राप्तिसम्भावनायामाह । विच्छिन्नत्वादिति । कर्त्तरि चेतिसूत्रस्य कर्तृषष्ठ्यन्तस्थल एव प्रवृत्तेः सा च तृजन्तेन योगे न सम्भवति । कर्त्तुरभिहितत्वादिति भावः ॥ नन्वेवम्पूर्वपदाद्युदात्तत्वविधायकेऽके जीविकार्थे इति सूत्रेऽकशब्दोपादानवैयर्थ्यम्पूर्वोक्तरीत्या तस्यैव सम्भवादत आह ॥ अके जीविकार्थे इतीति । अधिकरणार्थमिति । अधिकरणस्य प्राधान्यविवक्षायान्धात्वर्थस्य विशेषणत्वाद्वात्वर्थनिर्द्देश इत्यस्याप्राप्तेरिति भावः । उद्दालकः श्लेष्मातकः ॥ अवयविवाचकेनेतीति । अत्र सूत्र एकदेशिनेत्यत्र कर्मधारयादपि मत्वर्थीयः । बहुव्रीहिसमासस्य रूढार्थानभिधायकत्वात् । कृष्णसर्पवान्वल्मीक इति यथा । न चैकगोपूर्वादिति ठञ्प्रत्यय एवोचित इति वाच्यम् । अवयविने निर्द्देशस्यैवेनप्रत्ययप्रवृत्तौ मानत्वात् ॥ लिङ्गाविवक्षेति । तेन तस्येदमितिसूत्रस्येदमर्थस्य पुंस्त्वादिविशिष्टत्वेपि प्रवृत्तिः । नित्यनपुंसकत्वाभावादिति । एवञ्च भित्तं शकलखण्डे वा पुंस्यर्द्धोर्द्धं समेंऽशके इत्यस्य प्रायेणेति शेषो बोध्यः । एवं सति प्रकृतसूत्रे नपुंसकशब्दो नपुंसके यो वर्त्तते तस्य ग्रहणार्थन्न तु पुंवाचक एव यस्तस्य ग्रहणार्थमित्याशयेनाह । अवयववाची त्विति । तदुक्तम्भाष्ये । इह कस्मान्न भवति। ग्रामार्द्धो नगरार्द्ध इति । अर्द्धशब्दस्येदन्नपुंसकस्य ग्रहणं पुल्लिङ्गस्यार्द्धशब्दः । क्व पुनरयन्नपुंसकलिङ्गः क्व पुंल्लिङ्गः । समप्रविभागे नपुंसकलिङ्गः । अवयववाची पुंल्लिङ्ग इति ॥ ननु ग्रामार्द्धन्नगरार्द्धमित्यत्रावयववाचिनो नपुंसकत्वन्दृश्यत एवेत्यत आह । अपूपार्द्धमित्यादि । भाष्यतत्त्वमत्रैव । यत्तत्र कैयटः अवयववाची

त्येव सिद्धमिति प्रतिपादितन्तद्दर्शनमूलकात् । यदि सूत्रोपलक्षणम्पूजाग्रहणं स्यात्तदा प्रकृतोदाहरणस्य क्तेन च पूजायामित्येतदुदाहरणत्वसम्भव इति भावः । न च पूजारूपेऽर्थे क्तस्य विधानाभावेन पूजायां यो धातुरित्यर्थकल्पनयाप्येतद्वाक्यं योजयितुं शक्यमिति वाच्यम् । तथा सति पूजार्थेभ्य इत्येव सिद्धे पूजायामित्युपादानानर्थक्यापत्तेः । तद्बुवन्निति । भूते यः क्तस्तदन्तेन योगे कारकषष्ठ्या असम्भवेन शेषषष्ठ्येव स्यात् यद्ययं शेषषष्ठ्यन्तस्य समासनिषेधो न स्यात्तदा षष्ठ्यन्तेनैव समासे सिद्धे तृतीयान्तेन समासकथनमफलं स्यादित्यर्थं कथयता ध्वनितमित्यर्थः ॥ एतेन कारकषष्ठ्या एव समासनिषेधोऽयन्तेन कस्तर्हि समासमर्हितः क्षतवानितिभट्टिप्रयोगोपपत्तिरिति वदन्तः प्रत्युक्ताः । भट्टिप्रयोगस्य तु राजपूजितवदुपपत्तिः सम्भवति तक्रकौण्डिन्यन्यायादितीति । मतिबुद्धिपूजार्थेभ्यश्चेति विशिष्य विधानादस्य शङ्कासम्भवः । असम्भवादिति । एवञ्च विषयभेदाच्च बाध्यबाधकभावसम्भव इति भावः । एतेन वर्त्तमानकाले प्रत्ययविधानेन वर्त्तमानकालो भूतकालतम्बाधेतेत्याशङ्क्य तेनैकदिगित्यतस्तेनेत्यनुवर्त्तमाने उपज्ञात इत्यर्थप्रत्ययविधानेनाबाधः कल्प्यत इति मनोरमायामुक्तम् । दण्डिनापि तथैवानुगदितन्तन्निष्फलमिति ध्वनितम् ॥ कर्मणीति चेति । कर्मणीत्यानुपूर्वीकशब्दघटितसूत्रे चेत्यर्थः । एवञ्च । उक्तव्याख्याने च । नियमशास्त्राणां विधिरूपेण प्रवृत्तिरितिसिद्धान्तानुरोधेन साहचसूत्रे चेति व्याख्यातम् । तृजकाभ्याम् । न च तृचप्रत्यययोः कर्त्रर्थकत्वेनाकस्य षष्ठ्यन्तनियमात् किं तद्ग्रहणेनेति वाच्यम् । उत्तरसूत्रे भावार्थकस्यैवाकः सम्भवेनार्थाधिकारानुरोधात्प्रकृतसूत्रेऽपि भावार्थकस्य ग्रहणमितिशङ्कावारणाय तत् ॥ ननु पत्युः भर्त्तेतिमूलोक्तोदाहरणासङ्गतिः । भर्तृशब्दस्य याजकादिगणे पाठेन समासस्येष्टत्वादत आह । गुणे पत्यर्थभर्तृशब्दस्येति । तत्र । याजकादिगणे । त्रिभुवनविधातुरित्यत्र तृजकाभ्यामित्यस्य जागरूकत्वादित्याशङ्कानिवारणाय शेषषष्ठ्यां तु समासे तथापि तृजकाभ्यामित्यस्य कुतो न प्राप्तिरिति चेत्तत्राह । प्रत्ययस्येति । सूत्रे कर्त्तरीत्यस्योपादानेन कर्तृकर्मणोरित्यस्योपस्थित्या कारकषष्ठ्या उपस्थितत्वात् । तन्निषेधः । समासनिषेधः । कैयटोक्तं इत्यादिरुक्त-
[illegible] शात्रिविशेषण इतीति । नन्वनन्वयो अनिकर्तुं· [illegible]

तिनिर्द्देशात्तृजकाभ्यामित्यस्यानित्यत्वकल्पनेन सर्वेष्टसिद्धिः । स.मर्थ्यादिति । कर्त्तरीति न पूर्वोपस्थितयोस्तृजकयोर्विशेषणन्तृजकाभ्यामित्येव सिद्धेरतस्तदुपादानसामर्थ्यादित्यर्थः । निषेधस्य सिद्धेरिति । यदीदन्निषेधसूत्रं स्यात्तदा जीविकायाम्ण्वुलन्तानां लेखक इत्येवोदाहरणं स्यात्तन्न तु तृजकाभ्यामित्येव सिद्धमिति भावः । नित्यग्रहणाच्चेति । यदीदन्निषेधसूत्रं स्यात्तदा विकल्पेन निषेधाप्राप्तेर्नित्यग्रहणंव्यर्थं स्यादिति भावः । तृचोनभिधानादिति । अकान्तान्तशब्दे एव वाक्यरूपेऽच्चारिते जीविकाप्रतीतेरनभिधानादित्युक्तम् । क्रीडायान्तृचोऽसम्भवादिति । संज्ञाशब्दानान्नियतानुपूर्वीकत्वात् । ण्वुल्तृचावितिसामान्यसूत्रस्य तत्रापि प्राप्तिसम्भावनायामाह । विच्छिन्नत्वादिति । कर्त्तरि चेतिसूत्रस्य कर्तृषष्ठ्यन्तस्थल एव प्रवृत्तेः सा च तृजन्तेन योगे न सम्भवति । कर्त्तुरभिहितत्वादिति भावः ॥ नन्वेवम्पूर्वपदाद्युदात्तत्वविधायकेऽके जीविकार्थे इति सूत्रेऽकशब्दोपादानवैयर्थ्यम्पूर्वोक्तरीत्या तस्यैव सम्भवादत आह ॥ अके जीविकार्थे इतीति । अधिकरणार्थमिति । अधिकरणस्य प्राधान्यविवक्षायान्धात्वर्थस्य विशेषणत्वात्तादर्थ्यनिर्द्देश इत्यस्याप्राप्तेरिति भावः । उद्दालकः श्लेष्मातकः ॥ अवयविवाचकेनेतीति । अत्र सूत्र एकदेशिनेत्यत्र कर्मधारयादपि मत्वर्थीयः । बहुव्रीहिसमासस्य रूढार्थानभिधायकत्वात् । कृष्णसर्पवान्वल्मीक इति यथा । न चैकगोपूर्वादिति ठञ्प्रत्यय एवोचित इति वाच्यम् । अवयविनं निर्द्देशस्यैवेन्प्रत्ययप्रवृत्तौ मानत्वात् ॥ लिङ्गाविवक्षेति । तेन तस्येदमितिसूत्रस्येदमर्थस्य पुंस्त्वादिविशिष्टत्वेपि प्रवृत्तिः । नित्यनपुंसकत्वाभावादिति । एवञ्च भित्तं शकलखण्डे वा पुंस्यर्द्धोऽर्द्धं समेऽंशके इत्यस्य प्रायेणेति शेषो बोध्य । एवं सति प्रकृतसूत्रे नपुंसकशब्दो नपुंसके यो वर्त्तते तस्य ग्रहणार्थन्न तु पुंवाचक एव यस्तस्य ग्रहणार्थमित्याशयेनाह । अवयववाची त्विति । तदुक्तम्भाष्ये । इह कस्मान्न भवति। ग्रामार्द्धो नगरार्द्ध इति । अर्द्धशब्दस्येदन्नपुंसकस्य ग्रहणं पुल्लिङ्गश्चार्द्धशब्दः । क्व पुनरयन्नपुंसकलिङ्गः क्व पुंल्लिङ्गः । समप्रविभागे नपुंसकलिङ्गः । अवयववाची पुंल्लिङ्ग इति ॥ ननु ग्रामोऽर्द्धन्नगरार्द्धमित्यत्रावयववाचिनो नपुंसकत्वन्दृश्यत एवेत्यत आह । अपूपार्द्धमित्यादि । भाष्यतस्त्वमत्रैव । यत्त्वत्र कैयटः अवयववाची

पुंलिङ्ग इति। नियमेन नपुंसकलिङ्गो न भवतीत्येवम्परमेतत् ॥ अवयववाची त्वभिधेयवशात्सर्वलिङ्गः। तथा च प्रयोगो दृश्यते। अपूपार्धं मया भक्षितन्दत्ता-र्धमास्यात्पतितमिति। तन्न। एओङेच इगितिसूत्रस्थभाष्यप्रामाण्येन समप्रवि-भागेऽपि पुंस्त्वदर्शनात्। समप्रविभागे नपुंसकलिङ्ग इति भाष्ये नपुंसकलि-ङ्गोऽपीति शेषो बोध्यः। तदुक्तं समप्रविभाग एवेति। अत्राप्यवयवमात्रविवक्षा-यान्तु ग्रामार्धः पिप्पल्यर्ध इत्येव ॥ आहुरिति। भाष्यतत्त्वविदः। अर्धोहारः। अर्धजरतीयमित्यादिप्रयोगे तु कर्मधारय एव। पिप्पल्या एकविभक्तित्वादिति। नियमेन षष्ठ्यन्तत्वादित्यर्थः। एकविभक्तावषष्ठ्यन्तवचनमित्यस्यैकविभक्तीति-पदघटितसूत्रे यदेकविभक्तिपदन्तदषष्ठ्यन्तस्य बोधकमित्यर्थः। तथा च पञ्चानाङ् खट्वानामित्यत्र खट्वाशब्दात्षष्ठीदर्शनेनोपसर्जनत्वस्य प्रतिषेधः प्राप्नोतीत्याशयेन शङ्कते। नन्वेवमिति। अस्य निषेधस्यैकदेशिस-मासविषयकत्वे मानमाह। इदञ्चेति। ननु पूरणगुणेतिनिषेधस्वा-धित्वेतिमूलोक्तिर्नोपपद्यते द्वितीयशब्दस्य भागार्थकान्प्रत्ययान्ततया पूर-णार्थकप्रत्ययान्तभिन्नत्वादत आह। भागार्थकेति। भाष्ये स्पष्टमिति। तत्र ह्यन्यतरस्याङ्ग्रहणस्य पक्षे षष्ठीसमासफलकत्वमभिधाय क्रियमाणेऽपि वै अन्यतरस्याङ्ग्रहणे षष्ठीसमासो न प्राप्नोति। किङ्कारणम् पूरणेनेति प्रतिषे-धात्। नैतत्पूरणान्तम्। अनो एतत्पर्यवपन्नम्। व्यवहितम् स्वरभेदश्चास इति यावत्।एतदपि पूरणान्तमेव।पूरणग्रामार्थस्तमाह तीयशब्द।अतः पूरणं योऽसौ पूरणान्तात्स्वार्थे भागे अन् सोऽपि पूरणमेवेति।पूरणग्रामार्थ इत्यस्य पूरणाभिन्नो योऽर्थस्तस्य प्रतिपादनमत. स्वार्थिकत्वात्तदन्तमप्यन्यथेत्यर्थः।पूरणशब्दे बाहु-लकात्कर्तरि ल्युट्। पूरयति स्वघटितसमुदायविशेषे विवक्षितसङ्ख्याप्रकारक-प्रतीतिञ्जनयतीति व्युत्पत्तेः।भाष्योक्तैकदेशिसमासप्रत्याख्यानप्रकारमाह। पू-र्वत्यादीति ॥ समानाधिकरणसमासः। अर्धा चासौ पिप्पली चेत्यादिविग्रहः। भाष्यस्वरम इति। तत्र हि किमर्थमकारः अनुकर्षणार्थः। अन्यतरस्यामित्येत-दनुवर्तते। किम्प्रयोजनमन्यतरस्यां समासो यथा स्यात्समासेन मुक्ते वाक्य-मपि यथा स्यात्। ओजिकाश्मास इति। नैतदस्ति प्रयोजनम्। प्रकृता महा-विभाषा तया वाक्यमपि भविष्यति। इदन्तर्हि प्रयोजनन्द्वितीयाश्रासोऽपि

यथा स्यात् । अयमप्युच्यते; द्वितीयासमासोऽपि तदुभयं वचनाद्भविष्यति । एवन्तर्हि नायमनुकर्षणार्थश्चकारः । किन्तर्ह्यत्वमनेन विधीयते । प्राप्तापन्न द्वितीयान्तेन सह समस्येते । अत्वञ्च भवति प्राप्तापन्नयोरिति । प्राप्ता जीविकाम्प्राप्तजीविका । आपन्ना जीविकामापन्नजीविका इत्युक्तम् । अत्र कैयटः । चकारेण समुच्चयार्थेनाकारप्रश्लेषोऽनुमीयते सौत्रत्वाच्च निर्देशस्य प्रकृतिभावः प्रगृह्याश्रयो न भवति॥ एवञ्चाद्यकाराभिधानेन प्राप्तापन्नयोरदेशत्वात्सन्निधानेन च प्राप्तापन्न इत्यत्रैवाकारप्रश्लेषोऽनुमीयते ॥ अनिष्टव्याप्तस्तद इति । यदा जातशब्दात् षष्ठीङ् कृत्वा समाससंज्ञा क्रियते तदा अनिष्टम्प्राप्नोति । इदं सिद्धमिति । मासजात इति रूपमित्यर्थः । जातवच्छब्देन । क्तवतुप्रत्ययान्तेन । एतेन तत्र पूर्वोक्तस्वरविधायकस्याप्राप्तिर्लभ्यते । केचिदित्यनेन सूचितामरुचिम्प्रकटयति । परे त्विति । यदुक्तमुपक्रमे षष्ठीसमासेन सिद्ध इति तदसङ्गतमित्याशयेनाह । परिच्छेद्यत्वादि । अत एव । एतादृशनियमस्वीकारादेव । अन्यथा । परिच्छेदकादपि षष्ठीस्वीकारे । तत्प्राधान्यम् । जातशब्दार्थप्राधान्यम् । तत्रैव समाप्नोति । त्वयापि जातशब्दाद्यदा षष्ठी तदैव वैपरीत्यापत्तिः स्वीकृता यद्यप्यत्यादिनोक्तमप्यसङ्गतमित्याशयेनाह । किञ्चेति । गमनादिकर्तृत्वपीति । भवदुक्तविग्रहवाक्याज्जननकर्तृत्वम्मासस्यैव प्रतीयते । मासस्यान्यपदार्थे सम्बन्धश्च बहुव्रीहिणा चित्रगुरित्यत्र स्वस्वामिभाव इव प्रकृतेऽपि क्वचन कल्पनीयः । स च स्वपरिच्छेद्यजननाश्रयत्ववत्स्वपरिच्छेद्यगमनशयनकर्तृत्वमपि सम्भवतीति भाव. ॥ वृत्तिविग्रहयोः समानार्थत्वनियमाभिप्रायेणाह । अत्रेति । पूर्वंजातमस्कारेति । पूर्वोक्तनियमेन परिच्छेद्यवाचकात्षष्ठी जातापि वृत्त्यर्थबोधकतायास्तदन्तघटिते विवक्षायां न निवर्तत इत्यर्थः । अन्यथा । वृत्त्यर्थबोधकविग्रहवाक्ये मासशब्दात्षष्ठीस्वीकारे । प्रत्ययानाम्प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमस्य प्रकृते त्यागे बीजमाह । शब्दस्वभाव एवेति । अस्यैव हेतुत्वमाह कैयटोऽपि । वृत्तिवाक्ययोः परिमाणिनः प्राधान्याप्राधान्ये शब्दशक्तिस्वभावाद्भवत इति । अन्यमतं खण्डयति । यत्त्विति । समानार्थत्वेति । समानविशेष्यकप्रतीतिजनकत्वं हि समानार्थत्वमिति भावः ॥ ननु किम्प्रधानोऽयमित्यादिभाष्येण समासस्यैव प्राधान्यन्दर्शितन्न तु विग्रहस्येति कथमेतदित्यत आह । किम्प्र-

धानोऽयमित्यादि । अन्यथा । उभयपदत्वाभावे ॥ एतद्विषये विशेषमाह ॥ अनेति । अनभिधानादिति । गमकाभावेन द्वित्वाद्यप्रतीतेरिति भावः । एतद्विषयमेव । तत्रत्यतत्पुरुष पदस्यैतद्विहिततत्पुरुषपदत्वादेव ॥ सप्तम्यन्तस्य शौण्डादिभिः सामर्थ्यमुपपादयति । अधिकरणेति ॥ मनोरमोक्तं दण्डाद्युक्तञ्च दूषयति । आसत्त्यादीति ॥ तदप्रतीते. । आसत्त्यादिक्रियाया अप्रतीतेः । अत एव भाष्यकृता एवन्नाभिहितम् ॥ तपसा सिद्ध इति । प्रधानस्य सापेक्षत्वेऽपि समास । स्यात इत्यर्थ इति ॥ अस्मिन्नर्थे न सापेक्षत्वमपीति भावः । व्याख्यानादिति । ध्वाङ्क्षेण क्षेपेऽर्थग्रहणम् । इहापि यथा स्यात् । तीर्थकाक इतीतिभाष्यमूलकादित्यर्थं । एव हि निन्द्येति । तदुक्तभाष्ये । यथा तीर्थे काकाश्चिरं स्थातारो न भवन्ति । एवं यो गुरुकुलानि गत्वा न चिरन्तिष्ठति स उच्यते तीर्थकाक इति ॥ उपलक्षणमिति । तदुक्तभाष्ये । *कृत्यैर्नियोगे यत्प्रत्ययेनेति वक्तव्यम्* । पूर्वाह्णेगेयं साम । प्रातरध्येयोऽनुवाक इति । तत्तर्हि वक्तव्यम न वक्तव्यम् । ऋण इत्येव सिद्धम् । इह यद्यस्य नियोगतः कार्यमृणन्तस्य तद्भवति । तत्र ऋण इत्येव सिद्धम् । यद्यस्येति । अवश्यकर्त्तव्यतासामान्यादुपचारादन्यथापि ऋणशब्दस्य प्रयोगदर्शनाद्गौणस्याप्यर्थस्य शास्त्रे लक्ष्यवशेन क्वचिद्ग्रहणमित्यर्थ इति कैयटः ॥ अभिधानस्वाभाव्यादिति । तदुक्तभाष्ये । यद्दृक्षद्दर्त्तव्यम् । इह मा भूत् । पूर्वाह्णेदातव्या भिक्षेति ॥ नन्वभिहितत्वात्तत्रेतिशब्दात्सप्तमी दुर्लभेत्यत आह । अधिकारेति । तेन । सप्तमीग्रहणानुवर्त्ततेन । तृतीयापदेन परमेण कारकेण परमकारकेणेत्यत्र पूर्वपदप्रकृतिस्वरवारणाय प्रतिपदोक्तस्य तृतीयासमासस्य ग्रहणात्तत्साहचर्यात्सप्तमीपदेन प्रतिपदोक्तस्य समासस्य ग्रहणादिति भावः । ननु पूर्वपदप्रकृतिस्वरोऽव्ययत्वेन सिद्ध इत्यत आह । अव्ययत्वेनेति ॥ नकुलस्थितशब्दस्य क्तान्तत्वमुपपादयति । तद्रूपेति ॥ चकारबलादित्यन्तर इति शीक्तस्य बीजमाह । समासेति । तदुक्तभाष्ये । किमर्थश्चकारः । एवकारार्थ. । पात्रेसमितादय एव । परमं पात्रेसमिता इति ॥ अत्र कैयटः । वैयधिकरण्येऽपि विशिष्टपदुक्तसमासः प्राप्नोति । परममिति क्रियाविशेषणमिति । परमाः पात्रेसमिता इति पाठो न्याय्यः ॥ पूर्वकालेतिशब्दस्य समासादर्शनादाह । अत्र पूर्वकालशब्द इति । भुक्तानुमितादिसामर्थ्यदर्शनमत्र व्याख्याने शरणम् ॥ अनेकार्थेऽपीति ।

गुणक्रियाशब्दत्वात् ॥ अप्रसिद्धत्वादिति । तेन शीघ्रोपस्थितिकत्वात्संख्यावाचकस्यैव ग्रहणम् । विशेषणमित्यस्यैवेति । तस्य स्वविषयताव्यापकविषयताकत्वात् । तत्फलमाह । तेनेति ॥ कालवाचकत्वादिति । दिग्ग्रहणेन दिग्वाचकस्य ग्रहणमिति भावः । अत एव पूर्वपदार्थप्रधान इत्यादिप्रयोगोपपत्तिः । देशवाचकेनापीति । समासो भवतीति शेषः ॥ तद्धितार्थे वाच्ये इति । यस्मिन्नर्थे तद्धितो विधीयते तस्मिन्वाच्य इत्यर्थः । अत एव । पूर्वोक्तकल्पनया तद्धितोत्पत्तिस्वीकारादेव । अनभिधानादिति । अत्र प्रमाणन्तु मत्वर्थे प्रतिषेध इति वार्त्तिकमेव । युक्त्यन्तरमाह । तदर्थे इति । तेन पञ्चखट्वा दशखट्वा । अत्र द्विगुसमासो न भवति । सति च तस्मिन् द्विगोरिति ङीप् स्यात् तथा च बहुव्रीहेष्टाप् तथा पञ्चगुर्दशगुः । अत्र द्विगौ गोरतद्धितलुकीति टच् मा भूदिति । अत एव । भावघञन्तत्वादेव । यदि समाहारपदे कर्मणि घञ् स्यात्तदा पञ्चखट्वाः समाहृता इत्येवार्थः स्यात्तदा नियतविभक्तिकत्वन्न स्यात् । एवञ्च समाहरणमेकस्याङ् क्रियायां गुणे वा समीपीकरणमिहार्थो विवक्षितः । बुद्धिपरिकल्पितभेदवान् । अत एव पञ्चानामिति षष्ठी ॥ समूहसमाहारशब्दयोः पर्यायत्वाभिप्रायेण शङ्कते । समूहस्येति । तत्सामर्थ्यात् । समाहारग्रहणसामर्थ्यात् एवञ्च समाहारे यत्र समासस्तत्रोक्तार्थत्वात्तद्धितस्योत्पत्तिरेव नेति न तद्धितलुग्विषयनिषेधस्य प्रवृत्तिः । सति शिष्टत्वात् । तत्पुरुषसंज्ञाया उत्तरकालिकत्वात् ॥ पापमातुरेऽनपत्य इत्युक्तेर्न लुक् । ततश्च । विकल्पे सति च । एतेन कर्मधारयपूर्वपदकबहुव्रीह्याश्रयणेन पूर्वशालाप्रियशब्दे पूर्वशालाशब्दान्त्यस्योदात्तत्वे सिद्धे प्रकृतसूत्रे उत्तरपदग्रहणं व्यर्थमित्यपास्तम् । कर्मधारयसंज्ञाया वैकल्पिकत्वात्पक्षे पञ्चगोधनस्याप्राप्तेः । स्पष्टञ्चेदमिति । तत्पुरुषसंज्ञाया अवयवसम्बन्धिन्या नित्यत्वं स्पष्टमित्यर्थः । अत एव । वार्त्तिकस्य नित्यत्वमात्रफलकत्वादेव । तत्र विशेषमाह । तत्र तत्पुरुष इति । अत एव । तत्पुरुषसंज्ञाया उभयत्र प्रवृत्तेरिष्टत्वादेव । द्वन्द्वविषये विशेषमाह । द्वन्द्वस्त्विति । ननु पदार्थभेदे द्वन्द्वस्य प्रवृत्तिदर्शनाद्बहुव्रीह्यवयवस्य चैकार्थत्वात्कथम्बहुव्रीह्यवयवानां द्वन्द्वः वार्त्तिकबलादभेदेपि द्वन्द्व इति चेदुभयत्रापि नित्यत्वमात्रबोधकं वार्त्तिकमिति पूर्वग्रन्थविरोध इत्यत आह । वागृषदप्रिय इत्यादाविति । यद्वा

सम्बहुव्रीहावयवयोरुत्तरपद एवेति तत्फलमाह । न द्वन्द्वावयव इति । भाष्यप्रयोगेणेति । एतेन चतुर्णां द्वन्द्वे एकार्थीभावबलाद्वाग्दृषच्छत्रोपानहमित्यत्रापि द्वन्द्वमत्राऽवयवो स्यादित्यपास्तम् । ननु बहूनामेकार्थीभावेऽपि पृथग् द्वयोरेकार्थीभावाभावात्कथं मतान्तरमत आह । पदयोरिति । निष्कृष्यैकार्थीभावाभावेऽपि वृत्ति परमगार्ग्यायण इति भाष्यप्रामाण्यादस्तु निष्कृष्य सामानाधिकरण्याभावेऽपि बहुव्रीहिरित्यत्र तु न मानमत आह । एवन्तयोरिति । अत एव । निष्कृष्य सामानाधिकरण्याभावेऽपि बहुव्रीहिस्वीकारादेव । अत्र त्रयाणाम्बहुव्रीहिसञ्ज्ञायामपि द्वयोस्तद्धितार्थेतिसूत्रेण द्विगुसञ्ज्ञायां पञ्चमशालाशब्दान्तस्योदात्तत्वम्पञ्चमाशब्दस्य पुंवद्भावश्च सिध्यति । न विनिगमकमिति समुदायवृत्तावयवानाम्मा कदा चिदप्यवृत्तिर्भूदितिवार्तिकाशयवर्णनपरभाष्यप्रामाण्येन निष्कृष्य सामानाधिकरण्याभावेऽपि बहुव्रीहिसञ्ज्ञा भवति । वाग्दृषदप्रिय छत्रोपानहप्रिय इति भाष्यप्रामाण्यादिति भाव । अस्य प्रत्याख्यानपक्ष इति । वार्त्तिकप्रत्याख्यानपक्ष इत्यर्थ । एव हि भाष्ये वार्त्तिकाशयवर्णनोत्तरमुक्तम् । तर्हि वक्तव्यत्र वक्तव्यम् । द्वे ह्यौ पक्षौ वृत्तिपक्षश्चावृत्तिपक्षश्च यदा वृत्तिपक्षस्तदा सर्वेषामेव वृत्ति । यदा अवृत्तिपक्षस्तदा सर्वेषामवृत्तिरिति । समुदायस्यैकार्थीभावे तदभावोऽवयवयोर्न युक्तो विरोधात् । तेन नित्यत्वमपि सिद्धमिति भाव । इत्यादिबहुव्रीहावित्यत्रादिना द्वौ सुनौ वस्त्रौ प्रियौ यस्य ति बहुव्रीहेर्द्विश्वप्रिया अस्येति बहुव्रीहेश्च सङ्ग्रह । आद्ये स्त्र दोष । अन्त्ये बहुव्रीहौ सक्थ्य इति समासान्तापत्तिश्च । अव्ययीभावादित्वित्यादिना तत्पुरुषसंग्रह । अत एव चित्राङ्गदगुरिति प्रयोगसङ्गतिरन्यथा पूर्वकालैकेत्यवयवयोस्तत्पुरुषे जरतीशब्दस्य पूर्वनिपातापत्ति । तेन । अतश्चि तत्पुरुषेत्युपादानेन । ननु समाहारो बहूनां भवतीति न त्वेकस्येति कथमिकापूपीति प्रयोगोऽत आह । एकापूपीति । अनभिधानादिति । अस्येति कैयट इति शेष । तथाहि । अस्यापूपं इतिवचने क्रियमाणे योगे य अस्यापूपं स द्विगुसंज्ञ प्राप्नोति निरपूर्वत्वात् । कियात । यथानन्तरयोगे एकगाटी द्विगोरिति ङीकारो न प्राप्नोति । अन्तु पूर्वत्वात् एकाभिना अत्रापि प्राप्नोति । अदन्तत्वात् । कथमेकापूपीति । ईकारान्तेन समासो भविष्यति । एका पूपी एकापूपी ।

इह तर्ह्येकापूपी । द्विगोरितीकारो न प्राप्नोति । अस्तु तर्हि पूर्वस्मात्रे । कथमेकभिक्षा । टावन्तेन सह समासो भविष्यति । एतेन यदा भिक्षाशब्देन गुरोश्चहल इत्यकारान्तो न समासस्तदा एकभिक्षीतीष्यत एवेत्यस्मिन् प्रकरणे नोक्तमित्यनभिधानाद्भिक्षाशब्देन समासोऽनभिधानान्न भवतीति सूचितम् । इदन्तार्हि मासमेव इगन्ते द्विगावित्येव स्वरः प्राप्नोति । अस्तु तर्हि पूर्वमात्रे । कथमेकापूपी । समाहार इत्येव सिद्धमिति । भाष्ये उक्तम् । अस्मिन् प्रकरणे एकभिक्षी इति भाष्ये नाभिहितमित्यनभिधानं यदेतेनोक्तम् । परन्तु प्रयोगाप्रदर्शनमात्रेणानभिधानत्व युक्तमित्यनभिधाने मानान्तरमन्वेषणीयम् । लाघवादिति । अन्यद्विगावपि प्रवृत्तिस्वीकारे विधायकत्वापत्त्या गौरवापत्तेः । अत एव । अनुवादकत्वादेव । एकशेषे नेति । तत्रैकस्य पञ्चपूलीशब्दस्य बह्वर्थाभिधायकतया बहुवचनमेव भवति । न केवलमनुवादत्वे एकशेषाऽप्रवृत्तिरेव फलं किन्तु फलान्तरमप्यस्तीत्याह । अनुवादफलमन्विति । तथा विवक्षाया । उद्भूतावयवभेदत्वविवक्षायाः । अनुवादत्वकल्पनायामप्रकृतसूत्रस्थं समाहारग्रहणञ्च तद्धितार्थप्रतिषेधार्थमिति वार्त्ति कमपि साधकमिति बोध्यम् । स नपुंसकमितिसूत्रघटकस्य तच्छब्दस्य द्विगुरेकवचनमित्यारभ्य यस्तिरोहितावयवभेदः समूहः प्रतिपादितस्तत्प्रतिपादकतया वक्ष्यन्ताहाह । स नपुंसकमित्यत्र त्यादिना । व्याख्यानादिति । प्रकृतसूत्रभाष्ये किमुदाहरणम् । वैयाकरणखसूचिः । किं व्याकरणं कुत्सितमाहो स्विद्वैयाकरणः । वैयाकरणे कुत्सितस्तस्मिन् कुत्सिते त त्यमपि कुत्सितभवतीति भाष्ये उक्तम् । एतेन प्रवृत्तिनिमित्तस्याश्रयकुत्सया यत्र कुत्सा गम्यते तत्रैवैतत्सूत्रप्रवृत्तिरिति लभ्यते । आश्रयकुत्सा च शब्दप्रयोगसमानकालिकी तत्र मर्यादेति व्याख्यानमूलकादित्यर्थः । अत एव । पूर्वपदस्य लाक्षणिकत्वादेव । उपमानानीत्युपादानात्तत्प्रतिसम्बन्धिवाचकोऽत्र सामान्यवचनशब्द इत्याशयेन सामान्यवचनशब्दार्थविर्णाह । सामान्येति । स्वसिद्धान्तमाह । परे त्विति । उभयत्र । उपमानोपमेययोः । अत एव । उपमानोपमेययोरभेदान्वयादेव । अन्यथा । उपमानत्वेनोपमानबोधेऽन्वयास्वीकारे । तेन समासेनाभ इति । उपमानेन समासलाभ इत्यर्थः । न चैतदनुपादाने पूर्वनिपातव्यवस्था कथमिति वाच्यम् । ...

त्म्बहुव्रीह्यवयवोत्तरपद एवेति तत्फलमाह । न द्वन्द्वावयव इति । भाष्यप्रयोगेणेति । एतेन चतुर्णां द्वन्द्वे एकार्थीभावबलाद्वाग्दृषच्छत्त्रोपानहमित्यत्रापि द्वन्द्वसंज्ञाऽवयवो स्यादित्यपास्तम् । ननु बहूनामेकार्थीभावेऽपि पृथग् द्वयोरेकार्थीभावाभावत्कथं मतान्तरमत आह । पदयोरिति । निष्कृष्यैकार्थीभावाभावेऽपि वृत्तिः परमगार्ग्यायण इति भाष्यप्रामाण्यादस्तु निष्कृष्य सामानाधिकरण्याभावेऽपि बहुव्रीहिरित्यत्र तु न मानमत आह । एवन्तयोरिति । अत एव । निष्कृष्य सामानाधिकरण्याभावेऽपि बहुव्रीहिस्वीकारादेव । अत्र त्रयाणाम्बहुव्रीहिसंज्ञायामपि द्वयोस्तद्धितार्थेतिसूत्रेण द्विगुसंज्ञायां पश्चिमशालाशब्दान्त्यस्योदात्तत्वम्पश्चिमाशब्दस्य पुंवद्भावश्च सिध्यति । न विनिगमकमिति समुदायवृत्त्यावयवानामपि कदाचिदप्यवृत्तिर्भूदिति वार्तिकाशयवर्णनपरभाष्यप्रामाण्येन निष्कृष्य सामानाधिकरण्याभावेऽपि बहुव्रीहिसंज्ञा भवति । वाग्दृषदप्रिय छत्त्रोपानहप्रिय इति भाष्यप्रामाण्यादिति भावः । अस्य प्रत्याख्यानपक्ष इति । वार्त्तिकप्रत्याख्यानपक्ष इत्यर्थः । एवं हि भाष्ये वार्त्तिकाशयवर्णनोत्तरमुक्तम् । तत्तर्हि वक्तव्यम् न वक्तव्यम् । इह द्वौ पक्षौ वृत्तिपक्षश्चावृत्तिपक्षश्च यदा वृत्तिपक्षस्तदा सर्वेषामेव वृत्तिः । यदा अवृत्तिपक्षस्तदा सर्वेषामवृत्तिरिति । समुदायस्यैकार्थीभावे तदभावोऽवयवयोर्न युक्तो विरोधात् । तेन नित्यत्वमपि सिद्धमिति भावः । इत्यादिबहुव्रीहावित्यत्रादिना द्वौ सुमौ बभ्रौ प्रियौ यस्य सि बहुव्रीहिर्द्विगुसमप्रियो अस्येति बहुव्रीहेरप्य संग्रहः । आद्ये त्वरे दोषः । अन्त्ये बहुव्रीहौ संख्येय इति समासान्तापत्तिश्च । अव्ययीभावादिस्त्वित्यादिना तत्पुरुषसंग्रहः । अत एव चित्राजरद्गुरिति प्रयोगसङ्गतिरन्यथा पूर्वकालैकेत्यवयवयोस्तत्पुरुषे जरतीशब्दस्य पूर्वनिपातापत्तिः । तेन । अतश्च तत्कीत्युपादानेन । ननु समाहारो बहूनां सम्भवति न त्वेकस्येति पायसैकापूपीति प्रयोगोऽसत आह । एकापूपीति । अनभिधानादिति । अस्येति कैयट इति शेषः । तथाहि । सख्यापूर्वं इतिवच्चे किमनन्तरे योगे य अत्यापूर्वं न दिगुर्भवति प्राप्नोति त्रिपूर्वनापे । किमात । अथानन्तरयोगे एकगाटी द्विगाटिशीवरो न प्राप्नोति । यत्तु पूर्वमाये एकभिक्षा अत्रापि प्राप्नोति । यद्यतमस्य । कथमेकगाटीति । ऐकागारो न समासो भविष्यति । एका गाटी एकगाटी ।

स्वीकारेऽप्यैवोपपत्तौ परिणामस्य पृथगलङ्कारता न स्वीकार्या । एवं सामान्यधर्मप्रयोगे मयूरव्यंसकादिसमासे रूपकमेव । विभिन्नलिङ्गकस्थलेऽप्येवमेवेत्यादि द्रष्टव्यम् । स्वमतसिद्धप्रक्रियया शाब्दबोधाकारमाह । उपमानशूरेत्यादि । तत्त्वमिति । उपमानत्वमित्यर्थः । ननु विशेषणस्योपमानस्य नित्यसापेक्षत्ववदुपमेयस्यापि नित्यसापेक्षत्वेनैव समाससंज्ञा सिद्धावत्र चेदमेव ज्ञापकमिति वर्णनमयुक्तमत आह । यद्यप्युपमेयत्वमिति । तद्वत्त्वेन । साधारणधर्मवत्त्वेन । तत्त्वम् । साधारणधर्मवत्त्वम् । व्याख्यानात् । वक्ष्यमाणयुक्तिमूलकात् । तामेवाह । व्यावर्त्तकत्वरूपमिति । विशेषणविशेष्ययोः ससम्बन्धिकत्वादन्यतरोपादानेनैव सिद्धे उभयोपादानेन यत्सिद्धन्तदाह । अत्रेति । जातिशब्दस्य गुणक्रियासमभिव्याहारे विशेष्यबोधकता नीलोत्पलम् । विकसितमालतीत्यादौ । संज्ञाशब्दस्य तत्त्वम्पण्डितचैत्रः पाचकचैत्र इत्यादौ । अनियम एव । कुब्जखञ्जः । खञ्जकुब्जः । पाचकपाठकः । पाठकपाचकः । इत्यादौ यथा । व्याप्यव्यापकेति । परस्परव्याप्यव्यापकभावानापन्नयोरित्यर्थः । अत्र च तयोः साङ्कर्येऽपि साङ्कर्यस्य दूषकताबीजानिरुक्तेस्तादृशधर्मयोर्जातित्वे न किञ्चिद्बाधकमिति बोध्यम् । भूतमूर्तयोरिति । भूतत्वञ्च बहिरिन्द्रियग्राह्यविशेषगुणत्वावच्छिन्नसमवायिकारणतावच्छेदकतया मूर्तत्वञ्च क्रियासमवायिकारणतावच्छेदकतया सिद्धम् । तद्भावापन्नयोः । व्याप्यव्यापकभावापन्नयोः । अवयवशब्द इति । व्याप्यधर्मविशिष्टवाचकः शब्द इत्यर्थः । न त्वत्र मुख्योऽवयवावयविभावः । अत एव । अवयवशब्दस्य विशेषणत्वादेव । अन्यथा । पूर्वोक्तनियमास्वीकारे । कर्मधारये । वर्णो वर्णेनेतिसूत्रसाध्य इत्यादिः । तादृशनियमस्वीकारे तु प्रकृते कृष्णशब्दस्य कृष्णत्वकिञ्चिदवयवकपरतया सारङ्गशब्दस्य च नानाजातीयरूपवद्भिरवयवैरारब्धपरतया च कृष्णशब्दस्यावयवशब्दत्वेन कर्मधारयेऽपि पूर्वनिपातनियमः स्पष्ट इति तद्बाध्यसङ्गतिरिति भावः । द्वयोरवयवशब्दत्व इति । कृष्णपीतः पीतकृष्ण इति यथा । न च विषयतासम्बन्धेन द्रव्यचाक्षुषत्वावच्छिन्नम्प्रति समवायसम्बन्धेन रूपस्य कारणत्वमिति कार्यकारणभावानुरोधेन चित्राख्यरूपान्तरस्वीकारात्कथङ्कृष्णसारङ्ग इत्यादावयवशब्दत्वमिति वाच्यम् । समवायानङ्गीकारेणावयवावयविनोर्गुणगुणिनोस्तादात्म्याङ्गीकारादवयवरूपेणैव प्रत्यक्षस्वीकारादिति सङ्-

भाष्यस्वरस इति । तत्र हि यत्र किञ्चित्प्रमाणं कश्चिच्च विशेषस्तत्रोपमानोपमेयभावो भवत इत्युक्त्वा उपमानं हि नामानिर्ज्ञातज्ञानार्थमुपादीयते तत्समीपे यन्नात्यन्ताय मिमीते तदुपमानमेवमुक्त्वा शस्त्रीश्यामेति सूत्रोदाहरणमित्युक्तम् । समानाधिकरणेनेति वर्त्तत इति चोक्तम् । तेनोपमानोपमेययोरभेदान्वय इति स्पष्टमेव लभ्यते । यद्यपि वैयधिकरण्येऽप्युपमानोपमेयभावो गौरिव गवय इत्यत्र दृश्यते । प्रस्थादिमानं यथा धान्यपरिच्छेदं करोति यद्यपि धान्यं स्वरूपतो निर्ज्ञातमेव तथापि विशेषधर्मवत्त्वेन न निर्ज्ञातम्प्रस्थादिसम्बन्धेन तु विशिष्य ज्ञायते एतावतैव तस्य परिच्छेदकता गवयस्यापि गवयशब्दवाच्यत्वेन रूपेण ज्ञानेऽपि ईदृशाकारो गवय इति ज्ञानं ग्रामीणस्य पूर्वं नास्ति गौरिव गवय इत्यारण्यकवाक्यात्तु तादृशशाब्दबोधो भवतीति तस्यापि परिच्छेदकत्वम् । परिच्छेदकत्वसाधर्म्यादुपमाने मानसामीप्यव्यवहारः ॥ न चैवं व्याख्यानेऽव्ययीभावसमासे उपमानानीति न स्यादिति वाच्यम् । उपमानानीत्यनेन निर्देशेन तत्पुरुषस्य निपातनात् । किञ्च प्रस्थादिमानस्थलेऽन्येनापरिच्छिन्नधान्यस्यानिर्ज्ञातस्य प्रस्थस्य परिच्छेदकमिह तु कदाचिद्गवय इव गौरित्यपि भवतीति मानसामीप्यव्यवहार । तथापि प्रकृते सामान्यवचनैरित्यस्योपादानात्समानाधिकरणाधिकाराच्च तादृशे विषये समासाभावः । उपमानस्य विशेषणत्वेति । विशेषणस्य विशेष्यपरिच्छेदकताया लोकप्रसिद्धत्वात् । उपमितमित्यत्र तत्स्यादिति । उपमेयत्वेनोपमेयबोधकमित्यत्र तदर्थबोधकत्वात्तस्येति भावः । अत एव । समानलिङ्गकस्थल एवैतस्य प्रवृत्तिस्वीकारादित्यर्थः । अन्यथा । असमानलिङ्गकस्थलेऽप्यस्य सूत्रस्य प्रवृत्तिस्वीकारे । भाष्याब्धिरित्यादि सिद्धवदयमाह । भाष्याब्धिरिति । लिङ्गभेदेऽपीति । एतेन यत्र सामान्याप्रयोगस्तत्राप्युपमितसमासप्रवृत्तिरिति ध्वनितम् । मयूरव्यंसकादिसमासस्य पूर्वपदार्थप्राधान्यं दर्शयति । स चेति । भाष्याब्धिरित्यादाविति । प्रसङ्गेन इगभूर्जनैष्यादौ सामादिपदेन सङ्ग्रहः । रूपकमेव । अभेदरूपकमेव । भाष्याब्धिरित्यत्र पूर्वपदार्थप्रधानसमासनिर्देशः पूर्वपदार्थे तिग्मांशोरित्यादिविशेषणान्वयाय स्वीक्रियते । इगभूर्जमेत्यत्र बोधसान्वयाय यथा । प्राचीनाकविरूपेति । यद्वेति । वा शिन्नपाताधमेन सादृश्याभावविवक्षायां समासमाह । मयूरव्यंसक इति । दिगिति । रूपकस्य

प. । एवञ्च । पूर्वोक्तनियमसिद्धौ च । असाध्वेवेति । डित्थशब्दस्य संज्ञाशब्दत्वा दिति भाव । शाब्दबोधे भानादिति । वाक्यार्थत्वादित्यादि । एतेन विशेषण विशेष्यभावव्यवहारस्योपपत्ति सूचिता । समर्थसूत्रे भाष्य इति । तत्र हि सर्पि वाल्पकम् । यत्तु पीतकमित्यादाविसुमो सामर्थ्य इतिसूत्रप्राप्तफलनिवारणा य समानाधिकरणमसमर्थवदितिवचनारम्भो सर्पिष्पीयते यजुष्क्रियत इति प्र योगे फलाभावशङ्काया अधात्वभिहितमिति समानाधिकरणांशे विशेषणदाने न वारणे कर्तऽपि वीर पुरुषो वीरपुरुष इत्यत्र सामर्थ्यात्समासाभावशङ्काया सुक्तं समानाधिकरणेषूपसङ्ख्यानमिति । तत्रा न वा वचनप्रामाण्यात् । न वा कर्त्तव्य किङ्कारण वचनप्रामाण्यात् । वचनप्रामाण्यादत्र समासो भविष्यति समानमध्यमध्यमवीरायेति । अत्र वचनारम्भसामर्थ्यादत्र समासो भविष्यति इति भाष्यकतोक्तम् । अत्र कैयट वचनप्रामाण्याद्वाचनिकसामर्थ्यमाश्रयते । वीर पचतित्यादौ तु धात्वभिहिते अनभिधानाद्बहुलग्रहणाद्वा समासाभाव- ग्रमन्यते इति । यदि क्रियाशब्दे पाचकादिभि समास स्यात्तदा वचनप्रामा ण्याभिधानमसङ्गतमेव स्यादित्याशय । यत्तु भृत्यभरणीय इत्यादौ विशेषण मिति समासोऽनुपपन्न समानार्थत्वादत्र किञ्चित्समानइत्यत्र विशेषस्तथैव विशेषणसमास इति कश्चिदाह तदभेत्याशयेनाह । भृत्यभरणीयादाविति । ट- थैवेति । समर्थसूत्र इत्यर्थ । भृत्यभरणीय इत्यत्र नैतौ समानार्थौ । अत्र छा- कत्र शक्यार्थे अपरत्वार्हार्थे कृत्य । तेन । श्रेण्यादिषु च्व्यर्थवचनमित्यस्य अथ नेन । अत्र वार्तिके च्व्यर्थत्वपादानादत्र च्विप्रत्ययो वैकल्पिकत्वादोत्पत्सद- र्थस्याभूततद्भावस्य च विवक्षा तदानेन सूत्रेण समास. यत्र तु च्विप्रत्यय एव तत्र तु परत्वादुत्तरसूत्रप्रवृत्तिरित्याशयेनाह । पूर्ग्भानाग्निति । कृतादिराकृ तिगण इति । एतेन श्रेण्यादिपदेन तु पठितानामेव ग्रहणम् । श्रेण्यादय प ठ्यन्ते कृतादिराकृतिगण इति भाष्यात् । एकप्रकृतिकत्व एवेति । प्रत्यासत्ते- र्न्तन्त्रीयस्त्वात् । तेन सिद्ध्य तदभुक्तञ्च कर्तव्यञ्च तदकृतञ्चेत्यत्र न समास । न ञ्विशिष्टश्च स्यात्पदविहितोत्तरत्वसम्बन्धेन । एवञ्च विशिष्टपदोपादानमत्र स्प ष्टार्थम् मनसा इर्या च सिद्धे । एकप्रकृतिकत्व इत्यत्र प्रमाणन्तु एकतत्पुरुषप्रसङ्ग ञ्विशिष्टे समानप्रकृतिपदग्रहणं ध्यसितिवार्तिकमेव । दश, गतभेदं च सिद्धे

पः । एवञ्च । पूर्वोक्तनियमसिद्धौ च । असाध्वेवेति । डित्थशब्दस्य संज्ञाशब्दत्वादिति भावः । शाब्दबोधे भानादिति । वाक्यार्थत्वादित्यादिः । एतेन विशेषणविशेष्यभावव्यवहारस्योपपत्तिः सूचिता । समर्थसूत्रे भाष्य इति । तत्र हि सर्पिः कालकम् । यजुः पीतकमित्यादावित्युक्तौ सामर्थ्य इतिसूत्रप्राप्तषत्वनिवारणाय समानाधिकरणमसमर्थवदितिवचनारम्भे सर्पिष्पीयते यजुष्क्रियत इति प्रयोगे षत्वाभावशङ्काया अधास्त्वभिहितमिति समानाधिकरणाग्रे विशेषणदानेन वारणे कृतेऽपि वीरः पुरुषो वीरपुरुष इत्यत्र सामर्थ्यात्समासाभावशङ्कायामुक्तं समानाधिकरणेषूपसङ्ख्यानमिति । ततो न वा वचनप्रामाण्यात् । न वा कर्त्तव्यं किङ्कारणं वचनप्रामाण्यात् । वचनप्रामाण्यादत्र समासो भविष्यति समानमध्यममध्यमवीरायेति । अथ वचनारम्भसामर्थ्यादत्र समासो भविष्यति इति भाष्यकृतोक्तम् । अत्र कैयटः वचनप्रामाण्याद्वाचनिकसामर्थ्यमाश्रीयते । वीरः पचन्नित्यादौ तु धात्वभिहिते अनभिधानाद्बहुलग्रहणाद्वा समासाभावमन्यते इति । यदि क्रियाशब्दैः पाचकादिभिः समासः स्यात्तदा वचनप्रामाण्याभिधानमसङ्गतमेव स्यादित्याशयः । यत्तु भृत्यभरणीय इत्यादौ विशेषणमिति समासोऽनुपपन्नः समानार्थत्वाच्च किञ्चित्समानद्वयेऽपि विशेषस्तत्रैव विशेषणसमास इति कश्चिदाह तन्नेत्याशयेनाह । भृत्यभरणीयादावपि । नन्वेवेति । समर्थसूत्र इत्यर्थः । भृत्यभरणीय इत्यत्र नैतौ समानार्थौ । अत्र द्वेकत्व शय्यार्थे अपरस्यार्हार्थे कृत्यः । तेन । श्रेण्यादिषु च्व्यर्थवचनमित्यस्य कथनेन । अत्र वार्तिके च्व्यर्थत्वोपादानाच्च च्विप्रत्ययो वैकल्पिकत्वात्तोऽप्यतदर्थस्याभूततद्भावस्य च विवक्षा तत्रानेन सूत्रेण समासः यत्र तु च्विप्रत्यय एव तत्र तु परत्वादुत्तरसूत्रप्रवृत्तिरित्याशयेनाह । धूम्रस्थानान्निर्णीत । कृतादिराकृतिगण इति । एतेन श्रेण्यादिपदेन तु पठितानामेव ग्रहणम् । श्रेण्यादयः पठ्यन्ते कृतादिराकृतिगण इति भाष्यात् । एकप्रकृतिकत्व एवेति । प्रत्यामर्शनीयत्वात् । तेन सिद्धश्च सदभुक्तञ्च कर्त्तव्यञ्च सदकृतवन्तश्च न समासः । अपेक्षितत्वाद साध्यवद्विशेषत्वसम्भवेन । एवञ्च विशिष्टपदोपादानमत्र स्पष्टार्थम् सम्यक्ता इत्यर्थ च सिद्धेः । एकप्रकृतिकत्व इत्यत्र प्रत्ययान्तरमप्रत्ययान्तविशिष्टे समानप्रकृतिप्रत्ययान्तत्वमिति विवक्षितं बोध्य । यत्तु समर्थेत्यं न सिद्ध

व । अत्र पक्षे । अव्ययपदार्थप्रधानत्वप्रसङ्ग । प्रागवदेव ॥ असत्त्वसमासपक्षस्याप्य प्रा- पक वादेव । सत्त्वभूतार्थाभिधायित्वे नापूर्ववदस्य सत्त्वभूत र्थो भिधायित्वे नेत्य र्थे । स्थालान्तरदृष्टप्रकारेण समाधानमाह । यदेति । गुणवचनगामिति । वक्ष्य वृत्तिप्रकारन्दर्शयति । प्रमादेनेति । अन्यथा । प्रतियोगिन आश्रयत्वात्क्लृप्ते । गुणवचन नामित्यत्र गुणपदमन्याश्रितपरमिति भाव । तद्योगेति । अतएवा इं- मन्त्र इत्यादौ लिङ्गवचनाभिधिरूपद पि नत्र । एतत्समक्षतया । पक्षेण समक्षतया । तत्प्राधानत्वात् । उत्तरपदार्थप्रधानत्वात् । अन्यथा । नञाऽव्य यीभावस्वीक रे । अव्ययीभावाभिहितेति । पूर्वपदार्थप्रधानत्वपक्ष इत्यादि । क्रियादिप्रतियोगिकेति । अत्रादिना गुणस्य सङ्ग्रह । नञाऽव्ययीभावाभावे पूर्वोक्ता युक्ति स्मारयति । क्रियेति । इदमाद्यमिति । पूर्वपदार्थप्रधानत्वपक्ष ऽव्ययीभावाभिविक्षिप्तूषणानभिधानपरमाद्यमित्यर्थः । न तदसङ्गतिं । नार्थ क्षितमितिमरलानुपपत्ति । अत एव । सङ्गितापरपर्यायवर्क्षितशब्दस्वीकारादेव । पथादौस्त्वदृष्टान्तानामसङ्गितवदुत्तरानिति प्रातिशाख्ये तद्भाष्ये च त्य दा नघा वाक्तौ तनुराचीतिपूर्वयोरित्यस्य व्याख्यावसरे तथा वा संक्षिलवदा य्यसं हितवदुत्य् हमित्यर्थ । पर सन्निकर्ष इतिसूत्रस्यभाष्यीयव्याख्यानेनार्थाभावे- ऽव्ययीभाव इति भ्रम स्यादतस्तद्भाष्यविरोधमपि परिहरति ॥ अत एवेति । नञाऽव्ययीभावाभावादेव । प्रवङ्गादिति । नलोपप्रसङ्गादित्यर्थं ॥ अप्राप्तस्त्वे ऽत्र नञ् । अत एव । नञो नलोप इतिवचनारम्भादेव । मूलोक्तरीत्याह । नञा समास इति । एवमेव । नशब्देन न्हसमासादेव । येतु मतरीत्या ह लेषु पृषोदरादित्वमेव कल्प्यम् । पाणिनेस्य प्रचलत्वेन व्याख्यानं प्रमाणमाह । पाने क्रियेति । वैचित्र्यार्थमिति । सूत्रे उपासनमपि वचनस्याविवक्षाकृपये चित्रास्य साधन येनत्र । न विद्यते सत्वं येषामसावऽसत्वा । न असत्वा साध त्वा इत्यर्थ । अयत्र रुढ इत्याह । अभिनोरैवावमिति । हरदत्त इति । प रैण नसर्वनामशब्देन रूढेन साहचर्याद्रूढस्यैवेदाग्रपातनमिति तद्भाव ॥ तेन । प्रत्ययस्य एकस्यैव कुञ्जस्य ग्रहणेन । तदनुवर्त्तत इति । क्रियायोगग्रहण मनुवर्तत इत्यर्थः । अत एव । एतदनुवर्त्तनादेव चिह्नप्रत्ययमात्रस्य क्रि यायोगाभावादिति भाव प्राक्पुतात इत्यधिकाराद्वा । ऊर्यादय इति ॥

ज्ञाविधायकत्वेन चरितार्थम् । न प्रवृत्तिरिति । तत्र हि भाव इति सप्तम्यधिकरण एव भावेऽर्थे क्यप् भवतीति तदर्थात् तस्मिन् सूत्रेऽनुवर्त्तमानं यत् सुपीति तत्र या सुपीति सप्तमी सा प्रथमार्थे सौत्री । एवन्तद्विशेषणबोधकेऽनुपसर्ग इतिपदेऽपि प्रथमार्थ एव । तद्दत्रवस्थेति । का चित्सप्तमी प्रथमार्थे का चित् स्वार्थेऽधिकरण एवेति व्यवस्थेत्यर्थः । अननुनासिकत्वादिवदिति । उपदेशेऽजनुनासिक इदितिसूत्रप्रवृत्त्युपयोग्यनुनासिकत्वादिवदित्यर्थः । लक्ष्यानुरोधात् । ब्रह्मभूयमितिशब्दजन्यशाब्दबोधे धात्वर्थस्य भवनस्यैव विशेष्यतया भानमनुभवसिद्धमिति भाव इति सप्तम्याः प्रथमार्थत्वञ्च । भव्यमभव्यमित्यादौ यत्परोऽदर्शनेनानुपसर्गे सुपीत्यनयोस्तु प्रथमार्थत्वमेवेति कल्पनमेवं लक्ष्यानुरोधात्कल्पनीयमिति भावः । अत एव । सुबन्तस्योपपदसंज्ञास्वीकारादेव । अलोप इति । राजनि युधि कृञ इति सूत्रे राजनीति सप्तम्याः प्रथमार्थत्वकल्पनया सुबन्तस्यैव क्वनिप्प्रत्ययविधानसमकालिकोपपदसंज्ञास्वीकारादिति भाव । प्रकृतसूत्रघटकस्यातिङिति पदस्य प्रयोजनमाह । एधानाहारक इति । अत्र हि ण्वुल्विधायकसूत्रस्थायाः क्रियायाङ् क्रियार्थायामिति सप्तम्याः प्रथमार्थत्वेन व्रजतीत्यस्य विभक्त्यन्तस्योपपदत्वेऽपि समाससंज्ञाविधायकसूत्रेऽतिङित्यस्योपादानान्न समासः । उपपदसंज्ञाफलं तु तदुच्चारण एव प्रत्ययस्य भवनमिति । तिङन्ताघटित इति । समासस्य तिङन्तत्वप्रत्ययग्रहणपरिभाषया न सम्भवतीत्यतिङ्पदं तत्र तिङन्ताघटिते नार्थकमिति भावः । इदञ्च बोध्यम् । उपपदमतिङितिसूत्रेणोपपदेन नित्यैकार्थीभावो बोध्यते समर्थपरिभाषाया उपस्थापनात् । अत एव महान्तं कुम्भं करोतीति वाक्यमेव न तु तथाण्प्रत्ययः । एधानाहारको व्रजतीत्यत्र ण्वुल् तु भवत्येव । क्रियापदस्य कारकपदेन नित्यसाकाङ्क्षत्वात् । इदमिति । कुम्भ अमित्यत्रांऽङकारानुच्चारणमित्यर्थः । अप्रवृत्तेरिति । शास्त्रप्रवृत्तेः सफलत्वस्वभावादिति शेषः । अस्य । उपपदसमासस्य । सिद्धान्तरीत्याह । कारकषष्ठ्येति नेति । अत्र भाष्य इति । तत्र सिद्धान्तरहस्याभिप्रायेण वार्त्तिककारोक्तषष्ठीसमासादुपपदसमासो विप्रतिषेधेनेत्यनेन विप्रतिषेधस्य खण्डनहृत्वा षष्ठीसमासस्यापि कारकषष्ठीविषये सुबुत्पत्तेः प्राक् प्रवृत्त्यभिप्रायेणाथ वा विभाषा षष्ठीसमासः यदा न षष्ठीसमासस्तदोपपदस-

मास इत्यनेन तत्र नित्यैकार्थीभावस्यैव बोधनादिति । एवञ्च गतिकारकेतिपरिभाषायाङ्कारकशब्दमात्रस्योपादानेन कारकविभक्त्यन्तस्य छृद्भिः समासविधायकं यदाच्छास्त्रन्तेपाङ्कदन्तात्स्,बुत्पत्तेः प्राक् प्रवृत्तिरित्यस्य सिद्धौ चेत्यर्थः । अत एव । कारकसामान्यविषयकत्वादेव । तदंशे । कारकांशे । प्रमाणत्वोपन्यस्तमिति । एवं चायमंशो वार्त्तिक इति लब्धम् । ननु भाष्योक्तपरिभाषामत्याख्यानविरोध इत्यत आह । परिभाषा नेत्यादि । विशिष्टायाः । गतिकारकोपपदेतित्र्यंशविशिष्टायाः । अकर्त्तव्यत्वपरमिति । अंशत्रयोपेताऽपूर्वा न कर्त्तव्या किं तु कारकेत्यंशविशिष्टा अपूर्वा कर्त्तव्या इति भावः । तादृशकल्पनायामानमाह । अत एवेति । तदंशेऽपूर्वत्वादेव । दिगिति । अयम्भावः । अत्र भाष्येऽतिङिति किमर्थम् । कारको व्रजति । हारको व्रजति । अतिङिति शक्यमवक्तुम् । इह कस्मान्न भवति कारको व्रजति । सुप्सुपेति वर्तते । अत उत्तरं पठति अतिङिति तदर्थस्यायम्प्रतिषेधः । कस्य । तिङर्थस्य । कः पुनस्तिङर्थः क्रिया । अत्र क्रियायास्तिङर्थत्वकथनन्तस्याः प्राधान्याभिप्रायेण । यदि क्रियावाचकस्य प्रतिषेधस्तर्हि लाघवादक्रियेत्येवास्त्वित्याशयेन तदुक्तङ्क्रियाप्रतिषेधो वा । अथ वा व्यक्तमेवेदम्पठितव्यमसुपपदमक्रियेति । अयाक्रियेति किम्प्रत्युदाह्रियते कारको गतः । अत्र कैयटः । गतशब्दः क्रियावाच्युपपदन्तत्र तुमुन्ण्वुलाविति ण्वुल् । कर्तुङ्गत इत्यर्थः । अत्र प्रकृतिवाच्यक्रियान्वयो यदि ण्वुल् तदा तदान्वय. समासनिषेधोऽपि स्यात् । ततो भाष्यकृतोक्तं नैतत्क्रियावाचीति । प्रत्ययार्थस्य कर्तुः प्राधान्याच्च प्राधान्येन क्रियावाचीत्यर्थः । अत एव भाष्ये किं तर्हि द्रव्यवाचीति । नन्वेवमत्र समासः स्यादिति चेन्न । तस्यानुपपदत्वात् । यद्यपि धातोः क्रियावाचकत्वन्तदान्वयो ण्वुल् स्त्रीक्रियते तथापि तस्योपपदसंज्ञाऽन्वयाभावान्न प्राप्नोतीति भावः । वस्तुतो नैतत्क्रियावाचीति भाष्यस्वारस्यादत्र ण्वुलपि न । प्राधान्येन क्रियावाचकस्यैव प्रत्ययोत्पत्तिनिमित्तत्वादिति भावः इह तर्हि कारकस्य गतिः । कारकस्य व्रज्येति । भावेऽत्र प्रत्ययसद्भावेन क्रियावाचित्वमस्तीति पूर्वपक्षाशयः । एतदपि द्रव्यवाचि । कथम् । तदभिहितो भावो द्रव्यवद्भवतीति । सिद्धवद्भावमभ्यन्तराद् द्रव्यवाचित्वमिति भावः । अत्र कैयटः । धातुश्च साध्यभूतां क्रियाम्प्रतिपादयति प्रत्ययस्तु

तस्या एव क्रियाया उपसंहृतक्रमभूतां सत्त्वरूपतामाह प्रत्ययार्थस्य प्रधानमिति यत्तु यन्तस्य तत्क्रियावाचि यत् क्रियावाचि तन्न सुबन्तम्। एतेनाचापि एतन्न सम्भवति। तुमुन्ण्वुलाविति सूत्रे क्रियार्थायामिति स्त्रीलिङ्गनिर्देशेन क्रियार्थायाः क्रियाया एव लाभे पुनः क्रियाग्रहणेन साध्यमानावस्थक्रियाप्रतिपादकस्यैव ग्रहणात्। न च कारको व्रजतितरामित्यत्र समासाभावार्थं तदर्थं प्रतिषेध आवश्यक इति वाच्यम्। तादृशप्रयोगाणामभिधानाभाव इत्याशयात्। कैयटोक्तोपसंहृतक्रमभूतामित्यस्योपसंहृतक्रमत्वसमानाधिकरणवैजात्यरूपामित्यर्थः। तत्र सिद्धान्तिना एवमपि सिद्धे सति यदतिङिति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यः अनयोर्योगयोर्निवृत्तं सुप्सुपेति। किमेतस्य ज्ञापने प्रयोजनम्। गतिकारकोपपदानां कृद्भिः सह समासो भवति प्राक् सुबुत्पत्तेरिति परिभाषा न कर्त्तव्या भवति। अत्रानयोर्योगयोरित्युपादानेनातिङ्ग्रहणस्यैव पूर्वयोगनियामकत्वमपि कथ्यते। अतिङन्तः समास इतिसूत्रद्वयविहितः समासो विशेष्यत इति भावः। एतदर्थस्तूक्त एव। न च प्रपचतितरामप्रजल्पतितरामितिप्रयोगस्तिङि चोदात्तवतीतिसूत्रभाष्ये दृश्यते। तत्र हि तिङ्ग्रहणस्यामन्द्रैरिन्द्र हरिभिर्याहीत्यत्र प्रयोजनमभिधाय यत्क्रियायुक्ता इतिन्यायेन मन्द्रशब्दप्रत्यगतित्वात्तन्निवृत्त्यर्थं यदि यन्निरूपितगतित्वं तस्यैवोदात्तवती ग्रहणं तदा यत्प्रकरोतीत्यत्र प्रत्ययोदात्तत्वेनोदात्तवति गतिनिघातो न स्यात्तत्प्रत्यगतित्वादिति तिङ्ग्रहणकर्त्तव्यमिति रीत्या तत्प्रयोजनमभिधाय यदि तिङ्ग्रहणं क्रियते आमन्त्रे न प्राप्नोति। प्रपचतितरां प्रजल्पतितरामित्युक्तं तत्र नित्यसमासवारणायातिङ्ग्रहणमस्त्विति वाच्यम्। तिङि चोदात्तवतीतिसूत्रस्थभाष्यभामाख्येन तत्र नित्यसमासस्येष्टत्वादिति केचित्। वस्तुतोऽत्रातिङ्ग्रहणेन गतिसमासनिषेधात्सुप्सुपेत्यस्य वैकल्पिकत्वात्समासाभावेऽपि तिङि चोदात्तवतीतिसूत्रस्थभाष्यं सुयोजमिति प्रकृतसूत्रस्यमतिङ्ग्रहणस्य सुप्सुपेत्येतद्विषयनिवृत्तिज्ञापकतापरभाष्ये स्पष्टमेव। स्यादु उपपदत्वमङ्गीकृत्य सूत्रे सः भवान्भूदिति प्रत्युदाहृतम् वस्तुतस्तु तस्योपपदत्वमेव नेत्याशयेनाह। किञ्चेत्यादि। समीपोच्चारितत्वं यस्य तस्यैवोपपदत्वमिति भाव। ननु पूर्वोक्तमत्र सप्तम्यन्तपदघटितसूत्रविधेयप्रत्ययप्रकृत्यर्थान्वयित्वरूपम्पारिभाषिकमुपपदत्वमुह्रमयाय

·मास इत्यनेन तत्र नित्यं कार्याभावस्यैव बोधनादिति । एवञ्च । गतिकारकेति परिभाषायामिहारकशब्दमात्रस्योपादानेन कारकविभक्त्यन्तस्य छाङ्ि समासविधायकं यद्यच्छास्त्रन्तो पाङ्कदन्तास्त्र,सुत्पत्तेः प्राक् प्रवृत्तिरित्यस्य सिद्धो चेत्यर्थः । अत एव । कारकसामान्यविषयकत्वादेव । तदंशे । कारकांशे । प्रमाणोपन्यस्तमिति । एवं चायमंशो वार्तिनिक इति लब्धम् । ननु भाष्योक्तपरिभाषाप्रत्याख्यानविरोध इत्यत आह । परिभाषा नेत्यादि । विशिष्टायाः । गतिकारकोपपदेतित्र्यंशविशिष्टायाः । अकर्त्तव्यत्वपरमिति । अंशत्रयोपेताऽपूर्वा न कर्त्तव्या किं तु कारकेत्यंशविशिष्टा अपूर्वा कर्त्तव्या इति भावः । तादृशकल्पनायामानमाह । अत एवेति । तदंशेऽपूर्वत्वादेव । दिगिति । अयमभाव. । अत्र भाष्येऽतिङिति किमर्थम् । कारको व्रजति । हारको व्रजति । अतिङिति शक्यमवक्तुम् । इह कस्मान्न भवति कारको व्रजति । सुप्सुपेति वर्तते । अत उत्तरं पठति अतिङिति तदर्थस्यायम्प्रतिषेधः । कस्य । तिङर्थस्य । कः पुनस्तिङर्थः क्रिया । अत्र क्रियायास्तिङर्थत्वकथनन्तस्याः प्राधान्याभिप्रायेण । यदि क्रियावाचकस्य प्रतिषेधस्तर्हि लाघवादक्रियेत्येवास्त्वित्याशयेन तदुक्तङ्क्रियाप्रतिषेधो वा । अय वा व्यक्तमेवेदम्पठितव्यमुपपदमक्रियेति । अयाक्रियेति किमर्थमुदाक्रियते कारको गतः । अत्र कैयटः । गतशब्दः क्रियावाच्युपपदन्तत्र तुमुन्ण्वुलाविति ण्वुल् । कर्तुं प्रत इत्यर्थः । अत्र प्रकृतिवाच्यक्रियान्वयो यदि ण्वुल् तदा तदाश्रयः समासनिषेधोऽपि स्यात् । ततो भाष्यतत्तोक्तमर्थं ततक्रियावाचीति । प्रत्ययार्थस्य कर्तुः प्राधान्यात् प्राधान्येन क्रियावाचीत्यर्थः । अत एव भाष्ये किं तर्हि द्रव्यवाचीति । नन्वेवमत्र समासः स्यादिति चेन्न । तस्यानुपपदत्वात् । यद्यपि धातोः क्रियावाचकत्वमतदाश्रयो ण्वुल् सोऽक्रियते तथापि तस्योपपदसंज्ञाऽस्थर्याभावात्र प्राप्नोतीति भावः । वस्तुतो नैतत्क्रियावाचीति भाष्यस्यारम्पाठच ण्वुलपि न । प्राधान्येन क्रियावाचकस्यैव प्रत्ययोत्पत्तिनिमित्तत्वादिति भावः इष्ट तर्हि कारकस्य गतिः । कारकस्य प्रश्येति । भावेऽत्र प्रत्ययसद्भावेन क्रियावाचित्वमस्तीति पूर्वपक्षाशय. । एतदपि द्रव्यवादि । कथम् । तदभिहितो भावो द्रव्यवद्भवतीति । लिङ्गसङ्ख्यासम्बन्धाद् द्रव्यवाचित्वमिति भावः । अत्र कैयटः । धातुरत्र साध्यभूतां क्रियाम्प्रतिपादयति प्रत्ययस्तु

च ताहगव्यवस्थामिद्धौ। अत्रापि। प्रकृतसूत्रेऽपि। सङ्गच्छत इति। समासस्य तिङ्घटितत्वं शास्त्रेण निषिद्धमित्यकिंवृत्तस्योपपदत्वे फलाभाव इति भावः। अष्टैवेति। सूत्रेऽकिंवृत्तस्य त्वस्याभावेऽकिंवृत्तस्योपपदत्वलाभो न स्यादित्यन्यथानुपपत्त्याऽकिंवृत्तग्रहणस्यावश्यकत्वादिति भाव। अतिङिति सौत्रत्वात् सप्तमीयान्तमित्याशयेन यत्केन चिद्व्याख्यातन्तद्दूषयति। उपपदमतिङन्तेनेति नार्थ इति। भाष्यामङ्गतेरिति। शब्देनोत्तरपदस्यानुपादानाभिप्रायेण केनेदानीमिति तत्र प्रश्नः। समर्थपरिभाषोपस्थित्यभिप्रायेण च समर्थेनेत्युत्तरमत्रातिङन्तेनेति'व्याख्याने विरुध्यतेऽतिङन्तरूपोत्तरपदस्य तेन बोधनादसङ्गत स्यादिति'भाव। तत्र। पूर्वसूत्रे। प्रपचतितरामित्यत्र नित्यसमासव्यावृत्तेस्तत्फलत्वमथवादिति भाव.। अनेन। अतिङ्ग्रहणेन। यदि सुप्सुपेत्यस्य सम्बन्धः प्रकृतसूत्रे स्यात्तदा कारकोव्रजति हारको व्रजतीत्यत्र समासव्यावृत्तिः सिद्धैवेति तिङन्तथावृत्तंकमतिङ्ग्रहणं व्यर्थमेव स्यात्। भाष्यार्थेति। परिभाषासङ्ग्रहपदगंनपरगतिकारकोपपदानामिति भाष्यार्थेत्यर्थः। ननु कारकस्यापि व्युत्पत्तेः प्राक् समासस्वीकारे धनक्रीतेत्यादौ क्रीतशब्दादुत्तरपदात् सुबुत्पत्तेः प्राकसमासे क्रीतात्करणपूर्वादितिसूत्रेणादन्ताद्विधीयमानो ङीप् स्यादत आह। कर्तृकरणेति। अत्रेदमवधेयम्। प्रकृतसूत्रभाष्येऽनयोर्योगयोर्निवृत्तं सुप्सुपेत्युक्त्वा तत्रनिवृत्तमित्युक्तत्वोपाध्यायैरतिङित्यस्योभययोगशेषत्वं योगविभागेन प्रदर्शितमतिङन्तस्य समास इति च व्याख्यातमस्तत्र समासस्य तिङन्तत्वद्वयमपि न सम्भवतीतितिङन्तशब्दस्य तिङन्तघटिते लक्षणोपाध्यायाभिप्रेतैव। कारकांशे चोपाध्यायप्रदर्शितपरभाष्यात्र तदंशे प्राचीनपठितपरिभाषाघटकत्वमात्रमिव तु यद्गतपदग्रहणस्य तदंशसाधकत्वमभिहितम्। यदि तु यद्गतपदग्रहणमेव तदंशसाधकं यद्गतपदग्रहणमेव तदंशस्यातिव्याप्तिसाधकमेवेति व्याख्यायते तदेकस्य भावाभावसाधकत्वं विरुद्धमिवाभातीत्यं वर्णितोऽभवम्। तत्र योगविभागेनोभयशेषत्वं प्रदर्शितं विना न सम्भवति शेषत्वस्य तदेकवाक्यतापन्नत्वादित्यचोपपदमतिङुत्तरपदेनेत्यर्थं न्यम्। न तु योगविभागः स्वीकृतोऽभवम्। गौरवप्रसङ्गात्। तत्र गतिकारकोपपदानां समासस्तु सिद्ध एवेति तदंशप्रतिपादनं तु पारिभाषिकोत्तरपदादावा प्रमाणैरेव स्यादिति तदर्थमेव कैयटपर्यन्तं

इत्यर्थे वास्त्येवेत्यत आह। किञ्च माङो नोपपदत्वमिति। मानाभावादिति। नन्वस्योपपदसंज्ञासिद्धयर्थमेव प्रथमार्थत्वमस्त्वित्यत आह। तस्योपपदसंज्ञेति। उपपदसंज्ञां स्वीकृत्य प्रकृतसूत्रेण समासं वारयितुमतिङ्ग्रहणं कर्त्तव्यमिति तदपेक्षया माङीति सप्तम्याः प्रथमार्थत्वाभावकल्पनमेव वरमिति भावः। ननु तुमुन्ण्वुलौ क्रियायामिति सूत्रे क्रियायामित्यस्याः सप्तम्या अधिकरणार्थत्वाभावकल्पने किम्मानमत आह। तुमुन्विधाविति। तिङन्तार्थेति। तिङन्तशब्दजन्यशाब्दबोधविषयेत्यर्थः। अस्ति च कारको गत इत्यत्र गतशब्दस्य तथात्वम्। व्रजतीतिशब्दजन्यशाब्दबोधविषयभूता या गमनानुकूलव्यापाररूपा क्रिया सा गतशब्दजन्यशाब्दबोधेऽपि प्रकारतयाभासते इति भावः। तिङन्तार्थत्वाभावेनेति। तिङन्तशब्दजन्यबोधे या प्राधान्येन भासमाना क्रिया साऽत्र नास्ति धातुः प्राधान्यादिति भावः। गत इत्यस्योपपदत्वमेव नास्तीत्याशयेनाह। किञ्चेति। यदि गतशब्दे सति ण्वुल् स्यात्तदा गतशब्दस्योपपदत्वं स्यात्तदेव तु नास्ति। ण्वुलस्तत्राप्राप्तेरिति भावः। भाष्ये ध्वनितत्वादिति। नैतत् क्रियार्थोपेति भाष्येण ध्वनितत्वादित्यर्थः। पदत्वपर्यन्तमिति। क्रियाफलकक्रियाबोधकप्रकृतिके पदे सति तुमुन्ण्वुलोर्विधानादिति। मूले सुपेत्येवोक्तत्वेन प्रथमान्तसुब्ग्रहणस्यावश्यकत्वमिति प्रतीयते सप्तम्यन्ताद्राजदर्शीत्यत्र पूर्वपदस्य पदत्वात्तल्लोपसिद्धिरिति फलमप्युपलभ्यते परन्त्वेतत् युक्तमनयोर्योगयोर्निरस्तं सुप्सुपेति भाष्यविरोधादित्याशयेनाह। सुपित्यस्येति। राजदर्शीत्यस्य सिद्धिस्तु महासंज्ञायास्तत्र सुबन्तसम्बन्धितया सुबन्तस्यैव तत्रोपपदत्वमिति नलोपसिद्धा भविष्यति। यद्यन्यपरानुवृत्तिपक्षमपरन्तथाप्यमितिकल्पनया तृतीयाभावनिवृत्तिरेवोक्तेति सुपेत्यस्य तावन्मात्राभिधानस्य भावकल्पना तदा समासाभावकल्पनाप्ययुक्तेत्याशयेनाह। किञ्चेति। एवमेते उभयनिष्ठस्वरसादनभावमाह। परिभाषेति। तृतीयान्तस्यापि निरस्या सुबन्तः प्राक् समासप्रवृत्त्यभावादिति भावः। कनाभावेनेति। गतेर्द्वितीयान्तभिन्नत्वस्य स्वात एव गत्यादिति भाव। स्वत एव। समासविधिपरत्वादिष्ट। न गतिसमास इति। न गतेर्नित्यसमास इत्यर्थः। तदाह। क्लिष्टमिति। इदम्प्रथममितरान्तस्य समासात्तत्सम्भवेप्युद्धरेत्। पञ्चम्यन्तोऽथ समासप्रज्ञाया अस्ताविऽपि यत्रभाव इति तात्पर्यम्। तथेति। पूर्वस्य

यदि तिङ्ग्रहणङ्क्रियते आमन्त्र्ये न प्राप्नोति अपचतितरामजल्पतितरामित्येव पाठस्तस्य तु वैकल्पिकसमासस्य प्रवृत्त्यप्रवृत्त्योः चोपपत्तिर्भवति । वैकल्पिकसमासप्रवृत्तिपक्षेऽप्येवं क्रमः । भिन्नपदसापेक्षत्वात्समासो बहिरङ्गः । आम् तु स्वार्थिकत्वेनान्तरङ्गः समासात्प्राक् प्रवर्त्तते । आम्विहितस्य तरबन्तस्य च आव्ययत्वेन तस्मात् ऐकार्थीभावासम्भवादामन्तेनैव समास इति । यच्च वैकल्पिकसमासस्य नित्येन गतिसमासेन बाध इति । तदपि न । नित्यसमासविधायकस्य तिङन्ताघटित इत्यर्थः कैयटादिसम्मत इत्यतो नित्यसमासप्राप्तेरेवाभावात् । यच्चाप्यतिङिति न बहुव्रीहिः । किन्तु तत्पुरुषो लाघवादिति । तन्न । अनवक्लृप्त्यमर्षयोरिति सूत्रेऽतिङिति प्रतिषेध इति प्रतीकमुपादाय न विद्यते तिङ् यस्मिन्समासे सोऽतिङिति बहुव्रीहिसमासाश्रयणादिति व्याख्यानपरकैयटग्रन्थविरोधात् । यदपि मा भूत्तरामित्यत्रोपपदमतिङिति सूत्रेण समासवारणायातिङ्ग्रहणस्य चारितार्थ्यसम्भवेनातिङ्ग्रहणस्य ज्ञापकत्वासम्भव इति दूषणाभिधानं तत्तु माङ उपपदत्वाभावेनैवालब्धावसरम् । व्याङीति सप्तम्याः प्रथमार्थकत्वङ्कल्पयित्वा माङ उपपदत्वं स्वीकृत्य प्रकृतसूत्रस्थपरिभाषाज्ञापकपरभाष्यासङ्गतिकल्पनापेक्षया सप्तम्याः प्रथमार्थत्वाभावकल्पनमेव वरमिति दिक् । ननु सुबुत्पत्तेः प्राक्समासस्वीकारेऽपि लिङ्गापेक्षस्य प्रत्ययस्य समासात्प्राक् प्रवृत्तौ व्याघ्री इत्यादिप्रयोगाणामगतिरेवेत्यत आह । स्त्रीप्रत्यय इति । ननूपपदसंज्ञाया अमा तुल्यविधानत्वेऽपि संज्ञिनः कथन्तुल्यविधानत्वमत आह । संज्ञाया इति । अत एव । समर्थपरिभाषाया उपस्थितेरेव । अपवादत्वादिति । महासंज्ञायाऽन्वर्थाभावेन नोपपदशब्देन समुदायग्रहणमिति भावः । बाधग्रहणादिति । बाधस्य शब्दस्य ग्रहणादित्यर्थः । एकार्थीभाव एव संज्ञाभावकल्पने भाष्यविरोधशङ्कां वारयति । न चेति । आहुः । सिद्धान्तानुसारिणः । उभयत्र विभाषेयम् । अत्रैव तुल्यविधानस्य प्राप्ते यथा मूलकेनोपदंशमित्यपि भवति । अन्यत्रापि तुल्यविधानस्याप्राप्ते यथा उच्चैः कारमाचष्ट इति । अव्ययेऽयथाभिप्रेताख्याने इतिसूत्रेण क्त्वाणमुलौ भवतः । समासपक्षे तदुत्तरपदप्रकृतिस्वरेणोत्तरपदाद्युदात्तत्वम्भवति । लितीतिसूत्रविषयताया असत्त्वात् । एवञ्चोच्चैरित्यनुदात्तम् । असमासे तु प्रातिपदिकस्वरेणान्तोदात्त

प्राक्सुबुत्पत्तेरितीति गतिकारकोपपदानां कृद्भिः समासः स प्राक्सुबुत्पत्तेरेवेत्येव वचनव्यक्तिरभिप्रेता। यत्तु गत्यादीनां यः समासः स कृद्भिरेव भवति स च सुबुत्पत्तेः प्रागेवेति नार्थः। तथा सति प्रपचतितरामित्यादावाम्नन्तेन समासः कुगतीत्यनेन न प्राप्नोति तत्राव्ययपूर्वपदप्रकृतिस्वरबाधेनोत्तरपदप्रकृतिस्वर इष्यमाणो गतिकारकोपपदात् कृदिति सूत्रे कृद्ग्रहणादप्रसक्तस्तत्प्रत्याख्यानेन भाष्यकैयटयोः सङ्गच्छेतो विरुध्येत। यच्च तिङि चोदात्तवतीति सूत्रे यदि तिङ्ग्रहणं क्रियते तदा प्रपचतितरामित्याम्नन्तेन समासे निघातो न प्राप्नोत्यतिङ्ग्रहणस्याव्याप्तिमुपन्यस्य तत्प्रत्याख्यानात्तत्तिनिघातेनाव्ययपूर्वपदप्रकृतिस्वरबाधनादिष्टसिद्धिरिति भाष्यकृतोक्तन्तच्च यदोत्तरपदप्रकृतिस्वरविधायके कृद्ग्रहणञ्च प्रत्याख्यातन्तदेति वेदितव्यम्। असति त्विह कृद्ग्रहणे तावतैव शेषनिघातेनेष्टसिद्धेस्तिङ्ग्रहणे सत्यपि नास्ति दोष इति तिङि चोदात्तवतीति सूत्रे कैयटोपाध्यायैरुक्तत्वादिति। तन्न। सुप्सुपेत्यस्यानुवृत्तौ प्रकृतसूत्रस्यातिङ्ग्रहणवैयर्थ्यप्रदर्शनपरभाष्येण सुप्सुपेत्यस्य निवृत्तौ बोधितायाङ्गतिकारकोपपदानां यः समासः प्राप्तः स सुबुत्पत्तेः प्रागिति विज्ञाते सति कारको व्रजतीत्यत्र पुनः समासे प्राप्ते सत्यतिङ्ग्रहणेन समाससंज्ञायास्तिङन्ताविषयकत्वे लब्धे सति गत्यादीनां कृद्भिः समास इत्येवमुद्देश्यपर्यवमाने तत्रैव सुबुत्पत्तिप्राक्कालिकत्वं विधातुमुचितमिति गत्यादीनां यः कृद्भिः सह समासः स प्राक् सुबुत्पत्तेरेवेत्येव वचनव्यक्तिर्भविष्यतीति गत्यादीनां यः समासः स कृद्भिरेवेति नियमसम्भावनाकरणस्यानौचित्यात्। किञ्च प्रपचतितरामित्यत्र चेत्समास इष्टः स्यात्तदोपपदस्य गतेर्वा यः समासः स तिङन्ताघटित इत्यर्थेऽतिङ्ग्रहणस्योभयशेषत्वस्याभ्युपगमे सति स सुप्सुपेत्यनेनोपपाद्यो न तु तत्र गतिसमासः स्वीकार्यः। यच्च प्रपचतितरामित्यत्र गतिसमासमभ्युपेत्य गतिकारकोपपदादिति सूत्रस्य भाष्यकैयटविरोधोद्भावनन्तच्च युक्तम्। वैकल्पिकसुप्सुपेतिसमासमस्त्वेऽपि तस्य भाष्यस्य सुयोजत्वात्। तस्मिन्पक्षे गतिसमासे कृद्ग्रहणसत्त्वे उत्तरपदप्रकृतिस्वरो न प्राप्नोतीत्येवन्तु नोक्तम्। यच्च तिङि चोदात्तवतीति सूत्रस्य भाष्यविरोधोद्भावनन्तस्य त्ववसर एव नास्ति। न हि तत्र प्रपचतितरामित्याम्नन्तेन समासे निघातो न प्राप्नोतीत्येवं पाठो भाष्येऽस्ति किं तु

यदि तिङ्ग्रहणं क्रियेत आमन्ते न प्राप्नोति प्रपचतितरामजल्पतितरामि-
त्येव पाठस्तस्य तु वैकल्पिकसमासस्य प्रवृत्त्यप्रवृत्त्योः चोपपत्तिर्भवति । वैक-
ल्पिकसमासप्रवृत्तिपक्षेऽप्ययं क्रमः । भिन्नपदसापेक्षत्वात्समासो बहिरङ्गः । आ-
म् तु स्वार्थिकत्वेनान्तरङ्गः समासात्प्राक् प्रवर्तते । आम्विहितस्य तरबन्तस्य च
साध्यप्रयोगेण तत्राप्यैकार्थीभावासम्भवादाममन्ते नैव समास इति । यच्च वै-
कल्पिकसमासस्य नित्येन गतिसमासेन बाध इति । तदपि न । नित्यसमास-
विधायकस्य तिङन्ताघटित इत्यर्थः कैयटादिसम्मत इत्यतो नित्यसमासप्राप्ते-
रेवाभावात् । यद्यप्यतिङिति न बहुव्रीहिः । किन्तु तत्पुरुषो लाघवादिति ।
तन्न । अनवक्लृप्त्यमर्षयोरिति सूत्रेऽतिङिति प्रतिषेध इति प्रतीकमुपादाय न
विद्यते तिङ्यस्मिन्समासे सोऽतिङिति बहुव्रीहिसमासाश्रयणादिति व्याख्यान-
परकैयटग्रन्थविरोधात् । यदपि मा भूत्तरामित्यत्रोपपदमतिङिति सूत्रेण समास-
वारणायातिङ्ग्रहणस्य चारितार्थ्यसम्भवेनातिङ्ग्रहणस्य ज्ञापकत्वासम्भव इ-
ति दूषणाभिधानं तत्तु माङ उपपदत्वाभावेनैवालब्धावसरम् । व्याघ्रीतिसप्त-
म्याः प्रथमार्थकत्वङ्कल्पयित्वा माङ उपपदत्वं स्वीकृत्य प्रकृतसूत्रस्थपरिभाषा-
ज्ञापकपरभाष्यासङ्गतिकल्पनापेक्षया सप्तम्याः प्रथमार्थत्वाभावकल्पनमेव वर-
मिति दिक् । ननु सुबुत्पत्तेः प्राक्समासस्वीकारेऽपि लिङ्गापेक्षस्य प्रत्ययस्य स-
मासात्प्राक् प्रवृत्तौ व्याघ्री इत्यादिप्रयोगाणामसङ्गतिरेवेत्यत आह । स्त्रीप्रत्यय
इति । ननूपपदसंज्ञाया अमा तुल्यविधानत्वेऽपि संज्ञिनः कथन्तुल्यविधानत्व-
मत आह । संज्ञाया इति । अत एव । समर्थपरिभाषाया उपस्थितिरेव । अप-
वादत्वादिति । महासंज्ञाश्रयार्थाभावेन नोपपदशब्देन समुदायग्रहणमिति
भावः । वाग्रहणादिति । वाशब्दस्य ग्रहणादित्यर्थः । एकार्थीभाव एव
संज्ञाभावकल्पने भाष्यविरोधशङ्कां वारयति । न चेति । आहुः । सिद्धान्तानु-
सारिणः । उभयत्र विभाषेयम् । अमैव तुल्यविधानस्य प्राप्ते यथा मूलकेनोप-
दंशमित्यपि भवति । अन्येनापि तुल्यविधानस्याप्राप्ते यथा उच्चैः कारमाचष्ट
इति । अमाव्ययेऽयथाभिप्रेताख्याने इतिसूत्रे च ज्ञापकमुभौ भवत । समासपक्षे
तदुत्तरपदप्रकृतिस्वरेणोत्तरपदाद्युदात्तत्वम्भवति । लितीतिसूत्रविषयतायास्त-
मत्वात् । प्रत्ययोच्चैरित्युदात्तम् । असमासे तु प्रातिपदिकस्वरेणान्तोदात्त

प्राक्सुबुत्पत्तेरितीति गतिकारकोपपदानां कृद्भिः समासः स प्राक्सुबुत्पत्तेरेवेत्येव वचनव्यक्तिरभिप्रेता। यत्तु, गत्यादीनां यः समासः स कृद्भिरेव भवति स च सुबुत्पत्तेः प्रागेवेति नार्थः। तथा सति प्रपचतितरामित्यादावाममन्तेन समासः कुगतीत्यनेन न प्राप्नोति तत्राव्ययपूर्वपदप्रकृतिस्वरबाधेनोत्तरपदप्रकृतिस्वर इष्यमाणो गतिकारकोपपदात् कृदिति सूत्रे कृद्ग्रहणादप्रसक्तस्तत्प्रत्याख्यानेन भाष्यकैयटयोः सङ्गच्छेतो विरुध्येत। यत्र तिङि चोदात्तवतीति सूत्रे यदि तिङ्ग्रहणं क्रियते तदा प्रपचतितरामित्याममन्तेन समासे निघातो न प्राप्नोत्यतिङ्ग्रहणस्याप्यासिसुपन्यस्य तत्प्रत्याख्यानादतिनिघातेनाव्ययपूर्वपदप्रकृतिस्वरबाधनादिष्टसिद्धिरिति भाष्यकृतोक्तस्तत्र यदोत्तरपदप्रकृतिस्वरविधायके कृद्ग्रहणस्य प्रत्याख्यातत्वदेति वेदितव्यम्। भ्रमति लिङ्ह कृद्ग्रहणे तावतैव शेषनिघातेनेष्टसिद्धेस्तिङ्ग्रहणे मत्यपि नास्ति दोष इति तिङि चोदात्तवतीति सूत्रे कैयटोपाध्यायैरुक्तत्वादिति। तत्र। सुसुपेत्यस्यानुवृत्तौ प्रकृतसूत्रस्यातिङ्ग्रहणवैयर्थ्यप्रदर्शनपरभाष्येण सुप् सुपेत्यस्य निवृत्तौ बोधितायाङ्गतिकारकोपपदानां यः समासः प्राग्, स सुबुत्पत्तेः प्रागिति विज्ञाते सति कारको व्रजतीत्यत्र पुनः समासे प्राप्ते सत्यतिङ्ग्रहणेन समाससंज्ञायास्तिङन्ताविषयकत्वे लब्धे सति गत्यादीनां कृद्भिः समास इत्येवमुद्देश्यपर्यवसाने तत्रैव सुबुत्पत्तिप्राक्कालिकत्वं विधातुमुचितमिति गत्यादीनां यः कृद्भिः सह समासः स प्राक् सुबुत्पत्तेरेवेत्येव वचनव्यक्तिर्भविष्यतीति गत्यादीनां यः समासः स कृद्भिरेवेति नियमसम्भावनाकरणस्यानौचित्यात्। किञ्च प्रपचतितरामित्यत्र चेत्समास इष्टः स्यात्तदोपपदस्यैव गतेश्च यः समासः स तिङन्ताघटित इत्ययं ऽतिङ्ग्रहणस्योभयशेषत्वलाभे सति स सुप् सुपेत्यनेनोपपाद्यो न तु तत्र गतिसमासः स्वीकार्यः। यत्र प्रपचतितरामित्यत्र गतिसमासमभ्युपेत्य गतिकारकोपपदादितिसूत्रस्थभाष्यकैयटविरोधोद्भावनमत्र युक्तम्। वैकल्पिकसुप् सुपेतिसमासमत्त्वेऽपि तस्य भाष्यस्य सुयोजत्वात्। तस्मिन्प्रयोगे गतिसमासे कृद्ग्रहणमत्त्वे उत्तरपदप्रकृतिस्वरो न प्राप्नोतीत्येतस्य मौनम्। यत्र तिङि चोदात्तवतीति सूत्रस्थभाष्यविरोधोद्भावनमत्र स्वसमय एव नास्ति। न हि तत्र प्रपचतितरामित्याममन्तेन समासे निघातो न प्राप्नोतीत्येतत्पाठो भाष्येऽस्ति किं तु

पमानोपमेयसाधारणधर्मविशिष्टोपमेयवचनत्वाभावादत आह । मयूरेति । द्विगोरर्द्धखार्या इत्यर्थे द्विगोः परो यः खारीशब्द इति भ्रमः स्यात्तन्निवारणायाह । खारीशब्दान्तादिति । प्राग्वत् । लोकात् । परिमाणत्वाट्टच इति । अगोपुच्छसंख्यापरिमाणादिति पर्युदासाट्ठकोऽप्रासेरिति भावः । एतदिति । समासेनैत्यं तदित्यर्थः । मूलोक्तविग्रहे सुराट्ब्रह्मा इत्यत्र समासानुपपत्तिपरिहारायाह । अधिकरणस्येति । नन्वेकादशेत्यत्र संख्यावाचके उत्तरपदे आत्वमनुपपन्नं विधायकाभावादित्याशङ्कते । नन्विति । अन्वाचय इति । महच्छब्दस्य घासादिष्वात्वम् । यत्र तु स्त्रीत्वं तत्र पुंवद्भावोऽपीत्यर्थात् । मतान्तरमिति । पूर्वमते तु भाष्योक्तमुदाहरणमुपलक्षणम् । नन्वच्प्रत्ययस्तत्पुरुष एवेत्यत्र नियामकाभावाद्बहुव्रीहावपीत्यनुपपन्नमत आह । तत्पुरुष एवेति । ध्वनितानभिधानादिति । तत्र हि एकादश द्वादशेति कोऽयं समासः । एकादीनां दशादिभिर्द्वन्द्वसमासः । एकादीनान्दशादिभिर्द्वन्द्व इति चेद्विंशत्यादिषु वचनं प्राप्नोति । वचनम् । द्विवचनम् । बहुवचनञ्चेत्यर्थः । एकविंशतिर्द्वाविंशतिः । एवम्पूर्वपक्षिणोक्ते सिद्धान्तिनोक्तम् । सिद्धं तु अधिकान्ता सङ्ख्या सङ्ख्यया समानाधिकरणाधिकारेऽधिकलोपश्चेति वक्तव्यम् । एकाधिका विंशतिः । एकविंशतिः । द्व्यधिका विंशतिरिति । यदि समानाधिकरणः स्वरो न सिध्यति । यदि तत्संख्यापूर्वपदप्रकृतिस्वरभवतीति द्वन्द्व इत्येवं तत् । किं पुनः कारणं द्वन्द्व इत्येव तत् । इह मा भूत् । शतसहस्रमिति । षष्ठीतत्पुरुषोऽयम् । अस्तु तर्हि द्वन्द्वः । ननु विंशत्यादिषु वचनं न सिध्यति । नैष दोषः । सर्वो द्वन्द्वो विभाषैकवद्भवति इत्युक्तम् । अत्रैकादशद्वादशविषय एव शङ्कासमाधानयोः करणादेकादिशब्दानान्द्वन्द्वतत्पुरुषयोरनभिधानमिति ध्वनितम् । सर्वो द्वन्द्वो विभाषैकवदित्यनेन समाहारद्वन्द्वाभिधानेनैकवचनस्योपपत्तिकरणेनैकवचनमेवेष्यत इति कल्प्यते । यदीतरेतरयोगोऽपि भवेत्तर्हि तत्पक्षेऽन्यवचनापत्तेर्दुर्वारतया न्यायसिद्धेन वचनेन समाधानस्य निर्दलतापत्तिस्तदेतद्ध्वनति । इतरेतरयोगस्त्विति । समाहारद्वन्द्वपक्षे लिङ्गदोषं परिहरति स्त्रीत्वं लोकादिति । द्वन्द्वविषय इति । द्व्येकयोरित्यादौ यथा । त्रिंशदादौ तु सर्वत्र । द्वन्द्वविषये वाक्ये च । त्रिंशदादयः शब्दाः सर्वदा सङ्ख्येय-

मुच्चैरिति भवतीति विशेषः । अमृग्रहणन्तु पूर्वसूत्रादनुवृत्त्या भवति । तेन पर्यासौ भोक्तुमित्यत्र न । ननु मूलकेनोपदंशमित्यत्र मूलकेनेति तृतीयान्तस्य भुजिक्रियाम्प्रति करणत्वेनान्वयादुपदंशमित्यनेनानन्वयादसामर्थ्येन कथं समासप्राप्तिरत आह । उपदंश इति । प्रधानक्रियानुरोधित्वादिति । प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् । शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यत इत्युक्तेः । क्त्वा चेत्यत्र क्त्वेत्यस्य प्रथमान्तत्वेऽर्थासङ्गतिरत आह । तृतीयान्तमिति । तृतीयाप्रभृतीनीत्यनेनान्यथासिद्धिम्परिहरति । अलंखल्वोरितीति । तद्धितार्थेति समास इति । द्वे अङ्गुली प्रमाणमस्येत्यर्थः । द्वन्द्वार्थमितीति । अत एव हेमन्तशिशिरावहोरात्रे च छन्दसीतिनिर्देशसङ्गतिः । अनभिधानमिति । द्वन्द्वार्थत्ववर्णनपरभाष्यप्रामाण्यात् । इति वेति । इष्टेः प्राबल्यात् । समासान्तस्य समुदायावयवत्वं सिद्धान्ते तस्य फलमाह । उत्तरपदेत्यादि । ननु द्व्यहीन इत्यत्र तद्धितार्थे द्विगौ टचि सति टग्रहणादेव टिलोपे सिद्धे खग्रहणवैयर्थ्यमत आह । समासान्तविधेरिति । अत एवेति । समासान्तास्त्रीकारादेश । न च खे टिलोपवचनसामर्थ्यादेव समासान्ताभावे सिद्धेऽनित्यत्वपर्यन्तानुधावनमफलमिति वाच्यम् । अह्नीन इत्यत्र तस्य सावकाशत्वात् । अत एव । लिङ्गविशिष्टपरिभाषाया अनित्यत्वादेव । स्पष्टार्थमिति । वर्णग्रहणञ्च सर्वत्रेति तदन्तविधिरत्र प्रकरणे नेत्यर्थस्य प्रतिपत्त्यर्थः । अत एव रषाभ्यामित्यत्र न तदन्तविधिः । वस्तुतोऽत्र तदन्तविध्यभावः सरूपाणामितिनिर्देशेनैव सिद्ध इति बोध्यम् । वादिनाम्मत इति । यथाश्रुतकोशार्थग्राहिणाम् । तदेतत्स्पष्टयति । वस्तुत इति । प्रत्यासत्त्याश्रयणेन सङ्गते । न चेति । तथैव समाधत्ते । सूत्रोपस्थितेति । अन्यथेति । व्याकरणैकवाक्यताया अनङ्गीकार इत्यर्थः । तत्पुरुषादितिरिक्त इति । अत एव पूर्वोक्तस्य परामर्शोपपत्तिः । ननु दीर्घाह्नीशब्दे क्षुभ्नादित्वाण्णत्वाभावकल्पने क्षुभ्नादिषु पाठमनुक्त्वा युवादिषु पाठः करिष्यत इत्युक्तभाष्ये तद्विरोध इत्यत आह । युवादिरपीति । साध्वे । अदन्तानुकरणपक्षे । अन्यथा । संज्ञादिभिरस्य । उपानसमिति । उपगतमनः उपानसम् । कदाचिच्छब्दानां यथाकथञ्चिदुत्पादनं कर्त्तव्यमित्यभिमतेऽर्थकः श्लोकार्थः । शतः । शुनः । शभु फणकमिव मकुधि इति विवरणे प्रमाणमत्राप्यो न प्राप्नोति । मकुधिशब्दस्ये-

द्विगुपदं समाहारद्विगुपरन्न भवति किंतु तद्धितार्थेत्यो द्विगुस्तत्परं बोध्यम्। तच्च तद्धितार्थस्य प्राधान्यात्परवल्लिङ्गमितिसूत्रे परपदोपादानेन यत्र पूर्वपदप्रयुक्तलिङ्गप्राप्तिस्तत्रैव तस्य सूत्रस्य प्राप्त्या तद्धितार्थद्विगौ तस्याप्राप्तेरिति भावः। अत एव। द्विगुग्रहणस्य व्यर्थत्वादेव। अत एव। अलंशब्देन नित्यसमासाभावादेव। इदञ्च प्रतिप्रसववचनमनावश्यकमित्याशयेनाह। द्वन्द्वेति। इतिन्यासेनेति। यदा तादृशन्यासेन परवल्लिङ्गमितिसूत्रस्थन्तत्पुरुषग्रहणमेकदेशिसमासप्रत्याख्यानेन प्रत्याख्यातन्तदास्य प्रतिषेधवचनस्य प्रयोजनन्नास्तीति भावः। अत एव। अतन्त्रत्वादेव। ननु समुदायस्य पूर्ववल्लिङ्गत्वेऽपि वडवाशब्दे टापः सत्त्वात्स्त्रीप्रत्यये तदादिनियमाभावादश्ववडवे इति स्यात्। सूत्रे टापो निवृत्तावपि लौकिकेऽप्रयोगे टापः सत्त्वादत आह। अश्ववडवाविति। समुदायस्याबन्तत्वाभावादिति। उद्भूतावयवभेदसमाहारस्य विशेष्यत्वेनोपसर्जनत्वात्। वस्तुतस्तु गोवडवे इतिप्रयोगसिद्धये आबन्तान्तं यदङ्गमितिरीत्या तदन्तविधिद्वयमवश्यं स्वीकार्यन्तथा चाश्ववडवावित्यस्यासिद्धिर्दुर्वारैवेति पूर्ववदश्ववडवेतिसूत्रनिर्देश एव टान्निवृत्तिसाधक इति बोध्यम्। नन्वेवमतिदेशवैयर्थ्यमत आह। अतिदेशेति। शोभनावश्ववडवाविति यथा। ननु पूर्ववदश्ववडवावित्यानुपूर्वीकसूत्रेण कथमनुप्रयोगे पूर्ववल्लिङ्गत्वप्रतिपादनमत आह। अश्ववडवशब्दार्थ इति। अत एव। रात्राह्नेतिसूत्रस्य द्विगुप्राप्तेत्यादिनिषेधविषयेऽपि प्रवृत्तिस्वीकारादेव। प्रत्याख्यातमिति। यदि रात्राह्नेति सूत्रस्य द्विग्वादिविषयेऽप्रवृत्तिः स्यात्तदा परवदिति सूत्रे तत्पुरुषपदसत्त्वे तन्निषेधार्थमारब्धेन प्राप्तेत्यादिवार्त्तिकेन रात्रेत्यादिसूत्रस्यापि बाधः स्यात् यदि तु तस्मिन्सूत्रे तत्पुरुषग्रहणस्य क्रियते एकदेशिपक्षं कृत्वा वार्त्तिकमप्रत्याख्यायते तदा रात्राह्नेतिसूत्रस्य वार्त्तिकविषये प्रवृत्तिरितिफलभेदस्य स्पष्टतया वार्त्तिकप्रत्याख्यानविरोधः स्पष्ट एव। ननु परवदितिसूत्रस्यतत्पुरुषग्रहणप्रत्याख्याने प्रकृतसूत्रे तत्पुरुष इत्यस्य कथं लाभ इत्यत आह। अन्वयेति। तत्पुरुषे चेतिप्रकृतसूत्रे पठनीयमिति भावः। अत एव। वार्त्तिकविषयेऽपि रात्रेतिसूत्रस्य तत्पुरुषपदस्वरसेन प्रवृत्तेरेव। प्राप्तः पराप्तः सर्वाङ्ग इति च प्रादिसमासः। चरितार्थमिति ॥

संख्ययोरिति कोशात्।भाष्यविरोधशङ्कां वारयति। भाष्य इत्यादि। एकदेशिन
इति। एकदेशित्वं स्फुटयति। सा चेति। इदमपीति'। अस्तु'तर्हि 'इत्येतत्कथ
नमपि। व्याख्यानादिति। सन्धिवेलादिगणे चयोदशीशब्दस्य पाठदर्शनमूल-
काद्व्याख्यानादित्यर्थः। सुजर्थ 'इति। त्रिराहत्ता दश त्रिदशाः। एकादिश्चैक-
स्य चादुक्। अत्रादुगागमेऽकारोच्चारणसामर्थ्यान्न पररूपम्। प्रसिद्धत्वादिति।
प्रकृतसूत्रे द्व्यष्टन इति सूत्रात्सङ्ख्यायामित्यस्यानुवृत्त्या संख्यायामेवास्य प्रवृ-
त्त्या तद्घटितसमासघटकतया शीघ्रोपस्थितिकत्वादित्यपि बोध्यम्। योगवि-
भागस्यादर्शनादाह। मयूरेति। व्याख्यानादिति। धे चेत्यत्र बहुवचने धाक्षिति
बहुवचनोपादानेन नानाधिकरणवाचिनः संख्याशब्दाद्बहुत्वपदार्थे वर्तमाना-
द्यो धाप्रत्ययो विधीयते तस्येदं ग्रहणमत एवोत्तरपदाधिकारबाधस्तदेशे क-
ल्प्यते इत्येवम्प्राचां व्याख्यानादित्यर्थः। धाक्षितिसप्तमीनिर्देशात्तन्निमित्तक-
कार्यस्यैव विकल्पस्तदाह। उत्त्वस्यैवेति। उत्तरपदादेरित्यत्रोत्तरपदशब्दः प्र-
त्यासत्त्याप्रकृतवाक्यघटकनिमित्त परः। तेन धाप्रत्ययस्योत्तरपदत्वाभावेऽपि
न क्षतिः। वाक्यभेदेन च ष्टुत्वविधानम्। विधेयभेदस्य न्याय्यत्वात्। विभिन्न-
वाक्ये च वाशब्दो न सम्बध्यते। तेन तस्योत्वाभावेऽपि प्रवृत्तिस्तदाह। नित्य-
मेवेति। अत एव भाष्ये षष उत्वन्दतृदशधासूत्तरपदादेः ष्टुत्वं च धासु वेति वक्तव्यमिति पृथग्वचनानि पठितानि।
द्वयदसमतमाह। उत्वपक्षे नित्यमिति। तेनोत्वाभावे ष्टुत्वस्याप्यभाव इति।
अथ। मतद्वयमध्ये। परवल्लिङ्गमितिसूत्रे द्वन्द्वपदमितरेतरयोगपरमित्याशये-
नाह। समाहार इति। तच। इतरेतरयोगद्वन्द्वे। तेन। यथापरत्वेन। प्रकृत-
सूत्रे द्वन्द्वतत्पुरुषयोरिति षष्ठी न तु सप्तमी। तेन द्वन्द्वे तत्पुरुषे च परपद-
स्यैव लिङ्गं पूर्वपदस्येति नार्थः। न चेष्टापत्तिः। मयूरीकुक्कुटावित्यापत्ते पू-
र्वपदे स्त्रीप्रत्ययमिष्टत्वापत्तेः। परवदित्यत्र षष्ठ्यन्तात्वतिः। द्विगुप्राप्तेति सम्-
र्दिते चार्थे कृतिनिषेधनिवारणायाह। द्विगुप्रहणमिति। कैयटानुरोधेनेति।
द्विगुरेकवचनमितिसूत्रे समाहाराभिप्रायात् पञ्चकपाली पञ्चकपाला इतिभा-
ष्यप्रयोगादेकविभक्तीतिसूत्रभाष्यव्याख्यावसरे तेन परवल्लिङ्गत्वबाधदर्शनाच्चेति
भावः। द्विगुपक्षाभावेऽपि न क्षतिरित्याशयेनाह। तत्पुरुष इति। द्विगुरिदमपरं

द्विगुपदं समाहारद्विगुपरम् भवति किंतु तद्धितार्थयो द्विगुस्तत्परं वाच्यम्। तच्च च तद्धितार्थस्य प्राधान्यात्परवल्लिङ्गमितिसूत्रे परपदोपादानेन यत्र पूर्वपदप्रयुक्तलिङ्गमाशिस्तत्रैव तस्य सूत्रस्य प्राप्त्या तद्धितार्थद्विगौ तस्याप्राप्तेरिति भावः! अत एव। द्विगुग्रहणस्य व्यर्थत्वादेव। अत एव। अलंशब्देन नित्यसमासाभावादेव। इदञ्च प्रतिप्रसववचनमनावश्यकमित्याशयेनाह। द्वन्द्वेकेति। इतिन्यासेनेति। यदा तादृशन्यासेन परवल्लिङ्गमितिसूत्रस्थतत्पुरुषग्रहणमेकदेशिसमासप्रत्याख्यानेन प्रत्याख्यातन्तदास्य प्रतिषेधवचनस्य प्रयोजनमास्तीति भावः। अत एव। अतन्त्रत्वादेव। ननु समुदायस्य पूर्ववल्लिङ्गत्वेऽपि वडवाशब्दे टापः सत्वात्स्त्रीप्रत्यये तदादिनियमाभावादश्ववडवे इति स्यात्। सूत्रे टापो निवृत्तावपि लौकिकेऽप्रयोगे टापः सत्वादत आह। अश्ववडवावितीति। समुदायस्यावस्त्वाभावादिति। उद्भूतावयवभेदसमाहारस्य विशेष्यत्वेनोपसर्जनत्वात्। वस्तुतस्तु गोवडवे इतिप्रयोगसिद्धये चावस्तान्तं यदङ्गमितिरीत्या तदन्तविधिद्वयमवश्यं स्वीकार्यन्तथा चाश्ववडवावित्यस्यासिद्धिर्दुर्वारैवेति पूर्ववदश्ववडवेतिसूत्रनिर्देश एव टाब्निवृत्तिसाधक इति बोध्यम्। नन्वेवमतिदेशवैयर्थ्यमत आह। अतिदेशेति। शोभनावश्ववडवाविति यथा। ननु पूर्ववदश्ववडवावित्यानुपूर्वीकसूत्रे च कथमनुप्रयोगे पूर्ववल्लिङ्गत्वप्रतिपादनमत आह। अश्ववडवशब्दार्थे इति। अत एव। रात्राह्नेतिसूत्रस्य द्विगुमासेत्यादिनिषेधविषयेऽपि प्रवृत्तिस्वीकारादेव। प्रत्याख्यातमिति। यदि रात्राह्नेति सूत्रस्य द्विग्वादिविषयेऽप्रवृत्तिः स्यात्तदा परवदिति सूत्रे तत्पुरुषपदमस्त्वे तन्निषेधार्थमारब्धेन प्राप्तेत्यादिवार्त्तिकेन रात्रेत्यादिसूत्रस्यापि बाधः स्यात् यदि तु तस्मिन्सूत्रे तत्पुरुषग्रहणम् क्रियते एकदेशिग्रहणं कृत्वा वार्त्तिकप्रत्याख्यायते तदा रात्राह्नेतिसूत्रस्य वार्त्तिकविषये प्रवृत्तिरितिफलभेदस्य स्पष्टतया वार्त्तिकप्रत्याख्यानविरोधः स्पष्ट एव। ननु परवदितिसूत्रस्थतत्पुरुषग्रहणप्रत्याख्याने प्रकृतसूत्रे तत्पुरुष इत्यस्य कथं लाभ इत्यत आह। अत्रैवेति। तत्पुरुषे चेतिप्रकृतसूत्रे पठनीयमिति भावः। अत एव। वार्त्तिकविषयेऽपि रात्रेतिसूत्रस्य तत्पुरुषपदकरणेन प्रवृत्तेरेव। प्राह्न पराह्नः सर्वाह्न इति च प्रादिसमासः। परिमाणमिति ॥

पुण्याहं सुदिनाहमित्यत्र रात्रेत्यनेन पुंस्त्वे प्राप्ते पुण्येत्यनेन नपुंसकत्वं विधेयम् । यदि तु अस्य वचनस्यार्थ्यं एकदेशिसमासविषयकत्वमेकदेशिग्रहणानुवृत्त्या सम्पाद्यते तदाऽस्य सूत्रस्य पूर्वाह्णः पूर्वरात्र इत्यादिरेवोदाहरणम् भविष्यतीति प्राह सर्वाह्ण इत्याद्यमिह पुण्येति च व्यर्थम् । पुण्याहमित्यादावुत्तरपदार्थस्य प्राधान्यात्तल्लिङ्गत्वमनायासेनैव सिद्धमिति भावः । अभावादिति । द्वन्द्व समुदायावयवत्वात् । प्रतिप्रसवेति । तत्पुरुषसमासे प्राप्तस्य रात्राह्नाहा इत्यस्य सख्यापूर्वमितिवचनेन नपुंसकत्वस्त्रीत्वाभ्यां प्राप्तस्यैव परवल्लिङ्गत्वस्याभिधानं सम्भवतीति लाघवमस्तीति भावः । ननु संख्यापूर्वमितिवचनस्वीकारे त्रिंशद्रात्र पञ्चदशरात्र इतिप्रयोगविरोध इत्यत आह । भविष्यतीति । यदि त्वं तयोर्बहुव्रीहिरसमासत्वन्त्वेवेत्याजितियोगविभागेनाचप्रत्ययश्च स्वीक्रियते तदा पुंस्त्वमनायासेन सिध्यत्येव परन्त्वयमेद स्पष्टः । नाह्नेति । अपप्रमित्यर्थः तदित्यर्थः । ननु समासनिरूपणप्रस्तावे जात्याख्यायामित्यादिसूत्रविवरणमप्रस्तुतमत आह । नन्विति । एवं चानायसप्रकारमाज त्यां लिङ्गानुशासनप्रस्तावे जात्याख्यायामित्यादिनिरूपणं सङ्गतमेवेति भावः । यथादिशब्दानामिति । सम्पन्नो यव इत्यादौ । बहुवचनविधानस्य फलमाह । तन्त्रेति । एकत्वमिति । जातिगतमेकत्वमित्यर्थः । एतच्चेति । जात्याख्यायामितिसूत्रमित्यर्थः । सूत्रेति । साधं इति । सूत्रारम्भे जातावेव बहुवचनार्थैकत्वस्यान्वयस्वीकारः सम्प्रति तु बहुवचनार्थस्य बहुत्वस्य व्याक्तावन्वय इति मतभेद स्पष्ट एवेति भावः । एतेन । पूर्वोक्तव्याख्यानेन । मुख्यार्थ इति । सत्कोशार्थमहामाधवीधफल्त्वं यदाग्ध शब्दस्य तदन्यर्थः । उपासितेति । उपासितात् गुरौर्या प्रज्ञा तया योऽभिमानस्तेनोद्धता इत्यर्थः । ननु गार्ग्योऽहमित्यादौ गार्ग्यशब्दस्य जातिमभिधाय इत्यत्र फलमाहमित्यर्थं तदर्थस्य तु विधेयत्वमिति नाख्यादर्थस्य अधिकोपयक्तमत आह । गार्ग्योऽहमित्यादि । द्वयोरित्यनुकर्षं इति । तत्र द्विपदस्यादप्रधानमित्र्येण द्विवचनम् । अत एव । प्रत्यर्थं बहुवचनमक्षपादेश । तदेकमित्यन्वयः । जातिरथाद्विभावितिसूत्रे कान्वियत्वस्य । स्पष्टं द्वयोरिति । तत्र हि बहुवचनमन्यतरस्यामित्यर्थः । उदितमित्यनुवर्तते । कथयाकेतरमम् । जातिशब्द एकवद्भवतीति । पञ्चालित निति प्रतिपत्य प्राप्तौ । उभशब्द लिङ्ग शी । दश्च एकवद्

षडुरोति तज्ज्ञापयत्याचार्यः सर्वो द्वन्द्वो विभाषैकवद्भवतीति । किमेतस्य ज्ञापने प्रयोजनम् । बाभ्रवशालङ्कायनम् । बाभ्रवशालङ्कायना इत्येतत्सिद्धम्भवति। यथ वा नात्र भवन्तः प्राणिनः प्राणा एवात्र भवन्तः इत्युक्तम् । कथं चार्थे कवचनमितिपूर्वपक्षिणो द्वन्द्वश्चे त्यादिप्रकरणस्य प्राण्यङ्गादीनामेव समाहार इत्यर्थकत्वमनुमतम् । जातिद्वन्द्वेत्युत्तरपादिनस्तु प्राण्यङ्गादीनां समाहार एवेत्यर्थोऽश्चेति निश्चयः । नक्षत्रवाचकानाञ्जातिवाचकत्वन्तु प्रतिमन्वन्तरेऽन्यानि नक्षत्राणि भवन्तीतिदर्शनेन कैयटेनोपपादितम् । एवञ्च प्राण्यङ्गादीनां समाहार एवेतिनियमे कृते तद्व्यतिरिक्तद्वन्द्वस्योभयरूपत्वस्बोध्यत इति फलितम् । नक्षत्रवाचकानाञ्जातिवाचकत्वेऽपि प्राणित्वमेषामितिन्यायप्राप्तस्योभयरूपद्वन्द्वस्य नक्षत्रवाचकशब्दावयवकस्यैव । अथ इति तिष्यपुनर्वस्वोरितिसूत्रे बहुवचनग्रहणं सार्थकमिति भावः । सर्वो द्वन्द्व इत्यस्य द्वन्द्वश्चे त्यादिप्रकरणाविषयः सर्व इत्यर्थः । स च न्यायसिद्ध एव । अथ वेति । न ह्येतेषु प्राणित्वेन व्यवहारो लोके किं तु प्राणिनान्तदधीनस्थितिकत्वात्प्राणिनामेते प्राणा एव । अद्भिर्विना येषाम्प्राणा ग्लायमाना भवन्ति ते प्राणिन इत्युच्यन्ते । नक्षत्रत्वेन ये प्रसिद्धास्तेषाम्प्राणा अद्भिर्विना न ग्लायमाना इत्येते न प्राणिनः । इदमेव पुष्यलम्भार्थे भवच्छब्देनोच्यते । एवं सति यदि जातीतिसूत्रस्य नित्यैकवद्भावविधायकत्वमेव स्यात्तदा नक्षत्रवाचकानान्द्वन्द्वस्य नित्यैकवचनान्ततया बहुवचनाभावात्तिष्यपुनर्वस्वोरितिसूत्रमसङ्गतार्थकं स्यादतस्तद्वैकल्पिकत्वमप्यनेन बोध्यते इतिभाष्यकृता ध्वनितम् । नन्वेवं सर्वो द्वन्द्व इत्यनेनैतत्प्रकरणाविषयस्यैव ग्रहणे जातिद्वन्द्वस्यैतत्प्रकरणस्थत्वात्तस्यापि नित्यत्वमेवायातमिति कथं बहुवचनग्रहणचारितार्थ्यमिति वाच्यम् । यस्यता विनाऽनुपपत्तिस्तस्य सर्वस्य बाध्यत्वादितिन्यायेन सर्वो द्वन्द्व इत्यस्यैकवद्भावविषयो जातिद्वन्द्वः सर्व इत्यर्थात् । अत एव विभाषा वृक्षेतिसूत्रेऽपि समाहारस्यैकत्वादेकत्वे सिद्धे एकवद्भावविधानमनर्थकमित्याशङ्क्य पूर्वञ्च नित्यार्थमुत्तरञ्च व्यभिचारार्थमिति भाष्यकृतोक्तम् । तत्र कैयटः । पूर्वञ्चे ति । प्राण्यङ्गादीनां समाहार एवेत्येवमर्थमित्यर्थः । उत्तरञ्च क्व चिज्जातिरप्राणिनामितिनित्ये प्राप्ते विभाषा इत्याह । क्व चिदित्यनेन भाष्योक्तव्यभिचारो दर्शितः । व्यभिचारार्थमित्यस्य व्यभिचारार्थमि-

षड्गरीति तज्ज्ञापयत्याचार्यः सर्वो द्वन्द्वो विभाषैकवद्भवतीति । किमेतस्य ज्ञापने प्रयोजनम् । बाभ्रवशालङ्कायनम् । बाभ्रवशालङ्कायना इत्येतत्सिद्धं भवति। अथ वा नात्र भवन्तः प्राणिनः प्राणा एवात्र भवन्तः इत्युक्तम् । कथं चात्रैकवचनमितिपूर्वपक्षिणो द्वन्द्वश्चेत्यादिप्रकरणस्य प्राण्यङ्गादीनामेव समाहार इत्यर्थकत्वमनुमतम् । जातिद्वन्द्वेत्युत्तरवादिनस्तु प्राण्यङ्गादीनां समाहार एवेत्यर्थोऽत्रे ति नियमः । नक्षत्रवाचकानाञ्जातिवाचकत्वन्तु प्रतिमन्वन्तरेऽन्यानि नक्षत्राणि भवन्तीतिदर्शनेन कैयटेनोपपादितम् । एवञ्च प्राण्यङ्गादीनां समाहार एवेतिनियमे कृते तद्व्यतिरिक्तद्वन्द्वस्योभयरूपत्वम्बोध्यत इति फलितम् । नक्षत्रवाचकानाञ्जातिवाचकत्वेऽपि प्राणित्वमेषामितिन्यायप्राप्तस्योभयरूपद्वन्द्वस्य नक्षत्रवाचकशब्दावयवकस्यैव । अत इति तिष्यपुनर्वस्वोरितिसूत्रे बहुवचनग्रहणं सार्थकमिति भावः । सर्वो द्वन्द्व इत्यस्य द्वन्द्वश्चेत्यादिप्रकरणाविषयः सर्व इत्यर्थः । स च न्यायमिह एव । अथ वेति । न ह्येतेषु प्राणित्वेन व्यवहारो लोके किं तु प्राणिनामेतदधीनस्थितिकत्वात्प्राणिनामेते प्राणा एव । अद्भिर्विना येषाम्प्राणा ग्लायमाना भवन्ति ते प्राणिन इत्युच्यन्ते । नक्षत्रत्वेन ये प्रसिद्धास्तेषाम्प्राणा अद्भिर्विना न ग्लायमाना इत्येते न प्राणिनः । इदमेव पुष्यत्वमाश्रे भवच्छब्देनोच्यते । एवं सति यदि जातीतिसूत्रस्य नित्यैकवद्भावविधायकत्वमेव स्यात्तदा नक्षत्रवाचकानान्द्वन्द्वस्य नित्यैकवचनान्ततया बहुवचनाभावात्तिष्यपुनर्वस्वोरितिसूत्रमसङ्गतार्थकं स्यादतस्तद्वैकल्पिकत्वमप्यनेन बोध्यते इतिभाष्यकृता ध्वनितम् । नन्वेवं सर्वो द्वन्द्व इत्यनेनैतत्प्रकरणाविषयस्यैव ग्रहणे जातिद्वन्द्वस्यैतत्प्रकरणस्थत्वात्तस्यापि नित्यत्वमेवायातमिति कथम्बहुवचनग्रहणचारितार्थ्यमिति वाच्यम् । यद्वता विनाऽनुपपत्तिस्तस्य सर्वस्य प्राप्त्यवादितिन्यायेन सर्वो द्वन्द्व इत्यस्यैकवद्भावविषयो जातिद्वन्द्वः सर्व इत्यर्थात् । अत एव विभाषा वृक्षेतिसूत्रेऽपि समाहारस्यैकत्वादेकत्वे सिद्धे एकवद्भावविधानमनर्थकमित्याशङ्क्य पूर्वेण नित्यार्थमुत्तरञ्च व्यभिचारार्थमिति भाष्यकृतोक्तम्। तत्र कैयटः।पूर्वञ्चे ति । प्राण्यङ्गादीनां समाहार एवेत्येवमर्थमित्यर्थः । उत्तरञ्च क्वचिज्जातिरप्राणिनामितिनित्ये प्राप्ते विभाषा इत्यादि । क्व चिदित्यनेन भाष्योक्तव्यभिचारो दर्शितः । व्यभिचारार्थमित्यस्य व्यभिचारार्थमि-

त्यर्थः । स च वा चिदेकवद्भावात्क्वाचित्कत्वाभावाद्बोध्यः । न केवलमप्रकृतसूत्रस्य बहुवचनस्य स्थाने द्विवचनादेशविधायकत्वोपपत्तिरेवैतादृशकल्पनायाः प्रयोजनम् । किं तु मृदङ्गशङ्खतूणवाः पृथङ्नदन्ति संसदीति भाष्योक्तप्रयोगस्याप्युपपत्तिरिति । प्रकृतसूत्रे समासग्रहणमकृत्वा द्वन्द्वग्रहणमेव कृतन्तत्प्रयोजनमाह । नचचेति । विपर्यासबुद्धिविषया इत्यस्य विशेष्यावृत्तिधर्मप्रकारकबुद्धिविषया इत्यर्थः । सा च तिष्यविशेष्यिका पुनर्वसुत्वप्रकारिका पुनर्वसुविशेष्यिका तिष्यत्वप्रकारिका ज्ञेया । पूर्वं यद्यपि जात्याख्यायामितिसूत्रसमूहवदित्यनेनास्मदो द्वयोश्चेत्यस्यानावश्यकत्वं सूचितमेव तथापि तत्र युक्त्यनभिधानात्तां वक्तुमनुपुनराह । अस्मद इत्यादीति । तथेति । अनावश्यकत्वमित्यर्थः । इति भाव इति । लिङ्गविशेषबोधकसूत्रव्याख्यानानन्तरञ्जात्याख्यायामित्यादिसूत्रव्याख्यानकर्तुर्भाव इत्यर्थः । उच्छृङ्खलास्त्विति । एवमभिधानम्भाष्यकृता तुल्यपदानुवृत्त्याऽनावश्यकत्वनाभिहितमिति सूचनाय । अत एव भाष्यकृता जात्याख्यायामितिसूत्रव्याख्यावसरे आदौ सूत्रस्य प्रयोजनमुक्त्वा अग्निर्वा बहुवत्पृथक्त्वाभिधानादितिवार्त्तिकं व्याख्यातम् । अग्नयो वा बहुत्वात् इत्यादिना ॥ अस्मदो द्वयोश्चेतिसूत्रे फल्गुनीतिसूत्रे च अयमपि योगः शक्योऽवक्तुमित्यभिहितम् । तेन तुल्यपदे स्वरितत्वमस्तीति गम्यत इति । व्याख्यानादिति । द्विगुरेकवचनमितिसूत्रस्य समाहारस्यैकत्वे नैव द्विगोरेकवचनमभविष्यतीत्यभिप्रायेण न वा समाहारैकत्वात्समाहारस्यैकत्वादेकवचनमभविष्यतीत्यनेन प्रत्याख्यानकृतमिति तत्सूत्रस्थद्विगुपदे समाहारद्विगुपरमेव । तथा विभाषासमीप इतिसूत्रे उपदशम्यापिपादमितिसमाहारद्वन्द्वस्य नपुंसकत्वाभिधानकृतमित्यत्रत्यमच्छब्दस्य पूर्वोक्तोभयपरत्वमित्यभिप्रायकव्याख्यानादित्यर्थः । यदि द्वन्द्वग्रहणमात्रानुवृत्तिरभिमता स्यात्तदा द्वन्द्वग्रहणानुवृत्त्यैव सिद्धे तच्छब्दोपादानं व्यर्थं स्यादिति भावः । सूत्रशब्दस्य पाठाद्यन्तं पाठाभावेऽपि बहुसूत्रमितिभाष्यीयप्रयोगस्योपपत्तिमाह । बहुसूत्रमितीति । प्रथमान्तमिति । एतेन यद्यन्तत्वग्रहं वारयति । राजान्ताहा इतिसूत्रे पर्वर्षा इतिसूत्रे च प्रथमान्तयोरेव सत्त्वेन प्रकृतेऽपि तथैव कल्पनादिति भावः । ननु पथः महा इतिसूत्रे महाशब्दोपादानेन महाशब्दोच्चारणेन यः समासस्तद्वितार्थत्वेन विधीयते

तस्यैव प्रतिपदोक्तत्वाद्ग्रहणं स्यादत आह । प्रतिपदोक्तेति । व्याख्यानादिति । अव्ययसाहचर्यमूलकव्याख्यानादित्यर्थः । ननु विपथेत्यत्रापि कृतसमासान्तपथशब्दसत्त्वान्नपुंसकत्वापत्तिरत आह । विपथेति । अनेनैव । पथ इतिसूत्रेणैव । अनियतलिङ्गेति । सामान्ये इत्युपादानादत्र नियतलिङ्गत्वमन्यत्र तु तच्छब्दस्वभावात्तल्लिङ्गत्वमेव । लिङ्गसर्वनामेति । सर्वनामशब्दोऽत्र सर्वनामसदृशपरः । लिङ्गानां सर्वनामेति समासः । यथा सर्वनाम्नः सर्वद्रव्यपरामर्शकत्वं तथा नपुंसकत्वमनियतलिङ्गेषु सर्वत्र प्रवर्त्तत इति भावः । अनेनैव । सामान्ये नपुंसकमित्यनेनैव । फलांशस्येति । व्यपदेशिवद्भावेनेति शेषः । फलस्य कारकत्वमुपपादयति । तस्येति । न च फलस्य कर्मत्वास्वीकारे का क्षतिरिति वाच्यम् । एवं सति तद्विशेषणशोभनादेर्द्वितीयान्तत्वं न स्यात् । इष्टापत्तिरिति चेत् । निपुणस्त्वमर्चसि मृदु त्वा राजा द्रविणेन योजयतीत्यत्र सपूर्वायाः प्रथमाया विभाषेतिविकल्पापत्तेः । करणत्वेनान्वय इति । तत्र फलांशस्य करणत्वविवक्षास्वीकारात् । विक्लित्तिकरण इति । अत्र करणत्वनिष्ठा विषयता संसर्गरूपा । न तु प्रकारतारूपा । अपदार्थत्वात् । तस्याः । विक्लित्तेः । केषाञ्चिदिति । एतेन तादृशव्यवहारो न युक्तः फलानाश्रयत्वादिति सूचयति । ज्योतिष्टोमेन भक्तिपूर्वं यजेतेत्यत्रापि ज्योतिष्टोमेनेतितृतीयोपपत्तये फलांशस्य करणत्वेनान्वयाद्भक्तिपूर्वमिति द्वितीया कथमिति न शङ्क्यम् । तत्र भक्तिपूर्वमित्यस्य भावनाविशेषणत्वेन प्रथमान्तत्वान्नपुंसकत्वाच्च । स्वर्गकाम इत्यादिपदसमभिव्याहारे तु स्वर्गकामतावत्कर्तृकत्वमाख्यातार्थभावनायाम्भासते । एवञ्च तादृशपुरुषवृत्तीच्छायामर्थात्तद्धात्वर्थप्रयोज्यत्वलाभ इति दिक् । अधिकारोऽयमिति । तेन वक्ष्यमाणसूत्राणां नञ्समासकर्मधारयभिन्नसमासे प्रवृत्तिः । आरोपितस्य नञर्थत्वेन नञ्समासस्यापि कर्मधारयत्वान्नञ्पदवैयर्थ्यं शङ्कायामाह । अनञिति । नास्तीतीति । तदुक्तम्भाष्ये । न हि संज्ञायां कन्थान्त उशीनरेष्वतत्पुरुषो नञ्समासः कर्मधारयो वास्तीति । तदुपक्रमं सौअन्यमित्यादिष्वादित्वाभावात्कथमुपस्थ इतिसूत्रप्रवृत्तिरत आह । इह स मेति । भाषा । प्रायोक्तौ । इह पष्ठीतत्पुरुषं विनेति । तदुक्तं भाष्ये । न हि तदाद्यपिस्थामायामुपसोपक्रमाऽतत्पुरुषो नञ्समासः कर्मधारयो वास्ती-

त्यर्थः । स च वा चिदेकवद्भावात्क्वचिदित्यत्वाभावाद्बोध्यः । न केवलप्रकृतसूत्रस्य बहुवचनस्य स्थाने द्विवचनादेशविधायकत्वोपपत्तिरेवैतादृशकल्पनाया. प्रयोजनम् । किं तु मृदङ्गशङ्खतूणवाः पृथङ्नदन्ति संसदीति भाष्योक्तप्रयोगस्याप्युपपत्तिरिति । प्रकृतसूत्रे समासग्रहणमकृत्वा द्वन्द्वग्रहणमेव कृतमन्तत्प्रयोजनमाह । नचचेति । विपर्यासबुद्धिविषया इत्यस्य विशेष्यावृत्तिधर्मप्रकारकबुद्धिविषया इत्यर्थः । सा च तिष्यविशेष्यिका पुनर्वसुत्वप्रकारिका पुनर्वसुविशेष्यिका तिष्यत्वप्रकारिका ज्ञेया । पूर्वं यद्यपि जात्याख्यायामितिसूत्रसमूहवदित्यनेनास्मदो द्वयोश्चेत्यस्यानावश्यकत्वं सूचितमेव तथापि तत्र युक्त्यनभिधानात्तां वक्तुम्पुनराह । अस्मद इत्यादीति । तथेति । अनावश्यकत्वमित्यर्थः । इति भाव इति । लिङ्गविशेषबोधकसूत्रव्याख्यानानन्तरञ्जात्याख्यायामित्यादिसूत्रव्याख्यानकर्तुर्भाव इत्यर्थः । उच्छृङ्खलास्विति । एवमभिधानम्भाष्यकृता तुष्यपदानुवृत्त्याऽनावश्यकत्वञ्चाभिहितमिति सूचनाय । अत एव भाष्यकृता जात्याख्यायामितिसूत्रव्याख्यावसरे आदौ सूत्रस्य प्रयोजनमुक्त्वा अग्निर्वा बहुवत्प्रयुङ्क्ताभिधानादितिवार्त्तिकं व्याख्यातम् । अग्निर्वा बहुवद्भाव.इत्यादिना ॥ अस्मदो द्वयोश्चेतिसूत्रे फल्गुनीतिसूत्रे च अयमपि योगः शक्योऽवक्तुमित्यभिहितम् । तेन तुष्यपदे स्वरितत्वन्नास्तीति गम्यत इति । व्याख्यानादिति । द्विगुरेकवचनमितिसूत्रस्य समाहारस्यैकत्वे नैव द्विगोरेकवचनभविष्यतीत्यभिप्रायेण न वा समाहारैकत्वात्समाहारस्यैकत्वादेकवचनभविष्यतीत्यनेन प्रत्याख्यानकृतमिति तत्सूत्रस्यद्विगुपदं समाहारद्विगुपरमेव । तथा विभाषासमीप इतिसूत्रे उपदशम्पाणिपादमितिसमाहारद्वन्द्वस्य नपुंसकस्याभिधानकृतमित्यत्रत्यनच्छब्दस्य पूर्वोक्तोभयपरत्वमित्यभिप्रायकव्याख्यानादित्यर्थः । यदि द्वन्द्वग्रहणमात्रानुवृत्तिरभिमता स्यात्तदा द्वन्द्वग्रहणानुवृत्त्यैव सिद्धे तच्छब्दोपादानं व्यर्थं स्यादिति भाव. । सूत्रशब्दस्य पाठाघटत्वं पाठाभावेऽपि बहुसूत्रमितिभाष्यीयप्रयोगस्योपपत्तिमाह । बहुसूत्रमितीति । प्रथमान्तमिति । एतेन षष्ठ्यन्तत्वशङ्कां वारयति । राधान्ताहा इतिसूत्रे चर्थेर्था इतिसूत्रे च प्रथमान्तयोरेव सत्वेन प्रकृतेऽपि तथैव कल्पनादिति भावः । ननु पदः सङ्गे इतिसूत्रे महाशब्दोपादानेन महाशब्दोच्चारणेन यः समासप्रतिपादितोऽयमेव विधीयते

चित्रगु क देवदत्त इति। एवं रीत्या प्रथमान्तपदार्थेन सामानाधिकरण्यप्रदर्शनपरतया समाधानङ्गतत्तन्मूलकादित्यर्थः । तच्छब्दार्थसंबन्धिकल्पनापेक्षया यद्विभक्त्यर्थे समासविधानं तद्विभक्तिप्रकृत्यर्थ एव संबन्धित्वेन कल्प्यते । तत्र। अप्रथमाविभक्त्यर्थे समासाश्रयमध्ये । कर्तृकर्मवचनेति। कर्तृवचनस्य यथा। प्राप्तोदको ग्राम इति। यथा चात्र वृत्तिविग्रहवाक्यार्थयो कल्पना तथान्यत्र प्रपञ्चितम् । कर्मवचनस्य यथा। ऊढतौदना स्थालीत्यादौ। ननु ततः परो यस्मादित्यादौ मत्वर्थाभावेऽपि बहुव्रीहिदर्शनान्मत्वर्थे बहुव्रीहिरित्याद्यनुपपन्नमत आह। त पर इति। अन्यार्थ इत्येव सिद्धे पदग्रहणङ्किमर्थमित्याकाङ्क्षायामाह। यावती नदीति। बहुव्रीहिश्चाप्त्यर्थम् । बहुव्रीहिसंज्ञाव्याप्त्यर्थमित्यर्थः । बहुपदो बहुव्रीहिरिति। तथा च जरती चित्रा गौरित्यर्थेऽपि बहुव्रीहे साधुत्वापत्ति । अत्र बहुपद इत्यभिधानेन राजपुरुष इत्यादौ यद्यप्यर्थ कासंज्ञाधिकारात्तत्पुरुषो बहुव्रीहिस्बाधते तथापि तस्य नावसर इति सूचयति। तदेवोपपादयति। द्वयोरिति । अनेकं किमिति। सुप्सुपेत्यस्य संबन्धादेकस्य पदस्य सर्पिषोऽपि स्यात् गोमूत्रस्यापि स्यादित्यत्राप्रयुज्यमानविन्द्वर्थे विद्यमानस्यापि बहुव्रीहिसंज्ञा न भविष्यतीति प्रश्न । बहूनामपीति। अन्यथा तत्पुरुषवद्द्वयोरेव सा स्यादिति भाव । पुवल्लन्नेति। उत्तरपदपरत्वाभावात् । कपिञ्जलाधिकरणेति। तत्र यथा कपिञ्जलानालभेतेत्यत्र प्रथमोपस्थितत्वात्त्रयाणामेव ग्रहणन्तथा प्रकृते न त्रिजात्त्रयाणामिति सूत्रे त्रयाणां ग्रहणात्सूक्ष्मजटकेशेन सुनताजिनवाससा इति बहूनामपि बहुव्रीहिप्रदर्शनपरभाष्यप्रामाण्याच्च । तदाह । चतुरादीति । उत्तरपदे परत समासविधानाज्ज्ञापकादिति। यद्यपि तद्धितार्थेतिसूत्रं च विधीयमानद्विगोर्दाशजातादौ चारितार्थ्यन्तथापि दिग्वाचकस्योत्तरपदे समासविधानं ज्ञापकमिति भाव । उपसर्जनसंज्ञासिद्धिरपि न प्रयोजनमित्याह। चित्रगुरित्यादाविति। स्पष्टार्थमिति । चार्थे द्वन्द्वइत्युत्तरसूत्रेऽनुवृत्त्यर्थत्वमपि न। पूर्वोक्तज्ञापकस्य वृत्तिघटकपदान्यपदार्थे विद्यमानाना बहूनामपि समास इत्यर्थे सामान्यापेक्षज्ञापकाश्रयणेन द्वन्द्वस्य बहुपदसंबन्धिन संभवात् । एवं ज्ञापकेन बहूना समासकल्पनापेक्षया स्पष्टप्रतिपत्त्यर्थमनेकग्रहणमिति भाव ।

ति। तद्बाहुल्य इति। आवरकबाहुल्य इत्यर्थः। नाधाप्यधिकारेति। न हि शियाम्नो बाहुल्येऽतत्पुरुषो नञ्समास कर्मधारयो वाऽस्तीतिभाष्यकारोक्तेः। पर्यायस्येतीति। जित्पर्यायवचनस्यैव राजाद्यर्थम्। जिविर्द्दश कर्त्तव्य। ततो वक्तव्यस्यपर्यायवचस्यैव ग्रहणभवति। किम्प्रयोजनम्। राजाद्यर्थम्। सभा राजामनुष्यपूर्वा। इनसभमीश्वरसभम्। तस्यैव न भवति। राजसभा। तद्विशेषाणाञ्च न भवति। पुष्यमित्रसभा चन्द्रगुप्तसभेति भाष्यकारोक्तिरिह प्रमाणम्। नाधिकारोपयोग इति। एतदपि भाष्ये स्पष्टम्। विभाषा सेनेतिसूत्र एवाधिकारस्य प्रयोजनभाष्ये दर्शितमन्यत्र तु स्पष्टार्थमेव तत्रास्यन्स॥

## इति तत्पुरुषविवरणम्॥

व्याख्यानादिति। शेषो बहुव्रीहिरितिसूत्रघटकशेषपदस्योपयुक्तादन्यपरतया यस्य पदस्यार्थस्य वा पूर्वत्रोपयोगस्तस्यादावप्रसिद्धिसुत्क्वा विकात शेष इतिभाष्यकता सिद्धान्तितन्तन्मूलकव्याख्यानादित्यर्थ। अथ भाष। पदत शेषस्य ग्रहणे यस्य पदस्य सामान्यतो विशेषतो वा उपयोगस्तदन्याप्रसिद्धि सामान्यत सुप्सुपेत्यत्रोपयोग विशेषतो द्वितीयाश्रितेत्यादौ स। अर्थेपि पूर्वपदार्थप्रधानत्वेऽन्यपदार्थप्रधानत्वेऽव्ययीभाव। उत्तरपदार्थप्रधानत्वे तत्पुरुष प्रसिद्ध एवातो यस्य विकल्प विशिष्य समासो नोक्त स शेष इति विवक्षितम्। गुरुचरणमाह। प्रथमान्तत्वादिति। शेष इत्यस्य प्रथमान्ततयादित्यर्थ। अन्यपदार्थे इत्यत्रान्यपदस्य भेदविशिष्टार्थकतया भेदस्य प्रतियोग्याकाङ्क्षायां शेषपदोपस्थितस्य प्रतियोगित्वे नान्ययाद्वितीयान्ताद्यर्थ इत्यस्य लाभ। व्याख्यानादिति। प्रकृतसूत्रभाष्ये पदार्थाभिधानेऽनुप्रयोगानुपपत्तिरभिहित त्वात्। चित्रगुर्द्देवदत्त इति। चित्रगुशब्दे नाभिहित नार्थ इतिन्तत्वाऽनुप्रयोगानुपपत्तिरित्येव गद्याहृत्ता सामान्याभिधाने विशेषानभिधानम्। सामान्ये ह्यभिधीयमाने विशेषोऽनभिहितो भवति। तत्रावश्य विशेषार्थिना विशेषोऽनुप्रयोक्तव्य।

ष्वक्रियाशब्दास्तथा स्युः तल्लिङ्गसङ्ख्यास्तु । तस्य भेदका विशेषणभूतार्थप्रतिपादका इत्यर्थः । गुणशब्दाः । गुणप्रवृत्तिनिमित्तकाः । एवन्द्रव्यशब्दा इत्यस्य द्रव्यप्रवृत्तिनिमित्तकाः, द्रव्यप्रकारप्रतीतिजनका इति यावत् । तेनेति । प्रसज्यप्रतिषेधाश्रयणेनेत्यर्थः । ऐडविड्भार्य इति । इडविड् भार्या यस्येत्यर्थः । अत्रैडविड्शब्दाज्जनपदशब्दात् क्षत्रियादञिति सूत्रेणाञि कृते तस्यातश्चेति लुकि इडविडशब्दादूङोऽभावसत्त्वात्पुंवत्त्वम्भवतीति भावः । ननु पुंवद्भावस्य सूत्रेण विधाने वरटा भार्यायस्येत्यर्थविवक्षायां हंसभार्य इति स्यादत आह । मत्वा सत्त्वेति । हृद्गुरिति नेति । ननु हृद्गुरितिरूपे इष्टापत्तिः । हृद्गा गुरितिविग्रहे तस्येष्टत्वात्समानार्थत्वाच्चेत्यत आह । वरटेति । अस्य नित्यस्त्रीलिङ्गस्य पुमासमित्यशाभावेन न पुंवत्त्वम् । एवमेव लक्ष्मणाभार्य इत्यत्रापि बोध्यम् । अत्र च । एतत्सूत्रोदाहरणे । अर्थातिदेशे दोषमाह । न त्विति । अर्थातिदेशे तद्वाची शब्दः प्रवर्त्तेत इत्यर्थः दोषः स्यादिति भावः । रूपातिदेशे प्रसक्तदोषं वारयितुमाह । यद्यपीति । अर्थस्यापि निवृत्तिरिति । एवञ्च न शतण्डाद्येत्यस्य प्राप्तिः । ध्वनितञ्चेदमिति । अर्थातिदेशे एवंविधे प्रदेशे फलतो रूपातिदेशे पर्यवसानम्भवतीत्येतद् ध्वनितमित्यर्थः । तत्र हि तृतीयादिषु पुंवदित्यनेन भवतीति वाक्यशेषेण पुंसि यथा नुम्न भवति तथा भाषितपुंस्कस्यापि तृतीयादिषु न भवतीत्यर्थः । ग्रामणीशब्दस्य नपुंसकत्वे कृते गुणनाभावनुडीत्वानाम्प्रतिषेधो ग्रामण्ये ब्राह्मणकुलायेत्यादौ वक्तव्य इत्युक्ताऽर्थातिदेशात्सिद्धम् । भाषितः पुमानर्थे तद्वर्थः प्रवृत्तिनिमित्तरूपे तद्युक्तस्य-र्थस्य पुमर्थो भवतीत्युक्त्वा पीलुने इत्यत्र फलत्वव्याप्तपीलुत्वरूपे पुमर्थातिदेशमाश्रयतः समानायामाकृतौ यद्भाषितपुंस्कन्तस्य पुमर्थो भवतीति समाश्रितम् । अत्र च यथा स्त्रियाः पुंवदितिसूत्रे भाष्ये न स्पष्टेन पौर्वापर्यमस्तीत्यभिहितस्तथा नाभिहितस्तेनैतद् ध्वनितमर्थातिदेशोऽर्थविशिष्टशब्दरूपस्यातिदेश इति । तेन क्लीबत्वविशिष्टार्थवाचकस्य शब्दस्य पुंस्त्वविशिष्टार्थवाचकत्वरूपातिदेशात्क्लीबत्वस्य निवृत्त्या तत्प्रयुक्तकार्याणामप्रवृत्तिरिति । अत एव । भिन्नप्रवृत्तिनिमित्तकत्वस्यानिवेशादेव । इत्युक्तरीतिमिति । हृदौ यद्यपि युगपदधिकरणवचनत्वे नैकविशेषकप्रतीतिजनकस्य तथापि हस्ते प्राप्तया ते

तृतीयास्त्विति । यदाऽनेकावयवत्वं स्पष्टार्थं कृतन्तदाऽनेकं सुबन्तं सुपा स-
मस्यत इत्युक्ते त्रिप्रभृतीनामेव स्यादिति भाव । अत एव । सर्वपदप्रकृत्वा
देव । वा लोप इति । अस्यैवापूर्वविधेयत्वम् । समासस्तु अनेकमितिसूत्रेणा
पि सिद्ध । अधिकरणशक्तिप्रधानत्वेऽपीति । ऊर्ध्वदेशनिष्ठाऽधिकरणमित्यर्था
त् । आधेयप्रधानत्वादिति । शब्दशक्तिस्वभावादूर्ध्वदेशवृत्तिबोधकत्वात् । आ
धारत्वविवक्षयेति । भाषित पुमान्पुंस्त्वविशिष्टोऽर्थो यस्येति वक्तव्ये आधेय
स्य प्रवृत्तिनिमित्तस्याधारत्वविवक्षया सप्तम्यर्थे बहुव्रीहिप्रदर्शनं स्वार्थकृतवै
लक्षण्यभिन्नवैलक्षण्याभाववत समानानुपूर्वीकस्य यदा स्त्रियाम्प्रवृत्तिस्तदापि त
देव प्रवृत्तिनिमित्तं वाच्यमिति बोधयितुम् । येनेति । शब्देनेत्यर्थ । नोक्तमिति ।
पुंवद्भावयोग्येन स्त्रिया वर्त्तमानेन शब्देन कदापि पुंस प्रतिपादनस्याभावा
दिति शेष । ननु भाषित पुमान्येनेत्यन्यपदार्थं प्रवृत्तिनिमित्तमेव विवक्षि
त । ततोऽर्थंमाद्यचा सङ्गृह्य स्वार्थकृतवैलक्षण्यभिन्नवैलक्षण्याभाववत
स्तादृशस्य स्त्रिया वर्त्तमानस्य पुंवद्भाव इत्यर्थोऽस्त्वित आह । कुटीजीविक
इति । आदिना पात्रीभार्यो द्रोणीभार्य इत्यस्य सङ्ग्रह । कुटशब्दस्य येन
प्रवृत्तिनिमित्तेन पुमान्भाषितो भवति तत्प्रवृत्तिनिमित्तकत्वमस्तीति सूचय
ति । कुटशब्द इति । एव परिमाणवाची पात्रशब्दोऽर्धर्चादि । भाजने तु
स्त्रीलिङ्ग । द्रोणशब्दोऽपि परिमाणेऽर्धर्चादि । सदृशपरत्वे तु भार्यासामा
नाधिकरण्यम् । प्रवृत्तिनिमित्तैक्ये विवक्षितेऽत्याशङ्का वारयति । प्रस्तुतभा
र्ये इति । कैयटादय इत्यनेन सूचितामरुचिम्प्रकटयति । अन्ये त्विति । तदेति
प्रवृत्तिनिमित्तमित्यर्थ । अभाव एवेति । नन्वेवम्पुंवद्भाव प्रस्तुतभार्य इत्यत्र
स्यादत आह । पुंवद्भावार्थमिवेति । भादौ । भाषितपुंस्कादित्यस्यादौ । अत
एव । योगविभागस्येष्टत्वादेव । ननु कर्त्तव्य इत्यनेन प्रस्तुतशब्दे समानप्रवृ
त्तिनिमित्तकत्वसाधनाय यत्न कार्य इत्येव बोध्यते इत्यत आह । न चेति ।
एवञ्च । गर्भिणीशब्दस्यानवयवगर्भसम्बन्धप्रवृत्तिनिमित्तकत्वसिद्धौ च । ननु
दारशब्दस्य पुंलिङ्गतया समानाधिकरणगुणवाचकस्यापि पुंस्त्वमेव युक्त-
मितिगर्भिण्यौ दारा इत्यनुपपन्नमत आह । स्त्रीदारार्थैरिति । अस्यार्थ ।
स्त्रीदारार्थैर्योगेऽर्थनिष्ठस्त्र्याप्रतिपादके पदेऽपि विशेष्यगतगुणप्रकाशकादुक्त

या दर्शनीयदेशीयेत्यत्र चारितार्थ्यमिति भावः । अस्यामिति । निषेधार्थेतिपरिभाषायामित्यर्थः । अत्र । तसिलादिषु । तसिलादिषु कप्रत्ययपाठे प्रमाणमुपन्यस्यति । पुंवत्त्वाद्ध्रस्वत्वमिति । दारदिकेति । दरदोऽपत्यं स्त्री दरत् द्व्यञ्मगधकलिङ्गेति अण् तस्याऽतश्चेति लुकि ततः कप्रत्यये पुंवद्भावे सति दारदिकेत्यस्य सिद्धिस्तसिलादिषु कप्रत्ययपाठे भवतीति भावः । ननु दारदिकेत्यत्र जातेश्चेतिनिषेधः कुतो नेत्यत आह । दारद इति । अगोत्रत्वेनेति । अनन्तरापत्ये प्रत्यये सतीत्यर्थः । जातिवाचकं यत्स्त्रीप्रत्ययान्तमित्यर्थेऽत्र निषेधप्राप्तिः । गोत्रापत्ये प्रत्ययसत्त्वे त्वाह । किञ्चेति । व्याख्यानेनेति । जातेरितिपञ्चमीनिर्देशमूलकव्याख्यानादित्यर्थः । परिगणने मत्यव्याप्तिशङ्कायामाह । तस्यामिति । सर्वनाम्न इत्यस्य समास एव प्रवृत्तिभ्रमं निराकरोति । अतसुच इति । त्वतलोरितिसूत्रे गुणवचनेतिसंज्ञास्वरूपोच्चारणादाह । अत्रेति । अत एव । गुणवचनसंज्ञकस्य ग्रहणादेव । हास्तिकमित्यस्य प्रकारान्तरेण सिद्धिमाशङ्क्याह । यस्येतीति । तस्य । यस्येतिलोपस्य । सिद्धत्वेति । दरदि भवो दारदीय इत्यादि सिद्धार्थमुक्तया इत्यादिः । व्याख्यानमिति । आग्नेय इत्यत्र पुंवद्भावस्य भाष्ये करणदर्शनमूलव्याख्यानमित्यर्थः । तत्सम्बन्धस्य । भाषितपुंस्कादित्येतत्सम्बन्धस्य । एतत्फलन्तु लक्ष्मी च युवतिश्च लक्ष्मीयुवती तयोः साधुर्लक्ष्मीयुवत्य इत्यत्र पुंवत्त्वाभाव इति । समाधत्ते । आरोपितेति । एवञ्च प्रवृत्तिनिमित्तैक्यमस्त्येवेति भावः । तटमपीति । आरोपितशब्दार्थत्वेन प्रतीतिकाल इत्यादिः । गङ्गाभार्य इत्यत्र भार्याशब्दोऽत्र भर्तृव्यपरः । भाषितपुंस्क इति । शत्रुत्वस्योभयत्र समानत्वादिति भावः । अयमिति । विवाहनिबन्धनपतिशब्दमाश्रित्य साधित इत्यर्थः । स्वमतमाह । परे त्विति । प्रथम् । द्वितीयः । सापत्ने पुंवत्त्वमप्रोप्नीतीति । इयं शङ्का तृतीयादौ न ताहशरूपप्राप्तिरित्यभिप्रायेण । प्रकृत्यन्तरत्वादिति । एतेन शत्रुपर्यायसपत्नीशब्दात्तस्य सिद्धिः सूचिता । द्वितीयस्य सिद्धिमाह । किञ्चेत्यादिना । तच्च भाष्यमिति । सापत्नः प्रकृत्यन्तरत्वादितिभाष्यमित्यर्थः । सपत्नीशब्दाभावमन्यमानस्य । प्रथमत उक्तस्य सपत्नीशब्दस्याभावमन्यमानस्येत्यर्थः । उत्तराशयस्तु सोऽपि वर्त्तत एवेति । कैयटोक्तङ्कटाक्षयन्नाह । परे त्विति । दुर्वार इति । यदि प्रथमस्याभाव एव पूर्वपक्षिणोऽ-

ति भावः । ननु वृत्तौ सङ्ख्याविशेषानवगमेन चित्रा गावोऽस्येतिविग्रहे ग्वाविशेषभानेन वृत्तिसमानार्थकत्वं नैतादृशविग्रहस्येत्यत आह । वृत्ताविति । अत एव । पूर्वपदाक्षेपाभावादेव । अत एव । समुदायस्य भाषितपुंस्कत्वाभावादेव । परमतदूषणाचयमाह । परे त्विति । पूर्वपदस्य विशेषणमिति अत्र कैवल्यं स्वाव्यवहितोत्तरत्वसम्बन्धावच्छिन्नस्वघटितसमासघटकनिष्ठप्रतियोगिताकाभाववत्त्वम् । तच्च विशेषणं यदि पूर्वपदशब्दस्य समासप्रथमावयवे रूढिः स्यात्तदाऽव्यावर्त्तकत्वेन व्यर्थं स्यादिति भावः । ननु चित्राजरद्गुरितिभाष्यमितिमूलोक्तमसङ्गतम् । संप्रत्युपलभ्यमानभाष्यग्रन्थे तादृशग्रन्थानुपलम्भादतो व्याचष्टे । चित्राजरद्गुरितीत्यत्रेति । पट्वीमृदुभार्य इति द्वन्द्वपूर्वपदकोऽयं बहुव्रीहिः । यदुक्तं रात्रिः पूरणीवाच्या चेति तदुपपादयति । उक्ताऽवयवेति । निघ्नतयेति । अत्र हनधातुर्गत्यर्थः । वार्त्तिकादिति । अप्पूरणीतिसूत्रे एवं हि वार्त्तिककारेणोक्तम् । अपि प्रधानपूरणीग्रहणम् । अपि प्रधानपूरणीग्रहणं कर्त्तव्यमिति । कल्याणी पञ्चमी यस्य पक्षस्य स कल्याणपञ्चमीकः पक्ष इत्यत्र मा भूदिति भाष्यकारेणोक्तम् । स्त्रियाः पुंवदितिसूत्रे च पूरण्यामप्रधानपूरणीग्रहणम् पूरण्यां प्रधानपूरणीग्रहणं कर्त्तव्यमिति । प्रधानं या पूरणी तत्रेति वक्तव्यम् । इह मा भूत् । कल्याणी पञ्चमी यस्य स कल्याणपञ्चमीकः पक्ष इति । अत्राप्प्रत्ययस्य पुंवद्भावनिषेधस्य चाकरणादत्र पूरण्याः प्रधान्यं तयोभयोः प्रवृत्तिः । पक्षस्य प्राधान्ये च पूरण्या न प्राधान्यं तिरोहितावयवभेदसमुदायस्य पक्षत्वादिति भावः । नद्यन्तादिति तु नोक्तमिति । नद्यन्तो यो बहुव्रीहिर्लोके प्रयुज्यते तदीयालौकिकविग्रहवाक्य इति तु नोक्तमित्यर्थः । ध्वनितमिति । तत्र हि कुण्डोध्नीत्यत्र कथापादनपरभाष्यं चेदं ध्वनितमित्यर्थः । तथाप्येतादृशार्थ एव कथापत्तिः कृता । नद्यन्तानां यो बहुव्रीहिरितिसूत्रार्थमाश्रित्य परिहारः कृत इति तत्त्वम् । व्याख्यानात् । केतिस्वरूपग्रहणे अतस्पाक इति निर्देशादिति । दृश्यमानवहोर्घ तु राका धार्त्यत्रातिव्याप्तिरितिलक्ष्यदर्शनमूलकव्याख्यानादित्यर्थः । सामान्यविधानमुपपादयति । पदार्थेति । ननु पुंवत्कर्मधारयेत्यस्य निषेधापवादत्वं न परत्वादित्यमुक्तत्वमित्यत आह । कर्मधारयेति । दर्शनीयभार्यो-

कपविधे. पुंवद्भावस्य न हि तत्सन्निपातविघातककादेशस्येति साक्षान्निमित्तत्वम्। पुंवद्भावे सति कादेशो भवतीत्येवं रीत्या शास्त्रेणाबोधनात् किन्तु तान्त्वसम्पादनद्वारैवेति सोऽयं सन्निपातविघातकत्वम् पुंवद्भावस्येति यदि ब्रूयात्तदाप्याह । ठादिति । उच्चारणार्थत्वे नेति । अत एव सांयितिकस्य सिद्धिः । भाष्यकारश्चैतत्साधयति । अन्यथाऽऽर्त्तिकानामिवेत्यर्थः । इदञ्च । भाष्यकारीयत्वञ्च । अत्यन्तस्वार्थिको वेति । मयडित्यर्थः । अत एव । मात्रग्रहणकल्पस्य तादृशार्थस्य स्वीकारादेव । अतिप्रसङ्गमिराचष्टे । वृत्तीयेत्यादि । तदितरेति । तस्या इतरा इत्यर्थः । अत्र यथा पूर्वपदे भवति तथोत्तरपदे नोपलभ्यत इति भावः । प्रत्याख्यानप्रकारमाह । जातिमात्रे ति । नोदनायामिति । कुक्कुटाण्डस्येत्यादौ । इदमुपलक्षणम् । कुक्कुटाण्डमस्तीत्यत्रापि तथाभावात् । कुक्कुटस्याण्डमित्येव विग्रहः । पूर्वः । कण्डपेक्षया पूर्वः । सः । कण्ड् । तादृशसमुदायपर्वति भावः । वैलेपिकमिति । अण्महिष्यादिभ्य इत्यण् । उत्तरनिषेधाः । सञ्ज्ञापूरण्योरित्यादयः । तादृशार्थे मानमाह । तदुक्तमिति । एवमाद्ये ति । संज्ञापूरण्योरित्येवमादीत्यर्थः । एतज्ज्ञाप्ये ति । तत्र हि किमिदमेवमाद्यनुक्रमाद्यस्य योगस्य विषये आहोस्वित् पुंवद्भावमात्रस्य । किञ्चातः । यद्याद्यस्य योगस्य विषये माध्यमिकयोः शालूकिकीयः अत्र न प्राप्नोति । माध्यमिकायां भवः सेण्यकादिभ्यश्छण् वक्तव्य इति छण् । शालूकिकायाभव इत्यर्थे वृद्धादकेकान्तेति छः । उभयत्र नगरीवाचका इवार्थे तद्धिते अस्याट इति वार्त्तिकेन पुंवद्भावे न कोपधाया इति निषेध इष्यते स न प्राप्नोतीत्यर्थः । वार्तिकेनापि भाषितपुंस्कस्यैव पुंवद्भावो विधीयते नगरीवाचकस्य तु न भाषितपुंस्कत्वमित्यभिप्रायेण तदनन्तरम् । विधिरप्यत्र न सिध्यति । किं कारणम्भाषितपुंस्कादनूङित्युच्यते न चात्र भाषितपुंस्कादनूङ् । इह तर्हि विलेपिकाया धर्म्यं वैलेपिकम् । अत्र विलेपिकाशब्दो पुन्नस्तस्मादण्महिष्यादिभ्य इत्यण् । विधिश्च सिद्धो भवति । प्रतिषेधश्च न प्राप्नोति । अथ पुंवद्भावमात्रस्य विषये । हस्तिनीनां समूहो हास्तिकम् । जातिलक्षणः पुंवद्भावप्रतिषेधः प्राप्नोति । एवन्तर्हि न कोपधाया इत्ययं योगः पुंवद्भावमात्रस्य विषये । तत उत्तरमेवमाद्यनुक्रमणमाद्यस्य योगस्य विषये इत्युक्तम् । सूत्रमप्यनन्तं सूत्रकारम-

भिन्ने तस्तदार्थात्तृतीयसत्ता तन्मनमि वर्त्तते इति कल्पनीयमेव । तथा सति तृतीयादपि सापतो दुर्वार इत्यर्थः । कैयटाशय इति । सापत इतीष्यते तच्च न सिध्यति शिवादिगणे प्रथमस्यैव पाठेन सापत्न इति स्यादित्याशयकल्पनेनोपपादनीयः सः । श्रुतानेति । तच्च शिवादौ तृतीयस्यापि पाठ इति यदि न कल्प्यते किं तु प्रथमस्यैव पाठ इति कल्प्यते तदोपपन्नमवतीति भावः । इत्यस्यापीति । उभयोरपि शिवादौ पाठः । एवं सति सापत्न इति यथा भवति तथा सापत इत्यपि प्राप्नोतीति तदाशयकल्पनयोपपाद्यः । तस्याः । इष्टापत्तेः प्रकृत्यन्तरत्वमेवेति । सापत्ने पुंवत्त्वप्राप्तीत्युक्त्याऽग्निरूपितप्रकृत्यन्तरत्वं स्पष्टमेव लभ्यत इत्यर्थः । उपसंहरति । तस्मादिति । एवञ्च । सपत्नशब्दस्यैव तत्र पाठ इति व्यवस्थासिद्धो च । ततः । तृतीयात् । ठकोऽप्यपवाद इति । यथाशैव इत्यत्रात इञिति सूत्रेण प्राप्तस्येञोऽपवादत्वाद्बाधकस्तथा ठकोऽपीति भावः । तद् ध्वनयन् । सपत्नशब्दस्य पाठध्वनयन् । नन्वेवन्द्वितीयस्य पाठाभावेनाययोरित्यसङ्गतमत आह । सपत्नशब्देत्यादि । ननु तृतीयालिङ्गविशिष्टपरिभाषया एव एवेत्यसङ्गतम् । परत्वाड्ठक् प्राप्तेरत आह । एवञ्च स्त्रादय इति । दैतेयादितेययोः सिद्धय इति । तिजन्तदित्यदितिशब्दाभ्यामुदिकारादिति ङीपि निष्पन्नदित्यदितीतिशब्दप्रकृतिकठगन्तयोरित्यर्थः । भाष्ये । कैयटे । तदा सापत्नेय इति । सपत्नीशब्दस्य शिवादौ पाठाभावेन ततष्ठगेवेति भावः । अन्यथेति । भाष्यकृत्कृताऽनित्यत्वपरिगणनेष्वे तयोरगणनादप्रवृत्त्यनङ्गीकारे । रूढयोरित्येतस्योक्तरीत्या व्याचष्टे । सपत्नशब्दे ति । उक्तत्वादिति । एवञ्च रूढयोरित्युक्तमङ्गतिरिति भावः । रूढिः समुदायशक्तिः सा यद्यप्येवार्थोभावस्वीकर्त्तृमते सर्वत्राऽस्ति । तथापि यत्रावयवार्थाभिन्नसमुदायार्थोपस्थितो समुदायशक्तिग्रहस्यावयवशक्तिग्रहसहकारित्वेन जनकत्वमत्र रूढिरिति व्यवहारस्तयात्तच्च यत्रासिसङ्गमभयमात्र स्वीकर्तुं सुचितमिति भावः । ठगृङ्गोरित्यत्र ठग्ग्रहणस्य प्रयोजनमाह । ठावस्थायामिति । ननु ठस्येकादेशे कृते न भस्याढ इति पुंवत्वं सिद्धमेवेत्यत आह । इकादेशे त्विति । सन्निपातपरिभाषयेति । यत्रादिप्रत्ययसन्निपातेन पुंवत्त्वं सति प्रसक्ते सात्त्वं तद्दस्तारे यदि सामान्यपरत्वमाश्रित्य ऋदेशः स्यात्तदोपजीव्यविरोधः स्पष्ट एव । तच्च सन्निपातप-

धानात्तस्य वृद्धिनिमित्तत्वेन व्यपदेशिवद्भावेन तस्य तस्मिन् स्थित्या दोषस्तदव
स्थ एवेत्यत आह । निमित्तग्रहणेति । यदि वृद्धेर्निमित्तमिति व्याख्यायते तदा
व्याकरणशब्दाद्विहितेऽणि णकारसद्भावात्तस्मिन्नपि निषेधप्राप्त्या वैयाकरणीभा
र्य इति प्राप्नोतीति चेदिष्टापत्तिरित्याशयेनाह । ऐचौ प्रति चेति । निमित्तत्व
मस्यैवेति । अत्र निमित्तशब्दोऽर्श आद्यचा निमित्तवत्पर । निमित्तवत्त्वम
स्यैवेत्यर्थ । वृद्धिशब्देन विहिता या वृद्धिरितिव्याख्यानेऽपि वैयाकरणीभार्य
इत्येव प्राप्नोतीत्याह । कि चैजिति । वृद्ध्यभिन्न ऐजितिसूत्रार्थाश्रवणादिति भा
व । अत एव । तत्रापि वृद्धिपदसम्बन्धादेव । अत एव । वृद्धिशब्दाभेदे न यू
भ्यामितिसूत्रेणैचो विधानस्येष्टत्वादेव । न यूभ्यामितिसूत्रस्य निषेधविधाय
कत्वपक्षे शङ्कते । यद्यप्यपवाद इति । एवमुक्तमिति । दाध्वघिरित्यादौ विप
र्यासमित्युक्तमित्यर्थ । सिंहावलोकनन्यायेनाह । किञ्चार्थेति । वैयाकरणभार्य
इत्यत्रेत्यर्थ । एतेन । उक्तव्याख्यानेन । अर्थस्य तदन्तत्वासम्भवादाह । तदन्त
स्येति । एवमेव । तदन्तस्येतिव्याख्यानमेव । ननु मानिन्शब्दे यो निषेध स
मानिनीशब्दे न स्यादत आह । लिङ्गविशिष्टपरिभाषयेति । एवञ्च स्त्रीप्रत्यय
रहिते दृष्टस्योत्तरपदत्वस्य मानिनीशब्दे पर्याप्तिसम्बन्धेनातिदेशान्मानिनीश
ब्दस्योत्तरपदत्वम् । यद्यप्यय स्त्रीप्रत्ययो दीर्घसुत्रमानिन्शब्दाद्विहितस्तथाप्य
नुपसर्जनत्वान्मानिनीशब्दस्य स्त्रीप्रत्ययान्तत्वम् । ननु स्त्रीप्रत्ययस्ततो न विहि
त इत्यत आह । यत इति । ननु सूत्रे जातेरित्युपादानात्प्रतिपदोक्तपरिभाष
या जातेरस्त्रीतिसूत्रविहितस्त्रीप्रत्ययान्तस्यैव ग्रहणं युक्तमिति शूद्राभार्य इति
मूलोक्तोदाहरणासङ्गतिरत आह ।स्वाङ्गादित्येतदिति। व्याख्यानादिति। न को
पधाया इतिसूत्रभाष्ये हास्तिकमित्युदाहरणेऽनेन सूत्रेण निषेधमाशङ्क्योपस
र्जनस्यानिकस्य नायन्निषेध इति प्रतिपादितत्वन्मूलकव्याख्यानादित्यर्थ । तत्
फलमाह । अत एवेति । अत एव । जाति पर इतिव्याख्यानादेव । दारदिकेति।
दरदोऽपत्य स्त्री दरत् । द्व्यञ्मगधेत्यण् । अतश्चेति लुक । तत अज्ञातार्थे
प्रागिवात्क । तसिलादिषु कप्रत्ययस्यापि पाठानुमानात्पुंवद्भाव । स च सौत्र
इति जाते स्त्रिया इति व्याख्याने निषेध स्यादिति भाव । यदि तु पूर्वोक्त
भाष्यमनत्र यदधस्मादनुक्रमणमाद्यस्य विषय इति तदाद्रियते तदा दारदभार्य

ग्मतत्वम्। न च सूत्रकारसम्मतत्वे स्त्रियाः पुंवदितिसूत्रस्थसमानाधिकरणपदस्य ढभिन्नतद्धितबोधकतापि लक्षणया स्वीकार्या एवं सति विलेपिकायां भव इत्यर्थे यो वैलेपिकशब्दस्तत्र स्त्रियाः पुंवदितिसूत्रस्यैव प्राप्तिरिति आद्यस्य योगस्य विषये इतिपक्षे प्रतिषेधो न प्राप्नोतीति भाष्यासङ्गतिरिति वाच्यम्। सूत्रकारसम्मतत्वमित्यनेन सूत्रघटकपदस्य लक्षणया वार्त्तिकोक्तार्थसङ्ग्राहकत्वमिति नोच्यते किं तु सूत्रप्रणयनान्तरं वार्त्तिकोक्तार्थस्य स्फूर्त्तावपि तदंशस्य वार्त्तिककारेण पूरयिष्यमाणत्वज्ञानेऽप्युपेक्षया तदकरणेन सूत्रशेषत्वं वार्त्तिकस्येति बोधनेन सूत्रकाराभिप्रायविषयत्वमित्येवोच्यत इति। न विरोध इत्याशयात्। एवं तृतीया च होरितिसूत्रस्थभाष्यविरोधे प्राप्ते तत्परिहरति। यत्त्विति। पाचिकाभार्य इत्यत्र ककारो ण्वुल्सम्बन्धीत्येतद्दर्शयति। ण्वुल्कादेशेति। ठनिति। रमशब्दादिति शेषः। पाका बालेति। अत्र हि इण्भीकापाशल्यतिमर्चिभ्यः कनिति सूत्रेण पाधातोः कन्। आवर्त्तत इति। अत्र वृद्धिरादैच्सूत्रस्थं भाष्यमेव मानम्। तत्र हि आदैज्मात्रस्य वृद्धिसंज्ञेतिसिद्धान्ते तावद्भार्यो यावद्भार्य इत्यत्र पुंवद्भावः स्वीकृत इति। व्याख्यानादिति। प्रवाहणस्य ढे इतिसूत्रस्थभाष्यदर्शनमूलकव्याख्यानादित्यर्थः। तदेवाहात एवेति। अत एव। वृद्धिशब्दात्प्रवृत्तिसत्त्वादेव। इति भाष्ये उक्तमिति। यद्यत्र वृद्धिशब्दात्प्रवृत्तिर्न स्यात्तदोत्तरपदस्यादेर्वृद्धिनिषेधे पूर्वपदस्य वैकल्पिकत्वाद्वृद्ध्यभावेपि तद्धितस्य स्वरूपयोग्यतालक्षणं वृद्धिनिमित्तत्वमस्त्येवेति पुंवत्त्वनिषेधस्य प्राप्तिरस्त्येवेतिनिषेधो न प्राप्नोतीति ग्रन्थासङ्गतिः स्यादिति वृद्धिनिमित्तस्येति सूत्रे वृद्धिशब्दात्प्रवृत्तिर्ध्वनितेति भावः। तत्फलमाह। अर्धप्रस्थिकभार्य इति। प्रस्थस्यार्धमर्धप्रस्थः। सोऽस्मिन्नस्तीत्यर्धप्रस्थी। अर्धप्रस्थपरिमितधान्यघटितः समुदायस्तं क्रायत्यभिधत्ते इत्यर्धप्रस्थिकस्तद्वाचकोऽर्धप्रस्थिकशब्दस्तमधीतेऽर्धप्रस्थिकी सा भार्या यस्येत्यर्थः। अत्रार्धप्रस्थिकशब्दादध्येत्रर्थेऽपि अर्धात्परिमाणस्येतिप्राप्तवृद्धेर्नात इतिनिषेधे पूर्वपदस्य वैकल्पिकत्वात्तदभावो बोध्यः। एतेन न कोपधाया इतिनिषेधोऽत्र दुर्वार इत्यपास्तम्। कन्नोपधात्वेऽपि विशेषमाह। कन्नोपधानस्येति। सिद्धान्तार्थमाह। परे त्विति। भाष्य इति। वृद्धिर्निमित्तस्य अणः यस्मिन्नित्यर्थः। अन्येषामपि चतुर्णाम् सर्वनाम्न इत्यनेन वृद्धिनि-

म इतिसूत्रेण विकल्पेन संज्ञाविधानात्सर्वनामसंज्ञाकार्यघटितस्य तदभावघटितस्य वा प्रयोगेपि नामाधुत्वम् व्यवस्थित यथा। एवञ्च। संशयविषयप्रतिक्षेपकत्वे च। अस्मात्। द्विवा इतिशब्दात्। तदुक्तभाष्ये । द्वौ वेत्युक्ते त्रयो वेति गम्यते। त्रयो वेत्युक्ते द्वौ वेति गम्यते सैषा पञ्चाधिष्ठाना वागिति। तत्र कैयट:। विरुद्धानेकविषयत्वाद्विमर्शस्य पर्यायस्थितद्वित्वत्रित्वाधारवस्तुसङ्कलनया पञ्चाधिष्ठानत्वमुच्यत इति। घटे पटे वा चैत्रस्य स्वत्वमित्यर्थे घटपटयोरन्यतरस्मिंश्चैत्रस्य स्वत्वमिति प्रयोगो यथा भवति तथा प्रकृतेप्यन्यतररूपार्थे बहुव्रीहि स्वीक्रियते तदा पूर्वसूत्रेणैव प्रकृते समास इत्याशयेनाह। वस्तुत इति। अत एव। द्वितीयरीत्या बोधस्वीकारादेव। द्वित्वसङ्ख्योत्पत्तिका दशेति। द्वित्वसङ्ख्याया उत्पत्तिर्येषु तादृशा दशेत्यर्थः। अत्र दशशब्द उद्भूतावयवभेदसमुदायपर। अधिकदशा इत्यर्थमिति। अधिका दश यासान्ता अधिकदशा गाव इत्यर्थे यदामहाँ येवहुव्रीहि क्रियते तदा यद्यपि पूर्वसूत्रेण सिद्धिर्भवति तथापि यदा दशभ्योऽधिका इत्यर्थे समास क्रियते तदा सङ्ख्येयस्य दशशब्दार्थत्वादन्यपदार्थाभावात्पूर्वेणाप्राप्त समास इत्येतदर्थमिद सूत्रमित्याशय। फलान्तरमप्याह। कवभावार्थमिति। नन्वत्रापि बहुव्रीहौ सङ्ख्येये डजबह्विति डचो विधानात्तुक्तसमासान्तत्वमिति कवभाव। सिद्ध एवेत्यत आह। शेषादितीति। भाष्ये स्पष्टमिति। इदमग्रे स्फुटीभविष्यति। सङ्ख्येयस्यान्यपदार्थत्वमाश्रित्य यदि पूर्वसूत्रेण समास क्रियते तदा कब् न वर्त्स्येवेति भावस्तदाह। एव चेति। विंशतेर्गवा सङ्ख्येति। अत्र विंशतिशब्द सङ्ख्याने वर्त्तते। विंशत्याद्या सदैकत्वे सर्वा सङ्ख्येयसङ्ख्ययोरितिकोशात्। अत एव। दिगुपसान्तरालस्य ग्रहणादेव। तत्र। युद्धे। अत एव। युद्धस्य विशेष्यत्वादेव। न तदुपादानमिति। युद्धमित्यादेरनुपादानमित्यर्थ। इदम्। युद्धमित्येतत्। अत एव। उपलक्षणत्वादेव। कर्णाकर्णीति। कर्णेषु कर्णेष्वित्यर्थ। हस्ताहस्तीति। हस्तैर्हस्तैरित्यर्थ। इतिशब्दाद्विषयविशेषस्य यथा लाभस्तत्प्रकारमाह। इतिशब्दश्चार्थेति। तत्त्वञ्च। प्रकाशत्वञ्च। तत्राव्येति। कर्मव्यतिहारेऽस्य समासस्येत्यर्थ। इति कर्मव्यतिहार इतिमूलोक्तस्याभिमुक्कर्मव्यतिहारेऽनेन वचनेन दीर्घ इत्यर्थ। अन्यार्थमपीद वचनमित्याह। तुरापाडीति। एवञ्च कर्मव्यतिहारबहु

इत्यस्योपलक्षणमिदम् । इदं यथाश्रुतभाष्यरीत्या । यदि तु आद्यस्येत्यस्य पाणिनीयस्येत्यर्थः क्रियते तदा तसिलादिष्वित्येतस्यापि विषये जातेश्चेत्यस्य प्रवृत्तिः स्यादेवेति दारदिकेत्यप्युदाहरणम् । ननु स्त्रियाः पुंवदितिसूत्रेऽनूङित्यस्य पर्युदासत्वपक्षे ऐडविडभार्य इत्यत्र पुंवत्त्वं न प्राप्नोतीति नोक्तस्तेनात्र जातेरिति निषेध इष्ट इत्यनुमीयते स च भवदुक्तार्थे न प्राप्नोतीत्यत आह । स्त्रियाः पुंवदिति सूत्र इति । एतच्चानन्तरापत्यप्रत्ययान्तस्यापि जातित्वमतेन । वस्तुतस्तु तत्र युक्तमित्याह । यत्त्वित्यादिना । सर्वोऽपि निषेध इति । न च स कोपधाया इत्ययन्निषेधः पुंवद्भावमात्रस्य विषये तत उत्तरमेवमाद्यनुक्रमणमाद्यस्य योगस्य विषय इति प्रागभिहितमिह तु सर्वोऽपि निषेधः सौत्रस्येत्यनेनाद्यसूत्रातिरिक्तस्य तसिलादिष्वितिसूत्रस्यापि निषेध इति लभ्यते तेनैतद्विरुध्यत इति वाच्यम् । आद्यस्येत्यस्य पाणिनीयस्येत्यर्थप्रदर्शनेन सर्वस्य सूत्रीयपुंवद्भावनिषेधस्य प्रागप्यभिधानात् । न च केशानामप्याकृतिग्रहणेति जातित्वसम्भव इत्यनेन सूत्रेणैव सुकेशीभार्यस्य सिद्धौ स्वाङ्गादितिव्यर्थमिति वाच्यम् । जातिवाचकान्वितं यत्स्त्रीत्वं तदर्थको यः स्त्रीप्रत्ययस्तदन्तस्य प्रकृतसूत्रे ग्रहणात् । अत एव बहवो ब्राह्मणा यस्याः सा बहुब्राह्मणा । बहुब्राह्मणा भार्या यस्य स बहुब्राह्मणभार्य इत्यत्र निषेधो न । अभिधानस्वाभाव्यात् । अभिधानं शब्दस्तत्स्वाभाव्यात् तच्छक्तिस्वभावादित्यर्थः । अत एव । उत्तरपदभूतसप्तमीवृत्तिसङ्ख्यानिरूपितसामीप्यवती या सङ्ख्या तत्प्रकारकोपस्थितिसत्त्वादेव । पदभिन्नस्यान्त इति । न च शकन्धुः कर्कन्धुरित्यत्रापि पदभिन्नकशब्दान्त्यावयवाकारात्परत्वे मानेनैव तथापि पररूपे सिद्धे शकन्ध्वादिषु तादृशानाम्पाठो व्यर्थ इति वाच्यम् । पदस्यार्थवत्तया पदभिन्नस्याप्यर्थवत एवान्त्याकारो ग्राह्य इत्यर्थेन तादृशपाठस्य तथावश्यकत्वादत एव ब्राह्मणागच्छेत्यत्र न पररूपम् । परस्परप्रतिक्षेपक. । परस्परविरुद्धः । तत्र । संशयविषये । अनवकाशप्रमाणेनेति । यथा अणप्रत्याहारः पूर्वेण णकारेण परेण चेतिसन्देहे एँ पविदिन्दति सूत्रे गुरुमिदं णेनेण्प्रत्याहारः परेणैवेतिनियमः । यत्र तु न तथा बाधकमिति । यथाऽत्र विभाषेति सूत्रे विभाषापदोपादानेन भावाभावयोरुपस्थितौ व्यवस्थितविभाषाश्रयणेन व्यवस्था । धातुषु तु यथा विभाषा दिक्समा-

च साधकमाह । लक्ष्यानुसारिव्याख्यानादिति । तत्फलमाह । सहक्षत्वेति ।
सहशब्दविशेषणत्वेऽच स्यात् । साक्षात्समासविशेषणत्वे फलमाह । सहक्षत्व-
पिय इति । व्याख्यानादेव । लक्ष्यानुसारिव्याख्यानादेव । सपुत्रादेरिति । एतेषु
सहशब्दस्य लौकिकोपसर्जनत्वाभावेऽपि शास्त्रीयमुपसर्जनत्वमस्त्येव । तेन स-
हेतिसूत्रारम्भस्य प्रयोजनमाह । व्यधिकरणत्वादिति । तत्रैव तत्प्रवृत्तेरिति ।
सपूर्वायाः प्रथमाया इति निर्देशात् । इतिशब्दादिति । अस्योपादानादस्य सू-
त्रस्य प्रयोगदर्शनात्प्रवृत्तिरिति भावः । ननु कबभावार्थमितिपूर्वचोक्तत्वात्सक-
र्मक इत्यत्र कप्प्रत्ययानुपपत्तिरत आह । स्वार्थे क इति । अत एव । स्वार्थकप्र-
त्ययस्वीकारादेव । असम्भवादिति । व्यधिकरणत्वादेरभावादिति भावः । नन्वे-
वं सहैव दशभिः पुत्रैरित्यत्र तृतीया कथमत आह । सहैवेत्यादि । विद्यमा-
नतावाचीति । एतेन व्यधिकरणत्वं स्पष्टमेव । एवञ्च । सहशब्दस्य विद्यमानव-
चनत्वेन । प्रकृत्याऽऽशिषि । अत्र नेति वक्तव्ये प्रकृत्या इत्युपादानमदृष्टार्थम् ।
नन्वेवमाशीर्वचने सपुत्रस्येत्यस्य प्रयुज्यमानस्य का गतिरत आह । सपुत्रस्ये-
तिरूपे विशेषाभावादिति । एवञ्चाबहुगणादिति प्रतिषेधवैयर्थ्यमिति शेषः ।
प्रत्याख्याने त्विति । प्रत्याख्यानपूर्वपक्ष इत्यर्थः । सूचितमिदमिति । प्रत्याख्यानं
सूचितम् । अत्र पक्षे । प्रत्याख्यानपक्षे । कबपीति । सङ्ख्येयेऽन्यपदार्थे यदाऽ-
नेकमितिसूत्रेण समासः क्रियते तदा कब्भवत्येव । यदा तु विंशत्यादीनां स-
ङ्ख्यासङ्ख्येयोभयपरतयाऽधिकविंशा इत्यादौ अधिका विंशतिर्यासामित्यर्थ-
कल्पने; किञ्चिदधिका विंशतिः सङ्ख्या यासामित्यर्थसम्भवेऽपि दशादीनां स-
ङ्ख्येयमात्रपरतयाऽधिकदशा इत्यादिसिद्ध्यर्थं सूत्रमारभ्यते तदा पूर्वोक्त एवा-
र्थः । एतच्चारुचिबोधकेन तुना सूचितम् । तथा चोक्तं भाष्ये इदन्तु न सिध्य-
ति, अधिकदशा इति । वार्त्तिककारस्याह । सत्यर्थे पूर्वो योगः । असत्यर्थोऽय-
मारम्भः । अनेन सूत्रस्यावश्यकत्वं वार्त्तिककारसम्मतमिति स्पष्टमेव । द्विशा
इत्याद्यर्थमसत्यर्थग्रहणकर्त्तव्यत्वेऽपि स एवाह । कबभावार्थं चेति । एतत्सूत्रवि-
हितसमासस्य शेषाधिकारस्थत्वाभावेन कपोऽप्राप्तेरिति भावः । न च द्वेरक-
योरित्यादिसिद्ध्यर्थमेकादिनवान्तानां सङ्ख्यापरत्वस्यापि स्वीकारादिदन्त्वित्या-
द्युक्तमसङ्गतमिति वाच्यम् । सौत्रप्रयोगविषय एव तथा स्वीकारेऽप्यन्यत्र ते

श्रीहावित्यपि प्रस्तुताभिप्रायमेव । न त्वन्येषामपीतियचनार्थं प्रवेश । अत्र च
इत्यादीति । इच्प्रत्ययस्य तिष्ठद्गुप्रभृतिपाठ इत्यर्थः । पराङ्गवत्त्वायाव्ययत्व
मिति । तत्र हि षष्ठ्यामन्त्रितकारकवचनमित्युक्तत्वादस्य कारकविभक्त्यन्तत्वे
सति पराङ्गवद्भाव. स्यादेवञ्चेदण्ड कुर्वन्नित्येतदपेक्षया द्वितीयान्तद्वितीयाया
श्चाव्ययत्वाल्लुगिति भाव । अव्ययीभावेऽभावादिति । तुडमुखस्वरोपचारा इ
तिपरिगणनादिति भाव । इत्यादीत्यनेन सूचितामरुचिमप्रकाशयति । केचि
त्त्विति । तत्प्रयोग इति । केशाकेशि कुर्वन्नितिप्रयोग इत्यर्थः । इच्प्रत्ययस्य य-
दि स्वरादौ पाठस्तदाऽव्ययत्वादव्ययानामेतिनिषेधात्पराङ्गवद्भावो न स्यादि
तिशङ्कानुत्थानायेत्यमभिहितम् । स्थित्यादिक्रियेति । केशेषुकेशेषु गृहीत्वा स्थि
तयोरित्यर्थं इत्यनेन ग्रहणस्थितिक्रिययोः समानकर्तृकत्वन्दर्शितम् तु युद्धकर्तृ
कप्रवृत्तिक्रियामादाय क्त्वाप्रत्ययस्योपपत्तिरसमानकर्तृकत्वात् । पुरुषाणामिति ।
एवञ्च स्थितयोरितिद्विवचनमविवक्षितमिति भाव' । अनेकमितिसूत्रेणास्य स-
मासस्यागतार्थतामाहेदं सूत्रमिति ।प्रक्रियालाघवार्थमप्याह । श्वोरविति । नन
संज्ञापूर्वकेतिपरिभाषासत्त्वे वृद्धिसंज्ञापूर्वत्वेन न य्वाभ्यामितिनिषेधस्यानित्यत्वा
दप्रवृत्तौ वृद्धिप्रवृत्तौ द्वारादित्वादैचि शौवादंष्ट्रो मणिरित्यस्य सिद्धिर्भवति परिभा
षाया अभावे तु न स्यादत आह।शौवेति।यद्वा संज्ञापूर्वको विधिरनित्य इति प-
रिभाषासत्त्वे शौवादंष्ट्रस्य सिद्धिर्भवति परिभाषाया अभावे तु शुनो दन्तदंष्ट्रेत्य
नेन दीर्घे श्वादंष्ट्रागप्त्राह्हाच्छं ऽस्य सिद्धिर्न स्यादत आह । शौवेति । भाष्यप्र
योगादिति । एतेनात्रान्येषामपीत्येव दीर्घविधायकं शुनो दन्तेति त्वस्यैव ह
शिग्रहणस्य प्रपञ्च इति ध्वनितम् । स च दीर्घः प्रयोगदर्शनेन कल्प्य. प्रकृते च
तद्धितोत्पत्तेः प्रागप्रवृत्ति. कल्पनीया । एव सति दृष्टत्वाभावाच्छन्दस्यापाणिग् ।
ततो द्वारादित्वादैच् । अन्येषामपीति दीर्घं । दृशिग्रहणादेवाप्रवृत्तिकल्पना-
याग्दृष्टान्तः सपुच्छवदिति । एवमेव । यथा संज्ञापूर्वक इतिवचनमप्रामाणिक
न्तद्वत् । तत्तद्वचनबलात्साधयितुमिष्टा' प्रयोगास्त्वाम्नातिरिक्ता अप्रामाणिका
एवेति बोध्यम् । सद्योतकमिति । तुल्ययोग इति सामस्य द्योतनासामर्थ्याभाव-
श्चिद्वाधारत्यमयं इति भाव । समासविशेषणत्वमुपलक्षणमन्यत्र न तु सत्ता
द्विशेषणत्वमव्यभिचारात्समासविशेषणत्वे ऽप्युपसर्जनसंज्ञाव्यवच्छेदायासक्त -

अ साधकमाह। लच्यानुसारिव्याख्यानादिति। तत्फलमाह । सहक्लतेति। सहशब्दविशेषणत्वेऽच स्यात्। साचात्समासविशेषणत्वे फलमाह। सहक्लत-प्रिय इति। व्याख्यानादेव। लच्यानुसारिव्याख्यानादेव। सपुचादेरिति। एतेषु सहशब्दस्य लौकिकोपसर्जनत्वाभावेऽपि शास्त्रीयमुपसर्जनत्वमस्त्येव। तेन स-हेतिसूत्रारम्भस्य प्रयोजनमाह। व्यधिकरणत्वादिति। तत्रैव तत्प्रवृत्तेरिति । अपूर्वायाः प्रथमाया इति निर्देशात्। इतिशब्दादिति। अस्योपादानादस्य सू-त्रस्य प्रयोगदर्शनात्प्रवृत्तिरिति भावः । ननु कत्रभावार्थमितिपूर्वेणोक्तत्वात्सक-र्मक इत्यत्र कप्प्रत्ययानुपपत्तिरत आह। स्वार्थे क इति । अत एव। स्वार्थकप्र-त्ययस्वीकारादेव। असम्भवादिति। व्यधिकरणत्वादेरभावादिति भावः। नन्वे-वं सहैव दशभिः पुत्रैरित्यत्र तृतीया कथमत आह। सहैवेत्यादि । विद्यमा-नतावाचीति। एतेन व्यधिकरणत्वं स्पष्टमेव। एवञ्च। सहशब्दस्य विद्यमानव-चनत्वेन। प्रकृत्याऽऽशिषि। अत्र नेति वक्तव्ये प्रकृत्या इत्युपादानमदृष्टार्थम्। नन्वेवमाशीर्वचने सपुत्रस्येत्यस्य प्रयुज्यमानस्य का गतिरत आह। सपुत्रस्ये-तिरूपे विशेषाभावादिति । एवञ्चावहुगणादिति प्रतिषेधवैयर्थ्यमिति शेषः। प्रत्याख्याने त्विति। प्रत्याख्यानपूर्वपच इत्यर्थः। सूचितमिदमिति। प्रत्याख्यानं सूचितम्। अत्र पचे। प्रत्याख्यानपचे। कबपीति। सङ्ख्येयेऽन्यपदार्थे यदाऽ-नेकमितिसूत्रेण समासः क्रियते तदा कब्भवत्येव। यदा तु विंशत्यादीनां स-ङ्ख्यासङ्ख्येयोभयपरतयाऽधिकविंशा इत्यादौ अधिका विंशतिर्यासामित्यर्थ-कल्पने किञ्चिदधिका विंशतिः सङ्ख्या यासामित्यर्थसम्भवेऽपि दशादीनां स-ङ्ख्येयमात्रपरतयाऽधिकदशा इत्यादिसिद्धार्थं सूत्रमारभ्यते तदा पूर्वोक्त एवा-र्थे। एतच्चार्थचिबोधकेन तुना सूचितम्। तथा चोक्तं भाष्ये इदन्तु न सिध्य-ति। अधिकदशा इति। वार्त्तिककारयाह। मत्वर्थे पूर्वो योगः। अमत्वर्थोऽय-मारम्भः। अनेन सूत्रस्यावश्यकत्वं वार्त्तिककारसम्मतमिति स्पष्टमेव। द्विवा इत्याद्यर्थमत्वर्थग्रहणकर्त्तव्यत्वेऽपि स एवाह। कबभावार्थं वेति। एतत्सूत्रवि-हितसमासस्य शेषाधिकारस्थत्वाभावेन कपोऽप्राप्तेरिति भावः। न च द्वैरूक्त्य-योरित्यादिसिद्धार्थमेकादिनशब्दानां सङ्ख्यापरत्वस्यापि स्वीकारादिदन्त्विया-द्युक्तमसङ्गतमिति वाच्यम् । सौत्रप्रयोगविषय एव तथा स्वीकारेऽप्यन्यत्र ने

व्रीडाविव्यपि प्रस्तुताभिप्रायमेव । न त्वन्येषामपीतिवचनार्थं प्रवेश । अत्र च हृत्यादीति । हृत्पत्ययस्य तिङ्दगुप्रभृतिपाठ इत्यर्थः । पराङ्गवत्त्वायाव्ययत्व मिति । तत्र हि षष्ठ्यामन्त्रितकारकवचनमित्युक्तत्वादस्य कारकविभक्त्यन्तत्वे मति पराङ्गवद्भाव स्यादेवमुच्चैर्दण्ड कुर्वन्नित्येतदपेक्षया द्वितीयान्तद्वितीयाया यथाव्ययत्वान्लुगिति भाव । अव्ययीभावेऽभोवादिति । सुडसुडव्रोपचारा इ तिपरिगणनादिति भाव । हृत्यादीत्यनेन सूचितामरुचिम्प्रकाशयति । के चि त्विति । तत्प्रयोग इति । केशाकेशि कुर्वन्निति प्रयोग इत्यर्थ । हृत्प्रत्ययस्य य दि स्वरादौ पाठस्तदाऽव्ययत्वादव्ययानाम्नेतिनिषेधात्पराङ्गवद्भावो न स्यादि तिशङ्कानुत्थानायेत्यमभिहितम् । स्थित्वादिक्रियेति । केशेषुकेशेषु गृहीत्वा स्थि तयारित्यर्थ इत्यनेन ग्रहणस्थितिक्रिययो समानकर्तृकत्वन्दर्शितम् तत्र तु युद्धकर्तृ कप्रवृत्तिक्रियामादाय क्त्वाप्रत्ययस्योपपत्तिरसमानकर्तृकत्वात् । पुरुषाणामिति । एवञ्च स्थितयोरितिद्विवचनमविवक्षितमिति भाव । अनेकमितिसूत्रेणास्य स मासमप्यागतार्थतामाह इद सूत्रमिति । प्रक्रियालाघवार्थमप्याह । औरविति । नन सञ्ज्ञापूर्वकेतिपरिभाषाभावे वृद्धिसञ्ज्ञापूर्वत्वेन न यूभ्यामितिनिषेधस्यानित्यत्वा दप्रवृत्तौ वृद्धिप्रवृत्तौ द्वारादित्वादैचि शौवादंष्ट्रो मणिरित्यस्य सिद्धिर्भवति परिभा षाया अभावे तु न स्यादत आह। शौवेति। यद्वा सञ्ज्ञापूर्वको विधिरनित्य इति प रिभाषासत्त्वे शौवादंष्ट्रस्य सिद्धिर्भवति परिभाषाया अभावे तु गुणो दन्तादंष्ट्रेत्य नेन दीर्घ स्यादंष्ट्रायामग्रहणादृस्य सिद्धिर्न स्यादत आह । शौवेति । भाष्यप्र योगादिति । एतेनान्येषामपीत्येव दीर्घविधायक गुणो दन्त इति त्वर्थेव इ ग्ग्रहणस्य प्रपञ्च इति ध्वनितम् । स च दीर्घ प्रयोगदर्शनेन कल्प्य प्रज्ञात च तद्धितेत्यत्र प्रागप्रवृत्ति कल्पनीया । एव सति हृदन्ताभावाच्छ्वस्यायामासिद्धम् । तता द्वारादित्वादैच । अन्येषामपीति दीर्घ । इग्ग्रहणादेवाप्रवृत्तिकल्पना यान्दृष्टान्त श्वपुच्छवदिति । एवमेव । यथा सञ्ज्ञापूर्वक इतिवचनमप्रामाणिक त्वादत् । तत्तद्वचनबलाबाधयितुमिष्टा प्रयोगास्तद्वाक्यमात्रनिरिक्ता अप्रामाणिका एवेति बोध्यम् । तद्योतकमिति । तुम्प्रयोग इति साम्या द्योतनामात्रमाव च्छिद्र आधारत्वमत इति भाव । समासविशेषणत्वमुपमर्दनमन्यत्र न तु सदृश द्विशेषणत्वमव्यभिचारात्समासविशेषणत्वे ऽप्युपमर्दनगन्धस्यानुपपद्यमानत्वम

व साधकमाह। लच्यानुसारिव्याख्यानादिति। तत्फलमाह । सहक्तत्वेति। सहशब्दविशेषणत्वेऽत्र स्यात्। साक्षात्समासविशेषणत्वे फलमाह। सहक्तत्वप्रिय इति। व्याख्यानादेव। लच्यानुसारिव्याख्यानादेव। सपुत्रादेरिति। एतेषु सहशब्दस्य लौकिकोपसर्जनत्वाभावेऽपि शास्त्रीयमुपसर्जनत्वमस्त्येव। तेन सहेतिसूत्रारम्भस्य प्रयोजनमाह। व्यधिकरणत्वादिति। तत्रैव तत्प्रवृत्तेरिति । सपूर्वायाः प्रथमाया इति निर्देशात्। इतिशब्दादिति। अस्योपादानादस्य सूत्रस्य प्रयोगदर्शनात्प्रवृत्तिरिति भावः । ननु कबभावार्थमितिपूर्वञ्चोक्तत्वात्सकर्मक इत्यत्र कप्रत्ययानुपपत्तिरत आह। स्वार्थे क इति । अत एव। स्वार्थिकप्रत्ययस्वीकारादेव। असम्भवादिति। व्यधिकरणत्वादेरभावादिति भावः। नन्वेवं सहैव दशभिः पुत्रैरित्यत्र तृतीया कथमत आह। सहैवेत्यादि । विद्यमानतावाचीति। एतेन व्यधिकरणत्वं स्पष्टमेव। एवञ्च। सहशब्दस्य विद्यमानवचनत्वेन। प्रकृत्याऽऽशिषि। अत्र नेति वक्तव्ये प्रकृत्या इत्युपादानमदृष्टार्थम्। नन्वेवमाशीर्वचने सपुत्रस्येत्यस्य प्रयुज्यमानस्य का गतिरत आह। सपुत्रस्येतिरूपे विशेषाभावादिति । एवञ्चावङ्ग्रहणादिति प्रतिषेधवैयर्थ्यमिति शेषः। प्रत्याख्याने·त्विति। प्रत्याख्यानपूर्वपक्ष इत्यर्थः। सूचितमिदमिति। प्रत्याख्यानं सूचितम्। अत्र पक्षे। प्रत्याख्यानपक्षे। कवपीति। सङ्ख्येयेऽन्यपदार्थे यदाऽनेकमितिसूत्रेण समासः क्रियते तदा कब्भवत्येव। यदा तु विंशत्यादीनां सङ्ख्यासङ्ख्येयोभयपरतयाऽधिकविंशा इत्यादौ अधिका विंशतिर्यासामित्यर्थकल्पने;किञ्चिदधिका विंशतिः सङ्ख्या यासामित्यर्थसम्भवेऽपि दशादीनां सङ्ख्येयमात्रपरतयाऽधिकदशा इत्यादिसिद्ध्यर्थं सूत्रमारभ्यते तदा पूर्वोक्त एवार्थः। एतच्चारुचिबोधकेन तुना सूचितम्। तथा चोक्तं भाष्ये इदन्तु न सिध्यति। अधिकदशा इति। वार्त्तिककारयाह। मत्वर्थे पूर्वो योगः। असमत्वर्थोऽयमारम्भः । अनेन सूत्रस्यावश्यकत्वं वार्त्तिककारसम्मतमिति स्पष्टमेव। द्वित्रा इत्याद्यर्थमत्वर्थग्रहणकर्त्तव्यत्वेऽपि स एवाह। कबभावार्थं वेति। एतत्सूत्रविहितसमासस्य शेषाधिकारस्थत्वाभावेन कपोऽप्राप्तेरिति भावः । न च द्वैरकयोरित्यादिसिद्ध्यर्थमेकादिनवान्तानां सङ्ख्यापरत्वस्यापि स्वीकारादिदन्त्वित्याद्युक्तमसङ्गतमिति वाच्यम् । सौत्रप्रयोगविषय एव तथा स्वीकारेऽप्यन्यत्र ने-

त्यागयात्। भाष्ये अनन्तरबहुव्रीह्यपेक्षयेति। शेषाद्विभाषेतिसूत्रे भाष्ये उक्तम्। क शेष याभ्यः प्रकृतिभ्य समासान्तो न विधीयते स शेष इति सामान्येनोक्ते ये प्रतिपद विधीयन्ते ते बाधका भविष्यन्तीति पूर्वपक्षिणोक्ते कपो वैकल्पिकत्वात्तदभावे सावकाशत्वे नापवादत्वाभावात्परत्वात्प्रतिपदविहितसमासान्त विषये कप प्राप्नोति तस्माच्छेषग्रहणकर्तव्यम्। तत्र किमपेक्ष शेषत्वमिति प्रश्ने यस्मादिभ्यिष्य समासान्तो न विहितस्तदपेक्ष शेषत्वमित्यर्थे कथितेऽन्तक मिति न सिध्यतीति परेणोक्ते अनन्तरो यो बहुव्रीह्यधिकारस्तदपेक्ष शेषत्व मित्युक्तम्। स चाधिकारो बहुव्रीहौ सक्थ्यक्ष्णोरिति। स च बहुव्रीहि प्रायस कल्पिक।एवञ्च तदधिकारीयसमासान्तस्याचाविधानेन कबपि भवतीति भाव इदञ्च कृतमिति। बहुव्रीहौ सङ्ख्येये डजबहुगणादिद सूत्रञ्च कृतमित्यर्थ। सङ्ख्याया इतीति। सङ्ख्यान्तस्य तत्पुरुषस्य समासान्तो डजित्यर्थ। अव्ययादेरितीति। अव्ययादेरिति च वक्तव्यमिति पूर्ववार्त्तिकशेषात्। ननु अव्यया देरित्युच्यते तदान्यत्राधिकलोपादित्यपि वार्त्तिकमुक्तोक्तम्। द्वाधिका विंशति द्वाविंशतिकारेधिका विंशतिरेकविंशतिरिति च फलसुक्तन्तत्रोपपद्यतेऽव्यया दित्वाभावादत आह। अन्यत्रेत्यादि। स्वरीत्येति। तेनाव्ययादेरित्यस्यानुपादा नाच्छेषपूरणस्य भाष्यकृता कृतत्वादिति भाव। कि चैकविंशतिरित्यादौ भा ष्यरीत्या तत्पुरुषाभावात्र डच प्राप्तिरित्याह। भाष्यकृता त्विति। इन्द्र एवे ति। एवञ्च सप्ये तिसूत्रेण पूर्वपदप्रकृतिस्वरो भवति। एवमेव। व्यत्ययेन। ऊर्ध्वमानविवक्षायामाह। इयसचो वेति। तदन्तग्रहणमस्तीति। एवञ्च र पाभ्यामित्यनेनान्वयाय पूर्वपदशब्दोत्र लाक्षणिको बोध्य। अनभिधानमिति। सङ्क्रान्त्वाक्रान्तानामित्यादि। रघुनाथादिशब्देऽतिप्रसङ्ग वारयति। रघुनाथेति। पचेऽजेति। णत्वादेशस्य वैकल्पिकत्वे नैतदभावे पूर्वसूत्रमप्रवर्त्तत इति भाव। भाष्य इति। एतद्वार्त्तिके वायग्रहणमित्यर्थ। खुरखराभ्यावम वक्तव्य इत्येव पाठात्। एवञ्च खुरणस इत्याद्यमाध्येव। उपसर्गसंज्ञाया क्रियायोग एव प्रवृत्तेर्नासिकाशब्दार्थेन योग उपसर्गत्वासम्भवादुपसर्गग्रहणमादुपलक्षणमित्या शयेन मूले व्याख्यातम् प्रादिति। अन्यथा। धनोत्पर इत्यर्थोपादाने। प्रा ग्वदयेति। प्रादुपलक्षणमत्र। नसादेश इति। एवञ्च नैतप्रथमान्तम्। किन्तु

तृतीयान्तम्। सुप्रात इत्यादाविति। अत्राधिकरणशक्तिप्रधानस्यापि प्रातःशब्दस्य
तत्सम्बन्धिकर्मविशेषलक्षणया शोभनपदेन सामानाधिकरण्यम्। यद्यपि प्रा-
तःकल्पमित्यादाविव वृत्तिविषये शक्तिमत्परत्वेनापि निर्वाहो भवति। तथापि
कालस्य स्वतः शोभनत्वम्दुष्टत्वं वा न सम्भवतीत्युपाधिसंसर्गेणैव तद्वाच्यत्वद-
पेक्षया लक्षणया कर्मविशेषपरत्वमुचितमेव। निपातनादिति। पाच्छब्दस्य कृ-
तसमासान्तत्वाभावेनाल्लोपस्य स्थानिवद्भावेन च पादः पदित्यस्याप्राप्तिरिति
भावः। अस्य। नञ्दुःसुभ्य इत्यस्य। न च प्रकृतसूत्रे हलिग्रहणं व्यर्थम्। हल-
शब्देन समासेऽहल इत्यस्य सिद्धिर्भविष्यति सहत्वप्रतीतिरपि प्रकरणादिना
भविष्यतीति वाच्यम्। असिच्प्रत्यये सति दुर्हल इत्यत्र चित्त्वादन्तोदात्तत्वं भव-
ति। प्रकृतसूत्रे हलिग्रहणाभावे हलशब्देन समासे तु पूर्वपदप्रकृतिस्वरेणाद्यु-
दात्तत्वापत्तिः। हलिशब्देन समासेऽनुक्तसमासान्तत्वेन कबापत्तिश्च स्यात्। ह-
लिग्रहणसत्त्वे तु प्रकृतसूत्रेण समासान्ते कृते कप् न भवतीत्याशयात्। ननु
प्रजामेधाशब्दान्तबहुव्रीहेः सिच्प्रत्यय एव विधातव्यो यस्येतिलोपाभावेऽपि
अप्रजा इत्यादि भविष्यतीत्यत आह। अकारोच्चारणन्त्विति। अस्वरितत्वेना-
न्यतरस्याङ्ग्रहणस्यासम्बन्धेन नित्यत्वे लब्धे नित्यग्रहणमिदमर्थमत आह।
नित्यग्रहणमिति। भाष्यस्वरस इति। भाष्यकृता प्रकृतसूत्रस्थनित्यग्रहणस्य प्र-
योजनान्तरमोक्तम्। एतेन यत्प्रकृतसूत्रस्थनित्यग्रहणमन्यतोऽप्ययन्तं नाल्पमेधस
इति सिध्यतीति वृत्तिकृदादुक्तमन्यन्निरस्तम्। रूढौ न मानमिति। रूढावेव न
मानमित्यर्थः। तेन पादस्य पदाज्येतिसूत्रे बहुव्रीहौ प्रकृत्येतिसूत्रे च रूढि-
सत्त्वेऽपि न क्षतिः। सजातीयेति। अत्र साजात्यं स्वघटितसमासघटकत्वेन।
अभाववाच्यवहितोत्तरत्वसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः। अदृष्टार्थ इ-
ति। अथानुकरणभूतेनाकारेणादृष्टशब्दस्य समासः। अः अदृष्टो यस्य सः। अ-
दृष्टाः अदृष्टाः प्रयोजनं यस्य सोऽदृष्टार्थः। तादृशश्च णिजन्तो धर्मशब्द इति
भावः। साहचर्यादिति। पूर्वोत्तरसूत्रसाहचर्यादप्रत्ययचकारसाहचर्यादित्यर्थः।
परमतं खण्डयति। वसादाविति। युवजानिरित्यत्रास्यानित्यत्वेन दोषा-
भावेऽप्याह। गौधेर इति। मधुरभिभ्य इति पञ्चमीनिर्देशात्तस्मादितिपरिभा-
षाप्रवृत्तावप्याह। समासान्ता इति। गन्धशब्दो द्रव्यवाची गुणवाची च। बहु-

ति जलमियमग्निनष्टि गन्धानित्यादौ द्रव्यवाची । गुणवाची तु चन्दनस्य गन्ध इत्यादौ दृष्टः । प्रकृतसूत्रे तु द्रव्यवाचिनो न ग्रहणमिति बोधनाय वार्त्तिककृतोऽङ्गन्धस्येत्वे तदेकान्तग्रहणमिति तत्रैकान्तशब्दस्यावयववाचकतया गुणस्यावयवत्वाभावादाह । मूले एकान्त इवेति । पातञ्जलमतेनाह । गुणसमुदाय इति । अन्ये । मुख्या. । यद्यपि गन्धशब्दो नानार्थः तथाप्यल्पाख्यायामित्युपादानाल्लेशवाचकस्यात्र ग्रहणमित्याह । तथा चेति । ननु मूलोक्तं स्त्रियामित्यप्रकृतमत आह । स्त्रीलिङ्गानामेवेति । कुम्भपदीषु चेतिसूत्रारम्भप्रयोजनमाह । यदिह्लोपेति । शिशुत्वावस्थेति । पशुविषये तादृशी प्रसिद्धिर्लौकिक्यस्ति । उपचयादय इत्यादिनाऽपचयग्रहणम् । एकवचनान्तपाठे न यथाऽर्थविशेषलाभस्तथ्प्रकारमाह । सर्वत्र गण इति । समासान्तसामान्यस्य तदभिप्रायविषयत्वमित्यत्र तदुक्तिरेव प्रमाणमित्याह । तदाह्यतीति । समासान्तापेक्षया शेषग्रहणे शेषग्रहणं व्यर्थं स्यादिति कस्य चिदुक्तिं खण्डयति । समासान्तार्थेति । समासान्तसामान्यापेक्षया शेषाग्रहणे सति यत्सिद्धन्तदाह । एवं चेति । प्रियपथिक इति । अत्र परत्वात्कप् । ऋक्पूरित्यकारस्तु यदा न कप् तदा भवति । प्रियपथ इति । तदाह अपीति । अत एव । यदा सप्तम्येऽन्यपदार्थेऽनेकमितिसूत्रेण समासः क्रियते तदा ङ्व्विषयेऽपि कप इष्टत्वादेव । अन्यत्र पाठः । अनन्तरो यो बहुव्रीहिः सक्थ्यक्ष्णोरितिबहुव्रीह्यधिकारस्ततोऽन्यत्र पाठ. । अन्यत्र विस्तार इति । अनन्तरो यो बहुव्रीह्यधिकारस्तदपेक्षस्य शेषपदार्थस्य ग्रहणमुक्ता कथमनृचो बह्वृच इति । वक्तव्यमेवैतत् । अनृचो माणवे । बह्वृचश्चरणाख्यायामिति भाष्ये उक्तम् । कथमिति । बहुव्रीह्यधिकारविधानाच्छेषत्वात्कप्प्रसङ्ग.। वक्तव्यमेव । एतदिरयनेन विशेषवचनेन कपो बाध एव । विनिगमनाविरहेणानृचो माणवे एव । माणवेऽनृच एवेत्युभयविधनियमाश्रयणात् । यत्त्वत्र कैयटेनोक्तम् । समासान्तापेक्षेऽपि शेषत्वेऽनृचबह्वृचयोर्विशेषवचनादन्यत्रान्यत्रयोः पक्षे कपः सिद्धत्वात्कस्य विधीयमानस्याप्रसङ्गात्किमर्थमनन्तरबहुव्रीह्यधिकारापेक्षः शेष आश्रीयते । किञ्चापदगादिभ्यः पक्षे कपमाप्नोति अनन्तरे बहुव्रीह्यधिकारे ङपोऽविधानात्प्रियपथः प्रियधुर इत्यत्र च माप्नोति तस्मात्समासान्तापेक्षमेकशेषत्वमाश्रयणीयमिति । एतदेवानुक्तसमासान्तादिति सदसा मूलल-

तापि समासार्थितमिति । अत्र दस्विल्यमुनैव कबपेचं शेषग्रहणमपि समास
पेचमित्यनेन नञ्घटितवाक्यद्वयेन पूर्वोक्तपचद्वयोपमर्दं कृत्वा भाष्यकृता अनन्
रो यो बहुव्रीह्यधिकारः सोऽपेच्यत इत्यनेन तृतीयपच एव स्वीकृतोऽतः स प
चादरणीयः । कपो वैकल्पिकत्वेन पचे प्रियपथिक इतीष्टमेव । भाष्यकृता प
तादृशदोषानुद्भावनात् । अप्रतिषिद्धमनुमतं भवतीतिन्यायात् । समासान्तर्द
सूत्रस्य उच्चधुर इतिप्रयोगस्तु कबभावपचे बोध्यः । न च विशेषापेचात्सामान्य
पेचमन्तरङ्गमितिन्यायेन समाससामान्यापेचत्वेन ऋक्पूरित्यन्तरङ्गमि
वाच्यम् । प्रकृतिविशेषापेचत्वेन तस्यापि समत्वात् । सामान्यापेचत्वेनान
रङ्गत्वस्य भाष्यकृताऽनाश्रयणाच्च । ननु यद्यनन्तरो यो बहुव्रीह्यधिकारस्तद
पया शेष आश्रीयते तदा बहुव्रीहावुरः प्रभृतिभ्यः कप् । इनः स्त्रियाम् ।
द्वतश्च । विभाषा । इत्येवं कप्प्रकरणं समाप्य सक्थ्यक्ष्णोः स्वाङ्गात् षच्
अङ्गुलेर्दारुणि । इत्यादिसूत्रं कर्त्तव्यम् । प्रकृतसूत्रस्थं शेषग्रहणञ्च कार्यं वि
पविहिताः षजादयो बाधका भविष्यन्तीति चेन्न । विभाषा श्यावारोकाभ्या
पूर्णाद्विभाषा इत्यनयोर्वैकल्पिकत्वेनैतयोरभावे कबापत्तेः । मम तु अनन्त
यो बहुव्रीह्यधिकारः सोऽपेच्यते । अनन्तरे बहुव्रीह्यधिकारे यस्माद्बहुव्रीहेः
समासान्तो न विहित इत्यभिधानात्तद्विषये कपोऽप्रसक्तेर्न दोषः । किं च शेष
दाभावे शेषाधिकारस्थबहुव्रीहेरित्यर्थलाभोऽपि न स्यादिति बोध्यम् ।
पादित्यस्यैव निषेध इति । तेनोरः प्रभृतीति कप संज्ञायामभवत्येव । विश्वे दे
अस्येति लौकिकविग्रहार्थं व्याचष्टे । विश्वाख्येति । अत्र विग्रहे बहुवचनोच्च
रणस्य बीजमाह । उद्भूतेति । विश्वाख्येत्युपादानेन तस्य गणविशेषस्य वि
इत्यपि संज्ञा । गणयोद्भूतावयवभेद एव प्रतीयते शब्दशक्तिस्वभावात् । इदम
बोध्यम् । न संज्ञायामितिनिषेधो नावयवस्य संज्ञात्वमादाय किं तु समुदा
स्यापि संज्ञात्वादेव । कबविहिता चेत्संज्ञा विवक्षिता तदा कप् न भवती
त्युक्तायात् । सा च संज्ञा लोके विभक्त्यन्तविश्वशब्दघटितैर्बोधयते । न च
ज्ञाशब्दा नियतापूर्वोक्ता एवान्यथ दृश्यन्ते इह तु विश्वान्देवान्विश्वेभ्यो दे
भ्यो विश्वेषान्देवानामित्यनियमो दृश्यत इति कथमिति वाच्यम् । देवशब्दप्र

साजात्यश्च समानार्थकत्वविशिष्टसूत्रे नेति । विश्वे देव इति त्वपपाठ इति । रिनिष्ठिते प्रयोगे विभक्त्यलुग्विधायकसूत्राभावादिति भाव । अत एव तमे यसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमिति श्रूयते।ईयसश्च ति सूत्रविषयेऽनन्तरस्यै तिन्यायाप्रवृत्तौ बीजमाह । न संज्ञेयसो हि सैवेति यस प्रत्ययत्वात्प्रत्ययग्रहणपरिभाषया तत्तदन्तपरमतो लिङ्गविशिष्टपरिभाषाया इह प्राप्ति । ईयसो बहुव्रीहेर्नेति निषेधवचनं यद्यपि नोपलभ्यते तथापि तादृशानुपूर्वीकस्य यथा लाभस्तथाकारमाह । ईयसो बहुव्रीहाविति । गोस्त्रियोरितिसूत्रात्स्त्रीग्रहणमत्र सम्बध्यत इत्याशयेनाह । स्त्रीप्रत्ययस्येति । च सूत्र इति । ईयसश्चेतिसूत्र इत्यर्थः । विषयत्वं समस्यन्तार्थं । ननु यदि पुवद्भावो विधीयते तदा कुलस्यान्यपदार्थत्वे शिखीत्कुमादीनामपि प्रतिनिवृत्ति प्राप्नोतीत्यत आह ।दीर्घत्वमिति । एतद्वचनैकवाक्यतया पूर्ववचनेन पुवद्भावविधानेऽपि ह्रस्वत्वस्यैव प्रकरणप्राप्तस्य तेन निवृत्तिर्बोध्यते इति कल्पनीयम् । अनेन । पुवद्वचनेन । आवश्यकेनेति । अन्यथा दीर्घत्वविधानस्य पुंसि जातेऽपि गोस्त्रियोरितिह्रस्वत्वे पुनरनेन दीर्घत्वविधायकतया चारितार्थ्यादपुंसकह्रस्वत्वनिवृत्तिर्न स्यादिति भाव । निषेध इति । कष इत्यादि । एतेन । पूजित इतिकथनेन । कर्त्राद्यन्वयद्वारैवेति । अत एव समासप्रयोजकं सामर्थ्यमत्र वैयधिकरण्ये पीति । अन्यथा सामर्थ्यसद्भावेऽपि समस्यन्ते नैकविशेष्यकप्रतीतिजनकत्वरूपसामानाधिकरण्याभावात्समासो न स्यादिति भाव । सप्तमीविशेषण इतिसूत्रे विशेषणपदेन सप्तमीपदसाहचर्यादुत्तरपदार्थविशेषणीभूतार्थप्रतिपादकस्य ग्रहणमित्याह । उभयोरपीत्यादि । सर्वनामसंख्ययोरितिवचनारम्भस्य प्रयोजनमाह । स्वे नेति । अन्यथा विशेषणत्वाच्छ्रूतसंख्ययो रेव पूर्वनिपात स्यादिति भाव । वस्त्रे तरा इति । वस्त्रा इतरे येभ्य इत्यौ दक्षिणो यस्य त्यर्थे बहुव्रीहावन्यपदार्थप्राधान्येऽपि सर्वनामत्वसुपपादयति । वचमिति । अत एव । शब्दपरविप्रतिषेधस्याभिमतत्वादेव । साधारणमिति । सप्तम्ययाऽध्ययेतिसूत्रभाष्ये द्विधा । चित्रगुरा इत्युदाहरणादिति भाव । मूले द्वन्द्वेऽपीत्यपिशब्दस्तत्पुरुषस्यापि समुच्चायक इत्याशयेनाह । सहस्राणामिति । इदम् । वाप्रियस्येति वचनम् । प्रियगुड इत्यस्य त्यर्थ । बहुव्रीहावेवेति । तेन

तत्पुरुषे न। मद्रप्रिय इत्यस्य बहुव्रीहित्वेऽपि तत्र नेदं वचनमप्रवर्त्तते। यत्र पदार्थस्य विशेषणत्वेन प्रियपदस्य पूर्वनिपातप्रसङ्गस्तत्रास्य वचनस्य प्रवृत्ति-स्वीकारात्सद्दशब्देन समासे तूत्तरपदे सादेशविधानेन सहशब्दस्यैव पूर्वनिपातप्रसङ्ग इति तत्र वा प्रियस्येत्यस्याप्रवृत्तिरिति भावः। वृत्तौ स्पष्टमिति। भाष्यानुक्तत्वेन सिद्धान्ते व्यवस्थितविभाषात्वे मानाभाव इति भावः। क्रियाशब्दत्वादिति। एतेन तत्र विशेषणविशेष्यभावे कामचारः सूचितः। चारुस्मितेत्यादीति। अत्रादिना चारुदती चारुनेत्र इत्यनयोः सङ्ग्रहः। ज्ञापितमिति। इद वचनमिति शेषः। वाग्रहणानुवृत्तेरिति। निष्ठेतिसूत्रभाष्ये पठितं यज्जातीतिवचनं तत्र वा प्रियस्येति पूर्वसूत्रपठितवार्त्तिकाद्वाग्रहणानुवृत्तेरित्यर्थः। वस्तुतस्तु भाष्ये जातिकालेत्यन्तोदात्तत्वविधायकवचनेऽकृतमितप्रतिपन्ना इतिप्रतिषेधवचनस्यैतादृशविषये निष्ठान्तस्य परनिपाते ज्ञापकत्वमुक्त्वा अकृतेत्यादिप्रतिषेधविषये राजदन्तादित्वकल्पना निरस्ता तेन जातिकालसुखादिभ्यः परा निष्ठेतिवचनस्य ज्ञापकसिद्धस्यासार्वत्रिकत्वसूचनेन सर्वेष्टमिद्धिर्भवतीति बोध्यम्। यदि तु प्रतिषेधविषय एव निष्ठान्तस्यापरनिपातः स्यात्तदा पीतशब्दस्य तत्र पाठाभावात्पीतोदकमितिप्रयोगासिद्धिः स्यादित्येतदुदाहरणोपन्यासेन मूलकृताप्ययमर्थो ध्वनितः। क्व चिदेवेति। वाग्रहणानुवृत्त्याऽग्न्याहितान्न्यादित्वकल्पनया वा इदमपि सिद्धम्।

## ॥ इति बहुव्रीहिविवरणम् ॥

तत्फलमिति। अनेकग्रहणानुवृत्तेः फलमित्यर्थः। तस्य वाक्यस्येति। चैत्रेण मैत्रेण कृतमितिवाक्यस्येत्यर्थः। तस्य चैत्रे णमैत्रेणेत्यस्य तद्वाक्यत्वाभावाच्चैत्रमैत्राभ्यामितिसमुदायसाधुत्वप्रयोजकवाक्यत्वाभावात्। अत एव। वृत्तिविग्रहवाक्ययोः समानार्थकत्वनियमादेव। न तदुदाहरणमिति। न द्वन्द्वोदाहरणमित्यर्थः। प्रत्येकान्वयविवक्षायामिदम्। समुदायस्यान्यवान्वयविवक्षायान्तु भवत्येव। धवखदिरौ छिन्धीति यथा। एतेन। उक्तप्रकारेण। तमेवाह। राजन्वृन्दारकेति। वार्त्तिकविरोधशङ्कां वारयति। तिडिति। अत एव। असमुदायस्य कर्तृत्वादेव। आहत्या। क्रियावाचकपदावृत्त्या। तदन्वया-

दिति। तदर्थेऽन्वयादित्यर्थ । तेन। अनेकस्येत्युपादानेन । सापेक्षत्वे पीति। ईश्वरङ्गुरुञ्च भजस्वेतिवाक्याच्चशब्दस्य द्योतकतया ईश्वरसमुच्चितङ्गुरुमिति-बोधेन गुरुपदार्थस्येश्वरसापेक्षत्वे पीश्वरपदार्थस्य गुरुपदार्थानपेक्षत्वे नासा-मर्थ्यान्न तत्र समासः। समभिव्याहारस्यात्र स्वोच्चारणकालाव्यवहितपूर्वकालो-च्चरितत्वम्। अत एव। एतादृशे विषये एकस्यैवेतरसापेक्षत्वादेव। ईश्वरक-र्मकभजनक्रियाया गुरुकर्मकभजनक्रियाभिन्नत्वादेकस्मिन्नित्यसङ्गतमत आह। एकधर्मावच्छिन्न इति । अपिनाऽवच्छेदधर्मस्यानेकत्वं विवक्षितमिति भावः। अन्वयपदस्य सम्बन्धप्रतिपादकतयाऽन्वयः समुच्चय इत्यसङ्गतमत आह। यद्वेत्यमिति। अन्वयः। विशेषणता। वक्ष्यमाणोदाहरणे। ईश्वरङ्गुरुं चेत्यादौ। अत्र प्रातिपदिकार्थसमुच्चयसत्त्वादेतेषां च यद्धर्मावच्छिन्नक्रियानिष्ठविशेष्यता-निरूपितविशेषणतापन्नविभक्त्यर्थविशेषणत्वमपरस्यापि तादृशधर्मावच्छिन्न ए-व परम्परयाऽन्वयादिति भाव.। आद्यः। विशेष्यतया । क्रियासमुच्चय इति। अत्र चशब्देन क्रियागते समुच्चितत्वन्द्योत्यते। क्रियायाश्च विशेष्यतयाभावस्या-नुभवसिद्धत्वादिति भावः। साधारणानुषङ्गिकपदार्थतावच्छेदकमाह। आनु-षङ्गिकत्वमिति। एकस्य प्राधान्ये तदितरस्यानुषङ्गिकत्वव्यवहार इत्यानुषङ्गि-कपदप्रतिसम्बन्धितया प्राधान्यपदव्यवहर्त्तव्यतावच्छेदकमाह । अन्यस्येति। अन्वाचयस्थले चशब्दे तद्द्योत्यमर्थद्वयमाह। अन्वाचय इति। एवं च भिक्षा-मट गाश्चानयेत्येवविधेऽन्वाचयाभिप्रायेण वाक्ये उच्चारिते सति चशब्दसमभि-व्याहृतपदप्रतिपाद्या या क्रिया तस्याश्चशब्दद्योत्यार्थस्य विशेषणतयाभानञ्जा-यते। अनुद्देश्यभिक्षाटनव्याप्यङ्गवानयनमिति बोधः। अत्र परस्परमनन्वया-त्सामर्थ्याभाव. स्पष्ट एव। परस्परापेक्षाणमिति । इतरेतरयोगनिरूपणावसरे प्लक्षश्च न्यग्रोधश्चेत्युक्ते गम्यते एतत्प्लक्षोऽपि न्यग्रोधसहायो न्यग्रोधोऽपि प्लक्ष-सहाय इति भाष्यकृतोक्तम्। अत एव परस्परापेक्षासूचनायेदृशे विषयेऽनेकच-कारप्रयोगः। यद्यपि मिलितानामन्वय इत्येवमूलकसाभिहितत्वेन साहित्य-रूपमेलनं वर्त्तिपदार्थे विशेषणमिति प्रतीयते। तथापि इहे साहित्यस्य वि-शेष्यतया भानमाह्यमत एव गौश्चाश्वश्चेत्युक्ते ... कुक्कुटमयूर्याविव कुक्कुटमयूरीशब्दार्थस्य साहित्यमति विशेषणतयोपदर्शनस्याद्भमत्वमाशङ्क्य

द्वन्द्वे नेति वचनमारब्धम् । मिलितानामित्यस्य परस्परापेक्षाणामित्यर्थः । परस्परापेक्षापदार्थान्निर्वक्ति । उद्भूतावयवभेदेति । समूहरूपाणामिति । समूहेन ये रूप्यन्ते तेषामित्यर्थः । उद्भूतः प्रकटः अवयवानां भेदो यस्य तादृशसमूहनिष्ठविशेष्यतानिरूपकतावच्छेदकधर्मावच्छिन्नानामिति यावत् । एकधर्मावच्छिन्नेऽन्वय इत्यस्य फलमाह । तेन नीधातोरिति । अत एव । परस्परापेक्षासत्त्वादेव । मिलितानामन्वय इत्येतदत्र तन्त्रे त्वध्याहारेण व्याचष्टे ।।यत्रैवमिति । प्रत्यवयवं समूहेति । एकैकपदार्थे समूहरूपत्वारोपेऽपि धवखदिराविल्यत्र न बहुवचनापत्तिः । अतिरिक्तस्य पदार्थस्य तत्र भानाभावादिति । प्रत्येकवृत्तिधर्मद्वयप्रवृत्तिनिमित्तमित्युक्तमत एवैतादृशविषये द्वन्द्वोत्तरोत्पन्नद्विवचनबहुवचनार्थसंख्याया. शुद्धपर्याप्तिसम्बन्धेन प्रकृत्यर्थेऽन्वयः । यत्रानेकधर्मस्य प्रवृत्तिनिमित्तत्वं तत्र बोद्धव्यतावच्छेदकव्याप्तिविशिष्टपर्याप्तेः सम्बन्धत्वस्वीकारात् । इति विशेष इति । अत्र ह्येकवचनमेवोत्पद्यते तदर्थस्य शुद्धपर्याप्तिसम्बन्धेन प्रकृत्यर्थेऽन्वयः । चार्थे वृत्त्यभावेनेति । समुच्चयस्थले च समभिव्याहृतस्यैकस्य चार्थे वृत्तावप्यपरस्य चार्थे वृत्त्यभावेनानेकस्य चार्थे वृत्त्यभावोऽन्वाचये तूभयोरपि तस्याभाव इत्यर्थः । एतच्चोपपादितम्प्राक् । प्रकारान्तरेण समुच्चयस्थले समासाभावन्दर्शयति । किञ्चेति । तत्र । समुच्चयस्थले । स्पष्टञ्चेदमिति । चार्थस्य प्राधान्ये समासप्रवृत्तिरित्येतत्स्पष्टमित्यर्थः । असत्त्वभूतत्वादिति । चादयोऽसत्त्व इत्युक्तेः । यद्व्याप्यितः । यद्व्याभिश्च इत्यर्थः । एतेनैवंविधस्थलेऽपि समासार्थस्य साहित्यस्य तत्र विशेषणत्वमितिकल्पना निरस्ता । अत । लिङ्गपदोपादानेन ।।नन्वेवमिति । इतरेतरयोगेऽपि समूहस्य प्राधान्यस्वीकार इत्यर्थः । तदतिरिक्तः । अवयवातिरिक्तः । अत एव । समूहस्य विशेष्यत्वादेव । पक्षान्तरादिति । न च प्रथमद्वितीयपक्षयोरैक्येन पक्षान्तरादित्यनुपपन्नमिति वाच्यम् । यद्वेति द्वितीयपक्षे उद्भूतावयवभेदस्य प्रथमोक्तः प्रकारः प्रथमपक्षे तूद्भूतावयवभेदस्य द्वितीयरीत्योक्तः प्रकारो दर्शित इत्यभिप्रायेणान्तरपदोपादानात् । गम्यमानसाहित्यमादाय समासापत्तिन्निरस्यति । परस्परेति । उक्तोऽर्थः । समूहरूप. । इदम् । राजदन्तादिष्विति सूत्रम् । द्वन्द्व एवेदमिति । अल्पाच्तरमिति सूत्रभाष्ये पाठादिति शेषः । अल्पाच्तरमित्यत्र तरप् सत्तामुपपादयति ।

दिति। तदर्थेऽन्वयादित्यर्थ.। तेन। अनेकस्येत्युपादानेन। सापेक्षत्वेपीति। ईश्वरङ्गुरुञ्च भजस्वेतिवाक्याच्चशब्दस्य द्योतकतया ईश्वरसमुच्चितङ्गुरुमिति-बोधेन गुरुपदार्थस्येश्वरसापेक्षत्वे पीश्वरपदार्थस्य गुरुपदार्थानपेक्षत्त्वेनासामर्थ्यान्न तत्र समासः। समभिव्याहारश्चात्र स्वोच्चारणकालाव्यवहितपूर्वकालोच्चरितत्वम्। अत एव। एतादृशे विषये एकस्यैवेतरसापेक्षत्वादेव। ईश्वरकर्मकभजनक्रियाया गुरुकर्मकभजनक्रियाभिन्नत्वादेकस्मिन्नित्यसङ्गतमत आह। एकधर्मावच्छिन्न इति। अपिनाऽवच्छेदधर्मस्यानेकत्वं विवक्षितमिति भावः। अन्वयपदस्य सम्बन्धप्रतिपादकतयाऽन्वयः समुच्चय इत्यसङ्गतमत आह। यत्रैवमिति। अन्वयः। विशेषणतया। वक्ष्यमाणोदाहरणे। ईश्वरङ्गुरुञ्चेत्यादौ। अत्र प्रातिपदिकार्थसमुच्चयसत्वादेतेषां च यद्धर्मावच्छिन्नक्रियानिष्ठविशेष्यतानिरूपितविशेषणत्वापन्नविभक्त्यर्थविशेषणत्वमपरस्यापि तादृशधर्मावच्छिन्न एव परम्परयाऽन्वयादिति भाव.। आद्यः। विशेष्यतया। क्रियासमुच्चय इति। अत्र चशब्देन क्रियागते समुच्चितत्वन्द्योत्यते। क्रियायाश्च विशेष्यतयाभावस्यानुभवसिद्धत्वादिति भावः। साधारणानुषङ्गिकपदार्थतावच्छेदकमाह। आनुषङ्गिकत्वमिति। एकस्य प्राधान्ये तदितरस्यानुषङ्गिकत्वव्यवहार इत्यानुषङ्गिकपदप्रतिसम्बन्धितया प्राधान्यपदव्यवहर्त्तव्यतावच्छेदकमाह। अन्यस्येति। अन्वाचयस्थले चशब्दे तद्द्योत्यमर्थद्वयमाह। अन्वाचय इति। एवं च भिक्षामट गाश्चानयेत्येवविधेऽन्वाचयाभिप्रायेण वाक्ये उच्चारिते सति चशब्दसमभिव्याहृतपदप्रतिपाद्या या क्रिया तस्याश्चशब्दद्योत्यार्थस्य विशेषणतयाभानञ्जायते। अनुद्दिश्यभिक्षाटनस्याप्यङ्गवानयनमिति बोधः। अत्र परस्परमनन्वयात्सामर्थ्याभावः स्पष्ट एव। परस्परापेक्षाणमिति। इतरेतरयोगनिरूपणावसरे प्लक्ष न्यग्रोधयेत्युक्ते गम्यते एतत्प्लक्षोऽपि न्यग्रोधसहायो न्यग्रोधोऽपि प्लक्षसहाय इति भाष्यङ्गतोक्तम्। अत एव परस्परापेक्षासूचनायेदृशे विषयेऽनेकचकारप्रयोगः। यद्यपि मिलितानामन्वय इत्येवमुक्तत्ताभिहितस्येव साहित्यरूपस्येतरं वर्त्तिपदार्थे विशेषणमिति प्रतीयते। तथापि इन्द्वे साहित्यस्य विशेष्यतया भानस्याग्रत एव गोदिर्याकपणेऽन्नस्येतिसूत्रे कुक्कुटमयूर्यावित्यत्र कुक्कुटमयूरीशब्दार्थस्य साहित्यम्प्रति विशेषणतयोपसर्जनत्वाद्भ्रस्वत्वमाशङ्क्य

ऐङ्गिकपाणविकमित्युपात्तन्तेन वादकस्यात्र ग्रहणमित्येव लभ्यते । वादकस्य च नाङ्गत्वमत्राण्यवयव इत्येव सम्भवतीत्याशयेनाह । मध्ये तूपकारकेति। सेनाशब्दान्तङ्गत्वाद्ङ्गत्वाऽङ्गशब्देन षष्ठीतत्पुरुषोऽत्र कार्यस्तदभिप्रायेणाह । अङ्गशब्दस्येति । तेन प्रत्यासत्तिस्वीकारेण । एवमेव । यथाद्वन्द्वे तिसूत्रे प्रत्यासत्त्याश्रयणेन दोषो वार्यते एवमेवाध्वर्युक्रतुवाचिनोऽध्वर्युक्रतुवाचिना सहैव यो द्वन्द्वस्तस्यैव ग्रहणमित्यमेव । तेनार्कवन्त्वाविल्यत्र न । एकवचनशब्दादेकवदित्यस्य यथा लाभस्तथाऽऽह । एकवचनेति।एकार्थबोधकपदवदिति । एकत्वविशिष्टबोधकं यदेकपदं तद्यथा नित्यैकवचनान्तन्तथा एषां द्वन्द्वोऽपि भवतीत्यर्थ. । भाष्यकैयटयोरिति । तत्र हि पूर्वत्र नित्यार्थमिति भाष्यकृतोक्तम् । तत्र च कैयटेनोक्तम् । पूर्वत्रेति । प्राण्यङ्गादीनां समाहार एवेत्येवमर्थमिति । अयञ्च नियमः समाहारद्वन्द्वपच एव भाष्यकृता तत्रोपपादित इति मूलकृतापि तथैवोपपादितम् । द्वन्द्वश्चेत्यादीनां विध्यर्थत्ववादिमतन्निरसितुं गच्छते । न चेति । व्याख्यानेन । विभाषावृक्षेतिसूत्रीयभाष्यकृत्कृतनियमप्रदर्शनमूलकव्याख्यानेनेत्यर्थः । तत्र । समाहारद्वन्द्वे । तदनुवादेन । समाहारद्वन्द्वानुवादेन । फलाभावात् । समाहारद्वन्द्वस्य तिरोहितावयवभेदसमूहाभिधायकतया फलाभावात् । ध्वनितञ्चेदमिति । मूलकृतेति शेषः । तत्रैवोक्तमिति । एतद्वाच्यसमाहारस्य कदाप्युद्भूतावयवभेदविवक्षा नेति तेन द्वन्द्वे उभयविवक्षा भवतीति । नन्वेषामेव समाहार इत्येव नियमः किन्न स्यादत आह । विपरीतेति । प्रतिपत्तेति । अस्य प्रतिपाद्यत इत्यत्रान्वयः । सिद्धस्योपन्यासमुपपादयति । प्रकृत इति । यदा तु न सिद्धानुवादस्तदाह । असिद्धेति । पठ्यर्थ इति । अत एव द्वन्द्वपदेनान्वय ।पदकक्रमकयोरध्ययनेन या प्रत्यासत्तिस्तामुपपादयति । अध्ययनगतेति । पदान्यधीते पदकः । क्रमादिभ्यो वुन् । एवङ् क्रमकोऽपि । ननु पदक्रमयोरपि प्रत्यासत्तिरध्ययनेन सम्भवति । पदाध्ययनानन्तरं क्रमाध्ययनादतस्तदैवैतत्प्रत्योदाहरणत्वेन प्रायस्यादृत्तमुचितमित्याशयेनाह । पदक्रमशब्दयोरिति । जातित्वादिति । शब्दत्वव्याप्यजातिविशिष्टवाचकत्वादित्यर्थ. । अस्मिन्सूत्रे लाघवादध्ययनतः सन्निकृष्टाख्यायामिति वक्तव्ये ऽविप्रकृष्टाख्यायामित्युपादानम्परम्परया सन्निकर्षग्रहणार्थम् । अध्ययनत इत्यस्यानुपादाने पितापुत्रावित्यत्रा-

यथाकथञ्चिदिति। अत एव। तरप्प्रवृत्तिनिमित्तविशेषाभावादेव। अत एव। भट्टस्यापि शब्दविशेषस्य सत्त्वादेव। अनुदात्तानामितिबहुवचनार्थस्य विवक्षितत्वे यत्र बहूनामनुदात्तानां सत्ताऽस्ति तत्रैवैतत्प्रवृत्तिः स्याद्द्वयोर्यत्र स्थितिस्तत्र न स्यादितिहेतोर्यथा तत्र बहुवचनमुपात्तमप्यविवक्षितन्तथेहापि तरप्विवक्षित इति भावः। ननु यदि तरबिहेऽविवक्षितः स्यात्तदा द्वयोर्मध्ये एकस्य प्रकर्षे तरप उत्पत्तेर्बहुषु सन्निहितेषु द्विवचनोपपदे विधीयमानतरबन्तशब्दघटितस्यैतस्य सूत्रस्याप्रवृत्तेर्मृदङ्गशङ्खतूणवा इत्यादि न सिध्येत्तत्र त्वविवक्षितत्वपक्षेऽत आह। मृदङ्गेत्यादि॥ इत्यादावित्यादिना पृथङ्नदन्ति संसदि। प्रासादे धनपतिरामकेशवानामित्यस्य सङ्ग्रहः। द्वन्द्वोत्तरपदो द्वन्द्व इति। शङ्खश्च तूणवश्च शङ्खतूणवौ। शङ्खतूणवौ च मृदङ्गश्चेत्येवं सङ्खविवक्षया द्वन्द्वः कार्य इत्यर्थः। भाष्योक्तपक्षान्तर इति। तत्र हि किमयन्तन्त्रान्तरनिर्देशः आहो स्विदतन्त्रम्। किं चातः। यदि तन्त्रन्द्वयोर्नियमः। बहुष्वनियमः। तत्र को दोषः। शङ्खदुन्दुभिवीणानामिति न सिध्यति। दुन्दुभिशब्दस्यापि पूर्वनिपातः प्राप्नोति। अथातन्त्रम्। मृदङ्गशङ्खतूणवाः पृथङ्नदन्ति संसदि। प्रासादे धनपतिरामकेशवानामित्येतन्न सिध्यति। एवमुभयथापि दोषमभिधाय यथेच्छसि तथास्त्वित्युक्तम्। तदुत्तरन्तरन्निर्देशस्य तन्त्रत्वपक्षे पूर्वोक्तदोषानुवादद्वारा यदेतदल्पाच्तरमिति तदल्पाजिति वक्ष्यामि। पुनरतन्त्रत्वं स्वीकृत्य मृदङ्गेत्यादिदोषमुपन्यस्य द्वन्द्वघटितद्वन्द्वेन समाहितमिति न प्रकृते तरन्निर्देशस्य सत्त्वेऽपि यथा फलैक्यं भवति तथैव यत्नः कार्य इति सूचितमिति भावः। यद्यप्येवोपपादितरीत्या फलाविशेषः पक्षयोर्भवति तथाप्यनयोः कः पक्षो युक्त इत्याकाङ्क्षायामाह। तन्त्रपक्षेऽपीति। दण्डशास्त्रमिरस्यति। अन्येति। मर्यादार्थाभाव इति। स्वार्थिकत्वेऽर्थाभाव एव स्यादिति भावः। यद्यपि बहुष्वनियम इति यथा धर्मादिष्वनियमस्तथाऽस्त्वित्युपरमित्यपीत्यर्थः। इदम्प्रकरणम्। पूर्वनिपातप्रकरणम्। अन्यथापि विप्रतिषेधन्दर्शयति। अजाद्यदन्तमिति। पर्वेति। इन्द्रस्य प्राणिसूर्यविद्वन्द्व इत्यर्थः। तूर्यशब्दो तूर्यपरस्तदङ्गस्य वाद्यवादकयोरित्येत्यभयोरपि प्रहणमङ्गावारणायाह। वादका एवेति। भाष्ये ध्वनितमिति। मृदङ्गशङ्खतूणवा इतिबहुवचनात्सपदोषाभावाद् ध्वनितमित्यर्थः। सूनिरपि मा-

र्दङ्गिकपाणविकमित्युपात्तत्वेन वादकस्यात्र ग्रहणमित्येव लभ्यते । वादकस्य च नाङ्गत्वमप्राण्यवयव इत्येव सम्भवतीत्याशयेनाह । मध्ये तूपकारकेति । मेनाशब्दान्तद्वन्द्वत्वाऽङ्गशब्देन षष्ठीतत्पुरुषोऽत्र कार्यस्तदभिप्रायेणाह । अङ्गशब्दस्येति । तेन प्रत्यासत्तिस्वीकारेण । एवमेव । यथाद्वन्द्वे इतिसूत्रे प्रत्यासत्त्याश्रयणेन दोषो वार्यते एवमेवाध्वर्युक्रतुवाचिनोऽध्वर्युक्रतुवाचिना सहैव यो द्वन्द्वस्तस्यैव ग्रहणमित्यमेव । तेनार्कवश्वावित्यत्र न । एकवचनशब्दादेकवदित्यस्य यथा लाभस्तथाऽऽह । एकवचनेति।एकार्थबोधकपदवदिति । एकत्वविशिष्टबोधकं यदेकपदं तद्यथा नित्यैकवचनान्तन्तथा एषां द्वन्द्वोऽपि भवतीत्यर्थः । भाष्यकैयटयोरिति । तत्र हि पूर्वत्र नित्यार्थमिति भाष्यकृतोक्तम् । तत्र च कैयटेनोक्तम् । पूर्वत्रेति । प्राण्यङ्गादीनां समाहार एवेत्येवमर्थमिति । अयञ्च नियमः समाहारद्वन्द्वपक्ष एव भाष्यकृता तत्रोपपादित इति मूलकृतापि तथैवोपपादितम् । द्वन्द्वश्चेत्यादीनां विध्यर्थत्ववादिमतन्निरसितुं शङ्कते । न चेति । व्याख्यानेन । विभाषावृक्षेतिसूत्रीयभाष्यकृत्कृतनियमप्रदर्शनमूलकव्याख्यानेनेत्यर्थः । तत्र । समाहारद्वन्द्वे । तदनुवादेन । समाहारद्वन्द्वानुवादेन । फलाभावात् । समाहारद्वन्द्वस्य तिरोहितावयवभेदसमूहाभिधायकतया फलाभावात् । ध्वनितश्चेदमिति । मूलकृतेति शेषः । तत्रैवोक्तमिति । एतद्वाच्यसमाहारस्य कदाप्युद्भूतावयवभेदविवक्षा नेति तेन द्वन्द्वे उभयविवक्षा भवतीति । नन्वेषामेव समाहार इत्येव नियमः किन्न स्यादत आह । विपरीतेति । प्रतिपत्तेति । अस्य प्रतिपाद्यत इत्यत्रान्वयः । सिद्धस्योपन्यासमुपपादयति । प्रकृत इति । यदा तु न सिद्धानुवादस्तदाह । असिद्धेति । षष्ठ्यर्थ इति । अत एव द्वन्द्वपदेनान्वयः।पदकक्रमकयोरध्ययनेन या प्रत्यासत्तिस्तामुपपादयति । अध्ययनगतेति । पदान्यधीते पदकः । क्रमादिभ्यो वुन् । एवङ् क्रमकेऽपि । ननु पदक्रमयोरपि प्रत्यासत्तिरध्ययनेन सम्भवति । पदाध्ययनानन्तरं क्रमाध्ययनादतस्तदेवैतत्कस्मान्नोदाहरणत्वेन भाष्याद्युक्तमुचितमित्याशयेनाह । पदक्रमशब्दयोरिति । जातित्वादिति । शब्दत्वव्याप्यजातिविशिष्टवाचकत्वादित्यर्थः । अस्मिन्सूत्रे साधारणादध्ययनत. सन्निकृष्टाम्नायानामिति वक्तव्ये विप्रकृष्टाम्नायानामित्युपादानम्परम्परया सन्निकर्षग्रहणार्थम् । अध्ययनत इत्यस्यानुपादाने पितापुत्रावित्यत्रा-

तिप्रसङ्गः स्यादस्ति चैतयोर्जन्यजनकभावद्वारकः सन्निकर्षः । अविप्रकृष्टेति किम् । वैदिकयाश्चिकौ । अप्राणिपदस्य प्राणसम्बन्धवद्भिन्नपरत्वे विभाषा वृक्षे-तिसूत्रस्थभाष्यविरोध इत्यतो विशेषपरत्वमित्ये तदुत्पादयति । यद्यपीत्यादि । भाष्यस्वरस इति । तत्र हि बहुप्रकृतिः फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तु-धान्यतृणानामिति वक्तव्यमितिवार्त्तिकोक्तनियमविषये अङ्कितङ्किम्पुनरनेन या प्राप्तिः सा नियम्यते आहो स्विदविशेषेण । किञ्चातः यद्यनेन या प्राप्तिः सा नियम्यते प्लक्षन्यग्रोधौ । जातिरप्राणिनामिति नित्या द्वन्द्वैकवद्भावः प्राप्नो-ति अथाविशेषेण न दोषो भवति यथा न दोषस्तथास्त्वित्युक्तम् । यदि प्राणिप-दमप्राणसम्बन्धवन्मात्रपरं स्यात्तदा प्लक्षन्यग्रोधयोरपि प्राणसम्बन्धवत्त्वादप्राणि-त्वाभावेन जातिरप्राणिनामिति नित्यो द्वन्द्वैकवद्भावः प्राप्नोतीति भाष्यमसङ्गतं स्यादिति तन्न्यायाल्लोकप्रसिद्धानामिह ग्रहणमित्यर्थः । पर्युदासादिति । प्राणि-नाम्मनुष्यादीनान्द्रव्यत्वान्नञिव्युक्तन्यायेन द्रव्यत्वव्याप्यजातिविशिष्टवाचका-नामिह ग्रहणमिति भावः । जातिप्राधान्ये सतीति । जातिग्रहणोपादानादय वि-षयविशेषो लभ्यते । अन्यथाऽप्राणिनामिति पर्युदासादेव जात्युपसर्जनद्रव्यवा-चिनाङ्ग्रहणोपपत्तौ तदर्थं स्यादिति भावः । धानाशष्कुलिशब्दस्यापि जाति-विशिष्टद्रव्यवाचित्वाज्जातेः प्राधान्याभावेन सूत्रोदाहरणासम्भव इतिशङ्कापरिहा-राय प्राधान्यपदार्थव्विवेक्ति । प्राधान्यञ्चेति । पक्षान्तरमाह । यद्वेति । द्रव्यं विशेषणमिति । धानात्वशष्कुलीत्वजातिविशेष्यत्वे धानाशष्कुलि भक्षयतीत्यत्र जातौ भक्षणकर्मत्वान्वयानुपपत्तिरत आह । बाह्यान्वय इति । जातिप्राधान्य इत्यत्र साधकोन्तरमाह । क्षीरोदक इत्यादि । जातिवचनावेताविति । जाति-विशिष्टद्रव्यवचनावेतावित्यर्थः । पर्युदास इति । एतेन नञ्प्रश्ने प्रामाण्यमङ्गात्पर्यु-दास. । व्याख्यानादिति । अनगराणामितिवक्तव्यमितिवार्त्तिकमूलाद्व्याख्या-नादित्यर्थः । तेन । पर्युदासप्रतियोगित्वेन नगरस्याग्रहणेन । तत्फलमाह । मथुरापाटलिपुत्रमिति । अनयोर्नगरवाचकत्वेऽपि सूत्रमप्रवर्त्त न इति भाव. । द्वे वाक्य इति । नदीवाचिशब्दे शवाचिनाचं स्यये । उत्तरीत्ये ति । प्रत्यासत्त्या-श्रयणरूपयुक्त्या । ग्रामा इति बहुवचनोपादानदृग्रामविशेषाणाङ्ग्रहणाभि-प्रायेण । अत एव देशपदेन मनुष्यनिवासयोग्यानाङ्ग्रहणम् । न तु पर्वतानाम् ।

तेन कैलासगन्धमादने इत्यत्र न। देशपदेनैतादृशस्य ग्रहणादेव नदीग्रहणञ्च रितार्थम्। अन्यथा तासामपि सत्त्वादिनियामयोग्यत्वाद्देशपदेनैव ग्रहणे सिद्धे नदीपदं व्यर्थमेव स्यात्। न चाग्रामा इति पर्युदासेन देशग्रहणस्यविषयतीति देश पदं व्यर्थमिति वाच्यम्। गृहादिविशेषसन्निविष्टप्रदेशस्यैव सादृश्यादग्रहणमिति गङ्गावारणायैतदुपादानम्। तेन कुरुकुरुक्षेत्रादीना . ग्रहणमिद्धि । विशिष्ट लिङ्गपदस्य विशिष्टं विलक्षणं लिङ्गं येषान्तेषामित्यर्थः। इदञ्च न द्वन्द्वविशेषणम्। सर्वस्यापि द्वन्द्वस्य किञ्चिदपेक्षया विलक्षणलिङ्गतयैतदुपादानं व्यर्थमेव स्यादतो द्वन्द्वावयवविशेषणम्। नदीपदांशे ऋचिमार्ज्जिमन्न्यायस्य तु न प्रवृत्ति। देशपदसाहचर्यात्। अत एवेति। नदस्यापि ग्रहणादेव। शाश्वतिकश ब्दस्य साधुत्वं दर्शयति। शश्वच्छब्द इति। निपातनादिति। अत एवाव्ययत्वेपि लुग्लुलौ न। शाश्वतिकशब्दस्योक्तरीत्या नित्यवचनत्वेन विरोधस्य चाश्रय नाशेन कालविशेषेण वा नाशदर्शनेन विरोध शाश्वतिक इत्यत्र .सामानाधिकरण्यानुपपत्तिरत आह। स्वाभाविकं इति। अहिनकुलादिरिति। एषामस्युत्वे न लोकप्रसिद्धाभावात्। न तु महाव्रत्वस्थिति । एकदेशकालावच्छेदेनैक वावर्त्तमानत्वम् गृह्यते। न च देवासुरैरमृतमम्बुनिधिर्मथितस्य इति प्रयोगानुपपत्तिरेतेषामपि विरोधसत्त्वादिति वाच्यम्। शाश्वतिकपदेन वारणात्। एते षां हि कार्यविशेषसाधने विरोधो न तु स्वाभाविक इति भाव । मृत्युक्तप्रकारेण। भस्मना शुध्यते कांस्यन्ताम्रमम्लेन शुध्यति। रजसा शुध्यते नारी नदी वेगेन शुध्यति इत्युक्तप्रकारेण। गणपाठे रूपमिति । यादृशं रूपङ्गणपाठे दृश्यते तस्य ग्रहणम्। तेन छत्तायडादेशस्य ग्रहणमिद्धि । गवाश्वप्रभृतिषु मूत्र पुरीष शकृन्मेदमासशोणितादीनाड ग्रहणमबहुप्रकृत्यर्थमन्यथा सामान्यत प्राप्ते नियमार्थम्। भाष्ये तयोक्तेरिति। मित्तद्विशेषाणा द्वन्द्वार्थमिति तत्रोक्तम्। मृगादिषट्कमिति। एतेषामपि विशेषाणाद्ग्रहणम्। प्रागुक्तरीत्या । प्रत्यासत्त्याश्रयणेन। नित्यमेवेति। एतेषा यावत्स्थितिकाले प्राणित्वेऽपि मनुष्यादिभिन्नतया जातिरप्राणिनामित्यस्य प्राप्ति । ननु वनस्पत्युदाहरणं प्लक्षन्यग्रोधमिति भाष्ये उक्तन्तत्कथं वानस्पत्य फलैः पुष्पात्तैरपुष्पाद्वनस्पतिरितिकोशोक्तवनस्पतिवासम्भव इत्यत आह। अत्र वनस्पतीति। इदम्। फलमेनेतिपरिगणनम्।

तिप्रसङ्गः स्यादस्ति चैतयोर्जन्यजनकभावद्वारकः सन्निकर्षः । अविप्रकृष्टेति किम् । वैदिकयाज्ञिकौ । अप्राणिपदस्य प्राणसम्बन्धवद्भिन्नपरत्वे विभाषा वृक्षेतिसूत्रस्थभाष्यविरोध इत्यतो विशेषपरत्वमित्युत्पादयति । यद्यपीत्यादि । भाष्यस्वरस इति । तत्र हि बहुप्रकृति फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानामिति वक्तव्यमितिवार्त्तिकोक्तनियमविषये शङ्कितद्विम्नुनरनेन या प्राप्तिः सा नियम्यते आहो स्विदविशेषेण । किञ्चातः यद्यनेन या प्राप्तिः सा नियम्यते प्लक्षन्यग्रोधौ । जातिरप्राणिनामिति नित्या द्वन्द्वैकवद्भावः प्राप्नोति अथाविशेषेण न दोषो भवति यथा न दोषस्तथास्त्वित्युक्तम् । यदि प्राणिपदम्प्राणसम्बन्धवन्मात्रपरं स्यात्तदा प्लक्षन्यग्रोधयोरपि प्राणसम्बन्धवत्त्वादप्राणित्वाभावेन जातिरप्राणिनामिति नित्यो द्वन्द्वैकवद्भावः प्राप्नोतीति भाष्यमसङ्गतं स्यादिति तद्भाष्याल्लोकप्रसिद्धानामिह ग्रहणमित्यर्थः । पर्युदासादिति । प्राणिनाम्मनुष्यादीनान्द्रव्यत्वान्नञिवयुक्तन्यायेन द्रव्यत्वव्याप्यजातिविशिष्टवाचकानामिह ग्रहणमिति भावः । जातिप्राधान्येतीति । जातिग्रहणोपादानादय विषयविशेषो लभ्यते । अन्यथाऽप्राणिनामिति पर्युदासादेव जात्युपसर्जनद्रव्यवाचिनाङ्ग्रहणोपपत्तौ तदर्थं स्यादिति भावः । धानाशष्कुलिशब्दस्यापि जातिविशिष्टद्रव्यवाचित्वाज्जाते. प्राधान्याभावेन सूत्रोदाहरणासम्भव इतिशङ्कापरिहाराय प्राधान्यपदार्थविवेचनं । प्राधान्यञ्चेति । पक्षान्तरमाह । यद्वेति । द्रव्यं विशेषणमिति । धानात्वशष्कुलीत्वजातेर्विशेष्यत्वे धानाशष्कुलि भक्षयतीत्यत्र जातौ भक्षणकर्मत्वान्वयानुपपत्तिरत आह । वाहाद्यन्वय इति । जातिप्राधान्य इत्यत्र साधकान्तरमाह । क्षीरोदक इत्यादि । जातिवचनावेताविति । जातिविशिष्टद्रव्यवचनावेतावित्यर्थ.। पर्युदास इति । एतेन नञ्प्रश्लेषाभावशङ्काऽप्युदास.। व्याख्यानादिति । अनगराणामितिप्रश्यमितिवार्त्तिकमूलाद्व्याख्यानादित्यर्थं । तेन । पर्युदासप्रतियोगित्वेन नगरस्यापर्युदास । तत्फलमाह । मथुरापाटलिपुत्रमिति । अनयोर्नगरवाचकत्वेऽपि सूत्रमप्रवर्त्तत इति भाव. । द्वे शाख इति । नदीवाचिनाम्प्रवाहवाचिनाञ्चेत्यर्थः । उभयत्रेत्येति । प्रत्यासत्त्याश्रयणरूपयुक्त्या । अयामा इति बहुवचनोपादानाद्ग्रामविशेषाणाङ्ग्रहणाभिप्रायेण । अत एव देशपदेन मनुष्यनिवासयोग्यानाङ् ग्रहणम् । न तु पर्वतानाम्।

दृष्टाम् । प्राचीनरीत्याह । किञ्चेति । तेषामितरेतरयोगे साहित्यविशेषणतया द्रव्यस्य प्राधान्येन भानात्सापेक्षत्वेऽपि वृत्तेः प्राप्तिरिति भावः । स्वमतमाह । परे त्विति । दन्तोष्ठद्वारकसम्बन्धेन । स्वाश्रयघटितत्वसम्बन्धेन । द्वन्द्वत्वस्याप्राप्तिरिति । समाहारद्वन्द्वस्यैव तेन नियमादिति भावः । तत्प्राप्तिविषये समाहारद्वन्द्वप्राप्तिविषये । अत एव । उभयनिषेधादेव । ननु सूत्रारम्भसामर्थ्यात्समाहारांशे विशेषणीभूतो यस्तद्घटकपदार्थस्तत्रैवान्वयः कुतो न कल्प्यत इत्यत आह । सामर्थ्येनेति । मूलकाराविरोधं स्वमते साधयति । मूलेऽपीति । परस्परासम्बन्धेन यत्रान्वयविवक्षा तत्र व्यवस्थामुक्त्वा साक्षात्सम्बन्धेनान्वयविवक्षायामाह । समाहार इति । अनुवृत्तस्य च । अधिकरणैतावत्त्व इत्यस्य । नन्वेकवद्वेतिनियमनिषेधे दन्तोष्ठपदे नित्यैकवचनान्तत्वाप्राप्त्या दन्तोष्ठं दन्तोष्ठा इति भवतु उपदशमुपदशा इति तु कथमत आह । तत्र समाहारद्वन्द्व इति । अत एव । अव्ययीभावस्यानुप्रयोगादेव । दन्तोष्ठेति समुदायार्थस्य संख्येयरूपतया तत्रोपदशशब्दार्थस्य दशसंख्येयसमीपसंख्येयस्य नवत्वैकादशत्वान्यतरधर्मवतोऽभेदोऽबाधित इति भावः । यदा त्वनुप्रयुज्यमानार्थे दन्तोष्ठशब्दार्थभेदविवक्षा तदा त्वाह । उपदशन्दन्तोष्ठस्येतीति । उपदशं दन्तोष्ठमिति यदा प्रयुज्यते तदा तस्माद्दन्तोष्ठसमाहारो दशसंख्येयसमीपसङ्ख्येयनवैकादशान्यतराभिन्नबोधः । भेदविवक्षायां तु दन्तोष्ठसमाहारसम्बन्धिदशसमीपनवैकादशान्यतरदिति बोधः । नन्वव्ययीभावस्य पूर्वपदार्थप्राधान्यतयोपदशशब्दस्य दशसमीपबोधकत्वेन समीपस्य कालस्य देशस्य वा प्रतीतिः स्यात्तस्य चाभेदो दन्तोष्ठसमाहारे नास्तीति कथमव्ययीभावेन सामानाधिकरण्यमत आह । तत्र सामानाधिकरण्यमिति । तस्या बहुव्रीहेः । समीपप्रधानतयेति । दशसमीपे ये सन्तीत्यर्थावगमादित्यर्थः । नन्वामडादेशसम्बन्धिनकारस्य चेल्लोपेन निवृत्तिस्तदा तदनुच्चारणमेवास्त्वित्यत आह । नकारोच्चारणमिति । अत्र । पूर्वसूत्रे । अन्त्यादेशार्थ इति । अन्यथाऽनेकाल्त्वात्सर्वादेशः स्यात् । विद्यायोनिसम्बन्धपदसमर्थपाथधा विद्यायोनिकृतसम्बन्धवत्परस्तत्र विद्याकृतसम्बन्धमुपपादयति । एषामिति । विद्याद्वारकः । विद्याघटितः । एकवस्तुत्वं कृत्वमित्यस्य शिक्षादिकर्तृकपत्रोपयोगिविद्यावत्त्वविशिष्टतद्ग्राहकत्वरूपः सम्बन्ध इत्यर्थः । केवलयौगिक.

एतेन । प्रकरणशेषभूतत्वकथनेन । जातिरितीति । अत्र जातिरप्राणिनामिति सूत्रोपन्यासेन प्रकरणशेषत्वं सूचितमित्यर्थः । न च येन बहुवचनान्ता प्रकृतिस्तच्चैवेतिनियमस्वीकारे तत्र जातिप्राधान्याभावेन जातिप्राधान्य एवायमेकवद्भाव इत्यनेन विरोध इति तु न वाच्यम् । जात्याश्रयसकलव्यक्तिप्रतीतेर्जातेः प्राधान्यसद्भावात् । ननु विभाषा वृचेतिसूत्रस्योदाहरणनिरूपणावसरे मूले गोमहिषमित्युपात्तन्तच सेनाङ्गत्वाभावान्नित्यैकवद्भावस्य प्राप्त्यभावादिशेषेण कथनमयुक्तमत आह । गोमहिषमिति । प्राप्तिमात्रेति । पशुत्वात्प्राप्तिरिति भावः । इदं च स्वसंग्रहस्ययोर्गोमहिषयोः प्रकृतगोमहिषपदार्थत्वे बोध्यम् । यदा तु भारवाहकवाचकयोस्तयोरुपादानन्तदा तु सेनाङ्गत्वमपि सम्भवति । अत एव । बहुप्रकृतिकद्वन्द्वस्य वैकल्पिकैकवद्भावविधानादेव । बदरेति । अत्र फलत्वव्याप्यजातिप्रवृत्तिनिमित्तवयोरेतयोर्जातिरप्राणिनामिति नित्यैकवद्भावे प्राप्ते विकल्पः । अत्र पठितमिति । विभाषा वृचेति सूत्रे पठितमित्यर्थः । मयूर-व्यंसकमिति । यदि वार्त्तिकोक्तानां ग्रहणं विशेषार्थन्तदेत्यर्थः । अन्यस्त्विति । मृगाणां मृगभिन्नैरित्यर्थः । मृगवानराविल्यादि यथा । ननु विप्रतिषिद्धमिति-सूत्रोदाहरणनिरूपणावसरे शीतोष्णम् । शीतोष्णे इत्युपात्तमेतयोस्त्वप्राणित्वाद्विरोधासम्भवेन कथं विप्रतिषिद्धत्वमत आह । विरोधोऽत्रेति । सहानवस्थानम् । एकावच्छेदकावच्छेदेन सहानवस्थानमित्यर्थः । एतेन अहन्, मरस्, मध्याह्ने तरणिकिरणसंयोगादुपरितनभागावच्छेदेनोष्णत्वस्याधस्तनभागावच्छेदेन शैत्योपलम्भादेकस्मिं स्ताहशोदके उभयोः स्थितिसम्भवादुदाहरणासङ्गतिरिति परास्तम् । व्याख्यानादिति । विप्रतिषिद्धग्रहणस्य प्रायस्यात्तस्योदाहृतस्याय्यमित्यर्थं तद्दर्शनमूलकाद्धिषयादिदृष्टिषु ऋक्सामवाङ्मयोः पाठदर्शनमूलकाद्धित्यर्थः । वचनव्यक्तेरिति । नियामकशास्त्रवशादेवंविधनियमकल्पनेति भावः । मूले शीतोष्णे उदके इत्युपादानं शीतोष्णशब्दयोर्गुणोपसर्जनद्रव्यपरत्वमिति ध्वनयितुम् । सामान्यत इति । सामान्यधर्मावच्छिन्नस्य । शीतोष्णम् । शीतोष्णे इति । अत्र शीतोष्णशब्दौ स्पर्शात्मकगुणपरौ । न दधीत्यस्य सर्वनिषेधकत्वे यादृशी वचनव्यक्तिस्तामाह । अदादिति । तेन । नियामकस्यापि निषेधेन । पूर्वसूत्रवदिति । अयं वैकल्पिको

शङ्का:म् । इकारोपादानेन इत्यस्यानुपूर्वीमात्रबोधनं भाष्यतात्पर्यात् । द्वि-वचनातिरिक्तेऽपि अरादेशो दृश्यते । मातरापितरानूचिदिष्टाविति । एवं च भ्रामादावप्यरादेशघटितप्रयोगसिद्धिः । न च पूर्वोत्तरपदयोरित्यस्य पूर्वोत्तर-सूत्रघटकपदयोरित्यर्थः भ्रामादौ च यत्र मातरा इति दृश्यते तत्र सुपां सुलुगित्याकारादेश एवास्त्विति वाच्यम् । पूर्वोत्तरपदयोरित्यस्य पूर्वोत्तरसूत्र-घटकपदपरत्वे शाकपार्थिवादित्वकल्पनीयम् । पूर्वोत्तरशब्दस्य पूर्वोत्तरसूत्रघट-के लक्षणा वा आश्रयणीयेतिगौरवस्य स्पष्टत्वात् । अरारावित्यत्र कश्चित्तु न । उत्तरपदे अरा इत्यादेशस्य पूर्वपदे ऽरइत्यादेशस्य चाभिमतत्वे न वैरू-प्यमङ्गावादिति सर्वेष्टसिद्धिः ॥

## ॥ इति द्वन्द्वविवरणम् ॥

अपवादेति । द्वन्द्वापवादमङ्गत्येत्यर्थः । न चापदस्यापि सङ्गतित्वे ममस्म उ-पोद्घातो हेतुतावसरस्तथा । निर्वाहकैककार्यत्वे षोढा सङ्गतिरिष्यत इत्यने-न षोढात्वकथनविरोध इति वाच्यम् । अपवादेत्यनेनापवाद्यापवादकभावरूप-स्य प्रसङ्गनिर्वाहकसंबन्धस्य सूचनात् । वृद्धो यूनेतिसूत्रे वृद्धपदमपत्यमन्तर्हि-तं वृद्धमित्यभियुक्तोक्तं गोत्रपरमित्यभिप्रायेण मूले गोत्रमितिव्याख्यातम् । गोत्रयुवप्रत्ययेत्यत्र प्रत्ययपदमप्रतीतिपरमित्यभिप्रायेण व्याख्यातमप्रतीतिमात्र इति । स्पष्टार्थमिति । एवकारेण प्रत्ययार्थकुत्सायाः प्रशस्त्यर्थस्य च व्यव-च्छेद इत्यर्थस्य स्पष्टप्रतीतिर्लाभायेत्यर्थः । सूत्रारम्भफलमाह । स्त्रीलक्ष्येति । फ-लमाहेति । लुगात्मकम्फलमाहेत्यर्थ । वहुत्ववदर्थे वर्तमानं यञ्चप्रत्ययान्तमि-त्यर्थे यः शिष्यते इतिन्यायेन शिष्यमाणगोत्रप्रत्ययान्तस्य वहुत्ववत्यर्थे वृत्तिर-स्त्येवेति लुक्सिद्धिः । अस्त्रियामित्यत्र प्रसज्यप्रतिषेधपरत्वे न व्याख्यानपक्ष इदं प्रयोजनम् । यदि तु पर्युदास एव लाघवादाश्रीयते तदोक्तन्यायेन शिष्यमा-णस्य स्त्रीभिन्नार्थे वृत्तेरव्याहतत्वात्पुंस्त्वातिदेशाभावेऽपि लुक् स्यादेवेति क-ल्प्यते तदा गर्गाःपश्येत्यत्र नत्वसिद्धिः प्रयोजनम् बोध्यम् । अत एव । सङ्ख्-यानामित्यस्य विभक्तावित्यस्य चानुवृत्तेरेव । जननीवाचिमातृशब्दे न प-ठितिति ङीन्निषेधः । परिच्छेदवाची त्वत्र पुल्लिङ्गः । संमत्वे नेति । शिष्यमा

इति। पूर्वं च तत्पदस्येत्यर्थ । योनिकृत इति । ज्यानिर्हानी अवन्याद्य योनि स्यादाकरे भगे इतिकोशोक्तिदर्शनेन योनिशब्दस्य भगपरत्वे मातापुत्राविति यद्यपि सिध्यति तथापि पितापुत्राविति न सिध्यति । अत्रापि संयुक्तजन्यत्वम स्तीति चेत्पितामहाविति न सिध्यतीत्यत साक्षात्परम्परया वा योनिकृतो य सम्बन्ध स ग्राह्य इति भाव । मूले पुत्र इत्यनुवृत्तेरिति । एतच्च क्वाचित्कम भ्रात्पुत्राविति दर्शनात्। पितापुत्राविति । ऋदन्तसर्वावयवकत्वाभावात् इत्यनुवृत्त्यभावेऽत्र न स्यादिति भाव । अत एव । मण्डूकप्लुतिस्वीकारादेव। वाक्यभेदेनेति । अत एव मातापितराविति सिद्धि । तेन । ऋत इत्यस्यानुवृत्तत्वेन । वित्यादीति । अत्रादिना स्कन्दवरुणावित्यस्य सङ्ग्रह । इन्द्राविति सूत्रव्याख्यानावसरे वृद्धिमदुत्तरपद इति यद्व्याख्यातम्तदभिप्रकारमाह। देवता द्वन्द्व इति । अन्तरङ्गत्वादिति । वृद्धेस्तद्धितनिमित्तकत्वेन बहिरङ्गत्वादिति भा थ । अलौकिकइत्यनेन इन्द्रालौकिकस्य भ्रम स्यादत आह । तद्धितालौकि क इति । ननु तदानीमुत्तरपदस्य वृद्धिमत्त्वमत आह । वृद्धिमत्त्वमिति ! भाव्येव निमित्तमिति । तेन अग्निश्च मारुतश्च अग्नामारुतावित्यस्य सङ ग्रह । इत्वाभावादिति । इत्वस्यानङपवादतयाऽपवादाभावे उत्सर्गप्रवृत्तिर्या य्येवेति भाव । पृथिवी इत्यस्य द्विवचनान्तत्वोपपत्तये आह। द्वन्द्वेति । अ त एव । द्विवचनान्तत्वादेव । द्यावा चिदस्मै इत्यत्रोत्तरपदपरत्वाभावेन द्यावा देशस्याप्राप्तिशङ्कां छन्दसि दृष्टानुविधानेन समाधाय प्रकारान्तरेण तदुप पत्तिमाह। अन्ये त्विति । उत्तरत्र तु सिद्धमिति । यत्तरपदे गुणस्य प्रवृत्त्योत्तर पदस्य रेफान्तत्व सिद्धमित्यर्थ । मातरपितराविस्थ कर्मीयस्य वैकल्पिकत्वा त्तदभावे द्वन्द्व । पदद्वयेऽपि । पूर्वोत्तरपदयो । अन्ये । मुख्या । भाष्यकारीय व्याख्यानैतादृशकल्पनाया एवौचित्यम् । तथाहि । अत्र हि भाष्ये मातर पितरावुदीचाम् । पितरामातरा चेतिसूत्रद्वयस्योपादान कृत्वा छन्दसि कि निपात्यते पूर्वोत्तरपदयोर् कारस्याराविति । मातरपितरौ भाजय । मातरपित रावानय । आ मा गन्ताम्पितरामातरा चेत्युक्तम् । अत्र पूर्वोत्तरयोरित्युक्त्यो- त्तरपदेऽप्यराद्देशस्य निपातनमुभयोरपि मुख्योरकारान्तत्व छन्दसि किं निपात्यत इतिकथनेन सध्यते । न चोभयत्र निपातनमुक्तभिप्रायेणेति

प्रसङ्गमाशङ्क्याह त्यदाद्यन्तर्गतयोरिति। संख्याया अर्थासम्प्रत्ययादन्यपदार्थत्वाच्चे-त्यनेन भाष्यकृता ध्वनितमित्यर्थः। सङ्ख्याया अर्थस्य असम्प्रत्ययात्। सङ्ख्यारूपस्यार्थस्यैव सम्प्रत्ययाभावात्। एकाविस्युक्तेऽसहायादिरर्थो गम्यते न तु द्वाविति। अन्यपदार्थत्वाच्चेत्यस्यान्यस्य पदस्याप्ययमर्थो भवति। योऽर्थ एकावित्यनेनाभिधास्यते तस्मिन्नर्थेऽसन्देहे न द्वावितिपदान्तरं द्वौ च द्वौ चेत्यर्थे चत्वार इति प्रवर्त्तत इत्यर्थः। नन्वपवादस्यैकशेषस्याभावे द्वन्द्वस्तर्हि स्यादत आह। द्वन्द्वोऽप्येतयोर्नेति। चार्थ इतिसूत्रशेष इति। तत्र हि एकादशद्वादशेतिकोऽयं समास इत्याशङ्क्य द्वन्द्व इत्युत्तरे विंशत्यादिषु वचनमित्यनेनैकविंशतिर्द्वाविंशतिरित्यादौ वचनमप्राप्तौ तीत्युक्त्वा सिद्धन्त्वित्यादिना शाकपार्थिवादित्वकल्पनया समासकथनेन सा शङ्का परिहृता न त्वेकादिनवान्तविषये शङ्कासमाधाने कृते तेनैतादृशे विषयेऽनभिधानं सूचितमिति। एवञ्च। एकादिनवान्तानां द्वन्द्वाभावसिद्धौ च। एकद्विकरण इति। लोभस्येदं वर्णनम्। महापातकानि ब्राह्मणहननसुवर्णचौर्यगुर्वङ्गनागमनसुरापानानि एतेषां ये कर्त्तारस्तैः सह सवासश्चेति एतेषाम्मध्ये एकस्य द्वयोर्वा करणे उत्पादने हेतुभूतौ यो कामकोपौ तौ पञ्च कारयन्तौ लोभस्तृणवन्मन्यते स धन्य इत्यर्थः। इत्यसाध्वेवेति। एकद्विकरण इतीकारान्तद्विशब्दघटितमसाध्वेवेत्यर्थः। यदि तु एको वा द्वौ वेति बहुव्रीहौ ड्चि एकद्वकरण इति पठ्यते तदा तु साधुरेवायमिति बोध्यम्। षष्ठीतत्पुरुष इति। षष्ठ्यन्तत्वस्य सुबन्तत्वस्य प्रत्येकपर्याप्तत्वादसाधुत्वमित्यर्थः। अन्य। त्यदादित शेष इत्यस्य। अद्वन्द्व इत्यस्य द्वन्द्वतत्पुरुषविशेषणभूतार्थप्रतिपादकानां त्यदादीनां शिष्यमाणानान्न पुनः पुनः सकता लिङ्गवचनानि भवन्ति किं तु विशेष्यनिघ्नत्वमेव तेषामित्यर्थः। एतादृशे विषये विशेष्यानुरोध्येव वचनमित्यस्य दार्ढ्यसम्पादनाय बहुवचनान्तोदाहरणमप्याह। तत्पुरुष इति। त्वचितोर्योग इत्यादावपीति। जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा। अविद्या तच्चितोर्योगः षडस्माकमनादय इत्यत्रत्यमयम्। अव्ययमिति। विभक्तिप्रतिरूपकमव्ययमित्यर्थः। त्यदादीनीतिसूत्रे परस्परमाहचर्येणानव्ययस्यैव ग्रहणमिति भावः। एतौ गावावित्यत्र गङ्गशब्दोपादाने कृते यथा पाक्ये तिसूत्रस्याप्रवृत्तिस्तथोपपादयति। गङ्गशब्दस्येति। गङ्गा इति। अत्र तु द्वयोरेव समुदाय इति शेषः। ननु

शब्दस्य यत्प्रवृत्तिनिमित्तत्वेन रूपेणैकशेषस्थले सर्वप्रतीतेरनुभवसिद्धत्वाद्-एवमभिहितम् । अत एव भाष्ये इह कस्मान्न भवति । हंसश्च वरटा च । कच्छपश्च डुलिश्च । ऋष्यश्च रोहिच्चेति । तल्लक्षणश्चेदेव विशेष इत्युच्यते न चात्र तल्लक्षण एव विशेषः । तल्लक्षण एव विशेषो यत्समानायामाकृतौ शब्दभेद इत्यत्र समानायामाकृताविल्युक्तम् । ननु नपुंसकमनपुंसकेनैकवच्चान्यतरस्यामित्युच्यमानेऽपि प्रत्याख्यया द्वन्द्वानेकशेषस्तत्रैवैकवद्भावो भविष्यतीति प्रकृतसूत्रेऽस्य ग्रहणद्विमर्थमत आह । अस्य ग्रहणमिति । ननु सरूपाणामित्यस्य सूत्रस्य तर्हि समाहारविवक्षायामप्राप्त्याऽपवादाभावेन घटघटमितिसमाहारविवक्षायान्द्वन्द्वः प्राप्नोतीत्यत आह । घटघटमित्यादीति । एकस्यानेकार्थत्वमिति । तदुक्तं सरूपसूत्रभाष्ये । अर्थावर्थौ प्रति यत्तदपि प्रत्यर्थमेवेत्यादि । अन्यथा । एकस्यानेकार्थत्वाभावे । न ह्येकशब्दमात्रेणान्यस्मिन्नसती शक्तिः प्रतिपाद्यते किन्तु स्वभावतस्तं व्यवस्थितशक्त्या शिष्यमाणशब्देन सर्वस्य तत्तत्स्थलीयस्य तावदर्थविषयकबोधस्य प्रामाण्यं प्रतिपाद्यत इति भाव । नपुंसकेतिसूत्रोदाहरणविषये आह । गुण इति । एवञ्च । गुणे पुंस्त्वस्य व्यवस्थितौ च । द्रव्यविशेषणतापन्ना इति । द्रव्यमिह द्रव्यत्वजातिमद्विवक्षितं तु लिङ्गसंख्यान्वितमिति । अन्यथा रूपशब्दस्याप्येतादृशद्रव्यत्वापत्तौ रूपमिति प्रयोगानुपपत्तिः स्यात् । मातुरभ्यर्हितत्वादिति । अस्य पुत्रहद्देति शेषः । तेन मातृशब्दवाच्या या स्त्री तद्दुहिता तद्भर्तुः पूज्यत्वेऽपि न क्षति. । द्वित्यैन्तानासितिनियमत्यागे बीजमाह । प्रहृश्चेति । त्यदादित. शेष इत्यत्र षष्ठ्याः व्याश्रय इति तसिः । श्याद्यादित्वाद्वा । पुन्नपुंसकत इत्यत्र ,त्याद्यादित्वादेव । स्त्रीशेषेऽपीति । यत्र पुंसः शेषो नपुंसकता वा तत्र तैव तत्तल्लिङ्ग' मितिभेदेनाय-त आह । स्त्रीशेषेऽपीति । अत एव भाष्ये सा च देवदत्तश्च तौ । सा च कुण्डे च तानीत्युक्तम् । अत्र स्त्रीत्वे प्राप्ते पुंस्त्वं विधीयत इत्युक्तं कैयटेन । इदमिति । शब्दपरविप्रतिषेधेन नपुंसकस्यैव शेष इत्येतत् । पुन्नपुंसकयोस्त्वेकशेषे शब्दपरविप्रतिषेधान्नपुंसकत्वम्भवतीति कैयटेनोक्तम् । यत्र पत्र पुन्नपुंसकयोः सहोक्तौ परत्वान्नपुंसकस्य शेषादेव । तदिदं शुक्लमिति । यथापि स च तपरादिष्वेव सहविवक्षायान्नपुंसकस्यैव शेषो भाष्यकारा दर्शितः । अति

मान्तस्योत्तरपदावयवत्वमभ्युपेत्यापि दूषणमाह । किं चैवमिति । एवम् । उत्तरपदावयवत्वस्वीकारे । इति भाव इति । इदं सर्वमेकविभक्तावेकशेष इतिमते। वस्तुतः पञ्चानावित्यादिरूपासिद्धिरेव दोष इति बोध्यम् ॥

## इत्येकशेषनिरूपणम् ।

प्रसङ्गादिति । वृत्तिनिरूपणप्रसङ्गादित्यर्थः । तदर्थपरः । परार्थपरः । मध्यमपदलोपिसमासोऽर्थशब्देन । तेन परार्थेन युक्तो योऽर्थस्तस्याभिधानमिति फलितम् । तदाह । एवञ्चेति । तत्करणमिति । तत्करणं शब्दस्वरूपं यस्यावयवः समुदाय इत्यर्थः । कप्प्रत्ययो वैकल्पिकत्वान्न कृतः व्यधिकरणपदो बहुव्रीहिः । तत्करणशब्दादर्श आद्यच्वा । समासघटकसर्वपदानामितरार्थाभिधायकत्वपक्षे इदम् । एकस्यैव तदभिधायकत्वपक्षे आह । यद्वा परेणेति । एतत्पक्षे प्रधानपदे स्वार्थाभिधायकत्वस्यापि सत्त्वान्न जहत्स्वार्था वृत्तिरिति भावः । राजपुरुष इत्यत्र हि प्रधानं यत्पुरुषपदन्तेन राजार्थसंवलितः स्वार्थ उपस्थाप्यते एतावतैवैकार्थीभावव्यवहारः । पूर्वपक्षे द्वयोरपि पदयोरन्यार्थसम्बलितस्वार्थाभिधायकत्वेऽन्यार्थसंवलितार्थस्य वारद्वयभानापत्तिः । द्वितीयपक्षे तु नेति भेदः । न च यदुत्तरपदमेव राजसम्बलितपुरुषप्रतिपादयति तदा राजपदस्य निरर्थकत्वमेव सम्पन्नमिति पूर्वपदार्थाभावेन पूर्वपदार्थप्रकारकोत्तरपदार्थविशेष्यकबोधजनकत्वव्यवहारानापत्तिरिति वाच्यम् । आमोदान्वयमादाय लोके यथा चम्पकपुटः मालतीपुट इति व्यवहारस्तथा पूर्वपदस्य सत्त्वात्तथा व्यवहारः । न च बहुव्रीहौ वृत्तिघटकयोर्द्वयोरपि प्राधान्याभावेन प्रधानपदेन परार्थाभिधानं यत्र तत्र वृत्तिव्यवहार इति पक्षे कथन्तादृशव्यवहार इति वाच्यम् । तत्र समासोत्तकसमुदाये प्रधानपदत्वव्यवहारो घटकयोस्त्वप्रधानत्वव्यवहार इत्यप्रधानसम्बलनमस्त्येव समुदायार्थेऽन्यपदार्थे इत्यदोषात् । विनिगमनाविरहेण पक्षान्तरमाह । यद्वा परेणाप्रधानशब्देनेति । विशेष्यत्वेन प्रधानमिति । स्वार्थप्रकारकपरार्थविशेष्यकबोधजनकमित्यर्थः । सा चेति । इतरार्थसम्बलितस्वार्थोपस्थितिरित्यर्थः । चरमा । शास्त्रकल्पिता । एषाम् । कृदादीनाम् । सा च । समुदायशक्तिः । मानान्तरसिद्धेति । साधकरूपमानेनेत्यर्थः । तदुक्तमन्यत्र बहुर्भा वृ-

वत्सा इम इतिप्रत्युदाहरणमसङ्गतम्। पृषादौ तर्णके वत्स इतित्रिकाण्डशेषात्।
तर्णकम्। सद्योजातापत्यम्। बालो युवा वृद्धो वत्सो दम्यो बलीवर्द इतिहि
संज्ञासूत्रस्थभाष्ये युवा इत्येतदपेक्षया वत्स इत्यस्य पृथगुपादानाच्च वत्सशब्दस्य
युववाचकत्वाभावादत आह। अपत्यमात्रे ति। अतएवान्तर्वत्पतिवतोरितिसूत्रे
तरुणवत्सेतिवत्सस्तरुणत्वेन विशेषित। इदम्। प्रत्युदाहरणम्। प्रायेणापत्येन
प्रसिद्ध इत्याशयेनाह। वस्तुत इति। अन्तरङ्गत्वादिति। अत्रान्तरङ्गत्वं हेतुभ
ङ्गावनिमित्तकप्राप्तिकत्वरूपम्। ननु यदि विभक्त्युत्पत्तेः प्रागेवैकशेषस्तदा ए
कशेषस्य नैमित्तिकत्वेनोक्तं यत्प्रयोजनं तन्निमित्तत्वं वाच्यत्वञ्च न सम्भवति। शा
स्त्रेण तथाऽप्रतिपादनादत आह। द्वन्द्वत्वेत्यादिः। ननु यदि समासान्तः पूर्वं
स्यात्तदा भस्य टेर्लोप इति टिलोपे सर्वनामस्थाने परे पथ्याद्यवयवेकारस्या-
कारविधानमनुपपन्नमत आह। इतोऽदितिसूत्रमिति। ननु पन्था इत्यस्य टे-
रात्वविधाने सिद्धे भविष्यति। पथिमथीतिसूत्रप्रभृत्येवम्पठनीयम्पथिमथ्यृभुक्षा
ण्याम् सर्वनामस्थाने भस्य लोप इति। टेरित्यस्यानुवृत्तिश्च भविष्यतीत्यत
आह। मथिनादाविति। अत्र हि समासान्तविधायकाभावेन तन्निमित्तकटि-
लोपस्याप्यभावादिकारस्यात्वे दीर्घे च कृते नकारस्य श्रवणम्भवति टेरात्ववि
धाने तु नकारस्य श्रवणन्न स्यादिति भाव.। अत्र मूले समासान्तो नेर्युक्तस्तु
समासान्ते कृते यस्य दोषस्य प्रसक्तिस्स उद्भावित इत्यत. स्वयं दोषमुपपादयति।
ऋतद्वन्द्वानामिति। तत्प्राप्तिः। समासान्तप्राप्तिः। उत्तरम्। पथित्यकारान्तम्।
अनर्थकमिति। समासान्तस्य समुदायावयवत्वादनर्थकमित्यर्थः। एतद्भाष्य इति।
अच् क अटक् च अचौ समासान्ते कृते असारूप्यादेकशेषो न प्राप्नोतीतिभाष्य-
स्यार्थः। योजनार्थमिति। समासे कृते एकशेष इतिपक्षे भाष्यकृता समासान्ते
कृतेऽसारूप्यादेकशेषाभाव उक्तस्तद्योजनार्थं इ यटेलोक्तमन्तर्वर्तिन्या विभक्त्या लु-
का लुमता प्रत्ययलक्षणप्रतिषेधादन्त्ये कविभक्तिपरत्वेनैकशेषनिमित्त समुदा
यादिभक्तिरुत्पाद्या तस्याश्च नास्ति सारूप्यम्। एको हि अच्‌शब्दोऽपर अचश-
ब्दः। समासान्तः समासस्यैवावयवो नान्तरपदस्येति चेत्तर्हि तेनैव व्यवधाना-
त्समासविभक्त्यैकशेषो न स्यात् समासावयवस्योत्तरपदस्यान्ताः समासान्ता इत्य
पि भाष्यकारस्य मतमिति अच्‌चशब्दयोर्वैरूप्यमाश्रित्य भाष्यकृता दोष उक्त

प्रयत्नमस्तीह व्याकरणस्येति भावः। ननु यदि व्याकरणं सूत्रशब्दार्थोऽभिध-
ते तदा व्याकरणशब्दादत्र षष्ठी स्यादिति कस्य चिच्छङ्कां निराकरोति । षष्ठी
तु नेति। अयं भावः । अत्र कारकषष्ठ्यापाद्यते उत शेषलक्षणा । नाद्या
इत्याह। सूत्रेषेति। शेषे षष्ठीत्यपि न । कारकत्वस्य कर्मत्वस्य च व्याकरणे
सत्त्वेन शेषत्वाभावादिति। एषामिति। मुण्डादीनामित्यर्थः। वृत्तिविषयमे-
वेति। णिजन्तघटकतायामेवेत्यर्थः। यथा क्रियावचनान्मुण्डशब्दाण्णिज् भवति
तथा सुबन्तात्तस्मात्क्यजपि स्यादित्याशङ्कायामाह। मौण्ड्यार्थकादिति। अन-
भिधानादिति। सुप आत्मन इतिसूत्रभाष्ये क्यजन्तस्य कानि साधनानीति
प्रश्ने भावः कर्त्ता च। अथ कर्म। नास्ति कर्म । ननु चायमिषिः सकर्मकः।
यस्यार्थे क्यज्विधीयते। अभिहितन्तत्कर्मान्तर्भूतं धात्वर्थः सम्पन्नः न चेदानी-
मन्यत्कर्मास्ति येन सकर्मकः स्यात्। कथन्तर्ह्ययं सकर्मको भवति अपुत्रम्पुत्र-
मिवाचरति पुत्रीयति माणवकम्। अस्त्यत्र विशेषः द्वे ह्यत्र कर्मणी उपमानक-
र्मोपमेयकर्म च। उपमानकर्मान्तर्भूतमुपमेयेन कर्मणा सकर्मको भवति। इ
यन्तर्हि कथं सकर्मको भवति। मुण्डयति माणवकमिति । अत्रापि द्वे कर्मणी
सामान्यकर्म विशेषकर्म च सामान्यं कर्मान्तर्भूतं विशेषकर्मणा सकर्मको भवति इ-
त्युक्तम् ततः सापेक्षत्वेनासामर्थ्याण्णिच् स्यादित्याशङ्क्य नात्रोभौ करोतियुक्तौ मु-
ण्डो माणवकश्च न हि माणवकत्वं क्रियते। एवञ्चैकस्यान्तर्भावेऽप्यपरस्य माणव-
कस्यान्तर्भावाद्भवति तेन कर्मणा सकर्मकत्वम्। ततः शङ्कितं भाष्यकृता कामम-
र्थेनैव हेतुना क्यजपि कर्त्तव्यः। माणवकं मुण्डमिच्छतीति । न कर्त्तव्यः।
उभावत्रापि युक्तौ मुण्डो माणवकश्च। कथं तर्ह्यसौ मौण्ड्यमात्रेण संतोषं करो-
ति। माणवकस्य मौण्ड्यमिच्छति। माणवकस्य मौण्ड्याकरणेन संस्कार्यत्वादेक-
स्मात्प्रत्ययोत्पत्तिः सापेक्षत्वाच्च भवतीति कैयटः। एवमेव सापेक्षत्वाण्णिजपि
न स्यादित्याशङ्क्य तत्करोतीति सिद्धे णिचि पुनर्मुण्डमिश्रेतिसूत्रेण णिज्वि-
धानं सापेक्षेभ्योऽपि णिजर्थमिति समाहितम्। ततः पक्षान्तरेण भाष्ये उक्त-
मथ चोक्तमेतत् । नात्र व्यापारोऽनुगन्तव्यः गमकत्वादिह वृत्तिर्भविष्यति मु-
ण्डयति माणवकमिति अत्र कैयटः व्यापारो नान्वेषणीयः प्रयत्नमन्तरेणाभीष्ट-
स्य सिद्धत्वादित्यर्थः। क्यचस्तु गमकत्वाच्च भवति। एतेन प्रघट्टकेन स्वसंहृत्तौ मु-

त्तिधर्माणां वचनैरेव साधने। स्यान्मतङ्गीरवन्तस्मादेकार्थीभाव आश्रित इति। तत्साङ्कर्यादिति। पदविधिसङ्कचरितोऽपि विधिः पदविधिः। प्रातिपदिकप्रकृतिकक्विपोऽपि कर्तुः क्यङिति सूत्रे उपसङ्ख्यानात्तत्वम्। एवं णिचोऽपि धातुप्रकृतिकस्य मुण्डमिश्रेत्यतोऽनुवृत्त्या। अत एव। पूर्वभागसम्वलितोत्तरभागाभिधायकत्वसत्त्वादेव। येन सम्बन्धेन पूर्वभागार्थसम्वलनमुत्तरपदार्थे स सम्बन्धः प्रवृत्तिनिमित्तमत एव कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानम्भावप्रत्ययेनान्यत्र रूढ्यभिन्नरूपाव्यभिचरितसम्बन्धेभ्य इति सङ्गच्छते। अन्यत्रेत्यनेन जहत्स्वार्था वृत्तिः सूचिता। ननु कृतः प्रत्ययत्वात्प्रत्ययग्रहणपरिभाषया तदन्तपरत्ववत्तद्धितपदस्यापि तदन्तपरत्वे वचनाद्यसङ्ग्रह इत्यत आह। तद्घटितेति। तद्धितशब्दान्मत्वर्थीयोऽयं अाद्यच् कर्त्तव्य इति भावः। एकार्थीभाव आवश्यक इति। अत्र श्रूयमाणस्यानेकार्थकत्वं यः शिष्यत इतिन्यायेन सुप्रसिद्धमेव। एकपदार्थस्यान्यपदार्थसम्बन्धस्य चार्थमादाय द्वन्द्वस्थले द्वैकपदार्थनिष्ठविषयतानिरूपितस्वार्थविषयतानिरूपितान्यपदार्थनिष्ठविषयताशालिबोधजनकत्वादुपपादनीयः। इत्यभिमान इति। पञ्च वृत्तय इति वदत इति शेषः। अभिमानोक्तिबीजन्दर्शयति। वस्तुत इति। भाष्ये स्पष्टमुक्तत्वादिति। इह हि शब्दस्य स्वाभाविकी वा अनेकार्थता स्याद्वाचनिकी वा। तद्यदि तावत् स्वाभाविकी अशिष्य एकशेष इतियन्ये नोक्तत्वादित्यर्थः। अत एव। एकशेषस्य वृत्तित्वाभावादेव। क्यजादेरिति। सुबन्तादेषां विधानेन पदविधित्वं स्पष्टम्। अन्येकार्थीभावसुपपादयति। सति स्वभावत इति। सः। एकार्थीभावः। क्रियात्वादिति। नित्यसाकाङ्क्षत्वे हेतुकथनमेतत्। मुण्डशब्दात्करणेऽर्थे प्रत्ययो विधीयते न हि मुण्डपदार्थस्य माणवकस्य करणसम्भव इति विधानसामर्थ्यात्कर्मवचनात्प्रत्ययः। एवञ्च मुण्ड इति णिजन्तस्य मुण्डनरूपक्रियानुकूलव्यापारवत्तया माणवकस्य मुण्डनरूपफलाश्रयत्वाद्भवति कर्मत्वमिति मुण्डयति माणवकमितिप्रयोगोपपत्तिः। यद्यप्यत्र मुण्डनात्मिका क्रिया कर्मभूता णिजर्थेऽन्तर्भूता तथापि माणवकादिकर्मणोऽनन्तर्भावात्सकर्मकत्वम्। एवमेव। माणवकम्मुण्डयतीतिवदेव। अत्र हि व्याकरणमष्टाध्यायीरूपं वस्तु तत्र सूत्रेण क्रियान्वयः। सूत्रं हि विजातीयरचनारूपपौर्वापर्यधारणात्मकमिति यावत्तदा-

अयत्वमस्तीह व्याकरणस्येति भावः। ननु यदि व्याकरणं सूत्रशब्दार्थोऽभिधीयते तदा व्याकरणशब्दादत्र षष्ठी स्यादिति कस्य चिच्छङ्कां निराकरोति । षष्ठी तु नेति। अयं भावः । अत्र कारकषष्ठ्यापाद्यते उत शेषलक्षणा । नाद्या इत्याह। सूत्रयेति। शेषे षष्ठीत्यपि न । कारकत्वस्य कर्मत्वस्य च व्याकरणे सत्त्वेन शेषत्वाभावादिति। एषामिति। मुण्डादीनामित्यर्थः। वृत्तिविषयमेवेति। णिजन्तघटकतायामेवेत्यर्थः। यथा क्रियावचनान्मुण्डशब्दाण्णिज् भवति तथा सुबन्तात्तस्मात्क्यजपि स्यादित्याशङ्कायामाह। मौण्ड्यार्थकादिति। अनभिधानादिति। सुप आत्मन इतिसूत्रभाष्ये क्यजन्तस्य कानि साधनानीति प्रश्ने भावः कर्त्ता च। अथ कर्म। नास्ति कर्म । ननु चायमिषिः सकर्मकः। यस्यार्थे क्यज्विधीयते। अभिहितन्तत्कर्मान्तर्भूतं धात्वर्थः सम्पन्नः न चेदानीमन्यत्कर्मास्ति येन सकर्मकः स्यात्। कथन्तर्ह्ययं सकर्मको भवति अपुत्रम्पुत्रमिवाचरति पुत्रीयति माणवकम्। अस्त्यत्र विशेषः द्वे ह्यत्र कर्मणी उपमानकर्मोपमेयकर्म च। उपमानकर्मान्तर्भूतमुपमेयेन कर्मणा सकर्मको भवति। इयन्तर्हि कथं सकर्मको भवति। मुण्डयति माणवकमिति । अत्रापि द्वे कर्मणी सामान्यकर्म विशेषकर्म च सामान्यं कर्मान्तर्भूतं विशेषकर्मणा सकर्मको भवति इत्युक्तम्। ततः सापेक्षत्वेनासामर्थ्याण्णिच् स्यादित्याशङ्क्य नाश्राभौ करोतियुक्तौ मुण्डो माणवकश्च न हि माणवकत्वं क्रियते। एवञ्चैकस्यान्तर्भावेऽप्यपरस्य माणवकस्यान्तर्भावाद्भवति तेन कर्मणा सकर्मकत्वम्। ततः शङ्कितं भाष्यकृता कामन्तर्द्धनेनैव हेतुना क्यजपि कर्त्तव्यः। माणवकं मुण्डमिच्छतीति । न कर्त्तव्यः उभयत्रापि युक्तौ मुण्डो माणवकश्च। कथं तर्हि मौण्ड्यमात्रेण संतोषं करोति। माणवकस्य मौण्ड्यमिच्छति। माणवकस्य मौण्ड्यकरणेन संस्कार्यत्वादेकस्मात्प्रत्ययोत्पत्तिः सापेक्षत्वाच्च भवतीति कैयटः। एवमेव सापेक्षत्वाण्णिजपि न स्यादित्याशङ्का तत्करोतीति सिद्धे णिचि पुनर्मुण्डमिश्रेतिसूत्रेण णिज्विधानं सापेक्षेभ्योऽपि णिजर्थमिति समाहितम्। ततः पक्षान्तरेण भाष्ये उक्तमथ वोक्तमेतत्। नाव व्यापारोऽनुगन्तव्यः गमकत्वादिह वृत्तिर्भविष्यति मुण्डयति माणवकमिति अत्र कैयटः व्यापारो नाश्रयणीयः प्रवद्गतगारणापोहस्य णित्त्वादित्यर्थं। इयं तु गमकत्वाच्च भवति। एतेन प्रघट्टेन प्रत्याहतो मु-

यद्रशब्दो भावप्रधान इति गमकत्वात्तत्र वृत्तिर्भवति क्वचन्सहत्तौ तु धर्मिपर एवातस्तच नेच्छाक्वच सामर्थ्यादिव्यत्र भवति। यदि क्वचिद्विषयेऽपि धर्मपर स्यात्तदा तत्रापि गमकत्वमस्तीति क्वच् स्यादितिधर्मवचनात् क्वचोऽनभिधान ध्वनितम्। वृत्त्यर्थबोधकमिति। वृत्तिवाक्यं यादृशविशेष्यविशेषणभावापन्नार्थ बोधक तादृशविशेष्यविशेषणभावापन्न एव वाक्यार्थबोधो भवतीत्यर्थ। तदुपपा दयति। आख्यातमिति। स्पष्टश्चायमिति। तुल्यो यत्र वृत्तिवाक्यजन्यशाब्दबोधयोर्वि शेषणविशेष्यभावस्तत्र वृत्तिर्भवतीति स्पष्टमित्यर्थ। तत्र प्रथमे रथ वहति रथ्य इ त्यत्रेव रथस्य वोढा इत्यर्थे तस्येदमिति प्रत्ययो भविष्यतीति यात्तिकाशंतोक्तम्। तत शब्दभेदादविधानम् शब्दभेदादविधि सभवति । अन्यो हि शब्दो रथ वहति अन्या हि शब्दो रथस्य वोढेति। तस्येदमिति षष्ठ्यन्ताद्विधीयमानो द्वि तीयान्तादेतत्सूत्राभावे न स्यादिति भाव । षष्ठीवाच्यकर्मत्वापेक्षया द्वि तीयावाच्यकर्मत्व विलक्षणमित्यभिमान । एतेन समानार्थत्व यत्र तत्र वृ त्त्या भवितव्यमिति सूचितम्। शब्दभेदादविधानमिति चेदर्थाश्रयत्वात्प्रत्यय विधानस्यार्थसामान्यात्सिद्धम्। शब्दभेदादभिधानमिति चेदर्थाश्रय प्रत्ययवि- धि स एवार्थो रथ वहति। स एवार्थो रथस्य वोढेति। तत्रार्थसामान्यात्सि द्धमित्युक्तम्। प्रथमसामान्यादर्थैक्यात्। वहतीत्यस्य क्रियाप्रधानत्वेऽपि वि शेष्यविशेषणभावव्यत्यासेन कर्तृरूपार्थस्यैव तद्धितार्थत्वेन विवक्षितत्वादिति भाव । कर्मत्वयोर्भेदे मानाभाव । अत एवाह स एवार्थ इति। तद्धितार्थोप दर्शकवाक्यस्यतिङन्तस्य य कृदन्तेऽर्थ प्रधानीभूत स एवेत्यर्थ । एतत्स्पष्टमेव दर्शयति। आख्यातमिति। अत्र तद्धितार्थस्येत्युपलक्षणम् । कृदर्थोपदर्शकवि- ग्रहवाक्यस्यातिङन्तस्यापि यमत्र तुल्यन्यायात्। अत एव तत्रापि न वृत्तिविग्रहवा- क्ययो समानार्थत्वभङ्ग । एवञ्च यद्बहुव्रीह्यर्थप्रदर्शकविग्रहवाक्यादपि चित्रगो सम्बन्धीत्येव बोध । यदुक्तं वार्त्तिककृता एकतिङ वाक्यमिति तत्प्रकृते न विवक्षितमित्याशयेन वाक्यस्वरूपमाह। ससङ्ख्यमिति। अन्यायामिति यत्र स मास तद्विषये विशेषमाह। अन्याविषयेति। एतावान् विशेष । विग्रहवा क्यार्थघटकेन पदार्थैकदेशत्वव्यवहारो वृत्तौ तु समर्थपरिभाषायामेकार्थी- भावस्वत्वात्पदार्थैकदेशत्वव्यवहार इति। एवञ्च। पूर्वमिष्यस्यापिधो च। मा-

धीनरीत्या आह । अत एवेति । उभयपदार्थप्रधानत्वादेव । तदभाव । सर्वनामत्वाभाव । के चित् । प्राचीनानुयायिन । अन्ये । मुख्या । अनेकपदस्यैक भिन्नार्थकत्वे द्वन्द्वबहुव्रीह्योरेवेतिनियमानुपपत्ति समाससामान्यस्य तथात्वाद त आह । चप्रादीत्यर्थ इति । आवश्यकी चेदिति । अबुधबोधनायेत्यादि । सर्वत्र । वाक्यचतुष्टये । सुप् तिङघटितत्वमिति । अत्र सुप्तिङपद तदन्तपरम् । त घटितत्वम । तदविषयकप्रतीत्यविषयत्वम् । यद्वेति । यथोभयोपादानस्य सार्थकत्वमवेत्तथा कल्पनोचिता इत्येतदभिसंधायेत्यमभिहितम् । अभिधानलक्षणा । अभिधानं लक्षणनियामक येषामित्यर्थ । अभिधानपदार्थविवृणोति । अभिधानस्येति । तत । तेभ्य । सूत्रे भाष्य इति । तत्र हि स्यादग्रहणद्विमर्थम् । इदमाभृत । प्रासादो देवदत्तस्य । प्राकारो नगरस्येति । अक्रियमाणे स्यादग्रहणे निश्चितस्वस्वामिभावात्मकसम्बन्धप्रतिपादनाय यत्र प्रयोगस्तत्रापि स्यादिति भाव । अथ क्रियमाणेऽपि स्यादग्रहणे इह कस्मान्न भवति । प्रासादो देवदत्तस्य स्यात्प्राकारो नगरस्य स्यादिति । यदा देवदत्तनामक कश्चिदाढ्य प्रासादसमीपाम्महान्तंदृष्ट्वा प्रासादस्वामित्वेन सभाव्यते तत्रापि स्यादिति भाव । एवम्प्राकारस्य महत्त्वे नगरसम्बन्धित्वसंभावनेति द्रष्टव्यम् । इतिकरण क्रियते ततश्च विवक्षा भवति । विवक्षा च द्वयी अस्त्येव । प्रायोक्त्री लौकिकी च प्रायोक्त्री विवक्षा । प्रयोक्ता हि मृद्वा स्निग्धया श्लक्ष्णया जिह्वया मृदून् स्निग्धान् । श्लक्ष्णान् शब्दान् प्रयुङ्क्ते । मृदूनिति । अपभ्रंशानित्यर्थ । एवमुत्तरोऽपि सकारो गाने प्रसिद्ध । एवञ्च प्रायोक्त्री विवक्षाऽव्यावर्त्तकत्वान्न शब्दसंस्कारप्रयोजिकेति भाव । लौकिकी विवक्षा । यत्र प्रायस्य सम्प्रत्यय । प्रायस्य । समग्रकल्पस्य । समग्र कल्पोनियमो यस्येत्यर्थ । समग्रत्वं याथार्थ्यम् । शास्त्राधीनत्वमिति फलितम् । एवञ्च पृषोदरादीनि सूत्रे ये शिष्टा उक्ता स्तपयन्ते ग्राह्या । तदाह भाष्ये साथ इति लोको व्यपदिश्यते । न च प्रासादो देवदत्तस्य स्यात्प्राकारो नगरस्य स्यादित्यत्रोत्पद्यमानेन प्रत्ययेन प्रायस्य सम्प्रत्यय स्यात् । यद्येवमर्थं स्याद्ग्रहणेन । न हि प्रासादो देवदत्तस्य प्राकारो नगरस्येत्यत्रोत्पद्यमानेन प्रत्ययेन प्रायस्य सम्प्रत्यय स्यादित्युक्तम् । एतेन शिष्टानां येभ्य शब्देभ्य सार्थेभ्योऽर्थबोधो भवति तेषामेव साधुत्वमन्येषामिति सूचितम् ॥

॥ इति सर्वसमासस्य शेषः ॥

रथशब्दो भावप्रधान इति गमकत्वात्तत्र वृत्तिर्भवति वहजन्तवृत्तौ तु धर्मिपर एवातस्तत्र नेच्छाक्वच सामर्थ्यादित्युक्तम्भवति। यदि क्वचिद्विषयेऽपि धर्मपर स्यात्तदा तथापि गमकत्वमस्तीति वक्तु स्यादितिधर्मवचनात् क्वचोऽनभिधान ध्वनितम्। वृत्त्यर्थबोधकमिति। वृत्तिवाक्य यादृशविशेष्यविशेषणभावापन्नार्थ बोधक तादृशविशेष्यविशेषणभावापन्न एव वाक्यार्थबोधो भवतीत्यर्थ। तदुपपा दयति। व्याख्यातमिति। स्पष्टयायमिति। तुल्यो यत्र वृत्तिवाक्यजन्यशाब्दबोधयोर्वि शेषणविशेष्यभावस्तत्र वृत्तिर्भवतीति स्पष्टमित्यर्थ। तत्र प्रथमे रथ वहति रथ्य इ त्यत्रेव रथस्य वोढा इत्यर्थे तस्येदमिति प्रत्ययो भविष्यतीति वार्त्तिकाशङ्कतीऽत्रम्। तत शब्दभेदादविधानम् शब्दभेदादविधि सभवति। अन्या हि शब्दो रथ वहति अन्या हि शब्दो रथस्य वोढेति। तस्येदमिति षष्ठ्यन्ताद्विधीयमानो द्वि तीयान्तादेतत्सूत्राभावे न स्यादिति भाव। षष्ठीवाच्यकर्मत्वापेक्षया द्वि तीयावाच्यकर्मत्व विलक्षणमित्यभिमान। एतेन समानार्थत्व यत्र तत्र इ ष्या भवितव्यमिति सूचितम। शब्दभेदादविधानमिति चेदर्थाश्रयत्वात्प्रत्यय विधानस्यार्थसामान्यात्सिद्धम्। शब्दभेदादभिधानमिति चेदर्थाश्रय प्रत्ययवि धि स एवार्थो रथ वहति। स एवार्थो रथस्य वोढेति। तथार्थसामान्यात्सि द्धमित्युक्तम्। अर्थसामान्यादर्थैक्यात्। वहतीत्यस्य क्रियाप्रधानत्वेऽपि वि शेष्यविशेषणभावव्यत्यासेन कर्तृरूपार्थस्यैव तद्धितार्थत्वेन विवक्षितत्वादिति भाव। कर्मत्वयोर्भेदे मानाभाव। अत एवाह स एवार्थ इति। तद्धितार्थोऽपि दृशकर्त्रयस्थतिङन्तस्य य कृदन्तोऽर्थे प्रधानीभूत स एवेत्यर्थ। एकत्वमत्र दर्शयति। आख्यातमिति। अत्र तद्धितार्थस्येत्युपलक्षणम्। कृदर्थपदार्थकथि षष्ठ्याद्यन्तस्यातिङन्तस्येयमेव तुल्यन्यायात्। अत एव तथापि न वृत्तिविषयत्वा ययया समानार्थत्वभङ्ग। एवञ्च बहुव्रीह्यर्थपर्यायविग्रहवाक्यादपि चित्रगा स्वम्यभीत्यं य बोध। यदुक्त वार्त्तिककृता एकतिङ वाक्यमिति तत्प्रकृते न विवक्षितमित्याशयेन वाक्यस्वरूपमाह। ततस्तमासेति। संज्ञायामिति यत्र स मास तद्विषये विशेषमाह। भवार्थविषयेति। एतावान् विशेष। विग्रहवा क्यार्थघटकेन पदार्थैकदेशत्वव्यवहारो वृत्तौ तु समस्तपरिभाषाबलादकार्थी भावस्यात्पदार्थैकदेशव्यवहार इति। एवञ्च। पूर्वोक्तव्यवस्थासिद्धौ च। प्रा

व्यम्। एवं व्याख्याय वैयाकरणाख्यायामिति सूत्रे आत्मन इत्येवेति व्याख्यातन्ते नात्मन इतिसूत्रमेवेत्याशयः प्रतीयते स न युक्त इत्याशयेनाह। यथाश्रुतेति। आत्मनश्च पूरण इतिवार्त्तिकम्। वारद्वयमस्योपादानात्। पूरण इत्येतावन्मात्रस्य वार्त्तिकत्वे आत्मनश्चेत्यस्य पुनरुपादानं व्यर्थमेव स्यात्। नन्वेवमात्मन इत्यस्य वैयाकरणाख्यायामित्यत्र सम्बन्धो न स्यादत आह। वैयाकरणेत्यादि। वार्त्तिकस्यैवेति। वार्त्तिकस्य सूत्रशेषत्वादिति भाव.। वार्त्तिकस्थपदस्यानुवृत्तिमभिप्रेत्याह। यद्वेति। एकं सूत्रमिति। वैयाकरणाख्यायाञ्चतुर्थ्या. परस्य चेत्येकं सूत्रद्वयमित्यर्थ। तत्र चकारेण प्रकृतिसमुच्चायकेनात्मन इत्यस्य सम्बन्धो भविष्यति। परप्रतिद्वन्द्वितया। वैयाकरणाख्याया यः परशब्दस्तत्प्रतिद्वन्द्वितया। यथापरशब्दस्य वैयाकरणीया आख्या परस्मैपदमिति तत्सम्पादकत्वन्तथा तादृशी या आख्या आत्मनेपदमिति तत्सम्पादकत्वमात्मन्शब्दस्येत्येककार्यसम्पादकत्वेन प्रतिद्वन्द्वित्वम्पण्डितयोरिवेति भाव। आत्मनश्चेतिसूत्रे तृतीयापदमनुवर्त्तते। सा च तृतीया प्रथमार्थे द्रष्टव्या अन्यार्थे च। अन्यार्थे चैषा तृतीया द्रष्टव्या आत्मा पञ्चमोऽस्य आत्मना पञ्चम इतिभाष्यात्। यद्यप्यनुदात्तङित आत्मनेपदम्। शेषात्कर्त्तरि परस्मैपदमितिनिपातनादेवानयो. सिद्धिस्तथापि व्याकरणान्तरीया या आख्या आत्मनेभाषपरस्मैभाष इति तत्साङ्ग्रहार्थमिदं सूत्रं भाष्ये तथैवोदाहरणात्। उचितमिति। चतुर्थीतियोगविभागस्य भाष्येऽदर्शनात्। उणादिप्रत्ययान्तानां व्युत्पन्नत्वाभिप्रायेणाह। स्थिरशब्द इति। षत्वादित.। षत्वादेश्प्राक्। अलुग्विधेरिति। हृद्द्युभ्याञ्चेतिसूत्रमपि संज्ञायामप्रवर्त्तते। न चैवं हृल्लेखादिष्वेव सिद्धेऽस्य वैयर्थ्यमिति शङ्क्यम्। हृदयं स्पृशतीत्यर्थे द्वितीयाया एव प्राप्त्या सामर्थ्यं प्राप्त्यनुवादस्यावश्यकत्वात्। तथा चालुगर्थसामर्थ्या उद्देश्यत्वं वक्तव्यमित्यनुवादसामर्थ्यात्सप्तमीति भाव.। यत्तुतन्न हृद्द्युभ्यामितिसूत्रे संज्ञायामिति न सम्बध्यते सूत्रस्यालुक्प्रकरणे पाठसामर्थ्यादित्याशयेनाह। अमूर्द्धेति। संज्ञायामित्यनुवृत्तेरिति। मण्डूकप्लुत्याऽत्र संज्ञायामित्यनुवर्त्तत इति भाव। कारनाम्नि। अत्र सूत्रे नियमत्रयम् इत्यनुपार्ष्णोमिमतादाह। कारनाम्नि चेतीति। कर एव कारः स्वार्थिकोऽण्। तृतीयनियमाभावेऽप्यतिप्रसङ्गं वारयति। अभ्यर्हितपञ्चादेरिति।

लुप्तविभक्तिक । लुप्तप्रथमान्त । अनधीयानेऽपि तद्वच्च व्यवहारोपपत्तये आह । अध्येतृत्वयोग्यतेति । क्रियायोगाभावादाह । उपसर्गग्रहणञ्चेति । एव च । प्रादिघटकस्यैव ग्रहणसिद्धौ च । इत्याहुरिति । तत्सूत्रविषय एवास्योदाहरणात् । प्राचीनोक्तरीत्या व्याख्याय सिद्धान्तमाह । भाष्य इति । कश्चित् भाष्यतत्त्ववित् । इतरेतरयोगद्वन्द्व एवोदाहरणदानबीजमाह । समाहार इति । अव्ययीभाव इति । न चाय बहुव्रीहिसमास एवास्तु । आद्यास्त्रयो बहुव्रीहय । तत परे एकादश द्वन्द्वा । ततोऽव्ययीभाव इति भाष्य विरोधात् । तत्पुरुष एवेतीति । ततस्तत्पुरुष । निश्चित श्रेयो नि श्रेयसमितिभाष्यात् । षष्ठीसमास एवेदमिति । तत षष्ठीसमास इतिभाष्यात् । अव्ययीभाव एवेदमिति । अव्ययीभाव इत्युक्त्वा शुन समीपमुपशुनमितिभाष्योक्ते । एतच्चेति । प्रशस्ता या आशीर्विषयत्वद्योतकत्वञ्च । वृत्तिरिति । वृत्तिप्रामाण्यादेवास्य लुङन्तस्य यत्र प्रयोगस्तत्र साधुत्वभाष्यन्त्वत्रोदासीनम् । सप्तमीशब्द प्रत्ययपरो न हि तत्र प्रतिशब्दस्य वृत्तिरत आह । सप्तम्यर्थवृत्तेरिति । ननु यद्याहृत्तिक्रियाजन्मगणने सुचप्रद द्विगुणेति व्याख्यान विरुद्धमत आह । द्विगुणेति त्विति । किम क्षेप इतिसूत्रोदाहरणविषये कर्मधारय । नञस्तत्पुरुषादितिसूत्रे नञ्पदमञ्पूर्वपदके लाक्षणिकमित्याशयेनाह । नञ्पूर्वपदकादिति । पथ सख्येति । एवञ्चापथन्नपु सकमिति न कार्यमिति भाव । स्वीकुर्वतामिति । वस्तुतस्तत्तदर्थबोधकपदघटकतया गृहीतेन तत्तदर्थकाव्ययेन नाव्ययीभाव इति प्रागुक्तत्वादिदमप्रकृतमतस्तत्पुरुष एव ॥

## ॥ इति साधारणा समासान्ता ॥

कृदन्त्वे मानमाह । पद इत्यर्थेति । अनभिधानादिति । करणे चेतिसूत्रेणासत्ववचनेभ्य पञ्चम्या विधानेन प्रतिपदोक्तपरिभाषया तत्सूत्रविहितैकवचनान्त एव समासप्राप्तै द्विवचनस्य तेभ्योऽविधानादित्यर्थ । पुमा हेतुनेति । चतुश्च इति व्यवहारऽप्रकृतस्य पु सो हेतुत्वेनानुगमे पुसो हेतुत्वकृद्रूप्यम् । सरितत्ववमादिति । पुरणशब्दे चरितत्वयमादित्यर्थ । तदधिकारेति । पूरणाधिकारस्यर्थ । प्रत्ययाश्रयेनेति । सङ्ख्याशब्दादेव तस्य विधानादिति भाव । रङ्ग । मूने । पाक्तनव । प्रागमव प्रतीयाया पमुपकारात् । पुरण इति तक्त

व्यम्। एवं व्याख्याय वैयाकरणाख्यायामिति सूत्रे आत्मन इत्येवेति व्याख्यातत्त्वे नात्मन इतिसूत्रमेवेत्याशयः प्रतीयते स न युक्त इत्याशयेनाह। यथाश्रुतेति। आत्मनश्च पूरण इतिवार्त्तिकम्। वारद्वयमस्योपादानात्। पूरण इत्येतावन्मात्रस्य वार्त्तिकत्वे आत्मनश्चेत्यस्य पुनरुपादानं व्यर्थमेव स्यात्। नन्वेवमात्मन इत्यस्य वैयाकरणाख्यायामित्यत्र सम्बन्धो न स्यादत आह। वैयाकरणेत्यादि। वार्त्तिकस्यैवेति। वार्त्तिकस्य सूत्रशेषत्वादिति भाव। वार्त्तिकस्थपदस्यानुवृत्तिमभिप्रेत्याह। यद्वेति। एकं सूत्रमिति। वैयाकरणाख्यायाञ्चतुर्थ्या: परस्य चेत्येकं सूत्रद्वर्त्तव्यमित्यर्थ। तत्र चकारेण प्रकृतिसमुच्चायकेनात्मन इत्यस्य सम्बन्धो भविष्यति। परप्रतिद्वन्द्वितया। वैयाकरणाख्याया य, परशब्दस्तत्प्रतिद्वन्द्वितया। यथापरशब्दस्य वैयाकरणीया आख्या परस्मैपदमिति तत्सम्पादकत्वन्तथा तादृशी या आख्या आत्मनेपदमिति तत्सम्पादकत्वमात्मन् शब्दस्येत्येककार्यसम्पादकत्वेन प्रतिद्वन्द्वित्वम्परस्परतयोरित्येति भाव। आत्मनश्चेतिसूत्रे तृतीयापदमनुवर्त्तते। सा च तृतीया प्रथमार्थे द्रष्टव्या अन्यार्थे च। अन्यार्थे चैषा तृतीया द्रष्टव्या आत्मा पञ्चमोऽस्य आत्मना पञ्चम इतिभाष्यात्। यद्यप्यनुदात्तङित आत्मनेपदम्। शेषात्कर्त्तरि परस्मैपदमितिनिपातनादेवानयो, सिद्धिस्तथापि व्याकरणान्तरीया या आख्या आत्मनेभाषपरस्मैभाष इति तत्सङ्ग्रहार्थमिदं सूत्रं भाष्ये तथैवोदाहरणात्। उचितमिति। चतुर्थीति योगविभागस्य भाष्येऽदर्शनात्। उणादिप्रत्ययान्ताना व्युत्पन्नत्वाभिप्रायेणाह। स्थिरशब्द इति। अवादित.। अवादेशात्प्राक्। अलुग्विधेरिति। हृद्युभ्याञ्चेतिसूत्रमपि संज्ञायाम्प्रवर्त्तते। न चैवं हलदन्तादित्य य सिद्धेऽस्य वैयर्थ्यमिति वाच्यम्। हृदयं स्पृशतीत्यर्थे द्वितीयाया एव प्राप्त्या सप्तम्यर्थ सप्तम्यनुवादस्यावश्यकत्वात्। तथा चालुगर्थमसप्तम्या उद्देश्यत्वं वक्तव्यमित्यनुवादसामर्थ्यात्सप्तमीति भाव.। वस्तुतस्तु हृद्युभ्यामितिसूत्रे संज्ञायामिति न सम्बध्यते सूत्रस्यालुक्प्रकरणे पाठसामर्थ्यादित्याशयेनाह। अमूर्द्धेति। संज्ञायामित्यनुवृत्तेरिति। मण्डूकप्लुत्याऽत्र संज्ञायामित्यनुवर्त्तत इति भाव। कारनाम्नि। अत्र सूत्रे नियमत्रयम् द्दत्यनुसारेणोक्तमदाह। कारनाम्नो देशीति। कर एव कार: स्वार्थिकोऽणा्। तृतीयनियमाभावेऽप्यतिप्रसङ्गं वारयति। भाष्यद्दितपाठादेरिति।

तदादिविधिनैव सिद्धे हलादावित्यनादिग्रहणमदृष्टार्थमित्याह। हलादावित्यादीति। कैयटानुसारिणेति। तेन हि प्राचामिवेति नियमादुदीचां कारेऽलुङ्नित्यं त इत्युक्तम्। भाष्ये त्विति। स्थितमित्यत्रान्वयः। तदेव भाष्यमाह। कारनाम्नीति। वावचनार्थमिति। इदं प्राचामित्युपादानेनोदीचामित्यर्थकल्पनया फलितार्थकथनम्। अन्यत्र। चक्रबन्ध इत्यत्र। चक्रे बन्धोऽस्येतिव्यधिकरणपदोऽत्र बहुव्रीहिः। अनुवृत्तिरिति। तत्पुरुषेतिसूत्र इत्यादिः। अत एव। हलदन्तादित्यस्याननुवर्त्तनादेव। स्वरूपग्रहणमिति। तनशब्दसाहचर्यात्। प्रकृत्यर्थे प्रकर्षेति। सप्तमीप्रकृत्यर्थस्य प्रकर्षविवक्षयेत्यर्थः। सूत्रे इति। घकालेतिसूत्र इत्यर्थः। अननुवृत्तिरित्यत्रान्वयः। अतिप्रसङ्ग इति। परिनिष्ठितविभक्त्या समासे घटीकाले स्थितिरस्येत्यत्रातिप्रसङ्ग इत्यर्थः। युक्तः पाठ इति। आधुनिकभाष्यपुस्तके क्वचिन्मतिष्विति पाठस्याप्सुमतिरित्युदाहरणस्य च दर्शनात्। प्राचीने तु नैवंविधः पाठः। वस्तुतस्त्वपो योनीति नापूर्वं वचनङ्किन्तर्हि बहुलग्रहणं तत्पुरुषे कृतीतिसूत्रे कृतन्तद्बलादयमर्थो लभ्यते। क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव। विधेर्विधानं बहुधा समीक्ष्य चतुर्विधम्बाहुलकं वदन्ति इत्यभियुक्तोक्तेः। न केवलमभियुक्तोक्तिरेवात्र प्रमाणङ्किन्तु भाष्यकारोक्तिरप्यत्र मानम्। तथाहि। तत्पुरुषे कृतीतिसूत्रभाष्ये बहुलमकर्मधारये। बहुलमकर्मधारय इति वक्तव्यम्। इह मा भूत्। परमे कारके परमकारके इति। तत्तर्हि वक्तव्यन्न वक्तव्यम्। बहुलवचनाद्भविष्यति। अथ किमर्थं लुगलुगनुक्रमणं क्रियते न तत्पुरुषे कृति बहुलमित्येव सिद्धम्। लुगलुगनुक्रमणम्बहुलवचनस्याकार्त्स्न्यत्वात्। लुगलुगनुक्रमणं क्रियते अकृत्स्नम्बहुलवचनमिति। अकृत्स्नम्। अकृत्स्नकारि। न हि बहुलग्रहणमात्राल्लुगलुकोः क्वचित्प्रवृत्तिरिति विषयविभागः परिज्ञातुं शक्यः। एवञ्च मन्दबुद्धीनामनुग्रहाय लुगलुगनुक्रमणमिति भावः। तत्र इतरेतरापूर्णत्वमकृत्स्नत्वमित्यभिप्रायेण शङ्कितम्। यद्यकृत्स्नं बहुलवचनं यदनेन कृतमकृतं तस्मात्। एवं शङ्कायामिदं तर्हि न भूमोऽकृत्स्नमिति लक्षणस्य कारकं च साधकस्य निवर्त्तकस्य यदनेन कृतं सुकृतं तस्मात्। कृत्स्नम्। परिपूर्णम् व्यापकमित्यर्थः। कृत्स्नशब्दस्यावयवकार्त्स्न्येऽपि दृष्टेस्तादृगत्वमत्रानिराकरणायाह। कारकमिति। कृत्स्नकार्यकारि इ-

त्यर्थं । ननु कारकमपि प्रारब्धस्यान्तागमनात्प्रतिबन्धकसद्भावादकृत्स्नं स्यादत आह । साधकं चेति । साधकमपि कदा चिदसामर्थ्यादकृत्स्नं स्यादत उक्तं निर्वर्तकं चेति । सर्वदा सर्वं कार्यं निष्पादयतीत्यर्थः । एतेन क्व चित्प्रवृत्तिः क्व चिदप्रवृत्तिः क्व चिद्विभाषैवेत्येतावदुक्तम् । तत उक्तमुदाहरणभूयस्त्वादिति । भूयांस्युदाहरणानि प्रपञ्चेन प्राप्यन्त इत्यर्थः । ते वै खल्वपि विधयः सुपरिगृहीता भवन्ति येषां लक्षणप्रपञ्चश्च । केवलं लक्षणं केवलः प्रपञ्चो वा न तथा कारकं भवति । अवश्यं खल्वप्यस्माभिरिदं वक्तव्यं बहुलमन्यतरस्यामुभयथा एकेषामिति । सर्ववेदपारिषदं हीदं शास्त्रं तत्र नैकः पन्थाः शक्य आस्थातुमित्युक्तम् । सर्ववेदपारिषदं सर्ववेदसाधारणम् प्रातिशाख्यवत्तत्तच्छाखामात्रसम्बन्धि । लौकिकानाञ्च शब्दानामनेन व्युत्पादनादिदं ततोऽप्यधिकम् । अत्र सर्ववेदशब्दस्य पारिषदशब्देनावयवद्वारकसम्बन्धे षष्ठ्यन्तस्य समासः । पारिषच्छब्दश्च वेदाध्येतृसङ्घभवपरः । नैकः पन्था इत्यनेन क्व चिदन्यदेवेत्यपि सूचितमिति । अतिप्रसङ्गव्याजेनेति । पञ्चम्याः स्तोकादिभ्य इतिसूत्रस्यातिप्रसङ्गनिवारणायालुगुत्तरपद इतिसूत्रे वार्त्तिककृतोक्तमेकवच्च । एकवच्चालुग्भवतीति वक्तव्यम् । किं प्रयोजनम् । स्तोकाभ्यां मुक्तः स्तोकेभ्यो मुक्त इति विग्रहे स्तोकान्मुक्त इति यथा स्यात् । एकवद्भावयानर्थक । द्विबह्वोरलुक्समासे भवति । द्विवहुष्वसमास । किं वक्तव्यमेतत् । न हि । कथमनुच्यमानं गम्यते । उक्तं वा । किमुक्तमनभिधानादिति । तथावश्यमनभिधानमाश्रयितव्यम् । एकवचने हि गोषु चरेऽतिप्रसङ्गः । एकवद्वचने हि गोषु चरेऽतिप्रसङ्गः स्यात् । गोषुचरः । वर्षाभ्यश्च जे । वर्षाभ्यश्च जेऽतिप्रसङ्गो भवति । वर्षासुजः । अपो योनियन्मतुषु च । अपो योनियन्मतुषु चोपसङ्ख्यानं कर्तव्यम् । अप्सुजः । अप्सुयोनिः । अप्सव्यः । अप्सुमतिः । अप्सुचरः । एष्वतिप्रसङ्गव्याजेनाप्यापो योनीत्यप्योपन्यासात् । स्तोकाभ्यां मुक्त इत्यत्रातिप्रसङ्गस्तु द्विवचनबहुवचनयोरलुप्सिमभ्युपेत्य । यदि तु पूर्वोक्तरीत्या तदनुत्पत्तिरेव कल्प्यते तदा नायमतिप्रसङ्गः । अत्र व्याजेनेति यत्तत्स्पष्टयति । न ह्यप्सुमन्तावित्ति । तस्य । एकवद्भावस्य । तस्य । अप्सुमच्छब्दस्य । लुकोऽप्राप्तेरिति । अनुकरणत्वेन सुपो धातुप्रातिपदिकयोरित्यस्याप्राप्तेरित्यर्थः । अत एव । अनन्तरश्रुतिन्यायमश्वारादेव ।

तदादिविधिनैव सिद्धे हलादावित्यचादिग्रहणमदृष्टार्थमित्याह। हलादाविस्या दीति। कैयटानुसारेणेति। तेन हि प्राचामिवेति नियमादुदीचां कारेऽलुङ्गिव त्यंत इत्युक्तम्। भाष्ये त्विति। स्थितमित्यन्वय। तदेव भाष्यमाह। कार नाम्नीति।.वावचनार्थमिति। इद प्राचामित्युपादानेनोदीचामं त्यर्थकल्पनया फलितार्थकथनम। अन्यत्र। चक्रबन्ध इत्यत्र। चक्रे बन्धोऽस्येतिव्यधिकरणप दोऽत्र बहुव्रीहि। अनुवृत्तिरिति। तत्पुरुषेतिसूत्र इत्यादि। अत एव। हलद न्तादित्यस्याननुवर्त्तनादेव। स्वरूपग्रहणमिति। तत्शब्दसाहचर्यात्। प्रकृत्य र्थे प्रकर्षेति। सप्तमीप्रकृत्यर्थस्य प्रकर्षविवक्षयेत्यर्थः। सूत्रे इति। घकालेतिसूत्र इत्यर्थः। अननुवृत्तिरित्यन्वय। अतिप्रसङ्ग इति। परिनिष्ठितविभक्त्या स मासे घटीकाले स्थितिरस्येत्यत्रातिप्रसङ्ग इत्यर्थः। युक्तः पाठ इति। आधुनिक भाष्यपुस्तके क्वचिन्मतिष्विति पाठस्याप्युमतिरित्युदाहरणस्य च दर्शनात्। प्राचीने तु नैवविध पाठ। वस्तुतस्त्वपो योनीति नापूर्वं वचनमिन्तर्हि बहु लग्रहण तत्पुरुषे कृतीतिसूत्रे कृतान्तहलादयमर्थो लभ्यते। क्व चित्प्रवृत्ति क्व चिदप्रवृत्तिः क्व चिद्विभाषा क्व चिदन्यदेव। विधेर्विधानं बहुधा समीक्ष्य चतु र्विधस्याहुलकं वदन्ति इत्यभियुक्तोक्ते। न केवलमभियुक्तोक्तिरेवात्र प्रमाणमपि न्तु भाष्यकारोक्तिरप्यत्र मानम्। तथाहि। तत्पुरुषे कृतीतिसूत्रभाष्ये बहुलम कर्मधारये। बहुलमकर्मधारय इति वक्तव्यम्। इह मा भूत्। परमे कारके प रमकारके इति। तत्तर्हि वक्तव्यम् वक्तव्यम्। बहुलवचनात्र भविष्यति। यद किमर्थं लुगलुगनुक्रमणं क्रियते न तत्पुरुषे कृति बहुलमित्येव सिद्धम्। लुगलु गनुक्रमणस्य बहुलवचनस्याक्प्रपञ्चत्वात्। लुगलुगनुक्रमणं क्रियते प्रकृतस्य बहुलव चनमिति। प्रकृतग्रम्। प्रकृतप्रकारि। न हि बहुलग्रहणमात्रात् लुगलुको क्व चित्प्रवृत्तिरिति विषयविभाग परिज्ञातु शक्य। एवञ्च मन्दबुद्धीनामनुग्रहाय लुगलुगनुक्रमणमिति भाव। तत इतरेणापूर्णत्वमकृतग्रस्त्वमित्यभिप्रायेण ग- दितम्। यत्प्रकृतग्र बहुलवचन वदनेन कृतमकृतमत्। यत गहायामिवं तर्हि न मूमोऽकृतग्रमिति कृतग्र कारकं च साधकाय निवर्त्तकाय वदनेन कृतं शुक्लतमत्। कृतग्रम्। परिपूर्णम् व्यापकमित्यर्थः। कृतग्रशब्दस्यायमर्था अ[illegible]ऽपि हस्ते स्यादशस्त्रशब्दानिशरण्यायाह। कारकमिति। कृत्स्नकार्यकारि इ

इदं तर्हि आमलकम्। अत्र हि वृद्धसंज्ञाभावादित्वं मयटि नास्तीति पुंवत्त्वस्याप्राप्तिरिति कैयटेनोक्तम्। अत्र पुंवद्भावेन सिद्धमित्युपादानाज्ज्ञापितपुंस्कत्वं स्पष्टतयैव लभ्यत इति। तेन विहितेतिव्याख्यानेन। नित्यं ह्रस्व इति। घरूपेति नित्यं ह्रस्व इत्यर्थः। अपन्तात्स्त्रीप्रत्ययविधानेन नद्या उगितोऽविधानादिति भावः। असिद्धत्वेन। वहिरङ्गपरिभाषयाऽसिद्धत्वेन। निर्मूलत्वे हेतुमाह। न ह्रीति। ननु यदि नपुंवत्त्वबाधस्तदा शमिनीतरेतिभाष्यप्रयोगस्य कथमुपपत्तिरत आह। शमिनीतरेतीति। एवञ्च। तदंशे तदन्तविध्यभावसिद्धौ च। छन्दस्य स्वतन्त्रस्य स्त्रस्यैत्यादेशविधानस्य प्रयोजनमाह। छन्दस्येनेति। प्रपञ्चं स्पष्टयति। प्रयोगदर्शेति। अयम्। पूर्वसूत्रविहितः पदित्यादेशः। निपातनादिति। एवञ्चाजिशब्दस्येमन्तत्वेनान्तोदात्तत्वेन पदाजिरित्यत्र व्युत्पत्तिपक्षे कृदुत्तरपदप्रकृतिस्वरेऽपि सति शिष्टस्य पदशब्दसम्बन्धिन उदात्तत्वस्याबलवत्त्वात्स्वरितो वेति पाक्षिकं स्वरितत्वं स्पष्टम्। व्याख्यानादिति। पूर्वस्मिन् पादस्य पदाज्यातीतिसूत्रे आज्यादिषु प्राण्यङ्गस्यैव सुप्रसिद्धत्वेनार्थाधिकारानुरोधात्प्रकृते पद्यत्यतदर्थे इत्यत्रापि प्राण्यवयवस्यैव ग्रहणमित्येतन्मूलकव्याख्यानादित्यर्थः। तेन द्वाभ्यामपादाभ्यां क्रीतमित्यर्थे पणपादमाषेति यति पदादेशो नेति भावः। अनार्षमिति। प्रकृतवार्त्तिकेन सिद्धः। चतुर्थीशवाचीति। प्राण्यवयवस्याभावात्। ननु यदि संज्ञायामिकोदादेशस्तर्हि यौगिकस्य प्रमथोदं सर इत्यस्य का गतिरत आह। प्रमथ इति। पूर्वविप्रतिषेधेनेति। यदा पूरयितव्यस्य उदपानमितिसंज्ञा तदा पूर्वविप्रतिषेधेनोदकस्योद इत्येव प्रवर्त्तते। न वेनिविभाषेतिसूत्रभाष्ये एकहलादाविति सूत्रस्याप्राप्तविभाषात्वस्वीकारादिति भावः। प्राचीनरीत्या सूत्रं व्याचष्टे। एकशब्द इति। व्यवच्छिद्यत इति। एकशब्दार्थघटकनञेति शेषः। भाष्यानुसारेणाह। प्रसिद्धत्वादिति। निषेध इति। वार्त्तिकेनेत्यादिः। एकतद्धित। अनेक इति लुमपदरूपम्। सूत्रारम्भस्य प्रयोजनमाह। एकशब्दान्यस्येति। मन्थाङ्गदसोरित्यस्यानुवृत्तावपि तस्मा संज्ञा न प्रसिद्धेत्यत आह। संज्ञाया इति। अनुबन्धेनेति। अनुबन्धानुवादस्य टकारानुवादस्य अत्र पकारानुवादस्य आङोपदत्वं स्यादिति बोध्यम्। इन इतिसूत्रे नान्यथा सिद्धिम्परिहरति। इन इत्यनेनेति।

देवानामितीति। यद्यपि भाष्ये मूर्खपदन्न दृश्यते तथापि तत्रैव बहुश प्रयोगस्य दर्शनादेवमुक्तम्। इदञ्च वचन मनोरमायां मूर्खा हि देवानाम्प्रीतिश्च नयन्ति देवपशुत्वादिति यद्यपि व्याख्यातम्। तथाप्यन्याहशमप्यस्य व्याख्यान सम्भवतीति तदभिप्रायेणाह। मूर्खाणामिति। स्पष्टञ्चेदमिति। आनङ् ऋतो द्वन्द्व इतिसूत्रघटको ऋत इतिशब्दो द्वन्द्व इत्यस्य विशेषणमिति पक्षे ननु षो क्षम। ऋकारान्तानान्द्वन्द्वे पुत्र उपसङ्ख्यानमिति। नैषदोष। पुत्रग्रहणमपि प्रकृतमनुवर्त्तते। क्व प्रकृतम्। पुत्रेऽन्यतरस्यामिति। यदि तदनुवर्त्तते विभाषा स्वसृपत्यो पुत्रे चेति पुत्रेऽपि विभाषा प्राप्नोति। नैष दोष। सम्बन्धमनुवर्त्तिष्यते। षष्ठ्या आक्रोशे। पुत्रेऽन्यतरस्याम। षष्ठ्या आक्रोशे। आनङ् ऋतो द्वन्द्वे पुत्रग्रहणमनुवर्त्तते। षष्ठ्या आक्रोश इतिनिवृत्तमिति। ननु पितु पुत्र इत्यपुष्टार्थम्। यो हि पुत्र स पितुरेव भवतीत्यत आह। प्रख्यातात्पितुरिति। विशेषणसामर्थ्यात्पितृशब्दोऽत्र प्रख्यातपितरि लाक्षणिक इति भाव। विद्यायोनीति। विद्यासम्बन्धयोनिसम्बन्धवाचकयोरन्यतरस्य यत्र पूर्वपदत्वमुत्तरपदत्वञ्च तत्रैवास्य प्रवृत्तिरित्यर्थ। रेफान्तानुकरणम्। यदि शान्तस्यानुकरणङ् क्रियते तदा मातु ष्वसेत्यत्र विसर्गपक्षे न स्यात्। विसर्गान्तस्यापि नानुकरणम। तथा सति या शरीतिसूत्रनिष्पन्नविसर्गस्यैव ग्रहणमिति भ्रमभावना स्यात्। पितुर्भ्यामितिरूपासिद्धिश्चेति भाव। ननु रेफान्तानुकरणे विसर्गपक्षे कथमत आह। विसर्गादाविति।

## इत्यलुक्समास ।

घादीनाम्प्रत्ययत्वात्तदन्तविधिशङ्कावारणायाह। लिङ्गग्रहण इति। इदयस्य घरूपेत्यत्र यत्र ग्रहणन्ते नत्वर्थ। यदि प्रत्ययग्रहण तेदन्तग्रहण स्यात्तदाऽणग्रहणे नैव सिद्धे लिङ्गग्रहण न कुर्यात्। न च घरूपकल्पेत्यस्य प्रयोगघटकत्व यत्र तथाप्यादेशार्थ लिङ्गग्रहणमस्त्विति वाच्यम्। लिङ्गग्रहणस्योक्तार्थज्ञापकत्वस्य प्रकरभाष्यप्रामाण्येन घरूपकल्पेत्यादिशब्दोत्तरपदकह्रस्वादेशकपूर्वपदस्य प्रयोगस्यानभिधानात्। ज्ञापनादिति। भाष्यकृतेति शेष। नपदान्तात्स्वृसस्याभावादिति। न च हि लुकि किमुदाहरणम्। श्रियम्। भ्रुवम्। नैतदस्ति प्रयत्नाधिक्येन सिद्धम्।

यम्। ननु समुहूर्त्तमितिग्रन्थान्ते उदाहरणमुक्तमेव तच्चाव्ययीभावे चाकाले इ त्यनेन गतार्थम्। मुहूर्त्त शब्दस्य ग्रन्थविशेषपरतयाऽकालत्वादत आह । मुहू र्त्तादिशब्दानामिति। अकाल इति निषेधादिति। कालवृत्तिधर्महेतुकप्रवृत्तिके शब्दे नैत्यर्थादिति भाव । अत्र प्रमाण तु सकाष्ठम् समुहूर्त्तमितिभाष्यप्रयोग एव। योगविभागस्य ग्रन्थकारतात्पर्यकत्वमपीत्याह । छान्दसमपीदमिति। इत्याहुरिति। काशिकाकारानुयायिन । भाष्यसम्मतप्रकारमाह। भाष्येति। अयमिति। सहशब्दवचन सहशब्द । मूलोक्तान्ते नायमस्वपदविग्रह इत्ये तदग्रा चष्टे। तेनेति। अत एव। योगविभागाभावादेव। तत्र। सोदर इत्यत्र। दुर्लभ इति। साहस्याप्रतीतेरिति शेष । अत्र पत्ते । योगविभागाभावपत्ते। तस्य। ब्रह्मचारिण । तस्य। वेदस्य व्रतस्य वा। तत्त्वम् । समानत्वम्। व्रतभेदे वेति। अत्र वाकारो व्रतस्य समानत्वात्कार्ह भेदेप्यभेदसम्भावनायाम्। वस्तुतस्तु वेदस्य समानत्व विवक्षितस्तदध्ययनार्थ यद्व्रतस्य समानत्वोपपादनस्य प्रकृते नोप योग इत्याशयेनाह। समानमिति। भाष्यादिति। तत्र हि अत्र किञ्चित्पाल्यते। ब्रह्मण्युपपदे समानपूर्वे व्रते कर्मणि चरणिनिर्व्रतलोपश्च। ब्रह्मण्युपपदे समा नपूर्वे व्रते कर्मणि चरणिनि प्रत्ययो व्रतलोपश्च निपात्यते । समाने ब्रह्मणि व्रतचारी सब्रह्मचारी इति। समाने ब्रह्मणि वेदे यो व्रतश्चरति स सब्रह्मचा रीत्यर्थ इति कैयट । सूत्रे चरणशब्द शाखावाची। चरणे समानत्वेन गम्ये इति विवक्षितम्। लोपश्चे तिचकारेण समानशब्दस्य सभावोऽपि निपात्यत इ ति सूचितम्। विवक्षित इति। अत एव न तदादिविधि । ननु समानतीर्थे वासीतिसूत्रेण समानतीर्थशब्दात्सप्तम्यन्तादिधीयमानो यत्प्रत्यय सतीर्थश ब्दात्र प्राप्नोतीत्यतश्च इ। सादेश इति एकदेशविकृतन्यायेन। स्थानिवद्भावेन। तेन परिच्छिन्नपरिमाणत्वेऽपि न दोष । एतदर्थमेव। सति शिष्टस्य यत्स्वरस्य प्र वृत्त्यर्थमेव। अन्यथा । विषयसप्तमीलाभावे। ननु यदि यादिप्रत्ययविवक्षाया मेव सादेशस्तदा यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम्। अपन्थानन्तु गच्छन्त सोदरोऽपि विमुञ्चतीति प्रयोगानुपपत्तिरत आह। सोदरोऽपीतीति। सत्कारीत्या। यद्यप्यस्वपदविग्रहेण वृत्तौ समानार्थकसहशब्दस्य प्रयोग इति भा व । सवर्णदीर्घ इति। अस्य सुपथ्यामिदत्वादिपादि । अङ्गुले सङ्ग इत्यादि।

अत एव । प्रत्यासत्त्याश्रयणादेव । शाच्छोरितिसूत्रभाष्यपरिगणितव्यवस्थितविभाषास्वस्यापाठात्स्वयं समाधानमाह । परे स्विति । ग्रामणि कुलमिति । ग्रामण्यः कुलमित्यर्थः । दीर्घत्वमेवेति । सकृद्गतिन्यायादिति शेषः । कवभावपक्ष एवेति । त्रयाणान्निमित्तत्वे नाश्रयणादेवेति शेषः । ननु मातुर्मातजितिवचननिष्पन्नमस्तु द्विपरकमातजादेशानुवादेनैव सिद्धे निपातनाश्रयणमफलमत आह । अयमिति । तत्रैव । बहुव्रीहावेव । ननु ङ्यापोरित्येव सिद्धे इष्टकेषीकामालानामिति व्यर्थमत आह । असंज्ञेति । सत्यङ्कार इतीति । शपथेऽत्र सत्यस्य वृत्तिः । तदेतदभिसन्धायाह । सत्यस्याशपथ इति । तद्वदेव । च्विप्रत्ययवदेव । ततः पूर्वम् । अगः पूर्वम् । यत्र तु कारशब्दो नाणन्तः किं तु घञन्तः अथ च सत्यशब्दोऽशपथे वर्त्तते तत्राप्याह । घञन्तेऽपीति । सत्यङ्कार इत्यस्य शपथकरणम् । शपथकर्त्ता चार्थः । एवमगदङ्कार इत्यस्यापि विषादिप्रतिहन्तिद्रव्यादुरपायकरण वैद्यो वाऽर्थः । अस्तुकार इत्यस्याभ्युपगमकरणम् । तत्कर्त्ता वाऽर्थः । धेनुम्भव्या भविष्यन्ती धेनुरित्यर्थः । भव्येत्यत्र भव्यगेयेतिसूत्रेण भविष्यति काले कर्त्तरि यत् । अतः । मयूरव्यंसकादित्वादेव । क्वतोऽसम्भवात् कृदन्त इत्यर्थ इत्यस्य सूत्रारम्भसामर्थ्याल्लिङ्ग्रहणेन ज्ञापितं वचनमनित्यमिति कथ्यते । आचारक्विबन्तरात्रिशब्दात्कृतः सम्भवेऽपि अभिव्यक्तपदार्था य इतिन्यायेन तत्राप्यप्रवृत्तिरितिभावः।अत्र भाष्य इति।रात्रेरप्राप्तविभाषा । प्राप्ते नित्यो विधिरिति । पूर्वविप्रतिषेधकल्पनयेत्यर्थः । उदात्त इति भाष्यमिति । तत्र सहशब्दस्य यः सादेशस्तस्योदात्तानुदात्तवत्सहशब्दस्य स्थाने जायमानत्वेनान्तरतम्यात्स्वरितत्वमाप्नोतीत्याशङ्क्य सपुत्रः सभार्य इत्यत्र यः सादेशस्तस्य उदात्तनिपातनं करिष्यते स निपातनस्वरः प्रकृतिस्वरस्य बाधको भविष्यति । एवमप्युदेशिवद्भावो वक्तव्य । स यथैव प्रकृतिस्वरम्बाधते एवं समासस्वरमपि बाधेतेत्युक्तम् । अत्रोपदेशिवद्भावकथनेन समासस्वरप्रकृतिस्वरविषये एवं व्यवस्था । सपुत्रः सभार्य इत्यादिबहुव्रीहौ समासस्वरबाधकस्य बहुव्रीहौ प्रकृत्येति पूर्वपदप्रकृतिस्वरस्य प्रवृत्त्या चाद्युदात्तत्वं सिध्यति । साम्नि सिद्धि । सपशुबन्धमित्याद्यव्ययीभावे चाद्युदात्तत्वस्य प्रसक्तावपि ततः समासस्वरस्योदात्तत्वमभवतीति बोध्यम् । उपपदसमास इति । कृदुत्तरपदप्रकृतिस्वरप्रवृत्त्या मर्यादाभाऽ-

स्तादृशाश्च योगिन एवेति भावः। तादृशा आर्यावर्तनिवासिनः। कः पुनरार्यावर्तः। प्रागादर्शात्। प्रत्यक्कालकवनात्। दक्षिणेन हिमवन्तमुत्तरेण पारियात्रम्। एतस्मिन्नार्यावर्ते निवासे ये ब्राह्मणाः कुम्भीधान्या अलोलुपा अगृह्यमाणकारणाः किञ्चिदन्तरेण कस्याश्चिद्विद्यायाः पारं गतास्तत्र भवन्तः शिष्टा इत्युक्तम्। यथोपदिष्टमित्यत्र जातावेकवचनम्। प्रागादर्शादिति। आदर्शः। कुरुक्षेत्रं पर्वतः। कालकवनं प्रयागः। पारियात्रो विन्ध्यः। मनुरप्याह। हिमवद्विन्ध्ययोर्मध्ये यत्प्राग्विनशनादपि। प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तित इति। दक्षिणेनेति। दक्षिणस्मिन्देश इत्यर्थे एनबन्यतरस्यामित्येनप्। एनपेति द्वितीया। कुम्भ्यामिव धान्यं येषाम्। ननु दम्भार्थमेव न कुम्भीधान्यत्वमित्याशयेनोक्तमलोलुपा इति लाभेच्छारहिताः। अगृह्यमाणकारणा इत्यस्य दृष्टकारणमन्तरेणैव सदाचारानुवर्त्तिनः। किञ्चिदन्तरेण। गुरूपदेशादिरूपो योऽभियोगस्तं विनापि। कस्याश्चिदित्यस्य सर्वविद्याया इत्यर्थः। अव्ययानामनेकार्थत्वात्। तयोर्बलादेव शब्दतोऽर्थतश्च प्रतिभातसर्वविद्या इत्यर्थः। उत्तरपदाधिकारात्पृषोदरादीतिसूत्रं समासविषयकमितिवादिमतमाह। उत्तरेति। स्वमतमाह। परे त्विति। उणादयइतिसूत्रस्येव प्रपञ्चत्वमिति भावः। मूलउक्तं स्वयमाह। डदूगाशादाविति। दुःखेन दाश्यते नाश्यते दभ्यते इत्यर्थे त्रिभ्यः खल्। दभेर्नकारस्य निपातनादेव लोपः। कप्रत्ययान्तस्येति। आतश्चोपसर्ग इतिकान्तस्य। धीशब्दस्य च ग्रहणम्। तन्त्रेण वार्त्तिके ग्रहणम्। प्रयोगे तु डमन्तस्य प्रयोगः। तत्र कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तस्य दुर्धीशब्दस्य यणादेशे उदात्तस्वरितयोरितिसूत्रेण डसोऽकारस्य स्वरितत्वेऽन्तस्वरितत्वं सिध्यति। श्रुतौ कप्रत्ययान्तस्य ग्रहणशङ्कां वारयति। श्रुताविति। षष्ठ्यर्थप्रतीत्यनुरोधेनाह। डमस्यानिकेति। एतत्फलम्। संहिताधिकारफलमित्यर्थः। उत्तरपदाधिकारादिति। अस्य उत्तरपदनिमित्तकानामिति शेषः। तेन वले इत्यत्र मतौ बह्वच इत्यत्र चशब्दे दीर्घव्यावृत्तेः फलस्य वक्तुं शक्यत्वेऽपि न न्यूनता। यदि त्वेतयोर्नावग्रहो दृढमभ्यतस्तदा यथाश्रुतं साधु। एतच्चाव्यवस्थितविभाषात्वञ्चाव्यवस्थितविभाषात्वमनङ्गीकुर्वतां मतमाह। के चित्त्विति। कृतदीर्घस्य इति। एतेन नियमनिमित्तभूतं मन्त्रत्वं सूचितम्। वनं

यादृशपूर्वोत्तरपदकमसमुदाये प्रवृत्तिस्तेषामवोपादानम्। न च समासाभावे विभक्त्या व्यवधानादिणः परत्वाभावादेव षत्वाप्राप्तेः प्रत्युदाहरणासङ्गतिरिति वाच्यम्। ज्योतिषः स्तोम इति न प्रत्युदाहरणं किन्तु ज्योतिषो ज्योतिःशब्दात्परो यः स्तोमः स्तोमशब्दस्तस्य व्यपेक्षाभावेऽपि पश्य ज्योतिः स्तोमस्तिष्ठतीतिसमुदायघटकज्योतिःस्तोमशब्दावयवस्य सकारस्य शव्व्यवधानेऽपि स्यादित्यत्र तात्पर्यात्। एवमेवाङ्गुलेः सङ्ग इत्यत्रापि बोध्यम्। अङ्गुलिशब्दत्वं त्वेकदेशविकृतन्यायेन। अन्ये तु अग्नेः स्तुत्स्तोमसोमाः। सोमः। ज्योतिरायुषः। इत्येव सूत्रत्रयमस्तु स्तोम इति सूत्रे अग्नेरित्यनुवर्त्तते। ज्योतिरिति सूत्रे च च सोमग्रहणमनुवर्त्तते। एतेन सर्वेष्टसिद्धौ पुनर्ज्योतिरितिसूत्रे स्तोमग्रहणं यत्र स्तोमशब्दस्य ज्योतिःशब्दात्परत्वमात्रं तत्र यथा स्यात्। निर्दिष्टपरिभाषापरत्वमात्रबोधिकोपतिष्ठते न त्वव्यवधानांशस्याप्युपस्थितिरिवस्त्वेषो व्यवधानेन परत्वेऽपि भविष्यति। अत एव ज्योतिषष्टोमोऽत्र तत्र न साङ्ग इत्यर्थे षष्ठ्या आक्रोश इत्यलुकि समासे षत्वसिद्धिः। न च यत्र ज्योतिषां स्तोम इत्यत्रालुक तत्रापि स्यादिति वाच्यम्। ज्योतिरायुष इति सूत्रोपस्थित विभक्त्यतिरिक्तविभक्तिग्रहणे मानाभाव इत्याशयकल्पनात्। एवञ्च व्यपेक्षायामपीदम्प्रत्युदाहरणमित्याहुः। एवं हि। अङ्गुलेः सङ्ग इत्यर्थे प्रत्यासत्त्या तयोः पदयोरिति व्याख्याने हि। एतयोः। एतीत्यस्य नक्षत्र्यस्य चेत्यर्थः। ननु लक्षणप्रतिपदोक्तपरिभाषया कुगतीति सूत्रविहितसमासग्रहणेन इष्टस्य सिद्धिर्भविष्यतीति तत्पुरुष ग्रहणं व्यर्थमत आह। इदमेवेति। ननु पुरुषगतसामर्थ्यस्य न्यूनत्वाभिप्रायेणैतदर्थककुशब्देन समासस्तत्रापि विकल्पापत्तिवारणाय पूर्वविप्रतिषेधाश्रयणमयुक्तम् भाष्यानुक्तत्वादत आह। भाष्यानुक्तमपीति। इत्तिप्रामाण्यादित्यनेन विकल्पविषये इष्टापत्तिः सूचिता। चादिशब्दो न व्यवस्थावाची सर्वात्वे पाठादेव निपातनप्रामसिद्धौ यथोपदिष्टमित्यस्य वैयर्थ्यापत्तिरत आह। चादिशब्द इति। प्रकारे इत्यनेन स्वरूपतोऽस्मिन् गणेऽपठितानामपि साधुत्वसूचनाय यथोपदिष्टं शिष्टैस्तया तेषां साधुत्वमिति सूचितम्। प्रकृत्यर्थभूतोपदेशस्वरूपमाह। उपदेश इति। भाष्ये स्पष्टमिति विनाऽभिनिवेशं यस्यां कस्यां चिद्विद्यायां ये पारं गतास्तेऽत्र भवन्तः शिष्टा-

स्तादृशाय योगिन एवेति भावः। तादृशायार्यावर्तनिवासिनः। कः पुनरार्यावर्तः। प्रागादर्शात् । प्रत्यक्कालकवनात् । दक्षिणेन हिमवन्तमुत्तरेण पारियात्रम् । एतस्मिन्नार्यावर्ते निवासे ये ब्राह्मणाः कुम्भीधान्या अलोलुपा अगृह्यमाणकारणाः किञ्चिदन्तरेण कस्याश्चिद्विद्यायाः पारं गतास्तत्र भवन्तः शिष्टा इत्युक्तम् । यथोपदिष्टमित्यत्र जातावेकवचनम् । प्रागादर्शादिति। आदर्शः। कुरुक्षेत्रे पर्वतः। कालकवनं प्रयागः। पारियात्रो विन्ध्यः। मनुरप्याह। हिमवद्विन्ध्ययोर्मध्ये यत्प्राग्विनशनादपि। प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तित इति। दक्षिणेनेति। दक्षिणास्मिन्देश इत्यर्थे एनबन्यतरस्यामित्येनप्। एनपेति द्वितीया। कुम्भ्यामेव धान्यं येषाम्। ननु दम्भार्थमेव न कुम्भीधान्यत्वमित्याशयेनोक्तमलोलुपा इति लाभेच्छारहिताः। अगृह्यमाणकारणा इत्यस्य दृष्टकारणमन्तरेणैव सदाचारानुवर्तिनः। किञ्चिदन्तरेण। गुरूपदेशादिरूपो योऽभियोगस्तं विनापि। कस्याश्चिदित्यस्य सर्वविद्याया इत्यर्थः। अध्ययनानामनेकार्थत्वात्। तयोर्बलादेव शब्दतोऽर्थतश्च प्रतिभातसर्वविद्या इत्यर्थः । उत्तरपदाधिकारात्पृषोदरादीतिसूत्रं समासविषयकमितिवादिमतमाह। उत्तरेति। स्वमतमाह। परे त्विति। उणादयइतिसूत्रस्यैव प्रपञ्चत्वमिति भावः। मूलउक्तं स्वयमाह। डदूणादाविति। दुःखेन दाश्यते नाश्यते दभ्यते इत्यर्थे छिभ्यः खल् दभ्नेनकारस्य निपातनादेव लोपः। कप्रत्ययान्तस्येति। आतश्चोपसर्ग इतिकान्तस्य। धीशब्दस्य च ग्रहणम्। तन्त्रेण वार्त्तिके ग्रहणम्। प्रयोगे तु डसन्तस्य प्रयोगः । तत्र कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तस्य दुर्धीशब्दस्य यणादेशे उदात्तस्वरितयोरितिसूत्रेण डसोऽकारस्य स्वरितत्वेऽन्तस्वरितत्वं सिध्यति। श्रुतौ कप्रत्ययान्तस्य ग्रहणशङ्कां वारयति। श्रुताविति। पश्चार्थप्रतीत्यनुरोधेनाह। डसस्थानिकेति। एतत्फलम्। संहिताधिकारफलमित्यर्थः। उत्तरपदाधिकारादिति। अस्य उत्तरपदनिमित्तकानामिति शेषः। तेन वले इत्यत्र मतौ बह्वच इत्यत्र चशब्दे दीर्घव्यावृत्तेः फलस्य वक्तुं शक्यत्वेऽपि न न्यूनता। यदि त्वेतयोर्नाधिपक्षे दृष्टसमास्तदा यथाश्रुतं साधु। एतद्व्यवस्थितविभाषात्वव्यवस्थितविभाषात्वमनङ्गीकुर्वतां मतमाह। केचित्त्विति। कृतदीर्घस्य इति। एतेन नियमनिमित्तभूतं सप्तत्वं सूचितम्। वनं

यादृशपूर्वोत्तरपदकसमुदाये प्रवृत्तिस्तेषामेवोपादानम् । न च समासाभावे विभक्त्या व्यवधानादिष. परत्वाभावादेव षत्वाप्राप्तेः प्रत्युदाहरणासङ्गतिरिति वाच्यम् । ज्योतिष स्तोम इति न प्रत्युदाहरणं किन्तु ज्योतिषो ज्योतिःशब्दात्परो यः स्तोमः स्तोमशब्दस्तस्य व्यपेक्षाभावेऽपि पश्य ज्योतिः स्तोमस्तिष्ठतीतिसमुदायघटकज्योतिःस्तोमशब्दावयवस्य सकारस्य शर्व्यवधानेऽपि स्यादित्यत्र तात्पर्यात् । एवमेवाङ्गुलेः सङ्ग इत्यत्रापि बोध्यम् । अङ्गुलिशब्दत्वं त्वेकदेशविकृतन्यायेन । अन्ये तु अग्नेः स्तुत्स्तोमौ । सोमः । ज्योतिरायुषः । इत्येव सूत्रत्रयमस्तु स्तोम इति सूत्रे अग्नेरित्यनुवर्त्तते । ज्योतिरिति सूत्रे च च सोमग्रहणमनुवर्त्तते । एतेन सर्वेष्टसिद्धौ पुनर्ज्योतिरितिसूत्रे स्तोमग्रहणं यत्र स्तोमशब्दस्य ज्योतिःशब्दात्परत्वमात्रं तत्र यथा स्यात् । निर्दिष्टपरिभाषापरत्वमात्रबोधिकोपतिष्ठते न त्वव्यवधानांशस्याप्युपस्थितिरेवञ्चणो व्यवधानेन परत्वेऽपि भविष्यति । अत एव ज्योतिष ष्टोमोऽत्र तव न साङ्ग इत्यर्थे पष्ठ्या आक्रोश इत्यलुकि समासे षत्वसिद्धिः । न च यत्र ज्योतिषां स्तोम इत्यत्रालुक् तत्रापि स्यादिति वाच्यम् । ज्योतिरायुष इति सूत्रोपस्थित विभक्त्यतिरिक्तविभक्तिग्रहणे मानाभाव इत्याशयकल्पनात् । एवञ्च व्यपेक्षायामपीदमप्रत्युदाहरणमित्याहुः । एवं हि । अङ्गुलेः सङ्ग इत्यर्थे षत्वमस्या तयोः पदयोरिति व्याख्याने हि । एतयोः । एतीत्यस्य नघर्वत्यस्य चेत्यर्थः । ननु लक्षणप्रतिपदोक्तपरिभाषया कुगतीति सूत्रविहितसमासग्रहणेन इष्टस्य सिद्धिर्भविष्यतीति तत्पुरुष ग्रहणं व्यर्थमत आह । इदमेवेति । ननु पुरुषगतसामर्थ्यस्य न्यूनत्वाभिप्रायेणैषदर्थेकुशब्देन समासस्यापि विकल्पापत्तिवारणाय पूर्वविप्रतिषेधाश्रयणमयुक्तम् भाष्यानुक्तत्वादत आह । भाष्यानुक्तमपीति । वृत्तिप्रामाण्यादित्यनेन विकल्पविषये इष्टापत्तिः सूचिता। पादिशब्दो न व्यवस्थावाची तथात्वे पाठादेव निपातनज्ञानसिद्धौ यथोपदिष्टमित्यस्य वैयर्थ्यापत्तिरत आह । पादिशब्द इति । प्रकारे इत्यनेन स्वरूपतोऽगिन् गणेऽपठितानामपि साधुत्वबुधनाय यथोपदिष्टं शिष्टैस्तथा तेषां साधुत्वमिति सूचितम् । प्रज्ञत्यर्थभूतोपदेशस्वरूपमाह । उपदेश इति । भाष्ये स्पष्टमिति विनाऽभिनिवेशं यस्यां कस्यां विद्यायां ये पारं गतास्तेऽत्र भवन्तः शिष्टाः

स्वाध्याय योगिन एवेति भाव । तादृशायार्यावर्तनिवासिन । क पुनरार्यावर्तं । प्रागादर्शात् । प्रत्यक्कालकवनात् । दक्षिणेन हिमवन्तमुत्तरेण पारियात्रम् । एतस्मिन्नार्यावर्ते निवासे ये ब्राह्मणा कुम्भीधान्या अलोलुपा अगृह्यमाणकारणा किञ्चिदन्तरेण कस्याश्चिद्विद्याया पारं गतास्तत्र भवन्त शिष्टा इत्युक्तम । यथोपदिष्टमित्यत्र जातावेकवचनम् । प्रागादर्शादिति । आदर्श । कुरुक्षेत्रे पर्वत । कालकवन प्रयाग । पारियात्रो विन्ध्य । मनुरप्याह । हिमवद्विन्ध्ययोर्मध्ये यत्प्राग्विनशनादपि । प्रत्यगेव प्रयागाच्च मध्यदेश प्रकीर्तित इति । दक्षिणेनेति । दक्षिणस्मिन्देश इत्यर्थे एनबन्यतरस्यामित्येनप् । एनपेति द्वितीया । कुम्भ्यामेव धान्य येषाम् । ननु दृश्यार्थमेव न कुम्भीधान्यत्वमित्याशयेनोक्तमलोलुपा इति लाभेच्छारहिता । अगृह्यमाणकारणा इत्यस्य दृष्टकारणमन्तरेणैव सदाचारानुवर्तिन । किञ्चिदन्तरेण । गुरूपदेशादिरूपो योऽभियोगस्त विनापि । कस्याश्चिदित्यस्य सर्वविद्याया इत्यर्थ । अव्ययानामनेकार्थत्वात् । तयोर्बलादेव शब्दतोऽर्थतश्च प्रतिभातसर्वविद्या इत्यर्थ । उत्तरपदाधिकारात्पृषोदरादीतिसूत्रं समासविषयकमितिवादिमत आह । उत्तरेति । स्वमतमाह । परे त्विति । उणादयइतिसूत्रस्यैव प्रपञ्चत्वमिति भाव । मूलउक्तं स्वयमाह । डदूराशादाविति । दुःखेन दाश्यते नाश्यते दभ्यते इत्यर्थं चिभ्य खल दशो नकारस्य निपातनादेव लोप । कप्रत्ययान्तस्येति । चातयोपसर्गे इतिकान्तस्य । धीशब्दस्य च ग्रहणम् । तन्त्रेण वार्त्तिके ग्रहणम । प्रयोगे तु डसन्तस्य प्रयोग । तत्र कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तस्य दुर्धीशब्दस्य यणादेशे उदात्तस्वरितयोरितिसूत्रेण डसोऽकारस्य स्वरितत्वे ऽन्तस्वरितत्व सिध्यति । श्रुतौ कप्रत्ययान्तस्य ग्रहणशङ्का वारयति । श्रुताविति । पदार्थप्रतीत्यनुरोधेनाह । डम्भ्यानिकेति । एतत्फलम् । महिताधिकारफलमित्यर्थ । उत्तरपदाधिकारादिति । अस्य उत्तरपदनिमित्तकानामिति शेष । तेन वने इत्यत्र मतौ यद्वच इत्यत्र षश्ठहे दीर्घव्यावृत्ते फलस्य वक्तुं गमकत्वेऽपि न न्यूनता । यदि त्वेतयोर्नावषड्दो वृद्धसम्मतस्तदा यथाश्रुत साधु । एतच्चाव्यवस्थितविभाषात्वञ्चाव्यवस्थितविभाषात्वमनङ्गीकुर्वतां मतमाह।के चित्त्विति । कृतदीर्घस्य इति । एतेन नियमनिमित्तभूतं सत्त्वात्व सूचितम् । वन

पुरगेत्यत्र षष्ठ्याः स्थाने व्यत्ययेन प्रथमा। न च पुरगामिश्रकेतिदीर्घानुवादसा- मर्थ्यादेव अष्टाध्यायीगित्यत्रेव दीर्घे सिद्धे वनगिर्योरित्यत्र कोटरादिग्रहणं व्यर्थमिति वाच्यम्। आनुमानिकवचनकल्पनापेक्षया वचनेन तत्सिद्धौ लाघवात्। टावन्तनिर्देशसम्भावनापत्तेश्च। व्याख्यानादिति। लक्ष्यदर्शनमूलकव्याख्यानादित्यर्थः। अत एव। कृतदीर्घनिर्देशादेव। विपरीतनियमो नेति। एष परस्य यदि णत्वं भवति तर्हि वनशब्दस्यैवेतिविपरीतनियमो नेत्यर्थः। विपरीतनियमपक्षे सारिकाणामित्यत्र णत्वव्यावृत्तिः फलं स्यात्। विध्यर्थत्वबीजं दर्शयति। अग्रे वनशब्दस्येति। वन इतिसूत्रे वनशब्द प्रत्यय एव गृह्यत इत्यत्र मानमाह। यथोपदिष्टमिति। अण इत्येवेति। ढ्रलोप इत्यतोऽणग्रहणमनुवर्तत इत्यर्थः। घञोऽसम्भवेन तदन्तविधिरिति। एनेनोत्तरपदाधिकारेऽपि तदन्तविधिप्रवृत्तिनिमित्तं दर्शितम्। अन्ये षामपीतिसूत्रस्येति। एतच्च सूत्रं तुरापाडित्याद्यर्थमावश्यकं तस्येत्यर्थः। तथा साध्वितीति। यत्र दीर्घो न दृश्यते तत्र ह्रस्वघटितमेव साध्विति बोध्यम्। ननु सूत्रे यदसंज्ञायामपीति तदर्थम्। संज्ञायामित्यस्य प्रकान्तस्य निवृत्तिकल्पनेनोभयत्र प्रवृत्तिसम्भवादत आह। प्रयोग इति। तथा च तन्निवृत्तावेव तात्पर्यग्राहकमिदमिति भावः। हलायुधमिति। एतेन वानस्पत्य-फले पुष्पात्तैरपुष्पाद्वनस्पतिरित्यवान्तरभेदोऽत्र न विवक्षित इति सूचितवान्। व्याख्यानादिति। लुपि युक्तवदितिसूत्रभाष्यसम्मतव्याख्यानादित्यर्थः। तथाहि। तत्र व्यक्तिवचन इति किमर्थम्। शिरीषाणामदूरभवो ग्रामः शिरीषाः। तस्य वनं शिरीषवनम्। अत्रादूरभवार्थे त्वणो वरणादित्वात् लुपि सति प्रकृतिशब्दार्थगतवनस्पतित्वस्याप्यतिदेशः स्यात्तथा च विभाषौषधीतिसूत्रेण णत्वापत्तिरित्युक्तम्। पुष्पैर्विना फलवान्हि वनस्पतिरित्यभिधीयते न च शिरीषस्तादृग्। एवं च तत्रैव वनस्पतित्वमस्तीति वनस्पतित्वमतिदिश्येतेत्यसङ्गतं स्यादित्येतेन तत्र वनस्पतिशब्दो वृक्षत्वासमव्यापकजात्यवच्छिन्नलाक्षणिक इति बोध्यम्। न देवाद्य। ध्वनितमिति। सूत्रे कस्कादिष्वमिनोरिति। अत्र मानं वाचरवाणौ द्य एवेति भाष्यम्। तत्राचरशब्दो व्याघ्रनखाभिधायीपर इति भावः। अत एव देवदारुवनमित्येतावत्पर्यन्तं प्रत्युदाहृतम्। इरिकादिभ्य प्रतिषेध इत्यन्यत्र एव शरच्छतं। अन्यथाऽप्य पूर्वोक्तनियमेनैव प्राप्तिसिद्धावेतस्य वैयर्थ्यापत्ति

स्यात्। हरिकाथनमित्यत्र स्वौषधिवाचकत्वात्प्राप्तिर्वाच्या। वाहनमाहितादिति सूत्रे यदाहितपदं तत्र भूतकालो न विवक्षितः। आहितशब्दस्य स्वस्वामिभावनिवृत्तिमात्रपरत्वात्। एवञ्च वाहनं लोके यद्यपि स्वामिन एव प्रसिद्धन्तथापि यत्र स्वामित्वमारोप्य तद्वाहनत्वेन वाहनं विवक्षितं न तु तत्र वाहने वाह्यस्य स्थापनङ्कृतं तत्रापि भवति वाह्यवाहकभावमात्रविवक्षाया सन्निधानमात्रेणापि सम्भवात्। तदाह मूले। आरोप्येति। शेखरे अनेनेति। आरोप्येति कथनेनेत्यर्थः। अचेतनत्वमिति। आरोपस्य तत्रैव सम्भवात्। पूर्वोक्तव्याख्याने भाष्यम्प्रमाणयति। तदुक्तमिति। आहितोपस्थितयोरित्यनेन वाहने वाह्यस्य स्थापने सन्निधाने चेति कथितम्। वाहनं वाह्यादिति। वहनीयवाचिन परमित्यर्थः। एतेन पूर्वपदस्य वहनीयवाचकत्वविवक्षा यदा तदा भवति स्वामिमात्रवाचकत्वविवक्षा तदा मा भूदित्युक्तम्भवति। गर्गाणां वाहनमिति। अत्र स्वस्वामिभावसम्बन्धे षष्ठी। अपविद्धमिति। वहनशक्तिविकलम्प्रनष्टमित्यर्थः। एतत्कथनं च तदा गर्गा वाह्यत्वेनाविवक्षिता इति सूचनाय। ननु चीरम्पानं येषामित्यनुपपन्नम्पानशब्दस्य क्रियावचनत्वेन चीरशब्देन सामानाधिकरण्यासम्भवादित्यत आह। कर्मणीति। बाहुलकात्। कृत्यल्युटो बहुलमितिसूत्रस्थयद्बहुलमिति पदन्तेन निर्वृत्तमित्यर्थेऽरोहणादित्वाद्बुञ्बहुलशब्दो बहुलग्रहणनिर्वृत्तपरः पुनर्भावप्रधाननिर्देशेन बाहुलकशब्दस्तद्वृत्तिधर्मपरः। बहुलग्रहणनिर्वृत्तत्वादिति प्रकृते विवक्षितम्। उशीनरशब्दश्च उशीनरदेशनिवासिपर इत्याशयेनाह। देश इत्यस्येति। करणे वा ल्युडिति। यद्यपि पूर्वसूत्रे पानशब्दः कर्मण्युडन्त इति व्याख्यातम्। तथाप्यस्मिन् सूत्रे तस्य भावकरणयोरित्युपादानाच्छब्दाधिकाराश्रयणेनार्थान्तरपरत्वमित्याशयात्। सामर्थ्यादिति। अन्यथा पात्पदादित्येव विशेषणेन तदन्तविधिलाभादन्तग्रहणं व्यर्थं स्यात्। तेन। तोहशार्थकरणेन। ननु तथापि गतिकारकोपपदानामितिपरिभाषया सुबुत्पत्तेः प्राक् पानशब्देन समासे न पदपरत्वसम्भव इयत आह। सर्पिष्पानमित्यादाविति। धनक्रीता इति यथा। कर्मण्यग्निति। व्रीहीन्वपन्ति यानि कुलानि तानीत्यर्थः। बहुव्रीहिश्चेति। व्यधिकरणपदो बहुव्रीहिरित्यर्थः। नन्व वशापान्वपतस्तच्छीलो पुरुषो मायवापिणावित्यादावुत्तरपदत्वे चेतिनिषेधेनोत्तरपदरूपप्रातिपदिका

भावात्कथमत्वमत आह । उत्तरपदशब्दस्येति।ननु प्रक्षिखिल्यिथ णत्वाभाव ए वेष्ट इत्यत आह।पूर्वपदाचिप्तेति।मूलानुक्रमप्याह । भाष्य इति । एवञ्च ब्रीहि वापाणीत्यादौ प्रातिपदिकान्तस्यैव सिद्धे तत्र नुम्ग्रहणप्रयोजनमिति । ण स्वार्थमपीत्यत्रापिशब्दोपादानमनर्थकमत आह । णत्वार्थमेवेत्यर्थ इति । अपिरे वार्थ । नन्वेवम्प्रेन्वनमित्यत्र णत्वापत्तिरत आह । प्रेन्वनमिति । ननूत्तरपद य प्रातिपदिकस्तदन्तस्येत्यर्थे द्विवचितस्तदा प्रातिपदिकपद व्यर्थम । उत्त रपदान्तस्येत्यर्थेन मापवापिणावित्यस्य सिद्धेरिति चेन्न। प्रातिपदिकानामेव य समासस्तत्र यथा स्यादित्यर्थात् । तेन नियमेन हि तिङन्तयोर्य आख्यातमा ख्यातेनेति समासस्तत्र स्यादित्ति स्यात् । चकाराहन्निति यथा । इदञ्च पद म न्वुत्रान्तम् । तेन न नलोप । ननु प्रेन्वनमित्यत्र नुमो नकारस्य क्षुभ्नादित्वा ण्त्वाभावेऽपि;छदयवस्य स्यादत आह । एव समुदाया इति । अचलत्वबहुवच नेन परन्वनम निरिन्वनमित्यस्य सङ्ग्रह । इति न कार्यमिति । तच्च वार्त्तिक भाष्ये एवम्पठितम।नुमच्यवाये णत्वेऽनुस्वाराभावे प्रतिषेध इति।ननु क्षुभ्नादिरा कृतिगणा युवादिरपि चेत्तथा तदाऽन्यतरोपादानमनर्थकमत आह । समस्ता इ ति । अत एव । युवादेरित्यस्य समासविषयकत्वादेव । भाष्ये पठितम । तत्र हि युवादीनाम्प्रतिषेधो वक्तव्य । आर्ययूना । क्षत्रिययूना । परिपक्वानि । दीर्घाह्नी शरदिति पठितम्। समस्तस्यैवोदाहरणत्वेन प्रदर्शनादप्यस्य समासविषयकत्व म । परिपक्वानीत्यत्र क्षुभ्नादि चेत्यस्य प्राप्ति । एकाजितिसूत्रस्य बहुब्रह्मणी त्युदाहरणं च विद्मप्रते। तत्रासङ्गतम्।इत्तो रस्पूर्वस्येतिसूत्रेऽदितितपरकरणा दितितच। यादृशे सुव्यवाये णत्वस्य प्रतिषेधवार्त्तिकेन च तचत्वात्पूर्वग्रहणस्य प्रत्ययत्वामादित्यागमेनाह । बहुब्रह्मणीत्युदाहरणमिति।भातो लोप इति। तत्र समासे तृतीयैकवचनम् । रव्ययामौ वियेति समासप्रदर्शनेन रव्यशब्दस्य गतिकारकोपपदभिन्नत्वाद्यानेन गडुते । मन्वन्तरिति । विभक्तेश्च पदत्यादिति । उत्तरपदत्वे चेतिनिषेधस्यापदादिविधाविशुक्तरेन पदान्तत्वनिमित्तविधावेव प्रवृत्तिरिति भाव । ण्वाद्ययातिरिक्तविनिभिन्न इति।णत्वाद्ययातिरिक्तो यस्त द्धितभिन्नस्तत्परत्व यत्नेनाय । न भेदप्रविनवमित्यत्र विभक्त्यप्रधानम प्र तिषेधा न स्यादिशब्दस्य णत्वाद्यनबशब्दपरत्वादिति भाव्यम् । एवञ्चोत्तरपद

त्ससामीयविभक्तिस्थनकारस्य णत्वविधानैकवाक्यतया णत्वाश्रयो य प्रत्यय स्तदतिरिक्तत्वस्य निवेशेन नद्दशब्दस्य णत्वाश्रयप्रत्ययातिरिक्तत्वस्याक्षते । न चैवमपि-प्रियगोकाम्ये णेत्यादौ गोशब्दस्य णत्वाश्रयप्रत्ययातिरिक्तो यस्तद्धितभि न्न काम्यच्प्रत्ययस्तत्परत्वान्निषेध स्यादिति वाच्यम्। तद्धितपदस्य व्यवधायक पदप्रकृतिकप्रत्ययपरत्वात् । अस्ति चात्र काम्यच्प्रत्ययो गोशब्दप्रकृतिक । एत दातोऽनेन इतिपर्युदासबलात्तद्धितभिन्नस्तदाद्यो लभ्यत इत्यनेन लब्धम् । न च रम्यविधीत्यत्र निषेधप्रवृत्तिसमयेनेत्यस्य णत्वाश्रयत्वाभावेन णत्वाश्र यातिरिक्तत्वमस्त्येवेति वाच्यम् । णत्वविधौ यदुद्देश्यतावच्छेदकत्वधर्माव च्छिन्नप्रतियोगिताकभेदस्य विवक्षितत्वादिति दिक् । तत्प्रत्याख्याने । अतद्धितेत्यस्य प्रत्याख्याने इत्यर्थ । एवं हि भाष्ये उक्तम् । तत्त र्हि वक्तव्यम्। न वक्तव्यम् । नैव विज्ञायते पदेन व्यवाय. पदव्यवाय पदव्यवा य इति। कथ तर्हि पदे व्यवाय पदव्यवाय इति। अत एव। पूर्वोक्तार्थकल्पना देव। समफलेति। रम्यविण्येत्यत्र प्रत्याख्यानपक्षे निषेधो न प्राप्नोति। आर म्भपक्षे यदुक्तार्थकल्पनञ्च स्यात्तदा प्राप्नोतीति फलभेद स्फुट एवेति भाव। क्का-दाचित्कत्वमभिप्रेत्याह । तथा सति रम्यपाकाणामाण्डुलानामिचय इत्यादौ न स्या दिति भाव । कुमति चेतिसूत्रे प्रत्यासत्तिमाश्रित्य णत्वाभावं वदताम्मतमिर स्यति। अत्र कवर्गेति। चित्रगवीति समुदाये लिङ्गविशिष्टपरिभाषया समासत्वा तिदेशे सति विभक्तौ कवर्गवदुत्तरपदकसमासप्रकृतिकत्वमस्त्येवेति भाव।पदेन । पदसम्बन्धेन । कार्यित्व एवेति । न पदान्तसूत्रे एतत्प्रयोजनदूषितम् । पदा न्तविधावेवेति। न च पदान्तविधावित्यत्र कृतो नोक्तमिति वाच्यम्। वार्त्ति-कादिषु लाघवगौरवचर्चा नाद्रियत इत्यभिप्रायात्। सप्तमीसमासेन व्याख्या न इति। अतश्चैत इत्यस्य प्रत्याख्यानाय पदे व्यवाय इति हर्त्ते व्याख्या न इत्यर्थ । तस्य। गतिकारकेत्यस्य। कुमति चेत्यत्र भाष्य इति। भाष्ये ह कथ भवितव्यं माषकुम्भवापेन किं नित्यं णत्वमाहोस्विद्विभाषा इति हि तत्र भा ष्यम्। षष्ठीसमुदयोत्तरपदकषष्ठीतत्पुरुषे। कुम्भस्य वाप कुम्भवाप । माषस्य कुम्भवापो माषकुम्भवाप इत्याकारके। षष्ठीतत्पुरुषपूर्वपदक इति । माषस्य कुम्भो माषकुम्भ माषकुम्भस्य वाप इत्याकारक इत्यर्थ । प्राप्नोति। पदव्यवाये

नेतिनिषेधप्राप्तिपूर्वका।लिङ्गविधिशास्त्रप्रामाण्यार्थं। एतद्भाष्यदर्शनेन पदस्यैवा य इतिनिषेधे उपसर्गादसमासेऽपीत्यस्येति वादिमतन्निरस्यति। यत्त्विति। इ त्यादेरिति। एवेति शेषः। प्रावनद्धमित्यादीति। आदिना पर्यवनद्धमित्यस्य ह ङ्ग्रहः। असङ्गत्यापत्तेरिति। उपसर्गादसमासेऽपीत्यस्य तत्र प्राप्तेः। तद्वित भिन्नपरत्व इति। एतच्च निरूपितम्। एतस्य पदविशेषणत्वे सापेक्षत्वात् स मासानुपपत्तिरिति शङ्का। भाष्यप्रामाण्येन वृत्तेः स्वीकारात्। बहुवचनमि ति। सूत्रे लिङ्गवचनयोरतन्त्रत्वात्।सामर्थ्यादिति। सेवितेति गोष्पदशब्दस्य साधु त्वादसेवितेऽपि तथैव स्वीकारे विफलकल्पना स्यादिति नञुपादानसामर्थ्याद सेवितेऽगोष्पदशब्दस्य प्रवृत्तिरिति भावः। असेवित इति बहुव्रीहिरिति। सेवि तशब्दे भावे क्तः। न सेवितं सेवनं यस्मिन्नित्यर्थः। गोष्पदं क्षेत्रमितीति। यत्त्वेत्र गो पदप्रमाणमल्पदेवमुच्यते। तेनाल्पप्रमाणत्वमफलति तदाह। क्षेत्रस्येति। अ ल्पप्रमाणत्वेन गोष्पदपरिच्छेद्यत्वारोपोऽत्रेति भाव। आत्मयापनमित्यस्यात्मन शरीरस्य यद्यापनं रक्षणं तत्साधनाय यत्स्थानं तस्मिन्नित्यर्थः यत्स्थानगामिना त्मन. शरीरस्य रक्षणं भवति तत्रेति फलितम्। प्रतिष्ठेत्यत्रातश्चोपसर्गे इत्यङ प्रत्यय.। लाभविपर्ययमिति। अत्र विपर्ययशब्दो विपर्ययत्वपरस्ततश्चार्शआदि भ्य इत्यच्। लाभस्य स्वत्वोत्पत्त्यनुकूलो यः स्वीकारविशेषस्तदात्मकस्तद्विपर्ययत्व न्तदभावत्वमेव। कादाचित्कतयेति। अनेन लक्षणाप्रयोजकमभ्यन्धः सूचितः। त न्मात इति। वृत्तिकारमत इत्यर्थ.। विकिरो वेति पाठ्यमिति। एतेन विकिरे त्यस्य पूरणाय तु विकिरशब्दस्य पाणिनिकार्त्तकसूत्रघटकत्वमिति अष्टमेव स- म्पत्ते। अन्यत्र वेति। अत्र वाशब्दार्थे द्रष्टव्यः। अधिकरणविकल्पस्य। अधि- करणविशेषे प्रवृत्तिविशेषस्येत्यर्थः। अन्यत्र। शकुनिभिन्ने। न शकुनिरूपम- धिकारणं सम्बध्यत इत्यस्यान्यथा शकुना वेत्यस्य वैयर्थ्यापत्तेरिति शेष.। वि ष्किरशब्दं साधयति। छधातोरिति। समाधानाभिप्रायमाह। इष्ट वेति। रा- सर्पिरिति। एतेन अर्थो निपातितस्य शब्दस्य राशि प्रवृत्तिर्न विरुध्यत इति सूचितम्। मस्करशब्दो वेणौ निपातनीयस्ततो मत्वर्थीये इनौ परिव्राजके मस्करिशब्दप्रवृत्तिर्यद्यपि सिध्यति तथापि परिव्राजके एतस्य साधुत्वमिति दर्शयितुं मस्करिशब्दोपादानम्। इदम्। मकारशब्दादिनिपातयेत सा

धनम् । भाष्यानुसारिमतमाह । अयमित्यादिना । इदमेव । एवं रीत्यासाधनमेवेति वैयर्थ्यापत्तिरिति । न च योगरूढ़िबोधनार्थमेव मस्करिशब्दपरिव्राजकशब्दयोरुपादानमस्त्विति वाच्यम् । यथा सप्तम्यां जनेर्ड इतिसूत्रे विशेषोपादानाभावेऽपि पङ्कजशब्दस्य साधनन्तस्य शब्दस्य योगरूढत्वश्चाश्रीयते एवमेव शिष्टप्रयोगादेव योगरूढत्वग्रहो भविष्यतीति तयोरुपादानं व्यर्थं स्यादित्यभिप्राय इ । मूले कास्तीराजस्तुन्दे नगर इत्यनेन नगरे वाच्ये ससुदायनिपातनमिति लभ्यते । नगरभिन्ने तु कातीरमित्यसमर्थ बोधयितुन्नगरमित्युक्तम् तत्र कुशब्दस्य कादेश साधयति । ईषदर्थे चेतीति । अत्र । के चित्त्विति कथने।प्रत्यक्षतो दर्शनमिति भावः। ऽ त्तोनि शेषः। कस्कादिषु पाठे विसर्गस्य स्थाने सत्वमिति लभ्यते सम्मति तु कथन्तस्य सूत्रस्य प्रवृत्ति सुट परावयवत्वेन विसर्गाभावेन तस्य सूत्रस्याप्राप्तेरिति भाव नन्वस्य भवदुक्तार्थेप्यकथं लाभ इत्यत आह। प्रकरणादिति।एवञ्च पूर्वोक्तरीत्याऽरुचिसाधनेन चाभ्रतो न सत्वमिति।पदान्तत्वविरहात्सत्वमित्यर्थ ।यदि लोपमकृत्वा तद्धत्तोरेव सकारोऽन्त्यादेश क्रियते तदा रुत्वन्दुर्वारमित्याह । तदिति । तत्प्रत्याख्यान इति । कुक्कुट्यादीनामित्यस्य प्रत्याख्यान इत्यर्थ । प्रायस्येति । चित्ति चित्तयोः परयो. प्रायस्य प्रायशब्दस्य सुगागमो भवतीत्यर्थ । के चित्तु सुडादेशः प्रायशब्दस्य चितिचित्तयोर्भवतीत्यर्थमाहु । प्रायशब्दार्थमाह । प्रायो नामेति । तद्धत्तोरिति प्रायस्ये ति च द्वयं गणसूत्रम्। आकृतिगणोयमिति मूले उक्तम्।अत्र प्रमाणन्तु नाजभ्फलाविति सूत्रभाष्ये ऽजभ्फलो प्रतिषेधे अकारप्रतिषेधोऽजभ्फलत्वादितिवार्त्तिकव्याख्यानावसरे परग्रमतानीत्यत्र सुडागमपर भाष्यमेव । गतात्परे परःगतानीत्यत्र राजदन्तादित्वाच्छतशब्दस्य परप्रयोगे परवल्लिङ्गत्वमप्राप्तमपि लिङ्गस्य लोकाश्रयत्वान्न भवति किं तु विशेष्यनिघ्नतैव भवति। इति सर्वेष्टसिद्धिरिति । सर्वेषामिष्टाना सुट्घटितानामाकृतिगणत्वात्सिद्धिरित्यय । सिद्धिशब्दा मङ्गलार्थ ।

## इति समासाश्रयविधीनां विवरणम् ।

इति श्रीमदनन्तकल्याणसद्गुणनिधानाखिलपण्डितसार्वभौमभूमण्डलप्र-
सारिविमलतरानवद्यसद्यशःपार्वणपीयूषभानुप्रभवागस्त्यकुल-
वंशावतंसश्रीभवदेवमिश्रात्मजभैरवमिश्रकल्पितायाञ्च-
न्द्रकलाभिधायां शब्देन्दुशेखरव्याख्यायां समा-
सप्रकरणं सम्पूर्णम् ।

---

॥ श्रीगणेशाय नमः ॥

# अथ तद्धितप्रकरणम् ।

नत्वा सरस्वतीं देवीं श्रीरामं सीतया युतम् ।
तद्धिताख्यप्रकरणं यथामति निरूप्यते ॥ १ ॥
यस्येषुभिर्निकृत्तानि शिरांस्यमरविद्विषः ॥
सोऽस्मानव्यात्प्रभुर्दयाद्रियः सर्वविदव्ययः ॥ २ ॥

समर्थः पदविधिरिति सूत्रस्य प्राक् स्मृतत्वात्तद्घटकपदसम्बन्धिविधिपदार्थजिज्ञासायां समासानां साक्षात्पदसम्बन्धिविधित्वमिति तन्निरूप्य घकालतनेष्विति सूत्रेण तमप्प्रत्ययेऽलुग्विधानात् ज्ञापकात्तद्धितानां सुबन्तात्प्रायेणोत्पत्तिस्वीकारात्तद्धितविधेरपि पदसम्बन्धिविधित्वमिति तद्विधीनान्निरूपणमावश्यकमित्याशयेनाह । समर्थेति । तेन । वाक्यमिति कथनेन । पदानाम् । समर्थानाम्प्रथमाद्वेति त्रयाणाम्पदानाम् । विशिष्टस्य । पदत्रयसमुदायस्य । एकार्थीभाव एव प्रवृत्तिरिति । अत एव स्वस्योपगोरपत्यमित्येवं समुदायस्योपक्रमे वाक्यमेव । न त्वण्प्रत्ययोत्पत्तिः । अत्र सूत्रे यत्समर्थपदन्तत्रैकार्थीभावलक्षणसामर्थ्यविशिष्टपरम् । समर्थः पदविधिरिति सूत्रेण गतार्थत्वादत आह । समर्थशब्द इति । परिनिष्ठितस्यैवेत्येतदुपपादयति । न हीति । तदुक्तम्भाष्ये । किम्पुनः सामर्थ्यम् । अभिधाने यल्लक्षणम् । किम्पुनस्तत्सवर्णानुपूर्वीकमिति । अनेकेति । अथानेकपदोच्चारणेन इयान्सामर्थ्यार्थोऽपि सत्ता तत्रापि प्रवृत्तिरिति सम्भवति एकस्य तु यथोच्चारणं क्षिप इत्यादौ कथन्तस्य प्रवृत्तिरित्याशङ्कायामाह । क्षिप्र इत्यत्रापि । तत्तद्विभक्तिरिति । समस्यादिविभक्तिरित्यर्थः । तत्तद्विभक्त्यन्तत्वञ्च शब्दस्य तदेकशेषस्य प्रतिपाद्यतामवगम्येन । यथोपगुनेः पुत्रः औपगवः यथा इत्यादावनुकरणाधिकारकार्यादिविशिष्टा इत्यर्थे

प्रथमोच्चारितशब्दबोध्यादुलूखलशब्दात्प्रत्ययः। एतस्य सूत्रस्य तत्रोपस्थितिसौकारात्सूलूखले क्षुण्णा इत्यर्थे क्षतसंनिधायांसूलूखलशब्दात्प्रत्ययो न तु स उलूखलशब्दात्तेन सावुलूखला इति न भवति किन्तु सौलूखला इत्येव। चानेकसमर्थासम्भवादिति। तेषां स्वार्थिकत्वे पृथगर्थनिरूपणस्य तत्राभावादिति भावः। तेन। दीव्यच्छब्देन। एकदेशविकृतन्यायस्याश्रयणं शक्तानवच्छेदकानुपूर्वीज्ञानार्थम्। अर्थस्य। दीव्यतिशब्दार्थस्य देवनस्य। तस्य ज्ञापकः। एकदेशविकृतन्यायस्य ज्ञापकः। एवञ्च। अर्थस्यावधित्वमिद्धौ च। अर्था एवेति। अवध्यवधिमतोः साजात्यनियमात्। अथाण्शब्दमात्रस्यैवाधिकारत्वेन सिद्धौ प्राग्दीव्यत इत्यस्योपादानम्प्राग्दीव्यतो येऽर्थास्तेष्वण्विधानार्थन्तेनाश्वपत्यादिभ्यश्चेत्यादिसूत्रेषु प्राग्दीव्यतीयेष्वर्थेष्वित्यस्य लाभः। तेन। आदेरच इतिव्याख्यानेन। अचामिति निर्द्धारणे षष्ठी। निर्धारणञ्च साधारणतद्धर्माश्रयात्स्यैकदेशस्य भवतीति प्रकृते आदेरच इति लब्धम्। निर्द्दिष्टस्यानिकत्वादिति। अनुपस्थानिनो निर्द्देशात्। प्रामादिकमिति। ण्याबाधकस्याणः प्रवृत्तेः। केचित्त्वेवंविधप्रयोगस्य गणपतिदेवतास्वत्र्यर्थेऽपि ततस्तत्र साधुरिति यति साधुत्वमिच्छन्ति। प्रातिपदिकप्रतीति। प्रातिपदिकस्येत्यर्थः। तदन्तग्रहणेन। समासप्रत्ययविधाविति निषेधात्। अत एवादितिग्रहणञ्चरितार्थम्। ननु प्राग्दीव्यतीयेष्वर्थेषु ण्यप्रत्ययस्य विधानेऽपत्येऽप्ययं बाध्यः स च न प्राप्नोति। देवतार्थे सावकाशस्याश्च परत्वादण्प्रत्ययबाधको य इतयानिञ्च ढक् स बाधकः स्यादत आह। ण्यादीनामिति। पूर्वविप्रतिषेधेनेति। ण्यादयोऽर्थविशेषलक्षणादणपवादात्पूर्वविप्रतिषेधेनेतिवार्त्तिकमत्र प्रमाणम्। परापवादबाधकत्वादिति। परो यः अणपवादस्तद्बाधकत्वादित्यर्थः। वार्त्तिकेऽर्थविशेषलक्षणादित्युक्त्या न योऽर्थसामान्यलक्षणोऽणपवादस्य परत्वाण्ण्यस्य बाधको भवति। यथोष्ट्रपतिर्नाम पशुः तस्येदमित्यर्थे पत्याध्वर्युपरिषदश्चेति इदमर्थस्य सामान्यस्य निमित्तत्वात्तत्रास्प्रत्यय एव। ननु यथार्थविशेषलक्षणापवादस्य ण्यप्रत्ययः पूर्वविप्रतिषेधेन बाधकस्तर्हि दितिशब्दादपत्येऽर्थे वनस्पतिशब्दाच्च समूहरूपेऽधिकृत्य कृते ग्रन्थ इति ढकोऽपि बाधः स्यादिति पेदिष्टापत्तिरित्याह। दितिवनस्पतिभ्यामिति। भाष्यात्। पूर्वविप्रतिषेधनिरूपणपरभाष्यात्।

यदि दित्यदितिशब्दौ ङीबन्तौ तदा न ङीप प्राप्ति परन्तु ङीबन्तात् ङीप प्राप्तिरस्त्येवेत्यत आह। तयो ङीचीति। लिङ्गविशिष्टपरिभाषाया अनित्यत्वम आदित्यैषम्य मित्यिन्दृशिङ्प्रयुक्तां खण्डयति। ह्यापसूत्र इति। अन्तपूर्वपदादित्यत्र भाष्य इति। स्थाम्नो लुगजिनात्तथैत्यनेन। स्थाम्नो लुग्वक्तव्य अश्वत्थामा। अजिनात्तथा। अजिनान्ताश्च लुग्वक्तव्य। कृष्णाजिन। सिंहाजिन इति। तत्र कैयट। उभाभ्यामपि तदन्तविधिरित्यत इति। ननु लोम धर्मकाल्केवलादपि सम्भवोऽस्तीत्यत आह। अभिव्यक्तेति। अपत्यार्थस्यापीति। लोम्नोऽपत्येषु बहुषु इत्याकारक वचन यद्यप्यपत्ये प्रत्ययविधायकन्तथाप्यधिनस्थाम्नोऽकार इत्यतोऽकार इत्यनुवर्त्तते स्थोम्न इति तु साधारणार्थेषु ये प्रत्ययविधायकास्तेषु पठितमिति लोम्न इत्यस्याप्यत्र पाठ इति भाव। उत्सादिभ्योऽञ्। अस्मिन् गणे वष्कयासे इति पठ्यते। वष्कयेति लुप्तविभक्तिकम्। वष्कयशब्दोऽञ लभते। असे असमासे। वाष्कय। असे किम्॥ गोवष्कयि॥ अत्रोपात्तमसे इत्येतत्क चित्तदन्तविधि ज्ञापयति। तेन धेनुशब्देन तदन्तस्य ग्रहणं सिध्यति। अधेनूनां समूह आधेनवमिति यथा। धेनुशब्दस्येह पाठात्। क्वचिदित्युपादानान्नञ्पूर्वत्व एवाञ प्रत्यय। तेन समूहरूपेऽर्थे धेनुकम्। गौधेनुकम्। अचित्तहस्तिधेनोष्ठग् भवति। धेनुरनञिकमुत्पादयतीति खण्डिकादिभ्यश्चेति सूत्रे पठितमापिशलिवचनमत्र प्रमाणम्। आपिशलिवचने इकशब्द स्स्थानिनि ठकारे लाक्षणिक। साधारणा प्रत्यया इति। तस्यापत्यमित्यारभ्य तस्य विकार इत्येतत्पर्यन्त यावन्तोऽर्था षष्ठ्यन्ते तेषु सर्वेष्वर्थेषु जायमाना प्रत्यया इत्यर्थ।

## इति साधारणा. प्रत्यया ॥

स्त्रीपुंसाभ्यान्नञ्स्नञौ। प्रकृतान्नसन्नियोगेनेति। उत्सादिभ्यये तिसूत्रादञस्य सम्प्रकृतमत्र अनुवृत्य तद्विधिसन्निधानेन नगागमविधानमस्त्वित्यर्थ। टिलोपेनेति। नन्वागम विधानवैयर्थ्य म् टिलोपसम्पादकतयैव चारितार्थ्यात्। लाघवाभावमपीत्याह। एवञ्चेति। ङीन्प्रसङ्ग इति। तथा च स्त्रैणीतिपदमाद्युदात्तं स्यात्। जाति नञ्चेपीति। गोत्रञ्चचरणै सहेत्यत्र। यञञोये तिसूत्रे यस्कादि

ष्यो गोत्र इतिसूत्राद् गोत्रग्रहणमनुवर्त्तते । सङ्घाङ्केत्यत्र तु गोत्रचरणादित्य-
तः । तत्रोभयत्र यथा ऋष्यपत्यस्यैवग्रहणन्तथाऽत्रापीति भावः । तदुक्तङ्कैयटेन ।
ऋष्यपत्यजनस्य लोके गोत्रमित्युच्यत इति । अत एव । ऋषिवाचकादुत्पन्नस्य ग्र
हणादेव । तादृशस्त्रीविवक्षायाम् । स्त्रिया गोत्रापत्यं स्त्रीत्यर्थविवक्षायाम् । ए
तत्प्रकृतिकेनेति । स्त्रीपुम्प्रकृतिकेत्यर्थः । अनभिधानादिति । अत्र मानन्तु यत्र
प्रकृतः सोऽनुवर्त्तिष्यत इत्याशङ्कापरभाष्यम् । अकारविशिष्टस्येति । अत्र वि
वक्षिताद्विशिष्टस्येति नोक्तम् । नीगागमस्य वनोवश्चेतीत्यत्र प्रसिद्धत्वात् । नकृ
तः । उभाभ्यामञ्प्रत्यय एव न कृतः । संयोगान्त्यलोपापत्तेरिति । अन्तर्वर्त्ति
विभक्त्या स्वादिष्विति वा पदत्वसत्त्वात् । अनया । पुंसो भय्ये त्यनेन विहितभ-
संज्ञया । न्यायेन । बाध्यबाधकभावप्रयोजककृन्न्यायेन । भसञ्ज्ञाविधानसाम
र्थ्याद्बाध इति त्वन्यत् । एतावतापि लाघवाभाव इत्याशयेनाहालमिति । इति
स्यादिति । तत्र तद्धितस्य द्विगुनिमित्तत्वाभावः स्पष्ट एव । अनभिधानादिति
अत्र मानन्तु प्रकृतसूत्रस्थभाष्यमेव । तथाहि । इहकस्मान्न भवति त्रैविद्यः पा
ञ्चनदः पाड्कुल इति एवम्पूर्वपक्षे नैवं विज्ञायते तिस्रो विद्या अधीते त्रैविद्य
इति । कथन्तर्हि त्र्यवयवा विद्या त्रिविद्या । त्रिविद्यामधीते त्रैविद्य इति । इ
हापि नैवं विज्ञायते पञ्चसु नदीषु भवः पाञ्चनद इति । किन्तर्हि पञ्चानां न
दीनां समाहारः पञ्चनदम् । तत्र भवः पाञ्चनद इति षाड्कुल इत्यस्यापि पठित
स्य कृपाद्यर्थप्रत्ययेनोपपत्तिरिति । पञ्चनदमिति । नदीभिश्चेति समाहारेऽव्य
यीभावः । एवं समाधाय पुनः पञ्चकपालस्येदं खण्डम्पाञ्चकपालमित्यत्र पञ्च
सु कपालेषु संस्कृत इत्यर्थे जातस्याणो लुकि पुनस्ततो जातस्येदमर्थकस्या
णो लुगभावार्थन्द्विगोर्लुकि तन्निमित्तग्रहणं कर्त्तव्यमिति वार्त्तिककृतोक्त-
म् । ततो भाष्यकृता पठितान्तसमर्थम्प्रसाध्य तन्निमित्तग्रहणमिति वार्त्तिकम्प्र-
त्याख्यातम् । यत्र तन्निमित्तग्रहणे क्रियमाणे पञ्चसु कपालेषु संस्कृतः पञ्च-
कपालः पञ्चकपाल्यां संस्कृत इत्यपि विग्रहे पञ्चकपाल इत्येव यथा स्या-
दित्येवमर्थमर्थविशेषासम्भवेऽतन्निमित्तादपीति वार्त्तिकन्तदुक्तं वचनाना-
रम्भादपि भाष्यकृतैवप्रत्याख्यातम् एतच्च न वक्तव्यम् । इहाराभिमोगर्द्ध
साध्यम् । पञ्चसु कपालेषु संस्कृतः । पञ्चकपाल्यां संस्कृतः । पञ्चकपाल इति ।

तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रहः अपरस्मादुत्पत्तिर्भविष्यत्यविरविकन्यायेन। अवेर्मांसमिति विगृह्याविकशब्दादुत्पत्तिर्भवति आविकमिति। यत्राविकशब्दः स्वार्थककान्तः एवम्पञ्चकपालेषु संस्कृत इति विगृह्य पञ्चकपाल इति भविष्यति। पञ्चकपाल्या संस्कृत इति विगृह्य वाक्यमेवेति। अविरविकन्यायेनेति। अवि अविकन्यायेन तद्द्वारेण यथा प्रत्ययमुत्पादयति तथायमपीत्यर्थः। तत्र यथाऽवेर्मांसमिति विग्रहेऽप्यविकशब्दादेव प्रत्ययो न त्वविशब्दात्तथा पञ्चकपाल्या संस्कृतमित्यर्थे वाक्यमेव न तु पञ्चकपालीशब्दात्प्रत्ययस्तेनानभिधानात्तद्धितानुत्पत्तिरिति भावः। विगृह्य अविकशब्दादुत्पत्तिरित्यत्र परावरयोगे चेति क्त्वाप्रत्ययः। अस्मिन् सूत्रे गोत्रेऽलुगचीत्युत्तरसूत्रादचीत्यस्यापकर्षणाजादिरित्यर्थलाभः। प्रायेण तु भाष्ये अश्वविकन्यायेनेति पाठो दृश्यते। तस्यायमर्थः। अश्वविकशब्दयोर्यो न्यायः प्रकारस्तेनेत्यर्थः। तत्र यथा अविशब्देन विग्रह एव प्रत्ययस्त्वविकशब्दादेव तथेत्यर्थः। अयमलुगिति। बाधक इति शेषः। तेन। विवक्षित इत्यर्थकरणेन। अत एव। तादृशार्थस्याभिप्रेतत्वादेव। अत्र। गोत्रेऽलुगचीति सूत्रे। परिभाषिकम्। शास्त्रकारीयसङ्केतविषयप्रतिपादकम्। युवशब्दसाहचर्यादिति। तत्र युवशब्दो यथा शास्त्रीयार्थस्य प्रकाशकस्तथा तत्सूत्रपूर्ववृत्तिसूत्रघटको गोत्रशब्दोऽपि तादृशार्थस्य प्रकाशकः। ननु यदि तद्राजस्येति प्रकरणविहितालुक एवायमलुग्बाधकस्तदा द्वितीयाध्याय एव तस्मिन् लुक्प्रकरणे इदं सूत्रं कर्त्तव्यमत आह। प्राग्दीव्यत इतीति। ननु गार्गीया इत्यत्र यस्येति लोपस्याभीयासिद्धत्वेन न तद्धितपरत्वमिति कथं लोपप्राप्तिरत आह। आभीयत्वादिति। आरम्भसामर्थ्यादिति। यद्याभीयासिद्धत्वं स्यात्तदापत्ययकारस्य तद्धितपरत्वाभावेन सूत्रारम्भोऽनर्थकः स्यादिति। ग्लौचुकायनेः छो नेति। ग्लुचुकशब्दात्प्राचामवृद्धादिति गोत्रे फिञि ततो यून्यणि तस्माच्छात्रार्थविवक्षायां यूनि जातस्याणो लुकि वृद्धत्वाभावाच्छो नेत्यर्थः। ग्लौचुकायनदृश्यमिति। ग्लौचुकायनादागतमित्यर्थः। पैलादिभ्यश्च। एतस्मिन् सूत्रे यूनि लुगित्यस्यानुवृत्तावेतस्य गोत्रप्रत्ययान्तात्परस्य प्रत्ययस्य लुग्विधायकत्वमित्येष निर्णय इत्यभिप्रायेण पैलः पिता पुत्रपर्यन्तम्। यः शिवादेः इत्यादिना युवप्रत्ययस्य लुग-

भ्यो गोत्र इतिसूत्राद् गोत्रग्रहणमनुवर्त्तते । मङ्घाङ्के त्वत्र तु गोत्रचरणादित्वतः । तत्रोभयत्र यथा स्यपत्यस्यैव ग्रहणन्तथाऽत्रापीति भावः । तदुक्ताङ्के यटेन । अपत्यप्रजनस्य लोके गोत्रमित्युच्यत इति । अत एव । अपत्यवाचकादुत्पन्नस्य ग्रहणादेव । तादृशस्त्रीविवक्षायाम् । स्त्रिया गोत्रापत्यं स्त्रीत्वर्थविवक्षायाम् । एतत्प्रकृतिकेनित । स्त्रीपुम्प्रकृतिकेत्यर्थः । अनभिधानादिति । अत्र मानन्तु मत् प्रकृतः सोऽनुवर्त्तिष्यत इत्याशङ्कापरभाष्यम् । अकारविशिष्टस्येति । अत्र विवक्षितादिशिष्टस्येति नोक्तम् । नीगागमस्य वनीवश्चीतीत्यत्र प्रसिद्धत्वात् । नक्तः । उभाभ्यामञ्प्रत्यय एव न कृतः । संयोगान्त्यलोपापत्तेरिति । अन्तर्वर्त्तिविभक्त्या स्वादिष्विति वा पदत्वसत्त्वात् । अनया । पुंसो भत्वे त्वनेन विहितभसंज्ञया । न्यायेन । बाध्यबाधकभावप्रयोजकक्लृप्तन्यायेन । भसंज्ञाविधानसामर्थ्याद्बाध इति त्वन्यत् । एतावतापि लाघवाभाव इत्याशयेनाहालमिति । इति स्यादिति । तत्र तद्धितस्य द्विगुनिमित्तत्वाभावः स्पष्ट एव । अनभिधानादिति । अत्र मानन्तु प्रकृतसूत्रस्थभाष्यमेव । तथाहि । इहकस्मान्न भवति त्रैविद्यः पाञ्चनदः पाड्कुल इति एवम्पूर्वपक्षे नैवं विज्ञायते तिस्रो विद्या अधीते त्रैविद्य इति । कथन्तर्हि त्र्यवयवा विद्या त्रिविद्या । त्रिविद्यामधीते त्रैविद्य इति । इह्यापि नैवं विज्ञायते पञ्चसु नदीषु भवः पाञ्चनद इति । किन्तर्हि पञ्चानान्नदीनां समाहारः पञ्चनदम् । तत्र भवः पाञ्चनद इति षाडकुल इत्यस्यापि षष्ठीतत्पुरुषाद्भवार्थप्रत्ययेनोपपत्तिरिति । पञ्चनदमिति । नदीभिश्चेति,समाहारेऽव्ययीभावः । एवं समाधाय पुनः पञ्चकपालस्येदं खण्डम्पाञ्चकपालमित्यत्र पञ्चसु कपालेषु संस्कृत इत्यर्थे जातस्याणो लुकि पुनस्ततो जातस्येदमर्थकस्याणो लुगभावार्थन्द्विगोर्लुकि तन्निमित्तग्रहणं कर्त्तव्यमिति वार्त्तिककृतोक्तम् । ततो भाष्यकृता षष्ठीबलात्तमर्थम्प्रसाध्य तन्निमित्तग्रहणमिति वार्त्तिकम्प्रत्याख्यातम् । यत्र तन्निमित्तग्रहणे क्रियमाणे पञ्चसु कपालेषु संस्कृतः पञ्चकपालः पञ्चकपाल्यां संस्कृत इत्यपि विग्रहः पञ्चकपाल इत्येव यथा स्यादित्येवमर्थमर्थविशेषासम्भवेऽतन्निमित्तादपीति वार्त्तिककृदुक्तं वचनान्तरन्तदपि भाष्यकृतैवमप्रत्याख्यातम् एतच्च न वक्तव्यम् । इहाग्रामाभिश्चेगस्तं साध्यम् । पञ्चसु कपालेषु संस्कृतः । पञ्चकपाल्यां संस्कृतः । पञ्चकपाल इति ।

तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रहः अपरस्मादुत्पत्तिर्भविष्यत्यविर-विकन्यायेन। अवेर्मांसमिति विगृह्याविकशब्दादुत्पत्तिर्भवति आविकमिति। अत्राविकशब्दः स्वार्थकान्तः एवम्पञ्चकपालेषु संस्कृत इति विगृह्य पञ्चकपाल इति भविष्यति। पञ्चकपाल्यां संस्कृत इति विगृह्य वाक्यमेवेति। अविरविकन्यायेनेति। अविः अविकन्यायेन तद्द्वारेण यथा प्रत्ययमुत्पादयति तथायमपीत्यर्थः। तत्र यथाऽवेर्मांसमिति विग्रहेऽप्यविकशब्दादेव प्रत्ययो न त्वविशब्दात्तथा पञ्चकपाल्यां संस्कृतमित्यर्थे वाक्यमेव न तु पञ्चकपालीशब्दात्प्रत्ययस्तेनानभिधानात्तद्धितानुत्पत्तिरिति भावः। विगृह्य अविकशब्दादुत्पत्तिरित्यत्र परावरयोगे चेति क्त्वाप्रत्ययः। अस्मिन् सूत्रे गोत्रेऽलुगचीत्युत्तरसूत्रादचीत्यस्यापकर्षणाजादिरित्यर्थलाभः। प्रायेण तु भाष्ये अव्यविकन्यायेनेति पाठो दृश्यते। तस्यायमर्थः। अव्यविकशब्दयोर्यो न्यायः प्रकारस्तेनेत्यर्थः। तत्र यथा अविशब्देन विग्रह एव प्रत्ययस्त्वविकशब्दादेव तथेत्यर्थः। अयमलुगिति। बाधक इति शेषः। तेन। विवक्षित इत्यर्थकरणेन। अत एव। तादृशार्थस्याभिप्रेतत्वादेव। अत्र। गोत्रेऽलुगचीति सूत्रे। परिभाषिकम्। शास्त्रकारीयमङ्केतविषयप्रतिपादकम्। युवशब्दसाहचर्यादिति। तत्र युवशब्दो यथा शास्त्रीयार्थस्य प्रकाशकस्तथा तत्पूर्ववृत्तिसूत्रघटको गोत्रशब्दोऽपि तादृशार्थस्य प्रकाशकः। ननु यदि तद्राजस्येति प्रकरणविहितालुक एवायमलुग्बाधकस्तदा द्वितीयाध्याय एव तस्मिन् लुक्प्रकरणे इदं सूत्रं कर्त्तव्यमत आह। प्राग्दीव्यत इतीति। ननु गार्गीया इत्यत्र यस्येति लोपस्याभीयासिद्धत्वेन न तद्धितपरत्वमिति कथं लोपप्राप्तिरत आह। आभीयत्वादिति। आरम्भसामर्थ्यादिति। यद्यत्राभीयासिद्धत्वं स्यात्तदापत्यप्रत्ययस्य तद्धितपरत्वाभावेन सूत्रारम्भोऽनर्थकः स्यादिति। ग्लौचुकायने छो नेति। ग्लुचुकशब्दात्प्राचामवृद्धादिति गोत्रे फिनि ततो यून्यणि ततश्छात्रार्थविवक्षायां यूनि जातस्याणो लुकि वृद्धत्वाभावाच्छो नेत्यर्थः। ग्लौचुकायनदृष्यमिति। ग्लौचुकायनादागतमित्यर्थः। पैलादिभ्यश्च। एतस्मिन् सूत्रे यूनि लुगित्यस्यानुवृत्तावेतस्य गोत्रप्रत्ययान्तात्परस्य प्रत्ययस्य लुग्विधायकत्वमित्येव निर्णय इत्यभिप्रायेण पैल पिता पुत्रश्चेत्युक्तम्। यः शिष्यत इतिन्यायेन युवप्रत्ययस्य लुक्र-

पि प्रकृतेरेव प्रत्ययार्थाभिधायकत्वम्। वारि पश्चेत्यादौ प्रत्ययस्यामी लुकि कृतेऽपि यथा प्रकृतेः कर्माभिधायकत्वन्तद्वत्। न चैवम्पैलशब्दात्कदा चिद् गोत्रापत्यस्य कदा चिद्यूनो बोध इति नियमो न स्यात्। पैलशब्दस्य श-क्त्योभयबोधकत्वादिति वाच्यम्। वारिशब्दमात्रादयथा कर्तृकर्मान्यतराभिधा-नमन्यममभिव्याहारात्तथा प्रकृतेऽपि प्रकरणादिना गोत्रयूनोरन्यतरस्याभिधा-नसम्भवात्। मूले तद्राजाच्चाण इति। गणसूत्रमेतत्। अत्र तद्राजादिति अण इति च समानाधिकरणपञ्चम्यन्तम्। अस्यापि यूनि जातस्य प्रत्ययस्य लुग-भिधायकतया तद्राजसंज्ञको योऽण् सोऽत्र गोत्रार्थक एव गृह्यते। इञः प्रा-चाम्। अत्र गोत्र इति यद्यपि न पक्षतम्। तथापि सामर्थ्याल्लभ्यमित्याह। इञ-न्तादिति। व्याख्यानादिति। पैलादिगणे शालङ्किसात्यकिप्रभृतिशब्दानामि-ञन्तानाम्पाठदर्शनमूलकादित्यर्थः। तत्र हि तेषामुपादानमप्रागर्थम्। यदि ता-न्यपि प्राचामेव गोत्राणि तदा इञः प्राचामित्येव सिद्धे तेषामुपादानमन-र्थकं स्यादिति प्राचामिति नेञ्प्रत्ययात्परस्य विकल्पेन लुग्विधायकमिति। न च प्राचामहद्वादितिवदिञः प्राचामित्यत्रापि प्राचाङ्ग्रहणं विकल्पार्थम-स्तु। पैलादिषु शालङ्किप्रभृतिग्रहणन्नित्यार्थमस्त्विति वाच्यम्। एवं सति इञ इत्येव सूत्रमस्तु। नित्यार्थं शालङ्किप्रभृत्युपादानेन ज्ञापकेनेञ इत्यस्य वैक-ल्पिकत्वसिद्धेः प्राचामित्यस्य वैयर्थ्यापत्तेरिति। फक्फिञोरितिसूत्रविषये आह। अनन्तरस्येति। वैत्यधिकार इति। समर्थानाम्प्रथमादेत्यधिकारेऽस्य पा-ठात्। द्विगोर्लुगित्यादाविति। तेषामतदधिकारे पाठाद्ग्रहणसम्बन्धोऽन्यथा स्यादिति भावः। गर्गादियञन्तकृतशब्दादिति। कृतशब्दप्रकृतिकयञन्तकात्य-शब्दादित्यर्थः। सूत्र इति। अस्य प्रथमादित्यत्रान्वयः। प्रथमशब्दस्य प्रथमोच्चा-रितशब्दबोध्यपरः। अन्यथा सूत्रे प्रथमोच्चारितस्तस्येति न घासम्प्रत्यय इय-त इत्यनुपपत्तिः स्यात्। न च यः प्रथमोच्चारितशब्दबोध्यो नासौ सूत्रे स्थि-त इति पुनरप्यनुपपत्तिरिति वाच्यम्। प्रथमशब्दस्य सूत्रोच्चारितप्रथमशब्द-बोध्ये लाक्षणिकत्वादिति। सुबन्तात्तद्धितोत्पत्तिरिति यथा लभ्यते तत्प्रकार-माह। यकारान्तत्वेनेतीति। नन्विदं ज्ञापकं व्यु प्रत्ययविषयएवास्त्वित्यत आह। स्वार्थ इति। स्वार्थे परिसमाप्तस्य। सङ्ख्याकारकादिप्रयुक्तकार्येण भंस्क तस्य।

न ह्युपगुशब्दमात्रस्यापत्यरूपार्थेन योगो भवति किन्तूपगोरित्यस्येति भावः। प्रकारान्तरेण सुबन्तात्तद्धितोत्पत्तिवादिमतन्निरस्यति। यत्त्विति। जघन्यवृत्ति। लक्षणावृत्ति। आदौ शक्यार्थोपस्थितिस्ततोनुपपत्तिग्रहस्ततो लक्षणा ततो लक्ष्यार्थोपस्थितिरिति लक्षणाया विलम्बितोत्पत्तिकफलप्रयोजकतया जघन्यत्वम्। जघनस्याशुद्धत्वात्तत्र स्थितस्य कुत्सितत्वमिति जघनमर्हतीति व्युत्पत्त्या जघन्यशब्देन कुत्सित उच्यते। उपस्थितपष्ठ्येवेति। उपस्थितम्परित्यज्यानुपस्थितकल्पने मानाभावादिति भावः। ननु सूत्रे प्रथमोच्चारितस्तस्येतिशब्दस्तद्बोध्यत्वञ्च सर्वस्य शब्दस्य सर्वनाम्नो यावत्परामर्शकत्वादत आह। तस्येतीति। न विरुद्धेति। तस्यापि सूत्रोच्चारितप्रथमशब्दबोध्यत्वसम्भवादिति भावः। ननु प्रवर्त्तमानस्य बाधकत्वव्यवहारो युक्त इति यत्रादिवृद्धिर्निषिध्यते तत्रादिवृद्ध्यभावाल्लोपधावृद्धे· कथम्बाध इत्यत आह। स्वविषय इति। स्वोयोद्देश्यतावच्छेदकाक्रान्त इत्यर्थ। वैयसवमिति। इगन्ताच्च लघुपूर्वादित्यण्। अत्र प्रामाण्यादिवृद्धिर्न युभ्यामिति निषिध्यते। वृद्धार्थमिति। यद्यादिवृद्धे र्बाधकता न स्यात्तदाऽऽत्रादिवृद्धेरुपधावृद्धेश्च प्राप्तया पौष्करसादिरित्यस्य सिद्धौ स पाठो व्यर्थः स्यादिति तेन पाठेनादिवृद्धिविधायकशास्त्रविषये यद्वृद्ध्यन्तरविधायकं शास्त्रम्प्राप्तन्तद्बाध्यत इति कल्प्यत इति। ननु यस्मिन्नर्विते नोभयपदवृद्धिप्राप्तिस्तत्रोभयपदवृद्धिविधायकतया तत्पाठचरितार्थ इत्यत आह। ढकादिरिति। अनभिधानादिति। पुष्करसच्छब्दस्य ज्ञापकतापरभाष्यप्रामाण्यात्तथा कल्प्यत इति भाव·। परत्वाद्बाधवादिमतन्निरस्यति। परत्वादिति। कार्यद्वयासम्भव एवेति। हृत्रेभ्य इत्यत्र यथा। अपवादत्वादपि न बाधकत्वमित्याह। नापीति। चारितार्थ्यादिति। एवञ्चापवादत्वबीजासत्त्वमाविष्कृतम्। सामान्येन। इदम्पदार्थसामान्ये। इयञ्च शङ्का शाब्दबोधवैलक्षण्यानादरेण प्रवृत्ता। समाधानमपि तथैव।एतेन सामान्ये विशेषान्तर्भावेऽपि तस्येदमित्यनेन सिद्धिकल्पने इदन्त्वेनापत्यस्य भानम्भविष्यति तस्यापत्यमितिसूत्रसत्त्वे त्वपत्यत्वेनापत्यस्य शाब्दबोधविषयत्वमिति तस्येदमित्यस्यस्येऽपीत्यमङ्गतमित्यपास्तम्। ननु तस्यापत्यमिति सूत्राभावेऽत इञिति सूत्रमर्थान्तरेऽपि प्रवर्त्तेतेत्यत आह। तस्यापत्यमत इञित्येवेति। कृत्येति। प्राप्तस्येति शेषः। अनेन। तस्यापत्यमित्यनेन। अप्राप्तस्ये-

ति। शेषेऽर्थे तस्य विधानादिति भावः। शैषिकेणासिद्धेः। शैषिकस्याप्राप्तेः। उत्सर्ग इतीति। असावुत्सर्गः शेष एवेति योजना। उत्सर्गः। इदन्त्वरूपसामान्यधर्मप्रकारकप्रतीतिविशेष्यः। तदेतदुपपादयति। योगविभागाभाव इति। प्रकृतिविशेष इति। अदन्तात्मकप्रकृतिविशेषेत्यर्थः। योगविभागसत्त्वे न शेषत्वमित्येतदुपपादयति। इदंशब्दो हीति। एवञ्च यत्पर्यवसितन्तदाह। तत्र शेषेति। दण्डन्यासानुसारिमतङ् खण्डयति। येति। ननु यदीदन्त्वे नापत्यविवक्षायाञ्चाण तदा आपत्यं वा गोत्रमित्यत्रापत्यस्यापत्यमित्यर्थेऽत इञ् स्यादत आह। आपत्यं वेति। दाशरथायेति प्रयोगस्य त्वनुपपत्तिरेवेत्याह। दाशरथायेत्यादीति। अन्तरङ्गत्वात्। वर्णमात्रापेक्षत्वे नान्तरङ्गत्वात्। इदञ्चान्तरङ्गत्वं स्वनिमित्तसद्भावात्पूर्वम्प्रवृत्तौ नियामकम्। अत्राकृतव्यूहपरिभाषया यस्य शास्त्रस्याप्रवृत्तिः सम्पादनीया तत्प्रवृत्तेः प्राक् तच्छास्त्रस्य यन्निमित्तन्तस्य शास्त्रान्तरेण यत्र विनाशः सम्भावितस्तत्र परिभाषाप्रवृत्तिरिति मत्वा शङ्कते। यद्यप्यत्रै केति। निमित्तविनाशसम्भावनैवेति। अत्रैवकारेण स्वप्रवृत्त्युत्तरकाले यत्र स्वनिमित्तस्यान्यशास्त्रेण विनाशस्तत्र प्रवृत्तिरित्यर्थव्यवच्छेदः। समर्थग्रहणस्योक्तव्यूहपरिभाषाज्ञापकत्वङ् खण्डयति। वस्तुत इति। अन्तरङ्गन्यायलब्धार्थानुवादः। स्वनिमित्तस्यैव सद्भावात्तद्धितोत्पत्तेः प्रागिकादेशे कृतसन्धिकार्यादेव भविष्यतीति भावः। अनुवादस्य फलमाह। विपुण इत्यादावेति। अत एव। समर्थग्रहणस्य न्यायलब्धार्थानुवादत्वादेव। अत्रान्तरङ्गत्वं यद्विभक्त्यन्तादुत्पत्तिस्तद्धितस्य सम्भाविता तद्विभक्तिप्रागभावसमानकालिकप्राप्तिकर्तृत्वरूपम्। अन्तरङ्गानपीतिपरिभाषैकवाक्यत्वात्ते नाखिमानणिति निर्देशः सङ्गच्छते। तद्धितोत्पत्तिप्राप्तिकालिकत्वविवक्षायान्तु विभक्तिनिमित्तकदीर्घस्य पूर्वमापत्तिः स्यात्। इदम्। वत्सुपगोरपत्यत्वे चेत्यत्र प्रत्ययप्रसक्तिरूपम्। प्रकृते तद्धितविधेः समर्थस्वञ्च तद्धितप्रकृतित्वाभिमतार्थसम्बद्धार्थाभिधायकतद्धितविधायकत्वरूपम्। तथाच नास्ति सामर्थ्यस्यैकार्थीभावरूपस्य तत्परिभाषाविषयत्वादप्यपि तदाश्रयणफलम्प्रतिपादयति। तथापीति। अविवक्षित इति। अर्हद्ध्यपुंसकमित्यनेन ज्ञापितत्वात्। सैनोपगवी। गर्गा इति सिद्धम्। लोके गोत्रमिति। तथा चेदं सूत्रमनर्थकमिति भावः। तत्त्वेन। यौवत्वे-

न। यदीयमौत्रप्रभृत्यपत्यमिति। अत्र यदीयमित्यस्य यत्सम्बन्धीत्यर्थः। पौत्रशब्दस्य जन्यताविशिष्टजन्यपरतया एतद्धटकजन्यतायाश्च निरूपकम्प्रति नित्यसाकाङ्क्षतया यत्पदार्थस्योपस्थितत्वात्तस्यैव निरूपकत्वपर्यवसानम्भवति। एवञ्च स्वनिरूपितजन्यताविशिष्टजन्यत्वस्यैव सम्बन्धस्य यदीयमित्यत्र सम्बन्धत्वेन भानं कल्प्यम्। अपत्यशब्दस्य च जन्यताविशिष्टपरत्वादेतद्धटकजन्यतापि प्रत्यासत्त्या यत्पदार्थनिरूपिता विवक्षिता। एवञ्च यदाङ्गिरसः पौत्रस्य विवक्षा तदाऽपत्यत्वमप्यत्राङ्गिरोनिरूपितमेव गोत्राधिकारीयप्रत्ययोत्पत्तिनियामकमित्यङ्गिरसो गोत्रङ्वर्गस्यापत्यमित्यर्थविवक्षायामुभयघटकजन्यतानिरूपकस्यैकत्वप्रतीतिरतोऽत्र नाणिति भावः। एवं युवत्वमपि तन्निरूपितमेव विवक्षितम्प्रत्यासत्तेस्तत्फलमाह। पौत्रपरेति।गर्गापत्यस्यापत्यमित्यर्थविवक्षायामपत्यशब्दार्थघटकजन्यतायाङ्गर्गापत्यनिरूपितत्वम्प्रतीयते न तु गर्गनिरूपितत्वमिति न पुन्यण् प्रत्यय इति भावः। अत एव। अपत्यत्वेन बोधादेव। अपत्यत्वेन बोधे भाष्यान्तरमपि साधकमित्याशयेनाह। अत एवेति। अपत्यत्वेन बोधस्याभिमतत्वादेव। आपत्यशब्दस्य पौत्रपरत्वमुपपादयति। अपत्यस्यापत्यमिति। नन्वेवमापत्यशब्दस्य पौत्रे यः प्रत्ययस्तत्परत्वं कथमत आह। तेन चेति। आपत्यशब्देन चेत्यर्थः। अनयोरिति। आपत्यादित्यत्रापत्यशब्दो यदि प्रत्ययपरो न स्यात्तदाऽर्थात्प्रत्ययविधानानुपपत्त्या वार्त्तिकामङ्गतिः स्यादिति तत्र लक्षणाया आवश्यकत्वे तदानुपूर्वीकत्वादापत्यमित्यत्रापि लक्षणेति भावः। अत एव। अपत्यप्रत्ययान्तस्य पुंस्त्वादेव। कप्रत्ययापत्तेरिति। वृद्धत्वादित्यादिः। अन्या अपि। गोत्रसंज्ञाया अपि। प्रत्ययस्य संज्ञाकरणमावश्यकमित्याह। वार्त्तिकमत इति। इति वदेदिति। तावतापि न्यासलाघवस्य सम्भवात्। संज्ञिविकल्पश्चेति। सूत्रकारमतेऽर्थस्य संज्ञा वार्त्तिकमते तु प्रत्ययस्येति संज्ञिविकल्पलाभः। द्वितीयवार्त्तिकं व्याचष्टे। आपत्यादित्यादेरिति। इत्यर्थ इति। एवञ्च गर्गादेर्यदा पौत्रप्रभृतेरपत्ये चतुर्थादौ जीवद्वंश्ये प्रत्ययः क्रियते तदा स्वार्थे द्वितीयो यञिञोश्चेत्यादिना फगादिः क्रियते गार्ग्यायण इति। स चास्त्रियामित्यनेन स्त्रियान्द्वितीयप्रत्ययाभावाद्गार्ग्येव भवतीत्युक्तम्भवति। युवसंज्ञमेवेतीति। जीवति तु वंश्ये इत्यत्र

ति। शेषेऽर्थे तस्य विधानादिति भावः। शैषिकेणासिद्धे। शैषिकस्याप्राप्तेः। उत्सर्ग इतीति। असावुत्सर्गः शेष एवेति योजना। उत्सर्गः। इदन्त्वरूपसामान्यधर्मप्रकारकप्रतीतिविशेष्य। तदेतदुपपादयति। योगविभागाभाव इति। प्रकृतिविशेष इति। अदन्तात्मकप्रकृतिविशिष्टेत्यर्थः। योगविभागसत्त्वे न शेषत्वमित्येतदुपपादयति। इदशब्दो हीति। एवञ्च यत्पर्यवसितन्तदाह। तत्र शेषेति। दण्डग्रन्थानुसारिमतद् खण्डयति। ये त्विति। ननु यदीदन्त्वे नापत्यविवक्षायाञ्चाण तदा आपत्यं वा गोत्रमित्यत्रापत्यस्यापत्यमित्यर्थेऽत इञ् स्यादत आह। आपत्य वेति। दाशरथायेति प्रयोगस्य त्वनुपपत्तिरेवेत्याह। दाशरथायेत्यादीति। अन्तरङ्गत्वात्। वर्णमात्रापेक्षत्वेनान्तरङ्गत्वात्। इदञ्चान्तरङ्गत्व स्वनिमित्तसद्भावात्पूर्वम्प्रवृत्तौ नियामकम। अवाकृतव्यूहपरिभाषया यस्य शास्त्रस्याप्रवृत्ति सम्पादनीया तत्प्रवृत्तेः प्राक् तच्छास्त्रस्य यन्निमित्तन्तस्य शास्त्रान्तरेण यत्र विनाश सम्भावितस्तत्र परिभाषाप्रवृत्तिरिति मत्वा शङ्कते। यद्यप्यत्रेति। निमित्तविनाशसम्भावनैवेति। अत्रैवकारेण स्वप्रवृत्त्युत्तरकाले यत्र स्वनिमित्तस्यान्यशास्त्रेण विनाशस्तत्र प्रवृत्तिरित्यर्थश्च व्यवच्छेद्यः। समर्थग्रहणस्याकृतव्यूहपरिभाषाज्ञापकत्वं खण्डयति। वस्तुत इति। अन्तरङ्गन्यायलब्धार्थानुवाद। स्वनिमित्तस्यैव सद्भावात्तद्धितोत्पत्तेः प्रागेकादेशे सतसन्धिकार्यादेव भविष्यतीति भावः। अनुवादस्य फलमाह। विपुण इत्यादावेति। अत एव। समर्थग्रहणस्य न्यायलब्धार्थानुवादत्वादेव। अथान्तरङ्गत्वं यद्विभक्त्यन्तादुत्पत्तिस्तद्धितस्य सम्भाविता तद्विभक्तिप्रागभावसमानकालिकप्राप्तिकर्तृत्वरूपम्। अन्तरङ्गानपीतिपरिभाषैकवाक्यत्वात्तेनाखिमानणिति निर्देशः सङ्गच्छते। तद्धितोत्पत्तिप्राप्तिकालिकत्वविवक्षायान्तु विभक्तिनिमित्तकदीर्घस्य पूर्वमापत्तिः स्यात्। इदम्। यस्त्वसुपगोरपत्यश्चेवस्येत्यत्र प्रत्ययप्रकृतिरूपम्। प्रकृते तद्धितविधे समर्थत्वञ्च तद्धितप्रकृतित्वाभिमतार्थसम्बन्धार्थाभिधायकतद्धितविधायकत्वरूपम्। तथाच नास्ति सामर्थ्यस्यैकार्थीभावरूपस्य तत्परिभाषाविषयत्वादत्रापि तदाश्रयणफलम्प्रतिपादयति। तथापीति। अविवक्षित इति। अर्द्धर्चपुंसकमित्यनेन ज्ञापितत्वात्। तेनोपगवी। गर्ग्या इति सिद्धम्। लोके गोत्रमिति। तथा चेद सूत्रमनर्थकमिति भावः। तत्वेन। पौत्रत्वे-

सङ्ख्यावाचकस्याध्ययणादेव । गोत्रेऽभिधित्सित इत्यनेन यन्निरूपितङ्गोत्रत्वन्त यत्तिसम्बन्धिगोत्रप्रतिपादक एक एव प्रत्ययस्तस्य गोत्रस्याभिधायक इतीह विवक्षितोऽर्थ । यदि परमप्रकृतेर्गर्गशब्दात्प्रत्ययद्वयं कृत्वा प्रत्ययान्तरङ् क्रियते तदा नियमविरोध स्पष्ट एवेति भाव । ननु तथापि गोत्रे एक एव प्रत्यय इत्येवास्तु गर्गस्य गोत्रापत्यमितिविग्रहे द्वितीयो न भविष्यतीत्यत आह । अपत्यग्रहणानुवृत्तिस्त्विति । अपत्यग्रहणाननुवृत्तौ यन्निरूपितगोत्रत्वविवक्षा तन्निरूपितगोत्रत्वविशिष्टाभिधायकप्रत्ययान्तात्तादृशो द्वितीय प्रत्ययो नियमेन निवार्यत अनन्तरापत्यप्रत्ययान्तात्तन्निरूपितगोत्राभिधायक प्रत्ययो न निवार्येत । अपत्यग्रहणानुवृत्तौ तु यन्निरूपितगोत्रत्वविवक्षा तन्निरूपितापत्यत्वविशिष्टाभिधायकस्यैकत्वनाभादनन्तरापत्यप्रत्ययान्तादपि गोत्रापत्ये प्रत्ययो न भवतीति भाव । यदुक्तङ्गोत्रे स्वैकोनसङ्ख्यानामित्यनेन पक्षद्वयस्तदुपपत्तये आह । तत्त्विदम स्यन्ध्येवेति । अत एव । पितुरेवापत्यमिति स्वीकारादेव । कश्चित् पृच्छतीत्यस्य पितामहस्यत्वेवेति शेष । अपत्यम्पौत्रप्रभृतीति सामानाधिकरण्यमस्मिन्पक्षेऽपत्यमिवापत्यमितिरीत्या गौण सोत्रानुवादाद् ग्राह्यम् । गर्गादिभ्यो विहित प्रत्ययो गोत्राधिकारसामर्थ्याद्यद्यपि तृतीये वाच्येऽनन्तरापत्ये प्रत्ययमकृत्वापि भविष्यतीति तद्विषये वक्ष्यमाणा परम्परा न सम्भवतीति यस्मिन्स्थले वक्ष्यमाणो दोष सम्भवति तादृश स्थलमाह । उपगोस्तृतीय इति । अणुविशिष्टमिष्टमिति । एवञ्चानिष्टापत्तिरिष्टासिद्धिरित्युभयन्दोष । परम्परापत्यापत्यवत्सम्बन्ध इति । परम्परयाऽपत्यापत्यवद्भावसम्बन्ध इत्यर्थ । एवञ्चाथैकस्येष्टस्य सिद्धावप्यनिष्टस्यापि प्राप्ति । नन्वत्र पक्षेऽनन्तरापत्ये प्रत्यय इष्ट एवेति द्वितीयप्रत्ययमारभ्यानिष्टप्रत्ययगणना कार्या तथा च सूत्रोक्तस्वैकोनसङ्ख्यानामित्यनुपपन्नमित्याशयेन शङ्कते । यद्यपीति । सोऽपि । प्रथमोऽपि । एवञ्चास्य श्लोकस्यानिष्टपरम्परापत्तौ तात्पर्यमिति भाव । स्वैकोनसङ्ख्यानामित्यस्य स्व गोत्रन्तदपेक्षया एकोनसङ्ख्यानाम्प्रत्ययानाम्परम्परा प्रसज्यत इत्यन्वय । पर्यवभाव । अत्र गोत्रशब्दो गोत्राभिधायिप्रत्ययपर तथा च गोत्राभिधायी प्रत्यय प्रकृते एक इष्ट इतरेऽनिष्टा अत प्रथमस्यानिष्टस्य चतुर्थस्य चानिष्टस्य सन्द्रप्रतिपतत्वात्तच्चाप्यनिष्टत्वकल्पनया गोत्राभिधायि

तुशब्दो भिन्नक्रम युवेत्यनन्तरन्द्रष्टव्य । स चैवकारार्थस्तेन नियमलाभोऽन्य
थाऽस्याकडारीयसञ्ज्ञाभिन्नत्वेन गोत्रसञ्ज्ञाबाधकत्वन्न स्यात् । इष्यते च बाध
कत्वन्तदाह । समावेश इति । इञ् न स्यादिति । तस्यापि गोत्रत्वादिति भाव ।
गार्ग्य इत्यस्याप्यापत्तेरिति । तत्र हि जीवद्वंश्ये गार्ग्यायण इत्येवेष्यते सम
ति तूभय स्यात् । नियमाभावादि । अस्य सम्प्रतीत्यादि । तेन न्यायेन । येन
नाप्राप्तन्यायेन । अस्याप्राप्तौ । गोत्रेऽलुगचीत्यस्याप्राप्तौ । अन्तरङ्गत्वात् । अजा
दिप्रत्ययापेक्षयाऽन्तरङ्गत्वात् । भ्रातुरवंश्यत्वादिति । पितृपितामहादिरूपोत्पा
दकप्रबन्धो हि वंश । तत्र भवो वंश्य दिगादिभ्यो यत् । एव पितृव्यमातुलादी
नामपि बोध्यम् । अत एव । द्वित्वादेरविवक्षितत्वादेव । पितृकुले सपिण्डा इ
ति । येषाञ्जनने मरणे वा कुलान्न भुञ्जीतेति निषेधादसपिण्डैस्तेषामन्नन्न भु
ज्यते ते सपिण्डा । मातृकुल इति । इद सापिण्ड्य विवाहादिप्रतिबन्धकम् ।
आद्यमेव । पितृकुले ये सपिण्डास्तेषामेव ग्रहणमितीत्यतत् । अन्ये इति ।
आद्यमेव ग्राह्यमितत्र भाष्यानुग्रहाभाव इति तेषामाशय । ज्येष्ठभ्रा
तुरन्यस्मिन्निति । अन्यपदस्य प्रतियोगिसाकाङ्क्षार्थबोधकतयाऽनुपस्थितस्य
प्रतियोगित्वकल्पनापेक्षया ज्येष्ठभ्रातु पूर्वसूत्रेणोपस्थितत्वात्तस्यैवान्यपदा
र्थैकदेशे भेदे प्रतियोगितयाऽन्वयसम्भवादिति भाव । तच्च । अन्यस्मि
न्निति पदञ्च । भ्रातृरूपसपिण्ड इति । अस्य ज्येष्ठेत्यादि । नन्वेवम्पू
र्वसूत्रविहितनित्यसञ्ज्ञाया कोऽवकाश इति चेत् । सपिण्डत्वेनाभिप्रेते मृते
नित्यार्थन्तत्स्यात् । एकमितीति । प्रकृतसूत्रस्थमित्यर्थ । द्वितीयमितीति । अ
नुवर्त्तमान द्वितीयमित्यर्थ । स्थानपद व्याचष्टे । पदमिति । अत्र पदशब्द पू
ज्यतावच्छेदकत्वाभिमतधर्मविशेषपरस्तदभिप्रायेणाह । पितृव्यत्वादिकं मति ।
तत्त्वात् । भ्रातृत्वसत्त्वात् । सिद्धे सतीतिन्यायेन समाधत्ते । तथापीति । स्पष्टा
र्थत्वादिति । समानार्थकपदद्वयोपादानेनप्रकर्षलाभो लक्षणया भवति । तदनि
र्देशे तु प्रकर्षलाभो विलम्बस्येति स्पष्टप्रतिपत्त्यर्थन्तन्निर्देश इति भाव । इ
ति मत इति । द्वितीयमत इत्यर्थ । भ्रातृपुत्रादिरिति । भ्रातु पुत्रादिरिति स
मास । पूजामुपपादयति । युवप्रत्ययकानामिति । ननु गोत्राद्यूनीतिनियमात्कु
यमत्र यूनि प्रत्यय इत्यत आह । अत्रेति । कुत्सामुपपादयति । गोत्रस्य इ
ति ननु गोत्रेऽभिधित्सिते एक एवेति नियमे पि कथमत्र चतुर्थे गोत्रे गोत्रप्रत्य

तत्रभीता जरत्कारुणा दृष्टाः । ततो जरत्कारुणा तान् प्रति पृष्टङ्किमर्थम्भवन्तो भीताः कुतश्च दृश्यवस्था भवताम् । ततस्ते जरत्कारुमत्यूचुः । अस्माकङ् कुले जरत्कारुनामक एकः पुरुषोऽस्ति स दारपरिग्रहन्न करोति । स यावज्जीवति तावदस्माकमेवमेवावस्थानन्तन्मरणानन्तरञ्चास्माकम्पतनम्भविष्यतीति निश्चयेन भयभीताः स्मेति।एतेन पितामहादीनामपत्यमिति स्पष्टमेव लभ्यते । भाष्यान्तर-सम्मतिमप्याह । अपतनादिति । अमरग्रन्थासङ्गतिमप्यस्मिन् पक्षे परिहरति । अपत्यन्तोकमिति । पूर्वोक्तभाष्यविरोधमपि परिहरति । पितामहोत्सङ्ग इति । एको गोत्र इतिसूत्राभावेऽस्मिन्पक्षे दोषोपपादनं करोति । स्वद्रूनेतीति । न सिद्धामिद्धिरिति । एवञ्च विधायकत्वशङ्काया नावकाशः । नन्वेवमपि । नियमार्थकस्य सूत्रस्यारम्भेऽपि । परमप्रकृतेरिति । यस्मिरूपितापत्यत्वविशिष्टानां समुदायस्तद्वाचकादित्यर्थ. । भाष्ये प्रत्याख्यातत्वेनेति । गोत्रग्रहणस्येत्यादिः । तदुक्तम्भाष्ये । गोत्रग्रहणञ्च करिष्यते । एकोऽपत्ये प्रत्ययो भवतीत्येव । यदि चेदानीम्प्रत्ययान्तादपि प्रत्ययः स्यात् नैकोऽपत्ये कृतः स्यात् । यदि गोत्रग्रहणन्न क्रियते । कथं गार्ग्यायण- वात्स्यायन इति । वक्तव्यमेवैतत् । गोत्राद्यून्यस्त्रियामिति । अस्मिन् पक्षेऽनुवर्त्तमानापत्यशब्दस्योभयार्थसिद्धये आवृत्तिः कार्येति गौरवमतो भाष्योक्तपक्षान्तरमाह । यद्वेति । प्रत्ययप्रकृतिरित्यस्याध्याहारः । गोत्रमेकग्रहणमेवास्मिन् पक्षे साधकम् । पक्षान्तरन्तत एवाह । यद्वेति । सर्वमू-लत्वमिति । सर्वेषाङ्गोत्रापत्यत्वेन विवक्षितानां यो मूलपुरुषस्तत्प्रतिपादकत्व-मित्यर्थः । भाष्ये स्पष्टमिति । तत्र हि यद्यपि गोत्रग्रहणङ् क्रियते एवमपि न दोषः । न एकग्रहणेन प्रत्ययोऽभिसम्बध्यते एको गोत्रे प्रत्ययो भवतीति किन्तर्हि प्रकृतिरभिसम्बध्यते । एका प्रकृतिर्गोत्रप्रत्ययमुत्पादयतीति यदि चेदानीम्प्रत्ययान्तादपि प्रत्ययः स्यान्नैका प्रकृतिर्गोत्रे प्रत्ययमुत्पादयेत् । अथ वा यस्यानेऽयं यत्नः क्रियते न हीदं लोकाद्भिद्यते लोके हि संख्याप्रवर्त्तमानामुपचरन्ति एक इति वा प्रथम इति वा । यावद्ब्रूयात्प्रथमो गोत्रे प्रत्ययमुत्पादयति तावदेको गोत्र इतीति । न हीदमिति । लोके योऽयं प्रथमशब्दस्य दृश्यते स एव इहाप्याश्रीयत इत्यर्थः । शास्त्रेऽपि प्रथमार्थक एकशब्दो दृष्टः । एकेऽस्मप्राणाः प्रथमेऽस्मप्राणा इत्यर्थ । उपचरन्ति । व्यवहरन्ति । तद्वान्वै इति । पूर्वोक्तदोषः

प्रत्ययगणनायान्तस्य तृतीयापत्ये जातत्वाद्द्वयोर्गणना एवञ्चतुर्थं गोत्रे त्रयाणामनिष्टानां गणना एवम्पञ्चमादौ चतुर्णामित्यादिक्रमेण गणनायां गोत्राभिधायकस्य वस्तुगत्यैकस्य परित्यागद्वत्वाऽनिष्टानाम्परम्परा प्रसज्यते। एतस्याप्यौपचारिकानिष्टत्वमादाय तु व्याख्यानसमये एकोनशतं प्रत्ययाः स्युरित्युक्तम्। तत्र प्रत्यया इत्यस्यानिष्टा इति शेषः। अत्र पक्षे। पितुरेवापत्यमिति पक्षे। विध्यर्थत्वमिति। तृतीयस्यापत्यत्वविरहेणोपगोर्गोत्रापत्यमित्यर्थविवक्षायामप्राप्तस्य प्रत्ययस्य विधानार्थमित्यर्थः। गौरवमिति। न ह्येकेनैको गोत्र इतिसूत्रेणोभयलाभ इतिसूत्रस्यावृत्तिद्वत्वे कस्य विध्यर्थत्वमपरस्य नियमार्थत्वमिति गौरवमित्यर्थः। एकग्रहणसामर्थ्यात्केवलमस्य सूत्रस्य नियमार्थत्वमित्येवाशयेन शङ्कते। न चेति। एकग्रहणसामर्थ्यादक्लृप्तार्थस्य कल्पनां कृत्वा सूत्रमाधिक्यापेक्षया पितामहादीनामप्यपत्यम्भवतीतिपक्षस्वीकार उचितः एवञ्च प्रसिद्ध एवार्थं नियामकमित्याशयेन समाधत्ते। एकग्रहणेत्यादिना। पितामहादीनामप्यपत्यमितिपक्ष एव पाणिनिसम्मत इत्याह। अत एवेति। स्वरसतः। लक्षणां विनापि पितामहादीनामितिपक्षस्य ज्यायस्त्वे साधकान्तरमाह। दशस्विति। अपत्यत्वमपीति। न पतन्त्यनेनेत्यपत्यशब्दार्थस्यापि तत्राबाधादिति भावः। स्पष्टश्चाथ इति। तत्र हि उत्पादयितर्यपत्ययुक्त इतिपक्षस्योपपादनङ् कृत्वा तत्र दूषणानि चाभिधाय सन्तु तर्हि सर्वेऽपत्ययुक्ता इति। कथम्पुनर्ज्ञायते सर्वेऽपत्ययुक्ता इति। एवं हि याज्ञिकाः पठन्ति। दशपुरुषानूकं यस्य गृहे शूद्रा न विद्येरन् स सोमम्पिबेदिति। यदि च सर्वेऽपत्ययुक्ता भवन्ति तत एतदुपपन्नम्भवतीत्युक्तम्। दशपुरुषानूकमिति। अनुपूर्वात्कायतेरनुकानमभिधानमित्यर्थे घञर्थे कविधानमिति भावे कः। अन्येषामपीति दीर्घः। एवञ्चानूकशब्दः शब्दार्थकः सम्पन्नः। दश पुरुषा यस्मिन्नित्यर्थेऽनूकेऽन्यपदार्थे बहुव्रीहिः। सम्बन्धश्च प्रतिपाद्यप्रतिपादकभावः। दशपुरुषोऽनूको यस्मिन्निति पुरुषेऽन्यपदार्थे पुनर्बहुव्रीहिः। दशसु पुरुषेष्विति यावत्। अत्र शूद्राः विवाहिताः। शूद्रावेदी पतत्यथ इति वचनात्। महाभारतेऽप्ययमर्थः प्रसिद्ध इत्याह। जरत्कार्वादुपाख्यान इति। तत्र हि यायावरनामका ऋषयः काश्चिद्वंशगण्डामवलम्बमाना गर्तान्वितेऽधोदृष्टी प-

कप्रसिद्धार्थशक्ततावच्छेदकानुपूर्व्यवच्छिन्ना इतिविशिष्टरूपोपादान एतत्प्रवृत्तिरित्यर्थादुक्ता भवति। विशिष्टरूपोपादानेन विधीयमानकार्यञ्च प्रायेण पदकार्यस्थल इति पदकार्य इत्यस्य लाभः। गौणनिरास इति। एते च गुणारोपप्रकरणादिसहकारेणैवार्थबोधका अतो न स्वतन्त्राः। अप्रयुक्तनिरस्तमिति। लोके विशेषेणार्थबोधकत्वेन श्रुता इति व्युत्पत्तेः। एते च जगबडदमितिसमुदायरूपा अनर्थकाः अनुकरणानामर्थसद्भावेऽपि तेन विशेषेणार्थबोधकत्वेन श्रुताः। क्व चित्त्वनुकरणेऽव्यक्तानुकरणस्येतिज्ञापकाद्भवति शास्त्रीयं कार्यम्। ये च शास्त्रीयप्रक्रियया साधुत्वेन व्युत्पादयितुं शक्यन्ते यथा ब्रूवन्ति आवम् कमश्रित्यादयस्तेषामपि भाष्यकारीयवचनप्रामाण्यान्न शास्त्रविषयत्वमित्यर्थादुक्तं भवति। ये च प्रातिपदिकप्रकृतिकणिजन्तादयस्ते यद्यपि लोकेऽर्थबोधकत्वेन विशेषेण न श्रुतास्तथाप्येषामलङ्करोतीत्यादिशास्त्रेण साधुत्वान्वाख्यानाच्छास्त्रविषयत्वमस्त्येव। एतेन यत्सिद्धान्तदाह। न तदुक्तिष्विति। तद्वदुक्तिर्येषामेते तथाभूतास्तत्सदृशाः गौणादय एवेत्यर्थः। भाष्येपीति। उक्तश्लोकार्थ उपनिबद्ध इति शेषः। वाह्वादिप्रभृतिष्विति। अत्र प्रभृतिग्रहणेन कुञ्जादीनाञ्च ग्रहणम्। लोकविदितादिपुरुषत्वरूप इति। लोकविदिते आदिपुरुषत्ववति येषां दर्शनमित्यर्थः। लौकिके गोत्रभाव इति। लोकविदिते गोत्रत्व इत्यर्थः। प्रकृताभिप्रायमेतत्। नत्वेतावद्दर्शनेन तद्धितमात्रविषयकत्वमभिव्यक्तेतिन्यायस्येति भ्रमितव्यम्। सम्बन्धिशब्दानाञ्चायं इति। यथा राजश्वशुराद्यदितिसूत्रविहितो यत्प्रत्ययः श्वशुरसदृशे प्रयुज्यते यदा तदा श्वशुरस्यापत्यं श्वाशुरिरित्येव भवति। एतच्च पूर्ववार्त्तिकेनापि लभ्यत इत्यभिप्रायेणाव्युत्पत्त्यानुवादेनेति विशेषणन्दत्तम्। एवञ्चेति। गोत्रभाव इत्यस्य प्रकृताभिप्रायकत्वकथने च। कश्चिदिति। यथाश्रुतार्थग्राही। अनन्तरेऽपीतीति। अपिना व्यवहित इत्यस्य संग्रहः। अत एव पौत्रो दौहित्र इत्यत्र गोत्रेऽत्र सत्त्वेन प्राप्तस्य लुक प्रवराध्यायप्रसिद्धत्वाभावाद्वारणमिति। ननु गोत्र इत्यन्यासम्बन्धे यून्यपि प्राप्नोतीत्यत आह। यूनि त्विति। नन्वस्य गोत्राधिकारीयत्वात्कथञ्जामदग्न्यादीनां सिद्धिरत आह। रामो जामदग्न्य इति। लुकस्त्वविधानात्। एतत्सर्वमिति। प्रवराध्यायप्रसिद्धस्य लौकिकगोत्रस्य ग्रहणमित्येतत्। यूनि लुगितिसू-

यामनुत्पादायेत्यर्थः। आद्यः। इष्टासिद्धिरूपो दोषः। नन्वपत्यपरम्परायां स द्वितीय एवेति तृतीय इत्यनुपपन्नमत आह। तृतीयत्वमिति। तस्मादेव इति। अनन्तरापत्यप्रत्ययान्तादेवेत्यर्थः। एवकारव्यवच्छेद्यमाह। न त्विति। उत्तरसूत्रस्य मुख्यपक्षे प्रयोजनमादावाह। पितामहेति। अनन्तरापत्ययुवप्रत्ययान्तादिति। अनन्तरापत्यप्रत्ययान्ताद् युवापत्यप्रत्ययान्ताद्वेत्यर्थः। सूत्रारम्भे सति यो नियमः फलितस्तमाह। यूनीति। आद्ये। पितुरेवापत्यमिति पक्षे। चतुर्थाप्रत्ययान्तादिति। चतुर्थवाचिप्रत्ययान्तादित्यर्थः। न तु तृतीयवाचीति। पञ्चमस्य तृतीयाऽपत्यत्वाभावादिति शेषः। संज्ञासंज्ञिनिर्देशस्थले उभयोरपि प्रथमान्तत्वं सर्वत्र दृष्टमिति स्त्रियाञ्च युवसंज्ञेत्यनुपपन्नमत आह। अस्त्रियामितीति। तदन्तविधिरिति। वर्णग्रहणस्य सर्वत्र त्युक्तत्वात् न स्वाभ्यामितिसूत्रे च वृद्धेर्निषेधो व्यर्थ इत्याशङ्कते नन्विति। ऐचो विषयनिर्देशार्थमिति। ऐजागमस्य प्रवृत्तियोग्यं यत्स्थलन्तन्निर्देशार्थमित्यर्थः। द्वाभ्यामितिवा इति। द्वाभ्यामशीतिभ्याङ्क्रीत इत्यर्थः। पूर्वावित्यनेन यदि पूर्वावयवत्वमैचो न बोध्यते किन्तु पदाद्यकारवकारोच्चारणकालपूर्वकालिकोच्चारणविषयत्वमात्रम्बोध्यत इति कल्प्यते तदाह। अभक्तत्व इति। अणन्तादिति। ऐयजशब्दादित्यर्थः। गोत्र इति सूत्रं तस्यापत्यमित्यनुवृत्तेराह। तत्सम्बन्ध्यपत्यमित्यर्थ इति। ननु कौञ्जायन्य इत्यत्र जास्य शिलादृष्टेः सिद्धौ च्फञो ञित्त्वं व्यर्थमत आह। च्फञीति प्रधिकृतञ्जोच्छदिति। गोत्रे कुञ्जादिभ्य इत्येतत्। तदपत्येषु। भृगुवत्सापत्येषु। अन्यथा। आरोपाभावे। इति के चिदिति। लाघवानुसारिणः। एतेन यद्यक्षिना भार्गवस्य वात्स्यस्य। आग्रायणस्येतिदन्दं स्वीकृत्य बहुत्वाभावेऽपि मौघत्वाद्यञोर्लुका निर्देशोऽयमभृगुवत्सागायण इतीत्युक्तन्तदपास्तम्॥ ऋषित्वेत्विति। तदा तु अत्यन्धकेत्यण् स्यात्। द्रोणस्य मनुष्यत्वादनादिरित्यनुपपन्नमतो व्याचष्टे। भारतेति। द्रोणसंज्ञकस्याधुनिकस्य ग्रहणशङ्कां वारयति। अभिव्यक्तेति। अनाद्यर्थाभिधायित्वमिति। अभिव्यक्तो लोकप्रसिद्धोऽर्थो येषान्तादृशानां लाभः तेन संज्ञाशब्दानाव्रिरासः। एते हि यदृच्छाते: संज्ञाः क्रियन्ते तादृशाशिमात्रमभिदधति तथा चाद्यर्थाभिधायकत्वलाभेन नैतेऽनाद्यर्थाभिधायका इति भावः। एतादृशाय लो-

युवत्वे न गर्गादौ पाठस्यापूर्वत्वाभिप्रायेण प्रकृतसूत्रस्य विध्यर्थत्वाभिप्रायेण च शङ्केयम्। गर्गादावस्य पाठो नास्तीत्याशयः। एवं हि भाष्ये उक्तम्। किमर्थमिदमुच्यते न गर्गादिभ्य इत्येव सिद्धम्। लुक् स्त्रियामिति वक्ष्यामीति। यदि पुनस्तत्रैवोच्येत। नैवं शक्यम्। आङ्गिरसग्रहणं हि विच्छिद्येतेति। इदञ्च सूत्रम्पृथक् कृतम् तु कपीति सूत्र एव वतण्डशब्दः पठितव्यो नाङ्गिरस इत्यस्य प्रकृतसूत्रे सम्बन्धो नास्तीति च पूर्वपक्ष्याशयः। अत एवाह। अनाङ्गिरस इति। एवं हि आङ्गिरसग्रहणं विच्छिद्येतेत्याशयः। अत्रापि। वातण्ड्य इत्यत्रापि। तत्र। अनाङ्गिरसे। तदभाव.। यञोऽभावः योगविभागसामर्थ्येन। गर्गादौ पाठे कर्त्तव्ये तत्र पाठमकृत्वा कपिबोधादिति सूत्रानन्तरम्पृथक् वतण्डाच्चेतिसूत्रपाठेन। अनाङ्गिरसेपीति। अपिना आङ्गिरसे। यदि गर्गादिपाठमकृत्वाऽत्र सूत्रमारभ्यते तदा अनाङ्गिरसे न भवति। आङ्गिरस इत्यस्य सबन्धादिति भावः। यदि प्रामाणिक इति। यदि गर्गादावस्य पाठाभावस्तदा पूर्वोक्तरीत्या प्रापनामसम्भवाच्छिवादावस्य पाठो न प्रामाणिक इति भावः। शिवादौ पाठकल्पनपक्षे आह। तदेति। वृत्त्यनुरोधेनेति। एवं हि तत्रोक्तम्। अतः प्रभृति सामान्येन प्रत्यया विज्ञायन्ते। शिवादिभ्योऽपत्येऽण् प्रत्ययो भवति। यथायथमिञादीनामपवादः। शैवः। प्रौष्ठ इति। तत्र भाष्य इति। यूनि लुक्सूत्रभाष्य इत्यर्थ.। गोत्रत्वप्रयुक्त इति। गोत्रोत्त्द्र इतिसूत्रविहित इत्यादिः। इत्युक्तमिति। एवञ्च गोत्रोत्त्द्र इतिसूत्रस्य परत्र पाठात्तत्र प्रवराध्यायप्रसिद्धगोत्रग्रहणेन *गार्ग्यायणस्य तथात्वात्तस्माद् वुञ् सिध्यतीति भाव.*। गार्ङ्गेयादि विति। स्त्रीभ्यो ढगिति-सूत्रस्यापि गोत्राधिकारीयत्वाद्गोत्र एव प्रत्ययो न्याय्य इति भावः। आरोपेण। गोत्रत्वारोपेण। न चैवमिति। गोत्रसंज्ञासूत्रपर्यन्तं गोत्राधिकाराश्रयणे। यूनि ढक् न स्यादिति। युनीष्टो ढक् स इदानीमनन्तरे न स्यात्। स्त्रीभ्यो ढगितिसूत्रेऽपि गोत्र इत्यस्य सम्बन्धादिति भावः। दात्तेयेति। दत्ताया गोत्रापत्यं स्त्री दात्तेयीतयर्थः। अगोत्रादित्युक्तिसामर्थ्येनेति। अगोत्रादिति हि गोत्रप्रत्ययान्तादौपगवशब्दान्मा भूदित्येवमर्थम्। गोत्रसंज्ञासूत्रपर्यन्तं गोत्राधिकारेऽस्य गोत्रापत्ये प्रत्ययविधायकतया पक्षे गोत्र इतिनियमाद्गोत्रप्रत्ययान्तेभ्यः फिञ् नैव प्राप्नोतीति प्रकृत-

षे राजन्याद्वुञ् मनुष्याच्च ज्ञापकम्परञ्जीयम्। यदयं वुञ्विधौ राजन्यमनुष्ययोर्ग्रहणङ्करोति तज्ज्ञापयत्याचार्यः लौकिकम्परञ्जीयग्रहणमिति। गोत्रोक्षोष्ट्र इतिसूत्रे राजमनुष्यशब्दावुपात्तौ तौ च गोत्रे कुञ्जादिभ्य इत्यतो गोत्रग्रहणानुवर्त्तनाच्छास्त्रीयगोत्राभिधायिनो ततश्च गोत्रग्रहणेनैव सिद्धे तयोर्ग्रहणमपत्याधिकारादन्यत्र लौकिकं गोत्रमित्यस्य ज्ञापकन्तथा च राजन्यमनुष्ययोः प्रवराध्यायप्रसिद्धत्वाभावेन गोत्रग्रहणेनैतयोरग्रहणं स्यादिति तयोरुपादानं सफलमिति। द्वितीये अष्टाशीतिसहस्राण्यूर्ध्वरेतसामृषीणां बभूवुस्तत्रागस्त्याष्टमैर्ऋषिभिः प्रजनोऽभ्युपगतस्तत्र भवतां यदपत्यन्तानि गोत्राणीत्युक्तम्। तत्र भवतामिति। अगस्त्याष्टमानामित्यर्थः। तृतीये उभयत्र लौकिकस्य गोत्रस्य ग्रहणमित्युक्तम्। तत्र कैयटः। यञञोश्चेत्यत्र यस्कादिभ्यो गोत्र इत्यतो गोत्र इत्यनुवर्त्तते। संघाङ्केत्यत्रापि गोत्रचरणाद्वुञित्यतः। ऋषिप्रजनश्च लोके गोत्रमित्युच्यते इति। आङ्गिरस इत्येवेतिलेखनेन वतण्डाच्चेतिसूत्रे कपिबोधादितिसूत्रादाङ्गिरस इत्यनुवर्त्तते। तस्मिन्वाच्ये च गर्गादित्वाद्यञि सिद्धे इदं नियमार्थमाङ्गिरसे यदि वतण्डशब्दात्प्रत्ययो भवति तदा यञेवेत्यर्थंविधौ नियम इष्टस्तदभिप्रायेणाह। तत्र यञेति। विपरीतनियमं वारयति। आङ्गिरस एवेतीति। योगविभाग एवेति। अयम्भावः। आङ्गिरसे वाच्ये शिवादित्वात्प्राप्तस्याणो बाधनार्थमिदं सूत्रम्। गर्गादिपाठादादौ यञ् प्राप्तस्तम्बाधित्वा शिवादिपाठादण् प्राप्तस्तम्बाधित्वा आङ्गिरसेऽनेन यञ् भवति। न च गर्गादित्वात्प्राप्तस्य यञो बाधक ऋष्यित्वादण् तद्बाधनार्थमेवेदमस्त्विति वाच्यम्। एवन्तर्हि सर्वत्र ऋष्यणा यञो बाधापत्त्या गर्गादिपाठवैयर्थ्यं स्यादिति तच्च पाठ ऋष्यण् बाधकस्स्यादित्यणा समावेशो न स्यादतः शिवादौ पाठादेवाणा समावेशो भवति। स च पाठोऽनाङ्गिरसे चरितार्थ इत्याङ्गिरसेऽनेन यञेव यथा स्यादित्येवमर्थो योगविभाग इत्याशयात्। पनन्तरस्येतिन्यायेति। तेन वातण्डीत्यत्राणो लुङ् न भवति। तत्र। ष्यङ्विधायकसूत्रे। इह तु शिवाद्यण् भवतीति कथमत्र ष्यङः प्राप्तिरिति भावः। तदप्रवृत्तेः। प्रतिपदोक्तपरिभाषाया अप्रवृत्तेः। परे त्विति। भाष्यानुसारिण। सर्वेव। गर्गादिगण एव वतण्डान्नुक् क्रियामिति पठनीयमित्यर्थः। पत्र भाष्ये तवैवोच्यते इ-

लुक्त्वेन गर्गादौ पाठस्यापूर्वत्वाभिप्रायेण प्रकृतसूत्रस्य विध्यर्थत्वाभिप्रायेण च शङ्केयम्। गर्गादावस्य पाठो नास्तीत्याशयः। एवं हि भाष्ये उक्तम्। किमर्थमिदमुच्यते न गर्गादिभ्य इत्येव सिद्धम्। लुक् स्त्रियामिति वक्ष्यामीति। यदि पुनस्तत्रैवोच्येत। नैवं शक्यम्। आङ्गिरसग्रहणं हि विच्छिद्येतेति। इदञ्च सूत्रम्पृथक् कृतञ्च तु कपीति सूत्र एव वतण्डशब्दः पठितस्तेनाङ्गिरस इत्यस्य प्रकृतसूत्रे सम्बन्धो नास्तीति च पूर्वपक्षाशयः। अत एवाह। अनाङ्गिरस इति। एवं हि आङ्गिरसग्रहणं विच्छिद्येतेत्याशयः। अत्रापि। वातण्ड्य इत्यत्रापि। तत्र। अनाङ्गिरसे। तदभावः। यञोऽभावः योगविभागसामर्थ्येन। गर्गादौ पाठे कर्त्तव्ये तत्र पाठमकृत्वा कपिबोधादितिसूत्रानन्तरम्पृथक् वतण्डाच्चेतिसूत्रपाठेन। अनाङ्गिरसेपीति। अपिना आङ्गिरसे। यदि गर्गादिपाठमकृत्वा सूत्रम्पठ्यति तदा अनाङ्गिरसे न भवति। आङ्गिरस इत्यस्य सम्बन्धादिति भावः। यदि प्रामाणिक इति। यदि गर्गादावस्य पाठाभावस्तदा पूर्वोक्तरीत्या आपन्नासम्भवाच्छिवादावस्य पाठो न प्रामाणिक इति भावः। शिवादौ पाठकल्पनपक्षे आह। तदेति। वृत्त्यनुरोधेनेति। एवं हि तत्रोक्तम्। अतः प्रभृति सामान्येन प्रत्यया विज्ञायन्ते। शिवादिभ्योऽपत्येऽण् प्रत्ययो भवति। यथायथमिञादीनामपवादः। शैवः। प्रौष्ठ इति। तत्र भाष्य इति। यूनि लुक्सूत्रभाष्य इत्यर्थः। गोत्रत्वप्रयुक्त इति। गोत्रोचोद्वृ इतिसूत्रविहित इत्यादिः। इतुक्तमिति। एवञ्च गोत्रोचोद्वृ इतिसूत्रस्य परत्र पाठात्तत्र प्रवराध्यायप्रसिद्धगोत्रग्रहणेन गार्ग्यायणस्य तथात्वात्तस्माद् वुञ् सिध्यतीति भावः। गाड्यादि लिति। स्त्रीभ्यो ढगिति सूत्रस्यापि गोत्राधिकारीयत्वाद्गोत्र एव प्रत्ययो न्याय्य इति भावः। आरोपेण। गोत्रत्वारोपेण। न चैवमिति। गोत्रसंज्ञासूत्रपर्यन्तं गोत्राधिकाराश्रयणे। यूनि ढक् न स्यादिति। यूनीदो ढक् न इदानीमवस्तते न स्यात्। स्त्रीभ्यो ढगितिसूत्रेऽपि गोत्र इत्यस्य सम्बन्धादिति भावः। दात्तेयीति। दत्ताया गोत्रापत्यं स्त्री दात्तेयीत्यर्थः। अगोत्रादितुल्यसामर्थ्येनेति। अगोत्रादिति हि गोत्रप्रत्ययान्तादौपगवशब्दान्मा भूदित्यर्थम्। गोत्रसंज्ञासूत्रपर्यन्तं गोत्राधिकारेऽस्य गोत्रापत्ये प्रत्ययविधायकतया एको गोत्र इतिनियमाद्गोत्रप्रत्ययान्तेभ्यः फिञ् नैव प्राप्नोतीति प्रकृत-

सूत्रेऽगोत्रादिति एवमेवानिञ इति च व्यर्थमिति भावः। यञिञोश्चेतिवदिति। यथा भवद्भिर्गोत्राधिकारेऽपि सामर्थ्याद्यूनि तस्य प्रवृत्तिः स्वीक्रियते तद्वत्। वास्तवमिति। यस्य गोत्रे विधानन्तदन्तस्य वास्तवत्वम्। नन्वेकार्थीभावाभ्युपगमाद्व प्रत्ययमात्रस्य वास्तवत्वमत आह। शास्त्रप्रक्रियेति। अत एव। गमकाभाव एव लौकिकग्रहणादेव। कखादिभ्यो गोत्र इति। कखशब्दस्य गर्गादौ पाठात्तेभ्यश्च शास्त्रीयगोत्र एव प्रत्ययविधानादिति भावः। अणिञोरित्यादौ चेति। तत्र ह्यनार्षयोरिति वासिष्ठी वैश्वामित्रीत्यत्र षङादेशवारणाय कृत तयोश्च ऋष्यन्धकेतिसूत्रेण शास्त्रीयगोत्रेऽविधानात्पर्युदासन्यायेन शास्त्रीयगोत्रग्रहणम्भविष्यतीति भावः। यच्चोक्तम्पूर्वं शास्त्रप्रक्रियेति तस्य फलान्तरमप्याह। राजन्येति। अत एव। कल्पितगोत्रार्थकत्वादेव। अत एव। गोत्रसंज्ञासूत्रपर्यन्तं गोत्राधिकारादेव। फिञ् नेति। एको गोत्र इतिनियमात्। भाष्यस्वरसादिति। उपपादितमेतत्। गोत्रसंज्ञासूत्रपर्यन्तं गोत्राधिकार इतिमते शङ्कते। न चेत्यादिना भाष्योक्तमिति। तत्र हि किमर्थं शिवादिभ्योऽण् विधीयते न यथाविहितमित्येवोच्येत शिवादिभ्यो यथाविहितमितीयत्युच्यमाने इञ् प्रसज्येत। इञतो यथा विहितः। पुनर्वचनमिदानीङ्किमर्थं स्यात्। ये तस्य बाधकास्तद्बाधनार्थम्। स वै नास्ति यस्तम्बाधेत। तदारम्भसामर्थ्याद्यो विहितो न च प्राप्नोति स भविष्यति कथासावणेवेत्युक्तम्। अण एव विधिरिति। भविष्यतीति शेषः। भाष्याशयात्। प्रश्नभाष्याशयात्। शिवादिभ्य इतिसूत्रस्याण्ग्रहणस्य प्रयोजनमाह। अण्ग्रहणमिति। इञ एव विधानं स्यादिति। शिवादिभ्यो यथा विहितमिति व्याख्यान इति शेषः। अपत्याधिकारादन्यत्र प्रवराध्यायप्रसिद्धगोत्रग्रहणमिति सिद्धान्ते प्रसक्तामनुपपत्तिम्परिहर्तुं भाष्याशयमाह। यस्त्विति। इत्युक्तमिति। स तु न प्राप्नोतीति शेषः। प्रवराध्यायप्रसिद्धत्वाभावादिति भावः। स्वयन्तदुपपत्तिमाह। तदिति। विशेष्यप्रकृतिश्च इतीति। स्त्रीलिङ्गनिर्देशोऽत्र। प्रकृतिः शब्दरूपा मा न नदी मानुष्यत आह। पर्यवसायकमिति। वाचकतामस्य वैनेतरार्थः। चारोप्येति। भेदप्रधानतदात्म्यस्वीकारे। इदमित्थमिति। स्त्रीलिङ्गनिर्देशसमावेशेन धात्वमातुर्नेति यदुक्तन्तस्थिरमितार्थः। ननु धात्वमाद्यप्रतिपादकौ मातृगन्द

इति कथम्।तत्राह। लिङ्गविशिष्टेति। न त्वक्षतयोनित्वमिति। तयात्वे कानीनशब्दस्य व्यासकर्णयो प्रवृत्तिर्न स्यात्।तयो पुमसम्बन्धजन्योत्पत्तिकत्वादिति भाव। अधिकार्थावगतिरिति। अधिक कारोऽधिकार इत्यर्थावगमात्। प्रत्ययमिति। स्त्रीप्रत्ययरहिते दृष्टानाम्प्रातिपदिकत्वतद्धाद्यधर्माणान्तद्विशिष्टेऽतिदेश इतिपरिभाषार्थादिति भाव। तेन। स्त्रीप्रत्ययान्तस्य ग्रहणेन। अणिति। इञमगधेत्यणित्यर्थ। अत एवेति। अर्थग्रहणादेव। ढकि लोपविधानमिति। लोपविधानसामर्थ्याढ्ढक कल्पना स्त्रीशब्दापि स्वरितत्वस्य च कल्पनापि घया ढगनुवादेन स्त्रीभ्य इत्यर्थग्रहणमिति स्त्रीकारे लाघवमिति भाव।दरदित्यादि। अत्र दरच्छन्दोद्वाञ्मगधेत्यणन्त। दृडविड्जनपदेत्यञन्त। ततो द्वौ द्वाञ्मगधेत्यणन्तौ। त्र्यपस्वकेतिसूत्र भाष्य इति। तत्र हि द्वाचो ढको ढ्कढञो। द्वाचोढगभवतीत्येतस्मात् ढ्कढञौ भवतो विप्रतिषेधेन।द्वाचा ढगभवतीत्यस्यावकाश।दात्तेय।गौप्तेय।ढ्क काणिकेर।गाणिकेर। इहोभयम्प्राप्नोति। नटी,नाटेर। दासी दासेर। ढञोऽवकाश। कामण्डलेय। माद्रवाहेय। ढक स एव। इहोभयम्प्राप्नाति। जम्बू जाम्बेय। ढक्टञो भवतो विप्रतिषेधेनेत्युक्तम॥ काणिकेर इति। काणेव काणिका। कामण्डलेय इति। चतुष्पात्वातिवचन। चतुष्पाद्भ्यो ढञ्। जाम्बेय इहापि चतुष्पाद्भ्यो ढञिति ढञि ढे लोपोऽकद्रा इति छकारल्लोप। अत्र कैयट।जम्बूशब्दस्याप्रीप्रत्ययान्तत्वाङ्ढक प्राप्तिरित्युक्तेति। अत्र भाष्यप्रदीपोद्द्योतेऽभिहितम्। जम्बूशब्दस्य दीर्घोकारान्तत्वादूडभाव। द्वाच इत्यत्रापि स्त्रीभ्य इति वर्त्तते। तथ स्त्र्यर्थे तत तदधिकारविहितप्रत्ययग्रहणम। तत्राप्राणिजातेश्चेतिवार्त्तिके उतइत्यस्यासम्बन्धेऽपि प्राणिजातित्वात्तदभाव। अन्ये तु तस्या जम्बो फलरसा नदीभूय प्रवर्त्तत इतिप्रयोगाज्जम्बुशब्दान्तोऽपीस च दृश्यहार्मोभयवचन। एतद्भाष्यप्रामाण्यात्। तस्मादूङि दीर्घान्तोऽप्युभयवचन। यद्वा स्त्रीभ्य इत्यर्थग्रहणमेव। दृडविडादय गिरधादिषु पाठ्या इति। अथ वाऽनभिधानात्तेभ्यो ढगभाव इति भाष्याशय इत्योहु। अत्र जाम्बेय इत्यत्र विप्रतिषेधेन ढञ् भवतीत्येतद्भाष्योक्तमत्तेन स्त्रीभ्य इत्यत्रार्थग्रहणमिति ध्वनितमित्यर्थं। वाग्रहणनिवृत्तय इति। ढक च मण्डूकादिति सूत्रे पीलाया वेतिसूत्राद्वाग्रहणानुवृत्तेः।तथाशिवादिगणे।

पृथाशब्दाड्ढकि पार्थ इत्यस्यासिद्धिपरिहाराय मूले तस्ये दमित्यणित्वमभिहित-म्परन्त्वेतदमङ्गतन्तस्येतस्य शैषाधिकारीयत्वादत आह । शिवादिपाठादिति । दाक्षायण इति । दक्षस्य गोत्रापत्यं दाक्षिः । दक्षस्य युवा दाक्षेरपत्यमिता-र्थेऽव दाक्षायणशब्द । अत्र सामर्थ्याध्यु नि ढकः प्राप्तिर्बोध्या । उत्तरपदस्य वृद्धि-विधानप्रयोजनमाह । उत्तरपदस्येति । ननु गोत्रसञ्ज्ञासूत्रपर्यन्तस्त्रीत्वाधिका-राज्जातेर्येत्येव सिद्धे उत्तरपदस्य वृद्धिविधानं व्यर्थमेवेत्यत आह । अस्मादेवेति । ढः परामृश्यत इति । ततो बहुव्रीहिः सः प्रत्ययो यस्येति । अनुवर्त्तमान-प्रवाहणशब्दस्य स्वप्रकृतिकसमुदायलाक्षणिकः । लेखकप्रमादादिति । प्रवाहण-स्य ढ इतिसूत्रस्य शुभ्रादिभ्यश्चेतिसूत्रविहितढकि प्रवृत्तिसत्त्वादेतत्सूत्रानन्त-रमेव प्रवाहणस्य ढे तत्प्रत्ययस्येतिसूत्रद्वयस्य लेखनमुचितमिति भावः । ढकि सिद्धे ऽपीति । स्त्रीभ्यो ढगित्यनेन । ननु भ्रुवो वुक् चेतिवत्कुलटाया वेतिसूत्रस्या-पि प्रत्ययादेशोभयविधायकतया इनङ्मात्रं विकल्प्यते ढक्तु नित्यम्पूर्वेणेत्युपा-दानम्मूलकारीयं प्रमाणशून्यमत आह । कल्याणादीति । कल्याण्यादीनामिनङि-तिसूत्रे ऽनुवर्त्तमानस्य ढग्ग्रहणस्य यथा नित्यमेव प्रकृतिसम्बद्धप्रत्ययाभिधाय-कत्वं तथात्रापि । वाशब्दस्तु षष्ठीनिर्दिष्टस्य विधीयमानकार्येण सम्बध्यत इति भाव। तदभाव इति । परत्वाड्ढ्रकि कृते तदभावे ढगित्यर्थः । इत्याह । इत्याशये-नाह । द्वयोरनुकरणमिति । चटकत्वजातिविशिष्टवाचकचटकाशब्दात्स्त्र्यपत्ये जातस्य प्रत्ययस्य लुकि कृते लुक् तद्धितलुकीति टापो लुकि यत्स्त्र्यपत्य-वाचकं चटकेतिरूपं तस्य च जातिलक्षणङीषूबाधनार्थमनुकरणमितार्थः । श्रर्थ-निर्देशोऽयमिति । न तु सप्तमी शौण्डैरितिवदार्थापत्तिः । क्षुद्राभ्य इत्युच्य-न्ते क्षुद्रा नाम । अनियतपुंस्का । अङ्गहीना वेतिभाष्यात् । भाष्ये वाशब्द-श्चार्थे । तदाह । तदभिधायीत्यादि । कल्पनदारेति । स्त्रीभ्यो ढगितिसूत्रे स्त्री-शब्देन प्रत्ययग्रहणमिति पक्षे इदम् । प्रागुक्तमिति । स्वार्थग्रहणमत्र तिप्रा-गुक्तमित्यर्थः । पक्षरा विपणस्यत इति । अन्यथाप्राप्तौ ढगिति तत्सन्नियोगात्-नि प्रातिपदिकान्याह । इदन्तेभ्य इति । टेर्लोप इत्यस्येति । परत्वादिग्प्राप्तुका-ले प्राप्तस्येति शेषः । बाधादिति । अत्र बाध न तद्भावितत्वा प्रवृत्तिरेव र्फिन्त्वु तन्माधित्वा प्रसक्तिमात्रम् । कैकयशब्दाज्जनपदशब्दादित्यञि यशब्दस्य-

यादेशे कैकेयीत्यस्य मित्रयूनाभाव इत्यर्थे गोत्रचरणादिति वुञि मैत्रेयिकेत्यस्य ।प्रत्ययादागतमालेयमित्यस्य च सिद्धि । धादिष्वदा त्वियादेशस्य समावेश एव भिन्नविषयकत्वात् । दाण्डिनायन । दण्डिन् हस्तिन् आभ्यामपत्यमित्यर्थे नडादित्वात्फक । अथर्वन्शब्दाधीतार्थे वर्त्तमानाद्वसन्तादित्वाट्ठधीत इत्यर्थे ठक् । जिह्माशिन्शब्दाच्छुभ्रादित्वाड्ढक् । वाशिन्शब्दादुदीचामिति फिञ् । भ्रूणहन्धीवन् शब्दाभ्यामृष्यणादित्वाल्लावकमध्ये अञि तत्वन्निपातनात् । इदमेव च भ्रूणहन् शब्दस्य तत्वनिपातनन्धातो कार्यमुच्यमानन्तप्रत्यये भवतीतिपरिभाषा ज्ञापयति । एतेन भ्रौणहत्यशब्दे कुत्वाभावोऽपि सिद्ध । न च कुत्वाभावनिपातनमेव तत्परिभाषाया ज्ञापकमस्त्विति वाच्यम् । ग्रन्थेर्वृद्धिरितिसूत्रभाष्येऽपि तत्वनिपातनस्यैव ज्ञापकतोक्तेति भाष्यद्वयप्रामाण्ये न तत्वनिपातनस्यैव ज्ञापकत्वाभिधानात् । सरयूशब्दादणि यूइत्यस्य वेत्यादेश । इक्ष्वाकुशब्दो जनपदवाची क्षत्रियवाची च । तत्र जनपदवाचकाच्छैषार्थे कोपधादणितिसूत्रे णाणि निपातनादुकारलोप । अयमन्तोदात्त । क्षत्रियवाचकात्तु जनपदशब्दात्क्षत्रियादञितिसूत्रेणाञि निपातनादुकारलोप । अयमाद्युदात्त । प्रकृतसूत्रे तन्त्रेणोभयोरपि ग्रहणम् । द्वितीयस्य बहुत्वेऽञो लुकि इक्ष्वाकवो दुरापं इति सिध्यति । न च सूत्रे यत्स्वरकस्योच्चारणात्स्वरकस्यैवानुकरणमिति कथन्द्वयोरनुकरणमिति वाच्यम । एकश्रुत्या द्वयोरप्यनुकरणसम्भवादिति भाष्ये स्पष्टम् । हिरण्मयशब्दे हिरण्यशब्दान्मयटि यशब्दलोपो निपात्यते । यस्कादिभ्य इतिसूत्रे यो गोत्रशब्दस्तदर्थं सिद्धान्तरीत्या व्याचष्टे ॥ प्रवराध्यायेति । नन्वेव यास्कायन इत्यत्र युवप्रत्ययस्यापि प्रवराध्यायप्रसिद्धघटकत्वाल्लोपापत्तिरत आह । यस्कस्यापत्यामित्यादि । एतच्च विकृतविशेषणाश्रयण शिवादिभ्योऽणित्यत्र गोत्र इति निवृत्तमितिवृत्तिकृन्मतेन । भाष्यरीत्या तु न युवप्रत्ययस्य लुकप्राप्तिरित्याह । वस्तुत इति । एत एव । शास्त्रीयगोत्र प्रत्ययविधानादेव । सिद्धान्ते । असमावेशपक्षे । प्रियायास्का इति । प्रकृतेऽन्यपदार्थकत्वस्य बहुत्वम् । तत्कृते इति । अत्र मूले बहुत्व इत्येव पाठ इत्यभिप्रायेणेदम् । अण्यत्यकत्रणिकुरुभ्यय त्यगवाधनायाह । वाह्वादिभ्यादिति । यौधिष्ठिरि । पितेति । युधिष्ठिरशब्दाद्बाह्वादित्वादिञ् । तैतो यञिञो

थेति फक। अत्रैव भाष्ये स्पष्टमिति। तत्र हि गोपवनादिप्रतिषेध प्राग्व रितादिभ्य। गोपवनादिप्रतिषेध प्राग्वरितादिभ्यो द्रष्टव्य। हारित। हा रितौ। बहुषु हरिता इत्युक्तम्। एतेन गोपवनादीना विदाद्यन्तर्गणत्व स्पष्ट मेव लभ्यते। अन्यथा गोपवनादिषु गोपवन। शिग्रु। विन्दु। भाजन। अश्वावता न। श्यामाक। श्यापर्ण। हृत्। इति पठेन प्राग्घरितादिभ्य इत्यसङ्गत स्या त्। विदादिषु च गोपवन। शिग्रु। विन्दु। भाजन। अश्वावतान। श्यामाक। श्यामक। श्यापर्ण। हरित। किदासेतिपाठेन भाष्य सङ्गच्छते। तद्राजस्येति सूत्रे भाष्य इति। तत्र हि। यञञोरितिसूत्रविषये गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्वेरकयोरलुक। गोत्रस्य बहुषु लोपिनो बहुवचनान्त स्य प्रवृत्तौ द्वेरकयोरलुग्वक्तव्य इतिवार्त्तिकमुक्तोक्तम्। विदानामपत्यमाणवक वैद वैदौ। अत्र विदशब्दाद्बहुषु गोत्रापत्ये ध्वजि तदन्ताद्यूनि अत इञितीञ्। तस्य स्वचत्रियेति लुक। किमर्थमिदम् अचीत्यं वालुक मिद्ध। अचीत्युच्यते न चाचाजादिम्पश्याम। प्रत्ययलचणेन। वर्णाश्रये नास्ति प्रत्ययलक्षणम्। अजादौ प्राग्दीव्यतीये प्रत्यये परे गोत्रप्रत्ययस्यालुगितिसूत्रार्थाश्रयणे प्रक्त तवार्त्तिकमप्रवृत्तम्। ततो भाष्यमुक्तोक्तम्। यदि वा कानि चिद्वर्णाश्रयाण्यपि प्रत्ययलक्षणेन भवन्ति तथेदमपि भविष्यति। वर्णाश्रये नास्ति प्रत्ययलचण मिति तु वर्णप्राधान्यविषयकमिति भाव। अथ वा अविशेषेणलुकमुक्ता द्व लि नेति वक्ष्यामि। यद्येवमविशेषेण लुकमुक्ता द्वलि नेत्युच्यते विदानाम पत्य बहवो माणवका विदा अत्रापि प्राप्नोति। अलुगिति शेष। अस्तु पुनरस्य युवबहुत्वे वर्त्तमानस्य लुग्भविष्यति। अपत्याधिकारादन्यत्र लौ किक गोत्रमिति भाव। पुनरलुक्कस्मान्न भवति। लुकशास्त्रवदलुकशास्त्रस्या पि प्रवृत्तस्य्यघातादिति भाव। समर्थानाम्प्रथमस्य गोत्रप्रत्ययान्तस्यालुगु च्यते न चैतत्समर्थानाम्प्रथम गोत्रप्रत्ययान्तम्। किन्तर्हि द्वितीयमर्थमुपसङ्क्रा न्तम्। प्राथमकल्पिके प्रत्ययार्थे वर्त्तमानस्य तस्य प्राथम्यम्। यथा गार्ग्या इति। अथ युवप्रत्ययस्य लुकि कृते युवमत्ययार्द्वितीयमर्थमुपसङ्क्रान्तोऽसम र्थ्य इति प्राथम्याभाव इति भाव। अयमर्थो तदेव विज्ञेयम्। भिभरदा भिका। पञ्चिकप्रत्यपिका। भद्रन्दिगिरमिका। कुमाकुशियिका। इत्ययमर्थग्।

अत्रिशब्दादपत्यबहुत्वे इतश्चानिञ इति ढक्। भरद्वाजाद्विदादित्वादञ्। ततो युववहुत्वेऽत इञ्। तस्य एयत्रियेति लुकि। ढकोऽत्रिभृग्वितिलुक् यञञोश्चेतिभरद्वाजशब्दादञः। ततोऽत्रिभरद्वाजानां मैथुनिकेत्यर्थे द्वन्द्वाद्वुनिति वुन्। यदि द्वितीयमर्थमुपसंक्रान्तस्याप्यलुक्स्यात्तदा गोत्रेऽलुगचीत्यलुक्प्रसङ्गः स्यात्। वशिष्ठशब्दादृष्यण्। कश्यपादञ्। एवम्भृग्विरम् कुत्सशब्देभ्यो ऋष्यण्। कुशिकादञ्। अन्यत्सर्वम्पूर्ववत्। गर्गभार्गविकाग्रहणं वा नियमार्थम्। गर्गभार्गविकाग्रहणं वा क्रियते तन्नियमार्थम्भविष्यति। एतस्यैव द्वितीयमर्थमुपसंक्रान्तस्यालुग्भवति नान्यस्येति। गर्गाद्यञ्। भृगुशब्दादृष्यण्। ततो यूनीञ्। तस्य लुक्। गर्गभृगूणाम्मैथुनिकेतिवुन्। अत्रिभृग्वितिलुक् प्राप्तो गोपवनादिपाठेन प्रतिषिध्यते। यदि च द्वितीयमर्थमुपसंक्रान्तस्याप्यलुक् स्याद्गोपवनादिषु न पठ्येत। पठितस्तु ज्ञापनायेत्यर्थः। भाष्ये च ध्वनितमिति। तथापि पूर्वमुक्त्वा गर्गभार्गविकाग्रहणं वा नियमार्थम्। गर्गभार्गविकाग्रहणं क्रियते तन्नियमार्थम्भविष्यति। एतस्यैव गोत्रप्रत्ययान्तस्य द्वितीयमर्थमुपसंक्रान्तस्यालुग्भवति नान्यस्येति इत्युक्तम्। एवमुपपादनेन ध्वनितमित्यर्थः। अद्वन्द्व इत्यस्य यथाश्रुतार्थकत्वे द्वन्द्वे विकल्पो न स्यादत आह। अद्वन्द्व इत्यस्येति। इदम्। द्वन्द्वस्य विकल्पस्योदाहरणत्वेन प्रदर्शनम्। तस्य भार्येत्यर्थ इति। एतेन पुंयोगमात्रस्य स्त्रियां वृत्तिर्दर्शिता। ङीपि। ऋन्नेभ्यइतिसूत्रविहिते ङीपि। अत एव निपातनात्। कौण्डिन्येतिनिपातनात्। यद्यत्र पुंवद्भावः स्यात्तदा यञि नस्तद्धित इति टिलोपः स्यात्। एतेन। भाष्योक्तपुंवद्भावाभावकथनेन। कुण्डिन्शब्दाद्यञः प्राप्तिरपि नेत्याह। कुण्डिनीत्येवमिति। तेन। लुग्विधानेन। एतेन बहुषु प्रत्ययान्तसमुदायस्यागस्तिकुण्डिनजादेशविधानेन सिद्धे लुग्विधानं व्यर्थमित्यपास्तम्। तत्र। ये चेतिसूत्रे। राजश्वशुराद्यदितिसूत्रे राज्ञोऽपत्ये जातिग्रहणमिति वार्त्तिकमूलाद्दराख्यानादुक्तं राज्ञो जातावेवेति तत्फलमुक्तं शूद्रादाविति तत्र शूद्राद्युत्पन्नस्यैवंविधव्यवहारो नैव प्राप्नोतीतिशूद्रादावित्यनुपपन्नमत आह। तज्जातीयेति। निवृत्तमिति। एतदभिप्रायेणापत्ये उदाहरणमुक्तमिति शेषः। राज्ञोजातावेवेति सूत्रं योगविभागेन सूत्रे व्याख्यातन्तत्फलमाह। एकयोगत्व इति। राजं श-

विरित्यत्र सास्य देवतेत्यर्थेऽपि श्वितिनिप्रकृतिभावे प्राप्ते टिलोपोऽनेन सूत्रेण यद्यपि कृतस्तथापि ब्रह्मणोऽपत्यमित्यर्थेऽपि न मपूर्वोऽपत्य इतिसूत्रेण प्रकृतिभावनिषेधे ब्राह्मणो न सिद्धेदित्यभिप्रायेण योगविभागफलमुक्तम्। अत्र। ब्राह्मइतिसूत्रे। जातावित्यस्य यत्र जातिः प्रकृतिप्रत्ययसमुदायस्य प्रवृत्तिनिमित्तभूता तत्रेत्यर्थः। ब्राह्मो नारद इत्यत्र तु न तथेति भावः। मपूर्वेतीति। वृत्तिस्थं यद्वाक्यं मपूर्व इति तत्रत्यवाक्यानुकरणमिदमुच्चारणार्थोऽकारः। न तु सूत्रस्य प्रतीकधारणमितिशब्दात्। अपदेन क्विमत्वात्तरपतमपोर्ग्रहणं स्यादत आह। स्वरूपेति। व्याख्यानादिति। जनपदशब्दात्क्षत्रियादित्यादिनिर्देशदर्शनमूलकाद्व्याख्यानादित्यर्थः। अन्यथा। कुलात्ख इतिसूत्रे तदन्ताग्रहणे। ननु प्रकृतसूत्रे तदन्ताग्रहणेऽपि कुलीनशब्दाढ्यशब्दयोः समासेनाढ्यकुलीनस्य सिद्धिः स्यादेवेत्यत आह। एवञ्चेति। ईकार उदात्त इति। प्रत्ययस्वरेणेकार उदात्त इत्यर्थः। पूर्ववदित्यस्य महाकुलादितिसूत्रोदाहरण एवेत्यर्थ इत्यभिप्रायेणाह। अन्यतरस्यामिति। ननु शत्रुरितिव्याख्यानमपत्याधिकारविरुद्धमत आह। अपत्य इतीति। इत्याहुरिति। वस्तुतस्तु सपत्नशब्दोऽव्युत्पन्नप्रातिपदिकं शत्रुवाची तदुक्तं सपत्नीशब्दव्याख्यानावसरे सपत्न प्रकृत्यन्तरत्वादिति। तेन। अङ्गादितिव्याख्यानेन। अठच इति। कर्मणि घटोऽठजितिसूत्रविहितस्याठचष्ठस्येत्यर्थं। एतच्च विभक्तिव्यत्ययेन यदङ्गादिति व्याख्यातन्तदभिप्रायवर्णनम्। वस्तुतोऽङ्गस्येतिपठान्तमेवास्त्वित्याशयेनाह। अत्र ठस्य इति। अत एव। वर्णमात्रस्य प्रत्ययत्वञ्चेत्र। सङ्घातग्रहणपक्षे माथितिकेऽतिप्रसङ्गं चिरस्यति। माथितिकेऽपीति। अल्लोपस्य। मथितशब्दावयवाकारलोपस्य। लघुत्वादिति। वर्णग्रहणपक्षे माथितिके मथितम्पण्यमस्येत्यर्थं ठक्प्रत्यये इकादेशे यस्येतिलोपेऽपीकादेशे न स्थानिवद्भावेन ठत्वमस्त्विपित्वादिति पञ्चमीसमासः सन्निपातपरिभाषा वा नाश्रयणीया। कर्मठेतिप्रसङ्गनिवारणायार्थवत्परिभाषा च नाश्रयणीयेतिलाघवमित्यर्थः। वृद्धिनिमित्तस्येति पुंवद्भावनिषेधमाशङ्कयाह। वृद्धिनीति। ननु पुंवद्भावेन गार्ग्यं शब्दादित्युक्तिरसङ्गता तस्य स्त्रीवाचकत्वाभावादत आह। पुंवत्त्वेनेति। वातण्डीत्यत्रापि लिस्वस्य प्रयोजनमिति कस्य चिदुक्तिदूषयति। वातण्ड्या अपत्यमिति। कृप-

तिविशेषणमिति। सौवीरत्वाचकाद् वृद्धादित्यर्थमन्वयकल्पनया विशेषणमित्य र्थः। प्रकृतसूत्रे वृद्धादिति चिन्त्यप्रयोजनमित्याशयेनाह। फिञन्तस्येति। फाण्टा-हृतस्य द्वैविध्याभिप्रायेणाह। अचापीति। इत्युक्तमसङ्गतमित्यत्र कैयटस्यापि सम्मतिमाह। पूर्वनिपातेति। यथामङ्गाश्रयणे यस्य णित्त्वं व्यर्थमत आह यस्येति। तदुक्तभाष्ये। फाण्टाहृते. प्रत्ययस्य णित्करणानर्थक्यमिति। न च फाण्टाहृताभार्य इत्यत्र वृद्धिनिमित्तस्येत्यस्य प्रवृत्त्यर्थमस्त्विति वाच्यम्। गोत्रा यून्यस्त्रियामित्युक्तेः स्त्रियामप्रत्ययस्यैवानुत्पत्तेः। ननु कौशल्यकार्मार्याभ्या मितिपञ्चमीनिर्देश परमप्रकृते प्रत्ययस्वीकारे विरुध्यत इत्यत आह। आ भ्याम्पर इति। वार्त्तिकानुसारिमतमाह। अन्ये त्विति। एवं हि वार्त्तिकक्र-तौक्तम्। फिञप्रकरणे दगुकोशलकर्मारछागवृषाणा युड्चादिष्टस्येति। आदेशो-त्तरमिति।आदिष्टस्ये युक्ते।दन्त्यपाठ इति।कोसलेति।अन्ये।भाष्यानुसारिणः। तत्र कोसलेत्यस्य दर्शनात्। कर्त्तृस्थाच इति। न त्वपत्येऽनाण्। कर्तृहर्चितिकुर्वा दिगणे पाठात्। तदेतद्ध्वनिति। कर्त्तुरपत्ये त्विति। यदिहेति। वाकिन। गो धर। कार्कश्य। काक। लङ्का।चर्मिवर्मिणोर्नलोपश्च।वध्योग। चौल। केरल। श क।यवन। भर्ग।करूश। केकय। काश्मीर।माल्य। सुस्थल। उरश। कौरव्येति तत्र पठ्यते। अन्येषाम्। अवृद्धानाम्। ननु ग्लुचुकायनिपुत्त्रशब्दात्फिञ्न प्राप्त इति वा फिञ् सिद्ध इत्यसङ्गतमत आह। वृद्धादित्यनुवर्त्तत इति। अन्यतर स्यामित्यनुवृत्त्यैव सिद्धे प्राचामिति व्यर्थमत आह। प्राचामिति पूजार्थमिति। दार्चिरिति। टचस्यापत्यमित्यर्थेऽञ् प्राप्ति। द्व्यचोरिति। अथ केवलक्षत्रियवा ची। सा न स्यादिति। तद्राजसंज्ञा न स्यादित्यर्थः। ञ्यादीनाश्चेति। वृद्धे दि त्यादिसूत्रविहितानाञ्ज्यादीनामित्यर्थः। इदञ्च दूषणं केवलक्षत्रियवाचकपू-रुशब्दविषये स्पष्टमेव। एवमन्येषामपि तथात्वं द्रष्टव्यम्। द्व्यञ्मगधेति-सूत्रभाष्यादिति। तत्र ह्येवमुक्तम्। अणो ञ्यङण्ञो विप्रतिषेधेन। अण ञ्यङ ण्य इञ् इत्येते भवन्ति विप्रतिषेधेन। अणोऽवकाशः। आङ्ग। वा ङ्ग। ञ्यङोऽवकाशः। आम्बष्ठ्य। सौवीर्य। इहोभयमाप्नोति दार्व्य इति। दार्व्यस्यापत्यमिति ञ्यङिति कैयट। एयस्यावकाश। निचक। नैचक्य। अ थ स एव। इहोभयमाप्नोति। नीप। नैप्य। इञोऽवकाश। आजमीढि

विरित्यत्र सास्य देवतेत्यर्थेऽपि अणिति प्रकृतिभावे प्राप्ते टिलोपोऽनेन सूत्रेण यद्यपि कृतस्तथापि ब्रह्मणोऽपत्यमित्यर्थेऽपि न मपूर्वोऽपत्ये इतिसूत्रेण प्रकृतिभावनिषेधे ब्राह्मणो न सिद्धेदित्यभिप्रायेण योगविभागफलमुक्तम्। अत्र। ब्राह्म इतिसूत्रे। जातावित्यस्य यत्र जातिः प्रकृतिप्रत्ययसमुदायस्य प्रवृत्तिनिमित्तभूता तत्रेत्यर्थः। ब्राह्मो नारद इत्यत्र तु न तथेति भावः। मपूर्वेतीति। वृत्तिस्थं यद्वाक्यं मपूर्व इति तत्रत्यवान्तानुकरणमिदमुच्चारणार्थोऽकारः। न तु सूत्रस्य प्रतीकधारणमितिभ्रमः स्यात्। वपदेन कृत्रिमत्वात्तत्प्रतमपोर्ग्रहणं स्यादत आह। स्वरूपेति। व्याख्यानादिति। जनपदशब्दात्क्षत्रियादित्यादिनिर्देशदर्शनमूलकाद्व्याख्यानादित्यर्थः। अन्यथा। कुलात्ख इतिसूत्रे तदन्ताग्रहणे। ननु प्रकृतसूत्रे तदन्ताग्रहणेऽपि कुलीनशब्दाढ्यशब्दयोः समासेनाढ्यकुलीनस्य सिद्धिः स्यादेवेत्यत आह। एवञ्चेति। ईकार उदात्त इति। प्रत्ययस्वरेणेकार उदात्त इत्यर्थः। पूर्ववदित्यस्य महाकुलादितिसूत्रोदाहरण एवेत्यर्थ इत्यभिप्रायेणाह। अन्यतरस्यामिति। ननु शत्रुरितिव्याख्यानमपत्याधिकारविरुद्धमत आह। अपत्य इतीति। इत्याहुरिति। वस्तुतस्तु सपत्नशब्दोऽव्युत्पन्नप्रातिपदिकं शत्रुवाची तदुक्तं सपत्नीशब्दव्याख्यानावसरे सपत्न प्रक्षोत्यन्तरत्वादिति। तेन। अङ्गादितिव्याख्यानेन। अठच इति। कर्मणि घटोऽठजितिसूत्रविहितस्याठचष्ठस्येत्यर्थः। एतच्च विभक्तिव्यत्यासेन यदङ्गादिति व्याख्यातन्तदभिप्रायवर्णनम्। वस्तुतोऽङ्गस्येतिपठान्तमेवास्त्वित्याशयेनाह। अत्र ठस्य इति। अत एव। वर्णमात्रस्य प्रत्ययत्वादेव। सङ्घातग्रहणपक्षे माथितिकेऽतिप्रसङ्गन्निरस्यति। माथितिकेऽपीति। अक्षोपस्य। मथितशब्दावयवाकारलोपस्य। लघुत्वादिति। वर्णग्रहणपक्षे माथितिके मथितम्पण्यमस्येत्यर्थे ठक्प्रत्यये इकादेशे यस्येतिलोपेऽपीकादेशे न स्थानिवद्भावेन ठत्वमसिद्धित्वादिति पञ्चमीसमासः सन्निपातपरिभाषा वा नाश्रयणीया। कर्मठेतिप्रसङ्गनिवारणायार्थवत्परिभाषा च नाश्रयणीयेतिलाघवमित्यर्थः। वृद्धिनिमित्तस्येति पुंवद्भावनिषेधमाशङ्क्याह। वृद्धेनेति। ननु पुंवद्भावेन गार्ग्यशब्दादित्युक्तिरसङ्गता तस्य स्त्रीवाचकत्वाभावादत आह। पुंवत्त्वेनेति। यातण्डीत्यत्रापि णित्त्वस्य प्रयोजनमिति कश्चिदुल्लिङ्ख्यति। यातण्डा अपत्यमिति। रूप-

द्यालुग्भविष्यतीत्येवमभिधानेन प्रकृतसूत्रे च गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुक्। गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुग्वक्तव्य.। विदानामपत्यम्माणवक.। वैद.। वैदौ। किमर्थमिदम् अचीत्येवालुक् सिद्धः। अचीत्युच्यते न चाचाजादिम्पश्याम.। प्रत्ययलक्षणेन। वर्णाश्रये नास्ति प्रत्ययलक्षणम्। यदि वा कानि चिद्वर्णाश्रयाणि प्रत्ययलक्षणेन भवन्ति तथेदमपि भविष्यतीतिप्रतिपादनेन च ध्वनितमित्यर्थः।प्रधानमेवेति।प्रधानीभूतार्थविशेषणतापन्नमेवेत्यर्थः। आङ्गाः स्त्रिय इति। अङ्गानामपत्यानि स्त्रियः आङ्ग्य इत्यर्थः। याख्यानादिति।अङ्गानतिक्रान्त इति विग्रहेऽपि अत्यङ्ग इत्यत्र लुग्दर्शनमूलकादित्यर्थस्तदेवाह।तेनेति।रघुत्वे नैव ततो बोध इति।रघुत्वारोपे चापत्यापत्यवद्भावसम्बन्ध. प्रयोजक इति शेष।पश्चादुत्पन्नस्यापीतो मनुष्यजातेरितिङीषो लुक् कुतो नेत्यत आह। अत्रेति। अतश्चेतिसूत्रे तद्राजस्येत्यनुवर्त्तते तथात इत्यस्य विशेषणत्वं तु विशेष्यस्तथा सत्यदन्तस्य तद्राजस्येत्यर्थापत्तौ आडादीनामप्यनेन सूत्रेणैव लुक्सिद्धौ स्त्रियामवन्तीत्यस्य वैयर्थ्यापत्तेः। एवञ्च तद्राजशब्दाभिधस्योत इत्यर्थः। सम्प्रत्यस्मादृशस्य ह्रस्व एवाकार. सम्भवतीति तपरकरणं व्यर्थमत आह। तपरकरणमिति। नियतमिति। गम्यमानभवतिक्रियाविशेषणमेतत्।एतेनानन्तरापत्येऽप्येवमेवेति सूचितम्। क्षत्रिया इति। एतेन यत्प्राच्यग्रहणस्योदाहरणन्तज्जनपदक्षत्रियोभयवाचकत्वेन प्रकृतप्रकरणीयप्रत्ययोत्पत्तियोग्यताऽस्तीति ध्वनितम्। इतिमते इति। भाष्यसम्मते मत इत्यर्थ.। यौधेयीत्यत्र यौधेयशब्दादुत्पन्नस्याञोऽपि प्राप्तस्य लुकोऽनेन निषेध इत्यस्य फलमुपपादयति। आदय इति। एतेन। यौधेयादिग्रहणेन ज्ञापकेन। ङीपीतीति। अञो लुकि कृतेऽपि जातिलक्षणङीप. प्राप्त्यभाव उक्तः। ङीबुदात्तः स्यादिति। कित इत्यनेन ढगन्तस्यान्तोदात्तत्वात्। आद्युदात्तत्वमिति। समुदायस्येति शेष.। अणिञोरितिसूत्रस्यापत्याधिकारबहिर्भूतत्वाल्लौकिकगोत्रग्रहणशङ्कानिवारणायाह। अत्रेति। तद्धेति। गोत्रावयवादितिसूत्रं द्योत्यते। तेन। अनन्तर इति भाष्येण। लौकिकगोत्रेति। प्रवराध्यायप्रसिद्धस्य गोत्रस्येत्यर्थः। पूर्वांशभाष्ये गोत्रादयग्त इत्यस्य पारिभाषिकगोत्रात्पृथगभून इत्यर्थस्तेन तत्सदृशे प्रत्यये

भाजकाम्ङि । अणः स एव । इहोभयमाप्नोतीति । बुध बोधि । व्यङ्ख्येनो भव-
न्ति विप्रतिषेधेनेति । तेन । बहुत्ववदर्थे इतिव्याख्यानेन । बहुष्वर्थेषु यस्तद्रा-
ज इत्यर्थे द्वन्द्वावयवयावयवस्य तद्राजस्य बह्वर्थप्रतिपादकत्वाभावान्न स्यादिति भा-
व । ननु तद्राजान्तत्वञ्च प्रत्येकमस्ति तेषाञ्च न बहुत्ववदर्थे वृत्ति किन्तु समु-
दायस्यैवेत्यत आह । द्वन्द्वे प्रत्येकमिति । बहुत्ववत्त्वे नैवेति । उद्भूतावयवभेद-
रूपस्येतरेतरयोगद्वन्द्वस्य प्रकृते सत्त्वादिति भाव । तद्राजार्थसमूहगत इति
यच्च तद्राजार्थेष्वनेकेषु बहुत्वान्वयस्तत्र लुगितिसूत्रार्थ इति भाव । अत एव
तद्राजान्तमात्रार्थाश्रितमिति व्याख्यानादेव । इतिनिर्देश इति । नोदात्तस्वरि-
तोदयमगार्ग्यकाश्यपगालवानामिति सूत्र निर्देश इत्यर्थ । यथा तद्राजस्ये-
तिसूत्रे व्याख्यातन्तथा यञञोश्चेति सूत्रेऽप्यर्थ स्यादिति भाव । अन्यथा ।
अपवादत्वाभावे । विदाद्यन्तत्वस्वीकार इति शेष । विशेषार्थमाह । भृगुवत्से-
ति । तदुक्तमत्रैव सूत्रे भाष्ये । अथ यो लोप्यलोपिना समासस्तत्र कथम्भवि-
तव्यम् । उभयं हि दृश्यते शरदच्छुनकदर्भाङ्गुवत्साग्रायणेषु । नोदात्तस्वरितो-
दयमगार्ग्यकाश्यपगालवानामितीति । अत्र कैयट । ज्ञापकद्वयसद्भावादुभयम्भ-
वतीति भाव इति । लुकसिद्धिरिति । य शिष्यत इतिन्यायेन तद्राजान्तस्य बहु-
त्ववदर्थे वृत्ते । वक्ष्यमाणरीत्या । प्रत्ययलक्षणेन । ननु गोपवनादिवाक्यगत्र-
ब्देऽपि निषेध स्यादत आह । विशिष्टस्येति । भाष्यकैयटाविति । एतच्चोपपा-
दितम्प्राक् । न चैवमिति । बहुत्ववदर्थे विद्यमानं यत्तद्राजान्तमितिव्याख्याने
इत्यर्थ । अङ्गानामपत्यमाङ्ग । आङ्गप्रतिकृतय आङ्गा । इयं प्रतिकृतावित्यर्थे
कनि तस्य लुपि तद्राजान्तस्य पूर्ववद्बहुत्ववदर्थे वृत्ते सत्त्वात् । तत्साहचर्ये-
ण । यञञोश्चेति सूत्रसाहचर्येणेत्यर्थ । यदुक्तम्प्राक् वक्ष्यमाणरीत्येति तदनु-
सुपक्रमते । पञ्चालापत्येति । पञ्चालापत्ये यौगिको य पञ्चालशब्दो बहुव-
चनान्तस्तस्मादित्यर्थ । ध्वनितञ्चेदमिति । तत्र हि क्षत्रियादेकराजात्सङ्घात-
प्रतिषेधार्थम् । क्षत्रियादेकराजादिति वक्तव्यम् । किम्प्रयोजनम् । सङ्घातप्रति-
षेधार्थम् । सङ्घातान्मा भूत् । पञ्चालानामपत्यम् । विदेहानामपत्यमिति ।
तत्तर्हि वक्तव्यम् वक्तव्यम् । न ह्यन्तरेण यत्नम् लुकम्पञ्चालानामित्यत्र भव-
ति । यस्तस्मादुत्पद्यते युवप्रत्यय स स्यात् । युवप्रत्ययस्तस्य लुक् । तस्य-

दित्यत्र कर्मधारयात्सप्तमी। मौवत्वादवयवशब्दस्य परनिपातः। सूत्रस्य प्रयोजनान्तरमाह। किञ्चेति। अवयुतमित्यस्य व्याख्या पृथग्भूतमिति। अनयोरुभयोरपीति।भारद्वाजीयभाष्ये उदाहरणत्वे न प्रदर्शितयोर्दैवदत्त्यायाज्ञदत्त्येत्यनयोः। अपिना पूर्वोक्तानामुणिकादीनाङ्ग्रहणम्। न चाणिञोरितिसूत्रव्याख्यानावसरे गोत्रशब्देन पारिभाषिकस्य गोत्रस्य ग्रहणमित्यर्थे गोत्रावयवादितिसूत्रारम्भस्य साधकत्वमुक्तन्तत्कथमुपपद्यतेऽगुरूपोत्तमार्थत्वादस्येति वाच्यम्। भारद्वाजीयभाष्यसम्मतप्रयोगसाधकस्य तस्यारम्भादित्यर्थात्। सूत्रे इति। सूतशब्दो भोजशब्दश्च ष्यङ्प्रत्ययम्प्राप्नोतीत्यनयोरर्थः। युवत्यामिति क्षत्रिय इति चोपाधिः पशाविति‌वत्तदाह।सूतशब्दादिति।स्त्रियामस्य विधानात् क्षत्रियशब्दः क्षत्रियापरः। जातौ सूनोति। युवत्वजातिविशिष्टे रूढस्य सूतीतिरूपमित्यर्थः। क्रियाशब्दस्य तु सूता इत्येव भवतीति बोध्यम्। दैवयज्ञीत्यादिनिर्देशादपत्यार्थकप्रत्ययान्तानामेतस्मिन् सूत्रे ग्रहणमित्याशयेनाह। अनन्तरापत्यार्थमित्यर्थ इति। उभयत्र विभाषेयम्। गोत्रे प्राप्ते अनन्तरापत्ये अप्राप्ते आरम्भात्। इदम्। उभयत्र विभाषात्वकथनम्। अन्यथा। तस्यान्यविषयकत्वस्यापि स्वीकारे॥

## ॥ इत्यपत्याधिकारविवरणम् ॥

करणे घञिति। रञ्जधातोरिति शेषः। घञि च भावकरणयोरिति नकारलोपः। रञ्जनकर्म इति। रञ्जनमत्रान्यदीयवर्णप्रकारकप्रतीतिविषयत्वम्। एवञ्च तेन रक्तत्वञ्च तत्सम्बन्धप्रयोज्यतदीयवर्णप्रकारकप्रतीतिविशेष्यत्वमिति बोध्यम्। तत्सम्बन्धश्च पृथगग्रहणप्रयोजकः सम्बन्धविशेषः। तेन जपाकुसुमसम्बन्धाद्रक्तः स्फटिक इतिप्रतीतावपि न जापाकुसुममिति प्रयोगापत्तिः। रोचनाशब्देनेति। अन्यग्रहणमिति। अश्विन्यादिशब्देन तत्तन्नक्षत्रयुक्तचन्द्रवाचकस्य ग्रहणमित्यर्थः। स च। केवलनक्षत्रवाचकश्च। एवमिति। उभयवाचक इत्यर्थ। ननु यदि सूत्रघटको नक्षत्रशब्दस्तत्तन्नक्षत्रयुक्तचन्द्रलाक्षणिकस्तदा तत्तन्नक्षत्रयुक्तचन्द्रबोधकादश्विनीयुक्तचन्द्रशब्दादपि प्रत्ययः प्राप्नोतीत्यत आह। स च नक्षत्रवाचकादेवेति। अश्विन्यादिशब्देभ्य एवेत्यर्थ। न तु नक्षत्रवाचकनक्षत्रशब्दादपि। अत्राप्युक्त एव हेतुर्बोध्यः। ननु प्रकृते पुष्यशब्दः पुष्य-

विध्यर्थमित्यर्थः । अन्तोदात्तत्वानापत्तेरिति । यद्यपि कुमुदगन्धिशब्दादपि तस्य प्रत्ययसंज्ञासन्नियोगशिष्टाद्युदात्तत्वे तदादेशस्य षङोऽप्युदात्तत्वात्तत्राऽपि कृते एकादेश उदात्तेनेत्युदात्तत्वं सिध्यति। तथापीअन्ते वाराह्यत्यादावन्तोदात्तत्वानापत्तेरित्यर्थः । प्रत्ययः परश्चेतिसूत्रद्वयप्रकरणेऽस्य पाठेन प्रत्ययविधायकत्वमस्य सूत्रस्येतिशङ्कानिवारणायाह । ष्यङ्श्चादेश एवेति । शीदमेघे यासिद्धेरिति । आपत्यस्य च तद्धितइतिसूत्रविहितो यलोपः प्रकृते न स्यात् स्वतन्त्रप्रत्ययपक्षे तस्यापत्यत्वाभावादिति भावः । ननु पुंवद्भावेन यकारनिवृत्तिर्भविष्यतीत्यत आह । अठ इति । नन्वस्य स्वतन्त्रप्रत्ययत्वेऽपि स्वार्थिकत्वेनापत्यार्थकत्वादापत्यस्येति यलोपः स्यादेवेत्यत आह । स्त्रियामिति विशिष्यामिति ।.अत्र विशिष्योक्त्या इति कथनेन प्रकृतिवाच्यस्त्रीत्वद्योतकत्वमेव टाबादीनामिति सूचितम् । अनिर्दिष्टार्था इतिन्यायेनात्यन्तस्वार्थिकानान्तु सकलस्वप्रकृत्यर्थकता । अत एव यौधेयी इत्यत्रापत्यार्थक ढगन्तयौधेयशब्दात्पर्श्वादीतिसूत्रेणाञि तदन्तस्य गोत्रत्वमस्त्येव।अत एवाह । गोत्राणन्तेति। यञ्प्रत्ययस्येति । अभिजिद्विदभृदितिसूत्रविहितस्येत्यादिः । आदेशत्वपक्षे येच तद्धितइतिसूत्रस्यभाष्यविरोधशङ्कानिवारणाय शङ्कते ।-नन्वादेशत्व इति । मन्वस्तु शीर्षन्नादेशस्तथापि नस्तद्धित इति टिलोपो भविष्यत्याह तीत्यत । टिलोप इति । एकदेशयुक्तित्वादिति ।। अभावकर्मणोरिति पर्युदासेनादेशत्वानाक्रान्तस्य याद्धितद्धितस्य ग्रहणेन टिलोपापवादप्रकृतिभावाप्राप्त्या इष्टरूपसिद्धौ पर्युदासानाश्रयणेनादेशपक्षे दूषणाभिधानमनुचितमित्येकदेशयुक्तित्वमिति भावः । किञ्च प्रकृतसूत्रस्थसिद्धान्तभाष्यविरोधादप्येकदेशयुक्तित्वमित्याह । अत एवेति । एकदेशयुक्तित्वादेव । उक्तप्रयोगयोः । हास्तिशीर्ष्या पैलुशीर्ष्या इतिप्रयोगयोः । अनभिधानमेवेति । एतदनभिधानाभिधानं पर्युदासानाश्रयणेन । तयोः प्रयोगयोः प्रामाणिकत्वं उपायान्तरमाह । यद्वेति । गोत्रावयवादितिसूत्रघटकोऽवयवशब्दो लोकप्रसिद्धावयवार्थापेक्षया विलक्षण इत्याशयेनाह । अवयवशब्द इति। अवश्य इति । अवेत्युपसर्गपूर्वकायुधातोरप्प्रत्ययान्तः । अप्रधानवाचीति । अप्रधानस्य लक्षणया प्रकृते बोधकः । तेन न मीनघटादिशब्दजन्यशाब्दबोधे मीनपदार्थेऽवयवत्वव्यवहारापत्तिः । गोत्रावयवा-

बहुव्रीहिसमासः । आद्ये । द्वितीयान्तात्प्रत्यय इतिपक्षे । उपयन्तरि । एवञ्चा
पूर्वं पतिर्यस्यास्तामाहृतो या कुमारी तामुपपन्नः कौमारः पतिः । द्वितीये ।
प्रथमान्तात्प्रत्ययस्वीकारे । उपयमनविशिष्टे स्वार्थे । एतच्च निपातनसामर्थ्या
ल्लभ्यम् । उपयमनविशिष्ट इतिकथनेन विनाप्यण्प्राग् न तथा प्रत्ययः । एव
ञ्चापूर्वपतिसम्बन्धः स्त्रीनिष्ठः प्रकृते कुमारशब्दस्य प्रवृत्तिनिमित्तमित्यर्थादुक्तं
भवति । अपूर्वत्वस्य पतिनिष्ठस्य च प्रतीतिरनेन प्रवृत्तिनिमित्तेन स्वघटकत
या कारिता भवति । न च कौमारापूर्ववचने इत्युभयतः स्त्रिया अपूर्वत्व इ
ति वक्तव्यमिति वार्त्तिककृतोक्तम् । एतेन स्त्रीनिष्ठापूर्वत्वे निपातनमिति ल
भ्यते एवञ्चापूर्वः पतिर्यस्या इत्यर्थे समासानुपपत्तिरिति वाच्यम् । एतद्वार्त्ति
कव्याख्यानावसरेऽपूर्वपतिं कुमारीमुपपन्नः कौमारो भर्त्ता । कुमारी अपूर्वं
पतिं पतिमुपपन्ना कौमारी भार्य्येति । भाष्यकृता प्रदर्शनेन वार्त्तिकस्य स्त्रि
या इत्यनन्तरस्याणिप्रत्ययस्य ति शेषपूरणेन व्याख्यानस्योचितत्वात् । द्विती
यमिति । कौमारी भार्य्येति रूपम् । स्थाल्यवधिरिति । एतच्चार्थादुपपन्नं भव
ति । शरावस्याधिकरणत्वात् । एवञ्च शाराव ओदन इति शब्दात्किञ्चिदपाटा
नकोद्धरणोत्तरकालिकशरावाधिकरणकनिधानकर्म ओदन इत्याकारकः शाब्द
बोधः । उपयोगफला क्रियेति । उपयोगः फलं यस्या इत्यर्थः । उभौ लाक्षणिक
त्वमुपपादयति । यवे क्षिपतीति । वृत्ति शरणमिति । भाष्येऽदर्शनात् । साव
नातिरिक्तेति । सावने तथा व्यवहाराभावात् । एतेन प्रकृतसूत्रविहितप्रत्यया
न्तस्य समुदायस्य रूढिरपीति लभ्यम् । रूढ्यर्थतावच्छेदकञ्च मासनिष्ठ शुक्ल
प्रतिपदादिदर्शान्ततिथिसमुदायत्वम् । कृष्णप्रतिपदादिपौर्णमास्यन्ततिथिसमु
दायत्वं वा।एवञ्च पौषादिपदं योगरूढमान च सौरेऽपि पौषव्यवहारात्पौषपद
ई यलरूढनेयास्तु तस्मिन् रूढार्थतावच्छेदकञ्च धनुस्थरविविशिष्टत्वमेवास्त्विति
वाच्यम् तथा सति सौरेऽस्मिन् पौर्णमासीतिसूत्रेण यागप्रदर्शनवैयर्थ्यापत्तेः न च
सौरेऽपि धनुस्थरविविशिष्टपौर्णमासीघटिते एव तथा व्यवहार इति वाच्यम् यस्मि
न्नपि पौषशुक्लपक्षीयपौर्णमासीप्राक्दिवस मकरसंक्रान्तिस्तस्मिन्सौरे पौषव्य
वहाराभावप्रसङ्गात् । एव योगार्थाभिन्न एव शक्तिः सौरे तु धनुस्थरव्यारब्धे त
था व्यवहारः स्थलपद्मे पद्मव्यवहारवदौप । पुष्पवदश्च न केवलस्यापनशब्द

नक्षत्रयुक्तशशियुक्तपुष्यादिघटीपरिच्छिन्नकालपरस्त्वस्य चाधभवत्वन्न सम्भवत्य-भेदे आधाराधेयभावाभावादत आह । अद्यतनमित्यादि । ननु लुबविशेष इतिसूत्रस्य व्याख्यावसरे षष्टिदण्डात्मकेति यद्व्याख्यातन्तस्य कथं लाभ इति चेदित्थम् । पूर्वसूत्रमनुवर्त्तते । नक्षत्रशब्दश्च तत्तन्नक्षत्रयुक्तशशिबोधक इति तत्तन्नक्षत्रयुक्तशशियुक्तकाल इत्यर्थे यः प्रत्ययस्तस्य लुप् स्यादविशेष इत्यस्य प्र-त्यासत्त्या तत्तन्नक्षत्रेण शशिनो यावत्कालावच्छेदेन सम्बन्धस्तद्व्याप्यस्य विशे-षस्य विवक्षा न चेदितिसूत्रार्थात्।एतेनाद्य पुष्य इत्युक्तं द्याः श्वो वा नेति विशेषो गम्यत एवेत्यविशेष इत्यनुपपन्नमित्यपास्तम्।तद्व्याप्यत्वञ्च तत्परिच्छेदकसूर्यवृ-त्तिसङ्ख्याव्यूनवृत्तिसङ्ख्यावत्क्रियापरिच्छिन्नत्वमेव।एतद्विपरीतेऽपीति । संज्ञाविष-येऽपीत्यर्थ. । द्वन्द्वाच्छः । अत्र नक्षत्रेणेत्यनुवर्त्तते तच्च षष्ठ्या विपरिणम्यते । एवञ्च नक्षत्राणां यो द्वन्द्वस्तस्माद् युक्त इत्यर्थे प्रत्ययो भवति । योयुक्तः स काल-श्चे दिति सूत्रार्थ ।श्रार्त्ति कमितिाद्दृष्टं सामकलेर्ढक्दृष्टं सामेत्यत्र कलेर्ढग्वक्तव्य इति वार्त्ति कात् । ननु क्रमविषयसाम्नो नित्यत्वात्कलिना दृष्टमित्यनुपपन्नमि-ति चेन्न । यस्य साम्नो विशिष्टकार्यविषयो विनियोगो ज्ञानातिशयसम्पत्त्या कलिनाऽज्ञायि तत्तेन दृष्टमित्युच्यते । परिवृतो रथः । तेनेति वर्त्तत इति । तृतीयान्तात्परिवृत इत्यर्थेऽण् प्रत्ययो भवति । यः परिवृत. स रथश्चेत् । प-रिवृत इत्यस्य समन्ताद्वृत इत्यर्थो न तु मूलोक्त इत्याह । समन्तादिति । अपाठ इति । अप्रशस्तः पाठ इत्यर्थ । मनोरमाविरोधादिति । तत्र तदेकान्त-ग्रहणं कर्त्तव्यमित्यस्य पुत्रैः पौत्रैः परिवृत इत्यत्र प्रत्ययाप्रवृत्तिः प्रयोजनत्वे-नोक्ता । न हि पुत्रपौत्रैः समन्तादेष्टनं सम्भवति। तदेकान्तेत्यत्र तच्छब्देन प-रिवृतशब्दार्थघटको विशेष्यभूतोऽर्थः परामृश्यते तस्यैकान्तस्तदेकान्तः। येन प-रिवृतः स तदेकान्तोऽवयवश्चेद्भवतीति विवक्षितम्।अवयवत्वं च अवयववत्तदभे-देन प्रतीयमानत्वम् । स्वरे विशेष इति । द्वैयवैयाघ्रेति द्वावप्यञन्तत्वादाद्युदा-त्तौ तत्राप्यस्ति द्वैप । वैयाघ्रः । एतावाद्युदात्तावेव । सूत्राभावे त्वणन्त-त्वादन्तोदात्तत्वं स्यात् । तत्र इति । तस्मिन् प्रवृत्तिनिमित्ते योधनीय इति शे-षः । तच्च । अपूर्वत्वज्ञानकरणीभूतप्रवृत्तिनिमित्तञ्च । प्रकृत्यर्थगतम् । कुमार-शब्दार्थगतम् । रूढेरिति । यत एवापूर्वं पतिर्यस्या इतिसमानाधिकरणपक्षो

बहुव्रीहिसमास । भार्यो । द्वितीयान्तात्प्रत्यय इतिपक्षे । उपयन्तरि । एवञ्च अपूर्वं पतिर्यस्यास्तामादृग्गी या कुमारी तामुपपन्न कौमार पति । द्वितीये। प्रथमान्तात्प्रत्ययस्वीकारे । उपयमनविशिष्टे स्वार्थे । एतच्च निपातनसामर्थ्या ल्लभ्यम । उपयमनविशिष्ट इतिकथनेन विनाहाभाड न तथा प्रत्यय । एव ञ्चापूर्वपतिसम्बन्ध स्त्रीनिष्ठ प्रकृते कुमारशब्दस्य प्रवृत्तिनिमित्तमित्यर्थादुक्ता भवति । अपूर्वत्वस्य पतिनिष्ठस्य च प्रतीतिरनेन प्रवृत्तिनिमित्तेन स्वघटकत या कारिता भवति । न च कौमारापूर्ववचन इत्यु भयत स्त्रिया अपूर्वत्व इ ति वक्तव्यमिति वार्त्तिककृतोक्तम् । एतेन स्त्रीनिष्ठापूर्वत्वे निपातनमिति स भ्यते, एवञ्चापूर्वं पतिर्यस्या इत्यर्थे भासासानुपपत्तिरिति वाच्यम्। एतद्वार्त्ति कव्याख्यानावसरेऽपूर्वपतिङ कुमारीमुपपन्न कौमारी भर्त्ता। कुमारी अपूर्व पति पतिमुपपन्ना कौमारी भार्येति । भाष्यकृता प्रदर्शनेन वार्त्तिकस्य स्त्रि या इत्यनन्तरस्याणिग्रहणस्य ति शेषपूरणेन व्याख्यानस्योचितत्वात् । द्विती यमिति । कौमारी भार्येति रूपम् । स्यान्त्यवधिरिति । एतच्चार्थादुपपन्नमव ति । शरावस्याधिकरणत्वात् । एवञ्च शाराव ओदन इति शब्दात्किञ्चिदपादा नकोद्धरणोत्तरकालिकशरावाधिकरणकनिधानकर्म ओदन इत्याकारक शाब्द बोध । उपयोगफला क्रियेति । उपयोग फल यस्या इत्यर्थ । उभो लाचणिक त्वमुपपादयति । वसे क्विपीति । वृत्ति शरणमिति । भाष्य ऽदर्शनात् । साव नातिरिक्तेति । मावने तथा व्यवहाराभावात् । एतेन प्रकृतसूत्रविहितप्रत्यया न्तस्य समुदायस्य रूढिरपीति लभ्यम् । रूढ्यर्थतावच्छेदकञ्च मासनिष्ठ शुक्ल प्रतिपदादिदर्शान्ततिथिसमुदायत्वम् । कृष्णप्रतिपदादिपौर्णमास्यन्ततिथिसमु दायत्व वा।एवञ्च पौषादिपद योगरूढम्।न च सौरेऽपि पौषव्यवहारात्पौषपद ङ्केवलरूढमेवास्तु तस्मिन् रूढार्थतावच्छेदकञ्च धनुस्सरविविशिष्टत्वमेवास्त्विति वाच्यम। तथा सति सास्मिन् पौर्णमासीतिसूत्रे ण योगप्रदर्शनवैयर्थ्यापत्ते ।न च सौरेऽपि धनुस्सरविविशिष्टपौर्णमासीघटिते एव तथा व्यवहार इति वाच्यम्।यस्मि न्वर्षे पौषशुक्लपक्षीयपौर्णमासीप्राक्तिथावेव मकरसङ्क्रातिस्तस्मिन्नुसार पौषव्यव हाराभावप्रसङ्गात् । एव योगार्थाभिन्न एव शक्ति सौरे तु धनुस्सरव्यारब्धे त था व्यवहार स्वन्पदमे पदस्यव्यवहारवद्गौण । पुष्पपदञ्च न केवलमु यनक्षत्र

माघबोधकमण्प्रत्ययप्रकृतिबोधकम्। पौषी या पौर्णमासी तस्यानियमेन पुष्यनक्षत्रयुक्तचन्द्रमसा योगस्य नियमाभावात् किन्तु पुनर्वसुपुष्यान्यतरबोधकम्। अन्त्योपान्त्यौ त्रिभौ ज्ञेयौ फाल्गुनश्च त्रिभो मतः। शेषा मासा द्विभा ज्ञेयाः कृत्तिकादिव्यवस्थयेति वचनात्। न च पौषादिपदम्धनुस्सरव्यारब्ध मासीयपौषीपौर्णमासीघटिते गौणमित्येवास्त्विति वाच्यम्। सा वैशाखस्यामावस्या या रोहिण्या सम्पद्यते इति श्रुत्या चान्द्र एव शक्तिकल्पनात्। फल्गुनीनक्षत्रेण युक्ता फाल्गुनीत्यत्र फल्गुनीपदस्य पूर्वफाल्गुनी उत्तरफाल्गुनी हस्त इत्येतत्त्रितयपरतया यस्मिन्वर्षे हस्तनक्षत्रयुक्तचन्द्रमसा युक्ता फाल्गुनस्य पौर्णमासी तस्मिन्वर्षे चैत्राश्विन्यात्यन्यतरयोगसम्भवेन तदुत्तरं वैशाखामावास्यायां रोहिणीयोगस्य सम्भवात्।यदि मेषस्थरविविशिष्टमासत्वं वैशाखत्वन्तदा वैशाखामावास्यायां सूर्यस्य मेषस्थत्वे चन्द्रमसः रोहिणीयोगेऽमावास्यैव न स्यात्। अमा सह वसतोऽस्याञ्चन्द्रार्काविति व्युत्पत्तेः प्रसिद्धत्वात्। सूर्याचन्द्रमसोर्यः परः सन्निकर्षः सामावास्येति गोभिलवचनाच्चामावास्यान्ते चन्द्रस्य सूर्यराशाववस्थान नियमात्सूर्यस्यापि वृषस्थत्वमुपपादनीयमतश्चान्द्रे वैशाखे वैशाखपदस्य शक्तिरिति। मेषादिस्थे सवितरि यो मासः प्रपूर्यते चान्द्रः। चैत्राद्यः स विज्ञेयः पूर्त्ति द्वित्वेऽधिमासोऽन्त्य इतिवचनाच्छुक्लप्रतिपदादिचान्द्रामावास्यायां वृषराशौ सूर्यावस्थानस्य तस्याश्च वैशाखस्य • सम्भवात् सम्भव इति द्रष्टव्यम्। केचित्तु पुष्येण युक्ता पौर्णमासी पौषीत्यत्र पुष्यनक्षत्रस्य योग एव न विवक्षितः। किन्तु पुष्ययोगयोग्यतैव। तद्योगयोग्यत्वञ्च तद्योगयोग्यता वच्छेदकधर्मवत्त्वम्। योग्यतावच्छेदको धर्मश्च धनुस्सरव्यारब्धपक्षीयत्वम्। एवञ्च पौषीपदस्य धनुस्सरव्यारब्धपौर्णमास्यां शक्तौ पौषपदमपि धनुस्सरव्यारब्धपौर्णमासीघटितत्वावच्छिन्ने शक्तमिति पौषपदस्य योगरूढत्वमव्याहतम्। एवमेव सर्वत्र बोध्यमिति वदन्ति। माघायानुजावरेत्यादीति। माघायानुजावरानुपूकचातुष्प्राकाग्यराघोष्णवैयातवैकृतवारिवस्कृतायायणाग्रहायणमासा •• नानि इति। साऽस्य देवता। प्रथमान्ताद्वत्तोपाधिकात् षष्ठ्यर्थेऽणादयः स्युः। सम्बन्धित्वे नेत्यादि। एतेन सम्बन्धित्वमेव प्रत्ययार्थतावच्छेदकम्। प्रत्ययार्थश्च क्त विग्रहेयम्। क्त विग्रहस्य इत्युक्तम्भवति। हविराभावसम्बन्धमिति। तादृशीयं

एव प्रकृतसूत्रे देवतापदोपादानेन प्रत्ययविधानाद्देवतात्वेन देवताऽपि प्रती-यते । तथा च ऐन्द्रन्दधीत्यादौ प्रकृत्यर्थाभिन्नदेवतासम्बन्धित्वावच्छिन्ने प्रकृतिप्रत्ययसमुदायस्य शक्तिरिति भावः । ऐन्द्रन्दधीत्यादौ हविषि देवतासम्बन्धित्वञ्च देवतोद्देश्यकत्यागकर्मत्वम् । मन्त्रे तद्देवताकत्वरूपसम्बन्धित्वञ्च तदुद्देश्यकत्यागकरणत्वेन श्रुतिबोधितत्वम् । न च मन्त्रं विनापि हविःप्रक्षेपादिरूपक्रियाजननात्कथम्मन्त्रस्य करणत्वमिति वाच्यम् । करणत्वस्य त्यागाङ्गव्यापारकत्वरूपत्वात् । व्यापारश्चोच्चारणरूपः । मूले द्रव्यं उद्देश्यविशेष इति । अत्र द्रव्यपदोत्तरसप्तम्यर्थो विषयिता । उद्देश्यविशेष इत्यस्य स्वत्वप्रकारकेच्छोद्देश्य इत्यर्थः । एवञ्च त्यज्यमानद्रव्यविषयित्वावच्छिन्नस्वत्वप्रकारितावदिच्छोद्देश्यो देवतेत्यर्थः । लाघवादाह । मन्त्रस्तुत्ये ति । मन्त्रेण स्तुत्येत्यर्थः । ऐश्वर्यकर्मण इति । ऐश्वर्यार्थकस्येत्यर्थः । ऐश्वर्यञ्च त्यज्यमानद्रव्यनिरूपितम् । आग्नेयशब्दस्य ब्राह्मणपरत्वमनुपपन्नमित्याशङ्कते । अग्नउद्दे शेनेति । व्यस्तस्यैव देवतात्वेऽपीति । प्रत्येकञ्चतुर्थीश्रवणेन विशेष्यवाचकदेवशब्दप्रकृतिकविभक्तिसजातीयविभक्तिकविश्वशब्दघटितस्य देवतावाचकत्वेऽपीत्यर्थः । वैश्वदेव्यामिक्षेति । तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमित्यत्रेत्यर्थः । ब्रह्मणि रुढ्ये ति । को ब्रह्मात्मानिलार्केषु यमेन्द्रे सर्वनाम्नि च । पावके च मयूरे च सुखशीर्षजलेषु कमितिकोशाद्ब्रह्मण्ययं रूढः । ननु केवलः कशब्दो यदि ब्रह्मणि वर्त्तते तदा कस्मा अनुब्रूहीति प्रैषविरोध इत्यत आह।कस्मा इति। अत्र । कस्ये दितिसूत्रे । तन्त्रेण । विभक्त्यन्ततन्त्रेण । शब्दपरत्वेऽपि । किमृशब्दानुकरणत्वेऽपीत्यर्थ । किंशब्दस्य प्रजापतिवाचकत्वे साधकमाह । अत एव । किंशब्दस्य प्रजापतिवाचकत्वादेव । अत्रैव साधकान्तरमाह । विष्णुसहस्रनामसु चेति । मखत्वादिति । यज्ञमखत्वादित्यर्थः । अत एव । आधुनिकसंज्ञाया एव प्रतिषेधादेव । कस्ये दितिसूत्रे तन्त्रेणोभयोर्निर्देशे भाष्यं साधकमाह । तदुक्तमिति । तदुत्तरमिति । अथ किम । अथापि न किमः । उभयथापि कस्मा अनुब्रूहीति भवितव्यम् । सर्वस्य हि सर्वनामसञ्ज्ञा क्रियते सर्वश्च प्रजापतिः । प्रजापतिश्च क इति । तदेतद्द्वाचष्टे । कशब्दस्ये ति । अपर आह । यद्येव किमः । अथापि न किम । उभयथा कायानुब्रूहीति भवितव्यमिति । अत्र

भवितव्यमित्यनेन स्वस्य तद्विषये सम्मत्यभाव सूचित. । तथा चोभयथेत्युक्ति रेकदेशिन । तद्वयेति । प्रथमोक्तोभयथेत्यादिद्वयमित्यर्थ । भाष्यादयसम्मतत्वात् पाठेन सर्वनामसंज्ञा क्रियते । इत्यादिविरोधात् । अत एव विज्ञेयान्देवाना मिति प्रयोगविरोधा नेति बोध्यम् । अन्त्य इति । त्यदादेरेव किम कादेशवि धानादिति भाव. । ननु परत्वादादिद्वद्धिरित्यसङ्गतम् । इकारविधानसामर्थ्ये नैव लोपो न भविष्यतीत्यत आह । उत्कृष्टत्वादिति । तत्त्वञ्च । उत्कृष्टत्वञ्च । न्यायमिति । औदेवताऽस्य न्यायम् । बोधः । आदिद्वद्धा लोपबाध । यास्मा द्वं वा आख्यत् अवसारत् अवबाहदित्यादौ निषेधार्थमल्लोपोत्यत प्रत्याहार ग्रहणञ्च द्वद्धापेक्षया लोपस्य बलवत्त्व एव सङ्गच्छत इत्याशयेनाह । के चि- त्त्विति । अत एव । सामान्यापेक्षनियमस्वीकारादेव । तदप्राप्ति । द्वद्धा वा धात्त्लोपाप्राप्ति । न सा । न पूर्वमत्र द्वद्धे प्राप्ति. । ननु लोपस्य बलवत्त्वे न्या यमितिरूपासिद्धिरत आह । न्यायमितीति । अत एव । लोपस्य बलवत्त्वादेव । अन्यथा । लोपस्य बलवत्त्वाभावे । तत्पक्षे । द्वद्धे बलवत्त्वपक्षे । सत्येत्वे । कस्वे- दितिसूत्रेणालोन्त्यपरिभाषया सत्येत्त्वे । लोपसवर्णदीर्घौ बाधित्वा । परत्वा ल्लोपं वार्णादाङ्गं बलीय इति सवर्णदीर्घम्बाधित्वेत्यर्थ । तदसिद्धि. । कार्यमि तिरूपासिद्धि । मम तु । द्वद्धेर्लोपस्य बलवत्त्ववादिनो मम त्वित्यर्थ. । एतेन । सामान्यापेक्षज्ञापकेन द्वद्धेर्लोपस्य बलवत्त्वस्वीकारेण । शौव मासम् । शुनो विकारः अवयवो वा । प्राणिरजतादिभ्योऽञित्यञ् । न प्राप्नोतीति । द्वद्धियोग्य स्याभावेन निषेधाप्राप्त्या तत्सन्नियोगशिष्ट ऐजागमो न प्राप्नोतीत्यर्थ । ज्ञ इति । जानातीति ज्ञ । इगुपधज्ञाप्रीकिर इति क । परिहारदिगपेति । परिहारप्रद- र्शनमार्गसूचनम् त्वत्र निर्भर इति भाव. । अत्र टिलोपं बाधित्वा द्वद्धि प्राप्ति- त्युपादानाद्द्वद्धेर्बलवत्त्वमत्र न नान्यितम् । तदपास्तम् । पूर्वोक्तज्ञापकेन द्वद्धपेक्ष या लोपस्यैव बलवत्त्वात् । दोषाभावपरभाष्यमिति । अत्र नुगागमात्पूर्वमपि यस्येतिर्लोपस्य द्वद्धिबाधकस्य प्राप्तेरिति य विधिमतीतिन्यायसञ्चारो नास्तीति भाव. । एतस्यैकदेश्युक्तित्वञ्च द्वद्धेर्लोपबाधकत्वाभिप्रायेण तेनोक्तम् । तदेव चिन्त्यमिति । पूर्वोक्तरीत्या लोपस्य बलवत्त्वादिति भाव' । अत्र कैयटानुयायि न. । न्यायमितिपूर्वोक्तरीत्या द्वद्धेर्लोपबाधकत्वं गोपितमेव । न च लोपे'ना-

स्यामितिसूत्रस्थभाष्यविरोध । तस्य दोषान्तरोपलक्षणत्वात् । किमो मस्येत्वे ऽन्त्यस्य वृद्धिस्थाधित्वा आदिवृद्ध्या भवितव्यम् । तस्या अन्त्योपधावृद्धिबाधकत्वात् । अन्यथा गार्ग्य इत्यत्रापि यस्येतिलोपस्याधित्वाऽजन्तलक्षणवृद्ध्यापत्तेः । किम कादेशो निपात्यत इतिकैयटोक्तत्वाच्च । वार्णादाङ्गम्बलीय इतिवचनन्तु समाननिमित्तकत्वाभावेन व्याश्रयत्वान्न प्रवर्त्तत इति । ननु यदि प्रत्ययसन्नियोगेनोक्तरूपनिपातनन्तदाऽपोनप्त्रे स्वाहेत्यत्र प्रत्ययसन्नियोगाभावादुक्तरूपामिद्धिरत आह । अपोनप्त्र इति । ननु पित्रीयतीत्यादौ रिङादेशविधानेऽप्यक्तसार्वधातुकयोरिति दीर्घे सिद्धे रीङि दीर्घोच्चारणं व्यर्थमत आह । उक्तवृत्त्येति । अनिर्दिश्यमानेति । अङ्गस्येत्यर्थः । सर्वादेशत्वेति । अनेकाल्त्वात् । स्यमिति । एतेन ऋदन्तस्याङ्गस्येत्यर्थेऽपि निर्दिश्यमानपरिभाषाऽनेकाल्परिभाषयोरेकवाक्यतया निर्दिश्यमानस्य सर्वस्येत्यर्थाश्रयणे च ऋत इत्यनेन ऋवर्णस्यैव निर्दिश्यमानतया तस्यैवादेशे सिद्धे ङित्त्वं स्पष्टार्थमेवेति सूचितम् । सम्प्रदाय इति । अत्रारुचि पूर्वोक्तैव । महाराजप्रोष्ठपदादित्यत्र निर्दिष्टम्महाराजेतिपदं व्याचष्टे । महाराज इति । तादूप्यानतिदेशादिति तादूप्यस्य वर्णमात्रवृत्तिधर्मस्यातिदेशाभावात् । उत्तरपदादिन्वविशिष्टाच्त्वस्य वर्णमात्रवृत्तित्वादिति भाव । एतेन । पूर्वोक्तरीत्या इन्द्रशब्दस्यानचकत्वेनाननु मरुच्छब्देन्द्रशब्दयो समस्त एव सूत्रमार्थक्यम्भविष्यतीत्यत आह । मरुदादिभिरिति । न च सोमेन्द्र इत्यत्राप्यजाद्यदन्तत्वादिन्द्रशब्दस्यैव पूर्वनिपात स्यादिति वाच्यम् । अत्र सोमशब्दस्य महेश्वरवाचकतयाऽभ्यर्हितत्त्वेति पूर्वनिपातसम्भवात् । अनेनैव । नेन्द्रस्येत्यनेनैव । अन्तादिवच्चेति सूत्रे एवमुक्ता गुडोदकमित्यत्रोदके केवल इति पूर्वपदान्तोदात्तत्वस्य पूर्वम्प्रवृत्तौ तत एकादेश इति हि फलं स्पष्टम् । ईदृशे पक्षार्थ इति । पूर्णो मासोऽस्यामित्यर्थ एवास्य पौर्णमासीशब्दस्य साधुत्वमित्यर्थ. । मातरि षिच्चेति वार्त्तिकम् । प्रयोजनान्तरेति । यथाऽविदूरशब्दादाण्यानार्थं षिचि टिलोपे क्विपि पदान्ते विसर्गसिद्धि अन्यथा प्रकारस्य स्थानिवत्त्वम् स्यादिति यत्केन चिदुक्तम् तन्निरस्तम् । यत्तु मोटादीनामादेशत्वाच षत्वप्राप्तिरिति तन्नेत्याह । दुर्ध इतीत्यादि । यौवनमितीति । युवतीनामसूह इत्यर्थे युवतिशब्दादणि भस्याढ इति पुंवद्भावे टिलोपे प्राप्ते प्रकृति

२०

भवितव्यमित्यनेन स्वस्य तद्विषये सम्मत्यभाव सूचित । तथा चोभयथेत्युक्ति रैकदेशिन । तद्वयेति । प्रथमोक्तोभयथेत्यादिद्वयमित्यर्थ । भाष्याद्यसम्मतत्वात् पाठेन सर्वनामसञ्ज्ञा क्रियते । इत्यादिविरोधात् । अत एव विभ्रेयान्देवाना मिति प्रयोगविरोधा नेति बोध्यम् । अन्त्य इति । त्यदादेरेन किम कादेशवि धानादिति भाव । ननु परत्वादादिवृद्धिरित्यसङ्गतम् । इकारविधानसामर्थ्यं नैव लोपो न भविष्यतीत्यत आह । उत्कृष्टत्वादिति । तत्वश्च । उत्कृष्टत्वश्च । न्यायमिति । योर्देवताऽस्य न्यायम् । बोध । आदिवृद्ध्या लोपबाध । यादिस्वा हु वा आख्यत् अववारत् अबबाहदित्यादौ निषेधार्थमल्लोपोऽपीत्यत प्रत्याहार ग्रहणन्तश्च वृद्ध्यपेक्षया लोपस्य बलवत्त्व एव सङ्गच्छत इत्याशयेनाह । के चि त्त्विति । अत एव । सामान्यापेक्षनियमस्वीकारादेव । तदप्राप्ति । वृद्ध्या वा धाल्लोपाप्राप्ति । न सा । न पूर्वमत्र वृद्धे प्राप्ति । ननु लोपस्य बलवत्त्वे न्या यमितिरूपासिद्धिरत आह । न्यायमितीति । अत एव । लोपस्य बलवत्त्वादेव । अन्यथा । लोपस्य बलवत्त्वाभाव । तत्पक्षे । वृद्धेर्बलवत्त्वपक्षे । मस्येर्ल । कस्ये दितिसूत्रेणालोन्त्यपरिभाषया मस्येत्त्वे । लोपसवर्णदीर्घौ बाधित्वा । परत्वा ल्लोप वार्णादाङ्ग बलीय इति सवर्णदीर्घम्बाधित्वेत्यर्थ । तदसिद्धि । कार्यमि तिरूपासिद्धि । मम तु । वृद्धेर्लोपस्य बलवत्त्ववादिनो मम त्वित्यर्थ । एतेन । सामान्यापेक्षज्ञापकेन वृद्धेर्लोपस्य बलवत्त्वस्वीकारेण । शौव मासम् । शुनो विकार अवयवो वा । प्राणिरजतादिभ्योऽञित्यञ् । न प्राप्नोतीति । वृद्धियोग्य स्याभावेन निषेधाप्राप्त्या तत्सन्नियोगशिष्ट ऐजागमो न प्राप्नोतीत्यर्थ । ज्ञ इति । जानातीति ज्ञ । इगुपधज्ञाप्रीकिर इति क । परिहारदिशेति । परिहारप्रद र्शनमार्गसूचनस्य त्वन निर्भर इति भाव । अत्र टिलोप बाधित्वा वृद्धि प्राप्ति त्युपादानाद्वृद्धेर्बलवत्त्वन्तेन नाश्रितम् । तदपास्तम् । पूर्वोक्तज्ञापकेन वृद्ध्यपेक्ष या लोपस्यैव बलवत्त्वात् । दोषाभावपरमाप्र्यमिति । अत्र नुगागमाप्र्यमपि यस्येतिलोपस्य वृद्धिबाधकस्य प्राप्तेरिति यं विधिमतीतिन्यायमत्रारो नास्तीति भाव । एतस्यैकदेशेत्यत्र वृद्धेर्लोपबाधकत्वाभिप्रायेण तेनाक्तम् । तदेव चिन्त्यमिति । पूर्वोक्तरीत्या लोपस्य बलवत्त्वादिति भाव । अत्र कैयटानुयायि न । न्यायमितिपूर्वोक्तरीत्या वृद्धेर्लोपबाधकत्वे मोषितमव । म प लोप मा

ष्यतीति दर्शयति। धातोर्हि इय इत्यादिना। एवञ्च क्रियावाचकत्वमुक्तद्दय-प्रत्ययान्तयोरिति तयोरेवाक्षेपो भविष्यतीति भावः। न च क्रियावाचकाक्षेपेऽपि धातोरेवाक्षेप इत्यत्र किम्प्रमाणम्। तेन दीव्यति खनति जयतीति सूत्रविहिततद्धितानामपि क्रियोपसर्जनद्रव्यवाचकत्वेन क्रियावाचकत्वा-दिति वाच्यम्। एतद्भाष्यप्रामाण्येन कारकान्वययोग्यक्रिया धातुवाच्यैव न तद्धितादिवाच्येति निर्णयेनादोषात्। अत एव देवदत्तेन शत्योऽश्वः। आ-भ्रिको भूमिमित्यादयो न प्रयोगाः। अत एव द्विगादियोगे न द्वितीया इति। न च विग्रहवटकादधीत इत्यादिशब्दादेककर्मकमध्ययनमिति बोधः। व्याकरणशब्दात्तु व्याकरणकर्मकाध्ययनकर्त्तेति बोध इतिवृत्तिविग्रहयोः स-मानार्थत्वनियमानुपपत्तिरिति वाच्यम्। आख्यातन्तद्धितकृतोरितिसमानार्थ-त्वाव्याघातात्। तदेतदाह अधीत इत्यादि। उभयोः। अधीतेवेदेत्यनयोः। प्रकृतसूत्रभाष्ये उक्थादीन्युच्यते कान्युक्थानि। सामानि। यद्येवं सामग-मात्रे औक्थिक इति प्राप्नोति। नैष दोषः। तादर्थ्यात्ताच्छब्द्यम्भविष्यतीति। उक्थार्थमुक्थम्। इह उक्थान्यधीते औक्थिकः। एतेनउक्थशब्दो येषु सा-मसु रूढस्तान्यधीयाने प्रत्ययो नेष्यते इत्यर्थादुक्तम्भवति। यदधीयाने प्रत्यय इष्यते तत्रौक्थशब्दो न रूढ इति कैयटः। यदधीयाने। प्रातिशाख्यमधीया-ने। समासगेऽपीति शेषः। प्रश्नाशयोऽयम्। ततोऽयं तादर्थ्यादित्यनेन लक्षण-या उक्थलक्षणप्रातिशाख्यशास्त्रम्। मुख्यार्थाभिधायिनस्तूक्थशब्दात्प्रत्ययो नेष्यते। तत्र वाक्यमेव भवति। उक्थान्यधीते वेद वेति। उक्थान्यधीते इत्य-त्रौक्थशब्दः प्रातिशाख्यपर एव। तस्मात्प्रत्यये कृते औक्थिशब्दः प्रातिशा-ख्यमधीयाने वर्त्तते। तदग्रे भाष्ये य इदानीमौक्थिकमधीते कथन्तत्र भ-वितव्यम्। औक्थिक इत्येव तत्र भवितव्यम्। कथम्। तस्येदमन्यथाक्षुक्। तस्येदमत्ययात्मुख्यक्षुक्। तस्येदमत्ययस्य च। म तर्हि वक्तव्यो न वक्तव्यः। इहाप्यभिधेयशब्दो साध्यम्। औक्थिकमधीते। उक्थान्यधीते। औक्थिक इति। तत्र इयोः समानार्थयोरेकेन विग्रहः अपरस्मादुत्पत्तिर्भविष्यति। अ-निरवकन्यायेनेति। औक्थिशब्दात्प्रातिशाख्याध्येतृवाचकादौक्थिकानामा-म्नाय इत्यर्थे छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्य इति आम्नायः प्राति-

भाव. । अनुदात्तादिरयमिति । तथा च यौवतमित्यत्रानुदात्तादेरञित्यञ् । सो ऽनुनासिक इति । यणनुनासिक इत्यर्थ. । वार्त्तिकस्थाह्नन्शब्दस्य कालवाचकत्वभ्रमवारणायाह । क्रताविति । ननु महावाते वातयेतिप्रयोग इष्यते स च समूहासम्भवान्नोपपद्यत इत्यत आह । दिग्भेदेनेति । यथासंख्यार्थ इति । योगविभागाभावे यप्रत्ययस्य समुच्चयार्थचकारस्याप्युपादेयतया प्रत्ययानाञ्चतुर्णां यथासंख्यन्न स्यात् । तस्य निवास इतिसूत्रेण विषयो देश इत्यस्य गतार्थतामिराचष्टे । विषयः खल्वत्रानिति । प्रत्ययोपाधिरिति । प्रत्ययार्थविशेषणमित्यर्थं विषयार्थकप्रत्ययान्त एव देशाभिधायको भविष्यतीति देशपदमनर्थकमत आह । क्व चिद्देशेति । एवञ्च । सोऽस्येत्यनुवृत्तौ च । प्रथमान्तेभ्यः प्रयोजनयोद्धृवाचकेभ्योऽस्य सङ्ग्रामस्येत्यर्थेऽण् प्रत्ययो भवतीत्यर्थः । ननु घञन्तस्य पुल्लिङ्गत्वात्सा इति स्त्रीलिङ्गनिर्देशोऽनुपपन्न इत्यत आह । सेति स्त्रीलिङ्गमिति । तत्फलमिति । कृद्ग्रहणपरिभाषाप्रवृत्तिफलमित्यर्थं । ननु गतिकारकसमभिव्याहृतकृदन्तं यत्र तत्र तद्विशिष्टस्यैव कृद्ग्रहणेन ग्रहणमितिपरिभाषार्थाद्घञन्तादिधीयमानः प्रत्ययोऽत्र श्येनपातशब्दाद्भविष्यतीति पाते ञ इत्यनुपपन्नमत आह मूले । अप्रत्ययपरे पातशब्द इति । एवञ्च पातशब्दस्य अप्रत्ययपरत्वमात्रमपेक्षितम्न तु अप्रत्ययविधानावधित्वमिति भावः । घञन्तसामान्यात्प्रत्ययमाशङ्क्याह । इतिरिति । कर्तृकर्मणोरितिसूत्रस्थभाष्येति । तत्र हि कर्तृकर्मणोः षष्ठीविधाने कृद्ग्रहणमनर्थकम् । किङ्कारणम् । लप्रतिषेधात् । प्रतिषिध्यतेऽत्र षष्ठी लप्रयोगे नेति । तस्य कर्मकर्त्रर्थमर्हि कृद्ग्रहणं कर्त्तव्यम् । कृतो ये कर्तृकर्मणी तत्र यथा स्यात् । अन्यस्य ये कर्तृकर्मणी तत्र मा भूत् । नैतदस्ति प्रयोजनम् । धातोर्हि इमे प्रत्यया विधीयन्ते तिङः कृतश्च । तत्र कृत्प्रयोगे इष्यते । तिङ्प्रयोगे प्रतिषिध्यते इत्युक्तम् । अत्र भाष्ये नैतदस्तीत्यादिना यथोक्तप्रयोजनस्य कृद्ग्रहणस्येति दर्शयतिप्रकृतसूत्रे कर्तृकर्मपदोपादानेन स्ववाच्यतावच्छेदककर्तृत्वकर्मत्वे उपस्थिते तयोश्च समभिव्याहृताविरूपकाकाङ्क्षत्वात्साभ्याङ् क्रिया चाक्षिप्यते सा चार्थरूपा न प्रयुज्यत इति तद्वाचकशब्दाक्षेपे सति क्रियावाचकशब्दप्रयोगे सति ये तद्वाच्यक्रियानिरूपितकर्तृत्वकर्मत्वे तद्विशिष्टवाचकात् षष्ठीति सूत्रार्थं कृद्ग्रहणाभावेऽपि भवि

ष्यतीति दर्शयति। धातोर्हि इय इत्यादिना। एवञ्च क्रियावाचकत्वमुक्तदय प्रत्ययान्तयोरिति तयोरेवाक्षेपो भविष्यतीति भाव । न च क्रियावाचकाद्वे षेऽपि धातोरेवाक्षेप इत्यत्र किम्प्रमाणम् । तेन दीव्यति खनति जयतीति सूत्रविहिततद्धितानामपि क्रियोपसर्जनद्रव्यवाचकत्वेन क्रियावाचकत्वा दिति वाच्यम्। एतद्भाष्यप्रामाण्येन कारकान्वययोग्यक्रिया धातुवाच्यैव न तद्धितादिवाच्येति निर्णयेनादोषात्। अत एव देवदत्तेन शत्योऽश्व । आ भिको भूमिमित्यादयो न प्रयोगा । अत एव दिक्शब्दादियोगे न द्वितीया इतिहेनेन च विग्रहघटकादधीत इत्यादिशब्दादेककर्तृकमध्ययनमिति वोध । व्याकरणशब्दात्तु व्याकरणकर्मकाध्ययनकर्त्तेति बोध इतिवृत्तिविग्रहयो स मानार्थत्वनियमानुपपत्तिरिति वाच्यम्। आख्यातत्वद्धितकृतोरितिसमानार्थे त्वाव्याघातात्। तदेतदाह। अधीत इत्यादि। उभयो. । अधीतेवेदेत्यनयो । प्रकृतसूत्रभाष्ये उक्थादीन्युच्यते कान्युक्थानि। सामानि। यद्येवं सामग मात्रे औक्थिक इति प्राप्नोति। नैष दोष । तादर्थ्यात्ताच्छब्द्यम्भविष्यतीति। उक्थार्थमुक्थम्। इह उक्थान्यधीते औक्थिक । एतेनउक्थशब्दो येषु सा मसु रूढस्तान्यधीयाने प्रत्ययो नेष्यते इत्यर्थादुक्तम्भवति। यदधीयाने प्रत्यय इष्यते तत्रोक्थशब्दो न रूढ इति कैयट । यदधीयाने । प्रातिशाख्यमधीया ने। समासमेऽपीति शेष ।प्रश्नाशयोऽयम्। ततोऽयं तादर्थ्यादित्यनेन लक्षण या उक्थलक्षणप्रातिशाख्यशास्त्रम् । मुख्यार्थाभिधायिनस्तूक्थशब्दात्प्रत्ययो नेष्यते। तत्र वाक्यमेव भवति। उक्थान्यधीते वेद वेत्ति। उक्थान्यधीते इत्य औक्थशब्द प्रातिशाख्यपर एव। तस्मात्प्रत्यये कृते औक्थिकशब्द प्रातिशा ख्यमधीयाने वर्त्तते। तदग्रे भाष्ये य इदानीमौक्थिकमधीते कथन्तत्र भ वितव्यम्। औक्थिक इत्येव तत्र भवितव्यम्। कथम् । तस्येदमित्यणुक्। तस्येदमित्यणुक्वक्तव्य । तस्येदम्प्रत्ययस्य च । स तर्हि वक्तव्यो न वक्तव्य । इहाप्यभिधेयशब्दः साध्यम्। औक्थिकमधीते। उक्थान्यधीते। औक्थिक इति। तत्र इयो समानार्थयोरेकेन विग्रह अपरस्मादुत्पत्तिर्भविष्यति । च भिरविक्रन्यायेनेति । औक्थिकशब्दात्प्रातिशाख्याध्येतृवाचकादौक्थिक्यानामा म्नाय इत्यर्थे छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्य इति ञ्य।स चाम्नाय प्राति-

भाव । अनुदात्तादिरयमिति । तथा च यौवतमित्यत्रानुदात्तादेरञित्यत्र् । सो ऽनुनासिक इति । यणनुनासिक इत्यर्थ । वार्त्तिकस्थाहन्‌शब्दस्य कालवाचकत्वभ्रमवारणायाह । क्रतौविति । ननु सप्तावाते वात्र्येत्तिप्रयोग इष्यते स च समुद्रासम्भवान्नोपपद्यत इत्यत आह । दिग्भेदेनेति । यथासंख्यार्थ इति । योगविभागाभावे यप्रत्ययस्य समुच्चयार्थचकारस्याप्युपादेयतया प्रत्ययानाश्चतुर्द्वयथासंख्यत्र स्यात् । तस्य निवास इतिसूत्रेण विषयो देश इत्यस्य गतार्थता मिराचष्टे । विषयः खल्वनानिति । प्रत्ययोपाधिरिति । प्रत्ययार्थविशेषणम् । न न्वयं विषयार्थकप्रत्ययान्त एव देशाभिधायको भविष्यतीति देशपदमनर्थकमत आह । क्वचिद्देशेति । एवञ्च । सोऽस्येत्यनुवृत्तौ च । प्रथमान्तेभ्य. प्रयोजनयोदृष्टवाचकेभ्योऽस्य सङ्ग्रामस्येत्यर्थेऽण् प्रत्ययो भवतीत्यर्थः । ननु घञन्तस्य पुल्लिङ्गत्वात्सा इति स्त्रीलिङ्गनिर्द्देशोऽनुपपन्न इत्यत आह । सेति स्त्रीलिङ्गमिति । तत्फलमिति । क्रद्ग्रहणपरिभाषाप्रवृत्तिफलमित्यर्थ. । ननु गतिकारकममभिव्याहृतङ् दन्तं यत्र तत्र तद्विशिष्टस्यैव क्रद्ग्रहणेन ग्रहणमितिपरिभाषायोहन्तादिधीयमान. प्रत्ययोऽत्र श्येनपातशब्दाद्भविष्यतीति पाते ते इत्यनुपपन्नमत आह मूले । अप्रत्ययपरे पातशब्द इति । एवञ्च पातशब्दस्य न प्रत्ययपरत्वमात्रमपेक्षितत्र तु अप्रत्ययविधानावधित्वमिति भावः । घञन्तसामान्याप्रत्ययमाशङ्क्याह । इतिरिति । कर्तृकर्मणोरितिसूत्रस्थभाष्येति । तत्र हि कर्तृकर्मणोः षष्ठीविधाने क्रद्ग्रहणमनर्थकम् । किङ्कारणम् । लप्रतिषेधात् । प्रतिषिध्यतेऽत्र षष्ठी लप्रयोगे नेति । तस्य कर्मकर्त्तर्येर्ताह क्रद्ग्रहणं कर्त्तव्यम् । क्रतो ये कर्त्तृकर्मणी तत्र यथा स्यात् । अन्यस्य ये कर्तृकर्मणी तत्र मा भूत् । नैतदस्ति प्रयोजनम् । धातोर्हि द्वये प्रत्यया विधीयन्ते तिङः क्रतश्च । तत्र क्रतप्रयोग इष्यते । तिङ्प्रयोगे प्रतिषिध्यते इत्युक्तम् । अत्र भाष्ये नैतदस्तीत्यादिना यथोक्तप्रयोजनत्व क्रद्ग्रहणस्येति दर्शयति।प्रकृतसूत्रे कर्तृकर्मपदोपादानेन स्वव्याप्यतावच्छेदककर्तृत्वकर्मत्वे उपस्थिते तयोश्च समस्वाधिकत्वाभिरूपकाकाङ्क्षत्वात्सान्यिाङ् क्रिया आक्षिप्यते सा चार्थरूपा न प्रयुज्यत इति तद्वाचकशब्दाक्षेपे सति क्रियावाचकशब्दप्रयोगे सति ये तद्वाच्यक्रियानिरूपितकर्तृत्वकर्मत्वे तद्विशिष्टवाचकात् षष्ठीति सूत्रार्थं क्रद्ग्रहणाभावेऽपि भवि

ष्यतीति दर्शयति। धातोर्हि इय इत्यादिना। एवञ्च क्रियावाचकत्वमुक्तद्वय- प्रत्ययान्तयोरिति तयोरेवाक्षेपो भविष्यतीति भाव.। न च क्रियावाचकाद्धि येऽपि धातोरेवाक्षेप इत्यत्र किम्प्रमाणम्। तेन दीव्यति खनति जयतीति सूत्रविहिततद्धितानामपि क्रियोपसर्जनद्रव्यवाचकत्वेन क्रियावाचकत्वा- दिति वाच्यम्। एतद्भाष्यप्रामाण्येन कारकान्वययोग्यक्रिया धातुवाच्यैव न तद्धितादिवाच्येति निर्णयेनाटोपात्। अत एव देवदत्तेन गत्योऽश्वः। आ- भ्रिको भूमिमित्यादयो न प्रयोगाः। अत एव द्विरूपादियोगे न द्वितीया इति..न च विग्रहवटकादधीत इत्यादिशब्दादेककर्तृकमध्ययनमिति बोध.। व्याकरणशब्दात्तु व्याकरणकर्मकाध्ययनकर्त्तेति बोध इतिवृत्तिविग्रहयोः स- मानार्थत्वनियमानुपपत्तिरिति वाच्यम्। आख्यातस्तद्धितस्तोरितिसमानार्थ- त्वाव्याघातात्। तदेतदाह। अधीत इत्यादि। उभयोः। अधीतेवेदेत्यनयोः। प्रकृतसूत्रभाष्ये उक्थादीन्युच्यते कान्युक्थानि। सामानि। यद्येवं सामग- मात्रे औक्थिक इति प्राप्नोति। नैष दोष.। तादर्थ्यात्ताच्छब्द्यं भविष्यतीति। उक्थार्थमुक्थम्। इह उक्थान्यधीते औक्थिक.। एतेनउक्थशब्दो येषु सा मसु रूढस्तान्यधीयाने प्रत्ययो नेष्यते इत्यर्थादुक्तं भवति। यदधीयाने प्रत्यय इष्यते तत्रोक्थशब्दो न रूढ इति कैयटः। यदधीयाने। प्रातिशाख्यमधीया ने। प्रमाणशेऽपीति शेष.।प्रश्नाशयोऽयम्। ततोऽग्रे तादर्थ्यादित्यनेन लक्षण- या उक्थलक्षणप्रातिशाख्यशास्त्रम्। मुख्यार्थाभिधायिनस्तूक्थशब्दात्प्रत्ययो नेष्यते। तत्र वाक्यमेव भवति। उक्थान्यधीते वेद वेति। उक्थान्यधीते इत्य- औक्थशब्दः प्रातिशाख्यपर एव। तस्मात्प्रत्यये कृते औक्थिकशब्द प्रातिशा- ख्यमधीयाने वर्त्तते। तदर्थे भाष्ये य इदानीमौक्थिक्यमधीते कथन्तत्र भ- वितव्यम्। औक्थिक इत्येव तत्र भवितव्यम्। कथम्। तस्येदमर्थयाप्लुक्। तस्येदमत्ययाप्लुग्वक्तव्यः। तस्येदमत्ययस्य च। म तर्हि वक्तव्यो न वक्तव्यः। इहाप्यभिधेयशब्दः साध्यम्। औक्थिक्यमधीते। उक्थान्यधीते। औक्थिक इति। तत्र द्वयोः समानार्थयोरेकेन विग्रह अपरस्मादुत्पत्तिर्भविष्यति। अ- विरविकन्यायेनेति। औक्थिकशब्दात्प्रातिशाख्याध्येतृवाचकादौक्थिकानामा म्नाय इत्यर्थे छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यइति ञ्य।स चाम्नायः प्राति-

गाव्यमेव। तथे दमत्ययादिति वार्त्तिके षष्ठ्यर्थे पञ्चमी। अध्येतृवेदितृत्व प्रत्ययाणो लुगाम्नाये विहितस्य चाम्य च लुगित्यर्थ। नानयो। अध्येतृवेदित्रो। अनभिधानादिति। अत्र मानन्तु भाष्यकारोक्तिरेव। एतच्च कैयट इति। एव हि भाष्ये उक्तम्। विद्यालक्षणकल्पसूत्रान्तादकल्पादेरिकक् स्मृत इति। इकक। ठक। अत्र कैयट। अकल्पादेरित्येतदानन्तर्यात्सूत्रान्तस्यैव कल्पादेर्निषेध ङ्करोति। अत एव भाष्ये अकल्पादेरिति किमर्थम्। काल्पसूत्र इति प्रत्युदाहृतम्। द्विगाविति। तिस्रो विद्या अधीत इत्यर्थे द्विगावित्यर्थ। ताभ्याम्। शतषष्टिशब्दाभ्याम्। प्रोक्तशब्दस्यार्थपरत्वञ्चाव्यमिति प्रोक्तार्थकप्रत्ययपरत्वोपपत्तये आह। स्वरितत्वादिति। आपत्यार्थ वचनमिति। अपत्ये भवो य प्रत्ययस्तदर्थमित्यर्थ। सोदमार्षपद व्याचष्टे। ऋषिप्रकृतिकेति। अत एव मूले उक्तम्। आर्षग्रहणेनेति। कुर्वादेरिति। अताऽत्र च्य। तत। ण्यान्तात्। वृद्धत्वाच्छे प्राप्तेऽणबाधनार्थमाह। वामरथ्यस्येत्यादि। न लुगिति। ऋषिशब्दोच्चारणेन विहितस्याणोऽभावात्। भाष्योक्तत्वेनेति। ऋत्यभिधायकत्वेनैव लुक प्राप्तेरिति भाव। मन्त्रग्रहणादिति। जुष्टेतिसूत्रपठितस्य छन्द शब्दस्य मन्त्रार्थपरत्वे तदनुवृत्त्यैव सिद्धे मन्त्रग्रहण व्यर्थमेव स्यादिति भाव। चेनेति। अनुक्तसमुच्चयार्थकेन चेनेत्यर्थ। काश्यपिन इति। कश्यपशब्दात्प्रोक्तार्थे काश्यपकौशिकेति णिनिश्छन्दसि ततोऽध्येतरि जातस्याणो लुक। वार्त्तिकारम्भेपीति। अपिना प्रत्याख्यानपक्षे तु भसंज्ञया बाधस्य परिग्रह। अयम्भाव। यदि सुबन्तादध्येतरि प्रत्यय स्यात्तदाऽन्तर्वर्त्ति सुप प्रत्ययलोपे प्रत्ययलक्षणमितिसूत्रेण सुबन्तत्वात्पदत्वे सति न लोप स्यात्। न च भसंज्ञया बाध। स्वादिष्वसर्वनामस्थानइतिसूत्रप्राप्तपदत्वस्य तदा बाधेऽपि सात्र न प्रवर्तते प्रोक्तादितिसूत्रेणाध्येत्रर्थकस्य लुकापहारात्। न च असर्वनामस्थाने यचीतिसूत्रस्य यकारादावजादौ सर्वनामस्थाने पूर्वस्य भ सन्धे वेःसुबन्तमस्ति तदपि पदसंज्ञति व्याख्यानेन पदत्वनिषेधो भविष्यतीति वाच्यम्। उत्तरपदत्वे चेतिवार्त्तिकप्रत्याख्यानाय तथा तस्यार्थस्य योगविभागेन स्वीकारेऽपि वार्त्तिकारम्भपक्षे तादृशार्थकल्पने मानाभावात्। यदि णिनिप्रत्ययान्तात्सुबुत्पत्ते प्रागेवाध्येत्रर्थक प्रत्ययस्तदा सु

न पदत्वप्राप्तिरिति भाव । प्रोक्तप्रत्ययान्तानीति यदुक्तान्तस्याभायाह । प्रोक्तादि त्यनुवृत्तमिति । कठमध्वदितिवदिति । यथेदमसाधु तद्वदित्यर्थ । प्रत्ययान्त त्वादिति यद्याख्यातन्तत्फलमाह । जनपद इति । कर्तरि तृतीयेति । एव ञ्चैतदन्वयाय निवृत्तमित्यन्तान्तर्भावितण्यर्थाद्धेतुधातो कर्तरि क्त. । व्या ख्यानादिति । भाष्ये अदूरभवश्चेतिसूत्रानन्तरङ्किम्नु नरयमेकयोग आहो स्वि न्नाना योगा इति वितर्क्य नाना योगा इतिपक्षे ओरञ्जित्येवमाद्यनुक्रमण य देव सर्वान्त्यमर्यादीभवनन्तस्यैव विपये स्यादिति शङ्कायामुक्तम् । नैष दोष । गोयूथवदधिकारा । तद्यथा । गोयूथमेकदण्डप्रघट्टित सर्वं घोषङ् गच्छति तद्वदधिकारा इत्युक्तम् । एतेन सर्वेषामुत्तरत्र सबन्धाय चकारस्य पूर्वोक्तार्थ चयसमुच्चायकत्व स्पष्टमेव लभ्यते तन्मूलकादित्यर्थ । न्याय्यत्वादिति । मतो र्वह्वच इतिन्यासे उभयो प्रथमान्तत्वात्सामानाधिकरण्यस्यान्याय्यमित्यर्थ । सूत्र स्वभावादिति । तत्र हि रीत्या अण् प्रयोजनमित्युक्तम् । अनुशतिकादित्वादे तत्सूचीदाहरणं भाष्योक्तं उभयपदवृद्धि । विशेष्यानुरोधीति । नीला घट इ त्यादौ नीलादिपदस्येव । फटुवदरीति । अदूरभवार्थे जातस्याणो वरणादि भ्यश्चेति लुप् । तदेतदिति । अभावज्ञाने प्रतियोगिज्ञानस्य कारणताया लो कसिद्धत्वात्प्रत्याख्येयप्रदर्शन विना प्रत्याख्यानासम्भवादादौ प्रदर्श्य तत्पूर्वो क्तमित्यर्थ । इत्यादिनो बोध इात । किन्तु जनपदत्वव्याप्याङ्गदेशत्वादिनैवेति शेष । प्रसङ्गादिति । खण्डनीयप्रसङ्गादित्यर्थ । भाष्यरीत्या मूलोक्तादिशेष माह । अतोतरात इति । अन्यरीत्यापि कृतं सूत्र व्याख्यातुमुचितमित्याशये न व्याचष्टे । अत्र सुपीत्यनुवर्त्तत इति । सुत्राभावेऽपि सिद्धिर्भविष्यतीत्याश येन शङ्कते । यद्यपीति । अन्यार्थं सूत्रमित्याशयेन समाधत्ते । तथापीति । इ दमपीति । गुणवचनानामितिवचनमपि । तत्पक्ष इति । पदसस्कारपक्ष इत्य र्थः । भाष्यरीत्येति । तत्र हि समासमज्ञाया गुणवचनसज्ञाबाधकत्वोक्तेः । प त एव । समासस्य गुणवचनत्वाभावादेव । न चानेन न्यायेन परिहृतमिति पूर्वोक्तं विरुध्यते अधिमन्यासे गुणवचनानामित्युक्तेरिति वाच्यम् । तत्रत्यगु णवचनशब्दस्य किञ्चिद्धातिविशेषणीभूतार्थतात्पर्यकपरत्वात् । सिद्धे सतीति न्यायेनाह । सैवेति । तत एवाह । तदेवेति । अभिन्नपद इति । प्राप्नोतीति शे

य । अन्यथा । अर्णोऽस्त्रीकारे । अर्थान्तर इति । तेन निर्वृत्तमित्याद्यर्थे । दे-शत्वेनेति । नद्यामपि मत्स्यादिस्थितिस्तत्सम्बन्धिदेशत्वेनेत्यर्थः । मध्वादिभ्य-इतिसूत्रे विशेषं वक्तु प्रतीकमपृत्वैव व्याचष्टे । मध्वादीति । यदि मध्वादिषि-क्षुशब्दपाठः स्यात्तदा ग्रामस्योरञ्जस्तेषु पाठाद्यर्थेन मतुपि सतीक्षुमतीत्य-स्य सिद्धौ विप्रतिषेधविचारासङ्गतिः स्पष्टैव । मत्वर्थ एवेति । एवकारेण निर्वृत्ताद्यर्थव्यवच्छेदः । भाष्यकैयटयोरिति । तत्र हि पदसंज्ञायामसौ मत्वर्थ इति भसंज्ञाबाधिका भविष्यतीत्युक्तम् । यदि निर्वृत्तादिष्वप्यर्थेषु स्यात्तदा तत्र पदत्वप्राप्तिर्न निवारितेति भाष्यकारस्य न्यूनत्वापत्तिः । अल्लोपस्य । टि-लोपस्य । दत्तोत्तरत्वात् । पदेऽन्त इत्यर्थेन तत्र स्थानिवद्भावनिषेधव्यावृत्तिपर-भाष्यप्रामाण्येन पूर्वत्रासिद्ध इत्यत्र पदचरमावयवविधायकातिरिक्तस्य चै-पादिकस्य ग्रहणमिति हि तत्रोक्तम् । एवमुक्तमिति । आचार्योऽपि इत्येवमु-क्तम् । अनुदात्तार्थमिति । अन्यत्र नूदात्तनिवृत्तिस्वरेणैव सिद्धम् । उच्चारणा-र्थोकारसहिता इति । ननु विल्वशब्दप्रकृतिकस्वार्थकान्तनिर्देश एव किन्न स्या-दत आह । व्याख्यानादिति । सन्नियोगशिष्टपरिभाषाज्ञापनपराकारमूलका-द्व्याख्यानादित्यर्थः । इदमेव । कग्रहणमेव । अत एव । सन्नियोगशिष्टानामिति-परिभाषास्वीकारादेव । उपधाया इति वर्त्तते न वेति । सूर्यतिष्यागस्त्यम-त्स्यानामित्यतः ॥

## ॥ इति चातुर्थिकाः ॥

विशेषतयेति विवक्षायाः फलमाह । एवञ्चेति । ध्वनितञ्चेदमिति । उत्स-र्गः शेष एवासाविति विशिष्य समाधानेन । विषयलाभार्थमिति । यदि के-वलाधिकार एव स्यात्तदा वक्ष्यमाणा घादयः प्रकृतिविशेषाद्विधीयमानास्तेषां शैषिकाणां प्राप्तिरिति तादृशविषयलाभो न स्यात् । लक्षणत्वे तु चाक्षुषं रूपं श्रावणः शब्दः औपनिषदः पुरुषो दार्षदाः सक्तवः चातुरं शकटमित्यादौ ... चाक्षुषो रथः । चाक्षुषेन प्राप्यते मनुष्य इत्यत्र तु वाक्यमेव न तु प्रत्ययः । अधिकारस्य फलमाह । तस्येदमिति । टापः शीघ्रोपस्थितिकत्वादाह । अव्ययमाहचर्यादिति । एवञ्चापि शीघ्रमेवोपस्थितिः । न पुंवत्त्व-मिति । न पुंवद्भावेनाकारनिवृत्तिः । के स्विदिति । भाष्यानुसारिणः । इ

ष्टे । सर्वनाम्न इतीष्टे । अनव्ययग्रहणेऽपीति । अपिना अव्ययस्य सङ्ग्रहः । साहचर्यपरिभाषा तु द्विसन्निमिति सूत्रे क्त्वोऽयं ग्रहणादनित्येति भाव । रा ङ्कवक इति । रङ्कुषु जातो मनुष्य इत्यर्थ । क्वाचित्कमपाठं खण्डयति । रा ङ्कव इति । तत्स्थ इति । मनुष्यस्य इत्यर्थ । कच्छादिभ्य इति । रङ्कु क च्छादिरिति प्रागेवोक्तम् । पदान्तत्वादिति । प्रत्ययलक्षणेन पदान्तत्वात् । अस ञ्ज्ञायामितिमप्रमीनिर्देशात्प्रकृतिप्रत्ययसमुदायस्य सञ्ज्ञात्वे व्यावृत्तिरिति भ्र मनिवारणायाह । सूत्र इति । माथुर इति । मथुरायाभव इत्यर्थ । ङीषन्त इ ति । गौरादिङीषन्त । मध्योदात्त इति । आधानमित्यत्राङ्पूर्वाद्धाञो ल्युटि आङा समासेऽव्ययपूर्वपदप्रकृतिस्वरेणाधानशब्द आद्युदात्त इति भाव । स्व रे विशेष इति । यद्यण् स्यात्तदा शार्कराधानशब्द आद्युदात्त स्यात् । सम्प्रति त्वण्त्वादन्तोदात्तो भवतीति विशेष इत्यर्थ । अत्रनिरूपितापवा दत्वोपपत्तये आह । तस्येति । इत्यं तिसूत्रानन्तरङ्गोत्रमिहेत्युपादानेन इञ येतिसूत्र एवेति भ्रान्तिवारणायाह । सूत्रद्वयेपीति । तत्फलमूले पाणिनीय मिति । अत्रे अपत्ययो यूनि न तु गोत्रे । मूलेऽणोऽपवाद इत्युक्तत्वापवादश ब्दो बाधकपरस्तेन यत्फलितन्तदाह । प्रतिषेध इति । तेन । पूर्वोक्तज्ञापकेन। छीयसिद्धिरिति । जानानीति घ्रा । घ्राया अय छीय । सामर्थ्यादिति । वृद्धिग्र हणाभावेऽचामिति सम्बन्धसामान्ये षष्ठी स्यात् । विकल्पार्थमिति । प्राचा न्देश इतिनिर्देशात् । अन्यथा प्राग्देश इत्येव वदेदिति भाव । व्यवस्थितविभा- षेति । अत्र मानमेतत्सूत्रस्थमेङ् प्राचान्देशे शैषिकेष्विति वक्तव्यम् । सैपुरि की सैपुरिका । स्कौनगरिकी । स्कौनगरिकेति भाष्यमेव । अत्र । मनुष्यनाम्नि । अत एव । आधुनिकमतेतितस्य ग्रहणादेव । सार्थकमिति । अन्यथा देशवाच कस्यापि नामधेयत्वात्तेनैव सिद्धे किमनेन । केचिदिति । मुख्या । अन्ये त्विति । अत्रारुचिबीजन्तु एङ् प्राचामितिसूत्रस्य विध्यर्थत्वकल्पनमेव युक्तम् । विधिनियमसम्भवे विधिरेव ज्यायानितिन्यायादिति । ननु उच्चारणार्थकस्या पीत्वस्य विना निवृत्त्यभावाद्विशेषोपादानमफलमत आह । विधेयघटके ति । तदतिरिक्तेति । उच्चारणातिरिक्तेत्यर्थ । अनुबन्धस्य व्यत्यासेनोच्चारण न्तु स्त्रीप्रत्यये विशेषार्थम् । विपरीतनियम इति । उवर्णान्ताद्देशवाचिनो इ

प । अन्यथा । अणोऽस्वीकारे । अर्थान्तर इति । तेन निर्वृत्तमित्याद्यर्थे । देशत्वेनेति । नद्यामपि मत्स्यादिस्थितेस्तत्सम्बन्धिदेशत्वेनेत्यर्थः । मध्वादिभ्यश्चेतिसूत्रे विशेषं वक्तुम्प्रतीकमप्युत्त्वैव व्याचष्टे । मध्वादीति । यदि मध्वादिष्विक्षुशब्दपाठः स्यात्तदा ग्रामस्योरअस्त्वेषु पाठादाधिन मतुपि सतीक्षुमतीत्यस्य सिद्धौ विप्रतिषेधविचारामङ्गतिः स्पष्टैव । मत्वर्थ एवेति । एवकारेण निर्वृत्ताद्यर्थव्यवच्छेदः । भाष्यकैयटयोरिति । तत्र हि पदसञ्ज्ञायास्तसौ मत्वर्थ इति भसञ्ज्ञाबाधिका भविष्यतीत्युक्तम् । यदि निर्वृत्तादिष्वप्यर्थेषु स्यात्तदा तत्र पदत्वप्राप्तिर्न निवारितेति भाष्यकारस्य न्यूनत्वापत्तिः । अल्लोपस्य । टिलोपस्य । दत्तोत्तरत्वात् । पदेऽन्त इत्यर्थेन तत्र स्थानिवद्भावनिषेधव्याप्तिपर भाष्यप्रामाण्येन पूर्वत्रासिद्ध इत्यत्र पदचरमावयवविधायकातिरिक्तस्य चैपादिकस्य ग्रहणमिति हि तत्रोक्तम् । एवमुक्तमिति । आग्रयोऽर्थ इत्येवमुक्तम् । अनुदात्तार्थमिति । अन्यत्र तूदात्तनिवृत्तिस्वरेणैव सिद्धम् । उच्चारणार्थोकारसहिता इति । ननु विल्वशब्दप्रकृतिकस्वार्थकान्तनिर्देश एव किन्न स्यादत आह । व्याख्यानादिति । सन्नियोगशिष्टपरिभाषाज्ञापनपराकारमूलकाद्व्याख्यानादित्यर्थः । इदमेव । कुग्रहणमेव । अत एव । सन्नियोगशिष्टानामिति परिभाषास्वीकारादेव । उपधाया इति वर्त्तते न वेति । सूर्येतिष्यागस्त्यमत्स्यानामित्यत ॥

## ॥ इति चातुर्थिकाः ॥

विशेषयतीति विवक्षाया फलमाह । एवञ्चेति । ध्वनितञ्चेदमिति । उत्सर्गे शेष एवामाविति विशिष्य समाधानेन । विषयलाभार्थमिति । यदि केवलाधिकार एव स्यात्तदा वक्ष्यमाणा घादयः प्रकृतिविशेषाद्विधीयन्ते तेषां शैषिकत्व प्राप्तिरिति तादृशविषयलाभो न स्यात् । लक्षणत्वे तु चाक्षुषं रूपमिति चाक्षुषो रथः । चाक्षुषेन प्राप्यते मनुष्य इत्यत्र तु वाक्यमेव न तु प्रत्ययः । अधिकारस्य फलमाह । तस्येदमिति । टाप शीघ्रोपस्थितिकत्वादाह । अव्ययमाहचर्यादिति । एवञ्चाग्रोऽपि शीघ्रमिशेषस्थितिः । न पुंवत्त्वमिति । न पुंवद्भावेनाकारनिवृत्तिः । के चिदिति । भाष्यानुसारिणः । ९

कोपधग्रहणं व्यर्थमत आह । तस्मिन्निति । अञ्बाधनार्थमिति । वुञ्बाधकाञ्बाधनार्थमित्यर्थ: । आदिपदसंग्राह्यमाह । मिन्थोरिति । व्याख्यानादिति । चपदातो वाच्ये यदि भवति तदा सालवादेवेतिनियमो यद्यभिमत. स्यात्तदाऽनेन नियमेन गोयवाग्वोर्वाच्यत्वेन विवक्षायाङ् वाच्छादित्वादेव वुञि सिद्धे गोयवाग्वोर्वे त्युत्तरसूत्रारम्भो व्यर्थ: स्यादिति तदारम्भमूलकव्याख्यानादित्यर्थ: । कश्चित् । माधव. । स्वार्थिककेति । गहादेराकृतिगणत्वात् । केवलस्वशब्दात्त्वेदमित्यपि द्वारादीनाञ्चेत्यैजागमे सौवमित्यपीति प्रामाणिका: । यौगिक इति । न मनुष्योऽमनुष्य: । न तु सभाराजामनुष्यपूर्वेतिसूत्रस्थामनुष्यशब्दवद्रूढ्यार्थबोधक । व्याख्यानात् । फलेष्वपि पार्वतीयानीतिप्रयोगदर्शनमूलकाद्व्याख्यानात् । प्रकृतविशेषणमिति । देश इति वर्त्तते । भारद्वाजशब्दस्य न गोत्राभिधायक. किन्तु सूत्रोपात्तयो. कृकणपर्णयोर्विशेषणमिति । एवञ्च देशाभिन्ने भारद्वाजे यो कृकणपर्णशब्दौ ताभ्याञ्छ: स्यादिति वाक्यार्थ. । व्याख्यानात् । प्रकृतिविशेषणत्वेन वृत्तिकारादिसम्मतव्याख्यानात् । न यथासङ्ख्यमिति । न निमित्तकार्यिणोर्यथासङ्ख्यमित्यर्थ । अन्यभावेति । प्रकृतसूत्रघटको योऽन्यतरस्यामितिशब्दस्तस्य विधेयत्वाभिमतखञ्छयोर्योऽभावस्तन्मात्रबोधकत्वे पि सूत्रविधेयादन्यो योऽण् तस्य भावार्थकत्वाभावादित्यर्थ । तत्प्राप्ते । यथासङ्ख्यप्राप्ते । ननु यथाकथञ्चिद् कालबोधकस्तस्य ग्रहणे रमणीयशब्दस्यापि रमणीय. काल इत्यत्र कालबोधकतया रमणीये जात इत्यर्थविवक्षाया ठञ् प्राप्नोतीत्यत आह। रमणीयादीति । अत एव । यथाकथञ्चित्कालबोधकस्य ग्रहणादेव । सायम्प्रातिक इत्यादि । सायम्प्रातिक इत्यत्र तदन्तत्वात्प्राप्ति. पौन पुनिक इत्यत्र तु स्थानिवत्त्वेनेति विवेक: । अयञ्च स्थानिवद्भावो द्विर्वचनस्यादेशत्वपक्षे । छन्नक्षत्राणोरिति । छ । वृद्धाच्छ इति । सन्धिवेलेतिविहितोऽण् । विप्रतिषेधपरत्वेति । तत्र हि छादोर्देशे कालाट्ठञ् । छादोर्देशे ठञ् कालाट्ठञ् इत्येतद्भवति विप्रतिषेधेन । छस्यावकाश । शालीयो मालीय । ओर्देशे ठञ् भवतीत्यस्यावकाश । निषादकर्षूर्नाम देश । नैषादकर्षुक । इहोभयम्प्राप्नोति । कालाट्ठञ् भवतीत्यस्यावकाश: । आर्द्रमासिकम् । सावत्सरिकम् । छस्य स एव । मासादुभयम्प्राप्नोति मासिकम् । नक्षत्रादण् । नक्षत्रादण् भवति छाद्विप्रतिषेधेन

द्वाच्चेत्प्राचामेवेति नियम इत्यर्थः। व्याख्यानादिति। अप्राग्देशवाचिनो हृदस्योवर्णान्तस्याप्रसिद्धत्वमूलकहरदत्तीयव्याख्यानादित्यर्थः। धन्व मरुदेश इति। समानौ मरुधन्वानाविति कोशे पाठात् यद्यप्ययम्पुंल्लिंग इति ततो भाति। तथापि भाष्ये आष्टकनाम धन्वेतिपाठान्नपुंसकलिङ्गोऽपीत्याशयेनेह धन्वेत्युक्तम्। व्याख्यानादिति। योपधशब्दसाहचर्यमूलाद्व्याख्यानात्। साधकान्तरमप्याह। अवृद्धत्वाच्चेति। अत एव। देशग्रहणस्यानुवृत्तिसत्त्वादेव। व्याख्यानाद्दीर्घग्रहणमिति। प्राग्देशवाचिनो हृदस्य दीर्घंकारान्तस्य दर्शनमूलकाद्व्याख्यानादित्यर्थः। तेन। सजनपद एव कर्मधारयाश्रयणेन। जनपदावधिरपि जनपद एवेत्यर्थः। नन्वेवन्तदवधिग्रहणं व्यर्थमत आह। जनपदत्वेनेति। तथा च बाधकबाधनार्थन्तदवधिग्रहणमिति भावः। अवृद्धादपि बहुवचनविषयात्। वृद्धात्प्राचामित्यतो वृद्धादिति प्रक्रान्तमतोऽवृद्धादिति। तावन्मात्रोक्तौ विशेषविधिनिषेधयो. शेषनिषेधाभ्यनुज्ञाफलकत्वमितिन्यायेन देवदत्तो वामेनाक्ष्णा पश्यतीत्यत्र यथा दक्षिणेन न पश्यतीति गम्यते तथाऽवृद्धादित्युक्ते वृद्धाम्नेति गम्येतेति प्रकृतसूत्रेऽपीति। प्रकृतसूत्रोदाहरणेषु अङ्गा इत्यादयो बहुवचनान्ता एव। दार्वक इत्युदाहरणे प्रकृतसूत्रस्य प्रवृत्त्यर्थमाह। दार्वा इतीति। कच्छाग्नि। धोर्देश इत्यतो देश इत्यनुवर्त्तते। सामर्थ्यादेवेति। तावन्मात्रस्य देशवचनत्वाभावात्। जनपदतदवध्योश्चेतिसूत्रस्थभाष्यविरुद्ध इति। तत्र हि तदवधिग्रहणस्य प्रयोजनमुक्तम् जनपदाज्जनपदावधेर्वुञेव यथा स्यात्। यदन्यत्प्राप्नोति तन्मा भूदिति। किञ्चान्यत्प्राप्नोति। छः। गर्त्तोत्तरपदाच्छविधेर्जनपदाद्वुञ् पूर्वविप्रतिषिद्धमिति वक्ष्यति स पूर्वविप्रतिषेधो न पठितव्यो भवति इत्युक्तम्। यदि प्रकृतसूत्रेऽपि कच्छाग्निवक्त्रगर्त्तोत्तरपदादिति पाठः प्रामाणिकः स्यात्तदा त्रैगर्त्तक इत्यस्यानेन सूत्रेण सिद्धौ पूर्वविप्रतिषेधारम्भो व्यर्थः स्यादिति भावः। गर्त्तोत्तरपदाच्छविधेः कोऽवकाश इति चेत्। पर्यायः स्यात्। स च नेष्टोऽतो वर्त्तोत्तरपदादित्येव पाठो युक्त इति। ननु कथादिषु नगरशब्दस्य पाठान्नागरा इत्यनुपपन्नमत आह। कत्त्रादिष्विति। जनपदवुञ्बाधनार्थम्। प्रस्थोत्तरपदेतिप्राप्तस्याण्बाधकस्य जनपदेतिसूत्रविहितस्य वुञो बाधनार्थमित्यर्थः। नन्वेवं मौनक इत्यत्रापि कोपधादित्येवाणि सिद्धे प्रस्थोत्तरपदेतिसूत्रे

कोपधपदत्वं व्यर्थमत आह। तस्विति। अञ्बाधनार्थमिति । वुञ्बाधकाञ्बाधनार्थमित्यर्थ:। आदिपदसंग्राह्यमाह। सिन्धोरिति। व्याख्यानादिति। अपदान्तौ वाच्ये यदि भवति तदा सात्वादेवेतिनियमो यद्यभिप्रेत: स्यात्तदाऽनेन नियमेन गोयवाग्वोर्वाच्यत्वेन विवक्षायाङ् कच्छादित्वादेव वुञि सिद्धे गोयवाग्वोरित्युत्तरसूत्रारम्भो व्यर्थ: स्यादिति तदारम्भमूलकव्याख्यानादित्यर्थ:। कश्चित्। माधव.। स्वार्थिककेति। गहादेराकृतिगणत्वात् । केवलस्वशब्दात्तस्येदमित्यणि हारादीनाञ्चेत्यैजागमे सौवमित्यपीति प्रामाणिका:। यौगिक इति। न मनुष्योऽमनुष्य:। न तु सभाराजामनुष्यपूर्वेतिसूत्रस्थामनुष्यशब्दवद्रूढ्यार्थबोधक:। व्याख्यानात्। फलेष्वपि पार्वतीयानीतिप्रयोगदर्शनमूलकाद्व्याख्यानात्। प्रकृतविशेषणमिति। देश इति वर्त्तते। भारद्वाजशब्दश्च न गोत्राभिधायक: किन्तु सूत्रोपात्तयो: ककणपर्णयोर्विशेषणमिति। एवञ्च देशाभिन्नं भारद्वाजे यौ ककणपर्णशब्दौ ताभ्याञ्छ: स्यादिति वाक्यार्थ: । व्याख्यानात्। प्रकृतिविशेषणत्वेन वृत्तिकारादिसम्मतव्याख्यानात् । न यथासङ्ख्यमिति। न निमित्तकार्यिणोर्यथासङ्ख्यमित्यर्थ:। अन्यभावेति। प्रकृतसूत्रघटको योऽन्यतरस्यामितिशब्दस्तस्य विधेयत्वाभिमतखञ्छयोर्याऽभावस्तन्मात्रबोधकत्वेऽपि सूत्रविधेयादन्यो योऽण् तस्य भावार्थकत्वाभावादित्यर्थ:। तत्राप्ते:। यथासङ्ख्यप्राप्ते। ननु यथाकथञ्चिद्य: कालबोधकस्तस्य ग्रहणे रमणीयशब्दस्यापि रमणीय: काल इत्यत्र कालबोधकतया रमणीये जात इत्यर्थविवक्षायां ठञ् प्राप्नोतीत्यत आह। रमणीयादीति। अत एव। यथाकथञ्चित्कालबोधकस्य ग्रहणादेव । सायम्प्रातिक इत्यादि। सायम्प्रातिक इत्यत्र तदन्तत्वात्प्राप्ति. पौन.पुनिक इत्यत्र तु स्थानिवत्त्वेनेति विवेक: । अयञ्च स्थानिवद्भावो द्विर्वचनस्यादेशत्वपक्षे। छन्दसत्राणोरिति। छ:। वृद्धाच्छ इति। सन्धिवेलेतिविहितोऽण्। विप्रतिषेधपरस्येति। तत्र हि छादीर्इशे कालाट्ठञ्। छादीर्इशे ठञ् कालाट्ठञ् इत्येतद्भवति विप्रतिषेधेन। छस्यावकाश:। शालीयो मालीय । श्रोर्इशे ठञ् भवतीत्यस्यावकाश । निषादकर्पूर्नाम देश.। नैषादकर्षुक । इहोभयम्प्राप्नोति। कालाट्ठञ् भवतीत्यस्यावकाश:। मार्दमासिकम्। सांवत्सरिकम्। छस्य स एव। मासादुभयम्प्राप्नोति मासिकम्। नक्षत्रादण्। नक्षत्रादण् भवति छादिप्रतिषेधेन

द्धाच्चेत्प्राचामेवेति नियम इत्यर्थः । व्याख्यानादिति । अप्राग्देशवाचिनो वृद्धस्योवर्णान्तस्याप्रसिद्धत्वमूलकहरदत्तीयव्याख्यानादित्यर्थः । धन्व मरुदेश इति । समानौ मरुधन्वानाविति कोशे पाठात् यद्यप्ययम्पुंल्लिंग इति ततो भाति । तथापि भाष्ये श्राष्टकन्नाम धन्वेतिपाठान्नपुंसकलिङ्गोऽपीत्याशयेनेह धन्वेत्युक्तम् । व्याख्यानादिति । योपधशब्दसाहचर्यमूलाद्व्याख्यानात् । साधकान्तरमप्याह । अवृद्धत्वाच्चेति । अत एव । देशग्रहणस्यानुवृत्तिमत्त्वादेव । व्याख्यानाद्दीर्घग्रहणमिति । प्राग्देशवाचिनो वृद्धस्य दीर्घकारान्तस्य दर्शनमूलकाद्व्याख्यानादित्यर्थः । तेन । सजनपद एव कर्मधारयाश्रयणेन । जनपदावधिरपि जनपद एवेत्यर्थः । नन्वेवन्तदवधिग्रहणं व्यर्थमत आह । जनपदत्वेनेति । तथा च बाधकबाधनार्थन्तदवधिग्रहणमिति भावः । अवृद्धादपि बहुवचनविषयात् । वृद्धात्प्राचामित्यतो वृद्धादिति प्रक्रान्तमतोऽवृद्धादिति । तावन्मात्रोक्तौ विशेषविधिनिषेधयोः शेषनिषेधाभ्यनुज्ञाफलकत्वमितिन्यायेन देवदत्तो वामेनाक्ष्णा पश्यतीत्यत्र यथा दक्षिणेन न पश्यतीति गम्यते तथाऽवृद्धादित्युक्तौ वृद्धान्नेति गम्येतेति प्रकृतसूत्रेऽपीति । प्रकृतसूत्रोदाहरणेषु अङ्गा इत्यादयो बहुवचनान्ता एव । दार्वक इत्युदाहरणे प्रकृतसूत्रस्य प्रवृत्त्यर्थमाह । दार्वा इतीति । कच्छाग्नि । ओर्देश इत्यतो देश इत्यनुवर्त्तते । सामर्थ्यादेवेति । तावन्मात्रस्य देशवचनत्वाभावात् । जनपदतदवध्योरितिसूत्रस्थभाष्यविरुद्ध इति । तत्र हि तदवधिग्रहणस्य प्रयोजनमुक्तम् जनपदाज्जनपदावधेर्वुञेव यथा स्यात् । यदन्यत्प्राप्नोति तन्मा भूदिति । किञ्चान्यत्प्राप्नोति । छः । गर्तोत्तरपदाच्छविधेर्जनपदाद्वुञ् पूर्वविप्रतिषिद्धमिति वक्ष्यति स पूर्वविप्रतिषेधो न पठितव्यो भवति इत्युक्तम् । यदि प्रकृतसूत्रेऽपि कच्छाग्निवक्त्रगर्तोत्तरपदादिति पाठः प्रामाणिकः स्यात्तदा त्रैगर्त्तक इत्यस्यानेन सूत्रेण सिद्धौ पूर्वविप्रतिषेधारम्भो व्यर्थः स्यादिति भावः । गर्तोत्तरपदाच्छविधेः कोऽवकाश इति चेत् । पर्यायः स्यात् । स च नेष्टोऽतो वर्त्तोत्तरपदादित्येव पाठो युक्त इति । ननु कत्त्र्यादिषु नगरशब्दस्य पाठान्नागरा इत्यनुपपन्नमत आह । कत्त्र्यादिष्विति । जनपदवुञ्बाधनार्थम् । प्रस्थोत्तरपदेतिप्राप्तस्याण्बाधकस्य जनपदेतिसूत्रविहितस्य वुञो बाधनार्थमित्यर्थः । नन्वेवं मौनक इत्यत्रापि कोपधादित्येवाणि सिद्धे प्रस्थोत्तरपदेतिसूत्रे

यद्यपीत्यादिना । उत्तरपदविशेषणम् । दिश इत्यपि तस्य विशेषणमिति दिश: परेषामगरवाग्युत्तरपदानान्दिश: परेषामुत्तरपदानाङ् ग्रामवाचङ्गावयवानामवामादेरचो वृद्धिरितिसूत्रार्थस्तन्मते द्रष्टव्य: । परन्त्वेषा कल्पना भाष्यविरुद्धेति सूचयन्नाह । भाष्ये चेति । मूलेऽपि ध्वनितमिति । दिश: परेषामगरवाचिनामिति कथनेन ध्वनितमित्यर्थ: । समानाधिकरणसमास इति । ततो रोपधेतो: प्राचामिति वुञ् । पक्षे इति । वुञ्प्रत्ययाभावपक्षे इत्यर्थ: । नक्षत्रयुक्तचन्द्रवाचिभ्य इति । तत्तन्नक्षत्रयुक्तचन्द्रमसा युक्तकालवाचिभ्य इत्यर्थ: । असम्भवादिति । तस्य समास एव सम्भव इति भाव: । पुनष्टाविति । अत एव यत्र न स्त्रीत्वन्तत्र चित्र इत्येव भवति । नक्षत्रवाचित्वाभावेन । जातार्थकप्रत्ययान्तस्य नक्षत्रवाचित्वाभावेनेत्यर्थ: । स्त्रियामित्येवेत्यस्यैतौ प्रत्ययौ स्त्रियामेवेत इत्यर्थ: । तत्र मानमाह । फल्गुनी इत्यादि । अस्त्रियामपीत्यस्य लाभप्रकारमाह । श्रविष्ठीय इत्यादीति । प्रत्याख्यातमिति । लुगर्थं वचनमप्रत्याख्यातम्पूर्वोक्ता: प्रत्ययास्तु पर्सन्त्यया एव । सूत्रे समाहारद्वन्द्वपूर्वपदकेति । स्थानान्तस्य गोशाला च स्थानान्तगाशालम् । स्थानान्तगाशालन्च खरशाला चेति समाहारद्वन्द्व । तत्रापीति । अपिना नपुंसकत्वाभावपक्षीयशब्दसङ्ग्रह: । एतेन । पूर्वोक्तरीत्या सौत्रप्रयोगसाधनेन । कृतछन्दस्य इत्यादि । छन्दस्त्वं हि नपुंसकत्वे विधीयते न च स्त्रीप्रत्ययस्तत्प्रकृतिक- । एवञ्च भवदुक्तं व्याख्यानमसङ्गतमेवेति भाव: । प्रतिप्रसूतपदं व्याचष्टे । कालाङ्‌ठञेति । मूले नक्षत्रेभ्यो बहुलमिति । भाष्यकारीयं वचनमेतत् । तत्र जात इत्यस्य तदधिकरणकजननकर्त्ता इत्यर्थ । कृतलब्धक्रीतकुशला । तत्रेति वर्त्तते । तदर्थस्य च कृतादिशब्दैकदेशक्रियायामन्वय: । तत्र कुशल इत्यस्य तस्मिन् स्थित्यादिरूपा या क्रिया तस्यां कुशल इत्यर्थ: । प्रायभव । तत्रेति वर्त्तते । ननु वक्ष्यमाणेन तत्र भव इत्यनेनास्याभिप्रायबोधकत्वमिति चन्यतरेणोपादानवैयर्थ्यमिति चेत्र अनित्यभव: प्रायभव: नित्यभवस्तत्र भव इति भेदात् । भवशब्दोऽत्र सत्ता कर्त्तृवाची । सुघ्ने प्रायभव इत्यस्य सुघ्नावयवसकलग्रामानवच्छिन्ना या सुघ्नावयवकतिपयग्रामाद्यवच्छिन्ना सत्ता तत्कर्त्त्रित्यर्थ: । भवनेऽनित्यत्वञ्च कतिपयसदवच्छिन्नत्वम् । नित्यभव इत्यस्य तद्देशावयवसकलग्रामाद्यवच्छिन्ना या तद्देशा-

षणोऽवकाश । तैप, पौष । छस्य स एव । स्नातेरुभयम्प्राप्नोति । सौवात । ष
व्ययाट्टुराट्टुराली छाङ्गवतो विप्रतिपेधेन । टुराट्टुरालीरवकाश । दोपातनम
दिवातनम् । छस्य स एव । प्रात'शब्दादुभयम्प्राप्नोति । प्रातस्तनम् इतिभाष्या
सङ्गतिरित्यर्थ । दुर्वलत्वेनेति । तद्बाध्यबाध्यत्वेन दुर्वलत्वमिति भाव । अयम् ।
आङशब्द । एवञ्च । तदादिग्रहणे च । नियमार्थ इति । स्नशब्दस्य द्वारादित्वा
त्तेनैव सिद्ध इत्यर्थ । पौर्णमास्याम्छमिति । पौर्णमासीशब्दस्य सन्धिवेलादिगणे
पाठात् । अत एव । अव्ययानाभमात्र इत्यस्यानित्यत्वादेव । स्पष्टार्थमिति ।
छन्दसीत्ये तन्निवृत्त्ये स्पष्टतया प्रतिपत्त्यर्थमित्यर्थ । स निर्देश । अयतन इति
निर्देश । एवम् । युवारनाकावितिसूत्र इव । भाष्ये प्रत्याख्यातमिति । साय
मितिमान्ताव्ययस्य च स्नीकारादेव प्रात सन्ध्या सनत्त्वा सायसन्ध्या समास्त
रेत्युपपद्यते । यत्तु स्नतेर्घञि दिवावसानवचन सायशब्दस्तस्याप्येतन्निपातन
मितिवृत्तिकृत्तन्न युक्तमिति ध्वनयन्नाह । घञन्तसायेति । तन्नाव इति । प्रत्या
ख्यानभाष्यस्य भाव । नन्वन्यत्राऽपि प्रयोगो दृश्यत इत्यत आह । सायमण्डम
मित्यादि । अत एव । अव्ययसञ्ज्ञकस्यैव सायशब्दस्य प्रकृतसूत्रे ग्रहणादेव ।
यस्तु सायशब्दो घञन्त स न कालवाची किन्तु दिननाशे वर्त्तत इति भाव ।
चिरमित्यस्याप्युपादान व्यर्थमित्याशङ्कते । नन्विति । त्नप्रत्ययेन । चिरपरुत्प
रारिभ्यस्त्नो वक्तव्य इतिवार्त्तिकविधेयेन । तत् । चिरङग्रहणम् । तत्त्वसम्भवात्।
अनित्यत्वज्ञापकत्वसम्भवात् । न चेष्टापत्ति । प्रत्याख्यानपरभाष्यविरोधात्। त
स्याप्रामाणिकत्वात् । चिरम्शब्दस्याप्रामाणिकत्वात् । अत एव भाष्ये प्रत्ययस
न्नियोगेन मान्तत्वञ्चिरशब्दस्य निपात्यत इत्युक्तन्न तु प्रत्याख्यानन्तस्य कृतम् ।
तेन शारद सस्यमिति । न चेह समुदाय सञ्ज्ञा किन्तु यौगिकोयम् । अत एव ।
अधिकारत्वादेव । तदपवादत्वात् । आदिवृद्धापवादत्वात् । अत एव । उत्तरप
दवृद्धेस्तदपवादत्वादेव । पौर्वप्रावियमिति । पूर्वा चासौ प्रावृट् च तस्यामयमि
त्यर्थ । वाचनिक एवेति । अन्यथा प्रत्ययविधित्वान्न स्यात् । दिग्वाचकस्य । अथ
दिकशब्दो दिगवच्छिन्नस्यापि बोधक ।पौर्वमद्र इति।पूर्वस्मिन्मद्रे जात ।अन्यानि
तु खण्डयति । वृद्धिविधायक इति । उत्तरार्धं इत्युक्तिरिष्टाभावयाह । सुगमेति ।
अन्ये । विवेचका । देशनिर्देश इति । न त्वाचार्यनिर्देश । वृत्तिकारमतमाह।

इत्युच्यमाने क्रमो कस्मान्न भवति। अनभिधानात्। यद्येवं तर्हि क्रमायनभिधानान्न भवति एवमस्मन्नपि न भविष्यतीति च भाष्ये उक्तम्। कालात्साधुपुष्यत्। तत्र त्येव। तत्र साधुत्वञ्च तदधिकरणकयोग्योत्पत्तिकत्वम्। यथा हेमन्ते कृतः प्राकारो योग्यो भवति तथा नान्यकाले निर्मित इति विवक्षितम्। ननूप्त इत्यत्र भूते प्रत्ययविधानादुप्यत इतिव्याख्यानमनुपपन्नमत आह। सूत्रे भूतकाल इति। देयमृणे। अत्रावश्यके कृत्यः। कलाप्यश्वत्थ। लाक्षणिका इति। साहचर्यसम्बन्धस्यात्र लक्षणावीजस्य सर्वत्र सत्त्वन्द्रष्टव्यम्। एतद्वृत्तिविषयत्वेति। वुन्प्रत्ययविषय इत्यर्थः। ननु दिक्संख्ये संज्ञायामिति नियमादवरसमित्यत्र कथं कर्मधारय इत्यत आह। अवरशब्दस्येति। तदस्य सोढम्। सोढमित्यत्र सहधातोः कर्मणि क्तः। सहनकर्मेत्यर्थः। न लोकेतिनिषेधादस्येति न कर्त्तरि षष्ठीसम्भव इत्याशयेनाह। क्रियाकारकभावेति। सहनमत्र परोक्तं दुर्वचनं सहते इत्यत्रेव न क्षमारूपङ्किन्तु पुनः पुनः परिशीलितमित्यत्र या क्रिया तत्परमित्याशयेनाह। सोढमभ्यस्तमिति। पदानामिति षष्ठ्यर्थोऽवयवावयविभावसम्बन्धादिपदार्थेऽन्वयस्तत्फलमाह। सौदेविक इति। सुदेविकाशब्दादत्र प्रत्ययः। तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः। व्याख्यायतेऽनेनेति व्याख्यानं। व्याख्यातव्यं व्याख्येयम्। तस्येति षष्ठीसमर्थाद्व्याख्येयवाचकात्प्रातिपदिकाद्व्याख्यानेऽभिधेयेऽणादयः स्युरित्यर्थः। चकारात्सम्बन्धाद्यर्थं। बह्वचोऽन्तोदात्ताट्ठञ्। पूर्वसूत्रमनुवर्त्तते। बह्वचो व्याख्यातव्यनाम्नोऽन्तोदात्तात्प्रातिपदिकाद्व्याख्यानेऽर्थे ठञ् भवतीत्यर्थः। षत्वणत्वेतिसमुदायः समासस्वरेणान्तोदात्तः। मध्योदात्तवाजपेयाद्यर्थं इति। वाजपेयशब्दो यद्यपि यागविशेषे रूढस्तथापि शास्त्रेण व्युत्पाद्यते इति वाजैः यवागूभिः सम्पादनीय इत्यर्थोऽस्य साधुत्वाख्यानेऽयञ्चोत्तरपदप्रकृतिस्वरेण मध्योदात्तः। पेयशब्दस्य यतोऽनाव इत्याद्युदात्तत्वात्। पाकयज्ञादिशब्दानां व्याख्यातव्यनामत्वमुपपादयति। यज्ञायेत्यादि। व्याख्यानरूपेऽर्थे प्रत्ययविधानेऽपि पौरोडाशिकं काण्डमित्यत्र कथं साधुत्वमत आह। पौरोडाशिकमिति। कार्कप इति। लक्षणादागत इत्यर्थके। ननु शुण्डिकादिभ्य इतिस्यक्सूत्रारम्भसामर्थ्यादेवाणि सिद्धेऽणुग्रहणस्य किमर्थमत आह। अणृगयणमिति। गोत्रादङ्कवत्। गोत्रप्रत्ययान्तात्प्रत्यय-

धिकरणिका सत्ता तत्कर्त्तेति वाच्योऽर्थ इति सूत्रकाराशय । भाष्यकृता तु प्र क्षतसूत्रमप्रत्याख्यातम् । प्रायभवग्रहणमनर्थम् तत्र भवेन क्षतत्वात् । प्रायभवग्र हणमनर्थकम् । किङ्कारणम् । तत्र भवेन क्षतत्वात् । यो हि सुराष्ट्रे प्रायेण भ वति तत्र भवोऽसौ भवति तत्र तत्र भव इत्येव सिद्धम् । अत्र कैयट । भवे सामान्ये प्रायभवस्यापि विशेषस्यान्तर्भावादिति भाव । तत अारम्भवादाह। न सिद्धति । अनित्यभव प्रायभव । नित्यभवस्तत्र भव इति । अर्थभेदमनेना चष्टे । यस्तत्र कदा चिद्भवति कदा चिन्न भवति स प्रायभव । यस्य तु नियत आधाराधेयभावस्स तत्र भव इति कैयट । अत्र कदा चिदिति न कालिकाव्या प्यवृत्तिमात्रपरङ्किन्तु यदीयसत्त्वमव्याप्यवृत्ति तत्सामान्योपलक्षणम् । तत्र का लिकान्देशिक वेत्यन्यदेतत् । प्रत्याख्यानवाद्याह । अनित्यभव प्रायभव इति चेन्मुक्तसंशयेन तुल्यम् । यद्भवान्मुक्तसंशय तत्र भव उदाहरणन्त्वाख्यमन्यते स्रौघ्नो देवदत्त इति तेनैतत्तुल्यम् । सोऽपि ह्यवश्यमुदकदेशादीन्यभिनिष्क्रामति । ए तेन तदीयसत्त्वस्य देशिकाव्याप्यवृत्तित्वन्निदर्शितम् । अथैतत्प्रायभव उदाहरण त्वाख्यमन्यते । तत्र भवे किमुदाहरणम् । यत्तत्र नित्यभवति । स्रौघ्ना प्राका रा । एवन्तर्हि तत्र भव इति प्रकृत्य निष्कामूलाङ्गुलेर्न्त्वो विधीयते स तस्मि न् दृष्टोपचारे अङ्गुलीयमिति भवति एवम्प्रायभवेऽपि भविष्यति । एतेन प्रघ ट्टकेन नीलघटस्य घटत्वेन बोधवत्प्रायभवस्यापि भवत्वेन बोधमाश्रित्य प्राय भव इति प्रत्याख्यातमिति भाव । उपजानूप । उपजान्वादय सामीप्येऽव्य यीभावा । सम्भूते । तेनेति वर्त्तते । सप्तमीसमर्थात्प्रातिपदिकात्सम्भूत इत्य स्मिन्नर्थे यथाविहितम्प्रत्ययो भवति । अत्र सम्भूतिर्निष्पत्ति सत्ता वा । जातभ वाभ्याङ्गतार्थत्वात् । किन्त्ववक्लृप्ति, प्रमाणानतिरेकश्च यथायथ सम्भूतिपदार्थ । कोशाड्ढञ् । कौशेय वस्त्रम् । अत्र कोशे सम्भूतिर्वस्त्रस्य सत्कार्यवादसिद्धान्त रीत्या । वार्त्तिककृता तु लोकप्रसिद्धरीत्या विकार एव प्रत्ययं स्वीकृत्येद सूत्र प्रत्याख्यातम् । विकारे कोशाड्ढञ् वक्तव्य । कोशस्य विकार । कौशेयम् । स म्भूते ह्यर्थानुपपत्ति । सम्भूत इत्युच्यमानेऽप्यर्थानुपपत्ति स्यात् । न ह्यद को शे सम्भवति । तदानीं वस्त्रानुत्पत्ते । किन्तर्हि कोशस्यादौ विकार । यदि विकार इत्युच्यते भस्मान्यपि प्राप्नोति भस्मापि कोशस्य विकार । अथ सम्भूत

योपधत्वादिति। धन्वयोपधाद्वुञ्। लौकिकमिति। षष्ठ्याधिकारादन्यत्वात्। औपगवक इति। औपगवो भक्तिरस्येत्यर्थ:। शूरशब्दादिति। एतस्य क्षत्रियवाचकत्वेन प्रसिद्धत्वाभावात्। न चैवं वासुदेवार्जुनाभ्यामितिपूर्वसूत्रवैयर्थ्यम् क्षत्रियाख्यत्वादेव सिद्धेरिति वाच्यम्। अस्य संज्ञाशब्दत्वात्। अत एवोक्तभाष्ये। संज्ञैषा तत्र भवत इति। मद्रशब्दत्वं नेति। माद्र इत्यत्र योऽण् तन्निवृत्तिरत्र। दृष्टान्तार्थमिति। बहुवचने जनपदेन समानश्रुतित्वप्रदर्शनार्थम्। ननु पञ्चाला ब्राह्मणा इत्यसङ्गतम् पञ्चालशब्दस्य देशक्षत्रियान्यतरस्मिन्व्युत्पादनादत आह। अभेदोपचार इति। ननु तित्तिरिणा प्रोक्त: श्लोक इत्यर्थे छणोऽभाविष्यण् कुतो नेत्यत आह। तित्तिर्यादिभ्य इति। छन्दोब्राह्मणानीतिसूत्रे ब्राह्मणपदसन्निधानाच्छन्द:शब्दो मन्त्रमात्रपर एव स्यादत आह। छन्द:शब्दं नेति। काश्यपकौशिकाभ्याम्। ऋषिवाचिभ्याङ्काश्यपकौशिकाभ्यान्ते न प्रोक्तमित्यर्थे णिनि: प्रत्ययो भवति। कल्पे आभ्यां प्रोक्त इति अर्यते। आभ्याम्। काश्यपकौशिकाभ्याम्। इष्यत इति। वृत्त्यादिसम्मतात्काश्यपकौशिकग्रहणञ्च कल्पे नियमार्थम्। काश्यपकौशिकाभ्यामेव णिनि: कल्पे तद्विषयो भवतीति छन्दोब्राह्मणानीति सूत्रसम्मत व्याख्यानादिति शेष:। वैशम्पायनशिष्यत्वादेवेति। शिष्यशिष्याणामपि शिष्यव्यवहारदर्शनादिति भाव:। तद्ग्रहणम्। कलापिग्रहणम्। तदुक्तभाष्ये। प्रत्यचकारिग्रहणम्। प्रत्यचकारिग्रहणङ्कर्तव्यम्। अन्तेवास्यन्तेवासिभ्यो मा भूदिति। प्रत्यचकारीत्यस्य प्रत्यक्षमध्ययनकारीत्यर्थ:। तर्हि वक्तव्यम् न वक्तव्यम्। कलापिखाडायनग्रहणं ज्ञापकं वैशम्पायनान्तेवासिषु प्रत्यचकारिग्रहणस्य। यदयं कलापिखाडायनग्रहणङ्करोति तज् ज्ञापयत्याचार्यो नान्तेवास्यन्तेवासिभ्यो भवतीति। कथङ्कृत्वा ज्ञापकम्। वैशम्पायनान्तेवासी कठ:। कठान्तेवासी खाडायन:। वैशम्पायनान्तेवासी कलापी। यदि चान्तेवास्यन्तेवासिभ्योऽपि स्यात् कलापिखाडायनग्रहणमनर्थकं स्यात्। पश्यति त्वाचार्यो नान्तेवास्यन्तेवासिभ्यो भवतीति तत: कलापिखाडायनग्रहणङ्करोतीति। तत्र कलापिग्रहणमस्मत्सूत्र एव स्फुटम्। खाडायनग्रहणन्तु शौनकादिगणे निर्यर्थङ्कृतमिति बोध्यम्। याज्ञवल्क्यानीतीति। याज्ञवल्क्येन प्रोक्तानीत्यर्थ:। अभिम'नोक्तिबीजमाह। भाष्ये त्विति। छन्दस्त्वभिधेय इति। अत्र

न्तादागत इत्यर्थेऽङ्गवत्प्रत्ययो भवति। वैदमित्यत्र वैदशब्दादजन्तादङ्गवद्विधी यमान प्रत्ययो यथा सङ्ख्याङ्कलचणेष्वभिजामयितिसूत्रेणाङ्गेऽण् भवति त था आगतमित्यर्थेऽपि स एव भवति। इत्यभिमान इति। तत आगत इत्य र्थस्य प्रक्रमे नञ शुचीश्वरेतिसूत्रलेखनकर्तुरिति शेष । अर्थान्तरेऽपि प्रत्य यप्रवृत्ती सूत्रस्य चारितार्थ्यमाह। अशुचो भवमिति वेति। हेतुमनुष्येभ्योन्य तरस्यां रूप्य । हेतुमनुष्यवाचकेभ्य पञ्चम्यन्तेभ्य आगत इत्यर्थेऽन्यरस्यां रूप्यप्रत्यय इत्यर्थो न तु हेतुमनुष्यशब्दादिति बहुवचननिर्देशात्। मनुष्यग्र हणमहेत्वर्थम्। प्रभवति। अस्य सूत्रस्यागतार्थतामाह। प्रभव प्रथमप्रकाश इति। एतद्वृत्तीति। आप्रत्ययोत्पत्तिविषय इत्यर्थ । तद्गच्छति पथिदूतयो। द्वितीयान्ताद्गच्छतीत्यर्थे प्रत्यय स्यात् यो गच्छति स पन्था दूतश्चेद्भवति । अ भिनिष्क्रामति द्वारम्। तदित्येव। द्वितीयान्तादभिनिष्क्रामतीत्यर्थे प्रत्ययो भ वति योऽभिनिष्क्रामति तद्द्वारश्चेत्। अत्राभिराभिमुख्ये। स्रुघ्नमभिनिष्क्रा मतीत्यस्य स्रुघ्नदेशाभिमुख्येन कन्यकुब्जद्वारमभिनिष्क्रामतीत्यर्थ । यद्यपि स्रुघ्नदेशाभिमुख्येन निष्क्रामन्तिये जनास्तेषामभि निष्क्रमणक्रियायान्द्वारस्य करणत्वन्तथापि साध्वसिम्छिनत्तीत्यत्र यथा करणस्य स्वातन्त्र्यविवचा तथाऽ त्रापि बोध्यम्। अधिकृत्य कृते ग्रन्थे। तदित्येव। द्वितीयान्तादधिकृत्य कृत इत्यर्थे प्रत्ययो भवति य कृत ग्रन्थश्चेत्स भवति। अधिकृत्य। प्रस्तुत्य। न नु सौभद्रो यायात इतिवृत्तिकारोक्तोदाहरणस्यापि सम्भवात्तत्यागे किम्बी जमत आह। सौभद्र इत्यादि। मूले उपचारादिति। यथा वासवदत्तामधि कृत्य कृता या आख्यायिका सोपचाराद्वासवदत्तेत्युच्यते न तु प्रत्यय क्रिय ते तथाऽत्रापि छप्रत्ययाभावेऽपि प्रयोग इति भाव । सोऽस्य निवास । प्र थमान्तान्निवासोपाधिकादस्येति षष्ठ्यर्थे प्रत्यय इत्यर्थ । स्रुघ्नाभिजनिवा सस्सम्बन्धीत्याकारको बोध । फलितार्थमाह। स्रुघ्नाधिकरणकेति। अभिज नश्च। सोऽस्येति वर्त्तते। अभिजायते येष्विति व्युत्पत्त्याभिजनशब्द पू र्वबान्धववाची स लक्षणयाऽत्र देशे वर्त्तते। प्रकृतिविशेषणमिति। पर्वते व र्त्तमानात्प्रातिपदिकादभिजनोपाधिकादस्येत्यर्थे प्रत्यय स्यात् । माद्राश्मका इति। सद्भाश्म राज्ञा निर्वृत्तं साङ्काश्यम्। साङ्काश्ये जात साङ्काश्यक ।

प्रत्यये सिद्धे इडर्थमुपसङ्ख्यानम् । वत्पातीयमस्तुस्तदन्तप्रकृतिकप्रत्ययान्तादिदम र्थेऽण् प्रत्ययो भवति तुमु इट् च भवति । तुरिति तृन्तृचोः सामान्यग्रहणम् । चयमिडलौकिके प्रक्रियावाक्ये ठत्वादीनामसिद्धत्वात्तेभ्यः पूर्वम्प्रवर्त्तते । अत एवाह सावदित्रमिति । अग्नीध शरणेरण् भश्च । अग्नीच्छब्दाच्छरणेऽर्थे रण् प्रत्ययो भवति तस्मिन् पूर्वस्य भसञ्ज्ञा भवति । अग्निमिन्धे इन्धयतीत्यर्थे क्विप् तदाह । अन्तरिति । अग्नीत् होता । तस्य शरणङ्ग्रहम् । गृहस्य स्थानत्वात्त स्याधारत्वे नोक्तम्मूले स्थानमिति । सोऽपीति । होतापीत्यर्थ । तात्स्थ्यमत्र लक्षणाया बीजम । तस्मात् । होतृपरादाग्नीध्रशब्दात् । समिधामाधाने षेण्य ण । आधानपदे करणे ल्युट । समिधामिति कर्मणि षष्ठी । पक्षपूर्वात् । रथा दिष्वनुवर्त्तते । एवञ्च पक्षपूर्वाद्रथादित्यर्थं । पक्षशब्दोऽत्र स्वरितत्वादर्थप र । उत्तरत्रापीति । पत्राध्वर्युपरिषदश्चेति सूत्रेऽपि । अध्वर्युशब्दे च स्व रूपग्रहणं स्व रूपमिति शास्त्रादेव परिषच्छब्देऽपि । अत्रैव । पात्राध्वर्यु परि षदितिसूत्रे । द्वन्द्वाद्वुन् । क्वाचित्कम्पाठं खण्डयति । वैरे देवासुरेति । लौकि कम् । प्रवराध्यायप्रसिद्धम् । अन्येष चौद्रकमालवकमित्यस्यासिद्धिरत आह । गोत्रचारोपेणेति । इदमर्थविशेषणानीति । विशेषार्थत्वाद्विशेषणत्वग्राह्यमेव । तृत्रोऽपवाद इति । गोत्रचरणादिति प्राप्तस्येति शेष । सम्बद्धमिति । स्वाम्य यस्वामित्वसम्बन्धेन । साक्षात्सम्बन्ध । स्वस्वामिभाव एव । ननु चरणाद्धर्मा म्नाययोरित्युक्तत्वेन प्रोक्तार्थे कथम्प्रत्यय इत्यत आह । गोत्रचरणेति । उत्सर्गोय मिति । लक्षणशब्दवोध्यार्थस्य क्लीबत्वात्तदर्थकप्रत्ययान्तस्यापि क्लीबत्वमित्यु त्सर्ग इत्यर्थं । दाक्षाणामिम इति । सङ्घादय इत्यर्थं । इञर्थे त्यण् सर्वे । गोत्र प्रत्ययान्ता । रैवत्यादिभ्यष्ठगिति ठगन्ता । इञ् स्यादिति । कुपिञ्जलशब्दादप त्येऽर्थे इञ्स्यादित्यर्थ । हस्तिपादशब्दादिति । प्रह्नादादिभ्य इतिनिषेधात्पा दस्य लोप इति लोपो न । आथर्वणिक इति । अथर्वणा प्रोक्तो वेदोऽभेदोप चारादथर्वा । वसन्तादित्वाट्ठक् । दाण्डिनायनेतिनिपातनाट्टिलोपाभाव । ततो ऽपि प्रकृतसूत्रेणैवेनागब्दलोपे प्रकृतिभाव इत्यर्थं ॥

॥ इति शैषिका ॥

छन्दःशब्दो मन्त्रब्राह्मणान्यतरपर. । भाष्यविरोधादिति । तत्र हि शौनकादिपठितस्य खाडायनशब्दस्य कलापीतिसूत्रे उक्तं वासिप्रहणेऽस्य वाऽस्यन्तं वासिग्रहणवैयर्थ्यं ज्ञापकत्वमुक्तम् । यदि शौनकादीतिसूत्रस्य वेदमात्रविषयकत्वं तदा शौनकादिषु खाडायनशब्दपाठे सति वेदमात्रेऽभिधेये णिनि: कलापीतिसूत्रे ण णिनौ तु मन्त्रब्राह्मणयोर्णिनिरिति फलभेदस्य स्पष्टतयाऽत्रार्थज्ञापकत्वपरभाष्यमसङ्गतं स्यादिति भाव. । पाराशर्येतिसूत्रघटकं भिक्षुसूत्रपदं व्याचष्टे । भिक्षुसूत्रमिति । सूत्रस्य भिक्षुत्वसम्पादकत्वमुपपादयति । यथा नटेति । ननु वेदान्तश्रवणस्य ब्रह्मज्ञानाङ्गत्वमनुवचनाल्लभ्यते तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेत्यनेन तु वेदनेच्छायामुपयोग. प्रतीयत इति विरोध इत्यत आह । विविदिषावाक्येऽपीति । उभयत्रापीति । उभयत्र करणत्वेऽपि वेदने करणत्वात्तत्रैरिति भाव । विविदिषावाक्यस्यापि वेदन एव करणत्वे तात्पर्यमित्याशयेनाह । वस्तुत इति । एतेन प्रघट्टकेनात्मदर्शनोपयोगिन. सूत्रस्य भिक्षुत्वमस्त्विति फलमुक्तं तु भिक्षुभिरेवाध्येतव्यमिति । तमेवार्थं द्रढयति । ऐतरेयब्राह्मणेऽपीति । एतेन गृहस्थस्याप्यात्मदर्शनेऽधिकारित्वमुक्तम् । ननु संन्यस्य श्रवणमित्यनेन संन्यासोत्तरं श्रवणमुक्तं तेन विरोध इत्यत आह । संन्यस्येति । मूलोक्तभिक्षव इतिपदं व्याचष्टे । भिक्षुत्वयोग्या इति । अनयो. । पाराशर्येतिसूत्रविषययो । इष्यते । तदुक्तञ्च न्दोब्राह्मणानीतिसूत्रभाष्ये । कथम्पाराशरिणो भिक्षव । शैलालिनो नटा । अत्रापि तद्विषयता चेति । एकदिक्पदे बहुव्रीहिरित्यभिप्रायेण व्याचष्टे । एकदिग्रूपाधिकरणस्यमिति । उपज्ञाते । तेनेति वर्त्तते । तृतीयासमर्थादुपज्ञात इत्यर्थे प्रत्ययो भवति । विनोपदेशं स्वयमेव यदभिमन्युक्तन्तदुपज्ञातम् । कृते ग्रन्थे । तेनेत्येव । तृतीयान्तात्कारकृत इत्यर्थे प्रत्ययो भवति । य कृत स ग्रन्थश्चेद्भवति । कृतमुत्पादितम् । यत्तु, भिक्षुपदेशं विनापि ज्ञातन्तदुपज्ञातमित्यनयोर्भेद. । अपवाद इति । छद्वाच्छ इतिप्राप्तस्यापवाद. । तस्येदम् । सामान्यविशेषरूपेणेति । विशेषरूपेण येषां शेषभूतानामप्रत्ययार्थत्वमुक्तं तेषां प्रकृत्यर्थसम्बन्धित्वात्मकसामान्यरूपेणापि प्रत्ययार्थत्वमित्यर्थ. । शेषभूतानामेव । ते न प्रत्ययार्थत्वेन यस्मिन्नसदा ह । अपत्यादीनामिति । तस्येत्युत्तरणिदृष्यसूत्रे ण

ति। मयूरवाचकाद्बर्हिशब्दात्प्राणिरजतादिभ्योऽञित्यञ्। आद्युदात्ताविति। एतेनानुदात्तादेरित्यनेन गतार्थता नेति सूचितम्। बैल्वमयमितीति। बिल्वादिभ्योऽणित्यणन्तान्मयट्। भाष्यरीत्याह। तस्यावयव इत्यर्थ इति। ननु बैल्वस्य विकार इत्यर्थोऽपि कुतो नेत्यत आह। विकार इति। भाष्यमिति। प्रकृतसूत्रभाष्ये विकारावयवार्थकप्रत्ययान्ताद्विकारावयवार्थे मयड्व्याहत्यर्थञ्ञितश्चतदितिसूत्रमित्यादौ सूत्रस्य प्रयोजनमभिधाय विकारावयवयोः प्रकृतिशब्दस्य कपोतादेरारोपेण समुदाये दृष्टाः शब्दा अवयवेष्वपि वर्त्तन्त इतिन्यायेन या प्रवृत्तिं स्वीकृत्य प्रकृतिशब्दस्यावृद्धत्वात्तस्मान्मयडभावस्य सिद्धिमाश्रित्य सूत्रप्रत्याख्यायोक्तं तद्विवदामहेऽवयवे समुदायशब्दो नास्तीति विकारेवाप्रकृतिशब्द इति। किन्तर्हि विकारावयवशब्दोऽपि त्वस्ति तत उत्पत्तिः प्राप्नोति। इत्येवमाशङ्क्य विकारावयवशब्दात्प्रसङ्ग इति चेत् न तेनानभिधानात्। विकारावयवशब्दात्प्रसङ्ग इति चेत्। तन्न। किङ्कारणम्। तेनानभिधानादित्युक्तम्। अत्र कैयटः। मयटः कापोतमयमिति विकारावयवयोः प्रयोगाभावादित्यर्थः। प्रयोगाभावादित्यस्य मयटः प्रयोगेण तदर्थानवगमादित्यर्थः। अयम्भावः प्रकृतिविकारविकारस्य प्रकृतिविकारत्वात्प्रकृतिवाचकादेव विकारार्थकप्रत्ययेन तस्यार्थस्य बोधसम्भवेन न बैल्वमयमित्यनेन विकारविकारप्रत्ययः किन्तु विकारावयवस्येति। परिमाणशब्देन परिमाणन्तु सर्वत इत्यनेनारोहपरिणाहाभ्यां येन मीयते तस्यार्थस्य प्रतिपादनाद्व्यसाणस्य; शत्यः शतिक इतिप्रयोगस्यानुपपत्तिरत आह। अत्र परिमाणशब्देनेति। व्याख्यानादिति। आर्हादितिसूत्रस्थभाष्यसम्मतव्याख्यानादित्यर्थः। व्याख्यानमेव स्पष्टयति। अत एवेति। मूले वुञभाषे यथाक्रममणञावित्युक्तन्तदुपपादयति। उमेतीति। गोपयसोः। अत्र गोशब्दस्तद्भक्षिततृणादिपरः। द्रव्यशब्दस्य व्युत्पत्तिर्यद्यपि मूलोक्तैव तथाप्ययं रूढ इत्याशयेनाह। द्रव्यशब्द इति। स्त्रीप्रत्ययलुकस्तद्धितलुङ्निमित्तकत्वेन तद्धितलुको बीहपरत्वादचः परस्मिन्निति स्थानिवत्त्वमाशङ्क्याह। लुका लुप्तत्वादिति। न्यग्रोधस्य च। न्यग्रोधशब्दो लघावन्त इति मध्योदात्तः। इदमव्युत्पन्नप्रातिपदिकमित्यस्य यकारो न पदान्त इति सूत्रारम्भः। यदि तु न्यक् रोहतीति व्युत्पत्तिमात्रमत्रापीष्यते

तस्य विकारः। षष्ठीसमर्थाद्विकाररूपेऽर्थे प्रत्ययो भवति। अश्मितिप्रकृतिभावबाधनायाह मूले अश्मनो विकार इति। मध्योदात्त इति। एवञ्च शेपनिघातेनानुदात्तादिरयमित्यञ्। नन्वारम्भसामर्थ्यादेवाणि सिद्धेऽण्ग्रहणं व्यर्थमत आह। अण्ग्रहणमिति। उवर्णान्तत्वादीति। यथादिनाऽतितिडीकशब्दादनुदात्तादेर्येतिप्राप्त इत्यर्थः। ननु दैवदारवमिति औरजित्यस्योदाहरणत्वेनोपात्तन्तत्राप्यनुदात्तादेरित्येव कुतो नोक्तमत आह। देवदार्विति। पीतद्र्वर्थानामितिफिट्सूत्रेणाद्युदात्तः। अन्तोदात्तोऽयमिति। तथा च तद्धितयोगशिष्टशेषनिघातेनानुदात्तत्वेऽञ्। पलाशादिभ्यो वा। पलाशादिभ्यः प्रातिपदिकेभ्यः षष्ठ्यन्तेभ्यः विकारावयवयोरर्थयोर्वाञ् भवति। उभयत्र विभाषेयम्। पलाशशब्दस्य घृतादित्वादन्तोदात्तत्वेनानुदात्तादेरितिप्राप्ते खदिरशब्दस्य, किरच् प्रत्ययान्तत्वेनाप्राप्ते ऽस्यारम्भादित्याशयेनाह। खदिरशब्दोऽत्र पठ्यत इति। शम्याः प्लञ्। शमीशब्दात् प्लञ्प्रत्ययो भवति। पित्त्वफलमाह शामीली स्रुगिति। माधवमप्यत्याह। प्लञत्रेति। तद्विकारत्वमारोप्येति। तन्नाशोत्तरकालोत्पत्तिको हि तद्विकारः। शमीनाशेन यदुत्पद्यते तद्धि शामीलम्। एतत्सत्तायां शमी नास्ति। शमीनाशेन च यदुत्पद्यते भस्मादि तदुत्पत्तौ शमीनाशस्य न कारणत्वमन्यथा सिद्धत्वादिति जितय तत्प्रत्ययादिति सूत्रारम्भवादिनो भावः। भाष्यरीत्या तु शामीलविकारोत्पत्तावपि शमीनाशस्य प्रयोजकत्वात्तन्नाशप्रयोज्योत्पत्तिकत्वमस्त्येवेतिजितयेतिसूत्रमप्रत्याख्यातम्। अस्य। प्लञः। ङीपिति। तथान्तोदात्तः शामीलीशब्दः। फले भेदः स्यादिति। प्रत्ययस्य टित्त्वे तु टित्वान्ङीप्यनुदात्तान्तत्वमेवेति न फलभेद इति भावः। नन्वौष्ट्रिका उपानत्। कांस्या स्थालीत्यत्र जितयेतिसूत्रारम्भे वुञन्तयञन्तायाञ्जि ङीष्प्रादिति फलभेदस्य स्पष्टतया कथमप्रत्याख्यानमत आह। उष्ट्रस्येत्यादि। वैल्वम्। वैल्वमयमिति। अत्र वैल्वस्य विकार इत्यर्थविवक्षायां वृद्धत्वेऽपि विकल्पेन मयट्। एतच्च जितयेतिसूत्रारम्भवादिमते। अन्तोदात्त इति। तथा चानुदात्तादित्वादञ्। तस्य। एकाच इत्यस्य प्रकरणाबाध इति। विकारप्रकरणस्याबाध इत्यर्थः। यावकमित्यस्य सभाशब्दत्वादवयवार्थाभावेऽपि कथञ्चित्तदुपपत्तिरित्याशयेनाह। यावक इति। वार्हिणशब्द इ-

ति। मयूरवाचकाद्वर्हिशब्दादाणिरजतादिभ्योऽञित्यञ्। आद्युदात्तेति। एतेनानुदात्तादेर्यन्नेन गतार्थता नेति सूचितम्। वैल्वमयमितीति। विल्वादिभ्योऽणित्यणन्ताम्मयट्। भाष्यरीत्याह। तस्यावयव इत्यर्थ इति। ननु वैल्वस्य विकार इत्यर्थोऽपि कुतो नेत्यत आह। विकार इति। भाष्यमिति। प्रकृतसूत्रभाष्ये विकारावयवार्थकप्रत्ययान्ताद्विकारावयवार्थे मयड्व्यावृत्त्यर्थञ्जितश्च तदितिसूत्रमित्यादौ सूत्रस्य प्रयोजनमभिधाय विकारावयवयोः प्रकृतिशब्दस्य कपोतादेरारोपेण समुदाये दृष्टाः शब्दा अवयवेष्वपि वर्त्तन्ते इतिन्यायेन वा प्रवृत्तिं स्वीकृत्य प्रकृतिशब्दस्याहुद्ब्लात्तद्धाम्मयडभावस्य सिद्धिमाश्रित्य सूत्रप्रत्याख्यायोक्तर्थं तद्विदामङ्गेऽवयवे समुदायशब्दो नास्तीति विकारेवाप्रकृतिशब्द इति। किन्तर्हि विकारावयवशब्दोऽपि त्वस्ति तत उत्पत्तिः प्राप्नोति। इत्येवमाशङ्क्य विकारावयवशब्दात्प्रसङ्ग इति चेत् न तेनानभिधानात्। विकारावयवशब्दात्प्रसङ्ग इति चेत्। तन्न। किङ्कारणम्। तेनानभिधानादित्युक्तम्। अत्र कैयटः। मयटः कापोतमयमिति विकारावयवयोः प्रयोगाभावादित्यर्थः। प्रयोगाभावादित्यस्य मयटः प्रयोगेण तदर्थानवगमादित्यर्थः। अयम्भावः प्रकृतिविकारविकारस्य प्रकृतिविकारत्वात्प्रकृतिवाचकादेव विकारार्थकप्रत्ययेन तस्यार्थस्य बोधसम्भवेन न वैल्वमयमित्यनेन विकारविकारप्रत्ययः किन्तु विकारावयवस्येति। परिमाणशब्देन परिमाणन्तु सर्वत इत्यनेनारोहपरिणाहाभ्यां येन मीयते तस्यार्थस्य प्रतिपादनाद्व्यमाणस्य,शत्यः शतिक इतिप्रयोगस्यानुपपत्तिरत आह। अत्र परिमाणशब्देनेति। व्याख्यानादिति। आर्हादितिसूत्रस्थभाष्यसम्मतव्याख्यानादित्यर्थः। व्याख्यानमेव स्पष्टयति। अत एवेति। मूले वृद्धभाषे यथाक्रममणञावित्युक्तम्तदुपपादयति। उमेतीति। गोपयसोः। अत्र गोशब्दस्तद्भवचितलक्षणादिपरः। द्रव्यशब्दस्य व्युत्पत्तिर्यद्यपि मूलोक्तैव तथाप्ययं रूढ इत्याशयेनाह। द्रव्यशब्द इति। स्त्रीप्रत्ययलुकस्तद्धितलुङ्निमित्तकत्वेन तद्धितलुको बौद्धपरत्वाद्यचः परस्मिन्निति स्थानिवत्त्वमाशङ्क्याह। लुका;लुप्तत्वादिति। न्यग्रोधस्य च। न्यग्रोधशब्दो मध्योदात्त इति मध्योदात्तः। इदमव्युत्पन्नप्रातिपदिकमित्यस्य यकारो न पदान्त इति सूत्रारम्भः। यदि तु न्यक् रोहतीतिव्युत्पत्तिमाश्रमत्रापीव्युत्पत्ते

तदा न्यग्रोधस्य शैङ्गे वन्नर्स्य वेतिनियमार्थम्। तत्र। बिल्वादिगणे । एवञ्च पाटलानि पुष्पाणीत्यत्र प्राप्तोपि लुप्त । भाष्ये मूलानीति पाठ इति। एवञ्च पुष्पेषु मल्लिका करवीरमित्युदाहरण युक्त । मूले तु पाटलानीति हत्तिप्रामाण्यादिति। तत्र हि बहुलग्रहणस्य प्रयोजनताद्रूपणावसरे न च भवति पाटलानि पुष्पाणि। साल्वानि मूलानीत्युक्तम्। तेषाम्। उखादीनाम् यञ्ञोर्लुगभावे हेत्वन्तरमाह। एककाल इति। उद्देश्यविधेयभावावगाहिशाब्दबोधे उद्देश्यतावच्छेदकप्रकारकज्ञानस्य पूर्वकालिकत्वनियमात्। व्यर्थत्वापत्तेरिति । प्रातिपदिकादित्यनेनान्वयाय पञ्चमीनिर्देशस्य कर्तुमुचितत्वादिति भाव ॥

## ॥ इति विकारार्थकाः ॥

## ॥ प्राग्दीव्यतीयाः समाप्ताः ॥

तस्य चेति। समुदायस्य चेत्यर्थ। इञ्ञाविति। माग्रन्दिक इत्यादिष्वित्यर्थ.। अवास्येति। स्वागतादिगणे। तेवेति। करणतृतीयेवेत्यर्थ। अत्र। दीव्यतीत्यादौ। इत्युक्तमिति। व्याख्यातव्यनिर्दिशार्थंस्येतिन्यायात्। इह। पर्यादिगणे। सूत्रोपात्तत्वादिव्निमित्तत्वेतिभ्रमवारणायाह। यत्किञ्चिनिमित्त इति। एतदेवेति मूलस्य प्रादेरितिसूत्रमेवेत्यर्थ। शोचद्धानमिति। प्रज्ञानिदिमित्यर्थ। ननु श्वापदशब्दाट्ठाच्च स्यादत आह। अभिधानेति। निषेध इति। इकारादावितिवचनेन। चर्मण्वित्यम्। तेन दीव्यतीत्यतस्त्वेनेति वर्तते। विप्रत्ययान्तात्तृतीयान्ताविदत्यर्थवितिवाक्यार्थ। अत्र वाक्यन्निरर्थमित्यप्रकाशम्। अत एव पाकेन निर्वृत्तमिति षजन्तेन क्तिप्रत्ययान्तसमानार्थकेन विग्रहं कुर्वन्ति। ननु विग्रहेन सङ्ख्यायादर्शनं विग्रहस्य क्तिप्रत्ययस्य च ग्रहणमाप्नोति। न च ग्रयाणामित्यत्र प्रत्ययादर्शनेन सङ्ख्याया न ग्रहणमिति वाच्यम्। क्तौ यान्तत्वे एव मव्विषयत्वप्रतिपादनादत आह। त्रिष्वितीति। व्याख्याना दिति। तत्सामान्यमसमतव्याख्यानादित्यर्थ। भेरिति भिन्नमिति। भेदविभि भिन्नमित्यर्थ। नित्यप्रत्ययप्रतिफलनीयात्मम् वाक्ये प्रयोगोऽनेन।

वारितोऽत आह । ततो नित्यमिति । धान्तात्त्वत्ये वेति । अत्र तेनेत्यस्यासम्बन्धस्तेनेत्यं तत्सम्बन्धे नेदमित्यं मत्वविधायकमिति तु न । नित्यविकल्पयोर्विषय व्यवस्थानापत्तेः । अयं यो मप स धान्तात्त्वत्ये वेति वाक्येन त्रिशब्देन सहायाया न ग्रहणं । त्रिशाल्यायाणामिति निर्देशात् । न च निर्वृत्तार्थे एव नित्यत्वबोधनेन धान्याणामितिनिर्देशस्योपपत्तिरिति वाच्यम् । योगविभागस्यैवं सति वैयर्थ्यापत्तेरिति भावः । अत एवाह । अन्यत्र चेति । एवञ्च । नित्यमिति वाक्येन धान्तस्य मब्विषयत्वबोधने च । अतएव पूर्वन्त्रेरित्यस्य व्याख्यानावसरे त्रिप्रत्ययान्तान्नित्यमिति व्याख्यातम् ॥ केचित्तु भावार्थादिमप् । निर्वृत्त इत्यनुवर्त्तते । निर्वृत्त इत्यर्थे भावार्थकप्रत्ययान्तादिमप् । ततस्त्रेः । भावार्थादित्येव । नियमार्थमिदम् । भावार्थं यत्त्रिशब्दान्तं तत इमप्प्रत्ययो भवत्येवेति । तेन वाक्यस्य व्यावृत्तिः सिद्धैव । ततो नित्यमिति । अत्र निर्वृत्तमित्यस्यासम्बन्धः । त्रिप्रत्ययान्तान्नित्यमिमप् । तेनान्यत्रापि त्रिप्रत्ययान्तस्य स्वातन्त्र्येण प्रयोगो नेत्यनेन बोध्यते । एवञ्च मप्प्रत्ययो न विधेय इत्याहुः । कुट्टिमाद्यप्येवमिति । इमबन्तम् । कुट्टिमोऽस्त्री निबद्धाभूरिति यद्यपि कोशे उक्तम्तथापि कुट्टिमा भूमिः । सैकतिमोऽसिरितिभाष्यप्रामाण्यात्कुट्टिमशब्दः पुंलिङ्गोऽपि । व्यञ्जनैरुपसिक्तं । व्यज्यतेऽनेनेतिव्युत्पत्त्या करणल्युडन्तो व्यञ्जनशब्द इत्यभिप्रायेणाह । दध्यादिरसेति । उपसिक्तमेकीभूतम् । न च यदुपसिक्तान्तरसंसृष्टमिति संसृष्टमित्येव सिद्धे उपसिक्त इत्यस्य वैयर्थ्यमिति वाच्यम् । स्थाल्यामपि सूपादिनासंसृष्टे यमितिव्यवहारादुपसिक्तस्य ततो भेदात् । ननु तत्रच न्चितिसूत्रे वर्त्तत इत्यस्यानुवर्त्तमानत्वे गरूपेऽपि एव प्रत्ययो वाच्यः । हृञ्धातु रकर्मक इति कथमत्र कर्मसामानाधिकरण्यमत आह । सकर्मकेति । फलसमानाधिकरण्यादिति । अभेदेन फलविशेषणत्वादित्यर्थः । फलस्य व्यपदेशिवद्भावेन फलाश्रयत्वात्कर्मत्वम् । अकर्मकत्वव्यवहारस्तु बहिर्भूतकर्मान्वयायोग्यत्वात् । अस्य कर्मत्वे च तद्धितनिर्देश एव प्रमाणम् । वस्तुतोऽस्य प्रथमान्तत्वेऽप्युपपत्तिरित्याशयेनाह । क्रियेत्यादि । परिमुखम् । अपपरी वर्जन इति कर्मप्रवचनीयत्वम् । पञ्चम्यपाङ्परिभिरिति समासः । मुखं वर्जयित्वेत्यर्थः । प्रयच्छति गर्ह्यम् । द्वितीयान्तात्प्रयच्छतीत्यस्मिन्नर्थे प्रत्ययो भवति यद् द्वितीयान्तं पद-

बोध्यन्तद्दर्श्यं चेत्। द्विगुणार्थमिति। अनेनोपचारे बीजनिरूपणं कृतम्। अभिधानस्याभावादिति। यद्यौपचारिकात्प्रत्ययस्तदा गर्ह्यत्वप्रतीतिरन्यथा द्विगुणमर्पयच्छतीत्युक्ते यत्र क्रमेण न्याय्यवृद्ध्योत्तमर्णेनाधमर्णाय तत्तद्द्रव्यं द्विगुणतामापन्नं चापि द्विगुणं प्रयच्छतीति व्यवहारो भवति न च तत्र गर्ह्यत्वमस्ति हिरण्यवृद्धेर्द्वैगुण्येऽपि दीयमानत्वस्य शास्त्रसिद्धत्वादिति भावः। अव्ययादावेवेति। अव्ययपूर्वपदकत्व एवेत्यर्थः। उञ्छति। तदित्येव। द्वितीयासमर्थादुञ्छतीत्यर्थे प्रत्ययो भवति। उञ्छनमत्र भूपतितस्यैकैकस्य ग्रहणम्। भाण्डविशेष इति। एवञ्च दार्दुरिकः कुलाल एव। प्रसिद्धत्वात्। अव्ययीभाव इति। पथ्यानं वर्जयित्वेत्यर्थकम्। तदाहेति। चकारस्य भिन्नक्रमत्वं तिष्ठतीत्येतदनन्तरयोजनया पश्चिमत्स्येतिपूर्वसूत्रस्थस्य ष्ठगित्यस्यार्थस्य समुच्चय इति भाव। मार्थपदार्थमाह। पन्था इति। मथि विलोडन इति धातोः कर्मणि घञ्। मथ्यते गन्तृभिर्य इति विग्रहः। अव्ययीभावेति। स च प्रकृते कण्डकण्डमित्यर्थः। गुणविशेषः। दुःखम्। चरणमत्रासेवा। न तु कारणमात्रम्। तेन य आधर्मिकस्तस्य कदाचिद्धर्मफलकप्रवृत्तौ धार्मिक इति न प्रयोगः। अव्ययीभाव इति। वीप्सायामित्यादिः। निदुक्त इति। तेनादिशब्दरहितमुदाहरणं युक्तम्। समवायशब्दस्य स्वरूपपरत्वे बहुवचनासङ्गतिरत आह। बहुवचनादिति। समवैतीत्यस्य प्रविशतीत्यर्थः। स्वयमपि समूहं प्रविश्य तदवयवो भवतीति यावत्। अत्र समवैतिशब्दार्थघटकीभूता या विशेषणीभूता प्रवेशक्रिया तन्निरूपितकर्मत्वविवक्षयासमवायानिति द्वितीया। यदा त्वधिकरणत्वविवक्षा तदा सप्तमी भवति। धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सव इति यथा। राज्ञायां ललाट। अत्र संज्ञाशब्देन सम्यक्ज्ञायतेऽनयेति व्युत्पत्त्या प्रसिद्धिविषयः शब्द उच्यते। सेवकै एव च लालाटिकशब्दः प्रसिद्धः। यो हि प्रभोर्भालं पश्यति तदाज्ञापालनाय स एवमुच्यते। भिक्षुर्हि पादविक्षेपमात्रयोग्यं देशम्पश्यति न त्वन्यदेशगतस्य प्रदेशान्तरदर्शने अक्षिदर्शनतत्परत्वविघातः स्यात् धर्म्यं शब्द व्याचष्टे। धर्मादनुपेत इति। अनुवृत्तः। बहुकालमारभ्य सुजनैराराधितः सौजन्यं योग्यता। तेन सहिता धर्म्यमित्यत्राप्युपपत्तिः। अवक्रयः अवक्रीयते अनेन अवक्रयः कारये क्रीत्वा एतत्। राज्ञा करत्वेन ग्राह्यं यद्द्रव्यं तदुच्यते। एतच्च कदा-

चित्रजाभ्योऽधिकजिष्टचर्यापि भवतीति धर्म्यान्नेदः । तदस्य पण्यम् । प्रथमासमर्थादस्येतिषष्ठ्यर्थे ठक् । यत्प्रथमासमर्थं पण्यं चेद्भवति । अत्र पण्यशब्दार्थस्य वृत्तावन्तर्भावात्पण्यशब्दस्य प्रयोगो न । प्रसारितं स्थापितम् । वृत्ताविति॥ वस्तुतो दन्त्यमध्यपाठो युक्तः । तथैव तथा दर्शनात् । आयुधमिति । प्रहरणशब्दः करणल्युडन्तः । म्रष्टार्थमिति । ऋस्वोच्चारणेऽपि सवर्णदीर्घेण सिद्धेः । न च यस्येतिलोपापत्तिः । इकारोच्चारणसामर्थ्यात् । यदुक्तं मूले अस्ति परलोक इत्येवं मतिर्यस्येति तन्नाभोपायमाह । वृत्तिविषय इति । अस्तिनास्तिशब्दौ निपातौ व्याख्यानाद्वा विधानसामर्थ्यात्प्रत्ययः । दैवपर्याय इति । दैवान्दिष्टमितिकोशात् । व्याख्यानादिति । दिष्टमितिनिर्देशमूलकव्याख्यानादित्यर्थः । क्रियान्तर्भाव इति । अपूपादिशब्दानां लक्षणाया अनङ्गीकारे अनभिधानादिति । अपूपादिशब्दानां शीलशब्दसामानाधिकरण्येनार्थानभिधायकत्वादित्यपि बोध्यम् । एवं क्रियान्तरान्तर्भावेपि न वृत्तिरभिधानस्वाभाव्यात् । एकमन्यदिति । प्रकृतसूत्रे च प्रत्ययो यत्र परीक्षाकाले विपरीतोच्चारणं तद्विषये एव । न तु अध्ययने जयो वृत्तोस्येत्यादौ । अभिधानलक्षणाः कृत्तद्धितसमासा इत्यभियुक्तोक्तेः । नियुक्तं नियतमिति । स्वानुष्ठेयक्रियाव्यापकदानक्रियाकर्म । श्राणामांसौदनाट्टिठन् । अत्र टो ङीबर्थः । इकार उच्चारणार्थः । नकार आद्युदात्तार्थः । अत एव । विगृहीतस्यापि ग्रहणादेव । ओदन इति । अन्यथा वृद्धेः सिद्धत्वात् । वृद्धिनिमित्तेतिसूत्रस्य ठञि प्रवृत्तिरिति तु न वाच्यम् । कोपधत्वेन प्रतिषेधस्य सिद्धेः । व्याख्यानमेव । हस्त्यादिसम्मतव्याख्यानमेव । अध्यायिनीतिसूत्रे नञ् प्राशस्त्यबोधक इत्याशयेन मूले निषिद्धेति । सन्निवेशपर्यायाविति । प्रस्तारशब्दे प्रे स्त्रोऽयज्ञ इति घञ् । सन्निवेशश्च विलक्षणावयवसम्बन्धस्तत्र व्यवहारासंभवात्तद्विशिष्टपराविमौ । अधिकरणार्थकप्रत्ययान्तौ वा । अत्रैवायमिति । आरण्यकेन भिक्षुणा ग्रामाक्रोशे यस्याव्यमितिशास्त्रन्तदनाद्दत्यनिकटे योऽभ्यासो यो वासस्तत्रैवायं साधुरितिवृत्तिग्रन्थोऽत्र प्रमाणम् ॥

## ॥ इति ठगधिकारः ॥

तद्वहति रथयुगप्रासङ्गम् । द्वितीयान्तेभ्य एभ्यो वहतीत्यर्थे यत्प्रत्ययो भव-

ति। यदुक्तम्मूले वस्तानामित्यादि तत्साभप्रकारमाह। प्रासङ्ग इत्यादि। च- यच रथाङ्ग किन्तु तत्सदृशे काष्ठविशेषे रूढः। उपधाया इतिवर्त्तत इति। तेन भसंज्ञकस्य समुदायस्य या उपधा तस्या दीर्घनिषेधोऽयमिति प्रतिदीव्न इत्यत्र निषेधो न। अन्य इति। अयत्र कित्। किन्तु धुरो यड्ढकजाविति सूत्र पाठ इति तेषामाशयः। एवमधौरेयक इत्येवरूपम्। विकल्पपक्षे आह। मूल- पाठे त्विति। ख: सर्वधुरात् एकधुरादिति सूत्रनिर्दिष्टयोः सर्वधुरैकधुरशब्द योः पूर्वकालैकसर्वजरदितिसूत्रनिष्पन्नसमासरूपत्वे नालौकिकप्रक्रियावाक्ये ऋक्पूरिति सूत्रे णाप्प्रत्ययेऽपि परवल्लिङ्गमिति स्त्रीत्वे प्राप्ते आह। सर्वधुरैव धुराविति। सूत्र इति शेषः। तेन प्रत्ययः सर्वधुराशब्दादेकधुराशब्दाच। सर्व- धुरां वहतीत्येव विग्रहः। तत्र सर्वधुरीणशब्दे यस्येतिलोपेन टापो निवृत्ता- वप्येकधुर इत्यस्य कथं सिद्धिरत आह। अन्तरङ्गानपीत्यादि। टापो लुगिति। लुक्तद्धितलुकीत्यनेनेति शेषः। संज्ञायां जन्या। अत्र जन्या इतिनिपातनेऽपि प्रक्रियामाह। जनीशब्दादिति। अत्र संज्ञायामित्युपात्तम् तत्र कस्य संज्ञेत्या- काङ्क्षायामाह। जन्या मातातुर्वयस्या इत्यादि। एतेन समुदायेन चेत्संज्ञा गम्यत इत्यर्थे इदन्निपातनमित्यर्थादुक्तम्भवति। एतञ्च वृत्तिरीत्या मूले व्याख्या- तम्। भाष्यसम्मतमर्थमाह। भाष्ये त्विति। जनीशब्दादिति। जायतेऽस्यां गर्भ इत्यर्थे जनधातोर्जनिघसिभ्यामिणित्यनेनेण्प्रत्यये जनिवध्योरितिवृद्धेः प्रतिषेधे कृदिकारादिति ङीपि व्युत्पन्नोऽयम्। एतस्माद्वहतीत्यर्थे यत्। ननु निपात नपक्षे समुदायेन चेत्संज्ञा गम्यत इत्यर्थो भवति सम्प्रति त्वन्यथापि प्रयोगः स्यादत आह। रूढिरपीति। योगरूढिरित्यर्थः। सा च रूढिः कोशे प्रतिपादि- तैव। सर्वकालप्रत्ययविध्यर्थमिति। जनीं वहन्ति जन्याः। जनीं वोढारो ज- न्याः। त्रुटि रूपम्। जनीमवाप्य जन्या इति। लुङन्तमेतत्। तथा च योगार्थ- लिङ्गिते रूढिः स्वीकर्त्तव्या न तु केवलरूढिरेवेत्याशयेनाह। एतच्चैतदिति। यदुक्तञ्चरणिकोशे जन्यं निर्वादेतितदुपपत्तिमाह। जनवादे त्विति। कारणमा- त्रोपलक्षणमिति। तदुक्तम्भाष्ये। विध्यत्वकारणेन। विध्यत्यकारणेनेति वक्तव्यम्। धनुषेति ह्युच्यमानेऽतिप्रसङ्गो भवति। इहापि प्रसज्येत शर्कराभिर्विध्यति। तर्हि प्रायस्व वक्तव्यम्। कस्मात् भवति शर्कराभिर्विध्यति कण्टकैर्विध्य

ति। अनभिधानादिति। तदर्गे। कारणाशे। ननु यत्र कारणप्रयोगस्तत्रातिप्रसङ्ग एव्यत आह। चोरमिति। वशङ्गत। वशन वश। इच्छा। एवञ्चेच्छाया इत्यर्थेऽतिप्रसङ्गनिवारणायाह। सर्वस्यापीति। निर्देशादेवेति। पदमितिनिर्देशादित्यर्थ। आवर्हीति। वृह उद्यमने इतिधातोरिन्। दन्त्योष्ठादि। उत्पाटनयोग्या। चैत्र एव शुष्का। ते हि लवनेन सङ्ग्रहीतुमशक्या। मूलेयप्रत्ययश्चेति। तेन धेनुष्याशब्दोऽन्तोदात्त। इतिवदिति। स्वरूपबोधनतात्पर्यकत्वात्। अन्य। सुष्या। नौवयेतिसूत्रे मध्यागमित्यनुवृत्तेराह। मित्र एवेति। अत एव तुल्यशब्द सदृशमात्रे रूढ। धर्मफलन्धर्म्यमिति। सुखादिरित्यर्थ। वधार्ह। अर्हेऽर्थे दण्डादित्वाद्यत्। कर्त्तरि तृतीयेति। मूलेन वणिग्भि पटादिविक्रयकाले दत्तं यन्मूलाख्यन्द्रव्यन्तेनालाभंप्रति यच्छेपो क्रियते लाभाख्यो भाग साऽऽनाय्यशब्देन विवक्षित। आङपूर्वान्नमधातोरत एवनिपातनाण्ण्यत्। अन्यथा पोरदुपधादिति। यत्स्यात्। प्रस्तुतं सीताशब्दं व्याचष्टे। सीतेति। छन्दसोनिर्मिते। छन्द शब्दोऽत्रेच्छापर्याय। प्रीणातीति। सुखञ्जनयतीत्यर्थ। हृदयशब्दात् षष्ठ्यन्तात्प्रिय इत्यर्थे यत्प्रत्यय स्यादित्यर्थ। मतञ्जनहलात्। यथासङ्ख्यमत्र विवक्षितम्। सूत्रवटकाकरणशब्दं व्याचष्टे। ल्युट इति। उभयो। भावकरणयो। मतस्येति कर्मणि षष्ठी। यदा च भावे प्रत्ययस्तदा ज्ञानकर्मिका क्षतिरित्यर्थ। करणे तु ज्ञानकरणमिन्द्रियमित्यर्थ। प्रतिजनादिभ्यइति। अव्ययीभावाभिप्रायेणाह। जनञ्जनमिति। योगविभागी साधकमाह। सर्ववेदेत्यादि। यन्य इति। अचारादिस्तु चकारस्य प्रत्ययद्वयसमुच्चायकत्वात्। दर्शनेन खनावस्यैवानेन विधान स्यादिति योगविभाग आवश्यक इति। समानतीर्थे वासी। सप्तम्यत्र समर्थविभक्ति। ननु प्रत्ययोत्पत्तिकाले समानतीर्थशब्दाभावात्कथमप्रत्ययस्तस्मादत आह। यादिप्रत्ययेति। चातुर्थिका। चतुर्थाध्यायभवा इत्यर्थ॥

॥ इति प्राग्घितीयाः॥

॥ समाप्तश्चतुर्थाध्यायप्रत्ययाः॥

ति। अनभिधानादिति । तदंशे । कारणांशे । ननु यत्र कारणप्रयोगस्तत्रातिप्रसङ्ग इत्यत आह। चोरमिति। वग्नङ्गत । वग्नन वग्न । इच्छा। एतच्छेच्छाग्रास इत्यर्थेऽतिप्रसङ्गनिवारणायाह। सर्वस्यापीति। निर्देशादेवेति। पदमितिनिर्देशादित्यर्थः । आवर्हीति। वृह उद्यमन इतिधातोरिन्। दन्त्योष्ठ्यादि। उत्पाटनयोग्या । चैत्र एव शुष्का । ते हि लवनेन सङ्ग्रहीतुमशक्या। । मूले यप्रत्ययश्चेति। तेन धेनुष्याशब्दोऽन्तोदात्त । इतिवदिति। स्वरूपबोधनतात्पर्यकत्वात्। अन्ये। मुख्या । नौवयेतिसूत्रे सञ्ज्ञायामित्यनुवृत्तेराह। मित्र एवेति। अत एव तुल्यशब्द सदृशमात्रे रूढ । धर्मफलन्धर्म्यमिति। सुखादिरित्यर्थः। यथाह । अर्हेऽर्थे दण्डादित्वाद्यत्। कर्त्तरि तृतीयेति । मूलेन वणिग्भिघटादिविक्रयकाले दत्तं यन्मूलाख्यन्द्रव्यन्तेनात्मानम्प्रति यत्स्वपी क्रियते लाभाख्यो भाग सोऽस्त्वागाम्यशब्देन विवक्षित । आङपूर्वात्समधातोरत एवनिपातनाण्णत्वत्। अन्यथा पोरदुपधादिति। यस्मात् प्रस्तुतं सीताशब्दं व्याचष्टे । सीतेति। छन्दसोनिर्मिते। छन्द शब्दोऽत्रेच्छापर्याय । प्रीणातीति। सुखञ्जनयतीत्यर्थ । हृदयशब्दात् पञ्चम्यन्तात्प्रिय इत्यर्थे यप्रत्यय स्यादित्यर्थः। मतञ्जनहलात् । यथासङ्ख्यमत्र विवक्षितम्। सूत्रवटकाकरणशब्दं व्याचष्टे । ल्युट इति। उभयो । भावकरणयो मतस्येति कर्मणि षष्ठी। यदा च भावे प्रत्ययस्तदा ज्ञानकर्मिका कृतिरित्यर्थ । करणे तु ज्ञानकरणमिन्द्रियमात्मत्वम् । प्रतिजनादिभ्यइति । अव्ययीभावाभिप्रायेणाह। जनञ्जनमिति । योगविभागे साधकमाह। सर्ववेदेत्यादि। अन्य इति । अन्यादस्तु चकारस्य प्रत्ययद्वयसमुच्चायकत्वात्वा दर्शनेन स्वमात्रस्येशानेन विधान स्यादिति योगविभाग आवश्यक इति। समानतीर्थे वासी । सप्तम्यत्र समर्थविभक्ति'। ननु प्रत्ययोत्पत्तिकाले समानतीर्थशब्दाभावात्कथम्प्रत्ययस्तस्मादत आह । यादिप्रत्ययेति। चातुर्थिका । चतुर्थाध्यायभवा इत्यर्थः॥

॥ इति प्राग्घितीयाः ॥

॥ समाप्तश्चतुर्थाध्यायप्रत्ययाः ॥

प्राक्क्रीताच्छ.। व्याख्यानत इति। अत्र भाष्ये प्राक्क्रीतादिति न वाचन्धाधिकार एव कर्त्तव्य इत्यभिप्रायेण प्राग्वचनद्विमरोमिति गद्धादृत्वा प्राग्वचने उक्तद्विमुक्तम्। सक्षद्विधानार्थम्। अधिकारात्सिद्धमिति चेदपवादविषयेऽप्रसङ्ग इत्युक्तम्। सहद्विधानार्थमित्यस्य प्राक्क्रीताद् येऽर्थास्तेषु सहदेवानेन छविधानार्थमित्यर्थः। अपवादविषय इत्यस्य उगवादिभ्यो यदितियद्विषयेऽपि छः प्राप्नोतीत्यर्थः। ततः पुनरस्य क्रियमाणेऽपि प्राग्वचने कथमिदं विज्ञायते प्राक्क्रीताद्याः प्रकृतय आहो स्वित् प्राक्क्रीताद्येऽर्था इति। किञ्चातः। यदि विज्ञायते प्राक् क्रीताद्याः प्रकृतय इति स एव दोषः अपवादविषये प्रसङ्ग इति। अथ विज्ञायते प्राक् क्रीताद्येऽर्था इति न दोषो भवति। समानेऽर्थे प्रकृतिविशेषादुत्पद्यमानो यच्छं बाधिष्यते। यथा न दोषस्तथास्तु प्राक् क्रीताद्येऽर्था इति विज्ञायत इत्युक्तन्तन्मूलकव्याख्यानत इत्यर्थः। अर्थबोधके प्वेवेति। अर्थबोधनतात्पर्यकेषु तस्मै हितमित्यादिषु। अवध्यवधिमतोः साजात्यात्। अलोन्त्योत्पूर्वउपधेत्यत्र यथा। लोकेऽपि फाल्गुनात्प्राक्। वनात्प्राक् देवदत्तो गत इत्युक्ते माघमासान्तकालस्य वनपूर्वदेशस्यैव चप्रतीतिर्न तु वैपरीत्येनेति सुप्रसिद्धम्। एतेन। अर्थस्यावधित्वस्वीकारेण। इत्युक्तमिति। विशिष्य यदाद्यपवादविधायकसूत्रेषु छयतोः सम्बन्धाभावादेवं कथनन्न युक्तम्। उगवादिभ्य इत्यादिसूत्रे ष्वपि सम्बन्धे हि तत्र तथा लेख उचित इति तेषाभावः। अयास्तमिति। अर्थस्यावधित्वस्वीकारेण भवदुक्तदूषणस्यानवसरात्। ननु नभ्यचक्रमित्ययुक्तम्। चक्रस्य नाभिहितत्वाभावादत आह। नभ्यचक्रमिति। इवार्थमुपपादयति॥ सच्छिद्र इति। अष्टभाष्य इति। अथ यो नभ्यार्थो हचः कथन्तत्र भवितव्यम्। नभ्यो हच. नभ्या शिंशपेति। तादर्थ्यात्ताच्छब्द्यम्भविष्यति नभ्यार्थो नभ्य इति। नाभि नभञ्चेति गवाद्यन्तर्गणसूत्रमेव भाष्ये व्याख्यातम्। भाष्योक्तमप्यन्तर्गणसूत्रमाह। सूत्रे शुन इति। नस्तद्धित इति टिलोपवारणायाह। चेनेति। यद्यपि सम्प्रसारणोत्तरं श अन् य इतिस्थिते यार्यादाद्गुमितिन्यायेन प्राप्तस्य टिलोपस्य ये चाभावकर्मणोरिति प्रकृतिभावेन बाधे सति तत. पूर्वरूपोत्तरम्पुनष्टिलोपो भ्रष्टावसरत्वान्न भविष्यतीति वयवकारेण तद्विधानम्। तथापि तौ सदितिनिर्देशेन भ्रष्टावसरन्यायोऽत्र शास्त्रे ना

श्रीयत इति चकारस्य प्रकृतिभावसमुच्चायकत्वमावश्यकमिति । गणसूत्रान्तर मेवाह सूत्रे । ऊधसोऽनङ्चेति । विभाषा हविरपूपादिभ्य । अत्र सूत्रे हविःश ब्देन विशेषणाद् ग्रहणात्तद्विषयशब्दस्य कथं सिद्धिरत आह । अपि शब्द इति । नन्वपूपशब्दग्राह्यपर्यायहवि शब्देनापि स्वरूपग्रहणमेव भविष्यति । एवं सति स्व- रूपमिति शास्त्रस्याप्यनुग्रहो भविष्यतीत्यत आह । विभाषा हविरित्यत्र त्वि ति । अयमाव. । उगवादिभ्यो यदिति सूत्रे हविरपूपादिभ्यो विभाषाया यत् । हविरपूपादिभ्यो विभाषाया यद्भवति पूर्वविप्रतिषेधेन । हविरपूपादिभ्यो वि भाषाया अवकाश । आमिक्ष्यम् । आमिक्षीयम् । यतोऽवकाश शङ्कव्यन्दारु । पिच्चव्य कार्पास । इहोभयमाप्नोति । चरव्यास्तण्डुला । यद् भवति पूर्वविप्र तिषेधेनेति भाष्ये उक्तम् । तेन स्वरूपविधिस्तदंशे न भवतीति । चरव्या इत्यत्र चर्वधिकरणक हविरुपचाराच्चरुशब्देनाभिधीयते । खलयवमाष । व्याख्याना दिति । भाष्यसम्मतव्याख्यानादित्यर्थः । तत्र हि समानार्थावेतौ नृपशब्दो नृप नृशब्दश्च । ब्रह्मन्शब्दो ब्राह्मणशब्दश्च । तत्र द्वयो शब्दयो समानार्थयोरेकेन विग्रह अपरस्मादुत्पत्तिर्भविष्यति । अविरविकन्यायेन नृभ्यो हितमिति विग्र- ह्य नृप्यमिति भविष्यति नृणां हितमिति विग्रह्य वाक्यमेव । ब्रह्मणे हितमिति विग्रह्य ब्रह्मण्यमिति भविष्यति । ब्राह्मणेभ्यो हितमिति विग्रह्य वाक्यमेवभवि ष्यतीत्युक्तम् । आत्मन्विश्वजन । व्याख्यानादिति । आत्मन्विश्वजनशब्दाभ्य- भोगोत्तरपदाच्च प्रातिपदिकात्तस्मै हितमित्यर्थे ख प्रत्ययो भवतीति वृत्तिसम्म तव्याख्यानादित्यर्थ । भोगशब्दस्य शरीरवाचकत्वे मानमाह । अश्विरिति । कर्मधारयादेवेतीति । सर्वसमासेभ्योऽस्यानारब्धत्वात् । रथकारपञ्चमेष्विति । रथकार पञ्चमो येषान्तेषु चतुर्षु ब्राह्मणादिष्वित्यर्थः, रथकारश्च माहिष्येण करण्यान्तु रथकार प्रजायत इत्यत्र प्रसिद्ध राजन्याद्वैश्यायामुत्पन्नो माहिष्य । वैश्याच्छूद्रायामुत्पन्ना कन्या करणी । पुरुषाद्वधविकारसमूहतेनकृतेष्विति त्रि त्विकै निपातनात्तृतीयाया अलुक् । सामर्थ्यादिति । वधादिभिरन्वययोग्य तावत्त्वादित्यर्थः । तेनेति निर्दिष्टेष । दतीया निर्दिष्टैव । तदर्थं विकृते प्रकृ तौ । अत्र तदर्थमिति सामान्ये नपुंसकम् । प्रत्ययो बहुत्वमिति साम्या प्रथ मा । ---- उपादानकारणनाशेऽपि तरावस्थाविशिष्टं वस्तु विकृतिरित्युच्यते ।

तदिति सर्वनाम्ना विकृतिः प्रत्यवमृश्यते । प्रकृतेस्तदर्थत्वकथनेनानन्यार्थत्वं लभ्यते विशेषणसामर्थ्यात्तेन न प्रकृतेर्विकृत्यर्थत्वसम्भावना यत्र तत्र प्रत्ययः किन्तु तदर्थत्वनिश्चय एव तत्रैवानेन सूत्रेण प्रत्ययः । अस्य । विकृतिवाचकशब्दस्य । न प्रथमत्वम् । न सूत्रोच्चारितप्रथमशब्दबोध्यत्वम् । अर्थग्रहणसामर्थ्यादिति । तस्यापत्यमित्यादौ तथैव दर्शनादिति भावः । स्पष्टार्थमिति । हितशब्दस्याप्यनुवृत्त्या विकृतये हिता या प्रकृतिरित्यनेन तदर्थत्वलाभेऽपि पूर्वोक्तनिश्चयस्य स्पष्टतया लाभार्थं तदर्थग्रहणमित्यर्थः । सक्तुभ्यो यवा इत्यत्र तु न । सक्तूनां यवविकृतित्वाभावात् । किन्तु धानाविकृतित्वमेव । सूत्रे उभयोपादानसामर्थ्याद्यत्र परस्परं प्रकृतिविकृतिभावस्तत्रैवायम्प्रत्ययः । तेन यत्रास्यर्थं चर्मोपादीयते तत्र न असेरयोविकारत्वान्न तु चर्मणः । चर्मणस्तु कोशप्रकृतित्वम् । छदिरुपधिबलेः । सोत्र समाहारद्वन्द्वस्य पुंस्त्वम् । बलिशब्दोऽत्रोपहारपरः । करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियामित्यमरः । यथाकथञ्चिदिति । नह्यत्र तदुत्पत्तिप्रयोजकत्वाश्रयप्रतियोगित्वरूपस्य प्रकृतित्वस्य स्वरसतः प्रतीतिरिति भावः । धार्षभ्य इत्यत्राप्येवमिति । यथाकथञ्चिदेव । यस्योत्पत्तेः प्राक्काले सत्त्वे, सति तत्सम्पादकत्वं तत्रैव प्रकृतित्वव्यवहारस्य सुप्रसिद्धत्वात् । अत एव भाष्ये प्रकृतसूत्रे प्रकृतिविकृतिग्रहणं निवर्त्स्यति तच्चावश्यं निरस्यम् । इहार्थमुत्तरार्थञ्च । इहार्थं तावत् । शालेयास्तण्डुलाः । उत्तरार्थम् । ऋषभोपानहोर्ञ्यः । आर्षभ्यो वत्स इति । गुणान्तरयुक्ता हि तण्डुला शालेयाः । गुणान्तरयुक्तश्च वत्स आर्षभ्य इति प्रतिपादितम् । तत्रैव कैयटः । गुणान्तरयुक्ता हीति । यस्यामवस्थायां यो गुणः सन्निवेशलक्षणो लाक्षादिकृतलौहित्यादिलक्षणो वा तदपेक्षयाप्राप्तगुणयुक्ता इत्यर्थः । गुणान्तरयुक्तश्च वत्स इति । सुजातावयवः संहननवान्महाप्राण ऋषभावस्थाप्राप्तये यदा परिपोष्यते न तु दानविक्रयार्थस्तदा तादर्थ्यस्य सम्भव इति । मूले उपधिशब्दात्स्वार्थे इत्यत इति । उपपूर्वाद्धाञ उपसर्गे घोः किः । अत्र भाष्ये उपध्यर्थमितिप्रत्ययानुपपत्तिः उपध्यभावात् । उपध्यर्थमितिप्रत्ययस्येहानुपपत्तिः । किं कारणम् । उपध्यभावात् । विकृतेः प्रकृतावभिधेयायाम्प्रत्ययेन भवितव्यम् । न चा [illegible] विकृतेः प्रकृतिरस्ति । यदि तद्रथाङ्गं सौपधेयमित्युच्यते । भिद्यतु [illegible] स्वार्थेऽभिधानात् । सिद्धमेतत् । कथम् । [illegible] स्वा-

थेऽन्यवकाश्य ।उपधीयते उपधेयम् ।उपधेयमेवौपधेयमित्युक्तम् ।अजपेत्तयेति । पूर्वविप्रतिषेधे प्रमाणन्तु उगवादिभ्य इतिसूत्रस्थं यजजाग्रवज पूर्वविप्रतिषिद्धमितिवार्त्तिकमेव । यतोऽवकाश । गव्यन्दारु । पिचव्य कर्पास । अनोऽवकाश । वार्धम् । वारत्रयमे । सनद्ध नाम चर्मविकारस्तस्मादुभयमाप्नोति । सनद्धयं चर्म । जाश्यावकाश । औपानयन्दारु भज स एव । उपानवाम च र्मविकार तस्मादुभयमाप्नोति । औपानह्यचर्म इति । तदस्य तदस्मिन्स्यादिति । अत्र वाक्यद्वयम् । तदस्य स्यादिति । तदस्मिन्स्यादिति च । आद्ये तदिति प्रथमासमर्थविभक्ति । षष्ठ्यर्थे च प्रत्यय । द्वितीये सप्तम्यर्थे । स्यादित्यनेन सम्भावितैककर्तृका सत्ता उच्यते । सूत्रेऽस्येत्येकवचनमविवक्षितम् । अतएवासामिति बहुवचनोपादानं मूले सङ्गच्छते।इष्टकानामा विक्ष द्दृष्ट्वा प्राकारस्य ताभि साध्यता ज्ञात्वा एवमुच्यते । सम्भावने लिङ् । देशस्य च दार्व्यसमत्वोदत्वादिसद्गुणवत्तान्दृष्ट्वा प्रासादोऽस्मिन्स्यादिति सम्भावना भवति । नेह प्रकृतिविकृतिभावोऽविवक्षित । लौकिकीं विवक्षामिति । एतेनैवेतिकरणेन सर्वदोषपरिहारसम्भवात्स्यादितिसम्भावनाविषयसत्ताप्रत्ययार्थमत्र सूत्रे न वाच्यमिति ध्वनितम् ॥

## ॥ इति छयदधिकारः ॥

चार्हादिभ्य साधुत्वायाह । अत्रार्हतीति। एतेनाचाडा अर्हशब्दस्य समास । अर्हशब्दस्य तदर्हमित्यत्र निर्दिष्टोऽचप्रत्ययान्तोऽपीति तस्याप्यवधित्वमितिशङ्काया नावकाश । व्याख्यानादिति । इत्यादिसमतया व्यानादित्यर्थ । प्रकृतसूत्रे परिमाणशब्दउपात्तस्य यदिपरिच्छेदकमात्रपरस्तदा परिमाणग्रहणेन सिद्धे सङ्ख्याग्रहणवैयर्थ्यापत्तिरतो भाष्ये परिमाणस्य सङ्ख्यातो भेद प्रदर्शित उर्ध्वमानमित्यादिना । एवञ्चोन्मानस्य परिमाणशब्देन ग्रहणन्न प्राप्नोतीत्याशङ्का समाधत्ते । यद्यपीत्यादिना । ऊर्ध्वं यदिति । यत्र यदितिवैनेत्यर्थकमव्ययम् । ऊर्ध्वं येन मीयत इत्यर्थ । परिच्छेदकेन पाषाणादिना तुलादौ स्थापनेनेत्तर परिच्छेद्यपरिच्छेदकयोरूर्ध्वाधरभावेन यद्गमनन्तदुन्मानमुन्मितिस्तत्करणमुन्मानम् । परिमाणन्तु सर्वत । आरोहपरिणाहाभ्या येन मीयते तत्परिमाण

म्। आरोह उच्छ्रायः। परिणाहो विस्तारः। आभ्यां स्वस्मिन् वर्त्तमानाभ्यां येन काष्ठादिनिर्मितेनाढककुडवादिना प्रस्थादिना च मीयते तत्प्रस्थादि परिमाणशब्देनोच्यते। आयामस्त्विति। आयामो दैर्घ्यम्। आयाम इत्यस्य येन मीयत इति शेषः। वस्त्रकाष्ठादिगतन्दैर्घ्यं येन मीयते हस्तादिना तत्प्रमाणमित्यर्थः। तत्र दीर्घस्य वस्त्रादेः परिच्छेदकं यद्यप्यूर्ध्वाधरदिक्प्रवेशं यज्जलमित्यादि तत्परिच्छेदकमत एव जानुदघ्नं जलमित्यादौ प्रमाणे द्वयसज्दघ्नञिति प्रत्ययसिद्धिः। सङ्ख्या बाह्या तु सर्वतः। सङ्ख्या एकत्वद्वित्वादि सर्वतः सर्वस्माद्बाह्या विलक्षणा। पूर्वोक्तपरिच्छेदकेभ्यो विलक्षणा। ऊर्ध्वमानादिकन्न करोति। उन्मानादेरपि परिच्छेदङ्करोति। द्वे तुले इत्यादिव्यवहारात्। एवञ्च सङ्ख्यायाः परिमाणापेक्षया विलक्षणत्वात्प्रकृतसूत्रे ग्रहणम्। तदुक्तं भाष्ये। भेदमात्रं ब्रवीत्येषा नैषा मानं कुतश्चन। एवञ्च कृत्वा सङ्ख्यायाः पृथग्ग्रहणं क्रियत इति। कुतश्चनेत्यस्य न कुतश्चित्सन्निवेशादेः सङ्ख्या मानम्। सन्निवेशादिनिरपेक्षम्मानमित्यर्थः। अत एव द्वौ मेरुसर्षपाविति भवति। सूत्रस्थभाष्यस्वरस इति। तत्र हि असमास इति किमर्थम्। परमनिष्केण क्रीतम्परमनैष्किकमिति प्रत्युदाहृतम्। तत्र कैयटः। ठञेवात्र भवति। निष्कशब्दस्य परिमाणवाचित्वात् पूर्वेणाप्राप्तेऽनेन ठञ्विधीयत इति। एवञ्च निष्कस्योन्मानत्वेन तत्र पर्युदासपरभाष्यप्रामाण्येनोन्मानस्यापि तत्र ग्रहणम्। परिमाणान्तस्येत्युत्तरपदवृद्धिः। शाणपर्युदासात्तत्राप्युन्मानं परिमाणपदेन गृह्यते। यस्मिन्सूत्रे यस्य पदस्य स्थितिस्ततोऽग्रिमसूत्रे संबन्धे सति तत्रानुवर्त्तत इति व्यवहार इत्यतः सप्तदशेत्यनुपपन्नमत आह। सप्तदशेति। एतेन। उक्तार्थेन। सङ्ख्याया इत्यस्यानुवृत्तिरुक्तेति। तदनुवृत्तौ तस्मादित्युत्तरस्येत्यनेनोत्तरत्वस्य लाभो भवतीत्येतदर्थमुत्तरपदस्येति प्रकृते नानुवर्त्तनीयम्। तथा च कथम्परमनैष्किकमित्यत्र वृद्धिरिति भावः। वाक्यभेदेनेति। सङ्ख्याया इति पञ्चमीनिर्देशादुत्तरस्येत्युपस्थितम्। आदेः परस्येतिपरिभाषा चोपस्थिता। तदपेक्षयापरिमाणान्तस्येत्यवयवषष्ठी। एवञ्च परिमाणान्तावयवस्य सङ्ख्याया उत्तरस्यादेरचो वृद्धिरित्यर्थः। असङ्ख्यापूर्वपदकेऽपि वृद्धेः प्रसक्त्यर्थं परिमाणान्तस्येतिपृथग्वृद्धिविधायकम्। तस्य च परिमाणान्तस्याचामादेरचो वृद्धिरित्यर्थः। अत एव। वाक्यभेदस्वीकारा-

देव। परिमाणान्तस्येत्यनेनाप्युत्तरपदस्यैव वृद्धिविधानमित्यत्र साधकमाह।
संज्ञायां इत्येतदिति। साहचर्यादिति। आरम्भसामर्थ्यादित्यपि बोध्यम्। स
ञ्ज्ञायामिति। असञ्ज्ञेति तत्र पर्युदासस्य प्राप्तेरिति भावः। ज्ञापकपरेति। स
म्वत्सरशब्दस्य ज्ञापकपरेत्यर्थः। एतेन। वक्ष्यमाणप्रकारेण। अपरिमाणत्वादि
ति। निष्कमस्त्राधिके स्वर्णशते दीनारकर्षयोः। वक्षोऽलङ्करणे हेमपात्रे हेमप
लेऽपि चेतिकोशात्। इदम्। परिमाणशब्देनोन्मानस्यापि ग्रहणम्। ज्ञापिते
त्विति। तदन्तविधौ ज्ञापिते त्वित्यर्थः। अत्र भाष्यं वचनन्तु एतत्प्रकरणस्थम्
कीयप्रकृतिशब्दस्तदन्तस्यापि बोधक इति। फलम्पूर्वत्रेत्याशयेन मूले पूर्वत्रेत्यु
क्तम्। तन्निषेधः स्यात्। तदन्तविधिनिषेधः स्यात्। इत्यस्यापीति। अन्यथा त
तदन्तविधौ गोशब्दान्ताद्विधीयमानो यत्केवलगोशब्दान्न स्यात्। प्रत्ययविधि
विषयेण व्यपदेशिवद्भावोऽप्रातिपदिकेनेत्यनेन निषेधात्। सिद्धान्तरीत्याह। व्य-
पदेशिवद्भाव इति। न तावदेवेति। द्वाभ्यां शूर्पाभ्यां क्रीतेतिलौकिकविग्रहसू
चिता। ननु पूर्वपदवृद्धिमादाय भविष्यतीत्यत आह। पूर्वपदस्येति। उत्तरसू
त्रेति। सङ्ख्याया अतीतिसूत्रेत्यर्थः। असम्भवात्। शतस्याशते वृत्त्यसम्भवात्।
एकस्मिञ्छतेऽभिधेय इत्यर्थः प्रत्ययार्थविशेषणत्वे। निषेध इति तु फलितार्थकथ
नन्तदाह इष्यत इति। शतम्परिमाणमस्येत्यादौ सङ्घस्यैवावाचकाप्रत्ययः। यः
सङ्घः प्रत्ययार्थः स वस्तुत एकस्मान्न भिद्यत इत्यर्थः। सङ्ख्याया संवत्सरसङ्ख्यसूत्रे
तिसूत्रेण कन्। शत्यं शाटकशतमिति। अत्र प्रकृत्यर्थत्वमन्यस्य सङ्घेयस्य प्रत्यया
र्थत्वमन्यस्येति स्पष्टमेव। यत्र निषेधस्तत्र तु यस्य परिमाणपदेन ग्रहणन्तदन्या-
न्यप्रत्ययार्थादित्यर्थः। लुगन्तेति। सङ्ख्याया अतीतिसूत्रेण जातस्य कनोऽध्य
र्धपूर्वेति लुक् तदन्तेत्यर्थः। द्वन्द्वगर्भेति। त्रिंश च शतं त्रिंशती। तावन्तौ यस्य सा त्रिंश
दन्ता न त्रिंशदन्ता अत्रिंशदन्ता सा सङ्ख्या प्रकृतित्वेनाश्रीयत इत्यर्थः। प्रत्यय
ग्रहणपरिभाषयैव सिद्धेऽन्तग्रहणस्य प्रयोजनमाह। अन्तग्रहणमिति। न स्यादिति।
एकसप्ततिशब्दस्य न तिप्रत्ययान्तत्वमिति भावः। वतोरिड्वा। बहुगणेतिसूत्रेण
वत्वन्तस्य सङ्ख्यासंज्ञा। व्याख्यानादिति। वतोरिति पञ्चमीनिर्देशात्कन् इ-
तिप्रथमाया। षष्ठ्यन्तत्वमित्यर्थप्रतिपादनपरभाष्यकारीयवचनप्रामाण्यादित्यर्थः।
किञ्च चरेट इतिवदिट्प्रत्ययविधानेनैव सिद्धे प्रत्ययाधिकारापठितिट्शब्दसहग

शब्दोच्चारणेनागमत्वमनुमीयते । अन्यथा । योगविभागाभावे । नासामर्थ्यमिति । न प्रत्ययेनासामर्थ्यमित्यर्थः । समानाधिकरणसमास एवेति । समानाधिकरणपदकसमास एवेत्यर्थः । तेन षष्ठीसमासेन विग्रहे ततो जातस्य प्रत्ययस्य न लुक् । इति शेष इति । तदुक्तं भाष्ये । द्विगोर्लुकि तन्निमित्तग्रहणं कर्त्तव्यम् । द्विगोर्निमित्तं यस्तद्धितस्तस्य लुग्भवतीति वक्तव्यम् । इह मा भूत् । द्वाभ्यां शूर्पाभ्यां क्रीतम् । द्विशूर्पम् । द्विशूर्पेण क्रीतं द्विशौर्पिकमिति । ननु यदि तन्निमित्तग्रहणं क्रियते समाहारद्विगौ परस्य लुग्न प्राप्नोतीत्यत आह । समाहारद्विगोरिति । अनभिधानादिति । तदुक्तं भाष्ये । इष्टमेवास्माभिस्तच्छब्दः साध्यम् । द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पमिति । द्विशूर्प्यां क्रीतमिति । तत्र द्वयोः शब्दयोरेकेन विग्रहः अपरस्मादुत्पत्तिर्भविष्यति अविरविकन्यायेन । द्वाभ्यां शूर्पाभ्यां क्रीतमितिविग्रहे द्विशूर्पमिति भविष्यति । द्विशूर्प्यां क्रीतमितिविग्रहे वाक्यमेवेति । इदम् । असंज्ञायामित्येतत् । आदेशस्येति । प्रत्यादेशस्येत्यर्थः । द्वित्रिपूर्वान्निष्कात् । अत एव । स्पष्टप्रतिपत्त्यर्थत्वादेव । न तु पूर्वशब्दोऽनाव्यास्यादिवारकः पञ्चमीनिर्देशादेव पूर्वशब्दार्थलाभात् । भाष्ये उक्तम् । तत्र हि द्वित्रिभ्यान्द्वैयोग्यम् । द्वित्रिभ्यामिति यदुच्यते तद्द्वैयोग्यमिति द्रष्टव्यम् । किमिदन्द्वैयोग्यमिति द्वयोर्योगयोर्भवम् द्वियोगम् । द्वियोगस्य भावो द्वैयोग्यमिति । एतेन द्वित्रिभ्यामित्यस्योभयशेषत्वमित्युक्तम् न च द्वित्रिभ्यामित्यस्याद्य पूर्वयोगस्यच्छेषत्वमनेन प्रतिपाद्यत इति वाच्यम् । तद्धेषं विजानीयात् अविशेषेणेत उत्तरन्द्वित्रिभ्यामिति तदाचार्यः सुहृद्भूत्वान्वाचष्टे द्वित्रिभ्यान्द्वैयोग्यमिति भाष्यकृतैव विस्तादिति सूत्रशेषत्वस्य बोधनात् । इदम् । बहुपूर्वादिति यत् । तदुक्तं द्वित्रिभ्यामिति पूर्वसूत्रे । बहुग्रहणं कर्त्तव्यम् । बहुनिष्कम् । बहुनैष्किकम् । बहुबिस्तम् । बहुबैस्तिकमिति । न सम्बध्यत इति । एतद्बीजमुक्तमेव । स्पष्टार्थत्वमुपपादयति । कन्प्रत्यय इति । इष्टासिद्धेरिति । इकन्प्रत्ययपक्षे पुंवद्भावे यस्येतिलोपे खारिक इति कन्पक्षे तु खारीक इति भविष्यतीतीष्टासिद्धिरित्यर्थः । द्रव्यमेव गृह्यत इति । एवञ्च द्रव्यत्वावच्छिन्नान्वितेऽपिदानीं तत्पदमङ्गशाद्यविशेषधर्मावच्छिन्नान्वये बाधकाभावः । द्रव्यवान् घटवानितिवत् । प्रकृतसूत्रान्वयासिद्धिप्रसङ्गादिति । सोऽस्याशेति । धनपतिसंयोग इतीति । धनपतेः संयोगो धनपतिसंयोगः । प्रसु

ज्यतेऽनेनेति संयोग । यागादिश्च संयोगपदेन विवक्षित । संयोगपदार्थघटक-
युज्धात्वर्थक्रियायामन्वयतेरिति षष्ठ्यर्थकर्तृत्वस्यान्वयस्तदेतद्बोधयितुमाह ।
संयुज्यन्त इति । दीयत इत्यस्य पृथगन्वये साहित्याभावाद्द्यादीनाञ्छो
न प्राप्नोतीत्यत आह । द्वन्द्वश्चेति । रथानिर्वेश इत्यत्र रथाया निर्वेश इति ष
ष्ठीसमास । वाक्यघटकषष्ठ्या निमित्तनिमित्तिभावार्थकतया समासस्य तादृशस-
म्बन्धविशिष्टेऽर्थे शक्तिस्तदभिप्रायेणाह । रथानिमित्तेति । निर्वेशो भृतिभोग
योरित्यमर । अत्र मानमिति । रूढस्यैवात्र ग्रहणमित्यत्र मानमित्यर्थ । यत्तु
प्रकृतसूत्रेऽर्धशब्दो भागवाचकस्तस्मात् तदा भागस्यावयविसापेक्षत्वादसामर्थ्ये-
न प्रत्ययो न भविष्यतीत्यतोऽत्र सूत्रे रूढस्यैव ग्रहणमिति मतन्तद् दूषयति।असा-
मर्थ्ये त्विति।नित्यसापेक्षत्वम्दर्शयति । अर्धमित्युक्त इति । भारभूतत्वमिति। अ
त्र भारशब्दो भावप्रधान. । भूत इत्यत्र भूप्राप्तावितिधातो. कर्त्तरि क्त । एवञ्च
भारत्वम्प्राप्त इत्यर्थ. । तत्र भारभूतत्वमर्थोनात्र तु शब्दानामितिवाच्यम्भारभूते-
भ्यो वंशादिभ्य इतीत्यत आह । वंशादिशब्दानामिति । एतद्व्याख्यापक्षे समासव
चनकत्वन्तर्हि स्यादत आह । सौत्रमिति । एवञ्च ष्यत्ययो बहुलमित्यनेनास्य
सिद्धिरिति भाव । हरति । देशान्तरम्प्रापयति चोरयतीति वा । वहति । उ
त्क्षिप्य धारयति । आवहति । उत्पादयतीत्यर्थः।आद्यव्याख्यानमेवेति । द्वितीय
व्याख्याने भारादित्येकवचनार्थस्य सर्वथा बाध एव भवति । एवं भारभूतेभ्य इ
त्यस्य गुरुत्ववन्त इत्यर्थो वाच्यः। एवञ्च वंशादीनां भारभूतत्वाव्यभिचाराद्वंशा
दिभ्य इत्येतद्विशेषणतया तस्योपादानस्य व्यर्थत्वापत्तिरेवेति भाव. । ऐज् नेति।
ऐचो निषेधसन्नियोगशिष्टत्वात् । लुगभावमुपपादयति । अन्यतरस्यामित्यादि ।
गाढकाचितेत्यत. । पुन. खग्रहणादिति । यदि सतोऽन्यतरस्यामित्यस्यानुवृत्ति
स्यात्तदा खस्यापि तत एवानुवृत्त्या विधौ सिद्धे प्रकृतसूत्रस्य खग्रहणं व्यर्थं स्या
त् । अत एव । अन्यतरस्यांग्रहणानुवृत्तेः सूत्रकारासम्मतत्वादेव । उत्तरेण । स
ङ्ख्याया सङ्घेत्यनेन । ध्वनितमिति। अत्र हि तदस्य परिमाणं सङ्ख्यायाः सञ्ज्ञासं
घसूत्राध्ययनेष्विति पठित्वा सङ्ख्यावाचकेभ्य. प्रत्ययानुदाहृत्यान्येभ्योऽपि दृश्यते
इत्यताद्यर्थम् । खारशतिको राशि । खारसहस्रिको राशिरित्युदाहृतत्वेन
ध्वनितमित्यर्थ । वार्त्तिकवचनप्रामाण्यादकारान्तोऽपि खारशब्दोऽस्तीपरिच्छे

दकमात्रमिति । अत्र मात्रपदेन पारिभाषिकस्यैव ग्रहणमिति नियमव्यवच्छेद । अनभिधानादिति । अत्रैव भाष्ये सङ्ख्यादिष्वर्थेषु यथा प्रत्यय इष्यते तथाऽन्यत्रापि प्रत्ययसिध्यर्थं जीवितपरिमाणे चोपसङ्ख्यानं कर्तव्यम् । षष्टिर्जीवितपरिमाणमस्य षाष्टिक । साप्ततिक । जीवितपरिमाणे चेत्यनर्थकम् । कालादितिसिद्धत्वात् । जीवितपरिमाणे चेत्यनर्थकं वचनम् । किंकारणम् । कालादितिसिद्धत्वात् । कालादित्येव सिद्धम् । इह यस्य षष्टिर्जीवितपरिमाणम् । षष्टिमसौ भृतो भवति तत्र तमधीष्टो भृतो भूतो भावीत्येव सिद्धम् । अवश्यश्चैतदेव विज्ञेयम् । इह वचने हि लुक् प्रसङ्ग । इह हि क्रियमाणे लुक प्रसज्येत । द्विषाष्टिक । त्रिषाष्टिक । अनेन सति लुग्भवति । तेन सति कस्मान्न भवति । आर्हादित्युच्यते इत्युक्तम् । एतेन भाष्यग्रन्थेन द्विषाष्टिक इत्यादौ लुगभाव एवेष्ट इति लभ्यते । यदि च द्विषष्टिशब्दादपि तमधीष्ट इति प्रत्यय स्यात्तदा लुक स्यादेवेत्यनभिधानभाष्यप्रामाण्याद्विनिर्णीयत इति । ननु समुदायस्य कथङ्कालवाचकत्वमत आह । कालादित्यधिकारेऽपीति । रमणीयशब्दात्प्रत्यय वारयति । रमणीयेति । अनभिधानादिति । प्रकृतसूत्रस्थभाष्य एव रमणीयादिभ्यस्तेन प्रत्ययातिप्रसङ्गमाशङ्क्याथं मतमेतत् । काले इष्ट शब्द कालशब्द काल यो न व्यभिचरतीति न रमणीयादिष्वतिप्रसङ्गो भवतीत्युक्तत्वेन तेभ्य प्रत्यभावो निर्णीयते । केचित्तु सोऽस्येत्यनुवृत्त्यैव सिद्धे तदस्येत्यस्योपादानमेतद्विहितस्याद्वीयत्वनिवृत्त्यर्थम् । तेन द्विषाष्टिक इत्यत्र न लुगित्याहुस्तद्दूषयति । तत्सामर्थ्यादिति । काकवाशितेनैवेति । यथा काकशब्देन न शास्त्राबोधोऽर्थ प्राप्यते तथाऽत्राप्य तत्सामर्थ्यात्साऽनार्हीयत्वप्राप्तिरिति । तेन । तदन्तविधिस्वीकारेण । द्वेकयोरितिवदितिदृष्टान्तेन तत्र यथावृत्तिविषये सङ्ख्यापरत्वं तथात्रापीति सूचितमित्याशयेनाह । वृत्तिविषय इति । वृत्तिकारोक्तरीत्या मूलोक्तसूत्रशब्दस्य प्रयोजनस्य युक्तमिति सूचयन्स्वयन्त्प्रयोजनमाह । परे त्विति । पञ्चकमध्ययनमित्यत्र पञ्चकशब्द आवृत्तिरूपसंख्येये वर्तत इत्याशयेनाह । पञ्चावृत्तय इति । प्रयोग इति । स्तोमशब्दस्य प्रयोग इत्यर्थ । ननु यदि स्तोमशब्द समूहपरस्तदा स्तुति स्तोम इति सामानाधिकरण्यानुपपत्तिरत आह । स्तुति स्तोम इति । एषप्रयन्था । अत एव त्रिंशत्याद्या सदैकत्व इतियोग

सङ्गतिः' वार्त्तिककृत इति। अत एव वार्त्तिककृतोक्तमनारम्भो वा प्रातिपदिकविज्ञानाद्यथा सहस्रादिष्विति। अत्र वार्त्तिककृत इत्यनेन यावतां व्युत्पादनं सूत्रकृता कृतन्तेषाम्व्युत्पन्नत्वकल्पनत्र युक्तिन्नित्वनुक्तमाशुत्वानामिवेतिसूचितमत एव भाष्यकृतोक्तन्नास्तुया कर्त्तव्या यत्नानुगमः क्रियते इति। अत्र कैयटः। अननुगमो हि दोषाय। अशक्यो वानन्त्यात्सर्वशब्दानुगमो न त्वनुगम एव स्वप्रज्ञापराधादशक्यार्थविशेषनिश्चयत्वाद्दोषत्वेनोद्भावनीय इति। दोषायेति। अनुगममन्तरेण मन्दबुद्धीनामनुप्रज्ञासम्भवात्। वस्तुतो न सोप्याचार्यस्य दोष इत्याह। अशक्य इति। अनुगमस्तु सर्वथा नाचार्यस्य दोषायेत्याह। न त्विति। अनुगमविषयेषु विंशत्यादिषु अर्थविशेषानिश्चयः स्वप्रज्ञापराधजो न तु तत्र सूत्रकृदपराध इति भावः। त्रिंशच्चत्वारिंशतोः। व्यत्ययेन पञ्चम्यर्थे षष्ठी तदभिप्रायेणाह। आभ्यामिति। तदर्हतीति। द्वितीयासमर्थादर्हतीत्यर्थे प्रत्ययो भवति। अर्हतीत्यस्य योग्यो भवतीत्यर्थः। योग्यता च क्रियायामेवेति क्रियावाचकपदाध्याहारेणेति श्वेतच्छत्रमित्यं तत्कर्त्तुमितिपदाध्याहारेण व्याख्यातम्। छन्दनुरोधेनेति। तत्र हि नित्यग्रहणं प्रत्ययार्थविशेषणमित्युक्तम्। दण्डादिभ्यः। यदिति त्वनुवृत्त्या लभ्यते। अपपाठ इति। अत्र मानन्तु अचो यदिति सूत्रस्थभाष्यमेव। तथाहि। तत्र हि हनोवा यद्वधश्च वक्तव्य इति वार्त्तिकम्। वध्यः। घात्यः। तद्धितो वा। वधमर्हतीति वध्यः। उभयथापि वध्य इत्येतद्यतोऽनाव इत्याद्युदात्तम्। तद्धितस्यातान्तत्वे तु तदन्तस्यान्तोदात्तत्वं स्यादिति तद्धितोपेतिमसानत्वेनाभिधानमसङ्गतं स्यादिति। लक्षणया सिद्धे वार्त्तिकवैयर्थ्यमित्यभिप्रायेणागद्दते। यद्यपीति। सुप्यार्थेभ्यः। यष्वार्थपरेभ्यः। तेन यज्ञगम्यस्य पाके लक्षणया यज्ञमर्हतीति सूद इत्यत्र न॥

॥ इत्यार्हीयाः॥

पारायणतुरायणचान्द्रायणं वर्त्तयति। पारायणशब्द आदित आरभ्य समाप्तिपर्यन्तं यद्ग्रन्थस्याध्ययनमात्परं। तस्य वर्त्तनं यद्यपि गुरुशिष्योभयसाध्य

दकमात्रमिति। अत्र मानपदेन पारिभाषिकस्यैव ग्रहणमितिनियमव्यवच्छेद.। अनभिधानादिति। अत्रैव भाष्ये सङ्घादिष्वर्थेषु यथा प्रत्यय इष्यते तथाऽन्यत्रापि प्रत्ययसिध्यर्थञ्जीवितपरिमाणे चोपसङ्ख्यानं कर्त्तव्यम्। षष्टिर्जीवितपरिमाणमस्य षाष्टिकः। साप्ततिकः। जीवितपरिमाणे चेत्यनर्थकम्। कालादितिसिद्धत्वात्। जीवितपरिमाणे चेत्यनर्थकं वचनम्। किङ्कारणम्। कालादितिसिद्धत्वात्। कालादित्येव सिद्धम्। इह यस्य षष्टिर्जीवितपरिमाणम्। षष्टिमसौ भूतो भवति तत्र तमधीष्टो भृतो भूतो भावीत्येव सिद्धम्। अवश्यञ्चैतदेवं विज्ञेयम्। इह वचने हि लुक् प्रसङ्गः। इह हि क्रियमाणे लुक् प्रसज्येत। द्विषाष्टिकः। त्रिषाष्टिकः। अनेन सति लुग्भवति। तेन सति कञ्चान भवति। प्राग्वतेरित्युच्यते इत्युक्तम्। एतेन भाष्यग्रन्थेन द्विषाष्टिक इत्यादौ लुगभाव एवेष्ट इति लभ्यते। यदि च द्विषष्टिशब्दादपि तमधीष्ट इति प्रत्ययः स्यात्तदा लुक् स्यादेवेत्यनभिधानमाश्रित्यमामाण्यादिर्णीयत इति। ननु समुदायस्य कथङ्कालवाचकत्वमत आह। कालादित्यधिकारेऽपीति। रमणीयशब्दात्प्रत्ययं वारयति। रमणीयेति। अनभिधानादिति। प्रकृतसूत्रस्थभाष्य एव रमणीयादिभ्यस्तेन प्रत्ययातिप्रसङ्गमाशङ्क्यार्थं मतमेतत्। काले दृष्टः शब्दः कालशब्दः कालं यो न व्यभिचरतीति न रमणीयादिष्वतिप्रसङ्गोभवतीत्युक्तत्वेन तेभ्य प्राप्त्यभावो निर्णीयते। केचित्तु सोऽस्येत्यनुवृत्त्यैव सिद्धे तदस्येत्यस्योपादानमेतद्विहितस्यार्हीयत्वनिवृत्त्यर्थम्। तेन द्विषाष्टिक इत्यत्र न लुगित्याहुस्तद्दूषयति। तत्सामर्थ्यादिति। काकवागितेनैवेति।यथा काकशब्देन न प्राप्त्यावोध्योऽर्थः प्राप्यते तथाऽत्राप्ये तत्सामर्थ्याधाऽनार्हीयत्वप्राप्तिरिति। तेन। तदन्तविधिस्तोकारेण। द्वेकयोरितिवदितिदृष्टान्तेन तत्र यथावृत्तिविषये सङ्ख्यापरत्वन्तथात्रापीति सूचितमित्याशयेनाह। वृत्तिविषय इति। वृत्तिकारोक्तरीत्या मूलोक्तसूत्रशब्दस्य प्रयोजनञ्च युक्तमिति सूचयन्नुक्तप्रयोजनमाह। परे त्विति। पञ्चकमध्ययनमित्यत्र पञ्चकशब्द आवृत्तिरूपसङ्ख्येये वर्त्तत इत्याशयेनाह। पञ्चावृत्तय इति। प्रयोग इति। स्तोमशब्दस्य प्रयोग इत्यर्थः। ननु यदि स्तोमशब्दः समूहपरस्तदा स्तुतिः स्तोम इति सामानाधिकरण्यानुपपत्तिरत आह। स्तुतिः स्तोम इति। एकवचनमात्ता। अत एव भिन्नत्वाद्या. सदेकत्व इतिकोग

त्ययो नेष्यते अध्येषणभरणफलव्यापारव्याप्त्यात्तु कालादिष्यत इत्यनेन तथाभिधानात्। फलव्यापारिस्त्वत्राध्येषणादिफलभूतो यो व्यापारः कर्मकरणरूपस्तद्व्याप्यादित्यर्थः। मासमधीष्ट इत्यस्य मासव्यापिव्यापारार्थमधीष्ट इत्येवार्थः। अध्येषणभरणव्यासमुहूर्त्तादिकालमचिन इतिकैयटस्यापि मासव्यापिव्यापारफलकाध्येषणभरणव्यासमुहूर्त्तव्यादर्थः। एतेन मासादिव्यापकत्वं स्पष्टमेव लभ्यत इति। यदुक्तम्मूले भूतः स्वसत्तया व्याप्तकाल इति तत्र कालान्तर्भावे मानमाह॥ भूतेति। एतेनाधीष्टभृतयोर्दोष्यतीत्यत्र यथा वर्त्तमानकालान्तर्भावेन न शक्तिस्तथा भूतकालान्तर्भावेण न शक्तिरितिसूचितम्। मासाद्वयसि यत्खञौ। मासशब्दाद्वयसि गम्यमाने उक्तार्थे यत्खञौ प्रत्ययौ स्तः। चकारोऽपि। पणमासाण्यासेतिसूत्रेऽपि। येन ठञमात्रस्य सम्बन्धः। तस्य। यपः। इत्यनुमारीति। तत्रऽपि पणमासेतिसूत्रव्याख्यानावसरे चकाराद्यप् चेत्युक्तम्।ननु चकाराकरणायावयसि ठन्। इत्येवं सूत्रद्वयमेव कर्त्तव्यमत आह। चवयसीति। ननु वयसीतिसूत्रे भूतार्थ एव प्रत्ययस्वीकारात्पञ्चद्विल्यनुपपन्नमत आह। यथायोगेति। तद्धितार्थद्विगाविति। द्वे अयने अधीष्ट इत्यादिविग्रहः। नन्वत्र विग्रहेऽपि राजाहःसखिभ्यष्टजित्यस्मात्त्वाद्दाधिका टचा भाव्यमित्याशङ्कायामाह मूले समासान्तविधेरिति। द्वय्याद्येवेति। तत्र हि चञ्च संवत्सर इत्येवमन्ताद्विगोर्निवृत्तादिषु वा खप्रत्ययो भवति तेन सुत्रे ठञ्भवतीत्युक्ताद्द्वाहीन' द्वैयह्निक इतिरूपमुदाहृतम्। अत द्वाहीन इत्यत्राहःशब्दान्तात्खप्रत्ययदर्शनेन समासान्ताभावः स्पष्टः। यदा नानेन खस्तदा पूर्वोक्तसामान्यसूत्रेण अन्नादेशेष्वसत्यपि ठञ्प्रत्यय इत्याशयः। अप्रतिगमक इति। साधकमत्त्वे भवत्येव। यथा तदस्य परिमाणम्। संख्यायाः संज्ञासंघेतिक्रमेण पाठात्सङ्ख्येतिसूत्रे संख्याया परिमाणग्रहणेन ग्रहणमवत्येवेति। तयोरेव। खठञोरेव। न नित्य इति। चित्तवतीतिसूत्रविहित। क्वाचित्कम्पाठं खण्डयति। भूतो वेत्यपाठ इति। द्वैवार्षिक इत्यत्राप्टीष्टी ह्रतो वेत्यर्थविवक्षायां भविष्यत्त्वस्य वृद्धिस्त्वे चित्तवतीतिनित्यं लुक् दुर्वार इत्याशङ्कायामाह। चित्तवतीत्यस्येति। तत्रैवाभिधानादिति। लुक्प्रवृत्तिविषये ह्यद्वैरन्तरङ्गानपोतिन्यायेनाप्रवृत्ते रद्विवर्टितप्रयोगस्य तत्रैवाभिधानाद्दित्यर्थः। हरदत्त इत्यने

न्तथापि पारायणमधीते पारायणिक इत्युच्यते । यस्तुरायणेन यजते सतौरायणिक इत्युच्यते । यश्चैवाधीते यश्च परस्य करोति उभौ तौ वर्त्तयतः । यश्च यजते यश्च पुरोडाशाभिर्वर्त्तयति उभौतौ वर्त्तयतः । उभयत्र कस्मान्न भवत्यनभिधानादितिभाष्ये उक्तम् । अत्र कैयटः । परस्य । शिष्यस्य । करोति उच्चारयति अध्यापक इत्यर्थः । उभौ ताविति । अन्यतरासन्निधौ क्रियाया अनिष्पादादुभयोः कर्त्तृत्वम् । अनभिधानादिति । अध्यापके याजके च प्रयोगाभावादिति । एतद्भाष्यकैयटाभ्यां शिष्य एव प्रत्यय उत्पद्यत इत्याशयेनाह । शिष्य एवेष्यत इति । तद्विषयत्वे । संशयविषयत्वे । भाष्यासम्मत इति । तत्र हि पर्यायेण नित्यमित्येव सूत्रपाठो दृश्यते न त्वणिति । अतिप्रसङ्गस्त्वनभिधानान्नेति । उपपादितमेतत् । तेन निर्वृत्तम् । तृतीयान्तात्कालवाचिनः प्रातिपदिकान्निर्वृत्तमित्यस्मिन्नर्थे ठञ्प्रत्ययः स्यात् । तमधीष्ट इत्यन्तसंयोग इति । इदमुपलक्षणमेतत्सूत्रविषये सर्वत्रात्यन्तसंयोग एव । नन्वध्येषणारूपक्रियायां न मासव्यापकत्वन्तस्या मासारम्भकप्रथमदिन एवोत्पत्तेरिति,मासत्वाधिकरणदिनान्तरे प्रतियोगिव्यधिकरणतदभावसत्त्वादत आह । मुहूर्त्तमिति । अध्ययनव्यापारे इति काले इति शेषः । तद्व्यापारत्वोपचारादिति । अध्येषणव्यापारत्वोपचारादित्यर्थः । एतेनाध्येषणस्य न कालिकसम्बन्धेन व्यापकत्वविवक्षा किन्तु स्वप्रयोज्याध्ययनप्रतियोगिकव्याप्तिसम्बन्धेन । मासत्वाधिकरणद्वितीयादिदिने यस्किञ्चिन्मुहूर्त्तावच्छेदेन निरुक्तसम्बन्धावच्छिन्नप्रतियोगिताकस्तदभावो वर्त्तमानोऽपि न प्रतियोगिव्यधिकरण इति भावः । ननु किमुपचारेण यस्मिन्मुहूर्त्तेऽध्येषणन्तन्मुहूर्त्तव्यापकत्वमस्त्येव तन्मुहूर्त्तवाचकात्प्रत्ययोत्पत्तिस्वीकारेण सूत्रस्य चारितार्थ्यादत आह । यावन्त इति । नेष्यत इति । तदुक्तम्भाष्ये । अधीष्टभृतयोर्द्वितीयानिर्देशोऽनर्थकस्तत्रादर्शनात् । न ह्यसौ मासमधीष्यते किन्तु मुहूर्त्तमसावधीष्टो मासन्तत्कर्म करोति । तादर्थ्यात्ताच्छब्द्यम्भविष्यतीति । अत्र कैयटः । मासादिशब्दा अध्येषणभरणव्यापारमुहूर्त्तादिकालवाचिन एवाश्रियन्त इति । न चैवं सति मुहूर्त्तव्यापकत्वमेव लभ्यताम् मासादेरास्ति अध्येषणादेरिति तत्फलभूताध्ययनव्यापार इतिपूर्वोक्तं विरुध्येतेति वाच्यम् । अधीष्टभृतयोरिति प्रतीकमुपादाय कैयटेन यावन्तं कालमध्येषणभरणव्यापारः क्रियते तत्र प्र

त्ययो नेष्यते अध्येषणभरणफलव्यापारव्याप्तात्तु कालादिष्यत इत्यनेन तथाभिधानात्। फलव्यापारेत्यस्यार्थः अध्येषणादिफलभूतो यो व्यापारः कर्मकरणरूपस्तद्व्याप्यादित्यर्थः। मासमधीष्ट इत्यस्य मासव्यापिव्यापारार्थमधीष्ट इत्येवार्थः। अध्येषणभरणव्याप्तमुहूर्त्तादिकालस्यचिन इतिकैयटस्यापि मासव्यापिव्यापारफलकाध्येषणभरणव्याप्तमुहूर्त्तं त्याद्यर्थः। एतेन मासादिव्यापकत्वं स्पष्टमेव लभ्यत इति। यदुक्तम्मूले भूतः स्वशक्त्या व्याप्तकाल इति तत्र कालान्तर्भावे मानमाह। भूतेति। एतेनाधीष्टभृतयोर्दीयतीत्यत्र यथा वर्त्तमानकालान्तर्भावेण न शक्तिस्तथा भूतकालान्तर्भावेण न शक्तिरितिसूचितम्। मासाद्वयसि यत्खञौ। मासशब्दाद्वयसि गम्यमाने उभार्थे यत्खञौ प्रत्ययौ स्तः। अत्रापि। षण्मासाण्ण्यचेतिसूत्रेऽपि। येन ठञ्मात्रस्य सम्बन्धः। तस्य। यपः। इत्यनुसारीति। तत्र हि षण्मासेतिसूत्रव्याख्यानावसरे चकाराद्यप् चेत्युक्तम्। ननु चकाराकरणायावयसि। ठन्। इत्येवं सूत्रद्वयमेव कर्त्तव्यमत आह। अवयवसीति। ननु वयसीतिसूत्रे भूतार्थ एव प्रत्ययस्वीकारात्पत्वद्धित्यनुपपन्नमत आह। यथायोगमिति।। सङ्ख्यातार्थद्विगाविति। द्वे अष्टमी अधीष्ट इत्यादिविग्रहः। नन्वेवं विषयेऽपि राज्ञाहरितिसूत्रम्परत्वाद्बाधित्वा टचा भाव्यमित्याशङ्कायामाह मूले समासान्तविधेरिति। द्वयाद्येवेति। तत्र हि पञ्चःसंवत्सर इत्येवमन्ताद्विगोर्निर्वृत्तादिषु वा खप्रत्ययो भवति तेन सुत्रे ठञ्भवतीत्युक्त्वा द्व्यहीनः द्वैयह्निक इतिरूपमुदाहृतम्। अत्र द्व्यहीन इत्यत्राहःशब्दान्तात्खप्रत्ययदर्शनेन समासान्ताभावः कल्प्यते। तदा मानेन खस्तदा पूर्वोक्तसामान्यसूत्रेण अह्नादेशिष्ठतेऽपि ठञ्प्रत्यय इत्याशयः। असतिगमक इति। साधकसत्त्वे भवत्येव। यथा तदस्य परिमाणम्। संख्यायाः संज्ञासंघेतिक्रमेण पाठात्संख्येतिसूत्रे संख्यायाः परिमाणग्रहणेन ग्रहणम्भवत्येवेति। सयौरेव। खठञोरेव। न नित्य इति। चित्तवतीतिसूत्रविहितः। काचित्कम्पाठं खण्डयति। भूते वेत्यपाठ इति। द्विवार्षिक इत्यत्राष्टौ इतो येत्यर्थविवक्षायां भविष्यत्वस्य बुद्धिस्थत्वे चित्तवतीतिनित्यं लुक् दुर्वार इत्याशङ्कायामाह। चित्तवतीत्यस्येति। तत्रैवाभिधानादिति। लुक्प्रवृत्तिविषये वृद्धेरन्तरङ्गानपे-तिन्यायेनाप्रवृत्तेर्वृद्धिघटितप्रयोगस्य तत्रैवाभिधानादित्यर्थः। हरदत्त इत्यने-

न सूचितामरुचिन्दर्शयन्नुक्तमतमाह । परे त्विति । नित्यग्रहणमर्हि तस्य वस्य व्यर्थमत आह । नित्यग्रहणन्त्विति । न सुद्दैत्विति । शालिविशेष एव लोकप्रसिद्धे । तदस्येतिसूत्रार्थप्रदर्शनावसरे ब्रह्मचर्यमित्यस्यान्वयाप्रदर्शनात्तस्य वैयर्थ्यमद्धावारणायाह । ब्रह्मचर्यञ्चेदिति । ननु मासोऽस्येत्यर्थे ब्रह्मचर्यस्य विशेष्यत्वेऽपि ब्रह्मचर्यं स्वपरिच्छेदकत्वसम्बन्धावच्छिन्नव्यापकता प्रतीयत इति द्वितीया कुतो नेत्याकाङ्क्षायामाह । द्वितीया त्विति । यत्र विशेष्यतावच्छेदकरूपेण ज्ञातेऽर्थे कालाध्वनिरूपितव्यापकताबोधनाय कालाध्ववाचकं शब्दं प्रयुज्यते तत्रैव द्वितीया । प्रकृते तु मासत्वावच्छिन्ने ब्रह्मचर्यनिरूपिता व्याप्यता बोधनीया न तु मासनिरूपिता व्यापकताब्रह्मचर्ये बोधनीयेति न द्वितीयेत्यर्थः । मासे व्याप्यताबोधे ब्रह्मचर्ये व्यापकताबोध आर्थिको यद्यप्यस्ति तथापि न स वाक्यतात्पर्यविषय इति भावः । पूर्वोक्तप्रयोगस्योपपत्तिमाह । मासिक इति । अत एव । पुंवद्भावाभावादेव । भाष्ये त्विति । वार्त्तिके तदस्य ब्रह्मचर्यमित्युपादानेन सूत्रस्य द्वेधाव्याख्यानमितिसूचितम् । तदिति द्वितीयासमर्थात्कालवाचिनोऽस्येति षष्ठ्यर्थे ठञ् भवति ब्रह्मचर्यञ्चेद्गम्यते । मास ब्रह्मचर्यमस्य मासिको ब्रह्मचारी । तथा तदिति प्रथमासमर्थात्कालवाचिनोऽस्येतिषष्ठ्यर्थे ठञ् भवति यत्तदस्येति निर्दिष्टं ब्रह्मचर्यञ्चेत्तद्भवतीति । मासो ब्रह्मचर्यस्य मासिकं ब्रह्मचर्यमिति । वाक्ये मासस्य प्राधान्यात्प्रथमैव । महानाम्न्यादिभ्य इति । अत्र महानाम्नीशब्दाद्ब्रह्मचर्यस्य विशेष्यतायामप्रत्ययविधानेन सामर्थ्यादत्र षष्ठी समर्थविभक्तिः । तस्य च दक्षिणायज्ञाख्येभ्य इति सूत्रे आख्याग्रहणाभावेपि यज्ञेभ्य इत्युच्यमानेऽपि तद्वाचकशब्देभ्य एव भविष्यतीतिकालाधिकारस्य विधानसामर्थ्यादेव बाधे सिद्धे नेदमाख्याग्रहणस्य प्रयोजनमित्याशयेनाह । परे त्विति । अत एव । आख्याशब्दाभावेऽपि कालाधिकारबाधस्य सिद्धत्वादेव । तत्र च दीयते । इदम् । प्रथमोऽत्र व्याख्यानम् । इत्यादिभाष्यरीत्येति । इदमर्थप्रदर्शनपरं लेखनभाष्ये तु प्रकृतसूत्रे अनिवर्दे दीयते कार्यं मित्युक्तम् । एतेनैतादृशानुपूर्व्या भाष्येऽदर्शनेनेत्यमभिधानममङ्गतमित्यपास्तम् तत्र प्रभवति सन्तापादिभ्य । अत्र यत्प्रभवतीति तद्वाचष्टे । प्रभवतीतीति । वायुमपाठरीत्याह । चूडादिभ्य इति । रविवाच्येमिति । तदुक्त

भाष्ये । अण्प्रकरणेऽग्निपदादिभ्य उपसंख्यानमिति । चौणीमान्यण्प्रकरणानि। व्युष्टादिभ्योऽण् । समयस्तदस्य प्राप्तम् । ऋतोरण् । प्रयोजनम् । विशाखादण् मन्थदण्डयोरिति । न चैवं पाठे चूडादिभ्यः कथम्प्रत्ययलाभ इति वाच्यम् । आदिशब्दस्य प्रकारार्थतया चूडादीनामादितस्तत्र पाठाभावेऽपि लाभसम्भवादिति भावः । नन्वेवमपि सर्वेभ्यः सर्वेष्वर्थेषु प्रत्ययः प्राप्नोतीत्यत आह । तेन यथादर्शनमिति । तदुक्तम्भाष्ये । व्युष्टादिभ्योऽण् । अग्निपदादिभ्यश्चेति वक्तव्यम् । अग्निपदे दीयते कार्यं वा आग्निपदम् । पैलुमूलम् । समयस्तदस्य प्राप्तम् । ऋतोरण् । अग्निपदादिभ्यश्च । उपवस्ता प्राप्तोऽस्य औपवस्त्रम् । प्राशिता प्राप्तोऽस्य प्राशित्रम् । प्रयोजनम् । विशाखाषाढादण् मन्थदण्डयोः । अग्निपदादिभ्यश्चेति वक्तव्यम् । चूडा प्रयोजनमस्य चौडम् । श्रद्धा प्रयोजनमस्य श्राद्धम् । तेन । चोरितिविशिष्योपादानेन । अत एव । आद्युदात्तत्वस्य निपातनादेव । ठञा सिद्धं इति । प्रयोजनमितिसामान्यसूत्रेण सिद्ध इत्यर्थः । एकशब्दस्यासहायपरतयाऽसहायागारलाभे तादृशस्यागारस्य मुमुक्षोः सौकर्यसम्पादकत्वेन प्रयोजनत्वलाभ इति भावः । आकालिकडाद्यन्तवचने । आकालिकट् इति रूपन्निपात्यते । आद्यन्तवचने । आद्यन्तयोर्वचने विशेषणे विवक्षिते । समानकालशब्दस्य स्थानेऽयमादेशः. समानकालशब्दार्थश्चाद्यन्तयोर्विशेषणत्वेदित्यर्थः । एतदर्थमेव । समानकालशब्दस्य स्थाने आदेशार्थमेव । अर्थे चकारेणेकट्प्रत्ययविधानाभावेऽपि ठञ्प्रकरणात्तदनुवृत्त्यापि तत्सिद्धमिति ध्वनितम् । तदभिप्रायेणाह । अयमप्याद्युदात्त इति । निदर्शनमिति । अकालाट्ठं चेतिवार्त्तिकविधेयो निदित्यर्थः ॥

## इत्यनार्हीयठञधिकारः ।

## समाप्तश्च ठञोऽधिकारः ।

तेन तुल्यं क्रिया चेद्वतिः । तेनेतितृतीयान्तात्तुल्यमित्यर्थे वतिः स्यात् । यत्तुल्यं सा क्रिया चेत् । अत्र तुल्यशब्दार्थस्य क्रियाविशेषणत्वेन क्लीबत्वं स्यादत आह । सामान्य इति । एवम् । तुल्यमिति सामान्ये नपुंसकम् । ब्राह्मणवदधीत इत्यत्र यो धात्वर्थव्यापारस्तद्विशेषणत्वेन नपुंसकमित्यर्थः । प्रत्ययार्थ

न सूचितामतश्चिन्त्यमयन्तृचमतमाह । परे त्विति । नित्यप्रहसन्तीहि तत्र ब्रह्म
चर्यमत आह । नित्यप्रहसन्त्विति । न मुहूर्तेष्विति । शालिविशेष एव लोक
सिद्धः । तदस्येतिसूत्रार्थप्रदर्शनावसरे ब्रह्मचर्यमित्यस्यान्वयप्रदर्शनात्तस्य देव
पं यद्ववाख्यायाह । ब्रह्मचर्यञ्चेदिति । ननु मासोऽस्येत्यर्थे ब्रह्मचर्यस्य निर्दे
शत्वेऽपि ब्रह्मचर्यं स्वपरिच्छेदककालसम्बन्धावच्छिन्नव्यापकता प्रतीयत इति
द्वितीया कुतो नेत्याकाङ्क्षायामाह । द्वितीया त्विति । यत्र विशेष्यतावच्छेदक
रूपेण प्रावेऽर्थे कालाध्वनिरूपितव्यापकताबोधनाय कालाध्ववाचकः शब्द
प्रयुज्यते तत्रैव द्वितीया । प्रकृते तु मासत्वावच्छिन्ने ब्रह्मचर्यनिरूपिता व्या-
प्यता बोधनीया न तु मासनिरूपिता व्यापकताब्रह्मचर्ये बोधनीयेति न द्वि
तीयेत्यर्थः । मासे व्याप्यताबोधे ब्रह्मचर्ये व्यापकताबोध आर्थिको यद्यप्यस्ति
तथापि न स वाच्यतावच्छेदकविषय इति भावः । पूर्वोक्तप्रयोगस्योपपत्तिमाह ।
मासिक इति । अत एव । पुंवद्भावाभावादेव । भाष्ये त्विति । वार्त्तिके तदस्य
ब्रह्मचर्यमित्युपादानेन सूत्रस्य द्वेधा व्याख्यानमिति सूचितम् । तदिति द्वितीया-
समर्थात्कालवाचिनोऽस्येति षष्ठ्यर्थे ठञ् भवति ब्रह्मचर्यञ्चेद्गम्यते । मासं ब्रह्म
चर्यमस्य मासिको ब्रह्मचारी । तथा तदिति प्रथमासमर्थात्कालवाचिनोऽस्ये-
तिषष्ठ्यर्थे ठञ् भवति यत्तदस्येति निर्दिष्टं ब्रह्मचर्यञ्चेत्तद्भवतीति । मासो
ब्रह्मचर्यस्य मासिकं ब्रह्मचर्यमिति । वाक्ये मासस्य प्राधान्यात्प्रथमैव । महा
नाम्न्यादिभ्य इति । अत्र महानाम्नीशब्दाद्ब्रह्मचर्यस्य विशेष्यतायाम्प्रत्ययवि
धानेन सामर्थ्यादेव षष्ठी समर्थविभक्तिः । तस्य च दक्षिणायज्ञाख्येभ्य इति
सूत्रे आख्याग्रहणाभावेऽपि यज्ञेभ्य इत्युच्यमानेऽपि तद्वाचकशब्देभ्य एव भवि
ष्यतीति कालाधिकारस्य विधानसामर्थ्यादेव बाधे सिद्धे नेदमाख्याग्रहणस्य प्र
योजनमित्याशयेनाह । परे त्विति । अत एव । आख्याशब्दाभावेऽपि काला
धिकारबाधस्य सिद्धत्वादेव । तत्र च दीयते । इदम् । प्रथमोक्तं व्याख्यानम् ।
इत्यादिभाष्यरीत्येति । इदमर्थप्रदर्शनपरं लेखनम्भाष्ये तु प्रकृतसूत्रे षष्ठिपदे
दीयते कार्यं भवेत्युक्तम् । एतेनैतादृशानुपूर्व्या भाष्येऽदर्शनेनेदमभिधानमसङ्ग
तमित्यपास्तम् तस्मै प्रभवते सन्तापादिभ्यः । अत्र यत्प्रभवतीति तदावरेट् ।
प्रभवतीतीति । इत्युक्तपाठरीत्याह । चूडादिभ्य इति । इविशेषोऽस्यासेति । तदुक्त

भाष्ये । अण्प्रकरणेऽग्निपदादिभ्य उपसंख्यानमिति । चौणीमान्यण्प्रकरणानि। व्युष्टादिभ्योऽण् । समयस्तदस्य प्राप्तम् । ऋतोरण् । प्रयोजनम् । विशाखाषाढादण् मन्थदण्डयोरिति । न चैवं पाठे चूडादिभ्यः कथम्प्रत्ययलाभ इति वाच्यम्। आदिशब्दस्य प्रकारार्थतया चूडादीनामादितस्तत्र पाठाभावेऽपि लाभसम्भवादिति भावः । नन्वेवमपि सर्वेभ्यः सर्वेष्वर्थेषु प्रत्ययः प्राप्नोतीत्यत आह । तेन यथादर्शनमिति । तदुक्तम्भाष्ये । व्युष्टादिभ्योऽण् । अग्निपदादिभ्यश्चेति वक्तव्यम् । अग्निपदे दीयते कार्यं वा आग्निपदम्। पैलुमूलम् । समयस्तदस्य प्राप्तम् । ऋतोरण् । अग्निपदादिभ्यश्च । उपवस्ता प्राप्तोस्य औपवस्तम् । प्राशिता प्राप्तोऽस्य प्राशित्रम् । प्रयोजनम् । विशाखाषाढादण् मन्थदण्डयोः । अग्निपदादिभ्यश्चेति वक्तव्यम् । चूडा प्रयोजनमस्य चौडम् । श्रद्धा प्रयोजनमस्य श्राद्धम् । तेन । चौरेतिविशिष्योपादानेन । अत एव । आद्युदात्तत्वस्य निपातनादेव । ठञा सिद्धं इति । प्रयोजनमितिसामान्यसूत्रेण सिद्ध इत्यर्थः । एकशब्दस्यासहायपरतयाऽसहायागारलाभे तादृशस्यागारस्य मुमुक्षोः सौकर्यसम्पादकत्वेन प्रयोजनत्वलाभ इति भावः । आकालिकडाद्यन्तवचने । आकालिकट् इति रूपं निपात्यते । आद्यन्तवचने । आद्यन्तयोर्वचने विशेषणे विवक्षिते । समानकालशब्दस्य स्थानेऽयमादेशः समानकालशब्दार्थयाद्यन्तयोर्विशेषणत्वेदित्यर्थः । एतदर्थमेव । समानकालशब्दस्य स्थाने आदेशार्थमेव । अत्रैवकारेण कट्प्रत्ययविधानाभावेऽपि ठञ्प्रकरणात्तदनुवृत्त्याप्येतत्सिद्धमिति ध्वनितम् । तदभिप्रायेणाह । अयमप्याद्युदात्त इति । निदर्शमिति । अकालाद्यं तिवार्त्तिकविधेयो निदित्यर्थः ॥

## इत्यनार्हीयठञधिकारः ।

## समाप्तश्च ठञोऽधिकारः ।

तेन तुल्यं क्रिया चेद्वतिः । तेनेतितृतीयान्तात्तुल्यमित्यर्थे वतिः स्यात् । यत्तुल्यं सा क्रिया चेत् । अथ तुल्यशब्दार्थस्य क्रियाविशेषणत्वेन स्त्रीत्वं स्यादत आह । सामान्य इति । एवम् । तुल्यमिति सामान्ये नपुंसकम् । ब्राह्मणवदधीत इत्यत्र यो धात्वर्थव्यापारस्तद्विशेषणत्वेन नपुंसकमित्यर्थः । प्रत्ययार्थ-

न सूचितामरुचिन्दर्शयनूक्षमतमाह । परे त्विति । नित्यग्रहणमर्हं तस्य चस्य
व्यर्थमत आह । नित्यग्रहणस्त्विति । न सुद्रेस्त्विति । शालिविशेष एव लोकप्र
सिद्धे । तदस्येतिसूत्रार्थप्रदर्शनावसरे ब्रह्मचर्यमित्यस्यान्वयाप्रदर्शनात्तस्य वैय
र्थ्यशङ्कावारणायाह । ब्रह्मचर्यश्चेदिति । ननु मासोऽस्येत्यर्थे ब्रह्मचर्यस्य विशे
ष्यत्वेऽपि ब्रह्मचर्ये स्वपरिच्छेदकत्वसम्बन्धावच्छिन्नव्यापकता प्रतीयत इति
द्वितीया कुतो नेत्याकाङ्क्षायामाह । द्वितीया त्विति । यत्र विशेष्यतावच्छेदक
रूपेण ज्ञातेऽर्थे कालाध्वनिरूपितव्यापकताबोधनाय कालाध्ववाचकः शब्द
प्रयुज्यते तत्रैव द्वितीया । प्रकृते तु मासत्वावच्छिन्ने ब्रह्मचर्यनिरूपिता व्या
प्यता बोधनीया न तु मासनिरूपिता व्यापकता ब्रह्मचर्ये बोधनीयेति न द्वि
तीयेत्यर्थः । मासे व्याप्यताबोधे ब्रह्मचर्ये व्यापकताबोध आर्थिको यद्यप्यस्ति
तथापि न स वाक्यतात्पर्यविषय इति भावः । पूर्वोक्तप्रयोगस्योपपत्तिमाह ।
मासिक इति । अत एव । पु वद्भावाभावादेव । भाष्ये त्विति । वार्त्तिके तदस्य
ब्रह्मचर्यमित्युपादानेन सूत्रस्य द्वेधाव्याख्यानमितिसूचितम् । तदिति द्वितीया
समर्थात्कालवाचिनोऽस्येति षष्ठ्यर्थे ठञ् भवति ब्रह्मचर्यं चेद्गम्यते । मास ब्रह्म
चर्यमस्य मासिको ब्रह्मचारी । तथा तदिति प्रथमासमर्थात्कालवाचिनोऽस्ये
तिषष्ठ्यर्थे ठञ् भवति यत्तदस्येति निर्दिष्टं ब्रह्मचर्यं चेत्तद्भवतीति । मासो
ब्रह्मचर्यस्य मासिकं ब्रह्मचर्यमिति । वाक्ये मासस्य प्राधान्यात्प्रथमैव । महा
नाम्न्यादिभ्य इति । अत्र महानाम्नीशब्दाद्ब्रह्मचर्यस्य विशेष्यतायाम्प्रत्ययवि
धानेन सामर्थ्याद्च षष्ठी समर्थविभक्तिः । तस्य च दक्षिणायज्ञाख्येभ्य इति
सूत्रे आख्याग्रहणाभावेऽपि यज्ञेभ्य इत्युच्यमानेऽपि तद्वाचकशब्देभ्य एव भवि
ष्यतीतिकालाधिकारस्य विधानसामर्थ्यादेव बाधे सिद्धे नेदमाख्याग्रहणस्य प्र
योजनमित्याशयेनाह । परे त्विति । अत एव । आख्याशब्दाभावेऽपि काला
धिकारबाधस्य सिद्धत्वादेव । तत्र च दीयते । इदम् । प्रथमोक्तं व्याख्यानम् ।
इत्यादिभाष्यरीत्येति । इदमर्थप्रदर्शनपरं लेखनभाष्ये तु प्रकृतसूत्रे अग्निपदे
दीयते कार्यं मित्युक्तम् । एतेनैतादृशानुपूर्व्या भाष्येऽदर्शनेनेत्यमभिधानमसङ्ग
तमित्यपास्तम् तस्मै प्रभवति सन्तापादिभ्य । अत्र यत्प्रभवतीति तद्वाचट ।
प्रभवतीतीति । ह्रायुक्तपाठरीत्याह । चूडादिभ्य इति । रपिशाधमिति । तदुक्त

स्तदा प्राकारपदावृत्त्या एकस्य प्राकारपदस्य तत्सत्तापरत्वम्मथुरापदस्य मथुराधिकरणकप्राकारे लक्षणा वा अस्तीत्यस्य चाध्याहारः कार्य इति मथुरासम्बन्धिप्राकारसत्तासदृशी पाटलिपुत्राधिकरणकप्राकारसत्तेति बोध इति महदेव वैलक्षण्यम् । तयोः । इवार्थोपमानस्य तदभिन्नत्वेनाभिप्रेतस्य मथुरादिपदार्थस्य च । तद्वारक । उपमेयद्वारकः । स्वसिद्धान्तमाह । परे त्विति । षष्ठ्यर्थेति । एवञ्च सम्बन्धित्वेनैव प्रकृते बोधः । अत एव । षष्ठ्यर्थसामान्यात्प्रत्ययस्वीकारादेव । उपमानविशेषणादिति । उपमानस्य प्राकारस्य विशेषणान्मथुराशब्दादुपमेयस्य प्राकारस्य विशेषणात्पाटलिपुत्रशब्दाच्चेत्यर्थः । तदर्हम् । अर्हतीत्यर्हम् । पचाद्यच् कर्तृकर्मणोरिति तच्छब्दात्षष्ठीवारणायाह समस्तत्वादिति । द्वितीयान्तादेवायम्प्रत्ययः । अत एव विधिमर्हतीति तिङन्तेन विग्रहप्रदर्शनम्मूले । एवञ्च विषयविषयिभावरूपः सम्बन्धो द्वितीयार्थः । तस्य चार्हशब्दार्थयोग्यता कर्तृपदार्थैकदेशयोग्यतायामन्वयः । पूर्वसूत्रेणान्यथासिद्धिम्परिहरति । माहात्म्याप्रतीतेरिति । तदुक्तम्भाष्ये । किमर्थमिदमुच्यते । न तेन तुल्यं क्रिया चेद्वतिरित्येव सिद्धम् । न सिध्यति । तृतीयासमर्थात्तत्र यदान्येन कर्त्तव्यां क्रियामन्यः करोति तदा प्रत्यय उत्पाद्यते । इह पुनर्द्वितीयासमर्थादात्मार्हायां क्रियायामर्हतिकर्त्तरि निश्चितबलाधाने प्रत्यय उत्पाद्यते । ब्राह्मणवद्वर्त्तते एतद्वृत्तं ब्राह्मणमर्हतीति । आत्मार्हायामिति । द्वितीयान्तवाच्यस्यार्थस्यात्मनोऽर्हा या क्रिया तस्यामित्यर्थः । निश्चितबलाधान इति । निश्चितस्यार्थस्यान्ययोगनिवृत्त्यर्थं बलाधानम्पुनरुपादानेन नियमनमित्यर्थः । यथा ब्राह्मणस्य किञ्चिदाचरणम्प्रसिद्धमेवान्यसम्बन्धिनेतिप्रतिपादनाय पुनरुपादीयते एतदाचरणम्ब्राह्मणमर्हति न त्वन्यमिति तदेतत्सम्प्रवर्त्तत इति भावः । उपमानत्वाविवक्षायामपि प्रत्ययसिद्ध्यर्थमिदम् । तदाह । क्रियेतियदिति । चिच्छेदं कृतवत्स्वादिति । अत्र चिच्छेदेति क्रियापदम् । कृतः सम्पादो हस्तो येषान्तेषामिदं योग्यमित्यर्थः । तस्य भावस्त्वतलौ । भावे चाकर्मकेभ्य इत्यादाविति । आदिना यत्र भावविकारा इत्यादिपरिग्रहः । घनेनेति । प्रवृत्तिनिमित्तेनेत्यर्थः । न व्याप्तिरिति । न राजपुरुषत्वमित्यादौ राजत्वादिस्वरप्रत्ययवाच्यत्वापत्तिः । तत्र राजपुरुषेतिप्रकृतिजन्यबोधीयराजनिष्ठविशेषतानिरूपितप्रकारतावत्त्वेऽपि पुरुषनिष्ठा या प्रकारता नाति

विशेषणम्। प्रत्ययार्थे तुल्येऽभेदेन विशेषणमित्यर्थः। क चिन्क्रियात्वसम्भाव नया प्रकृत्यर्थविशेषणत्वमपि सम्भाव्यते इत्याशङ्कानिवारणायाह। स्वातन्त्र्येनेति। ननु शुक्ला इव गच्छतीत्यादिषु क्रियाया उपमानत्वसम्भवेन प्रकृत्यर्थविशेषणत्वमपि सम्भाव्यत इत्यत आह। क्वाद्यन्ताभ्यामिति। अत्रादिना तुमुन परिग्रहः। अत एव। तुल्यशब्दार्थेऽनन्वयादेव। न च तैलपाक इव घृतपाक इत्यत्र क्रियायास्तृतीयासमर्थत्वं सम्भवत्येवेति वाच्यम्। अत्रापि घञ्प्रतिपाद्यक्रियायाः सत्त्वभूताया एवोपमानत्वात्। ब्राह्मणेन तुल्यमधीत इत्यादौ ब्राह्मणादिशब्दानां ब्राह्मणकर्तृकाध्ययनलक्षणया तुल्यत्वोपपत्तिः। तुल्यशब्देन सादृश्यवानुच्यते तदेकदेशसादृश्ये तृतीयार्थस्य प्रतियोगित्वस्यान्वयो व्युत्पत्तिवैचित्र्यात्। ननु नृत्यवद्गमनमित्यादौ गमनशब्दार्थस्य सत्त्वरूपतया क्रियात्वाभावात्कथं वतिरत आह। नृत्यवदिति। सत्तयोरिति। नृत्यशब्दस्य नृत्यकर्तृकसत्त्वे लक्षणया नृत्यकर्तृकसत्ताया उपमानत्वङ्गमनकर्तृकसत्ताया उपमेयत्वमित्यर्थः। तत्र तस्येव। सप्तमीसमर्थात्षष्ठीसमर्थाच्च इवार्थे वतिरित्यर्थः। तस्य। मथुरायामिव पाटलिपुत्रेऽधीत इतिवाक्यस्य। मथुरया तुल्यमित्यत्र तुल्यार्थैरिति तृतीया प्रतियोगित्वरूपसम्बन्धार्थिका। मथुरायामिवेत्यत्र सप्तमी तु अस्मादेव ज्ञापकादिवार्थकशब्दयोगे सप्तमी भवतीति कल्पनया साधनीया साऽपि सम्बन्धार्थिकैवेति द्वयोर्वाक्ययोस्तुल्यत्वमित्यर्थः। तदुक्तम्भाष्ये। इवशब्देन योगे सप्तमीसमर्थाद्वतिं शास्ति तज्ज्ञापयत्याचार्यो भवतीवशब्दयोगे सप्तमीति। किमेतस्य ज्ञापनेप्रयोजनम्। देवेष्विव नाम ब्राह्मणेषु इत्यत्रापि सिद्धभवतीति। द्रव्यगुणादितुल्य इति। द्रव्यगुणादीनान्तुल्यत्वे द्रव्यगुणादिक्रियातुल्यत्व इति यावत्। मूले क्रियाग्रहणव्यावर्त्यावसरे गुणग्रहणं तत्सदक्रियोपलक्षणम्। पूर्वसूत्रविषये गुणतुल्यतायामत्युदाहरणं पुत्रेण तुल्यं स्थौल्यमिति। द्रव्यतुल्यतायां यथा। ब्राह्मणेन तुल्यास्य गौरिति। चादिनाऽभावपरिग्रहः। तदुदाहरणम्। पित्रा तुल्यः स्थौल्याभाव इति। प्रकृतसूत्रन्तु पितृवत् स्थूलः पुत्रः। ब्राह्मणवदस्य क्षत्रियस्य गौः। रोगिवदस्य भोजनाभाव इति। एवमादिविषये प्रवर्त्तत एव। पूर्वसूत्रविषयादस्य सूत्रस्य भेदकान्तरन्दर्शयति। किञ्चेति। तत्समानोपमेयसमाने। पूर्वसूत्रेण मथुरायामिवेतिविग्रहे चेद्वति

मित्तत्वावच्छिन्नत्वादयर्थः । प्रकृतिरर्थपरा । षष्ठयर्थश्चाश्रयत्वम् । यद्वेति द्वितीयपक्षे तु सम्बन्धः षष्ठयर्थः । एवञ्चोभयमतेनेति प्रवृत्तिनिमित्तस्यैव त्वाद्यर्थत्वमिति बोध्यम् । इकयोरित्यादिनो द्विवचनकयोरितिशेषस्वीकारेणाह । भावप्रधानेत्यादि । तादात्म्येनेति।जातिव्यक्त्योर्गुणगुणिनोः क्रियाक्रियावतोश्च तादात्म्यस्यैव स्वीकारात् । तादात्म्यञ्च भेदसहिष्णुरभेदः । स्वरूपेणेति । एतेन जात्यादीनाञ्च जातित्वादिना।बुद्धिविषयत्वमित्युक्तम् । तत्र । ब्राह्मणाः पूज्याः ब्राह्मणः पूज्य इत्यादौ । प्रवृत्तिनिमित्तस्य प्राधान्येन भानन्तु दिप्रत्ययसाध्यमितिभावप्रत्ययं विनापि चेत्प्रवृत्तिनिमित्तस्य प्राधान्यन्तदा तस्यासाधुत्वापत्तिः स्यादिति भाव. । अत एव । तादृशस्थले जातेः प्राधान्यादेव । अस्य । तस्य भावस्त्वतलाविति सूत्रस्य । अन्यथा । चकाराभावे । एतयो. । त्वतलोः । ताविति । नञ्स्नञाविव्यर्थः । ग्रहणमाणेति । पृथ्वादिभ्य इत्यादौ प्रत्ययविधिविषये ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्तीतिनिषेधात्तैवान्तदन्तेभ्यः प्राप्तिरिति भावः । यगणौ प्राप्ताविति । पत्यन्तेतिसूत्रे इगन्तेतिसूत्रे चान्तग्रहणस्य स्वत एव सत्त्वात् । उत्तर इति । यदि पत्यन्तेतिसूत्रद्वयविषय एव प्रतिषेधस्तदा पत्यन्तेतिसूत्रानन्तरमेव नञ्पूर्वात्तत्पुरुषादिति ब्रूयात्तथा न कृतमिति प्रकृते तथा करणन्तदन्तविधिम्पृथ्वादिविषये ज्ञापयति तथाचेति तत्पुरुषबहुव्रीह्योरुभयोरपि तदन्तत्वात्तत्पुरुषाच्च नञ्पूर्वादनेन निषेधे परिशेषाद्बहुव्रीहेरिमनिजादीनामुत्पत्तिः प्राप्ता तद्योक्तमभाष्ये नेष्यते । त्वतलावेवेष्यत इति । गणे । ब्राह्मणादिगणे । परिगणनफलमाह तेनेति । कृतयतीति । कृतमाचष्ट इत्यर्थे णिचि इष्टवद्भावाद्भावः प्राप्तोऽपि परिगणनान्नेत्यर्थः । यौवनमितीति । प्रश्चिति प्रकृतिभावः । भाष्ये क चिन्त्यमिति । वृत्तिग्रन्थे एवन्दर्शनाभ्युपगतोक्तम् । ननु गौपोपाध्यायिकेति इन्द्वेत्यादिसूत्रोदाहरणत्वेन मूले उक्तत्वदसङ्गतम् योपधादितिसूत्रेण सिद्धत्वादत आह । अस्यापीति । गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु । गोत्रवाचिनश्चरणवाचिनश्च प्रातिपदिकाद्भावकर्मणोर्वुञ्योर्वुञभवति । श्लाघादिषु विषयभूतेषु । तत्र श्लाघादीनां विषयत्वं यथाऽन्वि तथोपपादयति । श्लाघादयश्चेति । प्रत्ययार्थान्वयिन. । प्रत्ययार्थविषयतानिरूपिता या विषयता तच्छालिबोधविषया. । एतेन । वक्ष्यमाणदूषणेन । त्वस्याप्राप्तेरिति।

का मुख्यविशेष्यता तन्निरूपितप्रकारताया असत्त्वात्। शब्दस्यापि शाब्दबोधे प्रकारकतया भानमिति मते भावप्रत्ययवाच्यतापत्तिवारणायाह। स चेति। स च। भावश्च। यत्र बुद्धिस्थे सति। यस्मिन् बुद्धिविषयभूते सति। यद्विषयकबुद्धौ सत्यामिति यावत्। विशिष्टबुद्धिमिति विशेषणज्ञानस्य कारणतया विशेषणविशिष्टस्य बुद्धिविषयत्वं न तज्ज्ञानं विना विशिष्टज्ञानञ्च न भवतीति भावः। तत्त्वम्। प्रवृत्तिनिमित्तत्वम्। उपलक्षणमिति। प्रकारससर्गस्याप्युपलक्षणमित्यर्थः। एतन्मते राजपुरुषादिशब्दादिशब्दवाक्ये श्रूयमाणा या विभक्तिस्तदर्थसम्बन्धेन पूर्वपदार्थप्रकारकोत्तरपदार्थविशेष्यको बोधः। यथा राजविशिष्टः पुरुष इत्याकारकः। राजसम्बन्धवान्पुरुष इत्याकारकबोधाभिप्रायेणाह। यद्वेति। डित्थोऽयमित्यादिशब्दाद्बोधो डित्थशब्दप्रकारक एवेति स शब्द एव तत्र प्रवृत्तिनिमित्तशब्देन व्यवह्रियत इत्याशयेनाह। सञ्ज्ञाशब्दे प्रायः इति। यत्र तत्तद्धर्मपुरस्कारेण सञ्ज्ञिल्वेनाभिमतानामुपादानं कृत्वा सञ्ज्ञा विधीयते तत्र संज्ञाशब्दादपि तत्तद्धर्मप्रकारिका बुद्धिरिति तेषान्धर्माणाञ्च प्रवृत्तिनिमित्तत्वलाभाय इत्युपात्तम्। अत एव विशिष्टरूपोपादानविषया या गौणमुख्यपरिभाषा तया गोऽभवदित्यत्र ओदितिसूत्रेण प्राप्तसर्वनामस्थानसंज्ञावारणप्रयास्यं सङ्गच्छते। यत्र तु न सञ्ज्ञी सञ्ज्ञाशास्त्रे उपात्तो विशेष्यरूपेण तत्र तच्छब्दप्रकारकैवोपस्थितिः। यथा ध्यापप्रातिपदिकादित्यत्र। लौकिकशास्त्रेऽपि व्यवस्थामाह। परे त्विति। विशेष्यभूत इति। त्वान्तशब्दजन्यबोधीयविशेष्यताश्रय इत्यर्थः। प्रकृतिर्येति। यत्र त्वप्रत्ययचिकीर्षितस्तत्र प्रकृतिर्डित्थादिः। त्वान्तशब्दजन्यबोधस्वरूपमाह। डित्थशब्दवानर्थ इति। नन्वेवं यतस्त्वप्रत्ययस्ततो निर्विकल्पकापत्तिरत आह। डित्थ इत्यादित इति। सङ्ख्यादिप्रकारक इति। सङ्ख्या तत्र विभक्त्यर्थस्य प्रकारकतया भासते एवञ्च तज्जन्यबोधो न निष्प्रकारक इति भावः। ककारादीनाम्पदानां वर्णानामपि डुरित्यादिशब्दजन्यबोधविशेष्यत्वं इत्थं प्रक्रियामाह। कुत्वमित्यादेरिति। अन्यथा। कुत्वमित्यादिशब्दाच्छब्दस्यैवोपस्थितिस्वीकारे। जात्यादिशब्दसाधारण्यं नाह। भावत्वेन चेति। तदुक्तमर्थं। यस्य गुणस्य भावाद्द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलाविति। अत्र गुणशब्दः पर्यायवस्य भेदकधर्मस्य बोधकः। एवञ्च प्रवृत्तिनि

मित्तत्वावच्छिन्नत्वाद्यर्थः । प्रकृतिरर्थपरा । पदार्थपाधेयत्वम् । यद्देति द्वितीयपक्षे तु सम्बन्धः पदार्थः । एतच्चोभयमतेति प्रवृत्तिनिमित्तस्यैव त्वाद्यर्थत्वमिति बोध्यम् । द्व्येकयोरित्यादिनो द्विवैकवचयोरितिबोधस्वीकारेणाह । भावप्रधानेत्यादि । तादात्म्येनेति।जातिव्यक्त्योर्गुणगुणिनोः क्रियाक्रियावतोश्च तादात्म्यस्यैव स्वीकारात् । तादात्म्यञ्च भेदसहिष्णुरभेदः । स्वरूपेणेति । एतेन जात्यादीनाञ्च जातित्वादिना।बुद्धिविषयत्वमित्युक्तम् । तत्र । ब्राह्मणाः पूज्याः ब्राह्मणः पूज्य इत्यादौ । प्रवृत्तिनिमित्तस्य प्राधान्येन भानन्त्व दिप्रत्ययसाध्यमितिभावप्रत्ययं विनापि चेत्प्रवृत्तिनिमित्तस्य प्राधान्यन्तदा तस्यासाधुत्वापत्तिः स्यादिति भाव. । अत एव । तादृशस्थले जातेः प्राधान्यादेव । यस्य । तस्य भावस्त्वतलाविति सूत्रस्य । अन्यथा । चकाराभावे । एतयोः । त्वतलोः । ताविति । नञ्स्नञाविव्यर्थः । वक्ष्यमाणेति । पृथ्व्यादिभ्य इत्यादौ प्रत्ययविधिविषये ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्तीतिनिषेधान्नैतेषान्तदन्तेभ्यः प्राप्तिरिति भावः । यगणौ प्राप्ताविति । पत्यन्तेतिसूत्रे इगन्तेतिसूत्रे चान्तग्रहणस्य सत एव सत्त्वात् । उत्तर इति । यदि पत्यन्तेतिसूत्रद्वयविषय एव प्रतिषेधस्तदा पत्यन्तेतिसूत्रानन्तरमेव नञ्पूर्वात्तत्पुरुषादिति ब्रूयात्तथा न कृतमिति प्रकृते तथा करणन्तदन्तविधिम्पृथ्व्यादिविषये ज्ञापयति तथासति तत्पुरुषबहुव्रीह्योरुभयोरपि तदन्तत्वात्तत्पुरुषाच्च नञ्पूर्वादनेन निषेधे परिशेषाद्बहुव्रीहेरिमनिजादीनामुत्पत्तिः प्राप्ता तत्रोक्तभाष्ये नेष्यते । त्वतलावेवेष्यत इति । गणे । ब्राह्मणादिगणे । परिगणनफलमाह तेनेति । कृतयतीति । कृतमाचष्ट इत्यर्थे णिचि इष्ठवद्भावाद्भभावः प्राप्तोऽपि परिगणनान्नेत्यर्थः । यौवनमितीति । षभिति प्रकृतिभावः । भाष्ये तु चिन्त्यमिति । वृत्तिग्रन्थे एतन्दर्शनाभ्युनुक्तोऽक्तम् । ननु शैष्योपाध्यायिकेति द्वन्द्वेत्यादिसूत्रोदाहरणत्वेन मूले उक्तत्वादसङ्गतम् योपधादितिसूत्रेण सिद्धत्वादत आह । यस्यापीति । गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु । गोत्रवाचिनश्चरणवाचिनश्च प्रातिपदिकाद्भावकर्मणोर्वुञ्योर्वुञ्भवति । श्लाघादिषु विषयभूतेषु । तत्र श्लाघादीनां विषयत्वं यथाऽस्ति तथोपपादयति । श्लाघादयश्चेति । प्रत्ययार्थान्वयिनः । प्रत्ययार्थविषयतानिरूपिता या विषयता तच्छालिबोधविषयाः । एतेन । वक्ष्यमाणदूषणेन । त्वप्राप्तावितिः।

स्यत्रा बाधादिति भाव । पूर्वसूत्रविहितेति । द्वीत्राभ्य इतिसूत्रे त्वतलोरपि समन्यादिति भाव. ॥

## समाप्तश्च नञ्स्नञोरधिकारः ।

धान्यानाम्भवने । धान्यानामिति कर्त्तरि षष्ठी । भवनशब्दोऽधिकरणल्युडन्त । भवति जायतेऽस्मिन्निति भवनम् । परस्परेति । भवनशब्दक्षेत्रशब्दयो परस्परमन्वययोग्यत्वात् । क्षेत्रशब्दस्य शरीरवाचकतया यदि क्षेत्रशब्देन शरीर गृह्यते तदा भवनशब्दसामानाधिकरण्यन्नोपपद्यत इति भाव । एतेन क्षेत्रपदस्य प्रयोजनमप्युक्तम् । अन्यथा भवनशब्दस्य सत्त्वाधारवाचकत्वमपि सम्भाव्येत तथा सत्यतिप्रसङ्ग स्यात्तदाह । मुद्गानामिति । विभाषा तिलमाषोमा । पूर्वेच चेति । यवयवकतिसूत्र इत्यर्थ । के चित् । सिद्धान्तानुसारिण । तस्या उपपत्ति पूर्ववत् । सर्वचर्मण । सर्वचर्मन्शब्दात्तृतीयान्तात्कृतइत्यर्थे खखञौ प्रत्ययो स्त । इदन्निपातनमिति । समासनिपातनमित्यर्थ । प्रत्ययार्थघटकशक्तिनिरूपितकरणत्वस्य चर्मणि न्याय्यत्वात्तृतीयान्तादिति लभ्यम् । यथामुखसमुखस्य दर्शन ख । दर्शनशब्दोऽत्राधिकरणल्युडन्त आदर्शादिवाचक । यथाऽसादृश्यइतिनियमात्सादृश्येऽव्ययीभावप्राप्तावाह । सूत्रे निपातनात्सादृश्येऽव्ययीभाव इति । दर्शनशब्देन कृदन्तेन योगात्कर्मणि षष्ठी । नाव्ययीभावादित्यम । प्रत्ययो नेष्यत इति । भाष्यकारीयव्याख्यानसम्वादादनिष्टि । तथाहि सम्मुखेति किन्निपात्यते सम्मुखेति समस्यान्तलोप । सम्मुखेति समस्यान्तलोपो निपात्यते । समसुखस्य दर्शन सम्मुखीन इति । कथन्तर्हि सयुगे सम्मुखीनन्तम्मुखु प्रसहते तु कइति । सम्मुखीनादर्शस्य यथासम्मुखावस्थानकर्तृत्व तथा य सम्मुखावस्थानकर्त्ता तत्र तद्धर्मकृतसादृश्यादुपचारात्सम्मुखीनशब्द प्रयोग इत्यनेहि । तत्सर्वादे पत्रपात्रम् । सर्वादेरिति बहुव्रीहि प्रातिपदिकमन्यपदार्थ । पत्र पात्रमिति षष्ठ्यर्थे प्रथमा । तदन्तप्रातिपदिकविशेषणमेवद्वितीयान्तात्सर्वशब्दादवयवकात्पथ्याद्यन्तात्प्रातिकाद्व्याप्नोतीत्यर्थ ख स्यादित्यर्थ । अत्र सर्वादेरित्यादिशब्दोपादानेन सर्वशब्दाद्यवयवकसमासलाभे सति यत्र पथिन्शब्दान्तसम स इकार समासान्तस्तत्रापि तस्य समाससमुदायाव

यजत्वात्तथादिपर्यन्तसमासग्रहणेन ग्रहणमवत्येवेति बोध्यम्। अनुपदसर्वान्ना
यानथ वद्धाभक्षयतिनेयेषु। अत्र बद्धाभक्षयतिनेयशब्दानान्निपातनात्तिङन्तघ
टितो द्वन्द्व। आद्य इति। यदाऽनुरायामितदाऽनुपद बद्धेत्यत्र यस्य चायाम इ
ति समास इत्याशयेनाह। पादसम्बन्धिदैर्घ्यसदृशदैर्घ्योपलचितेति। अन्ये।
अनुशब्दस्य सादृश्यार्थकत्वे। यथार्थ इत्यव्ययीभाव। निर्देशात्। अयानया
न्तसमासोत्तरन्द्वितीयानिर्देशात्। ननु समाहारद्वन्द्वात्प्रथमापि सम्भाव्यत इ
त्यत आह। योग्यत्वादिति। बद्धेत्याद्यर्थेऽन्वययोग्यत्वात्। अयानय स्थलवि
शेष इति यन्मूले व्याख्यातन्तल्लाभप्रकारमाह। अय प्रदचिणेति। असौ। अ
यानयशब्द। तत्स्थानानामिति। तत् अयानयाख्य स्थान येषामित्यर्थ।
परे। परद्यूतकारशारै। नोत्थास्यते। नाध्यास्यते। पदम्। स्थानम्। युष्मा
दिस्थानं हि तादृशम। तत्र स्थितानाम्परकीयैर्बाधा नेति द्यूते प्रसिद्धम्। शु
गन्ध्येभिर्द्यूतकारास्ते शारा इति शारशब्द काष्ठादिमयेषु देवनसाधनेषु व
र्त्तते। प्रधानकर्मणीति। प्रधाने नीह्रकृष्वहामित्युक्तं। परोवरपरम्परा मू
लेऽवरश्चोत्वन्निपात्यत इति। अवरस्यादरिति शेष। उत्वस्वं दप्रत्ययसन्नियो
गेनेत्यत्र साधकमाह। अत एवेति। प्रत्ययसन्नियोगेनेतिस्वीकारादेव। परम्परे
त्यत्र तु परपरतराणाम्परम्परभाव। न चास्यापि निपातनम्प्रत्ययसन्नियोगेने
ति पारम्पर्यायाता इति कथ साधुरिति वाच्यम्। अव्युत्पन्नपरम्पराशब्दात्स्वा
र्थे चातुर्वर्ण्यादिषु पाठेन साधुत्वात्। अवारपार्यन्तानुकाम गामी। गामीत्य
त्र गमेरिनिर्बाहुलकात्केवलाण्णिच्चेति णित्वम्। भविष्यगम्यादय इति भविष्य
त्कालता। आवश्यके वा णिनि। अवारपारशब्दाद्विधीयमान केवलादवारश
ब्दात्कथमत आह। रा्ष्ट्रावारपारादिति। समाया समाया विजायते। विजाय
त इत्यर्थे पदसमुदायात्प्रत्यय। पूर्वपद इति। पूर्वस्मिन् पद इत्यर्थ। वीप्साया
न्द्विर्वचन वा। समासवद्भाव। विपूर्वको जनिर्गर्भविमोचने तदाह। गर्भ विमु
ञ्चतीत्यर्थ इति। सेन। गर्भविमोचनेन। तयोश्चारणादिति। यत्नोपघटितशब्दो
च्चारणादित्यर्थ। अद्यश्वीनाऽवष्टब्धे। अद्यश्वीनेति निपात्यते। अवष्टब्धेऽर्थे।
आसन्नसन्नवष्टब्धम्। अविदूरम। एतादृश एवार्थे स्तम्भधातो सस्य अवाच्चालम्ब
नाविदूर्ययोरितिसूत्रेण षत्वविधानात्। अविभक्तिकमिति। एतेन स्त्रियामिदमि

पातनमिति शङ्का निरस्ता। व्याख्यानादिति। अद्यश्वीनमरणमितिप्रयोगदर्श नमूलकाद्व्याख्यानादित्यर्थः। अद्य श्व इत्यत्र वार्थे समासः। अविभक्तिकत्व स्वीकारेण। अद्यश्वीना इत्यस्यैव निपातने तु अद्यश्वो वा वियोग अद्यश्वी नङ्गमनमित्यत्र न स्यात्। आगवीन। गो प्रत्यर्पण इति। लक्षणया गोशब्द स्य तत्र वृत्तिः। तदुक्तम्भाष्ये। आगवीन इति किन्निपात्यते। गोराङ्पूर्वादात्त स्य प्रतिदानात्कारिणि खो निपात्यते। आत्तस्य गोः। प्रतिदानात् कर्म करो ति। आगवीनः कर्मकर इति। अत्र भाष्ये कर्मकर इत्युपादानाद्वक्ष्यमाणवेतन त्वेन गौर्दत्तस्य एवागवीन इत्युच्यते न तु गोर्बन्धकत्वेन येन गृहीतस्य एव स्वीयस्य द्रव्यस्याधमर्णेन दाने कृतेऽपि गाम्प्रतिददाति सोप्यागवीन इत्युच्यते तदेतदाविष्कर्तुमाह। यो गवा भृत इत्यादिरिति। अनुग्वलगामी। अनुगुग वादलंगामीत्यर्थे ख स्यात्। अलमशब्द पर्याप्तौ। पर्याप्ति पूर्णता। सा च य दुद्देशाधिकरण गोकर्तृक गमनन्तत्तद्देशाधिकरणकगोगमनान्तरम्पयाद्गमनम तथा यः करोति स एवमुच्यते। अव्ययत्वादिति। अव्ययीभावस्याव्ययत्वादिति भाव। इत्येवेति।कर्त्तृकर्मणोरितिसूत्रेण षष्ठ्या प्राप्ते। गोष्ठात्खञ् भूतपूर्वे। अत्र भूतपूर्वशब्दो गोष्ठशब्दस्यैव विशेषणम्।गोष्ठशब्दाद्भूतपूर्वोपाधिकात्स्वार्थे खञ् स्यात्।चरटो बाधा नेतीति। तेन गोष्ठचर इत्यपि भवतीति तेषामाशय।शैली नकौपीने। शालीनकौपीनशब्दौ निपात्येते। अधृष्टे अकार्ये चाभिधेये।अप्रधृ ष्टोऽप्रगल्भः। अकार्यङ्करणानर्हम। लाचणिकाभ्यामिति। तथा च भाष्यम्। उ त्तरपदलोपोऽत्र द्रष्टव्यः। शालाप्रवेशनमर्हत्यधृष्टः शालीनः। कूपावतरणमर्ह त्यकार्यन्तत्कौपीनम्। व्रातेन जीवति। निर्देशादेव तृतीया समर्थविभक्ति। अत एव निपातनात्। व्रातेनेतिनिपातनादित्यर्थः। किं व्रातन्नाम। नानाजा तीया अनियतवृत्तय उत्सेधजीविन सङ्घा व्राता। तेषाङ्कर्म व्रातम्। व्रात कर्मणा जीवन्ति व्रातीन इति भाष्यात्। उत्सेधजीविन इत्यस्य उत्सेधेन शरी रायासेनेत्यर्थः। निपातनाच्ययणश्च इत्यात्व इत्यस्य साधनार्थम्। साप्तपदीन सख्यम्। साप्तपदीनमिति निपात्यतेसख्यञ्चेद्विशेष्यम्।कार्यं साप्तपदीनं सखेति। धर्मं आदिभ्य इत्यचा सिद्धम्। छतमिति पाठ इति। तथा च तर्थेनोरितमिति भाव। तस्य पाकमूले। यवाभद्रामिति। पील्वादिकर्णादिभ्यः षष्ठ्यन्तेभ्य पा

कमूले वाच्ये कुणप्जाहचौ प्रत्ययौ स्तः। पाकः परिणामः। मूलमुपक्रमः। जाहचो जकारस्य नेत्वम्। फलाभावात्। आदिशब्दद्वयोपादानं स्पष्टार्थम्। पक्षात्तिः। तस्य पाकमूल इति सूत्रान्मूलग्रहणमात्रमनुवर्त्तते। एकयोगनिर्द्दिष्टानां क्व चिदेकदेशोऽप्यनुवर्त्तत इतिवचनात्। न चैकयोगनिर्द्दिष्टानां सह वा प्रवृत्तिरितिपरिभाषाप्यस्तीति वाच्यम्। पूर्वामाश्रित्य मूल इति वक्तव्यमितिवार्त्तिकप्रत्याख्यानपरभाष्यप्रामाण्येन पूर्वपरिभाषाया एव प्रवृत्तिस्वीकारात्। पक्षस्य मूलं पक्षतिः। अत्र पक्षपदेन मासावयवः पक्षिणामवयवश्च गृह्यते। तयोर्मूलम्। प्रतिपत्। पक्षिणः पार्श्वावयवविशेषश्च। तेन वित्तः। तृतीयान्तादित्त इत्यर्थे चुञ्चुप् चणप् एतौ प्रत्ययौ स्तः। वित्त प्रतीतः विख्यात इति यावत्। विनञ्भ्याम्। अत्र न सहेति व्यस्तं पदद्वयम्। प्रकृत्यर्थविशेषणमिति। तदुक्तं भाष्ये। नायम्प्रत्ययार्थः किन्तर्हि प्रकृतिविशेषणमेतत्। विनञ् इत्येताभ्यामसहवाचिभ्यां नानाञौ भवतः। कस्मिन्नर्थे। स्वार्थे इति। विशब्दस्यासहार्थे वृत्तिश्च घटेन विनेतिप्रयोगे सति घटसाहित्याभावप्रतीतेरस्त्येव। वेः शालच्। वेः शालच् शंकटच् इत्येतौ प्रत्ययौ स्तः समाधानक्रियावचनाद्विशब्दादेतावपि प्रत्ययौ स्वार्थे। वस्तुतो रूढ्याऽर्थविशेषप्रतिपादकत्वम्प्रत्ययान्तयोरिति बोध्यम्। एतत्प्रत्याख्यानपरेति। उपमानाद्वा सिद्धमित्यादिना कृतम्प्रत्याख्यानन्तत्परेत्यर्थः। यथा गवां स्थानङ् गोष्ठम् तयोष्ठाणाम्। गोष्ठशब्दस्य साहश्यात्पश्वन्तरस्थाने वर्त्तमानस्य पश्वन्तरवाचकेन समास इति भावः। चितः पठिता इति। मूल इति शेषः प्रत्याख्यानपक्षे समासत्वादन्तोदात्तत्वम्भविष्यतीति भाव इति। पश्वादिति। गोष्ठादयः स्थानादिषु पशुनामादिभ्य इति वार्त्तिकस्थादिशब्दार्थेत्यर्थः। एवञ्च वार्त्तिककारेण सामान्यशब्देनोक्तानामपि स्पष्टप्रतिपत्त्यर्थं विशेषशब्देनोपादानङ्कृतमिति भावः। अधिकम्भाष्यकैयटयोः स्पष्टम्। नते नासिकायाः। नासिकासम्बन्धिनतत्व इति। नासिकासाधने नमनेऽवशब्दस्य वृत्तिरिति भावः। यकारादिः प्रकृते टीटच्। तेन टस्य नेत्वम्। निर्विडज्विरीसचौ। निविडाः। परस्परमतिशयेन मिलिताः। पत्राणमन्य इति। एवञ्च वृत्तिकारोक्तायां नते नासिकाया इत्यस्यानुवृत्तौ प्रमाणाभाव इति भावः। नासिकासाधनकनमनस्य प्रत्ययवाच्यता भ्रममिरस्यति। तत्र वर्त्तमानादिति। उच्चारणार्थ इ-

पातनमिति शङ्का निरस्ता । व्याख्यानादिति। अदाखीनमरणमितिप्रयोगदर्श नमूलकाद्व्याख्यानादित्यर्थः । अद्य श्व इत्यत्र वार्थे समास । अविभक्तिकत्व स्वीकारेण । अद्यश्वीना इत्यस्यैव निपातने तु अद्यश्वो वा वियोग अद्यश्वी नङ्गमनमित्यत्र न स्यात् । आगवीन । गो प्रत्यर्पण इति । लक्षणया गोशब्द स्य तत्र वृत्ति । तदुक्तमाष्यं । आगवीन इति किन्निपात्यते। गोराङ्पूर्वादात्त स्य प्रतिदानात्कारिणि खो निपात्यते । आत्तस्य गो । प्रतिदानात् कर्म करो ति । आगवीन कर्मकर इति । अत्र भाष्ये कर्मकर इत्युपादानाद्यस्मै वेतन त्वेन गौर्दत्तस्स एवागवीन इत्युच्यते न तु गोर्बन्धकत्वेन येन गृहीतस्स एव स्वीयस्य द्रव्यस्याधमर्णेन दाने कृतेऽपि गामप्रतिददाति सोप्यागवीन इत्युच्यते तदेतदाविष्कर्तुमाह । यो गवा भृत इत्यादिरिति । अनुगवलगामी । अनुगुश ब्दादलगामीत्यर्थे ख स्यात् । अलंशब्द पर्याप्तौ । पर्याप्ति पूर्णता । सा च य याद्दशाधिकरण गोकर्तृकं गमनन्तादृशाधिकरणकगोगमनानन्तरम्यद्वाद्गमनम् तथा य करोति स एवमुच्यते । अव्ययत्वादिति । अव्ययीभावस्याव्ययत्वादिति भाव ।इत्वेवेति।कर्त्तृकर्मणोरितिसूत्रेण षष्ठ्या प्राप्ते गोष्ठात्खञ् भूतपूर्वे । अत्र भूतपूर्वशब्दो गोष्ठशब्दस्यैव विशेषणम्।गोष्ठशब्दाद्भूतपूर्वार्थाधिकात्स्वार्थे खञ स्यात्।चरटो बाधा नेतीति। तेन गोष्ठचर इत्यपि भवतीति तेषामाशय ।शाली नकौपीने । शालीनकौपीनशब्दौ निपात्येते । अधृष्टे अकार्ये चाभिधेये।अप्रष्ट ष्टोऽप्रगल्भ । अकार्यङ्करणानर्हम् । लाक्षणिकाभ्यामिति । तथा च भाष्यम् । उ त्तरपदलोपोऽत्र द्रष्टव्य । शालाप्रवेशनमर्हत्यधृष्ट शालीन । कूपावतरणमर्ह त्यकार्यन्तत्कौपीनम् । व्रातेन जीवति । निर्देशादेव तृतीया समर्थविभक्ति । अत एव निपातनात् । व्रातेनेतिनिपातनादित्यर्थ । किं व्रातम्नाम । नानाजा तीया अनियतवृत्तय उत्सेधजीविन सङ्घा व्राता । तेषाङ्कर्म व्रातम् । व्रात कर्मणा जीवन्ति व्रातीन इति भाष्यात् । उत्सेधजीविन इत्यस्य उत्सेधेन शरी रायासेनेत्यर्थः । निपातनाद्ययणश्च इहाद्य इत्यस्य बाधनार्थम् । साप्तपदीन सख्यम् । साप्तपदीनमिति निपात्यतेसप्तर्षे द्वितीयसमाकाय साप्तपदीन सखेति। अर्श आदिभ्य इत्यचा सिद्धम् । इतमिति पाठ इति । तथा च तयैवोचितमिति भाव । तस्य पाकमूले। यत्रासङ्गमिति । पील्वादिकर्णादिभ्य पष्ठान्ताभ्य पा

वत्वन्तात्स्वार्थे द्वयसज्मोत्रचो बहुलमिति। तत्रैव। प्रमाण एव। भिन्नोपाधिकत्वात्। प्रकृत्यर्थविशेषणीभूतार्थस्य भिन्नत्वादित्यर्थः। वतुपोऽप्यत्र विधिरिति। तदुक्तभाष्ये। एतदेव ज्ञापयति भवति किमिदम्यां वतुवितीति। एतेन प्रत्ययान्तरत्वभ्रमनिवारकत्वेन। भाष्योक्तमेव पक्षान्तरमाह। यद्देति। इदमो निवृत्त्यर्थमिति। अन्यथैकयोगनिर्दिष्टत्वात्तस्याप्यनुवृत्तिः स्यात्। पूर्वेत्र। यत्त देतेभ्य इतिसूत्रे। प्रश्न इति। किम्शब्दस्य प्रश्नार्थकत्वादस्य लाभः। प्रश्नो युक्त एवेति। अत एवास्य नित्यं बहुवचनान्तत्वम्। तेन। द्विविधस्यापि समुदायस्य ग्रहणेन। यस्य चित्त्वप्रयुक्तमन्तोदात्तत्वन्तदवयवस्यैवान्याचोऽनुदात्तत्वं शेषनिघातेनेत्यभिप्रायेण शङ्कते। नन्विति। प्रकृतेरपीति। चितः सप्रकृतेरितिवचनात्। आदिरुदात्त इति। अयजादेश आद्युदात्त इत्यर्थः। ननूदात्तपदमन्त्यस्यैवोदात्तत्वम्बोधयत्वित्यत आह। अन्तोदात्तत्वम्येति। एवञ्चानुदात्तम्पदमितिपरिभाषैकवाक्यतया सर्वोदात्तत्वमयुक्तमिति भावः। बाधितुमुदात्तग्रहणमिति। तथा चोदात्तग्रहणसामर्थ्यादामन्त्रिताद्युदात्तत्वं बाधित्वाऽन्तोदात्तत्वम स्त्विति भावः। चित्स्वरस्यैवेति। स्थानिवत्त्वे नेत्यादि। इदम्। तयपः स्थानेऽयजादेशविधानम्। प्रतिषेध। स्थानिवद्भावस्य प्रतिषेध। तदसम्बन्धेऽपीति। आद्युदात्तत्वस्यासम्बद्धत्वेऽपीत्यर्थः। अन्तोदात्ततया। घृतादिपाठादन्तोदात्ततया। ससुदायानुबन्ध। प्रत्याहारसम्पादकत्वेन ससुदायानुबन्ध। स्वानुबन्ध। इयम् चयमित्यादावन्तोदात्तत्वसम्पादक। तदस्मिन्नधिकम्। प्रथमासमर्थादस्मिन्निति सप्तम्यर्थे दशान्तात्प्रातिपदिकाड्डः स्यात्। यत्प्रथमासमर्थमधिकवाचकञ्चेत्। समानजातीयत्व इतीति। प्रत्ययार्थापेक्षया समानजातीये प्रकृत्यर्थे अधिके सति प्रत्यय इत्यर्थः। इतिकरणन्त्वयोऽयमर्थ इति। इतिशब्दो हि लौकिकीं विवक्षामनुसारयति। लोके च समानजातीय एव प्रयोगो दृश्यते। तदुक्तम्। अधिके समानजाताविति वार्त्तिकङ्कृता। शदन्तविंशतेश्च। तदस्मिन्नधिकमित्यर्थेशदन्ताद्विंशतिशब्दाच्च प्रातिपदिकाड्ड स्यात्। तेन। सङ्ख्याग्रहणानुवर्त्तनेन। सङ्ख्याया एव यत्राधिक्यम्प्रतिपाद्यते तत्र प्रत्यय इष्यते यत्र तु सङ्ख्येयस्याधिक्यन्तत्र नेत्यर्थः। तत्फलमाह। गोभिंशदिति। अत्र हि सङ्ख्येयस्याधिक्यप्रतिपादनान्न प्रत्यय इति

ा। न तु विवक्षितः। तथात्वे उच्चारणसामर्थ्यादिन्चप्रत्यये परे तस्य लोपा
वे गुणे रूपासिद्धिः स्पष्टैव। क्षिपकस्य चिथिल्। वार्त्तिकमिदम्। क्षिपकस्य
ादेशापेक्षणात् षष्ठी। अस्य चतुर्थी इत्यर्थे लप्रत्ययो भवति। क्षिपकस्य चि
थिलादेशो भवतीत्याकाङ्क्षायाम्प्रातिपदिकोऽधिकारात्प्रातिपदिकादिति लभ्य
तच्च प्रातिपदिकसुपस्थितत्वात् क्षिपकशब्दात्मकमेव गृह्यते। मञ्चाधिकारल
ेति। अत एव कोशे उक्तम्। उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यकेति। प्र
न तु गौणः प्रयोग इत्याशयेनाह। समुद्र इति। ठस्येक इतिसूत्रस्याङ्गाधि
रपाठफलन्दर्शयति। ठस्याङ्गेति। प्रमाणे द्वय। प्रकृतिविशेषणमिति। तदु
भाष्ये। प्रमाण इति नायमप्रत्ययार्थः। क्व तर्हि प्रत्यया भवन्ति। तदिति। कु
एतत्। अस्येत्यनुवर्त्तनात्। क्व प्रकृतम्। तदस्य सञ्जातन्तारकादिभ्य इ
ति। पारिभाषिकार्थकस्यैव ग्रहणमिति नियमनिरासायाह। प्रमाणमात्रे-
। अत एव। प्रमाणशब्दस्य परिच्छेदकमात्रपरत्वादेव। प्रस्थमात्रमिति। प्र
परिमाणमस्येत्यर्थः। केचिदित्यनेन सूचितामरुचिं सूचयन्नाह। अन्ये-
ति। अत एव। आयामपरिच्छेदकस्यैवप्रमाणशब्देनग्रहणादेव। तेन। ता
विशेषपदोपादानेन। विशेषस्तुपरिमाणन्तुसर्वतइति। आयामस्तु प्रमाणं
ादिति। कैयटोपि चिन्त्य एवेति। उक्तभाष्यादायामवाचिन एवेतिनियमा
ति भावः। लुगिति। ल इति लुकः प्राचां संज्ञा। ऊरुद्वयसमिति। ऊरुग
स्योर्ध्वावस्थितवस्तुपरिच्छेदकत्वेनोन्मानत्वात्। दिष्ट्यादीनान्तु पारिभापि
माणत्वं स्पष्टमेव। यदा आयामेति। उभयथा परिच्छेदकत्वमेतेषां लोक
द्दमेव। एतत्सामर्थ्यादिति। प्रमाणात्तद्विगोर्लुग्विधानसामर्थ्यादित्यर्थः। मा-
त्रति। न तुद्वयसच्दघ्नचो। तयो प्रथमस्य द्वितीयस्येत्यनेनोन्मानवाचकादिव
मनात्। न च प्रकृतवार्त्तिके नित्यग्रहणं व्यर्थम्। विकल्पस्याप्रकृतत्वादि-
वाच्यम्। प्रमाणे ल इत्यस्य पूर्वसूत्रेण यत्र मात्रच् तत्रैव लुग्विधायकतया
स्यान्नेत्यर्थविवक्षायां शममात्रमित्यत्र यथा नीत्तरवार्त्तिकविधेयस्य लु
तथा द्वौ शमौ स्यातामित्यर्थविवक्षाया द्विशम इति रूपमिष्यते न तु तत्र
वचः श्रवणङ्कदाचिद्भवतीति नित्यं लुगेव द्विगोर्यथा स्यादित्येयमर्थं तत्सत्वा
तेन। प्रमाणेतिवचनं प्रयाणार्थं देनोपादानेन। बहुमन्यतृणमहित इति।

प्रातिपदिकात्पूरण इत्यर्थे तस्मिन्नर्थे डडित्यर्थः । पूर्यतेऽनेनेति करणे ल्युट् । पूर्यत इत्यस्य सङ्ख्याशब्दः पञ्चमादिर्यस्य सद्भावे प्रवर्त्तत इत्यर्थः । एतेन यस-ङ्ख्यावाचसङ्ख्याशब्दात्पूरणार्थकप्रत्ययान्तशब्दबोध्यसङ्ख्यायाः प्रत्ययप्रवृत्तौ भवत-स्तु पूरण इत्युच्यत इत्युक्तं भवति । अत्र भाष्ये द्वितीयेऽध्यायेऽष्टम इति न प्राप्नोतीति शङ्कां कृत्वा चरमोपजातिपूर्वस्मिंश्चानपगते । चरमोपजातिपूर्वस्मिंश्चानपगते प्रत्यय इति वक्तव्यम् । गणनायां क्रियमाणायां पूर्वस्मिन्संख्येयेऽनपगते बुद्ध्या परिच्छिद्योत्तरसङ्ख्याबुद्धिः पश्चादुपजायते तत्र प्रत्यय इत्यर्थः । एतेन गणनायां यस्य चरमसङ्गणना भवति तस्मिन्नभिधेये प्रत्ययः । इत्युक्तं भवति । अत एव भाष्यवतोक्तम् द्वितीयेऽध्यायेऽष्टम इति प्राप्नोति । भवत्वेवेति । न च पञ्चानाम्पूरण इत्यत्र पञ्चन् शब्दस्य सङ्ख्येयपरत्वेऽपि पञ्चानाम्पूरणः पञ्चम इत्यत्र चरमगणिते यथा प्रत्ययो भवति तथा पञ्चानामुष्ट्रिकाणाम्पूरणो घट इत्यत्रापि प्राप्नोति । उष्ट्रिका च घटपरिमितेनोदकेन पञ्चतः पूर्यन्ते तादृशी मृन्मयचर्ममयो वा पात्रविशेष इति वाच्यम् । सङ्ख्याया अवयव इति सूत्राद्वितीयसङ्ख्याग्रहणानुवृत्त्या सङ्ख्यायाः पूरणे वर्त्तमानात्संख्याशब्दात्प्रत्ययविधानेन सामञ्जस्यात् । तदेतदुक्तम्प्रवृत्तिनिमित्तसङ्ख्यापूरण इति । नान्तादसंख्यादेर्मट् । डडित्यनुवर्त्तते । तच्च नान्तादिति पञ्चम्या षष्ठ्यन्तत्वेन विपरिणम्यते । नान्तादसङ्ख्यादेः परस्य डटो मडागमः स्यादित्यर्थः । नचैवं डटोऽननुवृत्तावपि मट्प्रत्यय एवास्तामिति वाच्यम् । षट्कतीति सूत्रस्यागमविधायकतया तत्र मण्डूकानुप्लुत्या डड्ग्रहणमनुवर्त्तनीयमिति क्लेशापत्तेः । ननु षट्कतीतिसूत्रेऽनुवर्त्तमानस्य डडित्यस्य सप्तम्यन्तत्वमवश्यं वाच्यमेव प्रकृतसूत्रेऽप्यर्थाधिकारात्तथैवास्तु चागममस्तु सुकर्त्तव्य इत्यत आह । मुक्तु नक्तत इति । षट्कतिकतिपयचतुराम् । इह षष्ठीनिर्दिष्टत्वात्थुक आगमत्वमेव । चतुरश्छयतौ द्वितीयाभ्यां प्रत्ययाभ्यां डटो बाधाभावायाह । छयतावितीति । द्वेस्तीयः । द्विशब्दात्सङ्ख्यावाचिनः पूरणेऽर्थे तीयप्रत्ययः स्यात् । अस्य प्रत्ययत्वे साधकमाह । प्रत्ययाधिकार इति । नास्येति । सङ्ख्यावाचकस्येत्यर्थः । ननु यद्यपूरणस्तीयशब्दोऽस्ति तदा पूरणाद्भाग इतिसूत्रे पूरणग्रहणं व्यर्थमत आह । सर्वत्रेति । त्रेः सम्प्रसारणञ्च । त्रिशब्दात् पञ्चम्यात्पूरणेऽर्थे तीयप्रत्ययः स्यात् तत्सन्नियोगेन त्रिशब्दस्य सम्प्रसा-

भावः । अल्पग्रहणादिति । अन्यथा प्रत्ययग्रहणपरिभाषया त्रिंशच्चत्वा रिंशच्छब्दयोरेव ग्रहणं स्यान्न तु एकत्रिंशच्छब्दस्य तस्य तत्त्वाभावादल्पग्रहणेन तु सा परिभाषा बाध्यत इति भावः। विंशतावप्युक्त इति। तदुक्तं वार्तिककृता। विंशतेश्च । विंशतेश्चान्तग्रहणं कर्त्तव्यम् इति । सङ्ख्याया गुणस्य निमाने मयट्। समानभाग इति। समानावयव इत्यर्थः। द्विगुणस्त्रिगुणमित्यादिस्थले गुणशब्दस्य भागार्थकत्वस्य लोकप्रसिद्धत्वात्। आधिक्य इति । तदुक्तं भाष्ये । भूयसः भूयस इति वक्तव्यम्। किम्प्रयोजनम्। भूयसो वाचिकायाः सङ्ख्याया उत्पत्तिर्यथा स्यात्। अल्पीयसो वाचिकाया उत्पत्तिर्मा भूदिति। भूयस इति। निमेयभागसङ्ख्याया निमानभागसङ्ख्या यदाऽधिका भवति तदा प्रत्ययो यथा स्यात्। एको यवभागो निमानमस्योदश्विद्भागस्येत्यत्र मा भूदिति विवक्षितम्। अधिका भवतीत्यनेनाधिक्यमात्रविवक्षा प्रत्ययोत्पत्तिनियामिका न तु बहुत्वमप्यतिशय इति। निमेयस्यैकत्वे इति। तदुक्तं भाष्ये। एकोऽन्यतर एकश्चेदन्यतरो भवतीति वक्तव्यम्। इह मा भूत्। द्वौ यवानां त्रय उदश्वित इतीति। अत्र कैयटः। अन्यतरशब्देन नियमेयमेव विवक्षितम्। एक एव यदि निमेयगुणो भवति तदा प्रत्ययः द्वयोर्बहुषु च निमेयगुणेषु न भवति। निमानेऽधिकत्वस्योक्तत्वात्सामर्थ्यमवलम्ब्योक्तमन्यतरशब्देन निमेयमेवेति। द्वौ यवानामितिभाष्यस्य द्वौ भागौ यवानान्निमानमुदश्वितस्त्रयो भागा निमेयमित्यर्थस्ततः पुनः शंका कैयटे ननु भूयस्त्वस्याभावान्न भविष्यतीति। एवं शङ्काकृत्वा तेनैव समाहितमेवं तर्ह्युदाहरणदिगियम्। इदन्त्वत्रोदाहरणन्त्रयोऽयवानान्द्वावुदश्वित इतीति। अथ वा द्वौ यवानान्निमेयौ त्रय उदश्वितो भागान्निमानमिति विवक्षायामुदाहरणम्। ततो भाष्ये उक्तं समानानाम्। समानाञ्चेति वक्तव्यम् इह माभूत्। एकोयवानामध्यर्द्धमुदश्वित इतीति। निमेय भागस्य येन केनापि निमानभागेन समानत्वे सति यदा निमेयसङ्ख्या निमानसङ्ख्यातोऽधिका भवति तदा प्रत्यय इत्यर्थः। तेनेति। पूर्वोक्तभाष्यसम्मतव्याख्यानेनेत्यर्थः। ननु द्विमयमित्यत्र द्विशब्दस्य यवानामित्यत्रापेक्षत्वात्कथं वृत्तिरत आह। द्विशब्दस्येति। ननु मूले द्विमयमुदश्विद्भागेति कथमुचितमत्रायमुदश्विदितीत्यत आह। उदश्विद्भागस्याप्येति। तस्य पूरणे डट्। तस्य निमेयसङ्ख्यासङ्ख्यानिमि-

अध्यायानुवाकयोर्लुक्।प्रातिपदिकान्मत्वर्थे छः स्यादध्यायानुवाकयोरभिधेययोः। लुक् च। कस्य लुगित्याकाङ्क्षायामनेन सूत्रेण विहितस्य छस्येत्यर्थो लभ्यते। एवञ्च विधानसामर्थ्याद्विकल्प इत्याह। मुलेऽविधानेत्यादि। तच्च छविधानन्त्र साचादित्याशयेनाह। ज्ञापकसिद्धेति। शब्दपरा इति। मत्वर्थपरा इति शेषः। आकर्षादिभ्यः कन्। नन्वाकर्षादीनां गोपदादिषु पाठङ्कृत्वा प्रकृतसूत्रेन कार्यमिति चेन्न। इदुदन्तादपि कन् यथा स्यात् वुनि तु यस्येति चेति सूत्रेणेदुतोर्लोपे शशनिकः शकुनिकः सारुक इति न सिध्येदित्याशयात्। धनहिरण्यात्। अत्र कामशब्दोभाववचनत्त इत्याशयेनाह। काम इच्छेतीति। तत्र कुशल इति सूत्रात्तत्रेति वर्त्तते कन्निति च। धनहिरण्यशब्दात्सप्तम्यन्तात्कामेऽर्थे कन् स्यात्। अनभिधानादिति। तदुक्तम्भाष्ये। धनहिरण्यात्कामाभिधान इति वक्तव्यम्। षष्ठ्यर्थे ह्यनिष्टप्रसङ्गः। षष्ठ्यर्थे सत्यनिष्टम्प्रसज्येत। धने कामोऽस्येति। तत्तर्हि वक्तव्यम्। न वक्तव्यम्। कथमस्य भवति। धने कामोऽस्येति। अनभिधानादिति। स्वाङ्गेभ्यः प्रसिते। स्वाङ्गवाचिनः सप्तम्यन्तात्प्रसितेऽर्थे कन्। प्रसितस्तत्परः। अत्र केशानामक्रियात्वात्तेषु तत्परत्वमनुपपन्नमत आह। मूले तद्रचनायामिति। एवञ्च वृत्तिविषये केशशब्दस्तद्रचनारूपेऽर्थे लाक्षणिक इत्याशयस्तदाह। अन्नेवार्थ इति। उदराट्ठगाद्यूने। एतदर्थमाह। तत्रेत्यादि। अविजिगीषुरिति। दिवोऽविजिगीषायामितिसूत्रेण निष्ठा नत्वस्य तत्रैवार्थे विधानादाद्यूनशब्द एतदर्थकः। यो हि अग्नो सामर्थ्याधिक्येनौदर्याग्निना पीडितः सन्नुदरभरण एवं तत्परस्स एवौदरिक इत्युच्यते तादृशश्चामत्त इत्याशयेनाह। मत्त इति। अमत्तो हि बहुवारम् भक्षयति सर्वदोदरभरणैकव्यापारवान् भवति तथापि बुभुक्षित एवास्ते। अत एव शारीरसामर्थ्यरहितो भवति। औदरिकशब्दबोध्यः स। यस्तु मत्तस्त्वल्पेनापि सन्तुष्टो भवति स एव शारीरसामर्थ्यवान्भवतितादृशश्चमत्तउदरक इतिव्यपदिश्यते। तन्वशब्दादचिरापहृतेऽर्थे सप्तम्यन्तात्कन्स्यात्। अचिरमपहृतस्तन्वाः स्यव एवाहृतस्तादृशश्चप्रत्यग्र एवेत्युक्तम्मूले। प्रत्यग्र इति। प्रत्यग्रोनूतनो नव इति कोशः। ब्राह्मणकोष्णिके संज्ञायाम्। ब्राह्मणकेतिदेशविशेषस्य संज्ञा। तादृश च इत्याकाङ्क्षायामाह। मूले आयुधजीविन इत्यादि। शीतोष्णाभ्यां कारिण्यर्थे कन् स्यात्। शीतमिति क्रि-

रणम् । तृतीय इत्यत्र ऋकारस्य हल इतिदीर्घो न । अनण्त्वात् । अत्र प्रक्रियालाघवाय चेस्तु चेति तु नोक्तम्प्रत्ययान्तरत्वभ्रमापत्तेः । विंशत्यादिभ्यः । अथ विंशत्यादयः के इत्याकाङ्क्षायामाह । अत्र विंशत्यादय इति । प्रत्यासत्त्येति भावः । उत्तरसूत्र इति । षष्ठ्यादेरितिसूत्रे इत्यर्थः । ननु ग्रहणवतीति निषेधस्य प्रत्ययविधावेव प्रवृत्तेस्तमट्विधायकस्य । तथात्वान्न निषेधप्राप्तिरिति । डटः प्रत्ययत्वात्तेन यस्माद्विहितस्तदादेरित्यस्योपस्थितिः कल्पते तच्च विशेष्यम् । विंशत्यादिकञ्च विशेषणमिति तदन्तविधिः सिद्ध एवेति न तदन्तविधौ ज्ञापकोपयोग इत्यत आह । ज्ञापकेनेति । एवञ्च तस्य निषेधस्य प्रत्ययविधिविषयत्वमेवेत्यर्थानुवादकमेवज्ञापकमिति भावः । अत्र विंशत्यादिभ्य इत्युपादानात्सूत्रोपात्ता एव विंशत्यादयो ग्राह्या न तु सहस्रादयः पङ्क्तिविंशतीति सूत्रानुक्ताः । न च पङ्क्तिविंशतीतिसूत्रं वार्त्तिककृता अनारम्भो वा प्रातिपदिकविज्ञानाद्यथा सहस्रादिष्वित्यनेन प्रत्याख्यातमिति कथन्त एव विंशत्यादय इति वाच्यम् । वार्त्तिककारेण तस्य प्रत्याख्याने कृतेऽपि नासूया कर्त्तव्या यत्रानुगमः क्रियत इत्यनेन भाष्यकृता तस्यावश्यकत्वस्योक्तत्वात् । गणपाठ एव विंशत्यादयः पाठ्यास्त एव च ग्रहीष्यन्त इति तु वार्त्तिककाराशयः । 'नित्यं शतादिमासार्द्धमास । नन्वत्र शतादिग्रहणं व्यर्थम् । षष्ठ्यादेरित्युत्तरसूत्रेणैव सिद्धत्वादिति चेन्न । तत्रासंख्यादेरित्युक्तत्वेन यत्र संख्यादित्वन्तदर्थमस्यावश्यकत्वादत एव मूले एकशततम इत्युदाहृतम् । षष्ठ्यादेश्चासङ्ख्यादेः । अत्र षष्ट्यादयः प्राक् शताद्द्रष्टव्याः । शतशब्दस्य पूर्वसूत्रे उपादानात् । अत एव तत्रासंख्यादेरिति निषेधाप्रवृत्तिः । नित्यग्रहणञ्च प्रकृतसूत्रेऽपि स्पष्टार्थं संबध्यते । संख्यादिभ्यः षष्ठ्यादिभ्यस्तु प्रकृतसूत्रप्राप्ते विकल्प एवेत्याशयेन मूले उक्तम् सङ्ख्यादेस्त्विति । मतौ छः सूक्तसाम्नोः । अत्र मताविति मत्वर्थपरत्वेन प्रथमा समर्थविभक्तिः प्रकृतेऽपि । एवमस्तुरपाधिकत्वञ्च । सूक्ते साम्नि चाभिधेये प्रातिपदिकान्मत्वर्थे छः स्यात् । अस्य वामशब्दाद्यद्यपि प्रत्ययो विधीयते तथापि न सुपो धातुप्रातिपदिकयोरिति लुक् । अस्य वामेतिसमुदायस्यानुकरणशब्दत्वात्सुबभावादित्याह । अस्य वामीयमित्यादावपीति । ङसादेरिति । ङसादेशत्वेन प्रतीयमानशब्दादेरित्यर्थः । न तु ङसः कथमप्यत्र सम्भवः । परिनिष्ठितानुकरणत्वात् ।

ननु लुग्वेत्यनेनैतत्सूत्रविधीयमानस्य प्रत्ययस्यैव वाक्यभेदेन लुक् कुतो नेत्यत आह । षष्ठेनेत्यादि । न च पूरणप्रत्ययान्तात्प्रातिपदिकाद्गृहीतेत्यर्थे कन्प्रत्ययो विधीयते एवञ्च ग्रहणरूपस्यार्थस्य कृत्तद्धितान्तभावादिकं ग्रहणं देवदत्तस्येत्यत्र ग्रहणमित्युपादानमधिकमित्यत आह । गृहीतयपीति । गुरुकृतयेति । गुरुकृता या द्वितीया शब्दावृत्तिस्तया करणभूतया देवदत्तकर्तृकं ग्रहणमित्यर्थः । ग्रन्थविषये ग्रहणे । ग्रन्थकर्मके ग्रहणे । एवञ्च ग्रन्थकर्मकग्रहणं प्रत्ययार्थ इति भावः । ग्रहणमिति भावे ल्युडिति । एवञ्च तृतीयान्ताद्ग्रहणमित्यर्थे प्रत्ययः । अत एव देवदत्तस्येति षष्ठ्यन्तार्थस्य कर्तृत्वस्य तत्रान्वयः । तावतिथेन गृहीतेत्यनेन तु प्रत्ययो ग्रहणकर्तरि विधीयते । पूरणप्रत्ययस्य चनित्यो लुगिति पूर्वस्माद्विशेषः । शृङ्खलमस्य बन्धनम् । शृङ्खलशब्दात्प्रथमासमर्थाद्बन्धनोपाधिकादस्येति षष्ठ्यर्थे कन्प्रत्ययो भवति । कालप्रयोजनाद्रोगे । पूरणप्रत्ययान्त एवेति । सन्निधानात् । यद्यप्यत्र सूत्रे समर्थविभक्तिबोधकं प्रत्ययार्थबोधकञ्च पदमनिर्दिष्टन्तथापि संज्ञायामित्यस्योत्तरसूत्रादपकर्षणरोग इत्युपादानेन च रोगस्य संज्ञायां सामर्थ्याद्विभक्तिः प्रत्ययार्थस्य च निर्देशः कार्यः । संज्ञाग्रहणादेव कालबोधकः पूरणार्थकप्रत्ययान्तक एवेत्यपि लभ्यत इत्यपि बोध्यम् । ततः पूरणप्रत्ययान्तेभ्यः । तदस्मिन्नन्नम्प्राये संज्ञायाम् । अत्र प्राय इति सप्तमी वैषयिकी । प्रायो बाहुल्यम् । यद्यन्नप्रायविषयस्य बाहुल्येन प्रक्रान्तं चेत् । संज्ञायामिति प्रत्ययान्तोपाधिः । अस्यग्रहणार्थमिति । न तु भिक्षा स्त्री भक्तमन्धोऽन्नमिति भक्ते रूढम् । गुडापूपिकेत्युदाहरणस्याकराद्दर्शनात् । श्रोत्रियश्छन्दोऽधीते । छन्दः शब्दादधीत इत्यर्थे घन्प्रत्ययो भवति छन्दः शब्दस्य च श्रोत्रादेशो भवति । कैयटमतानुसारेणाह । पूर्वेऽधीत इत्यस्येति । श्राद्धमनेन भुक्तमिनिठनौ । श्राद्धशब्दाद्द्वितीयान्तादनेन भुक्तमित्यर्थे इनिठनौ प्रत्ययौ स्तः । श्राद्धशब्दो यद्यपि क्रियाविशेषवचनस्तथापि प्रकृतेऽनेन भुक्तमित्युपादनसामर्थ्यात्साधनद्रव्यपर इत्याशयेनाह । श्राद्धशब्दादिति । पूर्वादिनिः । अन्तरङ्गत्वाद्द्वितीयोपस्थितिकल्पम् । छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि । पर्यवस्थाता प्रतिपक्षः स ठवपद्य इत्युक्ते तस्मिन्नर्थे परिपन्थिपरिपरिणौ निपात्येते । छन्दसि विषये । उभौ शब्दौ छन्दस्येव साधू । अनुपद्यन्वेष्टा । पदस्य पश्चादित्यर्थेऽव्ययीभावः । अनु

याविशेषणम्। शीतमन्दम् तादृशश्चालस एवेति लोकेऽलसो व्यपदिश्यते शीतक इति। द्वयमपि संज्ञे वेत्याशयेनाह।संज्ञायामिति। अधिकम्। अधिकमितिनिपात्यते। अध्यारूढशब्दात्कन् आरूढशब्दस्य लोपोऽत्र निपात्यते यद्यपि तथाप्यत्रं शुद्धं टत्वमेव कल्प्यते अवयवशक्तिज्ञानस्य समुदायजन्यशक्तिज्ञाने सहकारित्वाभावा दित्याशयेनाह। व्युत्पादनेति। अत्रेदं बोध्यम्। यद्यप्यध्यारूढशब्दः कर्मता न्तः कर्तृतान्तो वा गत्यर्थकाद्धातोर्गत्यर्थाकर्मकेत्यनेनोभयत्र तस्य विधानात्। आद्ये कर्मणोऽभिधानात्ततः प्रथमा कर्तुस्तृतीया। अध्यारूढा खारी द्रोणेन। द्वितीये कर्तुरभिधानात्ततः प्रथमैव। अध्यारूढो द्रोणो खारीमिति। अधि कशब्दप्रतिपाद्यार्थस्य त्वक्रियात्वात्तद्योगे न द्वितीयातृतीये भवतः किन्तु यस्मा दधिकं यस्य चेश्वरवचनमिति निर्देशाज्ज्ञापकात्तद्योगे पञ्चमी तदस्मिन्नधिक मिति निर्देशात्सप्तमी वा। अधिका खारी द्रोणात्। अधिको द्रोणः खार्यामि ति वा। अधिका खारी द्रोणेनेत्यत्र तु हेतौ तृतीया बोध्या। अनुकाभिकाभी क कमिता। सूत्रे समाहारद्वन्द्वेऽपि सौत्रं पुंस्त्वम्। अनुक अभिक अभीक ए ते शब्दा निपात्यन्ते। कमितासमुदायेनाभिधेयत्वे तु। क्रियाविशिष्टसाधने व र्त्तमानाभ्यामन्वभिभ्यां स्वार्थे कन्नभेर्दीर्घः पाक्षिको निपात्यते। पार्श्वेनान्वि च्छति। अत्र पार्श्वशब्दः पार्श्वसदृशे वर्त्तते पार्श्वमिव पार्श्वमिति। उत्तरप दलोपात्। सदृशश्चानृजुरुपायः। यः पुरुषो ऋजुनोपायेनान्वेष्टव्या नर्थानन्दजु नोपायेनान्विच्छति स उच्यते पार्श्वक इति। पार्श्वन्तिर्यगवस्थानादनृजु यथा तथा उपायोऽपि। अयः शूलदण्डाजिनाभ्याम्। इहाय शूलदण्डाजिनशब्दौ लाक्षणिकौ। अयः शूलमिवायःशूलन्तीक्ष्ण उपायः। दण्डाजिनशब्दस्तु दम्भेद म्भसाधनत्वाद्वर्त्तते। तदुक्तंभाष्ये। किं योऽयः शूलेनान्विच्छति स आयः शू लिकः। किञ्चातः। शिवभागवते प्राप्नोति। एवन्तर्ह्युत्तरपदलोपोऽत्र द्रष्टव्य। अ यः शूलमिवायःशूलम्। यो मृदुनोपायेनान्वेष्टव्यानर्थान् रभसेनान्विच्छति स उच्यते आयःशूलिकः। शिवभागवत इति। शिवभागवतानुभक्तिरस्य त्वर्ये गमक त्वात्साधुत्वमिति प्रागुक्तम्। इह योलोपपार्श्वायः शूलदण्डाजिनशब्देभ्यो मु ख्यार्थेभ्यो न प्रत्ययः। किन्तु मार्थेभ्य एव। तावतिथङ्ग्रहणमिति लुग्वा। अत्र तावतिथशब्दस्य पूरणप्रत्ययान्तत्वादयं शब्दः पूरणप्रत्ययान्तमात्रोपलक्षणम्।

तदस्यास्त्यस्मिन्निति मतुप्। प्रथमान्तादस्त्युपाधिकादस्येति षष्ठ्यर्थेऽस्मिन्निति सप्तम्यर्थे च मतुप्प्रत्ययः स्यात्। अत्रास्तीत्यत्र प्रतीयमानः प्रथमार्थो न विवक्षितः। अत एवाहमस्म्यस्य देवदत्तस्येत्यर्थे मद्वान्देवदत्त इत्यत्र गावः सन्त्यस्मिन्देशे स गोमान्देश इत्यत्र च मतुप्सिद्धिः। एवञ्च प्रथमातिक्रमे कारणाभावाच्छब्दसंस्कारार्थन्तयोरुपादानमिति भावः। अस्येत्युपादानस्य फलमाह। गोमानिति। तत्सम्भव इति। तत्र यथा ब्रह्मदत्ते पञ्चालाधिकरणत्वसम्भवस्तथा गोमानित्यत्रापि भविष्यतीतिभावः। मानाभावादिति। तत्रापि स्वामित्वसम्बन्धस्य वृत्त्यनियामकतयाऽधिकरणतावच्छेदकत्वे प्रमाणाभावात्तत्सम्बन्धावच्छिन्नाधिकरणता न प्रतीयते किन्तु तत्सम्बन्धाश्रयत्वमात्रम्। इदं सूत्रन्तु यत्र तत्तद्विशेषसम्बन्धावच्छिन्नावच्छिन्नाधिकरणता प्रतीतिस्तत्रैव प्रवर्त्तते। अस्मिन्नित्यस्य प्रयोजनमाह गोमान्देश इति। सम्बन्धाभावेन। षष्ठ्यर्थसम्बन्धाभावेन। संबन्धाभावमुपपादयति। सर्वत्रेति। यथा देवदत्तस्य गाव इत्यत्र क्रयविक्रयादिलक्षणः प्रतिग्रहपोषणादिलक्षणो वा यः क्रियाकारकभावस्तत्पूर्वकः स्वस्वामिभावः। राज्ञः पुरुष इत्यादौ राजा तेभ्यो वेतनन्ददाति चैत्रस्य भार्यापुत्रावित्यादौ प्रतिग्रहजननादिलक्षणसम्बन्धपूर्वकः सः। नचैवमत्रेति। गोमान्देश इत्यत्र तादृशः सम्बन्धो नास्तीत्यर्थः। संयोगसम्बन्धस्याधाराधेयभावनियामकत्वेऽपि संयोगसंबन्धस्य क्रियाकारकभावमूलकत्वाभावेन षष्ठीवाच्यत्वन्नेत्येतदुपपादयति। संयोग एवेति। तन्मूलकः सः। क्रियाकारकभावमूलकः संयोगो नेत्यर्थः। प्रकारान्तरेण संयोगस्य षष्ठीनिमित्तत्वं खण्डयति। किञ्चेति। षष्ठ्यापत्तेरिति। न हि तत्र घटस्य घट इति भवतीति भावः। अत एव। संयोगस्य षष्ठीनिमित्तत्वाभावादेव। यथा भूमादीनाम्मत्वर्थत्वङ्किन्तु प्रमाणान्तरेण प्रकरणादिना च प्रतीतिस्तथा संयोगस्यापि मत्वर्थत्वाभावात्तेषु लक्षणमिति भावः। ते तस्येति। ते वृक्षाः पर्वतस्य न किञ्चित्सम्बन्धिनः। षष्ठ्यर्थमत्वर्थीयो नेति। यथा गोमच्छब्दाद्देवदत्तपराद्गोमानस्येत्यर्थेनेत्यर्थः। सप्तम्यर्थेनेति। देशपराद्गोमच्छब्दात्सप्तम्यर्थेन। ननु दण्डिमतीशालेतिदृष्टत्वात् एवेत्यत आह। भिन्नवृत्तावपीति। अत्र षष्ठ्यर्थे वृत्तिं कृत्वा सप्तम्यर्थे वृत्तिः कार्या। तदुक्तम्भाष्ये मत्वन्तान्मतुपा न भवितव्यम् किं कारणम्। यस्य गोमन्तः सन्ति

पदोगवामिति। यद्यर्थोऽन्वयावयविभावस्तस्य नित्यसापेक्षत्वात्पदगम्यार्थोऽन्वयः। अन्वेषणञ्च प्रत्यासत्त्यागवामेव विवक्षितम्। तेन पदार्थान्तरान्वेषणकर्तरि वाक्यमेव। साक्षाद्द्रष्टरि संज्ञायाम्। साक्षादित्यव्ययम् तस्मादिनि प्रत्ययो भवति। द्रष्टरि समुदायेनाभिधेये। संज्ञायामित्यस्योपादानेनायमर्थो लभ्यते। संज्ञायतेऽनया सा संज्ञा निपातनादङ्करणे। विषयत्वं सप्तम्यर्थः। अस्मिन्सूत्रे साक्षाद्द्रष्टरि समुदायोपादानेऽपि साक्षाच्छब्दादस्य प्रत्ययविधायकत्वं यथा भवति तथाभिप्रायमाह। साक्षाद्द्रष्टेत्यर्थ इति। क्षेत्रियच्परक्षेत्रे चिकित्स्यः। क्षेत्रियजिति निपात्यते। परक्षेत्रे चिकित्स्यमित्यर्थमभिधातुमिष्यते। एतेन परक्षेत्रे चिकित्स्ये त्वेतद्वाक्यार्थ एव क्षेत्रियशब्दार्थ इत्युक्तं भवति। निपातनञ्च क्षेत्रशब्दाद्घच. परशब्दलोपश्च चात्र क्षेत्रशब्दोऽत्र शरीरवाची। परशरीरे जन्मान्तरशरीरे चिकित्स्यः प्रतीकार्यः नत्वस्मिन् देहे तेनासाध्य इतिफलितम्। यद्वा परक्षेत्रे जातानि यानि तृणानि धान्यरक्षणार्थन्ततश्चिकित्स्यानि परिहर्त्तव्यानि तानि क्षेत्रियानि। यद्वा परस्य यत्क्षेत्र दाररूपन्तेषु प्रवृत्त सन्चिकित्स्यो निग्रहीतव्यः सोऽत्राभिधीयते। एतत्सर्वमाकरादवसेयम्। इन्द्रियमिन्द्रलिङ्ग। इन्द्रयात्मेति यदुक्तन्तत्र प्रमाणमाह। स एतमेव पुरुषमिति। इन्द्रस्यात्मनो लिङ्गमनुमापकमित्येतदुपपादयति। कर्त्रधिष्ठितानामिति। इन्द्रेण दृष्टम् घ्रातम्मनश्चक्षुर्मनश्श्रोत्रमित्यादिक्रमेण। इन्द्रेणात्मनैवसृष्टम् जन्मान्तरे यादृशं सदसत्कर्मकृतन्तज्जन्यादृष्टवशादिह जन्मनि तदनुरूपाणीन्द्रियाणि भवन्ति। इन्द्रेण जुष्टम्प्रीणितम्।यथा तेषु विकारो नभवति तथा यत्नेन कृतम्।इन्द्रेण दत्तम्। तत्तद्विषयग्रहणार्थन्तेषु विषयेषु योजितम्। अनेन्द्रियं लिङ्ग दृष्टसृष्टजुष्टदत्तेष्विति वक्तव्ये नैकेन्द्रशब्दोपादानमिन्द्रस्यात्मन. सर्वत्र स्वेन्द्रियनिरूपणादि विवक्षायां यथा स्यात्परसम्बन्धिनी यथा कथञ्चित्ताद्दृष्यत्वं माभूदित्येवमर्थम्॥

॥ इति भावाद्यर्थकाः ॥

तदस्यास्त्यस्मिन्निति मतुप् । प्रथमान्तादस्त्युपाधिकादस्येति षष्ठ्यर्थेऽस्मिन्निति सप्तम्यर्थे च मतुप्प्रत्ययः स्यात् । अत्रास्तीत्यत्र प्रतीयमानः प्रथमार्थो न विवक्षितः । अत एवाहमस्म्यस्य देवदत्तस्येत्यर्थे महान्देवदत्त इत्यत्र गावः सन्त्यस्मिन्देशे स गोमान्देश इत्यत्र च मतुप्सिद्धिः । एवञ्च प्रथमातिक्रमे कारणाभावाच्छब्दसंस्कारार्थन्तयोरुपादानमिति भावः । अस्त्युपादानस्य फलमाह । गोमानिति । तत्राभव इति । तत्र यथा ब्रह्मदत्ते पञ्चालाधिकरणत्वसम्भवस्तथा गोमानित्यत्रापि भविष्यतीतिभावः। मानाभावादिति । तत्रापि स्वामित्वसम्बन्धस्य वृत्त्यनियामकतयाऽधिकरणतावच्छेदकत्वे प्रमाणाभावात्तत्सम्बन्धावच्छिन्नाधिकरणता न प्रतीयते किन्तु तत्सम्बन्धाश्रयत्वमात्रम् । इदं सूत्रन्तु यत्र तत्तद्विशेषसम्बन्धावच्छिन्नावच्छिन्नाधिकरणता प्रतीतिस्तत्रैव प्रवर्त्तते। अस्मिन्नित्यस्य प्रयोजनमाह गोमान्देश इति । सम्बन्धाभावेन । षष्ठ्यर्थसम्बन्धाभावेन । संबन्धाभावमुपपादयति । सर्वत्रेति । यथा देवदत्तस्य गाव इत्यत्र क्रयविक्रयादिलक्षणः प्रतिग्रहप्रोपणादिलक्षणो वा यः क्रियाकारकभावस्तत्पूर्वकः स्वस्वामिभावः। राज्ञः पुरुष इत्यादौ राजा तेभ्यो वेतनन्ददाति चैत्रस्य भार्यापुत्रावित्यादौ प्रतिग्रहजननादिलक्षणसम्बन्धपूर्वकः स । नचैवमत्रेति । गोमान्देश इत्यत्र तादृशः सम्बन्धो नास्तीत्यर्थः। संयोगसम्बन्धस्याधाराधेयभावनियामकत्वेऽपि संयोगसंबन्धस्य क्रियाकारकभावमूलकत्वाभावेन षष्ठीवाच्यत्वमत्रेत्येतदुपपादयति । संयोग एवेति । तन्मूलकः सः । क्रियाकारकभावमूलकः संयोगो नेत्यर्थः । प्रकारान्तरेण संयोगस्य षष्ठीनिमित्तत्वं खण्डयति । किञ्चेति । षष्ठ्यापत्तेरिति । न हि तत्र घटस्य घट इति भवतीति भावः । अत एव । संयोगस्य षष्ठीनिमित्तत्वाभावादेव । यथा भूमादीनामत्वर्थत्वमिन्तु प्रमाणान्तरेण प्रकरणादिना च प्रतीतिस्तथा संयोगस्यापि मत्वर्थत्वाभावात्तेषु ग्रहणमिति भावः । ते तस्येति । ते वृक्षाः पर्वतस्य न किञ्चित्सम्बन्धिनः । षष्ठ्यर्थमत्वर्थीयो नेति । यथा गोमच्छब्दाद्देवदत्तपराद्गोमानस्येत्यर्थेनेत्यर्थः । सप्तम्यर्थेनेति । देशपराद्गोमच्छब्दात्सप्तम्यर्थेन । ननु दण्डिमतीशालितिदृश्यत एवेत्यत आह । भिन्नवृत्तावपीति । अत्र षष्ठ्यर्थे वृत्तिं कृत्वा सप्तम्यर्थे वृत्तिः कार्या। तदुक्तभाष्ये मत्वन्तान्मतुपा न भवितव्यम् किं कारणम् । यस्य गोमन्तः सन्ति

गावोऽपि तस्य सन्तीति । एवमेव सप्तम्यर्थं द्रष्टव्यम् । एवं रीत्या तत्र तत्राप्राप्ति-
मुपपाद्यभाष्यकृतैवोक्तम् । शैषिकान्मतुवर्थीयाच्छैषिको मतुवर्थिकः । सरूपप्र-
त्ययो नेष्टः सन्नन्तान्न सनिष्यते इति । अत्र सन्नन्तादितिवाक्ये सरूप इति सम्ब-
ध्यते । तत्र शब्दतः सारूप्यमव्यभिचरितमिति प्रकृतेऽर्थत एव विवक्षितम-
त इच्छार्थकसन्नन्तादिच्छायां सन्न । स्वार्थसन्नन्तादिच्छायाभवत्येव । जुगुप्सि-
षते । मिमांसिषत इति यथा । सप्तम्यर्थं च नैनिठनाविति । तदुक्तमत इनिठनौ सप्त-
मे भाष्ये सप्तम्याश्च नतौ स्मृताविति । दण्डा अस्यां शालायां सन्तीति । ननु
गोमान्देवदत्त इत्यस्माद्गोसम्बन्धः प्रतीयेत न तु वर्त्तमानकालोऽस्त्यर्थश्च । गो-
शब्दो गोत्वविशिष्टस्य मतुप् च षष्ठ्यर्थस्य प्रतिपादक इतिविशिष्टसमुदायास्त-
स्यैवप्रतीतिः स्यादत आह । अत्र शब्दशक्तीति । ननु भूतत्ववर्त्तमानत्वयोर्विरो-
धात्कथङ्गोमानासीदित्यादि प्रयोगोऽत आह । गोमानासीदित्यादेरिति । अ-
स्तिग्रहणमिति । भाष्ये अथास्तिग्रहणं किमर्थम् । सत्तायाम्प्रत्ययो यथास्यात् ।
नैतदस्ति प्रयोजनम् । न सत्ताम्पदार्थो व्यभिचरति । इत्याद्युक्ताऽस्तिग्रहण-
म्प्रत्ययविध्यर्थम् । नोपाध्यर्थम् । अस्तिमानिति मतुप् यथा स्यात् । अप्रातिपदि-
कत्वात् । नैष दोषः । 'अव्ययमेषोऽस्तिशब्दः' । नैषोऽस्तेर्लट् । कथमव्ययत्वम् ।
विभक्तिस्वरप्रतिरूपकाश्च निपाता भवन्तीति निपातसंज्ञानिपातोऽव्ययमित्यव्य-
य संज्ञा।एवमपि न सिध्यति किं कारणमस्ति सामानाधिकरण्ये मतुप् विधीयते
न चास्ते रस्तिनासामानाधिकरण्यमिति । अत्र कैयटः । गवादीनां संबन्धव्यभि-
चाराभ्यामस्तीतिसामानाधिकरण्यं सम्भवत्यस्ते स्त्वव्यभिचारादस्तिसामानाधि-
करण्याभाव इति । सचास्तिशब्दः सत्ताकर्तृधनप्रतिपादकः । सौत्रे ति शब्दस्य
प्रयोजनमाह । इतिशब्देति । भूमनिन्देति वार्तिके संसर्गेतिपाठाभिप्रायेण
व्याचष्टे । संसर्गे संयोग इति । स च । संयोगश्च । सम्बन्धान्तरे । स्वस्वामिभा-
वादिसम्बन्धे । तन्नियामक संसर्गित्वबुद्धिनियामक । संयुक्तदण्डस्येवेति । संयु-
क्तोदण्डो यस्य तस्य त्य वार्तिकं व्याचष्टे । अस्तिविवक्षायामिति । भूम्नि य-
था । यवमान् । गोमानिति । भूमावहुत्वम् । एतच्चापेक्षिकम् । यस्य यावद्यव-
सत्वं योग्यस्तस्य ततो बहुत्वेऽयम्प्रयोग । अथ भूमादिग्रहणमभावेन भूमाद
योऽपि प्रतीयन्ते इत्येवम्परम् । सा प्रतीतिर्व्यञ्जनाजन्यशाब्दबोधरूपो मान-

भोवैव्यपदेशात् । निन्दायाम् । ककुदावर्त्तिनी कन्या । प्रशंसायाम् । रूपवानयं ब्राह्मणः । नित्ययोगे । क्षीरिणः । कण्टकिनो वृक्षा इति । अत्र क्षीरेण सह नित्यो योगः कालिकप्रत्यासत्त्या क्षीरसत्तासमनियतसत्ताकत्वरूपः प्रतीयते । अतिशायने उदरिणी कन्या । संसर्गे । दण्डी । छत्री इति । एतद्वार्त्तिकं व्याख्याय भाष्येउक्तम् । भूमादिग्रहणं कर्त्तव्यम कर्त्तव्यम् । इति करण. क्रियते · ततर्थं द्विवचा । भूमादियुक्तस्यैव विवक्षा इति । तेन । रसादिविशेषणत्वेन । अत्र गुणग्रहणेन शास्त्रान्तरे ये गुणत्वेन प्रसिद्धास्ते गृह्यन्ते तत्फलमाह । जलादिवाचीति । एभ्यः । रसादिभ्यः । भाष्ये स्पष्टमिति । दृश्यन्ते ह्यन्ये रसादिभ्यो मत्वर्थीयाः । रसिको नटः । उर्वशी वै रूपिण्यप्सरसाम् । स्पर्शिको वायुरिति । एतेनेदं सूत्रम् व्याख्यातम् । गुणगुणि बोधकेभ्य इति । एतादृशो यः शब्दस्तस्माद्गुणपरतायां सत्यान्तस्माद्यदा गुणिनि सम्बन्धिनि विवक्षिते मतुप् तदा तस्य लुकि शुक्लः पट इति भवतीति वार्त्तिकारम्भस्य प्रयोजनमाह । गुणगुणिनोरभेदेति । गुणगुणिनोः सम्बन्धस्तादात्म्यमस्ति तादात्म्यञ्च भेदाभेदाविति तयोर्मध्ये यदाभेदस्य प्राधान्यमाश्रित्य तद्व्यवहारस्तदा शुक्लादिशब्देभ्यो मतुपि कृते तस्याश्रवणाय वार्त्तिकारम्भः कार्यं इति भावः । नचैवं रूपवानिति न स्यात्तत्रापि लुकः प्राप्तेरिति वाच्यम् । शब्दशक्तिस्वभावाच्छुक्लादिशब्दवाच्यं द्विविधो व्यवहार इति स एव गुणवचनेभ्य इत्यत्र गृह्यन्ते न तु भेदव्यवहारमात्रविषया रूपादय इत्याशयात् । अत एव । लुप्तमतुबन्तस्य प्रयोगस्वीकारादेव । गुणिनीति । लुप्तमतुबन्तवाच्यत्वेन विवक्षिते इति शेषः । विशेष्यलिङ्गतेति । विशेष्यवाचक पटादिशब्दानां यल्लिङ्गन्तल्लिङ्गशुक्लादिशब्दप्रयोगः सिद्धः । शुक्लः पटः शुक्ला शाटी । शुक्लं वस्त्रमिति । न च शुक्लं रूपमितिप्रयोगो दृश्यते गुणिपरत्वन्तु नास्तीतिगुणिनीत्यसङ्गतमिति वाच्यम् । गुणिपदस्य गुणनिष्ठप्रकारतानिरूपितविशेष्यत्वेन विवक्षितो येऽर्थस्तत्परत्वात् । गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वतीत्यत्रापि गुणिशब्द एतत्पर एव । तथापि । गुणिन्यपि । सर्वलिङ्गस्य रूढिसोकार्यगुणिवाचकस्य स्त्रीत्वेऽपि पुंल्लिङ्गशब्दस्य रूढ्याप्रयोगः स्यात् । नियतलिङ्गस्य रूढत्वे तु शुक्लः शाटीतिप्रयोगः स्यात् । गुणवचनेभ्य इत्यत्र शुक्लादिशब्दानामेव ग्रहणमित्यत्र गुणिभ्य इतिवक्तव्ये गुणवचनेभ्य इत्यत्र वच-

गावोऽपि तस्य सन्तीति । एवमेव सप्तम्यर्थे द्रष्टव्यम् । एवं रीत्या तत्र तत्राप्राप्तिसुपपाद्यभाष्यकृतैवोक्तम् । शैषिकान्मतुवर्थीयाच्छैषिको मतुवर्थिकः । सरूपप्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते इति । अत्र सन्नन्तादितिवाक्ये सरूप इति सम्बन्ध्यते । तत्र शब्दतः सारूप्यमव्यभिचरितमिति प्रकृतेरर्थत एव विवक्षितमत इच्छार्थकसन्नन्तादिच्छायां सन । स्वार्थसन्नन्तादिच्छायामभवत्येव । जुगुप्सिषते । मिमांसिषत इति यथा । सप्तम्यर्थे च नेनिठनाविति । तदुक्तमत इनिठनौ भाष्ये सप्तम्याश्च नतौ स्मृताविति । दण्डा अस्यां शालायां सन्तीति । ननु गोमान्देवदत्त इत्यस्माद्गोसम्बन्धः प्रतीयेत न तु वर्त्तमानकालोऽस्त्यर्थस्य । गोशब्दो गोत्वविशिष्टस्य मतुप् च षष्ठ्यर्थस्य प्रतिपादक इतिविशिष्टसमुदायार्थस्यैवप्रतीतिः स्यादत आह । अत्र शब्दशक्तीति । ननु भूतत्ववर्त्तमानत्वयोर्विरोधात्कथङ्गोमानासीदित्यादि प्रयोगोऽत आह । गोमानासीदित्यादेरिति । अस्तिग्रहणमिति । भाष्ये अथास्तिग्रहणं किमर्थम् । सत्तायामत्ययो यथास्यात् । नैतदस्ति प्रयोजनम् । न सत्ताम्पदार्थो व्यभिचरति । इत्याद्युक्त्वाऽस्तिग्रहणमव्ययविध्यर्थम् । नोपाद्यर्थम् । अस्तिमानिति मतुप् यथा स्यात् । अप्रातिपदिकत्वात् । नैष दोषः । अव्ययमेषोऽस्तिशब्दः । नैषोऽस्तेर्लट् । कथमव्ययत्वम् । विभक्तिस्वरप्रतिरूपकाश्च निपाता भवन्तीति निपातसंज्ञानिपातोऽव्ययमित्यव्यय संज्ञा । एवमपि न सिद्ध्यति किं कारणमस्ति सामानाधिकरण्ये मतुप् विधीयते न चास्त्यस्तिना सामानाधिकरण्यमिति । अत्र कैयटः । गवादीनां संबन्धव्यभिचाराभ्यामस्तीतिसामानाधिकरण्यं सम्भवत्यस्तेस्त्वव्यभिचारादस्तिसामानाधिकरण्याभाव इति । यथास्तिशब्दः सत्ताकर्तृधनप्रतिपादकः । सौत्रेति शब्दस्य प्रयोजनमाह । इतिशब्देति । भूमनिन्देति वार्तिके संसर्गेतिपाठाभिप्रायेण व्याचष्टे । संसर्ग. संयोग इति । स च । संयोगश्च । सम्बन्धान्तरं । स्वस्वामिभावादिसम्बन्धे । तन्नियामकः संसर्गित्वबुद्धिनियामकः । संयुक्तदण्डस्यैवेति । संयुक्तो दण्डो यस्य तस्यैवेत्य विवार्तिकं व्याचष्टे । अस्तिविवक्षायामिति । भूम्नि यथा । यवमान् । गोमानिति । भूमाबहुत्वम् । एतच्चापेक्षिकम् । यस्य यावद्यवसत्त्वं योग्यन्तस्य ततो बहुत्वे ऽयमर्थः । अथ भूमादिग्रहणमायेण भूमादयोऽपि प्रतीयन्त इत्येवम्परम् । सा प्रतीतिर्व्यञ्जनाजन्यशाब्दबोधरूपा मान-

ति। अनभिधानान्नेति स्पष्टमिति। तत्र हि अत इति निवृत्तमित्यभिधाय कस्मान्न भवति गोविंशतिरस्यास्तीति। अनभिधानान्न भविष्यतीत्युक्तम्। सूत्रस्थभाष्यादिति। तत्र हि समासान्ता इति सोत्रान्तशब्दस्य समासचरमावयवत्वम्प्रत्ययानां सिद्धान्तिनोक्तम्। ततोऽगृहीताभिप्रायेण प्रत्ययपरत्वेन सिद्धिर्भविष्यतीति पूर्वपक्षिणा वैयर्थ्यम्प्रतिपादिते प्रयोजनान्यभिहितानि अव्ययीभावद्विगुद्वन्द्वतत्पुरुषबहुव्रीहिसंज्ञा इत्यनेन वार्त्तिककृता। प्रतिराजम्। उपराजम्। पञ्चगवम्। दशगवम्। द्विपुरी त्रिपुरी। द्विधुरी त्रिधुरी। एतानि प्रयोजनान्यभिधाय भाष्यकृता द्वन्द्वसंज्ञा च प्रयोजनम्। वाक्त्वचम्। स्रुक्त्वचम्। द्वन्द्वश्च समासो नपुंसकलिङ्गो यथा स्यात्। नैतदस्ति प्रयोजनम्। लिङ्गमशिष्यम् लोकाश्रयत्वाल्लिङ्गस्य। इदन्तर्हि प्रयोजनम्। कोशश्च निषच्च। कोशनिषदम्। कोशनिषदिनी। द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिरिति इनिर्यथा स्यादित्यभिहितम्। एतेन तस्मिन्सूत्रेऽत इत्यस्य सम्बन्ध इति लभ्यते। असामर्थ्येऽपीति निष्कादित्यत्र शतसहस्रयोरेवाभिसम्बन्धात्। सोत्रान्तशब्दस्य प्रयोजनमाह। अन्तग्रहणमिति। क्वचिद्भाष्यपुस्तके फलबर्हाभ्यामिनजिति पाठो दृश्यते, तस्यायुक्तत्वसूचनायाह। इनजिति पाठ इति। प्रत्ययत्रयेति। इनिठनोर्मतुपश्चेत्यर्थ.। पर्वमरुद्भ्यान्तो वक्तव्य इति वृत्तौ पाठः। भाष्ये तु तविति पाठः क्वचिद्दृश्यते तेनायमिदित्याशयेनाह। पिदयमित्येक इति। वस्तुतस्तविति पाठो युक्त इत्याशयेनाह। निदयमिति। ननु मरुच्छब्दस्यानजन्तत्वात्कथन्तत्वमत आह। तत्र हीति। मरुच्छब्दे ताद्दृशव्युत्पत्त्या साधित इत्यर्थः। प्रत्याख्यानपक्षे यथा आद्युदात्तत्वम्प्रकारमाह। तन्नेति। पर्वमरुद्भ्यान्तन्निति वचने मरुच्छब्दस्य प्रत्याख्यानपक्षे इत्यर्थः। प्रथमे। प्रथमाध्याये। एतास्संज्ञा इति। निपातोपसर्गाव्ययसंज्ञा इत्यर्थः। तत्त्वविषया एवेति। यत्र तत्वन्तत्रैवेत्यर्थ.।

नानुपपन्न इति। अन्यथाऽव्ययत्वाल्लुगापत्तौ ताद्दृशप्रयोगानुपपत्तिः स्फुटैव। तत्त्वविषया इतिबहुवचनान्तोपादानस्य प्रयोजनं समुदायस्य तत्त्वविषयत्वसि-, ति अत एव मरुद्वृद्धौ तो मरुत्त इत्येवं व्युत्पादितस्य पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वसिद्धिरन्यथा मृग्रोरुतिरिति व्युत्पन्नस्य मरुच्छब्दस्यान्तोदात्ततया पूर्वपदप्रकृतिस्वरेऽपि मध्योदात्तत्वमेव स्यात्। यदि क्वचिन्मरुत्तशब्दो मध्योदात्तः अ-

ठोऽन्यतरस्यामित्युक्तम्। तत्र कैयटः। केचिदाह इत्येव वक्तव्यम्। तत्र प्रकृतान्यतरस्यां ग्रहणानुवृत्त्या ठञिनिमतुपो भविष्यन्तीति किमन्यतरस्यां ग्रहणेन ठञिनिप्राप्त्यर्थेन तत्पुनः क्रियमाणमपूर्वस्यान्यतरस्यां ग्रहणस्य मतुप्समुच्चयार्थत्वं ज्ञापयतीत्यर्थ इति। एतच्चाप्यसम्मतव्याख्यानादित्यर्थः। भाष्योक्तोदाहरणमाह। विंशकमिति। भाष्ये तु न दृश्यते इति। किन्तु वृत्तौ एवमुक्तं दर्शनेन मूले लिखितमिति शेषः। शब्दस्य साधुत्वन्तु अन्येभ्य इति घप्रत्यये पृषोदरादित्वात् सलोपे सति भवतीति बोध्यम्। एकाचरादित्यादि। एकाचरात्। स्ववान्। स्ववान्। कृत। कारकवान्। जाते। वृक्षवान्। प्लक्षवान्। सप्तस्याम्। दण्डा अस्यां शालायां सन्ति। न च तण्डुली तण्डुलिकः इति न स्याज्जातिवाचकत्वादिति वाच्यम्। एवन्तर्हि नाय समुच्चय कृतघजातेर्वेति। किन्तर्हि जातिविशेषणं छद्ग्रहणम्। छदो जातिरिति। कथं कारकावानिति अनभिधानादिति भाष्यकृतैव समाधानात्। एतेनैकाचरादिति नापूर्वम् किन्तु इति शब्दानुवृत्त्या सर्वं साधनीयमिति ध्वनितम्। एकगोपूर्वात्। बहुव्रीहिरिति। एकगोशब्दौ पूर्वावयवौ यस्येत्यर्थः। इतिसमास इति। अत एव भाष्ये ऽत इत्यनुवर्तते उताहो न। किञ्चातः यद्यनुवर्तते ऐकगविको न सिध्यति। समासान्ते कृते भविष्यति। एवमपि गौशकटिको न सिध्यति। अथ निवृत्तम्। इहापि प्राप्नोति। गोविंशतिरस्यास्तीति। अनभिधानान्न भविष्यतीत्युक्तम्। एतेन प्रघट्टकेन कर्मधारयसमासात्प्रत्ययविधायकमेतत्सूत्रमिति ध्वनितम्। मत्वर्थेऽनभिधानेनेति। अत्र भाष्यन्तु द्विगोस्तद्धितस्य प्रतिषेध इतिवचनस्य वा मत्वर्थे प्रतिषेध इति वचनस्य वा आवश्यकत्वमिति विचारे भाष्यकृतोक्तम्। द्विगोस्तद्धितस्य प्रतिषेधो वक्तव्यः। यदेतन्नास्ति सर्वत्र मत्वर्थे प्रतिषेध इति सति हि तस्मिन्नुक्ते नैतत्सिद्धमिति भाष्यदर्शनमेव। पञ्चखट्वः पञ्चगुरित्यादौ द्विगोस्तद्धितार्थे विधीयमानस्य बहुव्रीहेश्च प्राप्तौ द्विगौ प्रतिषिद्धे बहुव्रीहिसंज्ञायां बहुव्रीहौ प्रकृत्येति पूर्वपदप्रकृतिस्वरो भवति द्विगौ तु समासान्तोदात्तत्वं स्यात्। एवम्पञ्चखट्वा इत्यत्र ङीबापत्तिः पञ्चगुरित्यादौ टजापत्तिश्च स्यात्। अर्थेति। एकगोपूर्वेति सूत्र इत्यर्थः। अत एव। अत इत्यस्यासम्बन्धादेव। ननु यद्यत इत्यस्यासम्बन्धस्तदा गोविंशतिरस्यास्तीत्यर्थेपि ठञ् स्यादत आह। गोविंशती-

ति। अनभिधानात्सेति स्पष्टमिति। तत्र हि अत इति निहत्तमित्यभिधाय क्व स्यात्र भवति गोविंशतिरस्यास्तीति। अनभिधानान्न भविष्यतीत्युक्तम्। सूत्रस्वाभाव्यादिति। तत्र हि समासान्ता इति सौत्रान्तशब्दस्य समासचरमावयवत्वम्प्रत्ययानां सिद्धमित्निोक्तम्। ततोऽटहीताभिप्रायेण प्रत्ययपरत्वेन सिद्धिर्भविष्यतीति पूर्वपक्षिणा वैयर्थ्यम्प्रतिपादिते प्रयोजनान्यभिहितानि अव्ययीभावद्विगुद्वन्द्वतत्पुरुषबहुव्रीहिसंज्ञा इत्यनेन वार्त्तिकक्कता। प्रतिराजम्। उपराजम्। पञ्चगवम्। दशगवम्। द्विपुरी त्रिपुरी। द्विधुरी त्रिधुरी। एतानि प्रयोजनान्यभिधाय भाष्यक्कता द्वन्द्वसञ्ज्ञा च प्रयोजनम्। वाक्त्वचम्। सुक्त्वचम्। द्वन्द्वश्च समासो नपुंसकलिङ्गो यथा स्यात्। नैतदस्ति प्रयोजनम्। लिङ्गमशिष्यम् लोकाश्रयत्वाल्लिङ्गस्य। इदन्तर्हि प्रयोजनम्। कोशश्च निषच्च। कोशनिषदम्। कोशनिषदिनी। द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिरिति इनिर्यथा स्यादित्यभिहितम्। एतेन तस्मिन्सूत्रेऽत इत्यस्य सम्बन्ध इति लभ्यते। असामर्थ्येऽपीति निष्कादित्यस्य शतसहस्रयोरेवाभिसम्बन्धात्। सौत्रान्तशब्दस्य प्रयोजनमाह। अन्तग्रहणमिति। क्वचिद्भाष्यपुस्तके फलबर्हाभ्यामिनजिति पाठो दृश्यते तस्यायुक्तत्वसूचनायाह। इनजिति पाठ इति। प्रत्ययद्वयेति। इनिठनोर्मतुपर्थे त्यर्थः। पर्वमरुद्भ्यान्तो यश्चाच्य इति हत्तौ पाठः। भाष्ये तु तविति पाठः क्वचिद्दृश्यते तेनायम्पिदित्याशयेनाह। पिदयमित्येके इति। वस्तुतस्तविति पाठो युक्त इत्याशयेनाह। निदयमिति। ननु मरुच्छब्दस्यानजन्तत्वात्कथमन्तमत आह। तत्र हीति। मरुच्छब्दे तादृशग्युत्पत्त्या साधित इत्यर्थः। प्रत्याख्यानपक्षे यथा आद्युदात्तत्वम्प्रकारमाह। तवेति। पर्वमरुद्भ्यान्तविति वचने मरुच्छब्दस्य प्रत्याख्यानपक्षे इत्यर्थः। प्रथमे। प्रथमाध्याये। एतावसंज्ञा इति। निपातोपसर्गाव्ययसंज्ञा इत्यर्थः। तत्त्वविषया एवेति। यत्र तत्त्वन्तत्रैवेत्यर्थ.। नानुपपन्न इति। अन्यथाऽव्ययत्वात्सुगापत्तौ तादृशप्रयोगानुपपत्तिः स्फुटैव। तत्त्वविषया इतिबहुवचनात्तोपादानस्य प्रयोजनं समुदायस्य तत्त्वविषयत्वमिति अत एव मरुद्भिर्दसोमरुत्त इत्येवं व्युत्पादितस्य पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वसिद्धिरन्यथा गतेरतिरिति व्युत्पत्तस्य मरुच्छब्दस्यान्तोदात्ततया पूर्वपदप्रकृतिस्वरेऽपि मध्योदात्तत्वमेव स्यात्। यदि कश्चिन्मरुत्तशब्दो मध्योदात्तः स्

यते तदाऽऽद्युदात्तत्वेऽपि छान्दसत्वेन मध्योदात्तत्वम्। तेन। पदत्वेन। मतु
केवलमतुबर्थ एवग्मिनिप्रत्ययविधाने किञ्चिद्वाग्वन्त्यपि वाग्मीति प्रयोगापत्ति-
रत आह। उत्तरसूत्रेति। अत एव मूलकारोऽग्रे आह। यस्तु सम्यगित्यादि।
तेन। ऐश्वर्यवाचकादेवामिनिच्प्रत्ययस्वीकारेण। अस्यैश्वर्यवाचकत्वमेतद्वृत्ति-
विषय एव। किञ्चिद्भेदमिति। वर्त्तुलं कटकम्। चिपिटन्तु वलयम्। समासा
इतीति। उपपादितमेतत्प्राक्। सम्बध्यत एवेति। अन्यतरस्याङ्ग्रहणमिति शे-
षः। अदन्तत्वादिति। वातातीसारयोरुपतापत्वाद्द्वन्द्वेति पूर्वसूत्रेण सिद्ध इत्य-
पि बोध्यम्। मूले रोगेचायमिष्यत इति। लक्ष्यदर्शनमत्र प्रमाणम्। भाष्ये तु
न दृश्यते। फलान्तराभावादिति। न च वयस्येवेतिनियमार्थमस्त्विति वाच्यम्।
अभिधानस्वाभाव्यात्तत्रैव भविष्यतीति भाव.। धनवाचीति। अर्थरैविभवा
अपीतिकोशात्। तत्र। कालतोऽसन्निधिविवक्षायाम्। विरोधादिति। काल-
तोऽसन्निहितस्य तदस्यास्तीत्यनेन विरोधादित्यर्थः। एवञ्चैतद्विषयेऽर्थोऽसन्नि-
हितोऽस्येत्येव विग्रहः। अनभिधानादिति। येन नाप्राप्तिन्यायेनासन्निहितेऽस्य
सूत्रस्य बाधकत्वात्। अत एव। इनिठनोरभावादेव। भाष्ये उक्तम्। तत्र म-
तुबेवोच्चारित इतिभावः। अर्थाच्चासन्निहित इत्यत्रार्थशब्दोऽत्र धनवाचीति यदु-
क्तन्तस्य प्रयोजनमाह। अर्थनमिति। एवञ्चधनवाचकादेव पूर्वोक्तसत्तोपाधि-
कत्वेऽनभिधानङ्क्रियावाचकात्तु भवत्येव। अनभिधानादिति। अर्थिकप्रत्य-
र्थिकावपि सिद्धौ भवत इति भाष्ये तदनुच्चारणमत्र प्रमाणम्। तेन। इन्नाश्रम-
सुघायकस्यान्यतरस्याङ्ग्रहणस्य करणेन। एतस्मात्। बलादेः॥

॥ इति मत्वर्थीयाः ॥

प्राग्दिशो विभक्तिः। अस्य सूत्रस्य न विभक्तिविधायकत्वम्। तथा सति
दिशः प्राग्ये वक्ष्यमाणाः शब्दास्तेभ्यो विभक्तिर्भवतीति विवक्षितोऽर्थो भवेत्
न तु न युक्तः ङ्याप्प्रातिपदिकादित्येतदेकवाक्यतया स्वौजसित्यनेनैव सिद्धे-
रस्य वैयर्थ्यापत्तेः। नाप्यस्य दिशः प्राग्यः प्रत्ययः सस्वप्रतिङ्संज्ञक इत्यर्थोऽवि-
भक्तिशब्दवाच्यार्थोपस्थितौ तद्भेदस्य प्रत्ययेषु प्रतिपादनेन विशेयः। तथात्व

यते तदाऽऽद्युदात्तत्वेऽपि छान्दसत्वेन मध्योदात्तत्वम्। तेन। पदत्वेन। ननु केवलमतुबर्थ एवमिनिप्रत्ययविधाने किञ्चिदाग्वन्त्यपि वाग्मीति प्रयोगापत्ति रत आह। उत्तरसूत्रेति। अत एव मूलकारोऽयं आह। यस्तु सम्यगित्यादि। तेन। ऐश्वर्यवाचकादेवामिनिच्प्रत्ययस्वीकारेण। अस्यैश्वर्यवाचकत्वमेतद्वृत्ति विषय एव। किञ्चिद्गेदमिति। वर्त्तुलं कटकम्। चिपिटन्तु वलयम्। सम्राजा इतीति। उपपादितमेतत्प्राक्। सम्बध्यत एवेति। अन्यतरस्याङ्ग्रहणमिति शेषः। अदन्तत्वादिति। वातातीसारयोरुपतापत्वाद्वन्द्वेति पूर्वसूत्रेण सिद्ध इत्यपि बोध्यम्। मूले रोगीचायमिष्यत इति। लक्ष्यदर्शनमत्र प्रमाणम्। भाष्ये तु न दृश्यते। फलान्तराभावादिति। न च वयस्येवेतिनियमार्थमस्त्विति वाच्यम्। अभिधानस्वाभाव्यात्तत्रैव भविष्यतीति भावः। धनवाचीति। अर्थैरविभवा अपीतिकोषात्। तत्र। कालतोऽसन्निधिविवक्षायाम्। विरोधादिति। कालतोऽसन्निहितस्य तदस्यास्तीत्यनेन विरोधादित्यर्थः। एवञ्च तद्विषयेऽर्थोऽसन्निहितोऽस्येत्येव विग्रहः। अनभिधानादिति। येन नाप्राप्तिन्यायेनासन्निहितेऽस्य सूत्रस्य बाधकत्वात्। अत एव। इनिठनोरभावादेव। भाष्ये उक्तम्। तत्र मत्सुबेबोधारित इतिभावः। अर्थाचासन्निहित इत्यत्रार्थशब्दोऽत्र धनवाचीति यदुक्तन्तस्य प्रयोजनमाह। अर्थनमिति। एवञ्चधनवाचकादेव पूर्वोक्त सत्तोपाधिकत्वेऽनभिधानङ्क्रियावाचकात्तु भयत्येव। अनभिधानादिति। पार्थिकप्रत्यर्थिकावपि सिद्धौ भवत इति भाष्ये तदनुच्चारणमत्र प्रमाणम्। तेन। इन्नावस्सुषायकस्यान्यतरस्याङ्ग्रहणस्य कारणेन। एतस्मात्। वलादेः॥

## ॥ इति मत्वर्थीयाः ॥

प्राग्दिशो विभक्तिः। अस्य सूत्रस्य न विभक्तिविधायकत्वम्। तथा सति दिशः प्राग्वक्ष्यमाणाः शब्दास्तेभ्यो विभक्तिर्भवतीति विवक्षितोऽर्थो भवेत् स तु न युक्तः ङ्याप्प्रातिपदिकादित्येतदेकवाक्यतया स्वौजसित्यनेनैव सिद्धस्य वैयर्थ्यापत्तेः। नाप्यस्य दिशः प्राग् प्रत्ययः सम्पुपतिष्ठसंज्ञक इत्यर्थो विभक्तिशब्दवाच्यार्थोपस्थितौ तदभेदस्य प्रत्ययेषु प्रतिपादनेन विधेयः। तत्रत्य

स्यस्योपपत्तिः कृता। न च छान्दसमेव कुत्रेत्यस्तु। छन्दस्यापाद्यरूपाभावात्। वस्तुतस्तच्छान्दसमेव। छन्दस्यपि न्याय्यविचारस्य बहुशो दृष्टत्वात्। वाग्रहणापकर्षणादादेशस्य वैकल्पिकत्वकल्पनन्तु न चमत्कारकारि। तथा सति 'पूर्वसूत्र एव वा ग्रहणस्य कर्त्तुमुचितत्वादितिभावः। एतदोऽनिति वेति। अनितिविभक्तसूत्रेणानादेशेनेत्यर्थः। अनुदात्तार्थमिति। इदमोऽन्वादेश इत्यतोऽनुदात्त इत्यनुवृत्तेरितिभावः। तयोस्तद्विधानमिति। एतसो। प्रकृतसूत्रेणानुदात्तविधानमित्यर्थः। तत्सार्थक्यात्। अनुदात्तविधानसार्थक्यात्। कृत्स्नस्वरितत्वादिति। सामम्या इत्यस्येदमोह इति सूत्रे संयन्धार्थत्वस्य स्वरितत्व कृत्स्नमेवेति भावः। कालार्थकत्वाभावादिति। कालत्वावच्छिन्नबोधकत्वाभावादित्यर्थः। यद्यपि सर्वशब्दस्य बुद्धिविषयविशेषबोधकतास्ति तथापि यदा कालत्वस्याधिकरणतावच्छेदकत्वन्न विवक्षितद्विन्तु कालोपाधित्वेनाभिहिता ये पदार्थास्तत्तद्विशिष्टतत्तदृद्धित्वस्याधिकरणतावच्छेदकत्वविवक्षा तदा न दाप्रत्यय इति भावः।अत्रार्थे भाष्यसम्मतिमाह। अत एवेति।कालत्वेनाधिकरणत्वविवक्षा शब्दाप्रत्यय इत्यर्थस्याभिमतत्वादेव। एवञ्च यत्र काल इत्यादीनां यदुपाध्यभिन्नकाल इत्यर्थः। यदा काले सदाकाल इत्यादि प्रयोगा न भवत्येव। दाप्रत्ययेन कालत्वेन कालस्योक्ततयोक्तार्थानामप्रयोग इतिन्यायात्। इदमोर्हिल्। इदमपिसूत्रं यदा न कालत्वावच्छिन्नाधिकरणत्वविवक्षा किन्तु क्षणत्वावच्छिन्ना तदा न प्रवर्त्तते। ननु तदोदाचेति सूत्रेण न दाप्रत्ययो विधीयते किन्त्वदाप्रत्यय इति न तर्वेकान्यत्वनेनान्यथा सिद्धिः। अदाप्रत्ययविधानफलन्तु न दाशब्दस्याद्युदात्तत्वमित्यरत आह। एतच्चाधेम्पष्टमिति। तदोदावचनमनर्थकं विहितत्वात्। विहितोऽत्र दाप्रत्ययः सर्वैकान्यकिं यत्तदः काले देतीत्यनेन दाप्रत्यय एव भाष्यसम्मत इतिस्पष्टम्। तदा शब्दस्यान्तोदात्त एवेतिभाव। प्रतिहन्द्विभूतमिति। प्रतिद्वन्द्वार्थस्य प्रतिपादकमित्यर्थः। ननु यदा तत्तत्क्रिया निरूपितप्रत्तित्वविवक्षा पुष्यनक्षत्रयुक्तचन्द्रमस्तदा इदानीम्पुष्यनक्षत्रमिति प्रयोगोपपत्तावपि सामान्यविवक्षायामद्य पुष्य इतिप्रयोग दृश्यते सत्योपपद्यते भेदेनाधाराधेयभावः प्रसिद्धो नत्वभेदे इत्याशङ्कायामाह। पुष्येणेति। एतस्वाद्य पुष्य इत्यस्य पुष्यनक्षत्रयुक्तचन्द्रयुक्तकालाभिन्नमेतद्दिनमित्यर्थः। अधिकरणशक्तिप्रधा-

स्यम्योपपत्तिः कृता । न च छान्दसमेव कुचेत्यस्तु । छन्दस्यापाद्यरूपाभावात् । वस्तुतस्तच्छान्दसमेव । छन्दस्यपि न्याय्यविचारस्य बहुशो दृष्टत्वात् । वाग्रहणापकर्षणादादेशस्य वैकल्पिकत्वकल्पनन्तु न चमत्कारकारि । तथा सति पूर्वसूत्र एव वा ग्रहणस्य कर्त्तुमुचितत्वादितिभावः । एतदोऽनित्यं वेति । अनितिविभक्तसूत्रेणानादेशेनेत्यर्थः । अनुदात्तार्थमिति । इदमोऽन्वादेश इत्यतोऽनुदात्त इत्यनुवृत्तेरितिभावः । तयोस्तुविधानमिति । चतमो प्रस्तुतसूत्रेणानुदात्तविधानमित्यर्थः । तस्यार्थक्यात् । अनुदात्तविधानमार्थक्यात् । कृत्सस्वरितत्वादिति । सप्तम्या इत्यस्येदमोह इति सूत्रे संबन्धार्थन्तात्र स्वरितत्वं कृत्समेवेति भावः । कालार्थकत्वाभावादिति । कालत्वावच्छिन्नबोधकत्वाभावादित्यर्थः । यद्यपि सर्वशब्दस्य बुद्धिविषयविशेषबोधकतास्ति तथापि यदा कालत्वस्याधिकरणतावच्छेदकत्वन्न विवक्षितङ्किन्तु कालोपाधित्वेनाभिहिता ये पदार्थास्तत्तन्निष्ठतत्तदसाधारणधर्मवत्त्वस्याधिकरणतावच्छेदकत्वविवक्षा तदा न दाप्रत्यय इति भावः । अयमर्थो भाष्यसम्मतिसाक्षात् । अत एवेति । कालत्वेनाधिकरणत्वविवक्षायां दाप्रत्यय इत्यर्थस्याभिमतत्वादेव । एवञ्च यत्र काले इत्यादीनां यदुपाध्यवच्छिन्नकाल इत्यर्थः । यदा काले सदाकाले इत्यादि प्रयोगा न भवन्त्येव । दाप्रत्ययेन कालत्वेन कालस्योक्तत्वात्तेषामप्रयोग इतिन्यायात् । इदमोर्हिल् । इदमपिसूत्रं यदा न कालत्वावच्छिन्नाधिकरणत्वविवक्षा किन्तु क्षणत्वावच्छिन्ना तदा न प्रवर्त्तते । ननु तदोदाचेति सूत्रेण न दाप्रत्ययो विधीयते किन्त्वदाप्रत्यय इष्टि न तर्वैकान्यत्वेनान्यथा सिद्धिः । अदाप्रत्ययविधानफलन्तु न दाशब्दस्याद्युदात्तत्वसिद्धिरत आह । एतद्भाष्यस्पष्टमिति । तदोदावचनमनर्थकं विहितत्वात् । विहितोऽत्र दाप्रत्ययः सर्वैकान्यकिं यत्तदः काले देतीत्यनेन दाप्रत्यय एव भाष्यसम्मत इतिस्पष्टम् । तदा शब्दस्यान्तोदात्त एवेतिभावः । प्रतिद्वन्द्विभूतमिति । प्रतिद्वन्द्यर्थस्य प्रतिपादकमित्यर्थः । ननु यदा तत्तत्क्रिया निरूपितवृत्तित्वविवक्षा पुष्यनक्षत्रयुक्तचन्द्रमसस्तदा इदानीम्पुष्यनक्षत्रमिति प्रयोगोपपत्तावपि सामान्यविवक्षायामद्य पुष्य इतिप्रयोग इष्यते सनोपपद्यते भेदेह्याधाराधेयभावः प्रसिद्धो नत्वभेदे इत्याशंकायामोह । पुष्येणेति । एवञ्चाद्य पुष्य इत्यस्य पुष्यनक्षत्रयुक्तचन्द्रयुक्तकालाभिन्नमेतद्दिनमित्यर्थः । अधिकरणशक्तिप्रधा-

फलाभावः। अस्यापि ग्रहणेऽप्रत्ययत्वेऽपि लित्स्वरः स्यादत आह। प्रत्ययग्रहणपरिभाषयेति। प्रत्ययमात्रग्रहणसम्पादिका या प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणमित्येषा परिभाषा तयेत्यर्थः। नन्वत्र प्रत्ययग्रहणे यस्मात्सविहित इतिपरिभाषासञ्चारायमरः। आनुपूर्वी साम्यमादाय धातोरपि ग्रहणशङ्काकाले प्रत्ययमात्रग्रहणाभावेन तस्याः परिभाषाया अप्राप्तेः। ननु प्रत्ययाप्रत्यययोरित्येषा परिभाषा लक्ष्यसाधकत्वेन नास्तीत्यत आह। व्याख्यानाच्चेति। शेनभाष्यमित्युक्तम्। स्वार्थइत्यस्यपञ्चम्यन्तप्रकृत्यर्थ इत्यर्थः। स्वार्थिकैः साहचर्यात्प्रकृतसूत्रस्थतसिशब्दः स्वार्थिको ग्रहीष्यते इतिभावः। स्वार्थिक इत्यस्य स्वीयप्रकृत्यर्थ इत्यर्थः। किञ्च प्रकृतसूत्रभाष्ये किमर्थन्तसेस्तसिलुच्यते। तसेस्तसिल्वचनं स्वरार्थम्। तसेस्तसिल्वचनङ्क्रियते स्वरार्थम्। लितिप्रत्ययात्पूर्वमुदात्तमिति स्वरो यथा स्यात्। ननु चायन्तसिल् तसिस्बाधिष्यते। न सिध्यति। परत्वात्तसिः प्राप्नोति। तसिलो वकाशः। ततो ह्रीयते। ततोऽवरोहति। तसेरवकाशः ग्रामत आगच्छतिनगरत आगच्छति। इहोभयम्प्राप्नोति तत आगच्छतीत्युक्तम्भाष्ये तन्मूलकव्याख्यानेनोपदेशे य इकारान्तभाष्यकारसम्मतव्याख्यानादित्यर्थः। तत्र हि समानशब्दानाम्प्रतिषेधो वक्तव्य इत्युपक्रम्य तस्य वचनस्य प्रत्याख्यानाय स्वार्थे विद्यमानस्य तसेस्तसिलादेस्तसिस्तस्येह ग्रहणन्नाहेशस्य प्रत्यय एवेति। विभक्त्यर्थमित्येतद्व्याचष्टे। विभक्तिनिमित्तेति। ननु विभक्तिनिमित्तकार्यार्थत्वस्य भाष्यकृतानुक्तेर्न्यूनतेत्यत आह। स्वरार्थमितीति। अभिधानमूलकमिति। अभिधानमूलकाः कृत्तद्धितसमासा इति न्यायमूलकमित्यर्थः। भाष्ये इति। तत्र हि पर्यभिभ्यां सर्वोभयार्थे। पर्यभिभ्यां यदुच्यते तत्सर्वोभयार्थेन्द्रष्टव्यमित्युक्तम्। अतिप्रसङ्गं वारयति। ओदनमित्यादि। शिमादिति सूत्रे वा ग्रहणापकर्षे प्रमाणमाह। साहचर्यादिति। भाष्यस्वरस इति। सप्तम्यास्त्रलितिसूत्रे तसिलादीनां विभक्त्यादेशत्वं स्वतन्त्रप्रत्ययत्वं वेतिविचारे विभक्त्यादेशत्वपक्षेकस्मिन् कुर्वे त्वमेद्वग्रामादस्वैरिति प्राप्नोतीत्युक्तम्। अत्र हि विशेषविहितत्वेनादादेशेन तस्मिन्पक्षे भव्यमिति कुर्वेतिप्रयोगानुपपत्तिः प्राप्नोतीति वाहृचश्छन्दसीत्यत्र वेति योगविभागेन लोकेऽपि त्रादेश इतिकल्पनया युक्तं

त्यस्योपपत्तिः कृता । न च छान्दसमेव कुर्वेत्यस्तु । छन्दस्यापाद्यरूपाभावात् । वस्तुतस्तच्छान्दसमेव । छन्दस्यपि न्याय्यविचारस्य बहुशो दृष्टत्वात् । वाग्रहणापकर्षणादादेशस्य वैकल्पिकत्वकल्पनन्तु न चमत्कारकारि । तथा सति पूर्वसूत्र एव वा ग्रहणस्य कर्त्तुमुचितत्वादिति भावः । एतदोऽनित्यं वेति । घनितिविभक्तसूत्रेणानादेशेनेत्यर्थः । अनुदात्तार्थमिति । इदमोऽन्वादेश इत्यतोऽनुदात्त इत्यनुवृत्तेरिति भावः । तयोस्तद्विधानमिति । त्रतसो प्रकृतसूत्रेणानुदात्तविधानमित्यर्थः । तत्सामर्थ्यात् । अनुदात्तविधानसामर्थ्यात् । कृत्स्नस्वरितत्वादिति । सप्तम्या इत्यस्येदमोऽर्ह इति सूत्रे संबन्धार्थत्वात्स्वरितत्वं कृत्स्नमेवेति भावः । कालार्थकत्वाभावादिति । कालत्वावच्छिन्नबोधकत्वाभावादित्यर्थः । यद्यपि सर्वशब्दस्य बुद्धिविषयविशेषबोधकतास्ति तथापि यदा कालत्वस्याधिकरणतावच्छेदकत्वेन विवक्षितत्वन्तु कालोपाधित्वेनाभिहिता ये पदार्थास्तत्तद्विशततद्दानित्वस्याधिकरणतावच्छेदकत्वविवक्षा तदा न दाप्रत्यय इति भावः । अयमर्थो भाष्यसम्मत इत्याह । अत एवेति । कालत्वेनाधिकरणत्वविवक्षायां दाप्रत्यय इत्यर्थस्याभिमतत्वादेव । एवञ्च यत्र काले इत्यादीनां यदुपाध्यवच्छिन्नकाल इत्यर्थः । यदा काले सदाकाले इत्यादि प्रयोगा न भवन्त्येव । दाप्रत्ययेन कालत्वेन कालस्योक्तत्वात्तयोरुक्तार्थानामप्रयोग इति न्यायात् । इदमो हिल् । इदमपि सूत्रं यदा न कालत्वावच्छिन्नाधिकरणत्वविवक्षा किन्तु क्षणत्वावच्छिन्ना तदा न प्रवर्त्तते । ननु तदो दा चेति सूत्रेण न दाप्रत्ययो विधीयते किन्तु दाप्रत्यय इति न सर्वैकान्येत्यनेनान्यथा सिद्धिः । तदाप्रत्ययविधानफलन्तु न दाशब्दस्याद्युदात्तत्वसिद्धिरत आह । एतद्भाष्ये स्पष्टमिति । तदो दावचनमनर्थकं विहितत्वात् । विहितोऽत्र दाप्रत्ययः सर्वैकान्यकिंयत्तदः काले दा इत्यनेन दाप्रत्यय एव भाष्यसम्मत इति स्पष्टम् । तदा शब्दस्यान्तोदात्त एवेति भावः । प्रतिद्वन्द्विभूतमिति । प्रतिद्वन्द्वार्थस्य प्रतिपादकमित्यर्थः । ननु यदा तत्तत्क्रिया निरूपितवृत्तिर्न विवक्षा पुष्यनक्षत्रयुक्तचन्द्रमसस्तदा इदानीम्पुष्यनक्षत्रमिति प्रयोगोपपत्तावपि सामान्यविवक्षायामद्य पुष्य इतिप्रयोग दृश्यते स नोपपद्यते भेदे ह्याधाराधेयभावः प्रसिद्धो नत्वभेदे इत्याशङ्कायामाह । पुष्येणेति । एतच्चाद्य पुष्य इत्यस्य पुष्यनक्षत्रयुक्तचन्द्रयुक्तकालाभिन्नमेतद्दिनमित्यर्थः । अधिकरणशक्तिप्रधा-

नस्य वृत्तिविषय एव शक्तिमत्परत्वमिति न नियम इतिभाव । अस्य इति । च व्ययामासनेकार्थत्वादिति तेषाञ्चाव । अन्य इत्यनेन सख्य प्रत्यादीनामधिक रणशक्तिप्रधानत्वमेव सुप्रसिद्धमिति हृ सशक्तिविरोध इति । ससम्मतप्रकार माह । व्यपदेशिवद्भावेनेति । इतिरीत्याह । एव मिनोति । प्रत्ययाद्युदात्तत्व बाधनायाह । निपातनादिति । चित्यछ्यत इति । पूर्वान्यान्यतरेतरापराधरो भयोत्तरेभ्य इत्यु सच् इति । पञ्चम्यर्थे सप्तमीति । व्यत्ययेन । कि सर्वनामबहु भ्य इतिमम्भस्यते एतदन्यवाय पञ्चम्या न्याय्यत्वात् । उच्यते प्रतिपाद्यतेऽनेन त इचनम् । प्रकारस्य प्रवृत्तिनिमित्तस्य यद्वचनन्तेभ्य किमादिभ्य, इत्यर्थ । प्र कारशब्दस्य भेदकधर्मपरत्वे मानमाह । बहुभिरिति । यथा तथा शब्दाभ्यां इ त्यप्रतीयत इतिभाष्यात्तद्धडयति । साद्दश्यस्त्विति । अनभिधानात् । शक्त्या साद्दश्यस्यानभिधानात् । प्रकारवचन इत्यस्य प्रकृतिविशेषणत्वेऽप्यभिधानस्वा भाव्यादाह । अत्यन्तेति । नाप्यसन्द्योतक इत्याह । द्योतकत्व इति ॥

## ॥ इति प्राग्दिशीयाः ॥

दिक्शब्देभ्य'।दिशि रूढेभ्य इत्यु पादानाद्यौगिकानामैन्द्रादिशब्दाना व्या वृत्ति । तद । पूर्वाधरेति सूत्रे । ननु य' शब्दो दिशि रूढस्तस्य देशवृत्तित्वइय मत आह । शब्दभेदादिति । तथा सत्वा । प्रवृत्तिनिमित्तोक्त्य । ननु पूर्वस्मि न्देश इत्यत्रातिप्रसङ्ग इतिचेन्न । तत्र पूर्वशब्दस्य देशविशेषणत्वेऽपि देशवृत्ति त्वाभावात् । प्रत्र हि पूर्वकालाजितत्वप्रवृत्तिनिमित्तमिति । यदि तु पुरस्ता- द्दिश परस्ताद्देशादितिप्रयोग कचिद्दृश्यते तदा समुच्चयस्थो ग्राह्यावेति वदुपपत्ति: आर्याप्यटार्थत्वादिति । के चित्तु, तस्तुजेव कर्त्तव्ये ऽकारोच्चारणसा मर्थ्यादन्यतोऽप्यवस्ताद्भिवस्तातिदेति चकारेण पुरादेशश्च भवतीतिपुरत; इत्य स्य सिद्धिर्भवतीत्याहु । भाष्ये तु नैतद्दृष्टम् । अन्ये तु विभाषा परावराभ्या मिति सूत्रे विभाषेति योगविभागेन पूर्वशब्दादप्यस्तसुप् । तस्मि' यास्तातिचे ति चकारस्यानुक्तसमुच्चयार्थत्वात्पु रादेश इत्याहु । वस्तुतस्तु 'पुरत. शब्द स मानकालीनप्राक्कालीनशब्दतुल्ययोगनिम एव ।किमर्थस्तर्हि सङ्गतसूत्रे ऽकार इ ति चेत् । दक्षिणा शब्दा वदायम व्ययस्माटा दक्षिणत आगतो दक्षिणतो वस-

तीति रूपसिद्धार्थमित्येति स्पष्टम्। सर्वनाम्नो वृत्तिमात्रे इति तु भाष्यकारस्येष्टिर्नैनु सूत्रकारेण सा कृतेति प्रकृतेऽकार उच्चारितः। भाष्यरीत्या तु व्यर्थ एव। एवमकाराभावे चकारोऽपि न पाठ्यः। तसुप्रत्यये उदात्तत्वमव्ययाद्युदात्तत्वेन सिद्धम्। षष्ठ्यतसर्थेति सूत्रे तस्यार्थेत्येव पाठ्यमिति दिक्। ननु प्राची शब्दो प्राच्यत्यन्त इत्यत आह। लिङ्गनिर्देशेति। विभक्तित्रयार्थमिति। सप्तमी पञ्चमी प्रथमेति विभक्तित्रयेत्यर्थः। एनबन्यतरस्यामदूरे। प्रागसेरिति। पूर्वाधरावराणामसिरिति सूत्रविहितासेः प्रागित्यर्थः। मूलकृता तु पूर्वाधरेतिसूत्रविहितादेशस्यास्तातावपि प्रवृत्तिर्बोधयितुमेनबन्यतरस्यामिति सूत्रात्परमपि सूत्रमव्याख्यातम्। अदूरत्वस्यावधिसाकाङ्क्षत्वादाह। अवधिमानिति। मूले पक्षे यथा स्वमिति। उत्तरादिभ्य एनबभावे यथा स्वमित्यर्थः। केचिन्न एनाबन्तादामप्रत्ययं वारयति। अञ्चत्यन्तात्त्विति। इयमेव। अञ्चत्यन्तात्यामिरूपैव। दक्षिणादाच्। प्रत्ययाद्युदात्तत्वेन सिद्धे चकारोच्चारणस्य फलमाह। चकार इति। आजाहीति। अन्यारादितरर्त्ते इतिसूत्रनिर्दिष्टो य आच् तस्यैव पञ्चमीविधाने निमित्तत्वमिति सूचनार्थः। न चाहिप्रत्ययसाहचर्यात्प्रत्ययस्यैव ग्रहणं भविष्यतीति वाच्यम्। साहचर्यपरिभाषाया अनित्यत्वस्य ज्ञापनार्थत्वात्। पूर्वसाहचर्यादप्रत्ययस्यैव ग्रहणमिति शङ्कानिरासार्थत्वाच्च। आहि च दूरे। अनधिमानवधेर्दूर इत्यर्थे। व्याख्यानादिति। दक्षिणापश्चादितिसूत्रे आहियादितिवक्तव्ये दक्षिणेत्याजन्तसमुदायोच्चारणरूपाद्व्याख्यानादित्यर्थः। संख्याया विधार्थे धा। इह विधायामिति वक्तव्ये ऽर्थशब्दो विधाशब्दस्य प्रसिद्धार्थपरिग्रहार्थम्। स च प्रकाररूप इत्याशयेन व्याचष्टे। मूले क्रियाप्रकार इति। अत्र विधशब्दस्यापि प्रश्लेषः सम्भाव्यत इत्याशयेनाह। विधयेति। अत एव प्रकृतसूत्रभाष्ये विधार्थ इत्युच्यते को विधार्थो नाम। विधाया अर्थः विधार्थः। यद्येवमेका गोविधा। एका हस्तिविधा अत्रापि प्राप्नोति इत्युक्तम्। अत्र विधशब्दार्थः। अभिधानस्वाभाव्यादिति। अत एव भाष्ये पूर्वोक्तस्य विधाशब्दस्यार्थे धाप्रत्ययमाशङ्क्य धात्वर्थपृथग्भाव इति वक्तव्यमित्युक्तम्। धात्वर्थपृथग्भावश्च कारकाणामप्रवृत्तिविशेषः क्रिया। यद्येवङ्क्रियाप्रकारोऽयमनति। विधयुक्तगताश्च प्रकारे भवन्ति। एवं विधम्। एवं युक्तम्। एवङ्गतम्। एवम्प्रकार

मिति । एतेन भाष्यग्रन्थेन विधशब्दस्यार्थ एव प्रत्यय उक्त । नवधा द्रव्यम् । षड्धा रस इत्यादिप्रयोगाणामप्युपपत्तिमाह । चं धा गुण इत्यादि । अधिकरणविचाले चेति सूत्रं व्याचष्टे । अधिकरणस्ये ति । तद्विषयम् । संख्याविषयमेकस्यानेकीकरणरूपमनेकस्य वा एकीकरणरूपम् । धामावस्ये ति । तेन संख्याया विधार्थ इति सूत्रविहितस्यापि भवतीतिभावः । अत एव । धामावस्य स्थाने ऽखेटवादेश नाकारीति । स्वतन्त्रप्रत्ययत्व इतिशेषः । द्वित्र्योश्चधमुञ् द्वित्र्योः सम्बन्धिनो धाप्रत्ययस्य विधार्थेऽधिकरणविचाले वा विहितस्य धमुञादेश । चकारेणान्यतरस्यामित्यनुकर्ष । स्वभावादिति । शब्दशक्तिस्वभावात् । सत्त्ववाचित्वम् । डान्तस्य सत्त्ववाचित्वम् । अत एव द्वैधानीत्यत्र लिङ्गसङ्ख्या योग । याप्ये । अधमपर्यायोऽप्ययमव्ययं कुत्सिते वर्त्तते कुत्सितग्रहणङ्कर्त्तव्यमिति वार्त्तिकमूलाद्गाष्यानादित्याशयेनाह याप्यमत्र ति । प्रवृत्तिनिमित्तकुत्सायामेवेति । यस्य भावाद्द्रव्ये शब्दनिवेशस्तद्भिधाने तद्गुणे वक्तव्ये प्रत्यय इतिभाष्यात् । तद्गुणे वक्तव्ये । कुत्सितत्वेन प्रतिपाद्य इत्यर्थ । अत एव शरीरेण कणो वैयाकरण इत्यर्थे वैयाकरणक इति न । एतच्च सूत्रम्प्रवृत्तिनिमित्तगतकुत्साविवक्षायामेव प्रवर्त्तत इतिबोधयितुङ्कुत्सित इत्यनुवेद्धव्योक्तम् तत्र सूत्रमप्रवृत्तिनिमित्तकुत्सायामपि । अनेन सिद्धे तत्सूत्रारम्भादितिभावस्तदाह । अयमित्यादि । किञ्च पाशपप्रत्ययस्तिङन्तान्न भवति विधायकाभावात् । पाशपस्त्वत्र विधाने तु तिङन्तादप्यस्यादित्यपि बोध्यम् । पूरणाद्भागे । प्रकृतसूत्रस्यपूरणग्रहणम्भागेकादश इत्युत्तरार्थम् । अर्थवांस्तीयशब्दो हि पूरण एव । तीयशब्दस्य पूरणार्थकत्वेऽपि पूरणाद्भाग इतिनिर्देश शब्दार्थयोस्तादात्म्यात् । ननु तीयादीकक् न विद्याया इतिवचनद्वयमप्रकृतसूत्रभाष्ये न दृश्यत इत्यत आह । तीयादीकगिति । अत्र भाग इतिपुंस्त्वस्य विवक्षितत्वाद्भाक्तिर्थे विशेष्या तत्र नायम्प्रत्यय । तेन चतुर्थी पञ्चमी भक्तिरित्येव नत्वन्तत्वाट्टाप् । मूले महाविभाषया सिद्ध इति । ननु प्रत्ययो यदा क्रियते तदा भागार्थप्रतीतिस्तदभावे तु नेतिकथमेतदित्यत आह । प्रकरणादिकमिति । भाष्ये स्पष्टमिति । तत्र हि सुमति प्रतिषेधे एकपदस्वरस्योपसंख्यान कर्त्तव्यमेकपदस्वरेणुमता सुमे प्रत्ययलक्षणेऽपि एकत्वमित्य र्थः । अन्यथेति । मार्गिकाचस्तृतीयादिरित्यादिविग्रहे ।

कन्लुकाविल्यत्र कस्य लुगित्याकांचायामाह। वाक्यभेदेनेति। स्वार्थेलोपपत्ते-
र्याह। तत्रार्थ इति। भूतपूर्वार्थसम्बन्ध इति। भूतपूर्वो योऽर्थस्य सम्बन्धस्तत्त
या इत्यर्थः। कर्त्तरीति। इतराभिभवकर्त्तरीत्यर्थ.। उपक्रमभाष्ये तिशय इति-
यदुक्तन्तद्विरोधम्परिहरति। अथ गुणोऽभिधीयत इति। अतिशेतेऽनेनेत्यतिशा-
यनो गुणः अभिधीयते करणे ल्युट्। द्रव्यवाचकाद्यदा प्रत्ययस्तदापि स्वसमवेतगुण
स्यैव प्रकर्षोऽभिधीयते। अत एव। भावल्युटोऽनभिप्रेतत्वादेव। लिङ्गवचना
सिद्धि.। शुक्लतरं शुक्लतरा इत्यत्र लिङ्गवचनासिद्धिः शङ्किता इत्यर्थः। तद्विशि
ष्टे। अतिशयविशिष्टे। सा लक्षणा कर्मणि कर्त्तरिवेति विकल्पा दूषणमाह।
अभिभूयमानादेवेति। अत एव। भाष्योक्तस्य युक्तत्वादेव। तत्र। पूर्वोक्तार्थस्य
सिद्धौ। प्रकृत्यर्थद्रव्यस्य। शुक्लतरः पट इत्यादौ। तत्त्वम्। इतराभिभवकर्त्तृत्व
म्। फलितार्थमाह। एवञ्चेति। तरपः स्वार्थिकत्वे कुमारितरेत्यत्र समुदाया-
द्वयसि प्रथम इतिसूत्रेण ङीबापत्तिरतस्ताम्परिहरति। कुमारीत्यादि। उक्त-
त्वादिति। प्रथमवयोविशिष्टार्थगतस्त्रीत्वे द्योत्ये ङीबितितदर्थात्। ननु तर-
वन्तस्य यत्प्रवृत्तिनिमित्तमकर्षस्तद्विशिष्टः प्रथमवयोविशिष्टार्थ एव नत्वतिरि-
क्त इतितरबन्तान्ङीप् प्राप्नोतीत्यत आह। वयो मात्रेति। अत एव। अवधार-
णरूपार्थस्य तद्घटकत्वादेव। इत्यादाविति। आदिना अश्वतरा इत्यस्य सङ्ग्र-
हः। प्रकृतसूत्रभाष्य एवैतौ प्रयोगौ द्रष्टव्यौ। नङोपिति। जातेरितिङीष् न।
तत्राप्यवधारणस्य विवक्षितत्वात्। एकदेशिनोक्तिरिति। एकदेशित्वञ्चोक्ता-
र्थानभिज्ञत्वात्। टाबपीतिशङ्काकर्त्तुस्तस्या उक्तेऽपि भवन्त्येते टाबादयः स्वा-
र्थिकाष्टाबादय इतिसमाधानोत्तरन्ङीबपि तर्हि प्राप्नोतीतिशङ्ककस्य चेत्यर्थः।
छान्दसत्वादिति। एवञ्च युधिष्ठिरः श्रेष्ठतमः कुरूणामित्यादिप्रयोगा लोकेऽ-
साधव एव। द्वावयवकसमुदाये एकस्य प्रकर्षविवचायान्तरबीयसुनोर्वक्ष्यमाण-
त्वाद्बहूनामेकस्य प्रकर्षविवचायामस्य सूत्रस्य प्रवृत्तिरत एव सूत्रेऽयमेपामि-
ति बहुवचनोपादानङ्कृतम्। तिङश्च। अत्र मूले तमबित्येवोक्तम्। यद्यपि पू
र्वसूत्रे तमबिष्ठनावुक्तौ तथाप्यजादौगुणवचनादेवेतिनियमादिष्ठन्नोक्तः। कि
मेतिङव्ययघादाम्बद्रव्यप्रकर्षे। इहाव्ययान्तशब्दानान्द्वन्द्वसमासोत्तरङ्किमेतिङ्-
व्ययाद् इतिसमासस्तेन यत्सिद्धन्तदाह। किमादीनि ननु पूर्वासूत्रस्य द्र-

व्यवाचकत्वात्कयम् पूर्वाह्णेतरामित्यत्रामुप्रत्यय इत्यत आह। पूर्वाह्ण इति। तत्तत्क्रियाविशिष्टस्य। घटादिजन्यद्रव्यस्येति शेष। गुणवत्पर इति। अधिकरणशक्तिप्रधानस्यापि वृत्तिविषयशक्तिमत्परत्वात्। ननु सर्वत्र धर्मप्रकर्षमादाय द्रव्यप्रकर्षसम्भवात्पूर्वोदाहरणासम्भव इत्यत आह। उच्चैस्तमामित्यत्रेति। ननु यस्य क्रियाकारकभावसम्बन्धविशेषणत्वन्तस्य चेन्न द्रव्यत्वन्तदा तद्धटमद्राक्षीत्यत्र घटस्य परामर्शो न स्यात्। घटकर्मकान्दर्शनमिति बोधादत आह। शक्त्या विशिष्टस्येति। घटमित्यत्र केवलघटस्यैव तच्छब्देन परामर्शो न तु क्रियानिरूपितकर्मत्वशक्त्या विशिष्टस्य। उच्चैरादिशब्देभ्यस्तु अधिकरणत्वशक्तिसमवेतस्यैव प्रतीत्या न तस्य सर्वनामपरामर्शयोग्यत्वमितिभाव.। अत एव। क्रियाकारकभावसम्बन्धविषयत्वादेर। इदम्। पूर्वाह्णे शब्दस्य प्रकृते पूर्वाह्णनिष्ठाधिकरणत्वप्रतिपादकतया तादृशविशिष्टार्थप्रतिपादकस्याद्रव्यार्थकत्वादामुप्रत्यय। आम्वित्यत्रोकारोच्चारणमकारस्येत्संज्ञाभावाय। अत एव। ङ्सनद्याप इत्यत्रास्य ग्रहणाभाव.। सानुबन्धकत्वादन्यथापरत्वाद्यस्येति लोपस्याधिलोच्चैस्तरामित्यत्र नुट् स्यात्। न चामुप्रत्ययोच्चारणाकारादिरेवास्तु यस्येति लोपस्तु न भविष्यत्यकारोच्चारणसामर्थ्यादिति वाच्यम्। अकारानुच्चारणे सकारमात्रस्य प्रत्ययतया तमपस्त्वनुदात्तत्वे नान्तानुदात्तत्वापत्ते'। अकारोच्चारणे तु तस्य प्रत्ययाद्युदात्तत्वे नोदात्ततया तेनैकादेशस्योदात्तत्वे नान्तोदात्तत्वस्य स्पष्टतया ऽकारोच्चारणसामर्थ्यमितियस्येति लोपापत्तेर्दुर्वारत्वात्। द्विवचनविभज्योपपद। अत्र द्विवचनशब्दो न पारिभाषिकार्थस्य प्रतिपादक किन्तु द्वयोर्वचनन्द्विवचनम्। उच्यतेऽनेन तद्वचनमित्यर्थकल्पनया द्व्यर्थप्रतिपादकपर। विभज्यशब्द' कर्मव्युत्पत्त्या विभजनीयपर। निपातनाद्यत्। एवञ्च द्व्यर्थप्रतिपादके विभज्योपपदे च ड्याप्प्रातिपदिकात्तिङन्ताच्च तरबीयसुनौ स्त इत्यर्थ फलित। तेन द्वयोरेकस्येतिलभ्यन्तदाह। द्वयोर्मध्येति। विभक्तव्यवाचके चोपपदे कस्मात्प्रत्यय इत्याकाङ्क्षायामत्रापत्यायमभ्यन्तदाह। विभागप्रयोगकोभूतिति। तेन प्रतिपदोक्तविभक्त्या सुबन्तत्वमकृते उपपदत्वमित्ययोग्ययणोन। ननु यत्र बहूनामध्ये एकस्य प्रकर्षस्तत्रापितरब्दृश्यते तस्य का गतिरत आह। पतेरा स्यपीति। भाष्यप्रयोगमात्रत्वात्... पाणिनीयव्यासेनैतयोरनपवा-

दनेन न्यूनत्वम् शरमेवेत्यस्वरसः केचिदित्युक्त्या सूचितः। सूत्रेणैव तयोः साधुत्वमुपपादयतामतमाह। परेत्विति। स्वकल्पनाया भाष्यविरुद्धत्वमाह। अत एवेति। नितराङ्गच्छतीति। अत्र निशब्दः क्रियागतनिश्चितत्वद्योतकस्तद्घटकनिश्चयगतोऽप्रामाण्यभानानास्कन्दितत्वरूपः प्रामाण्यनिश्चयविषयत्वरूपो वा प्रकर्षो बोध्यः। नन्वेक एव धर्मी यत्र विवक्षितस्तत्र तरबादयः। ऐषमस्तु पटुतर इत्यादि तत्र कालान्तरपृद्वयप्रतिपादकस्य विभज्यस्य चोः पदस्याभावादिति चेन्न। एकस्यापिधर्मिणो गुणभेदेन भेदकल्पनयाऽनुयोगिगतगुणे प्रतियोगिगतगुणापेक्षया प्रकर्षविवक्षया तरप्स्वीकारात्। गुणभेदेन भेदव्यवहारो लोके सुप्रसिद्ध एव। यथा पूर्वपरिणीता भार्यास्यन्तरपरिग्रहे भर्तार्यन्ते पतिं प्रतिवक्ति अन्य एवासि त्वमिति। तुरिष्ठेमेयस्सु। ननु टन्त्, अन्त्यादिमनिजविधायकाभावादिमनिज्ग्रहणमनर्थकमत आह। इमनिजिति। कल्पनापत्तेरिति। एकसूत्रोपात्तत्वविशेषादिति शेषः। आपत्तेरिति। सूत्रारम्भे तु छन्दस्येव सूत्रे णिष्ठेयसुनी भवत इतिभावः। ननु छन्दस्येव चेदसन्ताविजस्मात्प्रत्ययस्तदा लोपविधायकस्य सूत्रस्य छान्दसप्रयोगसाधकतया वैदिकप्रकरण एव लेखनमुचितमितिशङ्कते। यद्यपीति। तस्यैव । निमित्तविधायकतुच्छन्दसीत्यस्यैव। णाविष्ठवदित्यतिदेशेनास्य लौकिकेऽपि प्रयोगे प्रवृत्तेश्च। ननु टेरिति सूत्रे टेलोप इत्यत्र लोपपदानुवृत्त्याऽनेन चेल्लोपस्तदाऽलोन्त्यपरिभाषयाऽन्त्यस्यैव लोपः स्यादत आह। स च वचनसामर्थ्यादिति। न च बिल्वकादिभ्य इतिसूत्राद्वा पदानुवृत्त्या सर्वादेशत्वे सिद्धे वचनसामर्थ्यकल्पनमयुक्तमिति वाच्यम्। तस्य वस्वकुकपदस्यासरितत्वात्। अत एव टेरित्युत्तरसूत्रे लोपपदस्यैव सम्बन्धो दृश्यते। प्रशस्यत्वम्प्रशंसाविषयत्वम्। प्रशंसाचोत्कृष्टगुणप्रकारको निश्चयः एवञ्च विषयतायाः जातिक्रियासंबन्ध्यतिरिक्तत्वात्प्रशस्यस्वरूप इत्याशयेनाह। प्रशस्त्वमितिनतु प्रशस्य शब्दस्य धातुजत्वात्प्रशस्यत्वलक्षणक्रियैवेत्यत आह। तस्येति। तेन। इष्टादिसम्बन्धेन। प्र इति। जानातीति ज्ञः। ज्ञः स्वामी यस्य इत्यत्र प्रशब्दात्तस्य देवतेत्यर्थेऽणि यस्येति लोपः। भार्य स्यटमिति। नत हि प्रकृत्ये काजिति किमिष्ठे नेयन्न प्रकृतिभाव आहोस्विद्विशिष्टेनेतिविकल्पार द्वितीयपक्षे दूषणमुक्तम्। मौनमिति। मुनेर्विकारेण

व्यवाचकत्वात्कथम् पूर्वाह्णेतरामित्यत्रामुप्रत्यय इत्यत आह। पूर्वाह्ण इति। तत्तत्क्रियाविशिष्टस्य। घटादिजन्यद्रव्यस्येति शेष। गुणवत्पर इति। अधिकरणशक्तिप्रधानस्यापि वृत्तिविषयशक्तिमत्परत्वात्। ननु सर्वत्र धर्मप्रकर्षमादाय द्रव्यप्रकर्षसम्भवात् प्रत्युदाहरणासम्भव इत्यत आह। उच्चैस्तमामित्यत्रेति। ननु यस्य क्रियाकारकभावसम्बन्धविशेषणत्वं तस्य चेन्न द्रव्यत्वं तदा तद्घटस्य स्येत्यत्र घटस्य परामर्शो न स्यात्। घटकर्मकदर्शनमिति बोधादत आह। शक्त्या विशिष्टस्येति। घटमित्यत्र केवलघटस्यैव तच्छब्देन परामर्शो न तु क्रियानिरूपितकर्मत्वशक्त्या विशिष्टस्य। उच्चैरादिशब्देभ्यस्तु अधिकरणत्वशक्तिसबद्धस्यैव प्रतीत्या न तस्य सर्वनामपरामर्शयोग्यतेतिभाव। अत एव। क्रियाकारकभाव सम्बन्धविशेषणत्वादेव। इदम्। पूर्वाह्णे शब्दस्य प्रकृतेः पूर्वाह्णनिष्ठाधिकरणत्व प्रतिपादकतया तादृशविशिष्टार्थप्रतिपादकत्वाद्द्रव्यार्थकत्वाद्द्रव्यत्वामुप्रत्यय। आम्वित्यत्रोकारोच्चारणमकारस्येत्संज्ञाभावाय। अत एव। इत्संज्ञनयापि इत्यत्रास्य ग्रहणाभाव। सानुबन्धकत्वादन्यथापरत्वादामेति लोपस्याधिन्वोच्चैस्तरामित्यत्र नुट् स्यात्। न चामुप्रत्ययोऽज्झलाकारादिरेवास्तु यस्येति लोपस्तु न भविष्यत्यकारोच्चारणसामर्थ्यादिति वाच्यम्। मकारानुच्चारणे मकारसामर्थ्यं प्रत्ययतया तमपस्त्वनुदात्तत्वं नास्त्यनुदात्तत्वपक्षे। अकारोच्चारणे तु तस्य प्रत्ययाद्युदात्तत्वेनोदात्ततया तेनैकादेशस्योदात्तत्वं नास्तीदात्तत्वस्य स्पष्टतया छाकारोच्चारणसामर्थ्यमितियस्येति लोपापत्तेर्दुर्वारत्वात्। द्विवचनविभज्योपपदे। अत्र द्विवचनशब्दो न पारिभाषिकार्थस्य प्रतिपादकः किन्तु द्वयोर्वचनमितिवचनम्। उच्यतेऽनेन तद्वचनमित्यर्थकल्पनया द्व्यर्थप्रतिपादकपर। विभज्यशब्द कर्मव्युत्पत्त्या विभजनीयपर। निपातनाद्यत्। एतच्च द्व्यर्थप्रतिपादके विभज्योपपदे च द्वाप्प्रातिपदिकात्तिङन्ताच्च तरबीयसुनौ स्त इत्यर्थ फलित। तेन द्वयोरेकस्येतिमध्यन्तदाह। द्वयोर्मध्ये इति। विभक्तव्यवाचके चोपपदे कस्मात्प्रत्यय इत्याकाङ्क्षायामत्वात्स्यायस्यन्तदाह। विभागप्रयोजकोभूतेति। तेन प्रतिपदोक्तविभक्त्या सुबन्तत्वमप्यस्ते उपपदत्वमित्यर्थोऽयमधिम। ननु यत्र यत्र नामध्ये एकस्य प्रकर्षस्तत्रापितरब दृश्यते तस्य का गतिरत आह। एते न स्त्यपीति। भाष्यप्रयोगमात्रत्वात्साधुत्वकल्पनेऽपि पाणिनीयस्यासेन्नैयोरशुप्रपा

कनिष्ठः कनीयानित्यर्थमपि न । अनुच्चारणसामर्थ्यात् । सर्वादेशत्वन्तु कित्त्वादेशेन चरितार्थमित्याहुः । अन्तिकबाढयोः । अन्यथा । नेदसाधयोरादेशयोरदन्तत्वे । कन्साहचर्याच्चेति । उत्तरसूत्रस्य यथा हलन्तादेशविधायकत्वन्तथा तत्साहचर्यादस्यापि हलन्तादेशविधायकत्वम् । इष्ठादिनिमित्तकत्वेन च साहचर्यम् । तदपवादत्वात् । टिलोपापवादत्वात् । लुप्तषष्ठीकमित्यादि । तथा च यणादेः परस्य लोप इतिवाक्यार्थः । पूर्वस्येत्यत्राकाङ्क्षाबलादर्थमाह । पूर्वस्य इति । अगुणवचनत्वादिति । आकृतिग्रहणेतिलक्षणेन जातिवाचकत्वसम्भवादिति भावः । अपर आहेत्यादिनोक्तं यत्प्रादुर्भावविनाशाभ्यामित्यादि लक्षणलक्षितत्वाज्जातिवाचकत्वन्तस्यास्तीत्याशयेनाह । अन्ये त्विति । इत्याद्यसिद्धेरिति । अतो गुणवचनत्वन्तयोः स्वीकार्यमिति भावः । लभ्यत इति । आद्ये गुणवचनस्येत्यनेन प्रातिपदिकमात्रस्य गुणवचनसंज्ञां विधाय तदनन्तरं समासादिसंज्ञायास्तद्बाधकतयोक्तत्वेन यत्र तासामप्राप्तिस्तत्र गुणवचनत्वमन्यत्र त्वस्येयेति सूचितम् । अन्त्ये प्रादुर्भावविनाशाभ्यामित्यनेन जातेर्लक्षणसूचनादस्यास्त्येव गुणवचनत्वम् । वस्तुतस्तज्जातिलक्षणभाष्यकृतो नाभिमतमपर आहेत्यनेनापरितोषस्य ध्वननात् । किञ्चाकृतिग्रहणा इत्याद्येव । एवञ्च युवत्वञ्जातिरेव । अत एवोक्तं गुणवचनोऽपीति । अत एव युवतितरेत्यत्र जातेश्चेति पुंवत्वनिषेधसिद्धिः । प्रियस्थिरस्फिरोरु । बंहिष्ठेत्यादाविति । आदिना वर्षीयस्य द्राघीयस्य च परिग्रहः । वृन्दशब्देऽदन्तत्वभ्रमनिवारणायाह । वरादिसाहचर्यादिति । तन्निमित्तस्य । आदेशनिमित्तक. । कार्यिणोऽपि कार्यप्राप्तिपूर्वकालिकत्वेन निमित्तत्वव्यवहारः।कार्यान्तरस्य लोपस्य । अत एव ज्ञापकादिति । अन्यथा अस्य गुणवचनत्वाभावान्न स्यात् । भाष्यरीत्या गुणवचनसंज्ञाया अप्राप्तेः । विन्ग्रहणं व्यर्थमितीति । न च विन्नन्ताद्यदेष्ठन्तदा लुगर्थं विन्ग्रहणमिति वाच्यम् । विन्नन्ताद्यदा च सूत्रे विन्ग्रहणन्तदाजादिः प्रत्ययो ज्ञापकाज्जायते विन्ग्रहणाभावे तु स नैव स्यादिति भावः । व्याख्यातमिति । प्रागिति शेषः । प्रकृत्यर्थतावच्छेदकधर्मनिष्ठेति । यथा पटुकल्पेत्यत्र । तत्समानाधिकरणेति । प्रकृत्यर्थतावच्छेदकधर्मसमानाधिकरणेत्यर्थः । यथा चौरकल्प इत्यत्र । अत्र प्रकृत्यर्थतावच्छेदकचौरत्वस्य न्यूनत्वं स्वरूपसत्त्वसमानाधिकरणो ध

यथेत्ते च प्राग्वदिनि कृते नस्तद्धित इति टिलोपः प्राप्नोतीति कैयटः। तथा अधुना इत्यत्रेदम्शब्दादधुना प्रत्यये इदम इशादेशस्तस्य यस्येति लोपो न प्राप्नोति। तथा द्रव्यमित्यत्र द्रोर्विकार इत्यर्थे द्रोश्चेति यत्प्रत्यये ओर्गुण इति गुणो न प्राप्नोतीति दूषणमभिधाय यस्येत्यादौ प्रकृतिभाव इतिसिद्धान्त्येकदेशिनोक्तम्। अत्रादिशब्दः प्रकारे। लोपविधायकत्वेन च साट्टश्यम्। यस्य यस्येत्यादिना लोपप्राप्तिस्तत्र प्रकृतिभावः। ओर्गुणस्तु तेभ्यः पूर्वं इतिप्रकृतिभावाभावः। एवमपि थ्यिय हितः थ्यीयः छादियताऽस्य स्थालीपाकस्य ऋः स्थालीपाक इत्यत्र प्राप्नोति। तथापि दिष्टमेयस्तु प्रकृतिभाव इतिसिद्धान्तिनोक्तम्। एतेन प्रघट्टकेन प्रकृत्यैकाजिति सूत्रस्य स्वविषयप्राप्तसर्वलोपबाधकत्वं स्पष्टतयैव बोध्यते। अत एव कनयति कनिष्ठ इत्यादावल्लोपो न इतिल्लोपो न। न च कनादेशेऽकारोच्चारणसामर्थ्यादल्लोपाभावः। एवमप्यत्रैव नस्तद्धित इत्यस्यापत्तेः। अकारोच्चारणवद्दिसंज्ञकस्यानृशब्दस्योच्चारणसामर्थ्याट्टिलोपाभाव इति तु वक्तुमशक्यम्। सर्वादेशत्वसम्पादनेन चारितार्थ्यात्। किञ्च नण्वनपत्ये इत्यादिसूत्रेषु प्रकृत्या इत्यत एवानुवर्त्तते तेनानटेरित्यस्यैव बाधकः प्रकृतिभावो विधीयते किन्तु लोपमात्रस्य बाधक इतरार्थाधिकारानुरोधात्प्रकृत्यैकाजिति सूत्रस्यापि लोपमात्रबाधकत्वम्। किञ्च यद्यनन्तरस्येतिन्यायेन टेरित्यस्यैवायम्बाधकः स्यात्तदा नैकाजित्येव ब्रूयात्तथा तु नोक्तमतोऽपि सर्वलोपबाधकत्वम्। अस्य प्रकृतिभावस्य सर्वलोपबाधकत्वादेवोपक्रमेऽविशेषेणेति पक्षे शौवमित्यत्र नस्तद्धित इतिटिलोपो नेत्युक्तम्। ननु प्रकृत्यैकाजितिसूत्रस्य श्वेतः श्वेयानिति रूपन्त्वन्यथा सिद्धम्। श्यादेशेऽकारोच्चारणसामर्थ्यादेव लोपाभावस्य सिद्धेः। न च स्रजीयान्। स्रुचीयानित्यत्र विन्मतोर्लुगिति लुकि कृते टिलोपो मा भूदिति प्रकृतिभावविधानमावश्यकमिति वाच्यम्। येन नाप्राप्तिन्यायेन विन्मतोर्लुकष्टिलोपबाधकतया तस्मिन् कृते टिलोपाभावस्य सिद्धेरिति चेन्न। कनिष्ठ कनीयानिति रूपसिद्ध्यर्थमस्यावश्यकत्वात्। न चाचाप्युच्चारणसामर्थ्यं वक्तुं शक्यम्। सर्वादेशसम्पादकत्वेन चरितार्थत्वात्। वस्तुतस्तु नाप्राप्ते टिलोपे नेटाद्यादेशा आरभ्यमाणाः स्वविषये टिलोपस्य बाधका एवेति तेषु कृतेषु टिलोपो न भविष्यतीति नास्य सूत्रस्य प्रयोजनम्। नन्व[illegible]ति इत्येतद्बाधकमवा

अव्ययसर्वनाम्नाम् । अत्र प्रागिवादित्यनुवर्त्तते । एवञ्चाव्ययादिभ्यः प्रागिवार्थेऽर्थान्तेषु टेः प्रागकच् । कस्यायमपवादः । अज्ञाते । अत्र प्रागिवात्क इतिसूत्रात्केत्यव्ययसर्वनाम्नामिति सूत्रञ्चानुवर्त्तते । बाध्यबाधकयोर्थ कृत्नसमावेशाद्वाक्यभेदेनोभयविधानम् । एवञ्चाज्ञातेऽर्थे वर्त्तमानात्प्रातिपदिकात्स्वार्थे को भवति अव्ययादिभ्यस्त्वज्ञातेऽर्थेऽकज्भवति स च टेः प्रागित्येवं वाक्यभेदेनोभयम्भवति तदाह । वाक्यभेदेनेति । न च विशेषरूपेण ज्ञात एवार्थः प्रातिपदिकेन बोध्यत इति अज्ञातोऽश्व इत्यनुपपन्नमिति वाच्यम् । अश्वत्वेन ज्ञातोऽपि स्वामिविशेषसम्बन्धित्वेनाज्ञात इतिसामान्यविशेषधर्मभेदादुभयसम्भवात् । अत एव । युष्मदस्मद्भिन्नप्रातिपदिकविषये प्रातिपदिकस्यैव टेः प्रागकचः प्रवृत्तेरेव । यत्वादिष्विति । अत्र सुबन्तस्य टेः प्रागकच्स्तीकारात्तु पूर्वनिमित्तककार्ये कृतेऽकच् प्रवर्त्तते । ननु कुत्सितोऽश्व इत्यनुपपन्नम् । जातेः कुत्साया असम्भवादत आह । येन धर्मेणेति । कुत्सितगतकुत्सायामिति । यथाऽश्वपदार्थगतधावनविघातार्थतया कुत्सितत्वे विवक्षिते कुत्सितशब्दस्य प्रवृत्तिस्तत स्तस्य विपरीतपादविक्षेपादिकार्थे त्वविवक्षायाङ्कप्रत्ययः । कुत्सित इत्यस्य संज्ञायामितिसूत्रेऽनुवृत्तौ यादृशोऽर्थः सम्पद्यते ,तमाह । कुत्सादिहेतुकेति । अनुकम्पमानसम्बन्धादिति । अनुकम्पाविषयपुत्रादिसम्प्रदानकदानकर्मत्वमिह सम्बन्धः । घनिलचौ च । पूर्वसूत्र एवैतयोः पाठे कर्त्तव्ये योगविभागेन कथनस्य फलमाह । पूर्वसूत्र इति । उक्तविषयातिरिक्त इति । तथा चाज्ञाते कुत्सितेऽर्थे देवदत्तादीनाम्प्रवृत्तिस्तदापि कप्रत्ययठच्प्रत्ययौ वा भवति तदाह । तत्र फठजिति । वुद्धिमविधानादिति । ठाजादाविति सूत्रस्य ठच्प्रत्ययप्रकरणे पाठेनाप्येव यठः पठितश्च एव । शीघ्रमुपस्थितो भवतीति भावः । तस्मिन्निति । टग्रहणे कृते सतीत्यर्थः । पूर्वमिति । तन्निमित्तककार्यात्पूर्वमित्यर्थः । तस्य । इकादेशसम्बन्धिपूर्वकालिकत्वस्य । नन्वजिनान्तेतिसूत्रे लोपपदस्य समासघटकतया कथन्तस्यानुवृत्तिरत आह । अजिनान्तेति । अत एव । उत्तरपदरहितस्य लोपपदस्यानुवृत्तेरेव । तेन । अनभिधानकल्पनेन । अनभिधाने प्रमाणन्तु विपरीतप्रयोगस्य भाष्येऽदर्शनमेव । विनापीत्यस्यान्यथा सिद्धिमाह । समुदायेति । ननु विनापीत्यस्य वचनस्यारम्भे पदस्यैव प्रयोगो न त्वपदस्य

मस्त्वादिपये कुशलता तस्याम्पूर्णता प्रतीयते। तेनान्तर्हितवस्त्वपहारेऽपि साम र्थ्यं द्रक्ष्यते। ननु प्रशंसाया अतिशायनानतिरिक्तत्वादतिशायन इतिसूत्रानन्तरं रूपवितिसूत्रं कार्यमतिशायनपदस्यानुवर्त्तनीयमत आह। प्राशस्त्यमित्यादि। पचतिरूपमित्यत्र क्रियाप्रधानात्तिङन्तात्पत्र रूपप् तत्र तु प्रधानीभूतक्रिया गतमेव पूर्णत्वङ्गम्यते इतिरूपबन्तात्प्रथमैकवचनमेव सामान्ये नपुंसकत्वमेव। पचतिरूपम्पश्यतीत्यादौ तु द्वितीयादिकमपीति वोध्यम्। ईषदसमाप्तौ। समा प्तिः पदार्थानां सम्पूर्णता। ईषदसमाप्तिश्च किञ्चिन्न्यूनत्वविशिष्टा पूर्णता। स्वार्थिकानामप्रकृतितो लिङ्गवचनातिक्रमे ज्ञापकमाह। स्त्रियामितीति। स्व भावात्। शब्दशक्तिस्वभावात्। न हि द्राचाकल्पदद्रयुक्ते द्राचागतगुणस्येषद समाप्तिर्गम्यते। उपमागम्येति। अत एव पटुकल्पो देवदत्तो गुडकल्पाद्राचे- त्यादावभेदान्वयात्समानविभक्तिकत्वम्। उपमानोपमेययोः सामानाधिकरण्य स्य प्रसिद्धत्वात्। तिडन्तादप्येते भवन्ति। तिङश्चेत्यस्य सम्बन्धात्। विभाषा सुपो बहुच्। सुपो विशिष्य विधानादस्य कल्पबादिबाधकत्वमितिशङ्कावार- णायाह। विभाषा ग्रहणमिति। न तत्। न विभाषा ग्रहणम्। अनिष्टत्वे त्वि ति तुना अरुचिः सूचिता। वाक्यस्य प्रकृतसूत्रस्थभाष्यप्रामाण्यादिष्टत्वात्। एवं हि भाष्ये उक्तम्। विभाषा ग्रहणङ्किमर्थम्। विभाषा बहुज्यथा स्यात्। बहुचामुक्ते वाक्यमपि यथा स्यात्। नैतदस्ति प्रयोजनम्। प्रकृता महाविभा- षा तया भविष्यति। इदन्तर्हि प्रयोजनङ्कल्पादयोऽपि यथा स्युरिति। उत्तरत्र त्विति। अत एव पचतकिशब्दतकीत्यादिप्रयोगसङ्गतिः। वृत्ताविति। मूले व्याख्यानवाक्ये। ज्ञापकमिति। अत एव गुडकल्पा द्राचाः सन्तीति भवति। यत्र तु प्रकर्षस्येषदसमाप्तेश्च विवक्षा तत्र पूर्वविप्रतिषेधेन कल्पबादिषु कृते- ष्वपि पुनः प्रसङ्गविज्ञानात्तरपतमपौ भवन्ति। पटुकल्पतरो मृदुकल्पतम इति। तमबादिभ्यः कल्पबादयो विप्रतिषेधेनेतिवार्त्तिकमत्र प्रमाणम्। सोऽपि। था- लपि। तथा सति। प्रकारमात्रे थाल्प्रत्यये सति। अत एव। बाधाभावादेव। यथा जातीयक इति। यथा जातीयक इत्यस्य यादृश इत्यर्थः। अत्र थाल- न्ताज्जातीयर तस. स्वार्थिक॥

॥ इत्यस्तात्याद्याः ॥

नोच्चारितम् । प्रायिकमिति । अत एवैकाच्च प्राचामितिसूत्रभाष्ये प्राग्वच
क्रिमर्थम् । विभाषा यथा स्यात् प्राग्वचनानर्थक्यञ्च विभाषाप्रकरणात् । ।
कृता महा विभाषा तयैव सिद्धमित्युक्तम् । स्पष्टभाष्य इति । तत्र हि प्राग्वच
नानर्थक्यमित्युक्तौ ज्ञाक्ष त्वकजुत्पत्तिस्तेन साधिता । येनेतरः कुत्स्यत इतिविं
पत्ताभप्रकारमाह । यवचेपण इति । स्वार्थिकत्वप्रकरणाबाधायाह ॥

## ॥ इति प्राग्दिवीयाः ॥

इवार्थ इति । प्रकारान्तरे । इवार्थे प्रत्ययविधाने । लुपि युक्तवदितिसूत्र
इत्तावतिप्रसङ्ग इत्यत आह । यचनलं त्विति । ननु यदि देवलकानां या प्रति
मा तत्रैवार्थं लुगदा तत्तद्देवस्थानी पूजार्थं स्थापिता या मूर्त्तिस्तत्र विष्णुः शि
व इत्यादिप्रयोगस्य कथमुपपत्तिरत आह । तत्तदायतनेष्विति । अनन्तरायत
र्णवाधाया इति । अनन्तरं स्वोत्पत्त्युत्तरक्षणेऽवतीर्णः सञ्जातो बाधोयस्यास्सं
भ्रमत्वेन कल्प्यते । यथा शुक्तिविशेष्यकरजतत्वप्रकारकज्ञाने जाते सति तद
नन्तरशुक्तिरियमित्यधिष्ठानस्य तत्त्वनिश्चयेन पूर्वोत्पन्नं रजतत्वज्ञानम्भ्रमः । शु
रजतत्वप्रकारकत्वादितिरीत्या भ्रमत्वप्रकारकानुमितिसम्भवो यत्र तस्याह
भ्रमत्वेन प्रक्रमादित्यर्थः । अर्चास्विति । इदन्देवपथादिषु पठितानां कति
यानामुदाहरणप्रदर्शनम् । तत्र द्वे अपठितम् । अर्चासु पूजनार्थासु चित्रक
ध्वजेषु च । इवे प्रतिकृतौ लोपः कनो देवपथादिषु इति । अर्चासु शिवः विष्
चित्रेषु अर्जुनः दुर्योधनः । रावणः । ध्वजेषु । कपिः । गरुडः । सिंहः । देवपथः ।
सपथो वारिपथः । अभिन्नगणे केषांचित्पाठः प्रपञ्चार्थः । ननु यस्य स्वरितत्व
रस्वघटितसूत्रानन्तरसूत्रे ऽनुवृत्तिस्तत्र भिन्नत्वमितिव्यवहारो युक्तः सत्वमन
त्र प्रतिकृतिपदस्योत्तरसूत्रे ऽनुवृत्त्यभावादत आह । अस्वरितत्वादिति । भा
विरुद्धत्वाच्चेति । तत्र द्वे यमुक्तम् । अपवाभिशब्दो गवादिषु पठ्यते तत्रैवसु
ते नाभिनभञ्चेति तत्र चोदितेनाभेर्नभभावे प्रत्ययानुपपत्तिः प्रकृत्यभावात्
विकृतेः प्रकृतावभिधेयायाम्प्रत्ययेन भवितव्यम् न च नाभिसंज्ञाया विकृतेः
कृतिरस्ति । अभ्यवकमितीष्यते तत्र सिध्यति । विकृतेः प्रकृतिरितरत्वेन व्य

वर्णस्य प्रयोग इतिनियमस्य सिद्धिर्वचनानारम्भे तु वर्णमात्रस्यापि पूर्वोत्तरप दभिन्नस्य प्रयोग स्यादत आह। वर्णमात्रेति। पूर्वाचार्यमत्रेति न चैत्वस्य लादेशविधानमेवास्त्विति वाच्यम्। चकारसग्राह्यस्य द्वितीयादच ऊर्ध्वस्याया देशावतावनिष्टापत्ते, एतदुत्तरडं का चिद्वर्णादपीति इष्यते तत्याप्रामाणि कत्वमाह। त्र्यवर्णादपीतीति। नन्वैन्द्रदत्तशब्दाद्डच्प्रत्यये द्वितीयादच ए काराद्दूर्ध्वस्य लोपे एकारश्रवणापत्तिरत आह। नैन्द्रस्येतीति। द्वितीय सन्ध्य चरमित्यत्र सन्ध्यचरमिति सामान्यत एवोपात्तमत सन्ध्यचरस्तमेव निमित्त न तु तदादे पदत्वमप्यपेक्षितमित्याशयेनाह। एकपदेपीति। नन्वेवं वाक् शब्दस्य प्रत्यये ठचि परे कुत्वे कृते इकादेशे कृतेऽपि ककारस्य श्रवणापत्तिरत आह। अत्रे कादेशेति। कुत्वादीत्यादिना जश्त्वस्योपपदस्य। एकाचरेतिवा र्त्तिकारम्भस्यावश्यकत्वस्वोधयितुमाह। यद्यपीत्यादि। एतेन। पूर्वोक्तव्याख्या नेन। द्विविधस्यापि पदत्वस्य बाधमाह। तत्रेति। स्पष्टश्चेदमिति। षषष्ठा जादिवचनात्सिद्धमिति वचनेन ठाजादाविति वचनस्यैव लक्ष्यानुरोधादत्र प ङ्क्तिशब्दात्प्रत्ययस्तत्प्रवृत्तिर्न त्वेकाचरेति वचनस्येति भाव इदमग्रो क्तनिकान्यायेन। वस्तुत शेवलेति सूत्रभाष्येऽपि स्पष्टमित्यर्थ। तेन। अजत सन्धोना लोपविधानेन। अन्यथा यकारस्य श्रवणापत्ति। इतिभेद इति। तै नान्यतरेणान्यतरस्य गतार्थता न शङ्क्या। अत एव। उपलक्षणत्वादेव। मन्वेकशब्दोपादानाभावे द्वयोरिति निर्द्धारणषष्ठी कथमत आह। द्वयोरिती ति। व्याख्यानादिति। निर्द्धार्यमाणवाचिभ्य किमादिभ्य प्रत्ययविधानसाम र्थ्यमूलकव्याख्यानादित्यर्थ। न प्रत्ययार्थ इति। अत एव कतर इत्यादिशब्द घटितवाक्यजन्यशाब्दबोधेन निर्द्धारणस्य भानम्। अनभिधानादिति। अत्र प्र माणन्तु बहुनाञ्जातिपरिप्रश्नेडतमजित्यत्र बहुग्रहणमनर्थकम्। किङ्कारणम्। किमित्येतत्परिप्रश्ने वर्त्तते परिप्रश्नयानिर्ज्ञाते। अनिर्ज्ञातञ्च बहुषु। द्वेकयो पुनर्निर्ज्ञातमिति भाष्यमेव। अत एव। जातिपरिप्रश्न इत्यस्यानावश्यकत्वादेव। तत्र साधकभाष्यमाह। कतमेति। अध्यापक गुरौ मैत्येनेन जातिपरिप्रश्नाभा वो ध्वनित। वाग्रहणमितीति। समुच्चयार्थत्वकल्पनयेति भाव। अत एव। महाविभाषया क्वचित्प्रत्ययाभावादेव। क एतयोरर्थयोरिति। अत कतर इति

भवतीत्यग्रामणीपूर्वादिति विशेषणं व्यर्थं स्यादिति तत्सामर्थ्यमूलकव्याख्यानादित्यर्थः। लोहिता ध्वजा येषामिति। उद्भूतावयवभेदस्य समुदायस्य पूगवाचकत्वमनयितुम्बहुवचनोपादानम्। अग्रामणीपूर्वादित्यस्याभावे देवदत्तो ग्रामणीर्यस्य पूगस्य पूर्वावयवस्तस्मादपि स्यात्। तत्र देवदत्तका इत्येव भवति। स एषाङ्ग्रामणीरिति कन्। पूगादव्रातस्य यो विशेषस्तमाह। शसीरायासेति। टित्वसामर्थ्यादिति। स्त्रियामिव ङीप् भवति। मूले ब्राह्मणे तद्विशेषग्रहणम् राजन्ये स्वरूपग्रहणमत्र वृत्तिग्रन्थो मानम्। तत्र हि वाहीकेषु ब्राह्मणशब्दवाच्यायुधजीविसङ्घाभाव इत्युक्तम्। दामिन्यादित्रिगर्त्तषष्ठाच्छः। आयुधजीविसङ्घादित्यनुवर्त्तते। दामिन्यादिभ्यः प्रातिपदिकेभ्यस्त्रिगर्त्तषष्ठेभ्यश्च स्वार्थे छ. स्यात्। त्रिगर्त्तः षष्ठो वर्गो येषान्ते मूले उदाहृताः। पर्श्वादियौधेयादिभ्याम्। अस्त्रियामित्यनुवर्त्तत इति। मण्डूकप्लुत्येति शेषः। भाष्यग्रामाण्यादिति। तत्र ह्यापत्यग्रहणङ्कर्त्तव्यन्दोषाद्यञ प्रतिषेधार्थम्। इह मा भूत्। दैष्येति। तत्तर्हि वक्तव्यम्। नैवं विज्ञायते कञ्ञ्कर्णोऽयञश्चेति कथन्तर्हि कञ्ञ्कर्णोऽयञश्चेतीत्युक्तम्। अत्र भाष्ये दोषाद्यञ इत्येवोक्तञ्च त्वभिजिति सूत्रविहितस्य यञोऽप्युदाहृतम्। यदि तस्मिन्सूत्रेऽस्त्रियामित्यस्य सम्बन्धो न स्यात्तदाऽभिजितोऽपत्यं स्त्रीत्यर्थे यञ्प्रत्यय. स्यात् ततश्च यञश्चेति न्यासे ङीप् स्यादयञश्चेति न्यासे तु नेति फलभेदः स्यादिति कथमयञिति छेदेन वार्त्तिकप्रत्याख्यानमिति तस्मिन्सूत्रेऽस्त्रियामित्यस्य सम्बन्धोऽस्तीतिभाष्यकाराभिप्रायः कल्प्यः। एवञ्च तत्सूत्रपूर्वपठिते पर्श्वादीतिसूत्रेऽस्त्रियामित्यस्यासम्बन्धे साधकाभावादत्राप्यस्त्रियामिति सम्बध्यत एवेति भावः। तेन। अस्त्रियामित्यस्य सम्बन्धेन। मध्यपठिते तत्सम्बन्धे साधकमाह। आदेरणिति। अपत्याणन्तादिति। अनन्तरापत्याणन्तादित्यर्थः। अस्मिन् सूत्रेऽण इत्युपादानाद्यदा गोत्रापत्ये भिजिच्छब्दादण् तदापि यञ् भवत्येवाणन्तत्वाचार्थ एव यञन्तात्प्रतीयते न तु यञोऽस्य गोत्रवाचकत्वमित्येको गोत्र इतिसूत्रस्याप्रवृत्ति.। एतद्यञन्तस्य शब्दस्य तु गोत्राभिधायकत्वमस्त्येवेति गोत्रचरणादिति वुञ् भवत्येवेति भावः। स्पष्टेदमिति। तत्र द्वाणो गोत्रादिति वक्तव्यमिह मा भूत् आभिजितो मुहूर्त्तः। आभिजित. स्थालीपाक इतीत्युक्त-

ति भावः । नापिताद्यर्थमस्ति अवयविनोऽवयवार्थत्वाभावात् । शरीरावयवो नाभिस्तद्वाचकात् हितार्थे शरीरावयवाद्यदिति यता भवितव्यम् । नाभ्यन्त-लमिति । गवादियतासन्नियुक्तो न नभावोऽन्यत्र यति न भवति । गवादियत्र च क्त एव तदुक्तं भाष्ये । प्रदेवतन्मण्डलचक्राणाम्मण्डलचक्रन्तन्नभ्यमित्युच्यत इति । मण्डलाकारश्चक्रं येषान्तानि मण्डचक्राणि शकटानि तेषाम्मण्डलाकारं यच्चक्रन्तन्नभ्यमुच्यत इत्यर्थः । एवं भाष्ये शब्दाङ्कृतोक्तम् । सिद्धन्तु शाखादिषु वचनादङ्गत्वञ्च । सिद्धमेतत् । कथम् शाखादिषु नाभिशब्दः पठितव्य. अङ्गत्वञ्च वक्तव्यम् नाभिरिव नभ्यमिति । कः पुनरिहोपमार्थः । यत्तदक्षधारणम्परिवर्त्तनञ्चा । एवम्प्रकारेण चक्रे नभ्यशब्दः साधितः स च शाखादिभ्यो यदिति न्यास एवोपपद्यते य इति पाठे तु प्रत्ययाद्युदात्तत्वे नान्तोदात्तत्वापत्तिरिति शाखादित्वात् सिद्धमित्यसङ्गतं स्यात् । द्रव्यञ्चभव्ये । भव्येऽभिधेये द्रुघ्वादिवार्थे यप्रत्ययः स्यात् । भव्यशब्दार्थं व्याचष्टे । आत्मवानिति । समासाच्च तद्विषयात् ॥तच्छब्देन इवशब्दः परामृश्यते । स इवशब्दस्तच्छब्देनोपस्थितः स्वार्थम्बोधयति । एवञ्च सः इवार्थो विषयो यस्य तादृशो यः समासस्समासादिवार्थे छः स्यात् । अत्र विषयपदोपादानेनानन्यभावबोधकेनैवार्थविषयत्वं समासस्यावयवद्वारकं विशेषणमितिलब्धम् । अवयवत्वञ्च पूर्वोत्तरपदयोरविशिष्टमिति इवार्थवृत्तिसर्वावयवकत्वं लभ्यन्तदाह । इवार्थविषयेत्यादि । अत एव । इवार्थवृत्तिसर्वावयवकत्वस्याश्रयणादेव । इन्द्राच्च इवार्थेनेति । तस्य समासस्येवार्थविषयत्वाभावात् । नन्विवार्थे समासविधायकशास्त्राभावाद्दुर्दृश्याप्रसिद्धिरत आह । काक इवेति । इवार्थवृत्तित्वमुपपादयति । तथेति । तदिसमभिव्याहार श्रुति बोध इत्यन्वय. । समासार्थोपमानप्रयोज्येति । समासार्थो यदुपमानं काकागमनसमानाधिकरणोपमानतालपतनन्तद्बोधकस्य तत्प्रयोज्यलक्षणया समासः उपमानतालकृतकाकवधे वर्त्तते तस्य च प्रत्ययार्थोपमायासुपमानत्वेन तादृगकाकवधसदृशयोरपतनसमानाधिकरणदेवदत्तागमनजनितचोरकृतो देवदत्तस्य वध इति बोध- । पूगाञ्ञ्योऽग्रामणी । व्याख्यानादिति । स्वरूपस्य ग्रहणार्थं प्रत्ययविधित्वेन तदन्तस्याग्रहणेन केवलपूगशब्दादेव प्रत्ययविधायकमिदमवेक्षया च मत्पूगाग्रामणीशब्दयत्र तत्र गं

ष्टग्रहणमायिकन्तं नायं राज्ञोऽधीन.। स्त्रिया अधीन इत्यपि भवति। प्रतिदिश्यतां वा मत्रामन्त्रापि नेह मिभारोऽस्ति। कल्पो हि वाक्यशेषो वाक्यं वक्तार्यधीनं हीतिभाष्यप्रयोगात्। इयमभ्युच्चय युक्तिरिति। उत्तरसूत्रे विभाषा ग्रहणेन ज्ञापकेनास्य नित्यत्वकथनरूपा उक्तिरभ्युच्चयः। कथन्तर्हि नित्यत्वमित्याकाङ्क्षायामाह। प्रकृतीजात्यन्ता इतीति। विभाषाञ्चेरदिक् स्त्रियाम्। अञ्च्यन्तात्प्रातिपदिकाददिक् स्त्रियां वर्त्तमानात्स्वार्थे खः प्रत्ययो भवति। अदिक् स्त्रियामितद्वाचष्टे। अदिगिति। दिक् चासौ स्त्री च दिक्स्त्री न दिक्स्त्री अदिक्स्त्री। प्राक् प्राचीनमित्यत्र प्राक्शब्द अस्तात्यन्तः। प्राचि देशे प्राक्। दिक्शब्देभ्य इत्यस्तातिरञ्चे लुगिति लुक्। तथा च प्राक्शब्दोऽत्राधिकरणशक्तिप्रधानस्तस्यालिङ्गत्वमाह। निर्लिङ्गमिति। खान्तविषये विशेषमाह। खान्तमिति। अत्यन्तविरोधापत्तेरिति। यद्यलिङ्गन्तदात इर्थं किमपि लिङ्गन्न प्रतीयते लिङ्गसर्वनामनपुंसकत्वे तु सत्त्वादीनां साम्यावस्था रूपा स्थितिः प्रतीयते सा च नात्यन्तं विरुद्धा। सर्वपदार्थानाङ्गुणत्रयपरिणामत्वात्पूर्वावस्था रूपत्वमेव। उपचयादिकन्तु गुणानां या पूर्वावस्था ततो विलक्षणमिति सतो विरोध इति;भावः। एकवचनञ्चेति। औत्सर्गिकमिति शेषः। पदसंस्कारपक्ष इति। तस्मिन्पक्षे पदानि संस्कृत्ययथेष्टन्तेषां योजनङ्क्रियते। वाक्यसंस्कारपक्षे तु विपरीतमपीत्याह। यदेति। मानञ्चिन्त्यमिति। भाष्ये प्राक् प्राचीनम्। प्रत्यक्प्रतीचीनम्। उदक् उदीचीनमित्येव प्रयुक्तमत एतद्विषये पदसंस्कारपक्ष एवेति भावः। प्राप्तिरिति। दिक्शब्दस्य स्त्रीलिङ्गत्वाददिगिति वक्तव्ये स्त्रीग्रहणं स्त्रीप्रत्ययान्तान्मा भूदित्यर्थमिति भावः। अस्त्रियामिति किमिति मूले अदिगित्युक्तावपि स्त्रीप्रत्ययान्तस्य व्यावृत्तिर्भविष्यतीत्यभिप्रायेण प्रश्नः। प्राचीनङ्ग्रामादाम्रा इत्युक्तन्तस्य त्वयम्भावः यद्यप्ययन्दिगवच्छिन्न वाचकः प्राक्शब्दस्तथाप्यस्त्रीलिङ्ग इत्यतो न स्त्रियामित्यधिकारो य प्रत्यय इत्यस्माद्भवति प्रत्ययः स्त्रीग्रहणाभावे तु न स्यादित्यव्याप्तिवारणाय स्त्रीग्रहणमिति भावः। भाष्यप्रयोग इति। एतादृशप्रयोग एव प्रकृतसूत्रविहितखान्तस्य विशेष्यवाचक शब्दापेक्षया विभिन्नलिङ्गवचनसद्भावे स नमिति भावः। जात्यन्ताच्छबन्धुनि। ननु ब्राह्मणजातीय इत्यत्र ब्राह्मणस्य जातिरिति समासे जात्यन्तस्य ब्रा

म्। पादशतस्य। अनेन सूत्रेण वीप्सायां वुन्विधानात्तद्धितार्थेति सूत्रविहिता समाससंज्ञा न प्रत्ययविषये भवति। अत एव। तद्भावभावितामात्रेण निमित्तत्वादेव। अत्र द्यकारादेशस्योप्रत्ययसन्नियोगेन विधानेऽपि तस्यार्धधातुकनिमित्तकत्वमस्त्येवेति लोपः प्रवर्त्तते तस्याचः परस्मिन्निति स्थानिवत्त्वाच्च गुणः। तथा निमित्तत्वानाश्रयणादिति। यत्र लोपस्य किञ्चित्सन्नियोगेन विधानन्तत्र यत्सन्नियोगेन विधानन्तस्य निमित्तत्वेनाग्रहणमिति भावः। किञ्च धिन्वीतिसूत्रीयदृष्टान्ते नलोपस्य परनिमित्तकत्वमित्ययुक्तम्। तत्र हि सौत्रक्रमानुरोधेनादावकारादेशस्तत उप्रत्ययस्तस्योप्रत्ययस्योपदेशकालेऽकारान्तत्वबुद्धिसत्त्वादकारलोप इत्यतोऽकारलोपकाले आर्द्धधातुकबुद्धेः सत्त्वात्परनिमित्तत्वमार्द्धधातुके इत्यस्य सप्तम्यन्तस्य लोपविधायके सम्बन्धात्। प्रकृते तु यद्यपि वुन्प्रत्ययः प्रथमम्प्रवर्त्तते ततो लोपस्तथापि वुनः सप्तम्यन्तपदेनानुपादानान्नलोपनिमित्तत्वमिति। दण्डव्यवसर्गयोश्च। दण्डोदमनम् तच्च न शारीरदण्डेन किन्तु द्रव्यग्रहणेनेत्याशयेनाह। दण्डोदण्डनमिति। व्यवसर्गो दानम्। एतयोरर्थयोर्गम्यमानयोः स्वार्थे वुनित्यर्थः। स्थूलादिभ्यः प्रकारवचने कन्। प्रकारस्य वचनन्द्योतनन्तस्मिन्नित्यर्थः। स्थूलको ह्रस्व इत्यस्मात्सदृशस्थूलाभिन्न इति बोधः। *अनत्यन्तगतौ क्तात्*। *अनत्यन्तगतौ गम्यमानायां क्तान्तात्कन् स्यात्*। अशेषतः सम्बन्धाभाव इति। यस्मिन्वस्त्रे छेदनस्य नाशेषतः सम्बन्धो बाह्यसर्वावयवावच्छेदेन सम्बन्धरूपस्तद्वस्त्रं छिन्नकमित्युच्यते। तत्सन्निहितेन। क्तान्तसन्निहितेन। तस्याकृतिगणत्वे। याबादेराकृतिगणत्वे। तदस्यानित्यत्व इति। तद्विभाषा ग्रहणमस्य अषडक्षेतिसूत्रविहितखस्य। अषडक्षीणो मन्त्र इत्यस्याविद्यमानानि षडक्षीणि यस्मिन्नित्यर्थः। अत्राक्षिशब्दः ष्योपपरः। द्वाभ्यामेव क्षत इति तु फलितार्थकथनम्। आशिताःस्तर्पिता गावो यस्मिन्नित्यर्थे आशितङ्गवीनमिति भवति। आशितशब्दोऽत्र ण्यन्तात्कर्मणि क्तान्तः। पूर्वपदस्य मुमागमो निपातनात्। अलङ्कर्मीण इत्यस्य कर्मणे समर्थ इत्यर्थः। पर्यादयो ग्लानाद्यर्थे *चतुर्थ्येति समासः*। *अलम्पुरुषायेत्यस्यापि पुरुषाय प्रतिपुरुषाय सन्नद्धाय* समर्थस्ततोऽपि बलवत्तर इत्यर्थः। ईश्वराधीन इत्यस्य ईश्वरेऽधिष्ठित इत्यर्थः। अधिशब्दस्य शौण्डादिगणपाठात्सप्तमीतत्पुरुषः। अध्युत्तरपदादित्यत्रोत्तरप-

द्धावाचकात्प्रत्यय इत्यर्थः। यद्यप्याहत्तिशब्दस्य द्वितीयप्रवृत्तौ रूढिस्तथापि प्रकृतसूत्रे ऽभिशब्दोपादानसामर्थ्यादभ्याहत्तिशब्दो जन्ममात्रपर इत्याशयेन मूलेऽभ्याहत्तिर्जन्म त्युक्तम्। अत एव। अभ्याहत्तिशब्दस्य जन्ममात्रपरत्वादेव। इति नेति। किन्तु त्रिः पचतीत्येव भवतीति शेषः। तत्सङ्ख्योत्पत्तिपरा इति। पञ्चे ति सङ्ख्या यस्यास्तादृशी योत्पत्तिस्तत्परा इत्यर्थः। तेषाम् पञ्चादिशब्दानाम्। एवञ्च पञ्चकृत्वो भुङ्क्ते इति शब्दात्पञ्चसङ्ख्योत्पत्तिकमेककर्तृकं भोजनमिति बोधः। एव मन्यत्रापि। नन्वेका क्रिया न पञ्चसङ्ख्योत्पत्तिकेत्यतोवर्त्तमानार्थकलट् प्रयोगानुपपत्तिरत आह। समुदायस्ये ति। एकदिवसाधिकरणैककर्तृ कपञ्चसङ्ख्योत्पत्तिकभोजनक्रियासमुदायस्ये त्यर्थः। पचतीत्यादौ यथोपक्रमप्रभृत्यपवर्गपर्यन्तं वस्तुतः क्रियाणाञ्जायमानानामनेकत्वे ऽपि शब्दाभिहत्तभेदाक्रिया प्रतीयते तथा पञ्चकृत्वे त्यत्रापि निहत्तभेदभोजनक्रियायाम्पञ्चसङ्ख्योत्पत्तिकत्वान्वयः। यत्र तु कर्मणि प्रत्ययस्तत्र पञ्चसङ्ख्योत्पत्तिकत्वस्य विक्लित्यादिफलरूपक्रियायामन्वयः। अतः पञ्चकृत्वः पच्यन्ते ते मनानीत्यादिप्रयोगा अपि भवन्ति। तिरोहितावयवभेदफलसमुदायविवक्षायामेकवचनमप्यञ्चकृत्वः पच्यात इति च भवति। उद्भूतावयवभेदत्वे बहुवचनम्। एकजातीयानामेककर्मकाणामेककर्तृकाणामेव क्रियाणाञ्जन्मसङ्ख्या न एवास्य साधुत्वं शब्दशक्तिस्वभावादिति बोध्यम्। सङ्ख्याया इत्यस्योपादाने सति भूरिवारानित्यत्र यथा नातिप्रसङ्गस्तथाह। नार्यमिति। अयम्। भूरिशब्दः। अप्रसिद्धेरिति। नियतविषयपरिच्छेदको हि तत्र प्रसिद्धः। नन्वेवम्बहुशब्दादपि सङ्ख्याकार्यन्न स्यादत आह। बहुशब्दस्त्विति। इत्युक्तमिति। सङ्ख्यासंज्ञासूत्रव्याख्यानावसरे। कालपरः काले शक्तः। भोजनपर्याप्त इति। भोजनक्रिया निष्ठाया कालिकसम्बन्धावच्छिन्ना व्यापकता तन्निरूपिततादात्म्यसम्बन्धावच्छिन्नव्याप्यता विशिष्टः। भूरिवारशब्देन यो बुद्धिस्थानेकावयवकः परिच्छिन्नोघट्यादिसमुदायो बोध्यते तद्व्याप्यकत्वस्यवृत्तित्वानुपपन्नम्। स च घट्यादिसमुदाय उद्भूतावयवभेदोविवक्षित इति प्रकृते बहुवचनम्। तिरोहितावयवभेदतादृशसमुदायविवक्षायान्तु भूरिवारम्भुङ्क्ते इत्येकवचनम् भवत्ये व। यत्तु भूरिशब्दो बहुत्वसङ्ख्योत्पत्तिकाहत्तिकक्रियाधारकालपरस्तस्य कालबोधकवारशब्देन बहुव्रीहिः

ब्राह्मणत्वजातिपरत्वन्न तु द्रव्यपरत्वमिति जात्यन्तस्य बस्तु नि। वर्त्तमानत्वमनुप पन्नमत आह'।तज्जात्याश्रयद्रव्यलक्षकादिति। एवञ्च स्वार्थिकप्रत्ययप्रकरणबाधाय लाक्षणिकस्यैव प्रकृतित्वम्। वस्तुतस्तु प्रकरणबाधेन जात्यन्ताच्छब्दार्थबोधकादन्यत्रार्थे छ स्यादित्येवार्थ उचित इत्याशयेनाह। अर्थ इति। द्रव्यस्य जातिव्यञ्जकत्वञ्चयमिति चेदित्थम्। जातेः प्रत्यक्षद्रव्यघटितपरम्परासन्निकर्षेण भवति। द्रव्यबोधकब्राह्मणादिपदजन्यशाब्दबोधेऽपि जातिर्द्रव्यनिष्ठविशेषतानिरूपितप्रकारतया भानन्न तु स्वातन्त्र्येणेति। न च ब्राह्मणत्वादिपदजन्यशाब्दबोधे स्वातन्त्र्येणैव भानमिति वाच्यम्। तत्रापि ब्राह्मणेतरावृत्तित्वे सति यावद्ब्राह्मणवृत्तित्वरूपब्राह्मणत्वप्रकारक एव शाब्दबोध इति तादृशशाब्दबोधस्य या विषयिता सा द्रव्यविषयिता व्याप्यैव। जातिव्यञ्जकत्वञ्च जातिविषयिता प्रयोजिका या आश्रयविषयिता तन्निरूपकत्वमित्यस्य विवक्षितत्वात्। प्रत्युदाहरणे ब्राह्मणजाति शोभनेत्यत्र जात्यस्य न द्रव्यलक्षकत्वमतो न तत्प्रत्यय।परीत्या त्वाश्रयस्य विवक्षा नेति न प्रत्यय इति भावः। स्थानान्ताद्विभाषा। स्थानान्तात्प्रातिपदिकाद्विभाषा छ प्रत्ययः स्यात्। तत्रे तृस्थानान्तं सस्थानेनार्थवद्भवति। समानं स्थानमस्य सस्थानं। यो हि पितृतुल्यो भवति तस्य पितृस्थानं समानं स्थानम्भवति। सस्थानशब्दे उष्ट्रमुखवत्समासः तेन अन्यथन्तादाह। स स्थानशब्द इति। ज्योतिर्जनपदेति सूत्रेण समानशब्दस्य सादेशः। सस्थानेनेति करणे तृतीया। भवनक्रियायामस्यार्थोऽन्वेति स्थानमपदम्। मान्यत्वादि रूपम्। अस्मिन् सूत्रे विभाषा ग्रहणाद्विभाषा इयमध्यपठितत्वाज्जात्यन्तादिति नित्यमिति लभ्यते एतदर्थमेवात्र विभाषा ग्रहणम्। अनुगादिनष्ठक्। सूत्रार्थमाह। अन्वित्यादिना। स एवेत्यस्य अनुगदतीति य इत्यर्थः। णचःस्त्रियामञ्। यद्यपि कर्मव्यतिहारे णच् स्त्रियामिति सूत्रेण णच्प्रत्ययः स्त्रियामेव विहित इति णजन्तादिहितोऽञ्प्रत्ययः स्त्रियामेव भविष्यति स्वार्थिकत्वात्तथापि स्वार्थिका प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ता इतिज्ञापनायात्र स्त्रियामिति। तेन गुडकल्पाद्राक्षेत्यादि सिध्यति। विसारिणो मत्स्ये। विसारिन्शब्दादण् प्रत्ययो भवति। समुदायेन मत्स्येऽभिधेये। सङ्ख्यायाः क्रिया। एककर्तृणां सजातीयक्रियाणाम्पुनः पुनर्गणनं नाभिभवननक्रियाभ्यावृत्तिगणनमसत स्वार्थे स

दा त्वधिकारे प्रत्ययस्तस्मिन्पक्षे सूत्रार्थमाह। प्राचुर्येणेत्यादि। व्याख्याना-दिति।अन्नमयो यज्ञः।अपूपमयं पर्वेत्यादिष्वित्यादि सम्मतप्रामाणिकप्रयोगदर्शनमूलकव्याख्यानादित्यर्थः। तद्ग्रहणमिति। प्रातिपदिकादुक्तेऽर्थद्वये प्रत्ययविधानेऽपीष्टप्रयोगोऽप्राप्त इत्यादिः टित्वान्ङीबिति। स्वार्थिकानामप्रकृतितो लिङ्गवचनानुवर्त्तनस्य सत्त्वात्। अन्नमयो यज्ञ इत्येतत्तु क्व चिल्लिङ्गवचनातिक्रमस्यापि सत्त्वेन। समूहवच्च बहुषु। प्रकृतवचने इत्यनुवर्त्तते। बहुषु प्रकृतवचने चार्थ इत्यर्थः प्रातिपदिकार्थे स्वातन्त्र्येण बहुत्वेऽस्यान्वयाभिप्रायेण तथा च यत्फलितन्तदाह। बहुत्वविशिष्टइति। समूहवदित्यत्र मतुप्यन्तादिति:। अनन्तावसथेतिहभेषजात्। इतिहेतिनिपातसमुदायादयम्प्रत्यय.। स चोपदेशपरम्परायां वर्त्तते। भेषजशब्दम्प्रकृतसूत्रघटकं साधयति। भिषः षुगित्यादि। अत एव निपातनादिति। अन्यथा आदिहृस्वाभैषजमिति स्यादितिभावः। देवतान्तात्तादर्थ्ये यत्। तदर्थमवतादर्थ्यम् स्व.र्थे ध्यञ् तदाह।तदर्थवस्तुनीत्यर्थ इति।तेन। स्वार्थिकतलप्रत्ययस्वीकारेण। देवदेवत्यमिति। सिद्धमिति।देवदेवत्यमित्यस्य देवस्य देवत्यमित्यर्थः। एतेन। निरुक्तदेवतात्वस्य पितृष्वपि सत्त्वेन। पादार्घाभ्याञ्च। तादर्थ्ये इत्यनुवर्त्तते। अत्र चकारोऽनुक्तसमुच्चयार्थः। तेन एव वै सप्तदशाद्य-रञ्छन्दस्य इति सिद्धम्। अत एव निपातनादिति। आग्नीध्रसाधारणेति वार्त्तिके निपातनात्। साधारणशब्दार्थं व्याचष्टे। अनेकमिति। साधारणशब्दे समानशब्दस्य सादेशस्तु पृषोदरादित्वाद्बोध्यः। अत एव निपातनात्सादेशस्य दीर्घ इत्येवोक्तम्। अनेन वार्त्तिकेनोभयोरपि निपातनमिति तु युक्तम्। लोहितान्मणौ। मणौ वर्त्तमानाल्लोहितशब्दात्स्वार्थे कनित्यर्थः। वर्णे चानित्ये। अनित्ये वर्णे वर्त्तमानाल्लोहितशब्दात्कन् स्यात्। अस्मादिति। लोहिताल्लिङ्गबाधनं वेतिवार्त्तिकादित्यर्थः। अत एव। अस्य कनोऽत्यन्तस्वार्थिकत्वेन स्वार्थद्वयमाधापेचतयाऽप्पारङ्गत्वेन द्याबुत्पत्तेः प्रागेवोत्पत्तेः स्वीकारादेव। उपायादितीति। इदं कृत्स्वत्वम्प्रत्ययमत्रियोगे न। एतेन। दीर्घस्य स्थानित्वकथनेन। अन्त्यस्य स्यादिति। कृत्स्वत्वमन्त्यस्य स्यादित्यर्थः। व्याख्यानादिति। औपयिकेति लक्ष्यदर्शनमूलकव्याख्यानादित्यर्थः। वाचो व्याहृतार्थायाम्। अन्येनोक्त इत्यस्यार्थेन प्रकाशित इत्यर्थः। अनेन यद्यपि वाचिक इत्यस्य अनुवादात्म

भोजनक्रियैवान्यपदार्थः । एवञ्च भूरिशब्दस्य क्रियाविशेषणीभूतार्थप्रतिपादकतया कर्मण्येव द्वितीया । क्रियाविशेषणत्वात् । न च मृदुपचतीतिवन्नपुंसकत्वापत्तिरिति वाच्यम् । अनियतलिङ्गकस्यैव क्रियाविशेषणीभूतार्थप्रतिपादकस्य नपुंसकत्वात् । वारशब्दस्य तु नित्यपुंस्त्वात्तदन्तसमासस्यापि लोकतो नित्यपुंस्त्वमिति केचित् । तन्न । शास्त्रेण पुंस्त्वस्यानुपपादनात् । अन्ये तु भूरिशब्दो बहुसङ्ख्यावृत्तिकजन्मवचनः । कालावच्छिन्नपरश्च वारशब्दस्तयोश्च कर्मधारय एवञ्च समासस्य पुंस्त्वमाव्ययमेव । तदर्थस्याभेदेन भुजधात्वर्थफलेऽन्वेतीति क्रियाविशेषणत्वाद्द्वितीयेत्याहुः । क्रियाग्रहणं प्रकृतसूत्रे व्यर्थमित्यभिप्रायेणाशङ्कते । यद्यपि द्रव्यगुणयोरिति । पञ्चकृत्वः श्वेत. पटः पञ्चकृत्वो धनशब्दं वदन्त इत्यादिप्रयोगास्तु जात इत्यादिशब्दाध्याहारेणोपपाद्याः । प्राचीनोक्तङ्क्रियाग्रहणप्रयोजनं खण्डयति । साध्यस्वभावैवेति । ननु यदि साध्यस्वभावैवेति न नियमस्तदा द्वौ पाकावित्यादौ सुजापत्तिरत आह । द्वौ पाकाविति । अभावादिति । किन्तु सिद्धावस्थक्रियागतन्वित्वं विवक्षितमिति शेषः । अनापत्तिरिति । द्विशब्देन सामानाधिकरण्याद् द्वित्वस्यैकस्यैव सर्वोदेनान्यतरवैयर्थ्यमितिन्यायेन पाकशब्दाद्विवचनेन च प्रतिपादनम्भवति तच्च क्रियाजन्मगणने न सम्भवतीति भावः । अत एव । क्रियाजन्मगणनायामीतादृशस्थले द्विवचनासम्भवादेव । न च पञ्चवारान् भुङ्क्त इति यत्र प्रयोगस्तत्र पञ्चन्शब्दात्कृत्वसुच् स्यादिति वाच्यम् । तत्र वारशब्देनाभ्यावृत्तेरुक्ततया सङ्ख्याशब्दस्य तद्वृत्तित्वाभावात् । नचैवम्भूरिवाराम्भित्यत्राप्येवं वक्तुं शक्यमिति मूलोक्तमप्युदाहरणविरोध इति वाच्यम् । तस्य भूरिभुङ्क्त इत्येतदुपलक्षणत्वात् । युग्मोभादिशब्दादिति । एतयोर्नियतविषयपरिच्छेदकत्वमभावेऽपि लोके एक युग्मौ चय इत्येवङ्गणना न हि प्रसिद्धेति भावः । विभाषा बहोर्धा विप्रकृष्टकाले । क्रियाभ्यावृत्तिगणन इत्यनुवर्ततेऽत आह । अविप्रकृष्टेत्यादि । द्वित्रसर्पेति मूले शेषत्वविवक्षया षष्ठी । तत्प्रकृतवचने मयट् । व्याख्यानादिति । प्रकृतशब्दस्य प्रस्तुतार्थकतया प्रकृते मयडिति वक्तव्ये वचनग्रहणसामर्थ्यलब्धमाधुर्येण प्रस्तुतमकृतमित्येवं दृत्तिकारादिभिर्व्याख्यातत्वप्रकृतादित्यर्थः । इत्यसगार्थं इति । वचनशब्दस्य भावल्युडन्तत्वपक्षे इति शेषः । य

दा त्वधिकारणे प्रत्ययस्तस्मिन्पचे सूत्रार्थमाह । प्राचुर्येणेत्यादि । व्याख्याना-दिति।अन्नमयो यज्ञः।अपूपमयं पर्वेत्यादिष्वित्यादि सम्मतप्रामाणिकप्रयोगदर्शनमूलकव्याख्यानादित्यर्थः । तद्ग्रहणमिति । प्रातिपदिकादुक्तेऽर्थद्वये प्रत्ययविधानेऽपीष्टप्रयोगोऽप्राप्त इत्यादिः टिड्ढाणञित्यादिना ङीबिति । स्वार्थिकानामप्रकृतितो लिङ्गवचनानुवर्तनस्य सत्त्वात् । अन्नमयो यज्ञ इत्येतत्तु क्व चिल्लिङ्गवचनातिक्रमस्यापि सत्त्वेन । समूहवच्च बहुषु । प्रकृतवचने इत्यनुवर्त्तते । बहुषु प्रकृतवचने चार्थ इत्यर्थः प्रातिपदिकार्थे स्वातन्त्र्येण बहुत्वविषयस्यान्वयाभिप्रायेण तथा च यत्फलितन्तदाह । बहुत्वविशिष्टइति । समूहवदित्यत्र सप्तम्यन्तादिति:। अनन्तावसथेतिहभेषजाञ्ञ्यः । इतिहेतिनिपातसमुदायादयम्प्रत्यय. । स चोपदेशपरम्परायां वर्त्तते । भेषजशब्दम्प्रकृतसूत्रघटकं साधयति । भिषः षुगित्यादि । अत एव निपातनादिति । अन्यथा आदिवृद्ध्या भैषजमिति स्यादितिभावः। देवतान्तात्तादर्थ्ये यत् । तदर्थमवतादर्थ्य म् स्व.र्थे ष्यञ् तदाह।तदर्थं वस्तुनीत्यर्थ इति।तेन। स्वार्थिकतत्प्रत्ययस्वीकारेण। देवदेवत्यमिति। सिद्धमिति।देवदेवत्यमित्यस्य देवस्य देवत्यमित्यर्थः । एतेन । निरुक्तदेवतात्वस्य पितृष्वपि सत्त्वेन । पादार्घाभ्याञ्च । तादर्थ्ये इत्यनुवर्त्तते । अत्र चकारोऽनुक्तसमुच्चयार्थः । तेन एव ये समदशाद-रम्छन्दस्य इति सिद्धम् । अत एव निपातनादिति । आग्नीध्रसाधारणेति वार्त्तिके निपातनात् । साधारणशब्दार्थं व्याचष्टे । अनेकमिति । साधारणशब्दे समानशब्दस्य सादेशस्तु पृषोदरादित्वाद्बोध्यः । अत एव निपातनात्सादेशस्य दीर्घे इत्यं वोक्तम् । अनेन वार्त्तिकेनोभयोरपि निपातनमिति तु युक्तम् । लोहितान्मणौ । मणौ वर्त्तमानाल्लोहितशब्दात्स्वार्थे कनित्यर्थः । वर्णे चानित्ये । अनित्ये वर्णे वर्त्तमानाल्लोहितशब्दात्कन् स्यात् । अस्मादिति । लोहितात्लिङ्गबाधनं वेतिवार्त्तिकादित्यर्थः । अत एव । अस्य कनोऽत्यन्तस्वार्थिकत्वेन स्वार्थद्रव्यमात्रापेक्षतयाऽन्तरङ्गत्वेन व्युत्पत्तेः प्रागेवोत्पत्तेः स्वीकारादेव । उपायादितोति । ह्रदे ह्रस्वत्वमव्ययमन्नियोगे न । एतेन । दीर्घस्य स्थानित्वकथनन्तु । अन्त्यस्य स्यादिति । ह्रस्वत्वमन्त्यस्य स्यादित्यर्थ । व्याख्यानादिति । औपयिकेति लक्ष्यदर्शनमूलकव्याख्यानादित्यर्थः । वाचो व्याहृतार्थायाम् । अन्येनोक्तस्यार्थस्यान्येन प्रकाशित इत्यर्थः । अनेन यद्यपि वाचिक इत्यस्य अनुवादात्म

भोजनक्रियैवान्यपदार्थः । एवञ्च भूरिशब्दस्य क्रियाविशेषणीभूतार्थप्रतिपादकतया कर्मण्येव द्वितीया । क्रियाविशेषणत्वात् । न च मृदु पचतीतिवन्नपुंसकत्वापत्तिरिति वाच्यम् । अनियतलिङ्गकस्यैव क्रियाविशेषणीभूतार्थप्रतिपादकस्य नपुंसकत्वात् । वारशब्दस्य तु नित्यपुंस्त्वात्तदन्तसमासस्यापि लोकतो नित्यपुंस्त्वमिति केचित् । तन्न । शास्त्रेण पुंस्त्वस्यानुपपादनात् । अन्ये तु भूरिशब्दो बहुसङ्ख्यावृत्तिकजन्मवत्परः । कालावच्छिन्नपरश्च वारशब्दस्तयोश्च कर्मधारय एवञ्च समासस्य पुंस्त्वमाश्रयमेव । तदर्थश्चाभेदेन भुज्धात्वर्थफलेऽन्वेतीति क्रियाविशेषणत्वाद्द्वितीयेत्याहुः । क्रियाग्रहणं प्रकृतसूत्रे व्यर्थमित्यभिप्रायेणाशङ्कते । यद्यपि द्रव्यगुणयोरिति । पञ्चकृत्वः श्वेत, पट, पञ्चकृत्वो धनशन्दे वदत्त इत्यादिप्रयोगास्तु जात इत्यादिशब्दाध्याहारेणोपपाद्याः । प्राचीनोक्तक्रियाग्रहणप्रयोजनं खण्डयति । साध्यस्वभावैवेति । ननु यदि साध्यस्वभावैवेति न नियमस्तदा द्वौ पाकावित्यादौ सुजापत्तिरत आह । द्वौ पाकाविति । अभावादिति । किन्तु सिद्धावस्थक्रियागतद्वित्वं विवक्षितमिति शेषः । अनापत्तिरिति । द्विशब्देन सामानाधिकरण्याद्धि द्वित्वसंख्यैव सर्वदेनान्यतरवैयर्थ्यमितिन्यायेन पाकशब्दाद्द्विवचनेन च प्रतिपादनसम्भवति तच्च क्रियाजन्मगणने न सम्भवतीति भावः । अत एव । क्रियाजन्मगणनायामिताद्दशस्थले द्विवचनासम्भवादेव । न च पञ्चवारान् भुङ्क्त इति यत्र प्रयोगस्तत्र पञ्चन्शब्दात्कृत्वसुच् स्यादिति वाच्यम् । तत्र वारशब्देनाभ्यावृत्तेरुक्ततया सङ्ख्याशब्दस्य तद्वृत्तित्वाभावात् । नचैवम्भूरिवारानित्यत्राप्येवं वक्तुं शक्यमिति मूलोक्तप्रत्युदाहरणविरोध इति वाच्यम् । तस्य भूरिभुङ्क्त इत्येतदुपलक्षणत्वात् । युग्मोभादिशब्दादिति । एतयोर्नियतविषयपरिच्छेदकत्वसत्त्वेऽपि लोके एकः युग्मौ त्रय इत्येवङ्गणना न हि प्रसिद्धेति भावः । विभाषा बहोर्धा विप्रकृष्टकाले । क्रियाभ्यावृत्तिगणन इत्यनुवर्ततेऽत आह । अविप्रकृष्टेत्यादि । दिवसस्येति मूले शेषत्वविवक्षया षष्ठी । तत्प्रकृतवचने मयट् । व्याख्यानादिति । प्रकृतशब्दस्य प्रस्तुतार्थकतया प्रकृते मयडिति वक्तव्ये वचनग्रहणसामर्थ्यलब्धप्राचुर्येण प्रस्तुतप्रकृतमित्येवं वृत्तिकारादिभिर्व्याख्यातत्वमूलकादित्यर्थः । इत्यत्रार्थ इति । वचनशब्दस्य भावल्युडन्तत्वपक्ष इति शेषः । य-

त्यय इत्यर्थः। हृत्य ृङ्गघ्वडयति। अपेतेति। एतेनासौवलक्वयनेन। तसत्त्वे। अल्पार्थकैकशब्दसत्त्वे। न एव। एकार्थका एव। येवत्त्वविकल्वविशिष्टस्यैवार्थस्य स्वभावाद्वोधकास्त एव गृह्यन्ते तादृशाश्च परिमाणवाचकास्तेषामतापरिमाणार्थत्वेन न्यूनाधिकभावे प्रयोगाभावः। जातिशब्देभ्यस्तु न तथेति तेभ्यो न प्रसितिति भावः। घटङ्घटमितीति। यदि घटशब्दाच्छम् स्यात्तदा एकस्यैव घटस्य प्रतीतिः। स्यादिति नास्ति किन्तु द्वयोर्बहूनां वा प्रतीतिरपि स्यादित्याह। ततः शसेति। अभिमान इति। एतेन वृत्तावर्थैकत्वसङ्ख्याया भानस्योक्तेः प्रसिद्धतया पूर्वोक्तमयुक्तमिति ध्वनितम्। अन्यसम्मतत्वात्प्रयोजनमनुवदति। एजवचनादितीति। अत्र हि घटौ घटाविल्युच्चारणेनैकत्वविशिष्टार्थाभिधायकत्वाभाव, स्फुट एव। केचिदित्यरुचिसूचनाय। तद्वीजन्तु यदि द्विवचनात्स्थाद्वृत्तिरेव फलस्तदेकवचनान्तात्प्रत्यय इत्यर्थे व पर्यवसानमिति घटंघटमित्यत्र शस् दुर्वार एवेति परिमाणशब्देभ्य एव प्रत्यय इति नियमस्लाभ इति। सूत्रे सङ्ख्यैकार्थेति यत्नत्वे वचनशब्दोपादानसामर्थ्यादेकवचनान्तादित्यर्थो नाभिप्रेतः किन्त्वेकं वक्तीत्येकवचनमित्यर्थ एवाभिप्रेत इत्याशयेनाह। वस्तुत इति। सङ्ख्यातिरिक्तार्थानामिति। सङ्ख्याशब्देभ्यस्तु द्विवचनस्य प्रकृत्यर्थद्वित्वानुवादकतया परिगृहीतैकत्वानामेवेति नियमस्य तत्राभावादिति भावः। परिगृहीतैकत्वानामिति। परिगृहीतं वाचकतासम्बन्धेनैकत्वविशिष्टत्वं येषामित्यर्थः। नन्वत्र सूत्रे चकारो व्यर्थः। एकार्थबोधकपरैकवचनशब्दोपादानेन सिद्धिः सङ्ख्याशब्दोपादानेनैकत्वातिरिक्तसङ्ख्यावाचकाः सङ्ख्याशब्देन विवक्षिता इत्यर्थो भविष्यतीत्यत आह। चकाद्विरिति। वीप्साशसभाव इति। वीप्साबोधकशसप्रत्ययाभाव इत्यर्थः। पञ्च इति। एतेनैकैकमित्यपि भवतीति सूचितम्। सन्देहः स्यादिति। अत्र शस् वीप्सायां वा स्वार्थे वेति सन्देहः स्यादित्यर्थः। अवयवादत्वाभावादिति। द्विपद्यादिशब्देभ्योऽपिदर्शनादित्यादिः। वीप्सायामेवेति। यत एतत्तावर्कैति सूत्रघटकत्वेकश इत्यस्यैकैकमित्यभियुक्तव्याख्यानसङ्गतिः। तदनुसरणेनेति। नित्यवीप्सयोरिति सूत्रविहितद्विर्वचनानुवादेनेत्यर्थः। ध्वनितत्वं इत्यमिति। तत्र हि यत्र सन्निनैतन्मात्रा वीप्सा भवति तत्र द्विर्वचनम्। तद्यथा। एकैकशो ददातीत्युक्तम्। अत्र द्विरेकशब्द, शश्च दृश्यते

कशब्देऽपि प्रवृत्तिः प्राप्ता तथापि वाचिकपदं रूढमित्याशयेनाह मूलेसन्दे- शवागिति। तद्युक्तात्कर्मणोऽण्। तेन युक्तात्तद्युक्तात्। तच्छब्दार्थमाह। त च्छब्दे नेति। प्रकृतित्वे नाभिप्रेते कर्मशब्दे वाक्युक्तत्वञ्च वाक्प्रतिपाद्यवाचक त्वरूपन्तदाह। वाचायुक्तादिति। वागेवेत्युत्तरस्यैवेनि। भाष्ये यत्किमपीति- र्दिश्यत इति प्रश्नवाक्यन्तदुत्तरभूतं यद्वागेवेति वाक्यन्तत्र य एवकारस्तेने- त्यर्थः। क्रिययोः। वच्धातुकृधातुभ्याम्प्रतिपाद्ये ये क्रिये तयोरित्यर्थः। कर्म णोऽणित्यत्र कर्मशब्दः क्रियापरः। न च कर्मणा क्रियत इत्यत्र पौनरुक्त्यमिति वाच्यम्। कर्मणेत्यत्र कर्मशब्दस्य वाक्प्रतिपाद्यार्थकर्मकक्रियापरत्वङ्क्रिय ते इति कृधातोः क्रियासामान्यार्थकत्वमिति भेदात्। तद्युक्तादित्यस्य प्रत्युदा- हरणप्रदर्शनपरे वाक्ये यत्कर्मक्रियत इत्यत्र कथम्भेद इति न शङ्क्यम्। अत्रा- पि कर्मशब्दस्य वाक्करणकार्थप्रतिपादनाभावाधिकरणकालावच्छिन्नत्वविशिष्ट- क्रियापरत्वङ् क्रियत इत्यत्र कृधातोः क्रियासामान्यपरत्वमिति भेदात्। वा- चा कथनमित्यत्र वाङ्नलौकिकी किन्तु मन्त्ररूपा विवक्षितेत्याशयेनाह। ए वञ्चेति। पूर्वोक्तभाष्यव्याख्यानावसरे इदन्त्वया कर्त्तव्यमिति सन्देशवाचं श्रु त्वा यत्कर्म क्रियत इति कैयटरीत्या भाष्यव्याख्यायामुत्तरवाक्यस्थैवकारा- स्वारस्यमित्याह। इदन्त्वयेति। कैयटानुसारेणेति। इदमुपलक्षणम्। तन्त्यनुसा रेणेत्यपि बोध्यम्। ओषधेरजातौ। अजातौ वर्त्तमानादोषधिशब्दादित्यर्थः। औषधम्पिबतीत्यत्रौषधिशब्द ओषधिविशेषपरो लक्षणयेति न जातिपरत्वम्। प्रज्ञादिभ्यश्चेत्यत्र प्रज्ञशब्दस्य योऽर्थस्तमाह। प्रजानातीति। वृत्तौ स्पष्टमिति। नित्यश्चायम्प्रत्ययः उत्तरसूत्रेऽन्यतरस्याङ्ग्रहणादितितत्त्वोक्तम्। बह्वल्पार्थाच्छ- स् कारकादन्यतरस्याम्। बह्वर्थादल्पार्थाच्च प्रातिपदिकात्कारकाभिधायिनः श- स् प्रत्ययः स्यात्। अत्र कारकादितिसामान्यत एवोक्तमतः कारकसामान्यप्रति- पादकादयम्प्रत्ययो न कर्मप्रतिपादकादेव। बहुभिः कालैर्ददाति बहुशो ददा ति। अल्पं न ददातिप्रत्यशो ददाति। बहुभ्यो ददाति अल्पाय ददातीत्यर्थेऽपि बहुशः अल्पश इति भवति। अर्थग्रहणात्पर्यायेभ्यो विशेषेभ्यश्चायम्। विशेषो- दाहरणम्। त्रिशः। पञ्चश इत्यादि। भूरिशो ददातीत्यादौ। मूले मङ्गलामङ्ग- लवचनमिति। यथासंख्यमत्राभिप्रेतम्। यत्र मङ्गलममङ्गलञ्च गम्यते तत्रायम्प्र-

त्यय इत्यर्थः । इत्यु मङ्गुखण्डयति । अपेतेति । एतेनासौत्रत्वकथनेन । तत्त्वे । प्रत्यार्थैकैकशब्दसत्त्वे । न एव । एकार्थका एव । द्वेहृत्तावेकत्वविशिष्टस्यैवार्थस्य स्वभावाद्बोधकास्त एव गृह्यन्ते तादृशाश्च परिमाणवाचकास्तेषामतःपरिमाणार्थत्वेन न्यूनाधिकभावे प्रयोगाभावः । जातिशब्देभ्यस्तु न तथेति तेभ्यो न शसिति भावः । घटङ्घटमितीति । यदि घटशब्दाच्छस् स्यात्तदा एकस्यैव घटस्य प्रतीतिः । स्यादिति नास्ति किन्तु द्वयोर्बहूनां वा प्रतीतिरपि स्यादित्याह । ततः शसीति । अभिमान इति । एतेन वृत्तावर्थैकत्वसङ्ख्याया भानस्योत्सर्गतः प्रसिद्धतया पूर्वोक्तमयुक्तमिति ध्वनितम् । अन्यमस्मतत्प्रयोजनमनुवदति । एकवचनादितीति । अत्र हि घटो घटावित्युच्चारणेनैकत्वविशिष्टार्थाभिधायकत्वाभाव. स्फुट एव । केचिदित्यरुचिसूचनाय । तद्बीजन्तु यदि द्विवचनान्तस्याप्यवृत्तिरेव फलन्तदैकवचनान्तात्प्रत्यय इत्यत्रैव पर्यवसानमिति घटघटमित्यत्र शस् दुर्वार एवेति परिमाणशब्देभ्य एव प्रत्यय इति नियमस्लाभ इति । सूत्रे सङ्ख्यैकार्थेति वक्तव्ये वचनशब्दोपादानसामर्थ्यादेकवचनान्तादित्यर्थो नाभिप्रेतः किन्त्वेकं वक्तीत्येकवचनमित्यर्थ एवाभिप्रेत इत्याशयेनाह । वस्तुत इति । सङ्ख्यातिरिक्तार्थानामिति । सङ्ख्याशब्देभ्यस्तु द्विवचनस्य प्रकृत्यर्थद्वित्वानुवादकतया परिगृहीतैकत्वानामेवेति नियमस्य तत्राभावादिति भावः । परिगृहीतैकत्वानामिति । परिगृहीतं वाचकतासम्बन्धेनैकत्वविशिष्टत्वं येषामित्यर्थः । नन्वत्र सूत्रे चकारो व्यर्थः । एकार्थबोधकपरैकवचनशब्दोपादानेन सिद्धे सङ्ख्याशब्दोपादानेनैकत्वातिरिक्तसङ्ख्यावाचकाः सङ्ख्याशब्देन विवक्षिता इत्यर्थो भविष्यतीत्यत आह । प्रत्याहुरिति । वीप्साशसभाव इति । वीप्साबोधकशसुप्रत्ययाभाव इत्यर्थः । पक्ष इति । एतेनैकैकमित्यपि भवतीति सूचितम् । सन्देहः स्यादिति । अत्र शस् वीप्सायां वा स्वार्थे वेति सन्देहः स्यादित्यर्थ. । अपवादत्वाभावादिति । द्विवचनादिशब्देभ्योऽपिदर्शनादित्यादिः । वीप्सायामिवेति । अत एवतात्पर्येणेति सूत्रघटकस्यैकस्य इत्यस्यैकैकमित्यभियुक्तव्याख्यानमङ्गतिः । तदनुवादेनेति । नित्यवीप्सयोरितिसूत्रसिद्धद्विर्वचनानुवादेनेत्यर्थः । ध्वनितञ्चेदमिति । तत्र हि यत्र तद्धितेनानुक्ता वीप्सा भवति तत्र द्विर्वचनम् । तद्यथा । एकैकशो ददातीत्युक्तम् । अत्र द्विरेकशब्दः शस् दृश्यते

तस्योपपत्त्यर्थं कैतटेनोक्तं चिदाद्युः । अल्पार्थो ष्यें कशब्दोऽस्ति तस्य वीप्सायां द्विर्वचने बह्वल्पार्थादिति शस्प्रत्यय इति । अत्र के चिदितिवदताऽरुचिः सूचिता । साचाल्पार्थकैकशब्दसद्भावे दृढतरमानाभाव इति । व्याख्या मट् बहुषु बहुवचनम् । एकादाकिनिच् एको गोत्रे एतेषु सूत्रेषु सङ्ख्याऽसङ्ख्यान्यार्थकस्य प्रथमार्थकस्य च भाष्यकृतोक्तत्वेऽप्यप्रामाणिकत्वेऽपि समानस्य भारवार्थकयोर्मानाभावः । न च चैत्रमैत्रयोरेका माता । देवदत्तविष्णुमित्रयोरेकमन्न मित्यत्र तौ दृश्येते इति वाच्यम् । सङ्ख्यापरैकशब्दप्रयोगेणाप्येतयोरुपपत्तेः । किञ्चाल्पार्थकैकशब्दस्य तदर्थकत्वेन प्रसिद्ध्यभावाद्बह्वल्पार्थादिति सूत्रे न तद्ग्रहणम् । किञ्च सङ्ख्याशब्दातिरिक्तशब्दानाम्परिगृहीतकत्वानामेव वीप्सासत्त्वेन ततो द्विर्वचनापवादः शसेव प्राप्नोति । नचैकम्बहुव्रीहिवदितिद्विर्वचनस्य भवत्विति वाच्यम् । तस्य सूत्रस्य सङ्ख्यावाचकप्रसिद्धतरैकशब्द एव प्रवृत्तेः । किञ्च तेन वीप्सायाङ्कृतद्वित्वैकशब्दानुवादेन बहुव्रीहिवद्भावस्य विधिरित्येव युक्तमत एव तान्येकेति सूत्रस्थस्यैकश इत्यस्योपपत्तिः । तथा चैकश इति वदता विवचितमर्थजातन्ध्वनितमित्यर्थः । कथन्तर्हि भाष्यप्रयोगस्योपपत्तिरिति चेदुच्यते । सङ्ख्यैकवचनाच्चेत्यत्र चकारस्य भिन्नक्रमतया वीप्सायां स्वार्थे च शस् इत्यर्थः । स च स्वार्थिको न सर्वत्र किन्तु अभिधानस्वाभाव्यादेकशब्दात्कृतद्विर्वचनैकशब्दाच्चेति नातिप्रसङ्गः । एवञ्चैकशब्दप्रकृतिकशसः स्वार्थिकत्वस्यापि सत्त्वेन न ततो नियमेन वीप्सोक्तिरिति वीप्सावोधकशसभावपक्षे वीप्सायान्द्विर्वचने कृते ततः स्वार्थिकः शसिति । अत्र दभाष्यमेव मानम् । एकश इति तु वीप्सागसत्त्वं स्वार्थिकशसत्त्वस्याऽस्तु । लौकिकप्रयोगे प्रकरणादिनाऽर्थावसाय इति तदेतदाह । भाष्यप्रदीपोद्योते निरूपितमिति । आद्यादिभ्य उपसङ्ख्यानम् । अयं स्वार्थिक सर्वाभ्यो विभक्तिभ्यो विशेषाभावात्तासु कृतासु तदन्तेभ्यो भवति तदाह । अप्रमेवेति । या अहणसम्बन्धाद्यायस्तसिर्वैकल्पिकस्तेनैतद्रहितानामाद्यादीनां प्रयोगो भवति । अपादानेचाहीयरुहोः । अपादाने या पञ्चमी विहिता तदन्ताद्वा तसिः स्यात् । तथापादानं हीयरुहोर्नचेत् । अत्र हीयेति, निर्देशात्कर्मप्रत्ययान्तजहाति योगे उपादानत्वभवति न तु जिहीतेर्योग इति निर्णयम् । तेन भूमिकजिहीते भूमित उज्जिहीत इत्यत्र तसिर्भवति । स्वर्गाद्धीयते । पर्वता

इवरोहतीत्यर्थे चं,तसिप्रत्ययो न भवति। मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाहेत्यत्र तु तृतीयान्तात्तसिः। अतिग्रहाव्यथन। अतिग्रहादिविपर्य्येऽकर्त्तरि या तृतीया तदन्ताद्वा तसिः स्यात्। चारित्रे णातिगृह्यते। चारित्रतोऽतिगृह्यते। चारित्रं सद्वर्त्तनन्तेनान्याननतिक्रम्य गृह्यते। अत्र करणतृतीयान्तादिति वक्तव्ये ऽकर्त्तरि तृतीयेत्युपादानं हेतौ या तृतीया तत्सङ्ग्रहाय। तेन चारित्रेणातिगृह्यत इत्यत्र चारित्रस्य हेतुत्वविवक्षायामपि तसिर्भवति। हीयमानपापयोगाच्च। अत्र पापयोगशब्दार्थ आद्यजन्तौ। तेन युक्तत्वर्थस्य लाभः। तद्युक्तत्वञ्च तदन्वयित्वम्। उदाहरणे करणे हेतौ च तृतीया। युक्तत्वञ्च न साक्षादेवेत्याशयेनाह। तद्युक्तत्वमिति। वृत्ततो हीयत इत्यत्र हाधात्वर्थहानौ वृत्तस्य करणत्वे नान्वयः। वृत्ततः पाप इत्यत्र तु यः पुरुषोऽतिदयालुर्लेन हेतुना पापवतोऽपि जनस्य सङ्ग्रहकृतवान् सविवक्षित इति साक्षात्तद्युक्तत्वम्। अत एवोक्तम् मूले येपस्याविवक्षायामिति। षष्ठ्या व्याश्रये। नाना पक्षसमाश्रयो व्याश्रयः। एवञ्च नाना पक्षसमाश्रयणे गम्यमाने षष्ठ्यन्ताद्वा तसिः स्यादित्यर्थः। अत्र तत्समाश्रयणमेककर्त्तृकमनेककर्त्तृकं वा। उदाहरणेऽर्जुनादिपदानां शक्यार्थपरतायामाह।पक्षे इति शेष इति। कृष्णार्जुनादिपदोनान्तत्पक्षे लक्षणा वा बोध्या। रोगाच्चापनयने। प्रवाहिकात इत्यादावुदाहरणे प्रवाहिकादिपदानान्तन्निवर्त्तकोपाये लक्षणा। अभ्वस्तियोगे सम्पद्यकर्त्तरि च्विः। करणतृतीयेति। तेनभावस्तद्भाव स्तद्भाव इत्यत्र भवनम् वास्तविकमेव किन्तु वैवक्षिकम्। सम्पद्यत्यादिपदं व्याचष्टे। सम्पद्यत्यादेरिति। कर्त्तृत्वस्य क्रियानिरूपितत्वात्प्रकृते च सा क्रिया सम्पत्तिरूपा विवक्षिते त्याशयेनाह। भावे श इति। एवञ्चाभूतकर्त्तृकं यत्तद्रूपकरणभवनन्तस्मिन्गम्यमाने यस्य सम्पत्तिकर्त्तृत्वविवक्षा तद्वाचकादयम्प्रत्यय। तस्य। सम्पत्तिकर्त्तृवाचकशब्दस्य। प्रकृताविति। अत्र प्रकृतित्वञ्च तदुत्पत्तिप्रयोजकनाशप्रतियोगित्वरूपम्। किन्तु तद्व्यवहारपूर्वकालिकाव्यवहारविषयत्वम्। एवञ्चान्वयबोधकस्य शब्दस्यान्यत्र कथं वृत्तिरित्याकाङ्क्षायामाह। गौण्या वृत्त्येति। अत एव। गौण्या वृत्त्या वर्त्तमानत्वेन गौणत्वादेव। नात्वमिति। महच्छब्दस्य गौण्याऽमहति वृत्तित्वाद्गौणमुख्यन्यायेनाऽत्र इत इतिनात्वमित्यर्थः। यद्यपि भवनकर्त्ता

ऽमहास्तथापि स एव गौण्या वृत्त्या मद्दच्छब्दबोध्य इति मद्भूता ब्राह्मणोऽत्र
पु वद्भावो भवतीत्याशयेनाह । सामानाधिकरण्येति । मध्येवमिति । विकारा
भेदेनेत्यर्थः । एवञ्च प्रकृते कर्तृत्वम्फलितन्तदाह । अत एवेति । प्रकृते कर्तृ
त्वादेव सद्वीभवन्तीत्यत्रासद्वानाम्बहुत्वाद्बहुवचनन्त्वद्भवतीत्यत्रात्वम्पदार्थस्याक
र्तृत्वादुत्पदार्थस्याकर्तृत्वान्न मध्यम किन्तु शेषत्वात्प्रथम इत्यर्थः । अन्यत्र च्व्य
न्तत्वाभावे । उभयो कर्तृत्वमिति । एतच्च लक्ष्यानुरोधेन कल्प्यते । च्व्यन्तवि
षये पूर्वोक्ता व्यवस्था हरिरप्याह । पूर्वावस्थामविजहत्स स्पृशन्धर्ममुत्तरम् । स
म्मूर्छित इवार्थात्माजायमानोऽभिधीयते । पूर्वावस्था कारणावस्था । उत्तरन्ध
र्मम् । कार्यावस्थाम् । एवञ्चावस्था द्वयावच्छिन्नमेकमेव वस्तु पूर्वावस्थानुगुण्ये
नोत्तरावस्था प्राप्त्युन्मुखञ्जायत इत्युच्यते । एकस्यैव वस्तुन उभयावस्था प्राप्त्य
भिधानेन प्रकृतिविकृत्योरेकार्थप्रतिपादकत्वरूप सामानाधिकरण्यं स्पष्टमेवा
भिहितम् । नन्वेव च्व्यन्त एवोभयो कर्तृत्वापत्तिरत आह स एव । सव्यापार
तर' कश्चित्क्वचिद्धर्म प्रतीयते । सम्पद्यन्ते च भावाभ्याभेदवत्योऽपि प्रकाश
इति । स व्यापार' कर्तृत्वशक्तिरूप' । एतन्निष्ठ' प्रकर्षश्च व्यवस्थया प्रकृतिवि
कृतिसम्बन्धित्वेन प्रतीतिविषयत्वरूपं । यथा सुवर्णपिण्ड खदिराङ्गारसवर्ण
कुण्डले भवत इतिभाष्यप्रयोगाद्वाक्ये विकृते कर्तृत्वड क्वचित् । क्वचित्तु प्र
कृते । यथैको वृच' पञ्च नौका भवतीति प्रयोगात्तादृशस्थले एकवचनमेव ।
त्वन्त्व सम्पद्यसे त्वद्भवतीत्यत्रात्वम्पदार्थस्य कर्तृत्वात्प्रथम । त्वमत्वभवसीत्य
र्थे तु मत्वद्भवसीत्येव । एवञ्च प्रकृतेर्विकृतेश्चापि यथोक्तत्वन्द्वयोरपि । प्रकृति
वाचक सद्गुणप्रकृतेर्विकृतेर्नद्वीति प्रवादश्च्व्यन्तविषय एव । यत्र च्विप्रत्ययस्तत्र
सादृश्यमूलाभेदाध्यवसायेन विकाराभेदात्तत्रप्रकृते कर्तृत्वेनोभयोरुक्तत्वम् ।
सादृश्यमूलाध्यवसानेनोभयो कर्तृत्वादेव गौणत्वान्मद्भूतेत्यत्र मद्दच्छब्दस्य
नात्वम् । तदेतत्स्पष्टीकृतमत्र शेखरेऽन्यत्र प्रकृतिविकृत्यो कर्तृत्वेऽनियम इ
त्यादिना । अत्र यो विशेषस्तमाह । अनारोपितादिति । अनारोपितवाचका
दित्यर्थः । तथा भूते । पूर्वावस्था त्यागाभावविशिष्टे वस्तुनियर्त्तमानादिति
शेष । अरोपिततद्भावगम्यत्ताविति । आरोपितशुक्लत्वादिरूपभावस्य सम्पत्तौ ।
विवक्षितायामिति शेष । अत एव । आरोपिततद्भावसम्पत्तावेव च्विप्रत्ययस्य

साधुत्वादेव । अत एव । उक्तोऽर्थः । भाष्ये प्रत्याख्यातमिति । तादृशभाष्यप्रामाण्यादारोपविषय एव च्विप्रत्ययः । प्रकृतसूत्रभाष्येऽपि ध्वनितमिति । तत्र हि च्विविधावभूततद्भावग्रहणं कर्त्तव्यमिह मा भूत् । सम्पद्यन्ते यवाः । सम्पद्यन्ते शालयः । अथ क्रियमाणेऽपि वै अभूततद्भावग्रहणे इह कस्मान्न भवति । सम्पद्यन्तेऽस्मिन्क्षेत्रे शालय इति । प्रकृतिविवक्षाग्रहणञ्च कर्त्तव्यमिति । एतेन सम्पद्यन्तेऽस्मिन्क्षेत्र इत्यत्र प्रकृतिविवक्षाभावान्न च्विप्रत्यय इत्युक्तम्भवति । प्रकृतिविवक्षेत्यस्य प्रकृतेरुपादानकारणत्वेन विवक्षितस्यान्यरूपेण विवक्षेत्यर्थः । प्रकृतिरेव सादृश्यमूलकाभेदेन विकारबोधकशब्देनाभिधीयते यत्र तत्रैव च्विप्रत्ययो भवतीति ध्वनितमित्यर्थः । नन्वतिसर्वशब्दे सर्वशब्दस्य वास्तविकमेवोपसर्जनत्वमिति कथं च्विप्रत्यय इत्यत आह । संज्ञोपसर्जनीभूतेति । तेन वाक्येन वृत्तिघटकस्य सर्वादेरुपसर्जनत्वेनातिसर्व इत्यादौ सर्वादित्वाभावः प्रतिपाद्यते । उपसर्जनत्वञ्च सर्वमतिक्रान्त इतिवाक्यप्रयोगेण प्रदर्श्यते । एवञ्च यो वाक्यघटकस्तस्मिन्ननुपसर्जने उपसर्जनत्वमारोपितमेव । वृत्तिघटकयोः पूर्वोत्तरपदयोः परस्परसमभिव्याहारेणान्यार्थसम्बद्धस्वार्थाभिधायकत्वं वाक्यघटके तु नेति । वाक्यघटकस्य हि सर्वशब्दस्य तादृशस्थलेऽतिक्रमणक्रियानिष्ठविशेष्यतानिरूपिता या कर्मत्वसम्बन्धावच्छिन्नप्रकारता तदाश्रयप्रतिपादकत्वम् । समासघटकस्य सर्वशब्दस्य तु अतिक्रमणकर्तृरूपातिशब्दार्थसम्बद्धार्थाभिधायकत्वमासूदकवदिति भावः । स्पष्टञ्चेदमोदूतौ च समर्थ्यं इति सूत्रेऽर्थग्रहणप्रयोजननिरूपणावसरे भाष्यकैयटयोः । वृत्तिवाक्ययोरत्यन्तभेदादिति । उपपादितरीत्यानयोः प्रायेण श्रूयमाणसुब्वत्पौर्वापर्यभावापन्नानेकावयवकत्वतद्भिन्नत्वाभ्याम्पदान्तरार्थघटस्वार्थाभिधायकपदाघटितत्वतद्घटितत्वरूपविरुद्धधर्माभ्याम् । भेदादित्यर्थः । तत्र । वाक्यघटके । तत्तत्पदत्वं वृत्तिघटकतत्तत्पदत्वम् । तत्त्वम् । आरोपितत्वम् । एवमन्यत्रापि बोध्यम् । नन्वेवमपि ब्रह्मीभवतीत्यादिप्रयोगानुपपत्तिस्तत्रारोपस्य विवक्षया च्विप्रत्ययस्योपपादयितुमशक्यत्वादत आह । अस्ततीभूत्वेत्यादि । अधिकरणत्वमपीतीति । तथा च नादेवगङ्गापदार्थे सम्पद्यकर्तृत्वमेवेति तच्च्विप्रत्यय इति शेषः । अहरितिप्रथमान्तपदार्थेन सामानाधिकरण्योपपत्तये आह । अधिकरणशक्तीति । दोषा गच्छतीत्यादौ दोषाश-

ऽमहास्तथापि स एव गौण्या वृत्त्या महच्छब्दबोध्य इति महद्भूता माण्डवीत्यत्र पुवद्भावो भवतीत्याशयेनाह। सामानाधिकरण्येति। मध्ये वमिति। विकारभेदेनेत्यर्थः। एवञ्च प्रकृतेः कर्तृत्वमफलितन्तदाह। अत एवेति। प्रकृतेः कर्तृत्वादेव सद्दीभवन्तीत्यत्रास्मद्वानामबहुत्वाद्बहुवचनम्त्वद्भवतीत्यत्रात्वम्पदार्थस्य कर्तृत्वादास्मदर्थस्याकर्तृत्वान्न मध्यम किन्तु शेषत्वात्प्रथम इत्यर्थः। अन्यत्र च्व्यन्तत्वाभावे। उभयोः कर्तृत्वमिति। एतच्च लक्ष्यानुरोधेन कल्प्यते। च्व्यन्तविषये पूर्वोक्ता व्यवस्था हरिरप्याह। पूर्वावस्थामविजहत्स्पृशन्धर्ममुत्तरम्। सम्मूर्छित इवार्थात्माजायमानोऽभिधीयते। पूर्वावस्था कारणावस्था। उत्तरधर्मम्। कार्यावस्थाम्। एवञ्चावस्था द्वयावच्छिन्नमेकमेव वस्तु पूर्वावस्थातुगुण्येनोत्तरावस्था प्राप्त्युन्मुखस्सञ्जायत इत्युच्यते। एकस्यैव वस्तुन उभयावस्था प्रत्यभिधानेन प्रकृतिविकृत्योरेकार्थप्रतिपादकत्वरूपं सामानाधिकरण्यं स्पष्टमेवाभिहितम्। नन्वेव च्व्यन्त एवोभयोः कर्तृत्वापत्तिरत आह स एव। सव्यापारतरः कश्चित्कचिद्धर्मः प्रतीयते। संसृज्यन्ते च भावाभ्याभेदवत्योऽपि शक्तय इति। सः व्यापारः कर्तृत्वशक्तिरूपः। एतन्निष्ठः प्रकर्षश्च व्यवस्थया प्रकृतिविकृतिसम्बन्धित्वेन प्रतीतिविषयत्वरूपः। यथा सुवर्णपिण्ड खदिराङ्गारसवर्णे कुण्डले भवत इतिभाष्यप्रयोगाद्वाक्ये विकृतेः कर्तृत्वम् क्वचित्। क्वचित् प्रकृते। यथैको वृक्षः पञ्च नौका भवतीति प्रयोगात्तादृशस्थले एकवचनमेव। अत्वन्त्वं सम्पद्यते त्वद्भवतीत्यत्रात्वम्पदार्थस्य कर्तृत्वात्प्रथमः। त्वमत्वभवसीत्यर्थे तु अत्वद्भवसीत्येव। एवञ्च प्रकृतेर्विकृतेर्वापि यथोक्तत्वन्द्वयोरपि। अत्रातिव्याचकः सङ्ग्राम्प्रकृतेर्विकृतेर्नेवोति प्रवादश्च्व्यन्तविषय एव। यत्र च्विप्रत्ययस्तत्र साहश्यमूलाभेदाध्यवसायेन विकाराभेदात्तत्प्रकृतेः कर्तृत्वे नोभयोरुक्तत्वम्। साहश्यमूलाध्यवसानेनोभयोः कर्तृत्वादेव गौणत्वान्महद्भूतेत्यत्र महच्छब्दस्य नात्वम। तदेतत्स्पष्टीकृतमत्र शेखरेऽन्यत्र प्रकृतिविकृत्योः कर्तृत्वेऽनियम इत्यादिना। अत्र यो विशेषस्तमाह। अनारोपितादिति। अनारोपितवाचकादित्यर्थः। तथा भूते। पूर्वावस्था,स्वागभावविशिष्टे वस्तुनिवर्त्तमानादिति शेषः। अरोपिततद्भावसम्पत्ताविति। आरोपितप्रकृत्यादिरूपभावस्य सम्पत्तौ। विवक्षितायामिति शेषः। अत एव। आरोपिततद्भावसम्पत्तावेव च्विप्रत्ययस्य

माधुत्वादेव । अत एव । उक्तोऽर्थः । भाष्ये प्रत्याख्यातमिति । तादृशभाष्यप्रामाण्यादारोपविषय एव च्विप्रत्ययः । प्रकृतसूत्रभाष्येऽपि ध्वनितमिति । तत्र हि च्विविधावभूततद्भावग्रहणं कर्त्तव्यमिह मा भूत् । सम्पद्यन्ते यवाः । सम्पद्यन्ते शालयः । अथ क्रियमाणेऽपि वै अभूततद्भावग्रहणे इह कस्मान्न भवति । सम्पद्यन्तेऽस्मिन्क्षेत्रे शालय इति । प्रकृतिविवक्षाग्रहणञ्च कर्त्तव्यमिति । एतेन सम्पद्यन्तेऽस्मिन्नित्र इत्यत्र प्रकृतिविवक्षाभावान्न च्विप्रत्यय इत्युक्तं भवति । प्रकृतिविवक्षेत्यस्य प्रकृतेरुपादानकारणत्वेन विवक्षितस्यान्यरूपेण विवक्षेत्यर्थः । प्रकृतिरेव सादृश्यमूलकाभेदेन विकारबोधकशब्देनाभिधीयते यत्र तत्रैव च्विप्रत्ययो भवतीति ध्वनितमित्यर्थः । नन्वतिसर्वशब्दे सर्वशब्दस्य वास्तविकमेवोपसर्जनत्वमिति कथं च्विप्रत्यय इत्यत आह । संज्ञोपसर्जनीभूतेति । तेन वाक्येन वृत्तिघटकस्य सर्वादेरुपसर्जनत्वे नातिसर्व इत्यादौ सर्वादित्वाभावः प्रतिपाद्यते । उपसर्जनत्वञ्च सर्वमतिक्रान्त इतिवाक्यप्रयोगेण प्रदर्श्यते । एवञ्च यो वाक्यघटकस्तस्मिन्ननुपसर्जने उपसर्जनत्वमारोपितमेव । वृत्तिघटकयोः पूर्वोत्तरपदयोः परस्परमभिव्याहारेणान्यार्थसम्बन्धस्यार्थाभिधायकत्वं वाक्यघटके तु नेति । वाक्यघटकस्य हि सर्वशब्दस्य तादृशस्थलेऽतिक्रमणक्रियानिष्ठविशेष्यतानिरूपिता या कर्मत्वसम्बन्धावच्छिन्नप्रकारता तदाश्रयप्रतिपादकत्वम् । समासघटकस्य सर्वशब्दस्य तु अतिक्रमणकर्तृरूपातिशब्दार्थसङ्घटार्थाभिधायकत्वम्प्रांशूदकवदिति भावः । अतश्च इमौ दूरौ च समस्येते इति सूत्रेऽर्थपदप्रयोजननिरूपणावसरे भाष्यकैयटयोः । वृत्तिवाक्ययोरत्यन्तभेदादिति । उपपादितरीत्यानयोः प्रायेण श्रूयमाणसुबन्तीयपर्यभावापन्नानेकावयवकत्वतद्भिन्नत्वाभ्यां पदान्तरार्थघटितार्थाभिधायकपदाघटितत्वतद्घटितत्वरूपविरुद्धधर्माभ्याम् । भेदादित्यर्थः । तत्र । वाक्यघटके । तत्तत्पदत्वं वृत्तिघटकतत्तत्पदत्वम् । तद्यम् । आरोपितत्वम् । एवमन्यत्रापि बोध्यम् । नन्वेवमपि सर्वीभवतीत्यादिप्रयोगानुपपत्तिर्दोषस्य विवक्षया च्विप्रत्ययस्योपपादयितुमशक्यत्वादत आह । अमतीभूतेत्यादि । अधिकरणत्वमपीतीति । तथा च नार्दवघटपदार्थे सम्बन्धकर्तृत्वमेवेति तच्च्विप्रत्यय इति शेष । अकरोतिप्रथमान्तपदार्थेन सामानाधिकरण्योपपत्तये आह । अधिकरणत्वञ्चेति । दीपा गच्छतीत्यादौ दीपास

ऽमहान्तथापि स एव गौण्या वृत्त्या महच्छब्दबोध्य इति महद्भूता ब्राह्मणीत्यत्र पुंवद्भावो भवतीत्याशयेनाह। सामानाधिकरण्ये इति। मध्यमत्वमिति। विकाराभेदेनेत्यर्थः। एवञ्च प्रकृतेः कर्तृत्वम्फलितन्तदाह। अत एवेति। प्रकृतेः कर्तृत्वादेव सङ्घीभवन्तीत्यत्रासङ्घानाम्बहुत्वाद्बहुवचनन्त्वद्भवतीत्यत्रात्वम्पदार्थस्य कर्तृत्वाद्युष्मदर्थस्याकर्तृत्वान्न मध्यमः किन्तु शेषत्वात्प्रथम इत्यर्थः। अन्यत्र च्व्य न्तत्वाभावे। उभयोः कर्तृत्वमिति। एतच्च लक्ष्यानुरोधेन कल्प्यते। च्व्यन्तविषये पूर्वोक्ता व्यवस्था हरिरप्याह। पूर्वावस्थामविजहत्स स्पृशन्धर्ममुत्तरम्। सम्मूर्छित इवार्थात्माजायमानोऽभिधीयते। पूर्वावस्था कारणावस्था। उत्तरन्धर्मम्। कार्यावस्थाम्। एवञ्चावस्था द्वयावच्छिन्नमेकमेव वस्तु पूर्वावस्थानुगुण्येनोत्तरावस्था प्राप्त्यनुगुणञ्जायत इत्युच्यते। एकस्यैव वस्तुन उभयावस्था प्राप्त्यभिधानेन प्रकृतिविकृत्योरेकार्थप्रतिपादकत्वरूप सामानाधिकरण्यं स्पष्टमेवाभिहितम्। नन्वेवं च्व्यन्त एवोभयोः कर्तृत्वापत्तिरत आह स एव। सव्यापारतरः कश्चित्क्वचिद्धर्मः प्रतीयते। सहज्यन्ते च भावाभ्याम्भेदवत्योऽपि शक्तय इति। सः व्यापारः कर्तृत्वशक्तिरूपः। एतमिह प्रकर्षस्य व्यवस्थया प्रकृतिविकृतिसम्बन्धित्वेन प्रतीतिविषयत्वरूपः। यथा सुवर्णपिण्डः खदिराङ्गारसवर्णे कुण्डले भवत इतिभाष्यप्रयोगाद्वाक्ये विकृतेः कर्तृत्वम् क्वचित्। क्वचित्तु प्रकृतेः। यथैको वृक्षः पञ्च नौका भवतीति प्रयोगात्तादृशस्थले एकवचनमेव। अत्वन्त्वं सम्पद्यते त्वद्भवतीत्यत्रात्वम्पदार्थस्य कर्तृत्वात्प्रथमः। त्वमत्वम्भवसीत्ये तु अत्वद्भवसीत्येव। एवञ्च प्रकृतेर्विकृतेश्चापि यथोक्तत्वन्द्वयोरपि। स्फटिकाति धायकः सङ्ग्रामप्रकृतेर्विकृतेर्नेष्टानि प्रवादश्च्व्यन्तविषय एव। यच्च च्विप्रत्ययस्ताभावादनुकूलाभेदाध्यवसायेन विकाराभेदात्तत्रप्रकृतेः कर्तृत्वेनोभयोरुक्तत्वम्। तादृशमूलाध्यवसानेनोभयोः कर्तृत्वादेव गौणत्वान्महद्भूतेत्यत्र महच्छब्दस्य नात्वम्। तदेतत्स्पष्टीकृतमत्र शेखरेऽन्यत्र प्रकृतिविकृत्योः कर्तृत्वे नियम इत्यादिना। अत्र यो विशेषस्तमाह। अनारोपितादिति। अनारोपितप्राचकादित्यर्थः। तथा भूते। पूर्वावस्था त्यागाभावविशिष्टे वस्तुनिवर्त्तमानादिति शेषः। अरोपिततद्भावसम्पत्तावित्ति। आरोपितशुक्लत्वादिरूपभावस्य सम्पत्तौ। विवक्षितायामिति शेषः। अत एव। आरोपिततद्भावसम्पत्तावेव च्विप्रत्ययस्य

माधुलादेव। अत एव। उक्तोऽर्थे.। भाष्ये प्रत्याख्यातमिति। तादृशभाष्यप्रा- माण्यादारोपविषय एव च्विप्रत्ययः। प्रकृतसूत्रभाष्येऽपि ध्वनितमिति। तत्र हि च्विविधावभूततद्भावग्रहणङ्कर्त्तव्यमिह मा भूत्। सम्पद्यन्ते यवाः। सम्पद्यन्ते शालयः। अथ क्रियमाणेऽपि वै अभूततद्भावग्रहणे इह कस्मान्न भवति। सम्पद्यन्तेऽस्मिन्क्षेत्रे शालय इति। प्रकृतिविवक्षाग्रहणञ्च कर्त्तव्यमिति। एते- न सम्पद्यन्तेऽस्मिन्क्षेत्र इत्यत्र प्रकृतिविवक्षा भावात्र च्विप्रत्यय इत्युक्तम्भवति। प्रकृतिविवक्षेत्यस्य प्रकृतेरुपादानकारणत्वेन, विवक्षितस्यान्यरूपेण विवक्षेत्य- र्थः। प्रकृतिरेव सादृश्यमूलकाभेदेन विकारबोधकशब्देनाभिधीयते यत्र तत्रै- व च्विप्रत्ययो भवतीति ध्वनितमित्यर्थः। नन्वतिसर्वशब्दे सर्वशब्दस्य वास्तवि- कमेवोपसर्जनत्वमिति कथं च्विप्रत्यय इत्यत आह। संज्ञोपसर्जनीभूतेति। तेन वाक्येन वृत्तिघटकस्य सर्वादिरुपसर्जनत्वेनातिसर्वे इत्यादौ सर्वादित्वाभाव. प्रतिपाद्यते। उपसर्जनत्वञ्च सर्वमतिक्रान्त इतिवाक्यप्रयोगेण प्रदर्श्यते। एवञ्च- यो वाक्यघटकस्तस्मिन्ननुपसर्जने उपसर्जनत्वमारोपितमेव। वृत्तिघटकयो पूर्वो- त्तरपदयो. परस्परसमभिव्याहारेणान्यार्थसम्बद्धस्वार्थाभिधायकत्वं वाक्यघटके तु नेति। वाक्यघटकस्य हि सर्वशब्दस्य तादृशस्थलेऽतिक्रमणक्रियानिष्ठविशेष्य- तानिरूपिता या कर्मत्वसम्बन्धावच्छिन्नप्रकारता तदाश्रयप्रतिपादकत्वम्। स- मासघटकस्य सर्वशब्दस्य तु अतिक्रमणकर्तृरूपातिशब्दार्थसंसृष्टार्थाभिधायक- त्वम्यासूदकवदिति भावः। अष्टम्बेदमीदृतौ च सप्तम्यर्थ इति सूत्रेऽर्थग्रहणप्र योजननिरूपणावसरे भाष्यकैयटयोः। वृत्तिवाक्ययोरत्यन्तभेदादिति। उपपा- दितरीत्यानयो प्रायेण श्रूयमाणसुब्वत्योर्वापर्यभावापन्नानेकावयवकत्वतद्भि- न्नत्वाभ्यामन्यदान्तरार्थसृष्टस्वार्थाभिधायकपदाघटितत्वतद्घटितत्वरूपविरुद्धधर्मा- भ्याम्। भेदादित्यर्थः। तत्र। वाक्यघटके। तत्तत्पदत्वं वृत्तिघटकतत्तत्पदत्वम्। तत्त्वम्। आरोपितत्वम्। एवमन्यत्रापि बोध्यम्। नन्वेवमपि ब्रह्मीभवतीत्या- दिप्रयोगानुपपत्तिस्तदोषस्य विवक्षया च्विप्रत्ययोपपादयितुमशक्यत्वादत आ- ह। अभूतीभूतेत्यादि। अधिकरणत्वमपीतीति। तथा च नादेवब्रह्मपदार्थे स- म्पद्यकर्तृत्वमेवेति तच्विप्रत्यय इति शेष.। यद्धरितिप्रथमान्तपदार्थेन सामाना- धिकरण्योपपत्तये आह। अधिकरणशक्तीति। दोषा गच्छतीत्यादौ दोषाश-

ऽसहांस्तथापि स एव गौण्या वृत्त्या मञ्चच्छब्दबोध्य इति मञ्चद्भूता ब्राह्मणीत्यत्र
पुंवद्भावो भवतीत्याशयेनाह । सामानाधिकरण्येति । मध्ये त्वमिति । विकारा-
भेदेनेत्यर्थः । एवञ्च प्रकृतेः कर्तृत्वमफलितन्तदाह । अत एवेति । प्रकृते कर्तृ-
त्वादेव सङ्घीभवन्तीत्यत्राभङ्गानामनुत्वाद्बहुवचनन्त्वद्भवतीत्यत्रात्वम्पदार्थस्य क-
र्तृत्वादुष्मदर्थस्याकर्तृत्वाच्च मध्यम किन्तु शेषत्वात्प्रथम इत्यर्थः । अन्यत्र च्व्य-
न्तत्वाभावे । उभयोः कर्तृत्वमिति । एतच्च लक्ष्यानुरोधेन कल्प्यते । च्व्यन्तवि-
षये पूर्वोक्तां व्यवस्थां हरिरप्याह । पूर्वावस्थामविजहत्संस्पृशन्धर्ममुत्तरम् । स
म्मूर्छित इवार्थात्मा जायमानोऽभिधीयते । पूर्वावस्था कारणावस्था । उत्तरन्ध-
र्मम् । कार्यावस्थाम् । एवञ्चावस्था द्वयावच्छिन्नमेकमेव वस्तु पूर्वावस्थानुगुण्ये-
नोत्तरावस्था प्राप्त्यनुगुण्ज्जायत इत्युच्यते । एकस्यैव वस्तुन उभयावस्था प्राप्त्य-
भिधानेन प्रकृतिविकृत्योरेकार्थप्रतिपादकत्वरूपं सामानाधिकरण्यं स्पष्टमेवा-
भिहितम् । नन्वेवं च्व्यन्त एवोभयोः कर्तृत्वापत्तिरत आह स एव । सव्यापार-
तरः कश्चित्कश्चिद्धर्मः प्रतीयते । संसृज्यन्ते च भावाभ्यामभेदवत्योऽपि शक्तय
इति । सः व्यापारः कर्तृत्वशक्तिरूपः । एतत्सिद्धः प्रकर्षश्च व्यवस्थया प्रकृतिवि
कृतिमस्सम्भिन्नत्वेन प्रतीतिविषयत्वरूप । यथा सुवर्णपिण्ड, खदिराङ्गारसवर्णे
कुण्डले भवत इतिभाष्यप्रयोगाद्वाक्ये विकृतेः कर्तृत्वञ् क्वचित् । क्वचित्तु प्र
कृतेः । यथैको वृक्षः पञ्च नौका भवतीति प्रयोगात्तादृशस्थले एकवचनमेव ।
अत्वन्त्वं सम्पद्यते त्वद्भवतीत्यत्रात्वम्पदार्थस्य कर्तृत्वात्प्रथम । त्वमत्वम्भवसीत्य
र्थे तु अत्वद्भवसीत्येव । एवञ्च प्रकृतेर्विकृतेश्चापि यथोक्तत्वन्द्वयोरपि । स्पष्टाति
वाचकः सह्याम्प्रकृतेर्विकृतेर्नहीति प्रवादश्च्व्यन्तविषय एव । यत्र च्विप्रत्ययस्तत्र
मात्स्यमूलाभेदाध्यवसायेन विकाराभेदात्तत्प्रकृतेः कर्तृत्वे गौणयोरस्मत्वम् ।
मात्स्यमूलाध्यवसानेनोभयो कर्तृत्वादेव गौणत्वान्मञ्चद्भूतेत्यत्र मञ्चच्छब्दस्य
नात्वम् । तदेतत्स्पष्टीकृतमत्र शेखरेऽन्यत्र प्रकृतिविकृत्योः कर्तृत्वेऽनियम इ-
त्यादिना । अत्रैव यो विशेषस्तमाह । अनारोपितादिति । अनारोपितवाचका
दित्यर्थः । तथा भूते । पूर्वावस्थात्यागाभावविशिष्टे वस्तुनिवर्तमानादिति
शेषः । अरोपिततद्भावसम्पत्ताविति । आरोपितशुक्लत्वादिरूपभावस्य सम्पत्तौ ।
विवक्षितायामिति शेष । अत एव । आरोपिततद्भावसम्पत्तावेव च्विप्रत्ययस्य

गतिः सम्बन्धाधानुकृष्टमोत्तरत्रेति परिभाषया तस्यासम्बन्धः। एवञ्च तदेकवा-क्यतापन्नतृभ्वस्तियोग इत्यपि निवर्त्तते। भाग्रहणन्त्वनुवर्त्तते। स्वरितत्वात्। एवञ्च क्रियावाचकधातुसामान्ययोगेऽयम्प्रत्ययो भवति। देवादिभ्यः प्रातिपदि-केभ्यः द्वितीया सप्तम्यर्थे चाप्रत्ययः स्यादिति फलितम्। जायते त्वयद्वितीया-न्तासम्भवत्वात्। चान्तार्थस्य निरूपकतया क्रियायामन्वयः। देवत्रा गच्छति नमस्कारः। नच मनुष्यत्रा पचति। ग्रामत्रा वसतीत्यादौ गमनाद्यन्वयात्। अव्य-क्तानुकरणाद्‌ द्व्यजवरार्धादनितौ डाच्। पटपटाकरोपि। दमदमाकरोति। खर-टखरटाभवति। खरटखरटास्यादित्युदाहरणपराकरप्रामाण्यात्। डाचः प्रत्य-याद्युदात्तत्वे नैवोदात्तत्वे सिद्धे चित्त्वं व्यर्थमत आह। डाचयित्वमिति। कु-पोलत इतिसूत्रभाष्ये ति। तत्र हि किमर्थं कुपेर्विकृतस्य ग्रहणं क्रियते न कु-पोलत इत्येवोच्येत। यस्य कुपेर्विकरणे एतद्रूपन्तस्य यथा स्यात्। इह मा भूत्। एलस्य कपं इति। यस्य कुपेर्विकरण इत्यनेन विकरणान्तस्य दमसुकार-यमिदिष्टमित्युक्तम्। सङ्ख्यायाश्च गुणान्तायाः। कृञावित्यनुवर्त्तमादनेनापि कृञावभिधेयायाम्प्रत्ययः। अत्र सङ्ख्याशब्दः संख्यावाचकशब्दपरः। गुणशब्द-स्वरूपपरः। अर्थगतस्तीलस्य शब्दे आरोपः। एवञ्च संख्यायागुणान्तत्वम सम्भवतीत्यतोऽत्रान्तशब्दः परमसमीपवाची। एवञ्च संख्यावाचकशब्दपूर्वपदक-गुणशब्दोत्तरपदकात्प्रातिपदिकादिति फलितम्। समयाच्च यापनायाम्। कर्त्तुं योग्यस्यार्थस्य कालप्राप्तिः समयः। तस्यातिक्रमणं यापना। समयशब्दाद्याप-नायाङ्गम्यमानायां डाच्प्रत्ययः स्यात्। तथा च समया करोतीत्यनेन यस्य पाकादेर्यः कालस्तमतिक्रम्य यस्तिष्ठति स एव उच्यते। सपत्त्रनिष्पत्त्रात्। अ-तिव्यथने गम्यमाने सपत्त्रनिष्पत्त्रादयम्प्रत्ययः। अतिव्यथनमतिपीडनम्। स त्यादशपथे। सत्यशब्दादशपथेऽर्थे डाच्। अङ्गीकृतप्रतिपन्नवचनसत्यशब्दादयम्प्र-त्ययो भवति। सत्याकरोति विक्रीणीते। सत्यं साधुसत्यमिति॥

इति प्रतिकृत्याद्यर्थकाः।

इति तद्धितविवरणम्।

ध्देश रात्रिनिष्ठाधिकरणत्वम्प्रतिपाद्यते तस्य निरूपकता सम्बन्धेन गमधात्वर्थ क्रियायामन्वयेनरात्रिनिष्ठाधिकरणत्वनिरूपकमेककर्तृकं वर्त्तमानकालिका गमनमितिबोधो भवति प्रकृते तु रात्रिभिसमम्यङ्गोरात्रिरूपमेव सम्पन्नमित्यर्थं प्रतीयत इति भावः। आपत्यस्य च तद्धिते नातीतिसूत्रेण कार्थ्याभावेत्यस्या या सिद्धिनिरासायाह। नैजन्तादिति। अनेन। यदीति ग्रन्थोपादानेनानुवादोऽयम्। कृभ्वस्तियोग इतिसूत्रसिद्धच्विप्रत्ययानुवादोऽयम्। तेन। तत्सिद्धच्विप्रत्ययानुवादकरणेन। उन्मनीस्यादित्यादिसिद्धमिति। अयमेव योगो यदि च्विप्रत्ययस्यापि विधायकः स्यात्तदास्य सूत्रस्य प्रातिपदिकानुवादेन प्रत्ययविधायकतया ग्रहणवते निषेधापत्तिरित्याह। अन्यथेति। कृभ्वस्तीति सूत्रसिद्धप्रत्ययानुवादत्वे तु तेन सूत्रेण सिद्धप्रत्ययानुवादेन लोपमात्रमनेन बोध्यते एवञ्च तदन्तविधिर्भवत्येव। अनुवादफलन्तु यत्र प्रत्ययस्तत्रैव लोप इति। विभाषा सातिकार्त्स्न्ये। कृभ्वस्तियोग इत्यनुवर्त्तते। कार्त्स्न्यमित्येतद्व्याचष्टे। कृत्स्नमिति। यावद्रूपं कार्त्स्न्यमत्र न विवक्षितमिति भावः। विधेयतया विवक्षितस्य सम्बन्धो यत्रोद्देश्यस्यावयवविशेषावच्छिन्नस्य प्रतीयते तत्राभिविधिः। सर्वावयवेऽपि तु कार्त्स्न्यमिति भेदः। न तु च्विरिति। सम्पूर्वकपदधातुयोगे च्विप्रत्ययविधायकसूत्राभावेन न च्विरित्यर्थः। तदधीनवचने। निवृत्तमिति। अर्थान्तरोपादानमिह हेतुः। तदधीनस्तदायत्तस्तत्स्वामिकमित्यर्थः। तच्छब्दोऽत्र स्वामिपरः। एवञ्च यत्रेशितव्यस्य स्वामिविशेषसम्बन्धोऽभिधित्सितस्तत्र स्वामिवाचकात्सातिर्भवति। राजाधीनङ्करोति राजसात्करोति राष्ट्रमित्यादावीशितव्यराष्ट्रस्य स्वामिराजसम्बन्धः प्रतिपाद्यते स च न दानविधिना क्रियत इति भवत्ययम्प्रत्ययः। एवमन्यत्रापि बोध्यम्। देये त्रा च। तदधीनवचन इत्यनुवर्त्तते। देयमित्यत्राहार्थे कृत्य। एवञ्च तदधीनस्य देयस्य यत्र यत्तत्सम्बन्धप्रत्ययः स्वाभ्यकारात्सातिः। तदधीनेतिसूत्रकर्मषष्ठ्यन्तम्। विप्रत्रा करोति ग्राममित्यत्र स्वामिविप्राईस्यक दानकर्मणो ग्रामस्य देयस्य विप्रसम्बन्धः प्रतीयत इतिभवति त्राप्रत्ययः। एवञ्च दानविधिना दानविषयायामयं योग प्रवर्त्तते यथा कथञ्चिद्दानविवक्षायान्तु पूर्वस्येति विशेष। स्वरादेराकृतिगणत्वात्स्य त्वाव्ययत्वम्। देयमनुवर्त्तते इति च निवृत्तमिति। पूर्वसूत्रे चकारेण

श्रीगणेशायनम.।

सर्वस्य द्वे । इदं सूत्रमधिकारसूत्रन्न तु विधिसूत्रम् । [illegible] शात्। अधिकारत्वेऽपि न शब्दस्याधिकार । नित्यवीप्सयोरित्यु [illegible] त्तेषु द्विशब्दस्य कार्यस्यादर्शनात्। किन्त्वर्थाधिकार । [illegible] तिर्भवति। अत एव तस्य परमाम्रेडितमिति सञ्ज्ञेच्छति । [illegible] शब्द सर्वावयवकसमुदायपर । स च वाक्यधातुरूपोऽपि [illegible] इत्यर्थम्पदस्येत्यस्यापकर्ष आवश्यक इति सर्वस्येति [illegible] द्धते। न चेति। समाधत्ते । द्वितीयेति । पदस्येत्यस्ये[illegible] त्यस्य स्थानषष्ठीत्वद्रुल्यातेति भाव.। अन्यथा। सर्वस्ये[illegible] स्येत्यस्य स्थानषष्ठीत्वे न यद्यातेन । सर्वस्य पदस्य स्था[illegible] पुन पुन शब्दस्य कालवाचकतया तत अञि कथम्पुन रुत्यात्त[illegible] ह। तत्र हीति। भवितरि वर्त्तमानादिति । वृत्तिविषये लक्षणया तत्र वर्त्तमानादित्यर्थ । ठञ् तु कालवाचकादेव। अन्तरङ्गत्वाचापीति। प्रातिपदिकार्थमात्रापेक्षत्वेनान्तरङ्गत्वात्। लुक्त्वाच्चेति। चेनान्तरङ्गत्वादित्याकृष्यते। अभ्ययात्सुपो लुकीति। अनेन समासग्रहणकृतनियमस्य प्रवृत्तियोग्यता सूचिता। स्वोक्तनियमस्यापि प्रवृत्तिन्दर्शयति । स्वातन्त्र्येणापीति । ननु कार्यकालपक्षे स्थानिन एव कथम्प्रातिपदिकत्वमप्रत्यय इतिनिषेधस्य सत्त्वादत आह। निषेधाप्रवृत्त्येति। न ङिसम्बुद्ध्योरिति सूत्रेण तथा ज्ञापनादिति भाव । सर्वस्येत्यस्य स्थानषष्ठीत्वेऽपि पूर्वोक्तरूपस्य कथं सिद्धि । पुनरित्यस्य सुबन्तस्य स्थानितया तस्य स्थाने य आदेशस्तस्मिन्सुबन्तत्वसत्त्वेऽपि प्रातिपदिकत्वस्य दुर्लभत्वात्। पुन शब्दप्रकृतिकत्वविशिष्टसुबन्तत्वस्याशास्त्रीयतया तस्यातिदेशासम्भवादित्याशयेन शङ्कते। न चैवमिति । समाधत्ते पुनरिति। आदेशोत्तरम्पुन पुनरितिसमुदायस्य प्रातिपदिकसञ्ज्ञायाम्पुन सुबुत्पत्त्या प्रातिपदिकप्रकृतिकसुबन्तत्वं सुलभमिति भाव । प्रत्ययग्रहणपरिभाषायां यस्मादित्यस्य स्वेन प्रकृतेरुपादानात्प्रातिपदिकप्रकृतिकसुबन्तत्वस्यापि शास्त्रीयतयाऽतिदेशेनैतल्लाभाच्च तद्धितविधौ सुपित्यस्य विशिष्यानिर्देशात्प्रातिपदिकप्रकृतिकसुबन्तादित्यर्थस्य शब्दमर्यादया न लाभ इत्याशयेनाह। यद्वेति। ननु पुनर्पुनरिति